The Kārikā gives the historical version at the end, and Kiraṇavalī in the beginning. But both convey the same story that it is the last utterance of Śaṅkara. Both also name the work as Pañcaratna. With both these commentaries it is really a complete guide to living.

## Svarūpanirūpaṇa

The main object of the tract is to indicate to an aspirant the mode of remembering the Advaita Ātmā. Once the ideas are grasped, one needs a peg on which to hang all his thoughts throughout the waking state. The present work is just such a peg. Sahasranāmas fulfill this function for the devotional aspirants. Though it is true that the Upaniṣads contain all these ideas, yet they are scattered all over them and hence are not very handy. Conciseness is another quality of the present work. Naturally in a work like this one must not expect any logical explanations for the thoughts expressed. It is to be used at the last stage when meditative study and understanding have had their day.

The commentator points out that caste-distinction is unnecessary both for the wise (vidvat) and the aspirant (vividiṣu). The former knows himself to be all-pervasive and the latter continuously denies body-association. Hence all the social factors of varṇa and āśrama are meant only for the totally ignorant ones, addicted to the body and the world.

It is a beautifully written work and almost one is lulled into the turīya state by the force of the flow of words. It seems as if the incarnation of Advaita is swinging on his eternal experience and pouring out his immortal speech. It can easily be used as a morning liturgy by the aspirants of Advaita.

## Vākyavṛtti

This is a work written mainly to indicate the way of interpreting the sentences conveying the identity of soul and God. We know of another work called Laghu-vākya-vṛtti and some have postulated a Bṛahad-vākya-vṛtti. But the present work is the only one on which Ānandagiri has commented. Though he seems to suggest a reference to Bṛhad-vākya-vṛtti, the fact that Śaṅkara never refers to his another work makes us wonder whether Giri is not simply referring to the great commentaries where the problem has been dealt with. As such it seems to us that perhaps some other later authors might have written these two works. Apart from Ānandagiri's commentary the fact that at least eight verses have been quoted from this work in the Pañcadaśī by Vidyāraṇya as quotations from Bhāṣyakāra is a clinching proof that it is an original work by the great master himself.

The text is a dialogue between a teacher and a student. There is a familiar ring of modern times for the student enquires a way to liberation in which there is no exertion. Śaṅkara replies that the wisdom arising out of the sentence which conveys the identity of God and soul. is the only means. The reader will note that Śaṅkara clearly states that wisdom is attained as a result of the knowledge arising from the word, without any intermediary like meditation and he further indicates that it is easiest of all the paths. Both these ideas can never be overemphasised in the modern age. The rest of the work is to explain the identity.

After defining the Self as of the form of bliss and consciousness that enlighten both the mind-stuff and its modifications, the text gives in twelve successive verses a detailed analysis. First a distinction is made between the seen and the seer and then by this analogy the Self is distinguished from the body, senses, mind etc. Later on by another analogy the Self is proved as bliss. We all experience that for which a thing is loved is even more an object of love. If a friend of one's son is loved, it is because he is a friend of the son. Hence the son is loved more than his friend. The son is in turn loved for the Self. Thus the Self is proved as the ultimate object of love and hence is bliss. In eight verses God is indicated by different Upaniṣad-passages, which are pointed out by Giri. Twenty-one such references are collected here in a way that makes the list quite exhaustive. Then the Ācārya discusses the concept of indicated meaning where the manifest meaning contradicts experience and lays down part-indication for identity sentences. What he means is that the non-contradictory part should be identified, while the contradictory part should be given up. Here consiousness and bliss are the non-contradictory parts and the controller and the controlled are the contradictory ones. But it is not possible for wisdom to dawn all of a sudden. Hence Śaṅkara lays down that one should practise listening to a guru alongwith observing a controlled way of life, until one is firmly established in the sense of identity. Śaṅkara clearly refers to both the possibilities of liberation within and without the body, applicable for different aspirants. Some, whose life is nearing end, attain liberation of the bodiless state; while others enjoy the same doing good to others by preaching the wisdom to the deserving and blessing others to attain it, along with fulfilling the desires of devotees until all their remaining actions are exhausted.

Thus we find that the collection presented here is very exhaustive from all points of views and aspirants will do well to keep it as a book of liturgy and do its repetition (pārāyaṇa). Śaṅkara is the incarnation for this age. By meditating or even repeating his thoughts verbally his grace descends. By grace alone we are liberated. His works are his image and their study is his worship. Thus for a Śāṅkara no external ritualistic worship is needed, nor is he bothered by visual imageries. We have experienced his grace at every moment of our lives.

We bless in his name the editor and all his associates, to attain the grace of Śri Śaṅkara.

**Maheshananda Giri**
*Ācārya Mahāmaṇḍaleśvara*

# उपोद्घातः

वेदान्तशास्त्रे प्रविविक्षूणामितरशास्त्रपण्डितानां तथा शास्त्रविशेषपरिचयविधुराणां वेदान्तशास्त्रेऽभिरुचिमतामनायासेन वेदान्तार्थबोधकानि प्रकरणानि आचार्यशङ्करभगवत्पादाः अन्वगुम्फन् केवलं लोकोपकाराय यतः साम्प्रदायिकाः "श्रुतिस्मृतिपुराणानामालयं करुणालयमि"त्युपश्लोकयन्। श्रीवाचस्पतिमिश्राः "नत्वा विशुद्धविज्ञानं शङ्करं करुणाकरमि"ति स्वग्रन्थादौ स्तुवन्ति।

यद्यपि वेदान्तशास्त्रे सगुणब्रह्मोपासनानि भूयांसि विचार्यन्ते। तत्र तत्र प्राणाद्युपासनान्यपि। एतत्तु उपनिषत्तात्पर्यनिर्णयायैव। निर्णीततात्पर्यकेन पुंसा तत्तदुपासनानि निश्शङ्कमनुष्ठातुं पार्यन्ते। तथापि प्रकरणेषूपासनसम्बद्धो विचारो न दृश्यते। उपासनानां सर्वेषां ब्रह्मलोकान्तफलत्वेन साक्षान्मोक्षसाधनत्वाभावात्। तत्रापि अहंग्रहोपासनानामेव ब्रह्मलोकः, प्रतीकोपासनानां तु "अप्रतीकालम्बनान्नयतीति बादरायणः उभयथाऽदोषात् तत्क्रतुश्च" इति सूत्रानुशासनाद् विद्युल्लोकान्तं गमनम्। पञ्चकोशविवेचनादिभिः आत्मनिर्णयस्यैव च मुक्तिसाधनत्वेनोपनिषत्सु श्रूयमाणत्वात् तदेवोपनिषदां मुख्यं फलम्। इत्यतः शुद्धात्मविचार एव प्रकरणेषु निबध्यते। नोपासनं क्वचिदपि। तथाहि काठके "अंगुष्ठमात्रः पुरुषोऽन्तरात्मा" इत्यारभ्य "तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतमि"ति। अत्र शरीरादिभ्यः आत्मानं पृथक्त्वेन ज्ञात्वा तस्य ब्रह्माभेदं ज्ञातवानित्यर्थः। तथा "वेदान्तविज्ञानसुनिश्चितार्थाः" इति मुण्डके तैत्तिरीये च। तैत्तिरीयब्रह्मवल्ल्यां पञ्चकोशविवेचनेन ब्रह्मस्वरूपं निरूप्यते। विभक्तस्य ब्रह्माभेदमाह—"स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति। ऐतरेयके च "कोऽयमात्मेति वयमुपास्महे" इत्यारभ्य "येन वा पश्यती"त्यादिना विचारेण ब्रह्मनिश्चयः "प्रज्ञानं ब्रह्मे"ति प्रत्यपादि। छान्दोग्ये च षष्ठे श्वेतकेतोः एकविज्ञानेन सर्वविज्ञाननिरूपणद्वारा "तत्त्वमसी"त्यनेन आत्मा ब्रह्मेति न्यरूपयदुद्दालकः स्वपुत्राय। "तद्धास्य विजज्ञौ" इति च तेन ब्रह्मज्ञानं सम्पादितमित्युपसंजह्रे श्रुतिः। तथा नारदाय "अधीहि भगव" इति सप्रश्रयमुपसन्नाय भगवान् सनत्कुमारः नामादिक्रमेण सूक्ष्मं सूक्ष्मतरं च तत्त्वं प्रदर्श्य "भूमैवाधस्तात् आत्मैवाधस्तात्" इति द्वयोरपि सार्वात्म्यद्वारा ऐक्यमेवाबोधयन् "तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारः" इति च प्राप्तोपदेशस्य ब्रह्मसाक्षात्कारमाह। तथा अष्टमे स्पष्टमेवेन्द्राय प्रजापतिः "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति शरीरोपलक्षितपञ्चकोशादात्मानं पृथक्कृत्य तं ब्रह्मरूपेण साक्षात्कृतवानिति स्पष्टं वदति श्रुतिः। एवं बृहदारण्यके "य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति सर्वमभवत्" इति ज्ञानादेव सर्वात्मभावं ब्रवीति। द्वितीये च मैत्रेयीब्राह्मणे मूर्तामूर्तब्राह्मणे मधुब्राह्मणे च निर्गुणज्ञानोपाय एव प्रदर्श्यते। चतुर्थे ज्योतिर्ब्राह्मणे जीवस्यावस्थात्रयशोधनेन शुद्धस्वरूपं तत्तदवस्थानुभवैः असंस्पृष्टत्वेन शुद्धत्वं चोपपाद्य अन्ते "स वा एष विज्ञानमयः प्राणेषु हृद्यन्तःपुरुषः सर्वस्य वशी सर्वस्येशान" इति तस्य ब्रह्माभेदमुपपादयति।

श्रीमधुसूदनसरस्वतीस्वामिनश्च गीताटीकायामाहुः—"अत एवौपनिषदाः परमहंसाः श्रौते वेदान्तवाक्यविचार एव गुरुमुपसृत्य प्रवर्तन्ते ब्रह्मसाक्षात्काराय न तु योगे, विचारेणैव चित्तदोषनिराकरणेन तस्यान्यथासिद्धत्वात्—गी० ६–२९"। योगाभ्यासे प्रपञ्चादर्शनमेव स्यान्न निवृत्तिः प्रपञ्चस्य। ततश्च पुनर्बन्धापत्तिरिति

दोषोऽपि। एतस्मात्कारणाद् ब्रह्मसूत्राणां यत्रैदंम्पर्यं यज्ज्ञानात् साक्षादेव मुक्तिः तदेव विस्तरेण प्रतिपादनीयमिति विशेषानुग्रहेण भगवत्पादाः आत्मतत्त्वविचारमेव प्रकरणेषु प्रकल्पयामासुः। प्रतिप्रकरणं विशेषं चोपनिबबन्धुः।

द्वादशप्रकरणानि अनतिविस्तरेण विचार्यन्ते। तत्रादौ—

१. **उपदेशसाहस्री**—इदं प्रकरणमात्मनो ब्रह्माभेदमभेदज्ञानोपायांश्च विस्तरेणोपपादयति। महाभारतोक्तोदङ्कोपाख्याने इन्द्रेण सादरं दत्तममृतं तस्य चण्डालवेषं दृष्ट्वा मूत्राशङ्कयोदङ्को नाग्रहीत् प्रत्यषेधच्च। तथा कर्मठो वेदोक्तं मोक्षं विषयानुभवाभावेन स्वप्रतिकूलं मत्वा प्रतिषेधतीति सदृष्टान्तं मुक्तिं सर्वाभिलषणीयामुक्त्वा तत्त्वंपदार्थयोः विस्तरेणोपवर्णनपूर्वकं मनस एव सर्वापराधहेतुत्वेन मनस्सम्बोध्य हितमुपदिशति। गद्यप्रकरणे च गुरुशिष्यसम्वादरूपेण तत्त्वज्ञानप्रतिबन्धकान् संशयान् निराचष्टे।

२. **सिद्धान्तबिन्दुः**—दशश्लोकीव्याख्यानव्याजेन तत्त्वंपदार्थयोः आस्तिकनास्तिकमतभेदमुपवर्ण्य, आस्तिकमतेषु किमुत्कृष्टमिति परिभाव्य वाक्यार्थं निर्णयति। अन्विताभिधानाभिहितान्वयभेदेन मीमांसकमतभेदेऽपि उभयत्रापि महावाक्यार्थमुपपादयति। मीमांसकमतद्वयमपि टीकायां निष्कृष्य कार्यकारणभावनिर्णयपूर्वकं ब्रह्मानन्दसरस्वतीभिः समुपपादितं पण्डितकुलमघमर्णयति। अद्वैतसिद्धिलघुचन्द्रिकाभ्यां निर्णीतोऽर्थः संग्रहेणात्र प्रतिपाद्यते। नारायणीटीकाप्यत्र विशेषप्रसंगेषु योजितास्ति।

३. **शतश्लोकी**—श्रीमदानन्दगिर्याचार्यटीकया साकमत्र योजिता। अत्र चादावेव श्रीगुरोः सद्ब्रह्मोपदेष्टुस्तुल्यदृष्टान्ताभावात् नित्यश्रेयःप्राप्तये स एवान्वेष्टव्य इति सूच्यते। अत्रात्मनः परमप्रेमास्पदत्वेन लोकप्रसिद्धत्वं गृहस्थानामपि तत्त्वज्ञानपराणां चर्या श्रुतिसिद्धस्य दानमहिम्नः वर्णनं, मायास्वरूप मनस एव संसारो न जीवस्य, तस्य च जाग्रदाद्यवस्थानामागन्तुकत्वं, सूत्रात्मनो दारुप्रतिमावत् प्राणिनां नर्तयितृत्वं, तत्त्वंपदार्थविवेक इत्याद्या विषयाः पठितॄणामानन्ददात्र्या शैल्या श्रीभगवत्पादाः न्यरुपन्। टीकाप्यद्भुता मूलार्थं विशदयति सम्यगेव।

४. **पञ्चीकरणम्**—उपलभ्यमानटीकाभिः सम्वलितं प्रत्यहं यतिभिः सायंप्रातरावर्तनीयत्वेन विहितेन पञ्चीकरणवार्तिकेन श्रीसुरेश्वराचार्योपज्ञेन आनन्दगिरिटीकायुतेन च यतीनामुपकारायात्र समयोजि।

५. **अपरोक्षानुभूतिः**—अत्र आदावहंपदार्थः क इति विचारो मानवेन कर्तव्योऽन्यथा मृगतुल्यत्वापत्तिरिति प्रतिपाद्य विचारप्रकारः प्रदर्श्यते। ततो देहभेदेऽप्यभिन्नस्यात्मनः चिद्रूपस्य प्रतिपादनं दृष्टान्तपूर्वकं दृश्यते। अत्र योगाङ्गानां समेषां विद्वद्दृष्ट्या योजनमन्यत्रादृष्टं द्रष्टव्यं महात्मभिः। श्रेयसि निश्चितबुद्धिना आत्मचिन्तनप्रकारञ्च भगवत्पादाः सम्यङ्निरूपयन्ति।

६. **आत्मबोधः**—श्रीपद्मपादाचार्यटीकायुतोऽयम्। अत्र तुषादिभ्यस्तण्डुलानिव देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विवेकेनात्मानं तेभ्यो विलक्षणं जानीयादित्युपपाद्य स्वप्रकाशमात्मानं ज्ञात्वा तं सर्वशरीरेष्वेकं ब्रह्मैवेति चिन्तयेत्, ततो न भयं विद्यते क्वचित्। भेदाभावात्। अत्रात्मानुभवप्रकारो ब्रह्मणः स्वरूपचिन्तनप्रकारश्च विशेषतो निर्धार्यते।

७. **त्रिपुरी**—आनन्दगिरिटीकायुतोऽयं ग्रन्थः स्थूलसूक्ष्मकारणशरीरेभ्यो विविच्य जीवस्वरूपं प्रतिपाद्य तं च जीवं ब्रह्माभेदेनोपसंहरति।

८. **मनीषापञ्चकम्**—व्याख्याद्वयोपेतं श्रीसदाशिवेन्द्रसरस्वतीभिः जीवन्मुक्तैरेकं बालगोपालयतीभिः द्वितीयम्। अत्र मधुमञ्जर्यां प्रतिश्लोकमेकैकं महावाक्यं प्रावर्णि। जीवन्मुक्तानां ब्रह्मानुभवप्रदर्शकोऽयं ग्रन्थः।

९. **आत्मज्ञानोपदेशविधिः**—आचार्यैर्मुमुक्षवेऽद्वैतश्रद्धालवे वीतरागाय, न तु न्यायादिशास्त्रपरिचयवते आत्मस्वरूपावबोधनप्रकारः प्रदर्श्यते। अत्रात्मा कः ? इति प्रश्नसमाधानाय आत्मनः देहाद्यतिरिक्तत्वं युक्तिभिरुपपाद्य सः चिद्रूपः इति निर्धार्यते। जाग्रदादयो नात्मावस्थाः अपितु मनसः। आत्मा तु कूटस्थः साक्षी नित्यबुद्धमुक्तस्वभावः—इति निरणायि।

१०. **उपदेशपञ्चकम्**—अत्र श्लोकपञ्चकेन चत्वारिंशद्विधयः "वेदो नित्यमधीयतामि"त्यारभ्य "परब्रह्मात्मना स्थीयतामि"त्यन्ताः उपदिश्यन्ते। श्रीसदाशिवानां टीका मनोहरासु कारिकासूपनिबद्धा, द्वितीया श्रीबालकृष्णानन्दसरस्वतीनाम्।

११. **स्वरूपनिरूपणम्**—इदञ्च प्रकरणं गद्यपद्यात्मकमानन्दगिरिस्वामिटीकायुतम्। अनात्मभ्यो विवेकेनात्मानं निरूपयति। देहादावात्मबुद्धिरूपोऽध्यास एव बन्धः अध्यासनिवृत्तिरेव मोक्ष इति। शरीरस्यानात्मत्वं निरूपयितुं देहोत्पत्तिनिरूपणं विवेचितस्यात्मनो ब्रह्मरूपेण ज्ञानं स्वानुभवेन युक्त्या वेदान्तोक्तिमिश्च समर्थ्य स्वस्य ब्रह्मानुभवः प्रदर्श्यतेऽस्मिन् प्रकरणग्रन्थरत्ने।

१२. **वाक्यवृत्तिः**—श्रीमदानन्दगिरिव्याख्ययोपनिबद्धेयम्। महावाक्यघटकपदार्थनिरूपणपुरस्सरं वाक्यार्थवर्णनमत्र सम्यक् प्रदर्श्यते। तत्त्वमस्यादौ भागत्यागलक्षणाङ्गीकर्तव्येति भगवत्पादैरेव समर्थ्यते। उपहितयोरेव तत्त्वंपदमुख्यार्थतया शब्दयोरैक्यबोधनस्यान्यथाऽसम्भवात्। अत्र लक्षणेत्युक्तिः औपचारिकी शक्यैकदेशस्य चैतन्यस्य विशेष्यत्वे। विशेषणस्य विशेष्यतया भानार्थं तु लक्षणाऽऽवश्यकी यथा घटो नित्य इत्यादौ—इति नवीनाः। अत्र व्यतिहारः यथा अहं ब्रह्मेतिध्येयं तथा ब्रह्माहमित्यपि ध्येयम्। तत्फलञ्च अहं ब्रह्मेति ज्ञानात् जीवस्याब्रह्मत्वनिरासः ब्रह्माहमितिज्ञानादब्रह्मणः परोक्षत्वव्यावृत्तिः इति सयुक्ति भाष्यकारैरेव न्यरूपि। अत्र सर्वेषु ग्रन्थेषु वेदान्तविषयाः हृदयङ्गमया भिन्नभिन्नशैल्या व्याक्रियन्ते। अत एवैकेन प्रकरणेनेतरस्य गतार्थता न शङ्कनीया।

इमे द्वादश ग्रन्थाः संस्थानेन पाठकानां क्रयसौकर्याय पृथक् पृथगपि प्रकटीकृताः। विदुषां विशेषविचारणायात्र सङ्ग्रह्योपह्रियन्ते।

संस्कृतविशेषपरिश्रमरहिता वेदान्तविषयान् विविदिषन्ति तेऽपि एभिर्ग्रन्थरत्नैरुपकृता भवेयुरिति धिया प्राच्यप्रतीच्यसर्वशास्त्रनदीष्णैः श्रीमत्परमहंसपरिव्राजकाचार्यैर्महामण्डलेश्वरैः **श्रीमन्महेशानन्दगिरिमहाराजैः** पूज्यपादैर्विरचिता प्रस्तुतद्वादशप्रकरणग्रन्थसारप्रकाशनपरा विस्तृता आंग्लभूमिका अत्र समयोजि। अपि चानयानुसन्धित्सूनां महत्युपकृतिर्भविष्यतीति निश्चप्रचम्। भूमिकाप्रदानेनानेनाधमर्णा वयम्।

अत्र ग्रन्थसंशोधनादिना कठिनतरेऽस्मिन् समारम्भे अखर्वेण श्रमेण श्रद्धया बहूपकृतवतां **श्रीशारदानन्दशास्त्रिमहोदयानां** तथा **श्रीवंशपतिद्विवेदिशास्त्रिमहोदयानां** च कार्तज्ञ्यं प्रकाश्य तेषां सप्रमोदं धन्यवादान् समर्पयामि।

विदुषां वशंवदः
**एस० सुब्रह्मण्यशास्त्री**
महेशानुसंधानसंस्थाननिदेशकः

ॐ

# ॥ उपदेशसाहस्री ॥

॥ श्रीशङ्करभगवत्पादाचार्यविरचिता ॥

## उपोद्घातप्रकरणम्

**चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।**
**यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥ १ ॥**

---

## श्रीभगवदानन्दज्ञानाचार्यकृता सहस्रीविवृतिः

॥ श्रीगणेशाय नमः ॥

**प्रणम्य कृष्णं प्रणतार्त्तिहारिणं गुरूनपि स्वान्परमार्थरूपिणः ।**
**मया सहस्रीविवृत्तिर्विधीयते कृतापि मन्दोपकृतिप्रसिद्धये ॥**

सकलोपनिषदर्थसारसंग्राहिकामुपदेशसहस्रीं गद्यपद्यात्मिकां प्रारभमाणो भगवान् भाष्यकारश्चिकीर्षितस्य ग्रन्थस्याविघ्नेन समाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनपरिलब्धा[1]दृष्टसिद्धये च विशिष्टेष्टदेवतातत्त्वानुस्मरणपूर्वकं तन्नमस्काररूपं मङ्गलाचरणं मुखतः सम्पादयन्नस्य शारीरकप्रकरणस्य तदीयमेवानुबन्धजातं सूचयति—**चैतन्यमिति** ॥

'यः सर्वज्ञः सर्वविदि'ति[2] श्रुतेः सर्वं वेत्तीति व्युत्पत्त्या सर्वविदे तस्मै परस्मै नमो वाङ्मनोदेहानां प्रह्वीभावो भूयादित्युक्ते वैशेषिकादिदर्शनानुरोधेन ताटस्थ्ये परस्य शङ्किते चेतनमेव चैतन्यं कूटस्थज्ञप्तिरूपमिति ताटस्थ्यनिरासायोक्तम् । चेतनस्यापि मध्यमपरिमाणत्वमणुपरिमाणत्वं चेति दिगम्बराः[3] स्वयूथ्याश्च निश्चिन्वन्ति तान्प्रत्युक्तम्—**सर्वगमिति** । चेतनस्य सर्वगतस्यापि भिन्नत्वं सांख्याः मन्यन्ते, तत्राह—**सर्वमिति** । सर्वात्मकस्यापि परस्यांशांशिभावादिना जीवात्मनोऽभेदोऽस्तीत्येकदेशीयः । तत्रोक्तम्—**सर्वभूतगुहाशयमिति** । सर्वेषां भूतानां गुहासु बुद्धिषु साक्षित्वेन तिष्ठति ब्रह्म, न तत्रांशांशिभावादिकं न्यूनं[4] वस्तुतोऽस्तीत्यर्थः । तर्हि सर्वभूतगुहाशयत्वेन सर्वमिति विशेषणेन च मनोवेद्यत्वं सप्रपञ्चत्वं च परस्याशङ्क्यते । नेत्याह—**यदिति** । सर्वमविद्यातत्कार्यात्मकं विषयमतीत्य व्यवस्थितं यद् ब्रह्म तस्य कुतो मनोवेद्यत्वमविषयत्वात् । कुतश्च सप्रपञ्चत्वं कार्यकारणा[5]स्पृष्टत्वादित्यर्थः ।

---

१. लब्ध्ये. पा. ।

२. मु० १-९ सर्वज्ञः समष्टिरूपेण मायाख्योपाधिना । व्यष्टिरूपेण अविद्योपाधिना अनन्तजीवरूपेण स एव सर्वं स्वोपाधितः संसृष्टं वेत्तीति सर्ववित्—मुण्डके आ०

३. मध्यमपरिमाणत्वं दिगम्बरा ऊचुः । अणुपरिमाणत्वं स्वयूथ्या वेदान्तव्याख्यातारः केचिद्वृत्तिकाराः आधुनिकाश्च मध्वरामानुजादयः प्रतिपेदिरे ।

४. न्यूनं = न्यूनतापादकम् ।

५. कारणास्पृष्टत्वात्—तदेतद्ब्रह्मापूर्वमनपरं इति श्रुतेः

समापय्य क्रियाः सर्वा दाराग्न्याधानपूर्विकाः ।
ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥ २ ॥
कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ।
ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ ३ ॥
धर्माधर्मौ ततोऽज्ञस्य देहयोगस्तथा पुनः ।
एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥
अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ।
ब्रह्मविद्याऽत आरब्धा ततो निःश्रेयसं भवेत् ॥ ५ ॥

---

चैतन्यमित्यादिविशेषणत्रयं तत्त्वंपदार्थसाधारणम् । सर्वभूतगुहाशयमिति सर्वबुद्ध्यादिसाक्षी त्वंपदलक्ष्योऽर्थो [1]वेद्यते । सर्वविदित्यनेन तत्पदार्थः वाच्यं ब्रह्मोच्यते नैव लक्ष्यम् । [2]लक्ष्यं वस्तु सर्वविषयातीतमित्यत्र विवक्षितम् । सर्वभूतगुहाशयं सर्वविषयातीतमिति सामानाधिकरण्याल्लक्षितयोस्तत्त्वमर्थयोरैक्यं सूच्यते । तस्मिन्विषये निर्दिष्टे तेन [ सह ] प्रकरणस्य विषयविषयिभावः सम्बन्धो ध्वनितः । चैतन्यं सर्वविषयातीतमित्युक्त्या चिदात्मनः सर्वानर्थशून्यतोक्तिद्वारा निःशेषानर्थनिवृत्त्युपलक्षितं निरतिशयानन्दाविर्भावात्मकं प्रयोजनमुक्तम् । तस्मिन्नुक्ते तत्कामोऽधिकारी मुमुक्षुः सिद्ध्यतीत्यवधेयम् ॥ १ ॥

एवं देवताप्रणामरूपमङ्गलाचरणव्याजेन वेदान्तप्रतिपाद्यं देवतातत्त्वं संक्षेपादुपक्षिप्तम् । इदानीं वेदान्तानां तत्परत्वं वक्तुं कर्म्मकाण्डसिद्धमर्थमनूद्य तेन ज्ञानकाण्डस्य सङ्गतिं सङ्गिरमाणस्तेषामगतार्थत्वमाह—**समापय्येत्यादि** ॥ २ ॥

कर्मकाण्डसिद्धनानाविधकर्मानुष्ठानलब्धबुद्धिशुद्धेरनन्तरं ब्रह्म जिज्ञासवे ब्रह्मविद्यां वक्तुं वेदान्तप्रवृत्तिरित्ययुक्तं[3] कर्मभिरेव मुमुक्षोरपेक्षितमोक्षसिद्धौ ब्रह्मविद्यायास्तादर्थ्यायोगात् तच्छेषत्वेन वेदान्तप्रवृत्तेरनुपपत्तेरित्याशङ्क्याह—**कर्माणीत्यादि** । अज्ञस्य कर्माण्यनुतिष्ठतः कर्मभ्यः शरीरादिपरम्परया भूयोभूयः संसारानर्थप्राप्तेरवश्यंभावित्वान्न तेषां मोक्षहेतुत्वोपपत्तिरित्यर्थः ॥ ३ ॥

**धर्माधर्मौ** । संसारानर्थप्राप्तेः अत्यर्थंभृशमित्युच्यते ॥ ४ ॥

कर्मणां संसारहेतुतायां मोक्षहेतुत्वमपि भवति भोगनिवृत्त्या नैमित्तिकसंसारनिवृत्तौ कृतं ब्रह्मविद्ययेत्याशङ्क्याह—**अज्ञानमिति** । तस्य संसारवृक्षस्याज्ञानं मूलकारणम् । कर्मणामपि तत्कृतत्वादतः संसारहानार्थमज्ञानहानं प्रयत्नादपेक्षते । न चाज्ञानहानं ब्रह्मविद्यामन्तरेण घटते । ततश्च ब्रह्मविद्यातोऽज्ञाननिवृत्त्या संसारनिवृत्त्युपलक्षितं निरतिशयानन्दाविर्भावलक्षणं कैवल्यं सिद्ध्यतीत्यर्थः ॥ ५ ॥

---

१. विद्यते-इति मातृका ।
२. तेनैव-इति शेषः ।
३. रित्युक्तम् मा० ।

**विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः ।**
**नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥**

**रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम् ।**
**तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते ॥ ७ ॥**

**ननु कर्म तथा नित्यं कर्तव्यं जीवने सति ।**
**विद्यायाः सहकारित्वं मोक्षं प्रति हि तद् व्रजेत् ॥ ८ ॥**

**यथा विद्या तथा कर्म चोदितत्वाविशेषतः ।**
**प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥ ९ ॥**

**ननु ध्रुवफला विद्या नान्यत् किंचिदपेक्षते ।**
**नाग्निष्टोमो यथैवान्यद् ध्रुवकार्योऽप्यपेक्षते ॥१०॥**

**तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते ।**
**इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः ॥११॥**

---

कर्मणां विचित्रशक्तितया कर्मैवाज्ञाननिवृत्तिमपि करिष्यति नार्थो विद्ययेत्याशङ्क्याह—**विद्यैवेति**। प्रकाशरूपत्वात् विद्यैवाप्रकाशरूपामविद्यां निवर्तयति। कर्म त्वप्रकाशात्मकत्वात् अविरोधान्नाज्ञानं निवर्तयितुमर्हतीत्यर्थः। मा भूदज्ञानप्रहाणम्, तथापि नित्यनैमित्तिककर्मानुष्ठानसामर्थ्येन पुरुषार्थो भविष्यतीत्याशङ्क्याह—**नाज्ञानस्येति** ॥ ६ ॥

रागद्वेषयोरक्षयेऽपि का क्षतिरित्याशङ्क्य तदक्षये तस्मादेव रागादिदोषादुक्तरीत्या कर्मोत्पत्तेरावश्यकत्वात् तदधीनः संसारोऽपि दुर्वारः स्यादित्याह—**रागद्वेषेति**। कर्मभिर्मोक्षासिद्धौ फलितमाह—**तस्मादिति**। अत्रेति वेदान्तोक्तिः। **विधानं** प्रकाशनम् ॥ ७ ॥

जीवने सति यावज्जीवश्रुतिविहितत्वान्नित्यं कर्म विद्यावत्कर्तव्यमेव। अतो विद्यैव मोक्षहेतुत्वेन वेदान्तेषु प्रकाश्यत इत्ययुक्तमिति समुच्चयवादी शङ्कते—**नन्विति**। उपयोगाभावान्नित्यं कर्म न कर्तव्यमित्याशङ्क्याह—**विद्याया इति** ॥ ८ ॥

यस्मान्मोक्षलक्षणं फलं प्रति विद्यायाः सहकारित्वं कर्म प्राप्नोति ततः कर्तव्यं कर्मेत्येतदुपपादयति—**यथेति**। 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छती'ति स्मृतेश्च कर्तव्यं नित्यं कर्म मोक्षार्थिभिरित्याह—**प्रत्यवायेति** ॥ ९ ॥

ब्रह्मविद्या ध्रुवफलत्वाद् घटादिज्ञानवत्सहकारिनिरपेक्षेति सिद्धान्ती शङ्कते—**नन्वित्यादि**। यथोद्गीथज्ञानादिसहकारिसापेक्षत्वमवश्यंभाविफलस्यापि ज्योतिष्टोमस्य दृष्टं, तथाऽऽत्मज्ञानस्यापीति। व्यभिचारेण परिहरति—**नेत्यादिना**। पूर्वपक्षमुपसंहरति—**इत्येवमिति**। सिद्धान्तमाह—**न कर्मेति** ॥११॥

**विद्यायाः प्रतिकूलं हि कर्म स्यात्साभिमानतः ।**
**निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता ॥१२॥**
**अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते ।**
**वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥१३॥**
**कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे ।**
**इति तत्सत्यमादाय कर्म कर्तुं व्यवस्यति ॥१४॥**
**विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया ।**
**सहैव विदुषा तस्मात्कर्म हेयं मुमुक्षुणा ॥१५॥**
**देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ।**
**प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत् ॥१६।**
**नेति नेतीति देहादीनपोह्यात्माऽवशेषितः ।**
**अविशेषात्मबोधार्थं तेनाऽविद्या निवर्तिता ॥१७॥**

---

विद्याया च युक्ता कर्मापेक्षा कर्मणो विद्याप्रतिकूलत्वादित्येतदेव साधयति—**विद्याया इति** । कर्मणो ब्राह्मण्याद्यभिमानपूर्वकत्वाद्विद्यायाश्च कूटस्थात्माकारत्वादस्ति मिथो विरुद्धतेत्यर्थः[1] । **इहेति** वेदान्तग्रहणम् ॥ १२ ॥

विरोधमेव साधयति—**अहमिति** । कर्तृत्वभोक्तृत्वपूर्वकं कर्म तन्निवृत्या विद्योत्पद्यते । तेन तयोरुत्पत्तौ मिथो विरुद्धतेत्यर्थः । प्रमाणवस्त्वधीना विद्या । कर्म तु कारकाधीनमित्युत्पत्तावेव विधान्तरेण विरोधमाह—**वस्त्वधीनेति** । विध्यधीनं कर्मेत्यर्थः ॥ १३ ॥

ज्ञानकर्मणोर्मिथो विरुद्धत्वेन सहकारित्वासम्भवे हेत्वन्तरमाह—**कारकाणीति**[2] ॥ १४ ॥

विरुद्धत्वकृतं समुच्चयासम्भवं फलितमाह—**विरुद्धत्वादिति** । एवं विदुषा मिथो विरुद्धत्वं जानतेत्यर्थः । समुच्चयासम्भवे फलितमाह—**तस्मादिति** ॥ १५ ॥

स्वर्गकामादिविध्यन्यथानुपपत्त्या 'ज्ञात्वा[3] कर्म समाचरेदित्यादिवचनाद्वा देहादिव्यतिरिक्तात्मज्ञानवतः कर्माधिकाराङ्गीकारात् ज्ञानकर्मणोर्विरोधे तदयोगादधिकार्यभावे कर्मकाण्डस्याप्रामाण्यं प्राप्तमित्याशङ्क्याह—**देहाद्यैरिति** । आत्मनो देहिनो देहातिरिक्तस्य देहादिभिरविद्याकृतैरविशेषेण अविविक्तत्वेन ब्राह्मणोऽहं गृहस्थोऽहमित्यादिग्रहणं मिथ्याभिमानात्मकं स्वाभाविकं प्राणिनां प्रत्यात्ममविद्याकृतमनुभूयते । तद्यावदनुवर्तते तावत्कर्मकाण्डं प्रवर्तते । तथा च देहादिव्यतिरिक्तात्मज्ञानवत्त्वेऽपि ब्रह्मज्ञानाभावान्मूलाज्ञानस्य सत्त्वात्तज्जन्याभिमानपूर्वकं कर्मप्रवृत्तेस्तद्विज्ञानोदयात्पूर्वं कर्मकाण्डप्रवृत्तिरविरुद्धेत्यर्थः ॥ १६ ॥

तर्हि ब्रह्मज्ञानादूर्ध्वं कुतस्तदप्रामाण्यमित्याशङ्क्याह—**नेति नेतीति**। आत्मा यैर्देहादिभिर्विशिष्टः सन्कर्मस्वधिक्रियते तान् देहादीन् नेति नेतीति वीप्सया निराकृत्य निर्विशेषे ब्रह्मात्मन्यहमस्मीति

---

१. ऽनुबद्धते - ख २. श्लोके बुद्धिमित्यस्य उदकबुद्धिमित्यर्थः। निजं = स्वाभाविकं । ३. आत्मानमित्यादिः ।

निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः ।
असत्येवाविशेषेऽपि प्रत्यगात्मनि केवले ॥१८॥
न चेद्भूयः प्रसूयेत कर्ता भोक्तेति धीः कथम् ।
सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥१९॥
अत्यरेचयदित्युक्तो न्यासः श्रुत्याऽत एव हि ।
कर्मभ्यो मानसान्तेभ्य एतावदिति वाजिनाम् ॥२०॥
अमृतत्वं श्रुतं यस्मात्त्याज्यं कर्म मुमुक्षुभिः ।
अग्निष्टोमवदित्युक्तं तत्रेदमभिधीयते ॥२१॥
नैककारकसाध्यत्वात्फलान्यत्वाच्च कर्मणः ।
विद्या तद्विपरीताऽतो दृष्टान्तो विषमो भवेत् ॥२२॥

---

ज्ञानार्थं वेदान्तेषु सोऽवशेषितः। तेन च निर्विशेषात्मज्ञानेनाविद्या सपरिकरा निवारिता। तस्मात्तज्ज्ञानादूर्ध्वं मूलाज्ञानाभावात्तदुत्थाभिमानासिद्ध्या कर्मकाण्डाप्रवृत्तेस्तदप्रामाण्यमिष्टमेवेत्यर्थः ॥ १७ ॥

ननु प्रमाणोत्थसम्यग्ज्ञानान्निवृत्तमेवाज्ञानं पुनरुत्पद्य कार्यं करिष्यति। मैवम्। अविद्या हि प्रमाणतो निवृत्ता कथं भूयोऽभिजायेत[1]। आत्मनोऽन्यस्माद्वा तदुत्पत्तिः। नाद्यः। अद्वितीये निर्विशेषे तस्मिन्नविद्योत्पत्तेरयोगात्। न द्वितीयः। अन्यस्याविद्यात्मकत्वेन[2] तदुत्पादकत्वानुपपत्तेरित्याह—**निवृत्तेति** ॥ १८ ॥

अविद्या आत्मनोऽन्यस्माद्वा नोत्पद्यते चेत्तर्हि कर्ता भोक्तेति धीपूर्वकं कर्माधिकारित्वं विदुषो न युक्तमित्याह—**न चेदिति प्रसूयेत**। किं चाहं ब्रह्मेति ज्ञाने सति कर्मप्रवृत्तेरनवकाशत्वान्न कर्माधिकारो विदुषोऽस्तीत्याह—**सदिति**। यस्माद् विद्यायामुत्पन्नायां कर्मणो निरवकाशत्वं तस्मात्केवलैव विद्या कैवल्यहेतुरिति फलितार्थमाह—**तस्मादिति** ॥ १९ ॥

विद्यायाः सहकारिनिरपेक्षत्वेन मोक्षहेतुत्वे श्रौतं लिङ्गं दर्शयति—**अत्यरेचयदिति**। ज्ञानस्य कर्मनिरपेक्षत्वमतः शब्दस्यार्थः। सत्यादीनि मानसान्तानि[3] कर्माण्युक्त्वा 'तानि वा एतान्यवराणि तपांसि' इति निन्दित्वा संन्यासोपायं ज्ञानं 'न्यास एवात्यरेचयत्' इति[4] यतः श्रुतिः स्तौति तस्मात्तदेव मोक्षसाधनम्। वाजिनामपि शाखायां "एतावदरे खल्वमृतत्व" इति[5] ज्ञानमेव स्वतन्त्रममृतत्वसाधनं श्रुतं तस्मान्मोक्षापेक्षायां कर्मसंन्यासपूर्वकं ज्ञाननिष्ठेन भवितव्यमित्यर्थः ॥ २० ॥

अग्निष्टोमस्य ध्रुवफलस्यापि सापेक्षत्ववदैक्यज्ञानस्यापि सापेक्षत्वमित्युक्तमनूद्योत्तरमाह—**अग्निष्टोमेति** ॥ २१ ॥

**कर्मणोऽनेककारकसाध्यत्वाद्विद्याद्वारा** वीर्यवत्तरफलभेदसम्भवाच्च युक्ता सहकार्यपेक्षा। विद्यायान्तु प्रमाणवस्तुतन्त्रत्वान्नानेककारकसाध्यत्वं, नापि विद्याफले मोक्षेऽतिशयोऽस्ति। तेन दृष्टान्तः समो न भवतीत्युत्तरमेव स्फोरयति—**नैकेति** ॥ २२ ॥

---

१. जायते—ख। २. अविद्याकार्यत्वेन। ३. सत्यं दमः शमः दानं प्रजननं यज्ञः दानं अग्न्याधानं अग्निहोत्रं इत्यादीनि।
४. तै० नारा० ११-२। ५. बृ २-४।

**कृष्यादिवत्फलार्थत्वादन्यकर्मोपबृंहणम् ।**
**अग्निष्टोमस्त्वपेक्षेत विद्यान्यत् किमपेक्षते ॥२३॥**

**प्रत्यवायस्तु तस्यैव यस्याहङ्कार इष्यते ।**
**अहङ्कारफलार्थित्वे विद्येते नात्मवेदिनः ॥२४॥**

**तस्मादज्ञानहानाय संसारविनिवृत्तये ।**
**ब्रह्मविद्यांविधानाय प्रारब्धोपनिषत्त्वियम् ॥२५॥**

**सदेरुपनिपूर्वस्य क्विपि चोपनिषद्भवेत् ।**
**मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥२६॥**

---

वैषम्यमेव प्रकटयति—**कृष्यादिवदिति** । यथा कृषिर्वाणिज्यमित्यादौ सामग्रीवाहुल्यात्फलवाहुल्याच्च सहकार्यपेक्षा दृष्टा । तथा ज्योतिष्टोमोऽपि कारकभूयस्त्वाद्वीर्यवत्तरफलातिशयसापेक्षात्वाच्चान्येनोद्गीथाद्युपासनाकर्मणा स्वस्योपवृंहणं फलबाहुल्यार्थमपेक्षेत । विद्या तु निरतिशयफलत्वान्नान्यत्किञ्चिदपेक्षितुं क्षमते । तेन वैषम्यमित्यर्थः ॥ २३ ॥

प्रत्यवायस्मृतेश्चेत्युक्तम् । तत्रोत्तरमाह—**प्रत्यवायेति** । आत्मविदोऽपि नित्याकरणे प्रत्यवायः स्यादहङ्कारादेस्तुल्यत्वादित्यत आह—**अहङ्कारेति** ॥ २४॥

ब्रह्मविद्यायाः स्वतन्त्रायाः सकार्याज्ञाननिवर्त्तकत्वसिद्धौ फलितमुपसंहरति—**तस्मादिति** ॥२५॥

उपनिषन्नामनिर्वचनेनापि स्वतन्त्रैव ब्रह्मात्मविद्या मोक्षहेतुरित्याह—**सदेरिति** । सदेर्धातोर्विशरणगत्यवसादनार्थस्य सामीप्यार्थोपपूर्वस्य निश्चयार्थनिपूर्वस्य च कर्त्रर्थे क्विप्प्रत्यये परतो भवत्युपनिषत्पदम् । 'षद्लृविशरणगत्यवसादनेषु' इति धात्वर्थत्रयस्य ब्रह्मविद्यायां सम्भवादसावेव मुख्यवृत्योपनिषदुच्यते । ग्रन्थोऽपि तादर्थ्यात्तथा व्यपदिश्यते । ये मन्दब्रह्मविदस्तेषां गर्भजरादिकमुपनिषच्छब्दिता ब्रह्मविद्या शिथिलीकरोति । जिज्ञासूंश्चोप सामीप्येन निश्चयेन ब्रह्म गमयति । साक्षात्कृतब्रह्मसतत्त्वानां तु सबीजं गर्भादि नाशयति । तस्माद्ब्रह्मविद्याया उपनिषन्नामप्रसिद्धया वेदान्तानां मोक्षहेतुस्वतन्त्रब्रह्मात्मविद्यार्थत्वं सिद्ध्यतीत्यर्थः ॥ २६ ॥

॥ इति विवृतं चैतन्यप्रकरणं[1] प्रथमम् ॥

---

१. चैतन्यं सर्वगमिति प्रकरणारम्भात् अस्य चैतन्यप्रकरणत्वेन प्रसिद्धिः एवमुत्तरप्रकरणानां तत्तदारम्भकपदैरेव प्रसिद्धिर्विज्ञेया ।

## ॥ प्रतिषेधप्रकरणम् ॥ २ ॥

**प्रतिषेद्धुमशक्यत्वान्नेति नेतीति शेषितम् ।**
**इदं नाहमिदं नाहमित्यद्धा प्रतिपद्यते ॥ १ ॥**

**अहंधीरिदमात्मोत्था वाचारम्भणगोचरा ।**
**निषिद्धात्मोद्भवत्वात्सा न पुनर्मानतां व्रजेत् ॥ २ ॥**

**पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः ।**
**दृशिरेकः स्वयं सिद्धः फलत्वात्स न बाध्यते ॥ ३ ॥**

---

आत्मनि संसारित्वग्राहकप्रत्यक्षादिप्रमाणविरोधाद् ब्रह्मात्मैकत्वविद्यैव नोपपद्यते । प्रमाणसिद्धस्यापि संसारित्वस्य प्रतिषेधे प्रत्यगात्मनोऽपि प्रतिषेधप्रसङ्गादित्याशङ्क्य वेदान्तानामेकत्वज्ञानोत्पादनेन सकार्याज्ञाननिवृत्त्यर्थतामर्थं संक्षेपतो वक्तुं प्रकरणान्तरं प्रस्तौति—**प्रतिषेद्धुमिति** । नेति नेतीति वीप्सया समारोपितसमस्तप्रतिषेधेऽपि प्रत्यगात्मनो न प्रतिषेद्धुं योग्यत्वमस्ति तस्यात्मत्वात्, निषेधस्यापि साक्षित्वेनावशेषस्यावश्यंभावित्वादतोऽवशेषितं तत्त्वम् । इदं स्थूलशरीरम्; इदञ्च सूक्ष्मशरीरं नाहमिति प्रतिषिध्य "अहं ब्रह्मास्मी"ति साक्षान्निश्चिनोति । तस्मान्न प्रत्यगात्मनि प्रतिषेधावधित्वेन तत्साक्षित्वेन च प्रतिषेधप्रसक्तिरित्यर्थः ॥ १ ॥

देहेन्द्रियाद्यभिमानस्यानवरतमनुवृत्तेः "अहं ब्रह्मे"ति ज्ञानमप्रतिष्ठितमित्याशङ्क्य देहाद्यात्माभिमानस्य बाधितानुवृत्त्या प्रतिपक्षत्वाभावान्मैवमित्याह—**अहंधीरिति**[1] । देहादावनात्मन्यात्मबुद्धिः अहं कर्तुरिदमंशाद्बाधितरूपादुत्पद्यते । वाचारम्भणं[2] च मिथ्याध्यस्तं देहाद्यात्मत्वं गोचरयति । नेति-नेतीति शास्त्रेण निषिद्धश्चात्मा स्वभावः समुद्भवश्च कारणं यस्याः सा तथोच्यते; तस्मान्निषिद्धस्वरूपत्वान्निषिद्धकारणत्वाच्च सति ब्रह्मात्मज्ञाने न सा पुनर्मानतां गच्छतीत्यर्थः ॥ २ ॥

"कर्ता भोक्ता अह"मिति विज्ञाने जाग्रति कथमकर्तृभोक्तृब्रह्माहमिति ज्ञानं सिध्येदित्याशङ्क्याह—**पूर्वबुद्धिमिति** । न हि शुक्त्यज्ञानजन्यां रजतत्त्वबुद्धिमबाधित्वा शुक्तिधीरुत्तरोत्पद्यते । तथा ब्रह्मात्मबुद्ध्या कर्त्रादिबुद्धिर्बाध्येत्यर्थः । किमिति कर्त्रादिबुद्ध्या ब्रह्मात्मबुद्धिरेव न बाध्येत्याशङ्क्याह—**दृशिरिति** । ब्रह्मात्मा ज्ञप्तिस्वरूपो दृशिरुच्यते । स चैको द्वितीयाभावेनोपलक्ष्यते । परनिरपेक्षसत्तास्फूर्तिकश्च निश्चीयते । स तावन्न बाध्यते । बाधकाभावात् । तज्ज्ञानं चाबाध्यं परमार्थविषयत्वात् । तत्फलं च न बाध्यम् । ब्रह्मात्मतत्त्वस्यैव ज्ञानाभिव्यक्तस्य बाधवियुक्तस्य फलत्वोपचारात् । अतो वस्तुनस्तज्ज्ञानस्य तत्फलस्य च बाधाभावात् कर्त्रादिबुद्धिरेव बाध्येत्यर्थः ॥ ३ ॥

---

१. इदं धी-मा ।     २. श्रुतिसिद्धमित्यादिः ।

**इदं वनमतिक्रम्य शोकमोहादिदूषितम् ।**
**वनाद्गान्धारको यद्वत्स्वात्मानं प्रतिपद्यते ॥ ४ ॥**

## ॥ ईश्वरात्मप्रकणम् ॥ ३ ॥

**ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत् ।**
**आत्मा चेदीश्वरोऽस्मीति विद्या साऽन्यनिवर्तिका ॥ १ ॥**

**आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः ।**
**अज्ञेयत्वेऽस्य किं तैः स्यादात्मत्वे त्वन्यधीह्नुतिः ॥ २ ॥**

---

कथं पदार्थविवेकद्वारा ब्रह्मात्मज्ञानमित्याशङ्क्य श्रौतेन दृष्टान्तेनोत्तरमाह—**इदं वनमिति** । देहेन्द्रियादिलक्षणमिदमनात्मभूतं वनमिव वनमनेकानर्थकलुषितं शोकमोहादिभिर्व्याघ्रतस्करस्थानीयैर्दूषितमन्वयव्यतिरेकाभ्यामतिक्रम्य पदार्थविवेकं कृत्वा स्वमात्मानमहं ब्रह्मास्मीत्यौपनिषदं पुरुषमधिगच्छति । यथा गन्धारदेशोद्भवश्चोरैरानीतो वने विसृष्टो बहुविधमार्त्तस्वरं कुर्वन्कारुणिकेन केनचिन्मोचितस्तेनोद्दिष्टमार्गेण स्वं देशं प्राप्य स्वस्थो भवति तथाऽयमात्मा स्वमात्मानमुक्तप्रकारेण प्रतिपद्य कृतकृत्यो निर्वृणोतीत्यर्थः ॥ ४ ॥

॥ इति प्रतिषेधप्रकरणं द्वितीयम् ॥ २ ॥

यस्मिन्नीश्वरे सति अज्ञानादि [1]लक्षणमुमुक्षोः "अहमस्मि ब्रह्मे"ति मोक्षसाधनज्ञानमुक्तं स किमीश्वरो मेर्वादिवदनात्मा स्यादात्मा वेति जिज्ञासायामाद्यं दूषयति—**ईश्वर इति** । नहि मेर्वादावहमस्मीति मतिः क्रियते तथेश्वरस्यानात्मत्वे तस्मिन्नसौ मुमुक्षुरीश्वरोऽस्मीति न जानीयात् । ततस्तत्त्वमस्यादिवचनविरोधः स्यादित्यर्थः । द्वितीयं प्रत्याह—**आत्मेति** । ईश्वरो मुमुक्षोः स्वरूपभूतश्चेत्तर्हि तस्मिन्नस्मीति तस्य विद्योपपद्यते । सा चान्यस्याः संसारहेतुभूताया अविद्याया निवर्त्तकत्वात्पुरुषार्थपरिसमाप्तिहेतुस्ततः शास्त्रमविरुद्धं सिद्ध्यतीत्यर्थः ॥ १ ॥

अस्थूलादिवाक्यपर्यालोचनायामपीश्वरस्यात्मत्वमेवाश्रयितव्यमित्याह—**आत्मन इति** । प्रतीचो व्यतिरिक्तस्य चेदीश्वरस्यास्थूलत्वमनणुत्वमित्यादयो धर्माः श्रुत्या विवक्षितास्तदाऽस्येश्वरस्यानात्मत्वेनाज्ञेयत्वे सति मुमुक्षोरस्थूलादिभिः श्रुतैर्धर्मैर्न किञ्चित्फलं स्यात् । यदि त्वस्थूलादिधर्मकस्येश्वरस्य प्रत्यक्त्वेन ज्ञेयत्वं तदा कृशस्थूललक्षणाया धियो मोहमूलाया मिथ्याबुद्धेर्निवृत्तिसिद्धेरात्मत्वमेव तस्याऽऽस्थातुमुचितमित्यर्थः ॥ २ ॥

---

१. लक्षणेमुमु—मा ।

**मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ।**
**परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ।। ३ ।।**
**बुभुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते ।**
**अप्राणो ह्यमनाः शुभ्र इति चानर्थकं वचः ।। ४ ।।**

## ।। तत्त्वज्ञानस्वभावप्रकरणम् ।। ४ ।।

**अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितम् ।**
**नाहंप्रत्ययवद्दुष्टं कथं कर्म प्ररोहति ।। १ ।।**
**दृष्टवच्चेत्प्ररोहः स्यान्नान्यकर्मा स इष्यते ।**
**तन्निरोधे कथं तत्स्यात्पृच्छामो वस्तदुच्यताम् ।। २ ।।**

---

यस्मादीश्वरस्यात्मत्वे फलमुपलभ्यते तस्मान्मिथ्याध्यासस्याज्ञानमूलस्य कृशस्थूलाद्यभिमानस्य निवृत्त्यर्थमस्थूलादि प्रत्यगात्मविशेषणत्वेनेश्वरस्यात्मत्वप्रतिपत्त्या स्वीकर्तव्यमित्याह—**मिथ्येति** । यदि पुनरिदं नाभ्युपगम्यते तदा शून्यत्वमीश्वरस्यापि स्यादित्याह—**परत्रेति** । अनात्मरूपे कुत्रचिदीश्वरे स्थूलादिनिवृत्त्यर्थमस्थूलादिकमिष्यते चेत् तदेश्वरस्य शून्यतावर्णनमेव स्यात् । ईश्वरस्य पराग्रूपत्वयोगात्तथात्वे घटादिवदनीश्वरत्वप्रसङ्गात् । तस्मादनात्मत्वायोगादीश्वरमभ्युपगच्छता आत्मैव सोऽभ्युपगम्यत इत्यर्थः ।। ३ ।।

प्रत्यगात्मनोऽन्यत्र स्थूलादिप्रतिषेधे चाप्राप्तप्रतिषेधः स्यादिति दोषान्तरमाह—**बुभुत्सोरिति** । प्रत्यगात्मनो बुभुत्सोः संसारित्वेनाभिमतादन्यत्र स्थूलादिप्रतिषेधे तत्प्राप्त्यभावादप्राप्तप्रतिषेधो निष्फलः स्यादित्यर्थः । इतश्चात्मैवेश्वरोऽभ्युपगन्तव्यः अनात्मनि प्राणसम्बन्धस्य मनः सम्बन्धस्य चाप्राप्तत्वादप्राणादिवाक्यस्यानर्थक्यप्रसङ्गादित्याह—**अप्राणो हीति** ।। ४ ।।

।। विवृतमीश्वरप्रकरणं तृतीयम् ।।

### ।। तत्त्वज्ञानस्वभावप्रकरणम् ।।

यद्ब्रह्मात्मज्ञानमहं ब्रह्मास्मीति मोक्षसाधनमुक्तं तन्न फलवद्भवितुमलम् । सञ्चितकर्मविरोधादित्याशङ्क्याह—**अहमिति** । अहमिति प्रतीयते यस्मिन्नहंकारे स साभासोऽहंप्रत्ययो बीजमुपादानं यस्य कर्मणस्त्तथा व्यपदिश्यते । तस्मिन्नेवाहंप्रत्ययवत्यहङ्कारे मूलाज्ञानकार्ये तिष्ठतीति तदेव कर्म तथोच्यते, उपादानादन्यत्र कार्यस्थित्यनुपपत्तेः । नाहं कर्ता भोक्ता वा किन्तु ब्रह्मैवास्मीति प्रत्ययो वाक्यीयो, नाहं प्रत्ययः स च योग्ये विषये दग्धुं प्रवृत्तो वह्निवद् व्यपदिश्यते । तेनोष्टं दग्धं यदेवंविधं कर्म तन्न कथञ्चिदपि ब्रह्मात्मज्ञानानन्तरं कार्याय पर्याप्नोति । तस्मान्न सञ्चितकर्मप्रतिबन्धाद्यथोक्तस्य ज्ञानस्य विफलत्वाशङ्केत्यर्थः ।। १ ।।

यथा ज्ञानवतोऽपि भिक्षाटनादि सफलं दृष्टं तथाऽग्निहोत्राद्यपि फलारम्भकं स्यादिति शङ्कते—**दृष्टवदिति** । न तस्याग्निहोत्रादेः फलारम्भकत्वं ज्ञानविरुद्धत्वात् । दृष्टस्य तु भिक्षाटनादेरारब्धकर्मनिबन्धनत्वेनाविरुद्धत्वादिति परिहरति—**नान्यकर्मेति** । ज्ञानादज्ञाननिवृत्त्या तन्मूलाहङ्कारनिवृत्तिद्वारेण तदाश्रयकर्मनिवृत्तौ कथमारब्धमपि कर्म सिद्ध्येदिति वो युष्मान्पृच्छामस्तत्रोत्तरं वाच्यमिति पुनः शङ्कते—**तन्निरोध इति** ।। २ ।।

देहाद्यारम्भसामर्थ्याज्ज्ञानं सद्विषयं त्वयि ।
अभिभूय फलं कुर्यात्कर्मान्ते ज्ञानमुद्भवेत् ॥ ३ ॥
आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः ।
अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥ ४ ॥
देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ।
ततः सर्वमिदं सिद्धं प्रयोगोऽस्माभिरीरितः ॥ ५ ॥

## ॥ बुद्ध्यपराधप्रकरणम् ॥ ५ ॥

मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।
कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥ १ ॥

---

परिहरति—**देहादीति** । प्रारब्धं कर्म देहाद्यारम्भद्वारा प्रवृत्तवेगवशाद्ब्रह्मात्मज्ञानं परमार्थवस्तुविषयं प्रमाणप्रसूतं प्रबलमपि स्वफलाद्विदेहकैवल्यादभिभूय प्रच्याव्य स्वकीयं फलं देहाभासजगदाभासलक्षणं कुर्यादेव । तस्य चारब्धस्य कर्मणोऽन्ते फलोपभोगेनावसाने सति प्रागुक्तं ज्ञानं प्रतिबन्धमुद्भूतमविद्यालेशमपनुद्य विद्वांसं स्वाराज्येऽभिषेचयतीत्यर्थः ॥ ३ ॥

ननु प्रारब्धकर्मवशाद्ब्रह्मविदो देहादिप्रतिभासश्चेदनारब्धकर्मवशादपि पौनःपुन्येन देहादिप्रतिभाससम्भवादनिर्मोक्षः स्यादविशेषादित्याशङ्क्याह—**आरब्धस्येति** । भोगज्ञानयोरारब्धकर्मकार्यत्वेन मिथो विरोधाभावादारब्धकर्मणो देहादिप्रतिभासेऽपीतरस्यानारब्धकर्मणस्तत्फलस्य च ज्ञानेन विरुद्धत्वान्न ज्ञाने सति फलारम्भकत्वं तस्य सिध्यति । प्रवृत्ताप्रवृत्तफलत्वविशेषोपपत्तेरित्यर्थः ॥ ४ ॥

तर्हि कदाचिदात्मनो देहात्मत्वाभिमानसमुद्भूतदुरितप्रतिबन्धान्मोक्षानुपपत्तिरिति चेन्नेत्याह—**देहात्मेति** । यथा विवेकविकलस्य देहे मनुष्योऽहमित्यात्मज्ञानं निःसंदिग्धमुपलब्धं तथा मुख्यात्मन्येव देहाद्यहंकारपर्यन्तसाक्षिणि यस्य ज्ञानं वाक्यादुपजायमानमसन्दिग्धं देहात्मज्ञानस्य रज्जुज्ञानमिव सर्पज्ञानस्य बाधकं सम्पद्यते । स यथोक्तज्ञानबलादनर्थराशेरपनीतत्वाद्बलादेव मुच्यते । तमेव विदित्वाऽतिमृत्युमेतीत्यादिदर्शनादित्यर्थः ॥ ५ ॥

॥ इत्यहंप्रत्ययप्रकरणं चतुर्थम् ॥

### ॥ बुद्ध्यपराधप्रकरणम् ॥

यदि प्रदर्शितप्रक्रियया ब्रह्मात्मज्ञानममृतत्वसाधनं किमिति तर्हि सर्वैरहंब्रह्मास्मीत्यात्मरूपं न गृह्यते । तत्राह—**मूत्राशङ्केति** । यथोदङ्क[1] नामा कश्चिद् ऋषिरमृतकलशं भगवदाज्ञया देवेन्द्रोपहृतं बस्तिदेशस्थमुपलभ्य मूत्राशङ्कः सन्यथाश्रुतमप्यमृतं मिथ्याज्ञानान्न गृहीतवान् । तथा वर्णाश्रमोपाधिविहितकर्मनाशभयादात्मज्ञानाग्रहो जन्तोरुत्पद्यते । तेन पदार्थविवेकवता मुमुक्षुणा भवितव्यमित्यर्थः ॥ १ ॥

---

१. मुद्रितभारते उत्तङ्क इति तस्य नाम निर्दिष्टम् ।

बुद्धिस्थश्चलतीवात्मा 'ध्यायतीव' च दृश्यते ।
नौगतस्य यथा वृक्षास्तद्वत्संसारविभ्रमः ॥ २ ॥
नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा ।
आत्मनः संसृतिस्तद्वद्ध्यायतीवेति हि श्रुतिः ॥ ३ ॥
चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते ।
बुद्धेः शब्दादिभिर्भानिस्तेन मोमुह्यते जगत् ॥ ४ ॥
चैतन्यभास्यताहमस्तादर्थ्यं च तदस्य यत् ।
इदमंशप्रहाणे न परः सोऽनुभवो भवेत् ॥ ५ ॥

## ॥ विशेषापोहप्रकरणम् ॥ ६ ॥

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशेष्यते ।
तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥

---

ननु दृष्टान्ते देवेन्द्रस्य वेषान्यत्वममृतकुम्भस्य च वस्तिस्थानस्थापनं मूत्रभ्रमोत्पत्तौ कारणम् । न तथाऽऽत्मनो ब्रह्मभूतस्य भ्रमकारणमस्तीत्याशङ्क्य पदार्थविवेकात्पूर्वमविद्याकल्पितान्तःकरणाविवेकादात्मनि संसारित्वभ्रान्तिरित्याह—**बुद्धीति** । तदेव दृष्टान्तेन स्पष्टयति—**नौगतस्येति** ॥ २ ॥

उक्तमेवार्थं प्रपञ्चयति—**नौस्थस्येति** । आत्मनः संसृतिरहितस्य बुद्ध्यविवेकात्संसृतिरित्यत्र प्रमाणमाह—**ध्यायतीति** ॥ ३ ॥

ननु शुक्त्यादौ सादृश्यादिसम्भवादन्यत्रान्यधर्माध्याससम्भवः स्यान्न विषयविषयिणोर्बुद्ध्यात्मनोरत्यन्तवैलक्षण्यादन्योन्यधर्माध्याससिद्धिरित्याशङ्क्य, चिदाभासद्वारा सादृश्यादिसम्भवान्मैवमित्याह—**चैतन्येति** । चिदाभासस्य विषयाकारस्य च बुद्धौ सङ्क्रमेण विषयधर्मान्कृशस्थूलादीनात्मन्यध्यस्यात्मधर्मानानन्दादीन् बुद्धावारोप्य "अहं कर्ता भोक्ते"ति लोकः संसरतीति फलितमाह—**तेनेति** ॥ ४ ॥

अविवेकाधीने संसाराध्यासे विविक्तपदार्थस्य वाक्यादहं ब्रह्मेति प्रतिपत्त्या मुक्तिर्युक्तेत्याह—**चैतन्याभासेति** । अहंकारस्य चैतन्याकारता या मोहात्प्राप्ता यच्चाहंकारस्य चेतनशेषत्वं मोहादेव सिद्धम्, तदुभयमहमित्यत्रेदमंशस्य विवेकेन परित्यागे सति न भवति । यस्तु तत्रानिदमंशोऽनुभवः साक्षी परिशिष्यते स परमात्मैव भवेत् । तस्मात् परिशोधितपदार्थो वाक्यादहं ब्रह्मेति ज्ञानान्मुक्तो भवतीत्यर्थः ॥ ५ ॥

॥ मूत्राशङ्कप्रकरणं विवृतं पञ्चमम् ॥

### ॥ विशेषापोहप्रकरणम् ॥

पदार्थविवेकवतो वाक्यादहं ब्रह्मेति ज्ञानं भवतीत्युक्तम् । इदानीं पदार्थविवेके पुनरपरमुपायमुपदिशति—**छित्वेति** । विमतमात्मविशेषणं न भवति विशेषणत्वात् छिन्नहस्तवदित्यर्थः ॥ १ ॥

**तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम् ।**
**अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वैर्विशेषणैः ॥ २ ॥**
**विशेषणमिदं सर्वं साध्वलङ्करणं यथा ।**
**अविद्याध्यस्तमतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥**
**ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।**
**अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत् ॥ ४ ॥**
**यावान् स्यादिदमंशो यः स स्वतोऽन्यो विशेषणम् ।**
**विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥ ५ ॥**
**इदमंशोऽहमित्यत्र त्याज्यो नात्मेति पण्डितैः ।**
**अहं ब्रह्मेति शिष्टांशो भूतपूर्वगतेर्भवेत् ॥ ६ ॥**

---

श्रोत्रादेःस्थूलदेहाश्रयत्वेन दृष्टस्यात्मविशेषणत्वाभावेऽपि सुखदुःखादेस्तद्विशेषणत्वं दुष्परिहरमित्याशङ्क्याह—**तस्मादिति** । सुखादेरपि व्यभिचारस्य स्वानुभवगम्यत्वादित्यर्थः । देहद्वयसमवायिनः सर्वस्यात्मनि व्यभिचारे फलितमाह—**तस्माज्ज्ञ इति** ॥ २ ॥

विशेषणस्यानात्मत्त्वेपि नात्मनस्तद्वियोगोऽस्ति । आगमापायाभ्यां सम्बन्धनैरन्तर्यादित्याशङ्क्याह—**विशेषणमिति** । विशेषणस्य सर्वस्यात्मन्यविद्याध्यारोपितत्त्वे फलितमाह—**अत इति** । न ज्ञायमानत्वादनात्मत्वं आत्मनि व्यभिचारादित्याशङ्क्याह—**ज्ञातेति** । आत्मनः सर्वैरहमिति ज्ञायमानत्वादज्ञेयत्वमसिद्धमित्याशङ्क्याह—**अहमिति** । तस्यापि स्वापादौ व्यभिचारात् दृश्यत्वाच्च सिद्धमनात्मत्वमित्यर्थः ॥ ४ ॥

आत्मनोऽहंप्रत्ययग्राह्यत्वाभावे कुतः सिद्धिरित्याशङ्क्याह—**यावानिति** । अहमित्यत्र चिदचिदात्मके यावानिदमंशोऽहङ्कारादिरचिदात्मको यो यत्र प्रत्यगात्मनि विशेषणं स्यात् स प्रत्यगात्मा । तस्माद्विशेषणत्वेनाभिमताहङ्कारादेर्व्यतिरिक्तः सर्वेषां विशेषणानां प्रक्षयो व्यावृत्तिरस्मिन्निति व्युत्पत्त्या निर्विशेषः स्वतोऽन्यापेक्षामन्तरेण लब्धसत्ताकः स्फुरद्रूपः सिद्ध्यति । यथा देवदत्तश्चित्रगोः सम्बन्धात्प्रागेव सिद्धो न चित्रगोः सम्बन्धं स्वसिद्धिं प्रत्यपेक्षते तथाऽहंकारादेरात्मा प्रागेव सिद्धो नाहंकारादिकं स्वसिद्धावपेक्षते । विमतं विशेषणं स्वविलक्षणविशेष्यनिष्ठं विशेषणत्वाच्चित्रगुत्ववदित्यर्थः ॥ ५ ॥

अहमोऽनात्मत्वे कथमहं ब्रह्मेति श्रुतिरविरुद्धा सिद्ध्येदित्याशङ्क्याध्यस्ताहंकारस्य मूलनिवृत्त्या[1] निवृत्त्यर्था श्रुतिर्नात्मत्वप्रतिपत्त्यर्थेत्याह—**इदमिति** । अहमित्यत्रेदमनिदमात्मके योऽयमिदमंशोऽहंकारस्तस्य त्यागेऽपि यः शिष्टोऽनिदमात्मकोंऽशःसोऽहंशब्दलक्ष्यो ब्रह्मेत्यवगम्यो भवेदित्यर्थः । अहङ्कारे त्यक्ते कथमहमुल्लेखो वाक्यार्थबुद्धौ सिद्ध्येत्तत्राह—**भूतेति** । भूता सञ्जाता पूर्वमविद्यावस्थायामहमात्मेति या बुद्धिस्तदपेक्षया वाक्यार्थज्ञानेऽहमुल्लेखः स्यादित्यर्थः ॥ ६ ॥

॥ व्याकृतं छित्वाप्रकरणं षष्ठम् ॥

---

१. निवृत्यर्था—मा ।

# ॥ बुद्ध्यारूढप्रकरणम् ॥ ७ ॥

बुद्ध्यारूढं सदा सर्वं दृश्यते यत्र तत्र वा ।
मया तस्मात्परं ब्रह्म सर्वज्ञश्चास्मि सर्वगः ॥ १ ॥
यथात्मबुद्धिचाराणां साक्षी तद्वत् परेष्वपि ।
नैवापोढुं न चाऽऽदातुं शक्यस्तस्मात्परो ह्यहम् ॥ २ ॥
विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः ।
अशेषबुद्धिसाक्षित्वाद्बुद्धिवच्चाल्पवेदना ॥ ३ ॥
मणौ प्रकाश्यते यद्वद्रक्ताद्याकारताऽऽतपे ।
मयि संदृश्यते सर्वमातपेनेव तन्मया ॥ ४ ॥

---

## ॥ बुद्ध्यारूढप्रकरणम् ॥

कृतान्वयव्यतिरेकस्य परिशोधितपदार्थस्य वाक्यादेव वाक्यार्थज्ञानमहं ब्रह्मास्मीत्युपपत्तितः सिद्धमपि स्वानुभवावष्टम्भेन स्पष्टीकर्तुं प्रकरणं प्रस्तौति—**बुद्ध्यारूढमिति** । बुद्धिस्थं विषयजातं सर्वदोपलब्धिकाले यस्मान्निर्विकारेणाध्यक्षेणोपलभ्यते । तस्मादहमुपलब्धा निर्विशेषत्वान्निर्विकारत्वाच्च परमेव ब्रह्मास्मि । यस्माच्चाहं सर्वमुपलभे तस्मादस्मि सर्वज्ञः सर्वोपलब्धृत्वात् । यस्माच्च यत्र तत्र वा सर्वत्रैव व्यवस्थितमपर्यायेण पश्यामि तस्मादस्मि सर्वगोऽहमित्यर्थः ॥ १ ॥

पुरुषान्तरबुद्ध्यारूढे वस्तुनि पुरुषान्तरस्योपलब्धिस्मरणयोरभावान्नैकस्यात्मनः सर्वबुद्ध्यध्यक्षत्वसिद्धिरित्याशङ्क्याह—**यथेति** । आत्मीयत्वेन कल्पिते संघाते बुद्धितद्वृत्तीनां यथाहं साक्षी विवक्षितस्तथा परकीयत्वेन परिकल्पितेष्वपि सङ्घातेषु तद्वृत्तीनामहमेव साक्षी साक्षिभेदे प्रमाणाभावात् । न च तस्मिन्नात्मत्वादेव हानोपादाने युक्ते । यस्मादहं हानोपादानाद्यशेषसंसारव्यवहारातीतस्तस्मात्परमात्मैवाहं भेदस्य शास्त्रनिन्दितत्वादित्यर्थः ॥ २ ॥

बुद्ध्यारूढं दृश्यते मयेत्युक्तत्वात् दर्शनक्रियाकर्तृत्वादात्मनो विकारित्वं सगुणत्वं भौतिकत्वं बुद्धिवदल्पद्रष्टृत्वं च प्राप्नोतीत्याशङ्क्याह—**विकारित्वमिति** । अशेषविकारसाक्षित्वान्न विकारित्वमशेषाशुद्धिसाक्षित्वान्नाशुद्धत्वम् । सगुणत्वं सदोषत्वं च नास्ति । नापि भौतिकत्वम् तत्साक्षित्वात् न च बुद्धिवदल्पवेदना सिद्ध्यति सर्वबुद्धिसाक्षित्वादित्यर्थः ॥ ३ ॥

बुद्धिवदल्पवेदना क्षेत्रज्ञस्य नास्तीत्ययुक्तम् । बुद्धीनामशेषविषयग्राहकत्वे क्षेत्रज्ञस्य कृत्याभावात्तस्य च द्रष्टृत्वे विकारित्वस्य दुर्वारत्वादित्याशङ्क्याह—**मणाविति** । यथा स्फटिकादिमणौ जपाकुसुमादिरूपा रक्ताद्याकारताऽसत्येवादित्यप्रकाशेऽभिव्यज्यते । तथा सत्येवादित्यस्थानीये क्षेत्रज्ञे स्फटिकमणिस्थानीयायां बुद्धौ जपाकुसुमस्थानीयः सर्वो विषयो गृह्यते । तथा चादित्यप्रकाशेन रक्ताद्याकारताप्रतीतिवद्बुद्धिस्थं विषयजातं क्षेत्रज्ञेनैव प्रकाश्यमिति न क्षेत्रज्ञस्य किञ्चित्करत्वम्, न च तस्य द्रष्टृत्वे विकारित्वमादित्यस्येव स्वगतव्यापारमन्तरेण स्वसन्निधिमात्रेण सर्वविषयप्रकाशकत्वोपपत्तेरित्यर्थः ॥ ४ ॥

बुद्धौ दृश्यं भवेद्बुद्धौ सत्यां, नास्ति विपर्यये ।
द्रष्टा यस्मात्सदा द्रष्टा तस्माद्द्वैतं न विद्यते ॥ ५ ॥
अविवेकात् पराभावं यथा बुद्धिरवैत्तथा ।
विवेकात्तु परादन्यः स्वयं चापि न विद्यते ॥ ६ ॥

## ॥ मतिविलापनप्रकरणम् ॥ ८ ॥

चितिस्वरूपे स्वत एव मे मते रसादियोगस्तव मोहकारितः ।
अतो न किंचित्तव चेष्टितेन मे फलं भवेत्सर्वविशेषहानतः ॥ ॥
विमुच्य मायामयकार्यतामिह प्रशान्तिमायाह्यसदीहितात् सदा ।
अहं परं ब्रह्म सदा विमुक्तवत् तथाऽजमेकं द्वयवर्जितं यतः ॥ २ ॥

---

प्रकृतस्य प्रत्यगात्मनोऽद्वितीयत्वं स्फुटयति—**बुद्धाविति** । जागरितादौ सत्यां बुद्धावविद्याकल्पितायां तस्यां बुद्धौ समारूढं द्वैतमुपलभ्यते । स्वापादौ पुनरसत्यां बुद्धौ न द्वैतं दृश्यमस्ति । तेन व्यभिचारित्वाच्च द्वैतं नैव परमार्थतो विद्यते ! द्रष्टा तु साक्षी सर्वास्ववस्थासु द्रष्टैव न साक्षितां व्यभिचरति । तस्माददद्वितीयमेव प्रत्यक्चैतन्यमित्यर्थः ॥ ५ ॥

अविद्यया द्वैतं भाति विद्यया च न भातीत्युक्तं ते च विद्याविद्ये कस्येत्यपेक्षायां साभासाया बुद्धेरेवेत्याह—**अविवेकादिति** । अनात्मन्यात्माभिमानश्चादेहे देहाभिमानश्चाविवेकः तस्मान्मिथ्याज्ञानात्परस्यासंसारिणोऽसत्त्वं रजस्तमोभूयस्त्वाद्यथाबुद्धिर्विदितवती [1]तथाविवेकात्सत्त्वोद्रेकद्वारेण श्रवणाद्यनुष्ठानपूर्वकाद्ब्रह्मात्मैकत्वविषयाद्वेदान्तवाक्योत्थात्परमात्मनोऽन्यन्नैव पश्यति । स्वयमपि बुद्धिर्यथोक्तविद्यादशायां प्रत्यग्भूतब्रह्मव्यतिरेकेण[2] न तिष्ठतीत्यर्थः ॥ ६ ॥

॥ विवृतं बुद्ध्यारूढं प्रकरणं सप्तमम् ॥

### ॥ मतिविलापनप्रकरणम् ॥

स्वानुभवानुरोधेन साधितमेव ब्रह्मात्मज्ञानमात्ममनः संवादेनापि द्रढयितुं प्रकरणान्तरमवतारयति—**चितीति** ॥ १ ॥

निर्विशेषस्यानाधेयातिशयस्यात्मनो मनश्चेष्टितेन फलाभावे मनसस्तस्मिन्नेवात्मन्युपशान्तिस्तन्मात्रत्वेन पर्यवसानमु[3]चितमिति फलितमाह—**विमुच्येति** । मायामयकार्यतां = मिथ्याचेष्टितम् किमिति प्रत्यगात्मनि मनसः शान्तिरुच्यते ? ब्रह्मणि सत्यज्ञानादिलक्षणे किमिति तदुपशान्तिर्नोच्यते तत्राह—**अहमिति** ॥ २ ॥

---

१. विवेकात्सत्त्वोद्रेक—मा
२. रेकं न तिष्ठति—मा
३ उपचित मा

सदा च भूतेषु समोऽस्मि केवलो यथा च खं सर्वगमक्षरं शिवम् ।
निरन्तरं निष्कलमक्रियं परं ततो न मेऽस्तीह फलं तवेहितैः ॥ ३ ॥
अहं ममैको न मदन्यदिष्यते तथा न कस्याप्यहमस्म्यसङ्गतः ।
असङ्गरूपोऽहमतो न मे त्वया कृतेन कार्यं तव चाद्वयत्वतः ॥ ४ ॥
फले च हेतौ च जनो विषक्तवान् इति प्रचिन्त्याहमतो विमोक्षणे ।
जनस्य संवादमिमं प्रक्लृप्तवान् स्वरूपतत्त्वार्थविबोधकारणम् ॥ ५ ॥
संवादमेतं यदि चिन्तयेन्नरो विमुच्यतेऽज्ञानमहाभयागमात् ।
विमुक्तकामश्च तथा जनः सदा चरत्यशोकः सम आत्मवित्सुखी ॥ ६ ॥

## ॥ सूक्ष्मताव्यापिताप्रकरणम् ॥ ९ ॥

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम् ।
प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ १ ॥

---

ब्रह्मणो विशेषराहित्येन सदाविमुक्तत्वादिसिद्धावपि आत्मनो विशेषदर्शनाद्विमुक्तत्वाद्ययोगान्न ब्रह्मात्मनोरैक्योपपत्तिरित्याशङ्क्यात्मनोऽपि वस्तुतो विशेषो नास्तीति दृष्टान्तेन साधयति—**सदेति** ॥३॥

ब्रह्मभूतस्य तव उपयोगाभावेऽपि मच्चेष्टया त्वत्सम्बन्धिनो गुणभूतस्य प्रधानभूतस्य वा क्वचित्कश्चिदुपयोगो भविष्यतीत्याशङ्क्याह—**अहमिति**। अहमेकस्तस्मान्मत्तोऽन्यन्मम नेष्यते गुणभूतम्। तथा प्रधानभृतस्य कस्यापि न गुणभूतोऽस्मि। कस्मात्? [1]असङ्गत्वात्। हेतुमुक्तमनूद्य फलितं कथयति—[2]**असङ्गेति**। ब्रह्मात्माविद्याविजृंभितत्वात्परमार्थतो मनसो व्यापारायोगादपि प्रशान्तिरेव प्रत्यगात्मनि तस्य युक्तेत्याह—**तव चेति** ॥ ४ ॥

ननु कृतार्थेनाचार्येण किमित्येवं प्रकरणं प्रणीतम्? नहि तस्य ख्यात्याद्यपेक्षा सम्भवति, तत्राह–**फले चेति**। अतो हेतुफलात्मनः संसारादिति यावत्। सम्वादस्य [3]स्वरूपमाचष्टे—**स्वरूपेति**। स्वस्यात्मनो यद्रूपं तस्य तत्त्वार्थो ब्रह्मत्वम्। तस्य स्पष्टत्वपरिज्ञाने कारणं पदार्थविवेकद्वारा सम्वादः ॥ ५ ॥

यस्मादात्मनो ब्रह्मत्वाधिगतौ हेतुरयं कल्पितः संवादस्तस्माद्यस्तन्निष्ठः स ब्रह्मात्मज्ञानावाप्त्या जीवन्नेव कृतकृत्यः स्यादित्याह—**संवादमिति**। विशिष्टफलत्वान्मुमुक्षुणाऽस्य संवादस्य सर्वदाऽनुसन्धातव्यता सिध्यतीत्यर्थः ॥ ६ ॥

॥ चितिस्वरूपप्रकरणम् विवृतमष्टमम् ॥

### ॥ सूक्ष्मताव्यापिताप्रकरणम् ॥

यस्य प्रत्यगात्मनो ब्रह्मणो वाक्योत्थज्ञानादज्ञाननिवृत्त्या मुक्तिरुच्यते तस्य सर्वान्तरत्वेन निरतिशयसूक्ष्मत्वं व्यापित्वं च व्याख्यातुं प्रकरणान्तरमवतारयति—**सूक्ष्मतेति**। पृथ्वी गन्धशब्देनोच्यते गन्धादेरारभ्य प्रत्यगात्मपर्यन्तेषु पदार्थेषु पूर्वस्य पूर्वस्य त्यागेनोत्तरस्मिन्नुत्तरस्मिन्भागे सूक्ष्मत्वं व्यापित्वं चेत्युभयं ज्ञातव्यम्। तथा च प्रत्यगात्मनि सर्वान्तरे निरतिशयातिसूक्ष्मत्वादि सिद्धयतीत्यर्थः ॥ १ ॥

---

१. असंगतत्वात् मा २. असंगतेति—मा ३. वैशिष्ट्यम्—क.

शारीरा पृथिवी तावद्यावद्बाह्या प्रमाणतः ।
अम्ब्वादीनि च तत्त्वानि तावज्ज्ञेयानि कृत्स्नशः ॥ २ ॥
वाय्वादीनां यथोत्पत्तेः पूर्वं खं सर्वगं तथा ।
अहमेकः सदा शुद्ध¹श्चिन्मात्रः सर्वगोऽद्वयः ॥ ३ ॥
ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृताः ।
कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः ॥ ४ ॥
भूतदोषैः सदाऽस्पृष्टं सर्वभूतस्थमीश्वरम् ।
नीलं व्योम यथा बालो दुष्टं मां वीक्षते जनः ॥ ५ ॥
मच्चैतन्यावभास्यत्वात्सर्वप्राणिधियां सदा ।
पूर्मम प्राणिनः सर्वे सर्वज्ञस्य विपाप्मनः ॥ ६ ॥
जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते
नित्यं निर्विषयं ज्ञानं तस्माद्द्वैतं न विद्यते ॥ ७ ॥

---

कथं पुनरध्यात्ममधिदैवतं च ज्ञानं तस्य च प्रत्यगात्मावसानत्वं उभयत्र पृथिव्यादीनां भेदेन² प्रथमानत्वादित्याशङ्क्याह—**शारीरेति** । अध्यात्माधिदैवाधिभूतविभक्तानां पृथिव्यादीनामेकाज्ञान-विजृम्भितानामेकत्वादेकप्रयत्नेन प्रविलापनोपपत्तेः । सर्वत्र प्रत्यक्त्वानुगमात्प्रत्यगात्मावसानत्वं ज्ञानस्य युक्तमेवेत्यर्थः ॥ २ ॥

ननु ज्ञानस्य प्रत्यगात्मावसानमयुक्तम् । प्रत्यक्त्वस्य पराचीनविकारापेक्षया तदभावे भावानुपपत्तेरित्याशङ्क्य चिन्मात्रत्वात्प्रत्यक्त्वस्य विकारापेक्षाभावाद्युक्तं ज्ञानस्य तदवसानत्व-मित्याह—**वाय्वादीनामिति** ॥ ३ ॥

प्रतिशरीरमात्मभेदोपलब्धेर्न तवैकत्वमित्याशङ्क्य सर्वदेहानां मयैवात्मवत्त्वान्मदेकत्वमविरुद्धमि-त्याह—**ब्रह्माद्या इति** । तथापि न ते चिन्मात्रत्वं, रागद्वेषादिदोषोपलब्धेरित्याशङ्क्य मद्व्यतिरिक्ता-भावान्मैवमित्याह—**कामेति** ॥ ४ ॥

प्रत्यगात्मनो निर्दोषत्वमसिद्धं संसारदोषस्य प्रत्यक्षत्वादित्याशङ्क्याकाशस्य नीलादिप्रति-भासवदात्मनो दुष्टताप्रतिभासस्याविवेकमूलत्वान्न वस्तुतो दुष्टत्वाशङ्केत्याह—**भूतदोषैरिति** ॥ ५ ॥

सर्वदोषराहित्ये तव सर्वे प्राणिनो **विगतपुण्यापुण्यस्य** पुरमिति कथमित्याशङ्क्याह—**मच्चैतन्येति** ॥ ६ ॥

तर्हि भास्यभासकभेदादद्वैतासिद्धिरित्याशङ्क्याह—**जनिमदिति** । कार्यत्वाद्दृश्यत्वाच्च जागरित-वस्तुजातं³ स्वप्नज्ञानज्ञेयवन्मिथ्या तेन द्वैतस्य वस्तुतोऽसत्त्वादात्मस्वरूपं ज्ञानं विषयनिरपेक्षं कूटस्थ-मद्वितीयमित्यर्थः ॥ ७ ॥

---

१. सर्वः—पा. २. दीनामभेदेन—मा ३. जागरित—क.

ज्ञातुर्ज्ञातिर्हि नित्योक्ता सुषुप्ते त्वन्यशून्यतः ।
जाग्रज्ज्ञातिस्त्वविद्यातस्तद्ग्राह्यं चासदिष्यताम् ॥ ८ ॥
रूपवत्त्वाद्यसत्त्वान्न दृष्ट्यादेः कर्मता यथा ।
एवं विज्ञानकर्मत्वं भूम्नो नास्तीति गम्यते ॥ ९ ॥

## ॥ दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥ १० ॥

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ॐ ॥ १ ॥
दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सम्पूर्णभूमा त्वज आत्मनि स्थितः ॥ २ ॥
अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमद्वयः ।
न कारणं कार्यमतीव निर्मलः सदैकतृप्तश्च ततो विमुक्त ॐ ॥ ३ ॥

---

स्वरूपज्ञानस्यापि ज्ञानत्वाज्ज्ञेयसापेक्षत्वमित्याशङ्क्य श्रुतिविरोधान्मैवमित्याह—**ज्ञातुरिति** । किं च सुषुप्ते विविधकरणोपरमेऽपि चैतन्यस्य तत्साक्षित्वेन विद्यमानत्वान्नित्यमेव स्वरूपज्ञानमित्याह—**सुषुप्ते त्विति** । करणोपरतिवद्विषयस्यापि "न तु तद्द्वितीयमस्ती"ति निषिद्धत्वात् तत्र सर्वविषयज्ञानायोगात्कूटस्थमेव ज्ञानं सिद्धमित्यर्थः । तथापि जागरिते ज्ञानज्ञेयविभागोऽस्तीत्याशङ्क्याह—**जाग्रदिति** । जागरिते यज्जनिमद् ज्ञानं ज्ञेयं च तदुभयमविद्याकार्यत्वान्मिथ्यैवेत्यर्थः ॥ ८ ॥

द्रष्टव्यादिश्रुतेरात्मनोऽपि ज्ञेयत्वेन रजतादिवदसत्त्वमित्याशङ्क्याह—**रूपवत्त्वादीति** । अतो द्रष्टव्यादिश्रुतेरात्मनो ज्ञानकर्मत्वे नास्ति तात्पर्यमिति शेषः । तथापि 'यत्र नान्यत्पश्यती'त्यादिना भूम्नोऽन्यदर्शनादिनिषेधेनात्मनो दर्शनाद्यभ्यनुज्ञानात्तदसत्त्वं दृश्यत्वादाशङ्कितव्यमित्याशङ्क्याह—**एवमिति** । 'यत्र नान्यत्पश्यतीत्यादि' वाक्यस्य चक्षुरादिद्वारा भ्रमप्राप्तान्यदर्शनादिनिवृत्तिपरत्वाद्भूम्नो दर्शनादिकर्मत्वापादकत्वायोगादविषयो नित्यो भूमा प्रत्यगात्मा सर्वान्तरः सिद्ध्यतीत्यर्थः ॥ ९ ॥

॥ व्याकृतमदःसूक्ष्मताप्रकरणं नवमम् ॥

### ॥ दृशिस्वरूपपरमार्थदर्शनप्रकरणम् ॥

प्रकृतस्याविषयस्य प्रत्यगात्मनो ज्ञानमविषयत्वेनैव भवतीति स्वानुभवानुरोधेन प्रकटयन्प्रकरणान्तरं प्रस्तौति—**दृशीति** । तच्चेदमुक्तमात्मस्वरूपमोङ्कारद्वारा मुमुक्षुप्रतिपत्तिगोचरतामाचरतीति सूचयति—**ओमिति** ॥ १ ॥

दृशेर्दृश्यसम्बन्धादशुद्धत्वं विक्रियावत्त्वं चेत्यतो नाकाशवदलेपकत्वादिसिद्धिरित्याशङ्क्यात्मस्वरूपत्वाद्दृशेः दृश्यनिरपेक्षत्वान्मैवमित्याह—**दृशीति** । आत्मनो विकारहेतुर्विषयो नास्तीत्यत्र हेतुमाह—**पुर इति** ॥ २ ॥

आत्मनो जन्माभावेऽपि जरादिविकारान्तरं भविष्यतीत्याशङ्क्याह—**अज इति** । आचार्योपदिष्टमात्मस्वरूपं ज्ञात्वा स्वकीयं ज्ञानं ज्ञापयितुं भवत्येवमेवेति शिष्योऽनुजानाति—**ओमिति** ॥ ३ ॥

सुषुप्तजाग्रत्स्वपतश्च दर्शनं न मेऽस्ति किञ्चित्तु मतेर्हि मोहनम्[१]।
स्वतश्च तेषां परतोऽप्यसत्त्वतस्तुरीय एवास्मि सदादृगद्वयः ॥ ४ ॥
शरीरबुद्धीन्द्रियदुःखसंततिर्न मे न चाहं मम निर्विकारतः।
असत्त्वहेतोश्च तथैव संततेरसत्त्वमस्याः स्वपतो हि दृश्यवत् ॥ ५ ॥
इदं तु सत्यं मम नास्ति विक्रिया विकारहेतुर्न हि मेऽद्वयत्वतः।
न पुण्यपापे न च मोक्षबन्धने न चास्ति वर्णाश्रमताऽशरीरतः ॥ ६ ॥
अनादितो निर्गुणतो न कर्म मे फलं च तस्मात्परमोऽहमद्वयः।
यथा नभः सर्वगतं न लिप्यते तथा ह्यहं देहगतोऽपि सूक्ष्मतः ॥ ७ ॥
सदा च भूतेषु समोऽहमीश्वरः क्षराक्षराभ्यां परमो ह्यथोत्तमः।
परात्मतत्त्वं च तथाऽद्वयोऽपि सन् विपर्ययेणाभिमतस्त्वविद्यया ॥ ८ ॥
अविद्यया भावनया च कर्मभिर्विविक्त आत्माऽव्यवधिः सुनिर्मलः।
दृगादिशक्तिप्रचितोऽहमद्वयः स्थितः स्वरूपे गगनं यथाऽचलम् ॥ ९ ॥

---

ननु दृशेः स्थानत्रयेऽन्यथा प्रथमानस्य कथमविक्रियात्मत्वं तत्राह—**सुषुप्तेति**। मोहनमविवेकादारोपितमिदं दर्शनमित्यत्र हेतुमाह—**स्वतश्चेति**। जागरितादिस्थानानां स्वेन रूपेण निरूप्यमाणानां रज्जुसर्पादिवदसत्त्वात्परतोऽपि चिद्रूपेण विचार्यमाणानां रज्जुसर्पादिवत् सत्त्वाभावात्प्रतीतेरारोपमात्रत्वसिद्धेरित्यर्थः ! आत्मा तर्हि किंलक्षणस्तत्राह—**तुरीय इति**। यस्त्ववस्थात्रयसाक्षी अद्वय एवास्मीत्यर्थः ॥ ४ ॥

यदद्वयशब्देन निर्विशेषत्वमुच्यते तदयुक्तमात्मनः शरीरादिसम्बन्धस्य प्रत्यक्षत्वादित्याशङ्क्याह—**शरीरेति**। तथैव स्वरूपत्वं धर्मत्वं वा नात्मन इत्यर्थः। संततेरसत्वं साधयति—**असत्वमस्या इति**। स्वपतः स्वप्नावस्थायां दृश्यमानशरीरवज्जाग्रच्छरीरादेस्तत्सन्ततेश्च मिथ्यात्वमित्यर्थः ॥ ५ ॥

शरीरादिसन्ततेर्दृश्यत्वेन मिथ्यात्वं चेदात्मा निर्विशेषः शुद्धश्चेत्ययमर्थोऽपि दृश्यत्वादेव मिथ्या स्यादित्याशङ्क्याह—**इदमिति**। कर्म वा तत्फलं वा तद्धेतुर्वा विक्रियाहेतुस्तव।स्ति तत्कुतोऽद्वयत्वमित्याशङ्क्याह—**नेत्यादिना**। आत्मनो यदुक्तं पुण्यापुण्यवैधुर्यं तदुपपादयति—**अनादीति**। परमत्वं ससारिभ्योऽविद्याकल्पितेभ्यो विलक्षणत्वम्। ननु तव मायाप्रत्युपस्थापितेषु देहेष्वन्तरनुप्रविष्टस्य तद्दोषैर्दूषितत्वसम्भवात्कुतः संसारिभ्यो वैलक्षण्यं तत्राह—**यथेति** ॥ ७ ॥

ननु देहानां वैषम्यदर्शनादात्मनोऽपि देहेषु प्रविष्टत्वाद्वैषम्यं स्यादित्याशङ्क्य व्यवहारतो देहानुप्रवेशेऽपि परमार्थतस्तदभावान्मैवमित्याह—**सदेति**। हिशब्दो हेत्वर्थः। अथशब्दस्तस्मादर्थः। एवंविधश्चेदात्मा कथं तर्हि विपरीतरूपप्रतिभानमित्याशङ्क्याह—**तथेति**। विपर्ययेण मिथ्याज्ञानेन तत्कारणाविद्ययाऽवच्छिन्नस्ततो नावभासत इत्यर्थः ॥ ८ ॥

अविद्यामूलेन मिथ्याज्ञानेनावृतश्चेदात्मा तर्हि तस्याविद्यादिसम्बन्धः स्यादित्याशङ्क्याह—**अविद्ययेति**। अव्यवधिर्व्यवधायकेनाच्छादकेन शून्यः। आत्मनो यथोक्तलक्षणत्वे कथं द्रष्टा श्रोतेत्यादि-

---

१. स्वमिवेह मोहनम्।—पा०

**अहं परं ब्रह्म विनिश्चयात्मदृङ् न जायते भूय इति श्रुतेर्वचः ।**
**न चैव बीजेऽप्यसति प्रजायते फलं न जन्मास्ति ततो ह्यमोहता ॥१०॥**

**ममेदमित्थं च तथेदमीदृशं तथाहमेवं न परो न वान्यथा ।**
**विमूढतैवं न जनस्य कल्पना सदा समे ब्रह्मणि चाद्वये शिवे ॥११॥**

**यदद्वयं ज्ञानमतीव निर्मलं महात्मनां तत्र न शोकमोहता ।**
**तयोरभावे न हि जन्म कर्म वा भवेदयं वेदविदां विनिश्चयः ॥१२॥**

**सुषुप्तवज्जाग्रति यो न पश्यति द्वयं तु पश्यन्नपि चाद्वयत्वतः ।**
**तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः ॥१३॥**

**इतीदमुक्तं परमार्थदर्शनं मया हि वेदान्तविनिश्चितं परम् ।**
**विमुच्यतेऽस्मिन् यदि निश्चितो भवेन्न लिप्यते व्योम इवेह कर्मभिः ॥१४॥**

---

विशेषव्यवहारस्तस्मिन्नित्याशङ्क्याविद्यामूलान्तःकरणपरिणामदृगादिशक्तिसम्बन्धादित्याह—**दृगादीति**। दर्शनश्रवणादिशक्तिभिश्चक्षुरादिद्वारजन्याभिर्बुद्धिवृत्तिभिः प्रचितः उपचित इवाहं अतस्तत्सम्बद्ध इवेत्यर्थः ॥ ९ ॥

यथोक्तप्रत्यगात्मतत्त्वपरिज्ञाने पुनरावृत्तिरहितं कैवल्यं फलमित्याह—**अहमिति**। श्रुतेर्वचो "ब्रह्म वेद ब्रह्मैव भवती"त्यादि। श्रुतिसिद्धेऽर्थे युक्तिमपि समुच्चिनोति—**न चैवेति**। सामान्यन्यायं प्रकृते योजयति—**न जन्मेति**। ततो ब्रह्मात्मज्ञानादमोहता मूलभूतमोहाभावो यतस्ततो जन्मादिलक्षणो विचित्रः संसारो मोहमूलो न सिद्ध्यतीत्यर्थः ॥ १० ॥

ब्रह्मात्मज्ञानान्मोहनिवृत्तिद्वारा निवर्त्यं विचित्रं संसारमेव मोहकार्यं विवृणोति—**ममेति**। विचित्रस्य संसारस्याज्ञानकार्यत्वमुक्त्वा ज्ञानादज्ञाननिवृत्त्या तन्निवृत्तिं स्फुटयति—**यदिति**। तयोः शोकमोहयोरित्यर्थः ॥ १२ ॥

"भिद्यते हृदयग्रन्थिरि"त्यादिशास्त्रवशा[1] दात्मविदो मुक्तिरुक्ता। संप्रत्यात्मविदः स्वरूपमाह—**सुषुप्तवदिति**। विक्षेपदशायामप्रच्युतात्मयाथात्म्यदर्शनस्तत्त्वविदामुत्तमो नान्यो ज्ञातृत्वकर्तृत्वाभिमानीत्यर्थः ॥ १३ ॥

इह वेदान्तशास्त्रविषये शास्त्रन्यायानुसारेण स्वानुभवं प्रदर्श्येदानीमस्मिन्दर्शने परिनिष्ठितस्य कृतकृत्यता भवतीत्याह—**इतीदमिति** ॥ १४ ॥

॥ विवृतं दृशिस्वरूपप्रकरणं दशमम् ॥

---

१. मु—त्यादिवशात् पा०

## ॥ ईक्षितृत्वप्रकरणम् ॥ ११ ॥

ईक्षितृत्वं स्वतःसिद्धं जन्तूनां च ततोऽन्यता ।
अज्ञानादित्यतोऽन्यत्वं सदसीति निवर्त्यते ॥ १ ॥
एतावद्ध्यमृतत्वं न किंचिदन्यत्सहायकम् ।
ज्ञानस्येति ब्रुवच्छास्त्रं सलिङ्गं कर्म बाधते ॥ २ ॥
सर्वेषां मनसो वृत्तमविशेषेण पश्यतः ।
तस्य मे निर्विकारस्य विशेषः स्यात्कथंचन ॥ ३ ॥
मनोवृत्तं मनश्चैव स्वप्नवज्जाग्रतीक्षितुः ।
संप्रसादे द्वयासत्त्वाच्चिन्मात्रः सर्वगोऽव्ययः ॥ ४ ॥
स्वप्नः सत्यो यथाऽऽबोधाद्देहात्मत्वं तथैव च ।
प्रत्यक्षादेः प्रमाणत्वं जाग्रत्स्यादाऽऽत्मवेदनात् ॥ ५ ॥
व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः ।
साक्षी चेताऽगुणः शुद्धो ब्रह्मैवास्मि स केवलः ॥ ६ ॥

---

### ॥ ईक्षितृत्वप्रकरणम् ॥

ननु ब्रह्मात्मैक्यज्ञानान्मुक्तिरित्ययुक्तम् । ब्रह्मात्मनोर्विरुद्धस्वभावत्वेनैक्यायोगात्तेन कर्मणा मोक्षस्तत्समुच्चिताद्वा ज्ञानादित्याशङ्क्य ज्ञानादेव मुक्तिरिति प्रतिपादयितुं प्रकरणान्तरं प्रस्तौति—**ईक्षितृत्वमिति** । सर्वेषामेव प्राणिनां चिद्रूपत्वं स्वाभाविकम् । ततश्चिद्रूपादन्यत्वं कर्तृत्वादिलक्षणमज्ञानकृतमित्यतस्तत्त्वमसिवाक्यार्थज्ञानादज्ञाननिवृत्त्या कर्तृत्वादिनिवृत्तेर्मुक्तिर्युक्तेत्यर्थः ॥ १ ॥

ज्ञानान्मोक्षो भवन्नपि कर्मसापेक्षात्ततो भवतीत्याशङ्क्याह—**एतावदिति** । लिङ्गशब्देन हेतुरुच्यते । ज्ञानिनः सहेतुकर्मानुपपत्तेर्न तदपेक्षात् ज्ञानान्मुक्तिरित्यर्थः ॥ २ ॥

ज्ञानिनो न सम्भवति कर्मेत्यत्र सर्वमनोवृत्तिसाक्षिणो जात्याद्यभिमानाभावं हेतुं करोति—**सर्वेषामिति** । विशेषो जात्याद्यभिमानः । कथंचनेत्याक्षेपो विवक्षितः ॥ ३ ॥

कथं मनोवृत्तं पश्यतीत्युक्ते दृष्टान्तपूर्वकं स्पष्टयति—**मन इति** । यथा स्वप्नावस्थायां मनः सवृत्तिकं पश्यति तथा जागरितेऽपि पश्यतो नैव विशेषः सम्भवतीति पूर्वश्लोकेन सम्बन्धः । ननु विकाराभावेऽपि नात्मनोऽद्वितीयत्वं मनसस्तदर्थस्य च सत्त्वादित्याशङ्क्याह—**सम्प्रसादेति** ॥ ४ ॥

बाह्यान्तरद्वैतासत्त्वे लौकिकवैदिकव्यवहारविरहः स्यादिति चेन्नेत्याह—**स्वप्न इति** । यथा स्वप्नी जाग्रद्बोधोदयपर्यन्तं सत्यत्वेन व्यवह्रियते तथा जाग्रदवस्थायां देहादौ मिथ्यात्माभिमाने सति प्रत्यक्षादेः सर्वस्यात्मज्ञानात्प्रागवस्थायां प्रमाणत्वमतो नाविद्यावस्थायां व्यवहारविरहापत्तिरित्यर्थः ॥५॥

तर्हि विद्यावस्थायां व्यवहारासिद्धिरित्याशङ्क्य तदा व्यवहारराहित्यमिष्टमेवेत्याह—**व्योमेति** । **साक्षी** अज्ञानतत्कार्ययोः स्वाभासोदयद्वारेणावभासकश्चिद्रूपः शुद्धोऽज्ञानरहितः । **केवलो**ऽवस्थात्रयरहितः ॥ ६ ॥

नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान् ।
अहमात्मा परं ब्रह्म चिन्मात्रोऽहं सदाऽद्वयः ॥ ७ ॥
अहं ब्रह्मास्मि कर्ता च भोक्ता चास्मीति ये विदुः ।
ते नष्टा ज्ञानकर्मभ्यां नास्तिकाः स्युर्न संशयः ॥ ८ ॥
धर्माधर्मफलैर्योग इष्टोऽदृष्टो यथाऽऽत्मनः ।
शास्त्राद्ब्रह्मत्वमप्यस्य मोक्षो ज्ञानात्तथेष्यताम् ॥ ९ ॥
या माहारजनाद्यास्ता वासनाः स्वप्नदर्शिभिः ।
अनुभूयन्त एवेह ततोऽन्यः केवलो दृशिः ॥१०॥
कोशादिव विनिष्कृष्टः कार्यकारणवर्जितः ।
यथाऽसिर्दृश्यते स्वप्ने तद्वद्बोद्धा स्वयंप्रभः ॥११॥
आपेषात्प्रतिबुद्धस्य ज्ञस्य स्वाभाविकं पदम् ।
उक्तं नेत्यादिवाक्येन कल्पित यापनेतृणा ॥१२॥

---

आत्मनो यदुक्तं केवलत्वं तदेव व्यनक्ति— **नामेति** ॥ ७ ॥

आत्मनो यद्यपि ब्रह्मत्वं तथापि नाद्वयत्वमहंब्रह्मास्मीतिवदहं कर्ता भोक्ता वाऽस्मीति समुच्चयवादिनां प्रतिपत्तेर्दुर्वारत्वादित्याशङ्क्याह—**अहं ब्रह्मेति** । विरुद्धार्थप्रतिपत्त्या कर्मकाण्डाज्ज्ञानकाण्डाच्च वहिर्मुखत्वेन सर्वपुरुषार्थायोग्यत्वं फलितमाह—**नास्तिकाः स्युरिति** ॥ ८ ॥

ननु ब्रह्मैवास्मीति प्रतिपत्तुं न शक्यते । तादात्म्यश्रुतीनामन्यपरत्वोपपत्तेरित्याशङ्क्याह—**धर्मेति** । यथाऽऽत्मनो मानान्तराददृष्टोऽपि धर्मफलैरधर्मफलैश्च सुखदुखादिभिः सम्बन्धः शास्त्रप्रामाण्यादिष्यते । तथा तस्य तत्त्वमस्यादिवाक्याद्ब्रह्मत्वं तज्ज्ञानादज्ञाननिवृत्त्या तदात्मनैवावस्थानं कैवल्यं चाऽऽस्थेयं शास्त्रप्रामाण्याविशेषादित्यर्थः ॥ ९ ॥

नन्वात्मनो धर्माधर्मफलयोगो मानान्तराविरोधादुपपद्यते न तथा ब्रह्मत्वं प्रत्यक्षदृष्टकर्तृत्वादिविरोधादित्याशङ्क्य दृष्टान्तेनात्मनि कर्तृत्वादेरध्यस्तत्वं साधयति—**या इति** । या हि स्वप्नावस्थायां श्रुतिसिद्धवासना लिङ्गाश्रयाः स्वप्नदर्शिभिरुपलभ्यन्ते । ताभ्यो लिङ्गसहिताभ्यो दृश्याभ्यो द्रष्टाऽऽत्मा दृशिस्वभावो विलक्षणः उपलक्ष्यते । तथैव जागरिते कर्तृत्वादीनामपि दृश्यत्वान्न द्रष्टरि सम्भवोऽस्तीत्यर्थः ॥ १० ॥

आत्मनः स्वप्नावस्थायां दृश्यविलक्षणत्वेन प्रतीतिमेव दृष्टान्तेन स्पष्टयति—**कोशादिति** । असिर्यथा कोशान्निष्कृष्टस्तथा आत्मा[1] कार्यात्कारणाच्च विलक्षणो दृश्यते । यथा चासिरुक्तलक्षणो दृश्यते तथाऽत्मापि स्वप्नसंस्काराश्रयसूक्ष्मदेहविलक्षणो दृश्यते । न च तस्य दृश्यत्वान्मिथ्यात्वम् । तस्य स्वयंप्रभत्वेन स्वमहिम्ना प्रतीतेरिष्टत्वादित्यर्थः ॥ ११ ॥

ननु कुतोऽस्य स्वयंप्रकाशत्वं ब्रह्मविलक्षणत्वादित्याशङ्क्य श्रुतिविरोधान्नैवमित्याह—**आपेषादिति** ॥ १२ ॥

---

१. निकृष्टः मा० ।

**महाराजादयो लोका मयि यद्वत्प्रकल्पिताः।**
**स्वप्ने, तद्वद्द्वयं विद्याद्रूपं वासनया सह ॥१३॥**

**देहलिङ्गात्मना कार्या वासनारूपिणा क्रियाः।**
**नेति नेत्यात्मरूपत्वान्न मे कार्या क्रिया क्वचित् ॥१४॥**

**न ततोऽमृतताऽऽशास्ति कर्मणोऽज्ञानहेतुतः।**
**मोक्षस्य ज्ञानहेतुत्वान्न तदन्यदपेक्षते ॥१५॥**

**अमृतं चाभयं नार्तं नेतीत्यात्मा प्रियो मम।**
**विपरीतमतोऽन्यद्यत् त्यजेत्तत्सक्रियं ततः ॥१६॥**

---

आपेषात्पाणिपेषात् "तं पाणिनाऽऽपेषं बोधयाञ्चकार" त्यारभ्य "स होत्तस्थौ" इति श्रुतेः।[1] प्रतिबुद्धस्य ज्ञस्य प्राणादिविलक्षणस्येति कल्पितस्यापनेतृणे[2]त्यत्र संसारस्यात्मनि समारोपितत्त्वमुक्तम्। तदेव दृष्टान्तेन साधयति—**महाराजेति**। "तदुतेव महाराजो भवत्युतेव महाब्राह्मण"[3] इत्यादि स्वप्नदशायां निर्दिष्टलोका भोग्यविशेषा अपि स्वप्नदृशि यथा कल्पितास्तद्वद्रूपद्वयं मूर्तामूर्तलक्षणं वासनया सह मयि कल्पितं विद्यादित्यर्थः॥ १३॥

स्वप्नप्रपञ्चवज्जाग्रत्प्रपञ्चस्यापि प्रत्यगात्मनि कल्पितत्वे सिद्धे प्रत्यगात्माभिज्ञस्य कर्मासंभवः सिद्ध्यतीत्याह—**देहेति**॥ १४॥

अज्ञानमूलत्वे कर्मणः सिद्धे न तस्मादमृतत्वमपेक्षितव्यमित्याह—**नेति**। भवतु ज्ञानममृतत्त्वसाधनं तथापि तदेव सहायत्वेन कर्मापेक्षतामित्याशङ्क्य तस्याज्ञाननिवृत्तौ निरपेक्षत्वान्नैवमित्याह—**मोक्षस्येति**॥ १५॥

कर्मसाध्यं चेदमृतत्त्वं तदाऽऽर्तं सभयं च स्यान्न तथेष्टमित्याह—**अमृतमिति**। यद्यपि ब्रह्माभयं अनार्तं अकर्मसाध्यं च तथापि प्रियस्य भोक्तुरमृतत्त्वं कर्मसाध्यमित्याशङ्क्याह—**नेतीति**। यो मम प्रियो भोक्तृत्वेनाभिमतः स नेतीत्यात्मा निर्विशेषब्रह्मस्वरूपो न ततोऽन्यस्तस्मान्न मोक्षः कर्मसाध्यः स्यादित्यर्थः। अज्ञानादात्मनि संसारस्याध्यस्तत्वे सिद्धे फलितमाह—**विपरीतमिति**। अतोऽस्माद्ब्रह्मात्मनोऽन्यद्विरुद्धं रूपं यत्क्रियासहितं तत्ततो ब्रह्मात्मज्ञानादज्ञाननिवृत्त्या परित्यजेत्। तस्माद्ब्रह्मात्माज्ञानमूलस्य संसारस्य ब्रह्मात्मज्ञानादेव केवलान्निवृत्तिरुपपन्नेत्यर्थः॥ १६॥

॥ व्याकृतमीक्षितृत्वप्रकरणमेकादशम्॥

---

१. बृ० २. १।

२. अथात आदेशो नेति नेति न ह्येतस्मादिति नेति-इति वाक्यं कल्पितप्रपञ्चनिषेधकम्।

३. बृ० २. १।

# ॥ प्रकाशप्रकरणम् ॥ १२ ॥

प्रकाशस्थं यथा देहं सालोकमभिमन्यते ।
द्रष्ट्राभासं तथा चित्तं द्रष्टाऽहमिति मन्यते ॥ १ ॥
यदेव दृश्यते लोके तेनाभिन्नत्वमात्मनः ।
प्रपद्यते ततो मूढस्तेनात्मानं न विन्दति ॥ २ ॥
दशमस्य नवात्मत्वप्रतिपत्तिवदात्मनः ।
दृश्येषु तद्वदेवायं मूढो लोको न चान्यथा ॥ ३ ॥
त्वं कुरु त्वं तदेवेति प्रत्ययावेककालिकौ ।
एकनीडौ कथं स्यातां विरुद्धौ न्यायतो वद ॥ ४ ॥

---

॥ प्रकाशप्रकरणम् ॥

यद्ययं भोक्ताऽऽत्मा निर्विशेषरूपोऽङ्गीक्रियते तर्हि किमित्यात्मानं तथैव न विजानातीत्याशङ्क्य साभासान्तःकरणाद्विवेकान्न याथात्म्येनात्मानमात्मा प्रत्येतीति सदृष्टान्तं दर्शयति—**प्रकाशस्थमिति**। यथा प्रभूते प्रकाशे व्यवस्थितं स्थूलं शरीरं ततो विलक्षणमपि तेनालोकेन व्याप्तमालोकविशिष्टं लोको मन्यते तथाऽयं द्रष्टाऽऽत्मा स्वाभासविशिष्टं चित्तमहमिति मन्यमानो न याथात्म्येनात्मानमवगच्छतीत्यर्थः ॥ १ ॥

आत्मनः साभासान्तःकरणा[1]विवेकमुक्त्वा तद्द्वारा देहपर्यन्तमविवेकं दर्शयन्नात्माप्रतिपत्तिमेव प्रदर्शयति—**यदेवेति**। यद्धि साभासचित्ताविविक्तमिन्द्रियादिदेहपर्यन्तं व्यवहारभूमावुपलभ्यते तेनेन्द्रियादिना द्रष्टुरभिन्नत्वं सर्वत्र चित्तादौ देहान्ते चिदाभासप्रतीतेरयमात्मा प्रत्येति। तस्माद्देहादेरात्मनश्चान्योन्यमध्यासकर्ता मूढः सन् मौढ्येनैव हेतुना नात्मानं ब्रह्मत्वेन निश्चिनोतीत्यर्थः ॥२॥

उक्तमर्थं दृष्टान्तेन साधयति—**दशमस्येति**। यथा लोके वस्तुतो दशमस्यात्मनो बालकस्य स्वव्यतिरिक्तेषु नवसु बालकेषु व्यापृतचित्तत्वात्तेष्वेव सत्त्वप्रतिपत्तिर्दशमस्तु नास्त्येवेति भ्रान्तिरुपलभ्यते तथैवायं लोको दृश्येषु बुद्ध्यादिषु स्वविलक्षणेष्वेव तादात्म्यप्रतिपत्त्या मूढः शास्त्राचार्योपदेशरहित आत्मानं यथावन्नाधिगच्छति। तदाह—**न चान्यथेति**। बुद्ध्यादिष्वात्मवैपरीत्येन ब्रह्मास्मीति यथावदात्मानं न प्रत्येतीत्यर्थः ॥ ३ ॥

ननु प्रसङ्ख्यानादहमस्मि ब्रह्मेति यथावदात्माऽपरोक्षप्रतिपत्तेर्मोक्षः स्यादिति चेन्नेत्याह—**त्वमिति**[2] ॥ ४ ॥

---

१. करणादि- ख

२. ननु प्रत्यक्षश्रुत्योरविरोधाय प्रत्यगात्मन एव कर्तृत्वं ब्रह्मरूपत्वं चास्तु अत आह-त्वमिति—पदयोजनिका

**देहाभिमानिनो दुःखं नादेहस्य स्वभावतः ।**
**स्वापवत्तत्प्रहाणाय तत्त्वमित्युच्यते दृशेः ॥ ५ ॥**

**दृशेश्छाया यदारूढा मुखच्छायेव दर्शने ।**
**पश्यंस्तं प्रत्ययं योगी दृष्ट आत्मेति मन्यते ॥ ६ ॥**

**तं च मूढं च यद्यन्यं प्रत्ययं वेत्ति नो दृशेः ।**
**स एव योगिनां श्रेष्ठो नेतरः स्यान्न संशयः ॥ ७ ॥**

**विज्ञातेर्यस्तु विज्ञाता स त्वमित्युच्यते यतः ।**
**स स्यादनुभवस्तस्य ततोऽन्योऽनुभवो मृषा ॥ ८ ॥**

**दृशिरूपे सदा नित्ये दर्शनादर्शने मयि ।**
**कथं स्यातां ततो नान्य इष्यतेऽनुभवस्ततः ॥ ९ ॥**

---

दुःखित्वादिज्ञानेन प्रत्यक्षेण शाब्दस्य ज्ञानस्य बाध्यत्वात्तदीयस्थैर्यार्थं प्रसङ्ख्यानं स्यादिति चेन्नेत्याह—**देहेति** । यद्यन्वयव्यतिरेकाभ्यां मिथ्याज्ञानवतो दुःखं कथं तर्हि तन्निवृत्तिरित्याशङ्क्य वाक्योत्थज्ञानादित्याह—**तत्प्रहाणायेति** ॥ ५ ॥

अहमित्यात्मप्रत्ययेऽपि दुःखित्वप्रतिपत्तेर्न दुःखित्वमविवेककृतमित्याशङ्क्याहमिति प्रत्ययस्य कल्पितात्मविषयत्वान्मैवमित्याह—**दृशेरिति** । यथा मुखस्य छाया आदर्शशब्दिते दर्पणादौ दृश्यते तथैव दृशेरात्मनः छाया प्रतिबिम्बरूपा यस्मिन्नन्तःकरणे समारूढा प्रतीयते तदन्तःकरणमहंप्रत्यय-शब्दितं साभासं पश्यन्नात्मा दृष्टो मयेत्माभासज्ञानवान् मन्यते । ततश्चाहमिति दर्शनस्य कल्पितात्म-विषयत्वाद्युक्तं दुःखित्वस्याविवेकनिबन्धनत्वमित्यर्थः ॥ ६ ॥

यदि साभासाहङ्कारं पश्यन्परमार्थदर्शी न भवति कस्तर्हि परमार्थदर्शीत्याशङ्क्याह—**तं चेति** । तमुपाधिभूतं प्रत्ययं परिणामिनं मूढं च मोहात्मकमविवेकमन्यं च विवेकरूपं सुखदुःखादि च प्रति[1]साक्षित्वेन वेत्ति न तु दृशेरात्मनः सम्बन्धित्वेनेदं सर्वं प्रतिपद्यते । स एव परमार्थदर्शी नेतरः पूर्वोक्तसाभासाहङ्कारदर्शीत्यर्थः ॥ ७ ॥

सर्वस्यात्मत्वेन प्रतीयमानो देहादिवदहङ्कारो यद्यनात्मत्वेन त्यज्यते तदाऽन्यस्य त्वमर्थस्याप्रतीते-स्तत्त्वमसिवाक्यस्य निरालम्बनत्वं स्यादित्याशङ्क्याह—**विज्ञात इति** । अतो यथोक्तं त्वमर्थमवलम्ब्य तत्त्वमसिवाक्यप्रवृत्तेर्न निरालम्बनत्वाशङ्केति शेषः । यतो विज्ञप्तिरूपः साक्षी त्वं तदसीति बोध्यते ततश्चात्मैवानुभवस्तस्य स्यात् । स्वरूपव्यतिरिक्तोऽनुभवस्तु साधनाधीनत्वान्मिथ्यैवेत्याह—**स स्यादिति** ॥८॥

घटादावतिरिक्तस्यानुभवस्य व्यक्तत्वादात्मनोऽपि तथा स्यादित्याशङ्क्य जडत्वाजडत्वाभ्यां विशेषोपपत्तेर्मैवमित्याह—**दृशीति** । आत्मनि सदा स्फुरदात्मके दर्शनादर्शनयोरयोगात्ततोऽतिरिक्तोऽनुभवो नास्तीत्यर्थः ॥ ९ ॥

---

१. यदि—मा

यत्स्थस्तापो रवेर्देहे दृशेः स विषयो यथा ।
सत्त्वस्थस्तद्वदेवेह दृशेः स विषयस्तथा ॥१०॥

प्रतिषिद्धेदमंशो ज्ञः खमिवैकरसोऽद्वयः ।
नित्यमुक्तः सदा शुद्धः सोऽहं ब्रह्मास्मि केवलः ॥११॥

विज्ञातुर्नैव विज्ञाता परोऽन्यः संभवत्यतः ।
विज्ञाताऽहं परो मुक्तः सर्वभूतेषु सर्वदा ॥१२॥

यो वेदालुप्तदृष्टित्वमात्मनोऽकर्तृतां यथा ।
ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥१३॥

ज्ञातैवाहमविज्ञेयः शुद्धो मुक्तः सदेत्यपि ।
विवेकी प्रत्ययो बुद्धेर्दृश्यत्वान्नाशवान्यतः ॥१४॥

अलुप्ता त्वात्मनो दृष्टिर्नोत्पाद्या कारकैर्यतः ।
दृश्यया चान्यया दृष्ट्या जन्यतास्याः प्रकल्पिता ॥१५॥

---

सुखदुःखादियुक्तत्वेनात्मनो भानान्न नित्यदृशिमात्रत्वमित्याशङ्क्याह—**यत्स्थ इति**। यथा देहे रवेस्तापो भवन्प्रदेशविशेषाश्रितो दृश्यते। स च साश्रयो दृगात्मनो विषयोऽभ्युपगम्यते। तथैवेहापि व्यवहारभूमावन्तःकरणनिष्ठः सुखदुःखादिस्तापः स्वीक्रियते। स च तद्वदेव स्वाश्रयेणान्तःकरणेन सह दृगात्मनो दृश्यतयाऽवतिष्ठते तस्माद्दुःखादेस्तापस्य साश्रयस्यात्मदृश्यत्वादात्मनिष्ठत्वशङ्का नास्तीत्यर्थः ॥ १० ॥

आत्मनः सुखदुःखादियुक्तान्तःकरणादिसम्बन्धाभावे फलितमाह—**प्रतिषिद्ध इति** ॥ ११ ॥

ननु विज्ञातुः सर्वदेहेषु भेदस्फुरणान्नाद्वयत्वं ब्रह्मत्वं वेत्याशङ्क्य तद्भेदस्याप्रामाणिकत्वान्मैवमित्याह—**विज्ञातुरिति** ॥ १२ ॥

सर्वदेहेष्वद्वयमात्मानं श्रुत्युपदेशानुरोधेन प्रतिपद्यमानस्यापि ब्रह्मविदस्मीत्यभिमानादस्ति सविशेषत्वमित्याशङ्क्याह—**य इति**। यः सर्वाभिमानं परित्यज्य निर्विशेषमात्मानं प्रागुक्तरीत्या साक्षात्करोति स ब्रह्मविदुच्यते। अभिमानलेशमपि भजमानो न तथेत्यर्थः ॥ १३ ॥

सर्वविशेषत्यागेऽपि ब्रह्मात्मज्ञानस्यात्मसम्बन्धिता दुर्वारेत्याशङ्क्याह—**ज्ञातैवेति**। उक्तस्य विवेकात्मकस्य प्रत्ययस्य साक्षिविषयत्वान्नाशित्वाच्च परिणामिबुद्धिधर्मत्वादात्मा निर्विशेषो ब्रह्मैवेत्यर्थः ॥ १४ ॥

स्वरूपत्वेनाभ्युगतापि दृष्टिरात्मनो नाशवतीत्याशङ्क्याह—**अलुप्तेति**। जन्यत्वप्रतीतेरसिद्धो हेतुरित्याशङ्क्याह—**दृश्ययेति**। अन्तःकरणदृष्टेरात्मदृष्ट्याभासत्वात्तदविवेकादात्मदृष्टौ सर्वो व्यवहारः। वस्तुतः स्वात्मदर्शिनो न कश्चिद् व्यवहारोऽस्तीत्यर्थः ॥ १५ ॥

देहात्मबुद्ध्यपेक्षत्वादात्मनः कर्तृता मृषा ।
नैव किंचित्करोमीति सत्या बुद्धिः प्रमाणजा ॥१६।
कर्तृत्वं कारकापेक्षमकर्तृत्वं स्वभावतः ।
कर्ता भोक्तेति विज्ञानं मृषैवेति सुनिश्चितम् ॥१७॥
एवं शास्त्रानुमानाभ्यां स्वरूपेऽवगते सति ।
नियोज्योऽहमिति ह्येषा सत्या बुद्धिः कथं भवेत् ॥१८॥
यथा सर्वान्तरं व्योम व्योम्नोऽप्यभ्यन्तरो ह्यहम् ।
निर्विकारोऽचलः शुद्धोऽजरो मुक्तः सदाऽद्वयः ॥१९॥

## ॥ अचक्षुष्ट्वप्रकरणम् ॥ १३ ॥

अचक्षुष्ट्वान्न दृष्टिर्मे तथाऽश्रोत्रस्य का श्रुतिः ।
अवाक्त्वान्न तु वक्तिः स्यादमनस्त्वान्मतिः कुतः ॥ १ ॥
अप्राणस्य न कर्मास्ति बुद्ध्यभावे न वेदिता ।
विद्याविद्ये ततो न स्तश्चिन्मात्रज्योतिषो मम ॥ २ ॥

---

किञ्च मिथ्याज्ञानमूलत्वात्कर्तृत्वादिप्रतिभासस्य मिथ्यात्वादकर्त्रभोक्त्रात्मज्ञानस्य प्रमाणजन्यत्वेन वलवत्त्वाद् ब्रह्मात्मविदो न कश्चिद् व्यवहारोऽस्तीत्याह—**देहात्मेति** ॥ १६ ॥

इतश्च कर्तृत्वादि मिथ्याऽमिथ्या चाकर्तृत्वादीत्याह—**कर्तृत्वमिति** ॥ १७ ॥

पूर्वोक्तरीत्या वाक्यादापाततो ज्ञानेऽपि साक्षात्कारार्थं प्रसङ्ख्यानं कर्त्तव्यमिति चेत्तदयुक्तम् । उक्तप्रकारेण श्रवणमननाभ्यां ब्रह्मात्मलक्षणे गुरुप्रसादादेव साक्षान्निश्चिते प्रसङ्ख्यानादिशेषे नियोज्योऽहमिति न कथञ्चिदपि बुद्धिरुत्पद्येतेत्याह—**एवमिति** । प्रागवस्थायां यथोक्तज्ञानोत्पत्तेरस्ति नियोज्योऽहमिति बुद्धिरित्याशङ्क्य सापि कल्पितैवेत्याह—**सत्येति** ॥ १८ ॥

ब्रह्मविदो नियोज्यत्वादिबुद्धिर्न भवतीत्यत्र निर्विकारत्वादिकं हेतूकुर्वन्प्रकरणार्थमुपसंहरति—**यथेति** ॥ १९ ॥

॥ व्याख्यातं प्रकाशस्थप्रकरणं द्वादशम् ॥

### ॥ अचक्षुष्ट्वप्रकरणम् ॥

पूर्वस्मिन्प्रकरणे प्रसङ्गात्प्रत्यगात्मनः शुद्धत्वमचलत्वं चोक्तम् । तदेव स्पष्टीकर्तुं प्रकरणान्तरं प्रस्तौति—**अचक्षुष्ट्वादिति** । चक्षुरादिरहितत्वात्तत्तदिन्द्रियद्वारकबुद्धिवृत्तिरूपदृष्ट्यादिक्रियाविहीनत्वादात्मनो युक्तं निश्चलत्वेन शुद्धत्वमित्यर्थः ॥ १ ॥

कर्तृत्वज्ञातृत्वयोरभावाच्चात्मनो निश्चलत्वेन शुद्धता सिद्धेत्याह—**अप्रमाणस्येति** । बुद्धिसम्बन्धाभावेन ज्ञातृत्वाभावाच्चिन्मात्रस्यात्मनो विद्याऽविद्याऽसम्बन्धादपि सिद्धा शुद्धतेत्याह—**विद्येति** ॥ २ ॥

नित्यमुक्तस्य शुद्धस्य कूटस्थस्याविचालिनः ।
अमृतस्याक्षरस्यैवमशरीरस्य सर्वदा ॥ ३ ॥
जिघत्सा वा पिपासा वा शोकमोहौ जरामृती ।
न विद्यन्तेऽशरीरत्वाद्व्योमवद्व्यापिनो मम ॥ ४ ॥
अस्पर्शत्वान्न मे स्पृष्टिर्नाजिह्वत्वाद्रसज्ञता ।
नित्यविज्ञानरूपस्य ज्ञानाज्ञाने न मे सदा ॥ ५ ॥
या तु स्यान्मानसी वृत्तिश्चाक्षुष्का रूपरञ्जना ।
नित्यमेवात्मनो दृष्ट्या नित्यया दृश्यते हि सा ॥ ६ ॥
तथाऽन्येन्द्रिययुक्ता या वृत्तयो विषयाञ्जनाः ।
स्मृती रागादिरूपा च केवलाऽन्तर्मनस्यपि ॥ ७ ॥
मानस्यस्तद्वदन्यस्य दृश्यन्ते स्वप्नवृत्तयः ।
द्रष्टुर्दृष्टिस्ततो नित्या शुद्धाऽनन्ता च केवला ॥ ८ ॥
अनित्या साऽविशुद्धेति गृह्यतेऽत्राविवेकतः ।
सुखी दुःखी तथा चाहं दृश्ययोपाधिभूतया ॥ ९ ॥
मूढया मूढ इत्येवं शुद्धया शुद्ध इत्यपि ।
मन्यते सर्वलोकोऽयं येन संसारमृच्छति ॥१०॥

---

आत्मनो विद्याऽविद्याऽसम्बन्धेन शुद्धत्वमेव साधयति—**नित्येति**। विद्याविद्ये न स्यातामिति पूर्वेण सम्बन्धः ॥ ३ ॥

आत्मनः षडूर्मिसम्बन्धाभावादपि सिद्धा शुद्धतेत्याह—**जिघत्सेति**। अशरीरत्वादित्युपलक्षणमप्राणत्वादमनस्त्वाच्चेति द्रष्टव्यम् ॥ ४ ॥

अनिषिद्धेन्द्रियनिषेधद्वारा तद्द्वारप्राप्तां दृष्ट्यादिविक्रियामात्मनि निषेधति—**अस्पर्शत्वादिति**। आत्मनो विद्याऽविद्ययोरभावे हेत्वन्तरमाह—**नित्येति** ॥ ५ ॥

आत्मनो दृष्ट्यादयो न सन्तीत्युक्तम् इदानीमात्मदृष्ट्या दृष्ट्यादीनां भास्यत्वमभिदधानो दृष्टेरात्मभास्यत्वात्ततोऽतिरेकं दर्शयति—**या त्विति**। चाक्षुष्का चक्षुर्द्वारजनिता। **रूपरञ्जना** रूपाकारा ॥ ६ ॥

चक्षुर्द्वारकवृत्तावुक्तन्यायं वृत्त्यन्तरेष्वतिदिशति—**तथेति**। **केवला** चक्षुरादिनिरपेक्षा मनस्यन्तर्वर्तमाना वृत्तिः सर्वाऽपि दृश्यैवात्मदृष्ट्येति सम्बन्धः ॥ ७ ॥

किञ्च स्वप्नावस्थायां विद्यमाना वृत्तयो मनोविपरिणामात्मिकास्ततो व्यतिरिक्तस्यैव द्रष्टुर्दृश्या यथा स्वीक्रियन्ते तथा जागरितेऽपि सर्वा दृष्टयो व्यतिरिक्तस्य द्रष्टुर्दृश्या दृश्यत्वाविशेषादित्याह—**मानस्य इति**। कूटस्थदृष्टिभास्य वे भास्यदृष्टीनां सिद्धे फलितमाह—**द्रष्टुरिति** ॥ ८ ॥

कूटस्था चेदात्मदृष्टिरिष्टा कथं तत्रान्यथा प्रथेत्याशङ्क्य वृत्तिमदन्तःकरणाविवेकादित्याह—**अनित्येति** ॥ ९ ॥

मिथ्याभिमानादेव संसारप्राप्तिरित्युक्तमेव व्यनक्ति—**मूढयेति** ॥ १० ॥

**अचक्षुष्कादिशास्त्रोक्तं सबाह्याभ्यन्तरं त्वजम् ।**
**नित्यमुक्तमिहात्मानं मुमुक्षुश्चेत्सदा स्मरेत् ॥११॥**
**अचक्षुष्कादिशास्त्राच्च नेन्द्रियाणि सदा मम ।**
**अप्राणो ह्यमनाः शुभ्र इति चाथर्वणं वचः ॥१२॥**
**शब्दादीनामभावश्च श्रूयते मम काठके ।**
**अप्राणो ह्यमना यस्मादविकारी सदा ह्यहम् ॥१३॥**
**विक्षेपो नास्ति तस्मान्मे न समाधिस्ततो मम ।**
**विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥१४॥**
**अमनस्कस्य शुद्धस्य कथं तत्स्याद्द्वयं मम ।**
**अमनस्त्वाविकारित्वे विदेहव्यापिनो मम ॥१५॥**
**इत्येतद्यावदज्ञानं[तं] तावत्कार्यं ममाभवत् ।**
**नित्यमुक्तस्य शुद्धस्य बुद्धस्य च सदा मम ॥१६॥**
**समाधिर्वाऽसमाधिर्वा कार्यं चान्यत्कुतो भवेत् ।**
**मां हि ध्यात्वा च बुद्ध्वा च मन्यन्ते कृतकृत्यताम् ॥१७॥**

---

कथं तर्हि संसारनिवृत्तिरित्याशङ्क्य मुमुक्षुं शिक्षयति—**अचक्षुष्कादीति**। इह जन्तूनां मध्ये कश्चिन्मुमुक्षुः स्याच्चेत् स तर्हि स्वमात्मानमुक्तरूपं सदा स्मरेदिति सम्बन्धः ॥ ११ ॥

यदात्मनः चक्षुरादिराहित्यमुक्तं तत्रापि प्रमाणमाह—**अचक्षुष्कादीति**। आत्मनो यत्प्राणेन मनसा वा सम्बन्धराहित्यमुक्तं तत्रापि प्रमाणमाह—**अप्राण इति** ॥ १२ ॥

आत्मनो निर्विशेषत्वे श्रुत्यन्तरमुदाहरति—**शब्दादीनामिति**। प्राणादिसम्बन्धराहित्यादविकारित्वाच्च मुमुक्षुत्वसिद्धिरित्याह—**अप्राणो हीति** ॥ १३ ॥

अविकारित्वप्रयुक्तं फलं कथयति—**विक्षेप इति**। तर्हि विक्षेपसमाधी कुत्र स्यातामित्याशङ्क्याह—**विक्षेपो वेति** ॥ १४ ॥

आत्मनि पुनरविकारिणि मनःसम्बन्धाभावान्न विक्षेपादिद्वयं युक्तमित्याह—**अमनस्कस्येति**। कथं पुनरमनस्कत्वमविकारित्वं च सिद्धमित्याशङ्क्य देहसम्बन्धाभावादमनस्कत्वं व्यापित्वादविकारित्वमित्याह—**अमनस्त्वेति** ॥ १५ ॥

कथं तर्हि जिज्ञासावस्थायां तव समाध्यादि कर्तव्यमिति बुद्धिरासीत्तत्राह—**इतीति**। एतच्छब्देनात्मनो नित्यमुक्तत्वादि गृह्यते। स्वतः समाधानादेर्न कार्यतेत्यत्र हेतुं सूचयति—**नित्येति** ॥ १६ ॥

यथोक्तात्मस्वरूपपरिज्ञानेऽपि समाधानादि कर्तव्यमित्याशङ्क्य हेत्वभावान्नैवमित्याह—**समाधिर्वेति**। समाधिर्वाऽसमाधिर्वेत्यत्र हेतुमाह—**मां हीति**। प्रत्यगात्मनो ध्यानद्वारा साक्षात्कारे सति कृतकृत्यतायाः सिद्धत्वात्कर्तव्यशेषासिद्धिरित्यर्थः ॥ १७ ॥

अहं ब्रह्मास्मि सर्वोऽस्मि शुद्धो बुद्धोऽस्म्यतः सदा ।
अजः सर्वत एवाहमजरश्चाक्षयोऽमृतः ॥१८॥

मदन्यः सर्वभूतेषु बोद्धा कश्चिन्न विद्यते ।
कर्माध्यक्षश्च साक्षी च चेता नित्योऽगुणोऽद्वयः ॥१९॥

न सच्चाहं न चासच्च नोभयं केवलः शिवः ।
न मे सन्ध्या न रात्रिर्वा नाहर्वा सर्वदा दृशेः ॥२०॥

सर्वमूर्तिवियुक्तं यद्यथा खं सूक्ष्ममद्वयम् ।
तेनाप्यस्मि विना भूतं ब्रह्मैवाहं तथाऽद्वयम् ॥२१॥

ममात्माऽस्य त आत्मेति भेदो व्योम्नो यथा भवेत् ।
एकस्य सुषिभेदेन तथा मम विकल्पितः ॥२२॥

भेदोऽभेदस्तथा चैको नाना चेति विकल्पितः ।
ज्ञेयं ज्ञाता गतिर्गन्ता मय्येकस्मिन्कुतो भवेत् ॥२३॥

---

ननु परमात्मध्यानादिना कृतकृत्यतासिद्धावपि कथमात्मध्यानादिना तत्सिद्धिरित्याशङ्क्य ब्रह्मात्मभेदाभावान्मैवमित्याह—**अहमिति** ॥१८॥

ननु प्रतिदेहं चेतनभेदे भासमाने कथं तव ब्रह्मत्वमिति चेत्तत्राह—**मदन्य इति** । तथापि कर्तृत्वादिना भासमानस्य कुतस्ते ब्रह्मत्वमित्याशङ्क्याह—**कर्मेति** । चेता विशेषतो विज्ञाता ॥ १९ ॥

आत्मनः सर्वविशेषरहितत्वेन क्रियाशेषत्वायोगाच्च युक्तं ब्रह्मत्वमित्याह—**न सदिति** । मूर्तं भूतत्रयं सदित्युक्तम् । अमूर्तं भूतद्वयमसदित्युच्यते । उभयं मूर्तामूर्तात्मकभूतपञ्चकम् । तथापि सन्ध्यादिकालविशेषसम्बन्धात्कथं सर्वविशेषशून्यतया परिशुद्धत्वेन ब्रह्मत्वमात्मनः स्यादित्याशङ्क्याह—**न म इति** । तत्र हेतुः **सर्वदेति** ॥ २० ॥

सदा चिदेकतानस्यात्मनो युक्तं ब्रह्मत्वमिति सदृष्टान्तं दर्शयति—**सर्वेति** । यथा खल्वाकाशं सर्वस्मात्परिच्छिन्नाकाशाद्विलक्षणमिति सूक्ष्ममालक्ष्यते तथेदं ब्रह्म परिपूर्णमत्यन्तसूक्ष्मं द्वैताभावोपलक्षितमिष्यते । तस्माद्ब्रह्मणोऽद्वितीयत्वादात्मनस्ततो भेदायोगादात्मैवास्मीत्यर्थः । तर्हि ब्रह्माकाशयोर्दृष्टान्तदार्ष्टान्तिकत्वेन भेदात् कुतो ब्रह्माद्वितीयत्वमित्याशङ्क्याह—**तेनेति** । आकाशेनापि विनाभूतं वस्तुतो विरहितमेव ब्रह्मेष्यते व्यवहारतस्तस्य दृष्टान्तत्वात् । वस्तुतो भेदाभावादद्वयमेव ब्रह्मेत्यर्थः । एकमद्वयपदमाकाशेन सम्बध्यते द्वितीयं ब्रह्मणेत्यपौनरुक्त्यम् ॥ २१ ॥

ननु कथमद्वितीयब्रह्मत्वं तव ? त्वयि भेदप्रतीतेरित्याशङ्क्य भेदप्रतीतेरौपाधिकत्वाद्वास्तवमेकत्वमविरुद्धमिति दृष्टान्तेन परिहरति—**ममेति** ॥ २२ ॥

पूर्वं प्रत्यगात्मानवगतेरविद्यावशाद्विशेषव्यवहारेऽपि प्रत्यगात्मन्यवगते सति परमार्थतो न कश्चदपि विशेषोऽस्तीत्याह—**भेदोऽभेद इति** ॥ २३ ॥

न मे हेयं न चादेयमविकारी यतो ह्यहम् ।
सदा मुक्तस्तथा शुद्धः सदा बुद्धोऽगुणोऽद्वयः ॥२४॥
इत्येवं सर्वदाऽऽत्मानं विद्यात्सर्वं समाहितः ।
विदित्वा मां स्वदेहस्थमृषिर्मुक्तो ध्रुवो भवेत् ॥२५॥
कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च ।
य एवं वेद तत्त्वार्थमन्यथा ह्यात्महा भवेत् ॥२६॥
वेदार्थो निश्चितो ह्येष समासेन मयोदितः ।
संन्यासिभ्यः प्रवक्तव्यः शान्तेभ्यः शिष्टबुद्धिना ॥२७॥

## ॥ स्वप्नस्मृतिप्रकरणम् ॥ १४ ॥

स्वप्नस्मृत्योर्घटादेर्हि रूपाभासः प्रदृश्यते ।
पुरा नूनं तदाकारा धीर्दृष्टेत्यनुमीयते ॥ १ ॥

---

हेयोपादेयसम्बन्धान्निर्विशेषत्वमात्मनोऽसिद्धमित्याशङ्क्य निर्विकारत्वान्नैवमित्याह—**न म इति**। मुक्तत्वाद्युपादेयमशुद्धत्वादि हेयमित्याशङ्क्याह—**सदेति** ॥ २४ ॥

यस्मादेवं शास्त्राचार्याभ्यां नित्यमुक्तत्वादिलक्षण आत्मा दर्शितस्तस्मादुक्तलक्षणमात्मानमद्वितीयं श्रवणमनननिदिध्यासनोपेतः सर्वदा ब्रह्मास्मीति विद्यान्मुमुक्षुरित्याह—**इतीति**। यथोक्तविद्याफलं कथयति—**विदित्वेति** ॥ २५ ॥

उक्तपरमार्थतत्त्वपरिज्ञाने फलं प्रपञ्चयति विपक्षे प्रत्यवायं च दर्शयति—**कृतकृत्य इति**। उक्तस्यार्थस्य प्रामाणिकत्वं दर्शयन् प्रतिपत्तिसौकर्यं सूचयति—**वेदार्थ** इति। शास्त्राचार्यानुशिष्टबुद्धेरुपदेष्टृत्वमभिप्रेत्य विशिनष्टि—**शिष्टेति** ॥ २७ ॥

॥ विवृतमचक्षुष्ट्वप्रकरणं त्रयोदशम् ॥

### ॥ स्वप्नस्मृतिप्रकरणम् ॥

पूर्वस्मिन्प्रकरणे बुद्ध्यविवेकादात्मनि सुखदुःखादिसंसारप्रतीतिः स्वतस्तु शास्त्रप्रामाण्यादहं ब्रह्मास्मीति ज्ञानान्निवृत्ताज्ञानतत्कार्यो नित्यमुक्तोऽयं प्रत्यगात्मेत्युक्तम्। इदानीं परोक्षत्वाद्बुद्धेः सुखदुःखादिसंसारप्रतिभासस्य चापरोक्षत्वान्न बुद्ध्यविवेकनिबन्धना संसारप्रतीतिरात्मनीत्याशङ्क्य बुद्धेरपरोक्षत्वं साधयति—**स्वप्नस्मृत्योरिति**। स्वप्ने स्मृतौ च घटादेर्विषयजातस्याकारभेदो यस्मादुपलभ्यते तस्मात्पूर्वं जाग्रद्दशायामनुभवावस्थायां च तत्तदाकारा बुद्धिरेव दृष्टेति कल्प्यते। पूर्वमदृष्टाया स्मृत्यादौ स्फुरणायोगादतो वृत्तिमती बुद्धिर्वृत्तिद्वारेणानेकार्थसंस्कारोपेता साभासा स्वप्नादावपरोक्षा प्रतिभातीत्यर्थः ॥ १ ॥

**भिक्षामटन्यथा स्वप्ने दृष्टो देहो न स स्वयम् ।**
**जाग्रद्दृश्यात्तथा देहाद्द्रष्टृत्वादन्य एव सः ॥ २ ॥**
**मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।**
**रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ॥ ३ ॥**
**व्यञ्जको वा यथाऽऽलोको व्यङ्ग्यस्याकारतामियात् ।**
**सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ४ ॥**
**धीरेवार्थस्वरूपा हि पुंसा दृष्टा पुराऽपि च ।**
**न चेत्स्वप्ने कथं पश्येत्स्मरतो वाऽऽकृतिः कुतः ॥ ५ ॥**
**व्यञ्जकत्वं तदेवास्या रूपाद्याकारदृश्यता ।**
**द्रष्टृत्वं च दृशेस्तद्वद्व्याप्तिः स्याद्धिय उद्भवे ॥ ६ ॥**
**चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ।**
**मया यस्मात्प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहम् ॥ ७ ॥**

---

स्वप्नादौ बाह्यविषयाभावाद्बुद्धिरेव तत्तद्वासनावासिता दृश्यते चेत्तावता प्रकृते किमायातमित्याशङ्क्य दृश्याद्बुद्ध्यादिसंघातात् द्रष्टुरात्मनो विवेकः सिद्ध्यतीति सदृष्टान्तमाह—**भिक्षामिति** ॥२॥

बुद्धेरर्थाकारेण दृश्यमानत्वं दृष्टान्तेन स्पष्टयति—**मूषेति** ॥ ३ ॥

ताम्रादेरग्निसम्पर्काद्द्रुतस्य मूषानिषिक्तस्य कठिनमूषाभिघातेन शैत्यापत्तौ मूषाकारापत्तावपि बुद्धेरमूर्तायास्ताम्रादिविलक्षणाया विषयव्याप्तावपि कुतस्तदाकारापत्तिरित्याशङ्क्य दृष्टान्तान्तरमाह—**व्यञ्जको वेति** ॥ ४ ॥

बुद्धेरन्वयमुखेन प्रत्यक्षत्वं स्वप्नस्मृत्योरित्यत्रोक्तमनुवदति—**धीरेवेति** । यस्माद्बुद्धिरेव विषयाकारा जागरिते पूर्वानुभवे च पुरुषेणोपलब्धा तस्मात्तस्याः स्मृतिस्वप्नयोरर्थाकाराया दर्शनमविरुद्धमित्यर्थः । तदेव व्यतिरेकमुखेन स्फोरयति—**न चेदिति** । यद्यर्थाकारा धीर्जागरिते न दृष्टा कथं तर्हि स्वप्ने दृश्येत । तत्र बुद्धिव्यतिरिक्तार्थाभावाददृष्टस्फुरणायोगाच्च । यदि पूर्वानुभवकाले बुद्धिरर्थाकारा नानुभूता तर्हि पुरुषस्य स्मरतः स्मृतेराकृतिर्न स्याद्बुद्धिव्यतिरिक्तस्यार्थस्याकारप्रदस्य तत्रासत्वात् बुद्ध्यारूढस्यापि तस्याननुभूतत्वे तदाकारप्रदत्वायोगात् । तस्माज्जागरिते पूर्वानुभवे च धियो विषयाकारायाः सिद्धं प्रत्यक्षत्वमित्यर्थः ॥ ५ ॥

यत्तु व्यञ्जकत्वादालोकवदर्थाकारा धीरित्युक्तम् । तदयुक्तम् । अर्थाकारत्वमन्तरेणापि स्वच्छस्वभावत्वेन व्यञ्जकत्वसंभवादित्याशङ्क्याह—**व्यञ्जकत्वमिति** । चेतनेन बुद्धेर्दृश्यत्वे द्रष्टुश्चेतनस्य परिणामित्वमापद्येतेत्याशङ्क्याह—**द्रष्टृत्वं चेति** । यथा बुद्धेर्विषयाकारेण दृश्यत्वमेव व्यञ्जकत्वं तथा बुद्धिवृत्तीनां धर्माधर्मवशादुत्पत्तौ चिदात्मनः सन्निधिमात्रेण व्याप्तिस्तत्साक्षित्वं दृशेरात्मनो द्रष्टृत्वं न परिणामित्वमित्यर्थः ॥ ६ ॥

बुद्धितद्वृत्तिसाक्षित्वेन चेतनस्यापरिणामित्वेऽपि न ब्रह्मरूपता युक्ता प्रतिदेहं बुद्धिभेदेन साक्षिभेदादित्याशङ्क्य साक्षिभेदे प्रमाणाभावान्नैवमित्याह—**चिन्मात्रेति** ॥ ७ ॥

**करणं कर्म कर्ता च क्रिया स्वप्ने फलं च धीः ।**
**जाग्रत्येवं यतो दृष्टा द्रष्टा तस्मादतोऽन्यथा ॥ ८ ॥**
**बुद्ध्यादीनामनात्मत्वं हेयोपादेयरूपतः ।**
**हानोपादानकर्ताऽऽत्मा न त्याज्यो न च गृह्यते ॥ ९ ॥**
**सबाह्याभ्यन्तरे शुद्धे प्रज्ञानैकरसे घने ।**
**बाह्यमाभ्यन्तरं चान्यत्कथं हेयं प्रकल्प्यते ॥१०॥**
**य आत्मा नेति नेतीति परापोहेन शेषितः ।**
**स चेद्ब्रह्मविदात्मेष्टो यतेतातः परं कथम् ॥११॥**
**अशनायाद्यतिक्रान्तं ब्रह्मैवास्मि निरन्तरम् ।**
**कार्यवान् स्यां कथं चाहं विमृशेदेवमञ्जसा ॥१२॥**
**पारगस्तु यथा[दा] नद्यास्तत्स्थः पारं यियासति ।**
**आत्मज्ञश्चेत्तथा[दा] कार्यं कर्तुमन्यदिहेच्छति ॥१३॥**
**आत्मज्ञस्यापि यस्य स्याद्धानोपादानता यदि ।**
**न मोक्षार्हः स विज्ञेयो वान्तोऽसौ ब्रह्मणा ध्रुवम् ॥१४॥**

---

चेतनस्य सर्वत्रैकत्वेऽपि दृश्यस्य बुद्ध्यादेरनेकत्वान्नाद्वितीयब्रह्मतेत्याशङ्क्य क्रियाकारकफलात्मकदृश्यप्रपञ्चस्यानिर्वाच्याज्ञानविजृम्भितमात्रत्वाच्चेतनस्य ब्रह्मत्वमविरुद्धमित्याह—**करणमिति । स्वप्ने** करणादेः सर्वस्य बुद्धिव्यतिरेकेणाभावाद्बुद्धेश्च सुषुप्तावज्ञानात्ममात्रत्वाज्जागरितेऽपि **करणादिरूपेण बुद्धिरेव** स्वप्नवद्यस्माद्द्रष्टा तस्माद्बुद्धिसाक्षी साक्ष्याया बुद्धेरन्यथा—क्रियाकारक**फलविलक्षणो लक्ष्यते** । तथा च दृश्यस्य सर्वस्य मिथ्यात्वाद्युक्ता साक्षिणो ब्रह्मतेत्यर्थः ॥ ८ ॥

बुद्ध्यादीनामात्मसम्बन्धित्वेन प्रतीयमानानां कथमनात्मत्वमित्याशङ्क्यागमापायित्वाद्वस्त्रादिदित्याह—**बुद्ध्यादीनामिति** । आत्मन्यपि स्यादागमापायित्वमित्याशङ्क्याह—**हानेति** ॥ ९ ॥

आत्मनः स्वरूपेण हानोपादानयोरभावे तत्सम्बन्धित्वेन प्राप्तस्य बाह्यस्याभ्यन्तरस्य च हानोपादाने स्यातामिति चेन्नेत्याह—**सबाह्येति** । हेयमिति उपलक्षणमुपादेयमपि द्रष्टव्यम् ॥ १० ॥

वस्तुस्वभावानुसारेणात्मसम्बन्धि त्याज्यमुपादेयं वा नास्तीत्युक्तम् । इदानीं विद्वत्प्रतिभासानुसारेणापि हानोपादानादिव्यवहारो न सम्भवतीत्याह—**य आत्मेति** ॥ ११ ॥

**कूटस्थं** निर्विशेषं ब्रह्मात्मतत्त्वं स्वानुभवगम्यत्वात्तन्निश्चयार्थं स्वयमेवात्मविद्विवेक्तुमर्हतीत्याह—**अशनायेति** । षडूर्मिवर्जितं ब्रह्मैवास्मीति साक्षान्निश्चित्य कार्यवत्त्ववचनमनुभवविरुद्धत्वान्न सिद्ध्यतीत्यर्थः ॥ १२ ॥

पूर्वोक्तरीत्या विमर्शेऽपि विविदिषावाक्यसिद्धस्य वेदानुवचनादेः सत्त्वशुद्धिहेतुत्वेन ज्ञानोत्पत्तिहेतोर्व्यापारस्य परित्यागो न सम्भवतीत्याशङ्क्य ज्ञानिनस्तदसंभवं दृष्टान्तेन प्रतिपादयति—**पारग इति इह**—श्रेयोमार्गे ॥ १३ ॥

आत्मज्ञस्यापि हानोपादानव्यापाराङ्गीकारे को दोषः स्यादित्याशङ्क्याह—**आत्मज्ञस्येति** ॥१४॥

सादित्यं हि जगत्प्राणस्तस्मान्नाहर्निशैव वा ।
प्राणज्ञस्यापि न स्यातां कुतो ब्रह्मविदोऽद्वये ॥१५॥
न स्मरेदात्मनो ह्यात्मा विस्मरेद्वाऽप्यलुप्तचित् ।
मनोऽपि स्मरतीत्येतज्ज्ञानमज्ञानहेतुजम् ॥१६॥
ज्ञातुर्ज्ञेयः परो ह्यात्मा सोऽविद्याकल्पितः स्मृतः ।
अपोढे विद्यया तस्मिन् रज्ज्वां सर्प इवाद्वयः ॥१७॥
कर्तृकर्मफलाभावात्सबाह्याभ्यन्तरं ह्यजम् ।
ममाहं वेति यो भावस्तस्मिन्कस्य कुतो भवेत् ॥१८॥
आत्मा ह्यात्मीय इत्येष भावोऽविद्याप्रकल्पितः ।
आत्मैकत्वे ह्यसौ नास्ति बीजाभावे कुतः फलम् ॥१९॥
द्रष्टृ श्रोतृ तथा मन्तृ विज्ञात्रेव तदक्षरम् ।
द्रष्ट्राद्यन्यन्न तद्यस्मात्तस्माद्द्रष्टाऽहमक्षरम् ॥२०॥

---

'सन्ध्यां नोपासते विप्रास्ते कथं ब्राह्मणाः स्मृता' इत्यादिस्मृतेर्ब्रह्मविदोऽपि सन्ध्यावन्दनादिव्यापारोऽवश्यंभावीत्याशङ्क्य प्राणस्वरूपसाक्षात्कारेऽपि नाहोरात्रादिविभागः सम्भवति। ब्रह्मात्मनि पुनः साक्षात्कृते तस्मिन्नद्वितीये नाहोरात्रादिविभागः सम्भवतीति किमुत वक्तव्यम्, अतो न ब्रह्मविदः सन्ध्यावन्दनादिव्यापारसिद्धिरित्याह—**सादित्यमिति** ॥ १५ ॥

ब्रह्मविदो बाह्यक्रियाभावेऽपि स्वात्मनि विस्मृतिं परिहृत्य स्मृतिर्मोक्षाय कर्तव्येत्याशङ्क्याह—**न स्मरेदिति**। स्मरणविस्मरणयोरभावे हेतुमाह—**अलुप्तेति**। आत्मनि स्मरणास्मरणयोरभावेऽपि मनो ज्ञानादूर्ध्वमाविर्भावतिरोभावात्मना वर्तमानमाविर्भावतिरोभावशान्त्यर्थमात्मानं स्मरिष्यतीत्याशङ्क्याह—**मनोऽपीति** ॥ १६ ॥

प्रत्यगात्मनः स्वात्मनि स्मरणाभावेऽपि परमात्मनि भविष्यतीत्याशङ्क्याह—**ज्ञातुरिति**। यदि परमात्मा प्रत्यगात्मनो ज्ञेयोऽभिप्रेतस्तर्हि स दृश्यत्वादविद्याकल्पितो रज्जुसर्पवद् विद्वद्भिरुपगतस्तथा च रज्ज्वां कल्पिते सर्पे रज्जुज्ञानान्निरस्ते रज्जुरेव यथाऽवशिष्यते तथा ब्रह्मात्मविद्ययाऽविद्यानिवृत्त्या कल्पिते सर्वस्मिन्नपाकृते प्रत्यगात्मैवाद्वितीयोऽवशिष्टो भवतीत्यर्थः ॥ १७ ॥

प्रत्यगात्मनो वस्तुतोऽद्वितीयत्वेऽपि तस्मिन्ममाहमिति संसारस्य प्रतीयमानत्वात्तन्निवृत्तये स्यादनुष्ठानमित्याशङ्क्य ज्ञानात्प्रागनुष्ठानेऽपि नोर्ध्वं तत्सिद्धिरित्याह—**कर्त्रिति** ॥ १८ ॥

आत्मविदो देहादावहंकारममकारयोरभावे हेतुमाह—**आत्मा हीति**। आत्मैकत्वे सतीति शेषः ॥ १९ ॥

केन प्रमाणेनात्मैकत्वं ज्ञातुं शक्यमित्याशङ्क्य वाक्यवलादित्याह—**द्रष्टृति**। द्रष्ट्राद्यन्यन्न तद्यस्मात्तस्माद्द्रष्टाऽहमक्षरं तदेव प्रकृतमक्षरं द्रष्ट्रादिरूपेण वर्तते न तु तस्मादक्षराद्द्रष्ट्रादिनामाऽस्ति। यस्मादेवं तस्माद्द्रष्ट्रादिरूपेण प्रसिद्धोऽहं प्रत्यगात्मा ब्रह्मैवाक्षरमिति वाक्यवशादैक्यप्रतिपत्तिरित्यर्थः ॥ २० ॥

स्थावरं जङ्गमं चैव द्रष्टृत्वादिक्रियायुतम् ।
सर्वमक्षरमेवातः सर्वस्याऽऽत्माऽक्षरं त्वहम् ॥२१॥
अकार्यशेषमात्मानमक्रियात्मक्रियाफलम् ।
निर्ममं निरहङ्कारं यः पश्यति स पश्यति ॥२२॥
ममाहङ्कारयत्नेच्छाः शून्या एव स्वभावतः ।
आत्मनीति यदि ज्ञातमाध्वं स्वस्थाः किमीहितैः ॥२३॥
योऽहङ्कर्तारमात्मानं तथा वेत्तारमेव च ।
वेत्त्यानात्मज्ञ एवासौ योऽन्यथाज्ञः स आत्मवित् ॥२४॥
यथान्यत्वेऽपि तादात्म्यं देहादिष्वात्मनो मतम् ।
तथाऽकर्तुरविज्ञानात्फलकर्मात्मताऽऽत्मनः ॥२५॥
दृष्टिः श्रुतिर्मतिर्ज्ञातिः स्वप्ने दृष्टा जनैः सदा ।
तासामात्मस्वरूपत्वादतः प्रत्यक्षताऽऽत्मनः ॥२६॥

---

अक्षरस्य सर्वात्मकत्वादात्मनश्चातथात्वात्कथमेकत्वमित्याशङ्क्यात्मनोऽपि सर्वात्मकत्वमक्षरात्मकस्याविशिष्टमित्याह—**स्थावरमिति** ॥ २१ ॥

तर्हि स्थावरजङ्गमत्वेन सप्रपञ्चत्वं ब्रह्मात्मनः स्यादित्याशङ्क्य सर्वविशेषशून्यं चिन्मात्रमात्मतत्त्वमित्याह—**अकार्य इति** ॥ २२ ॥

आत्मविदोऽपि कर्माभ्युपगमादस्ति कार्यशेषत्वमित्याशङ्क्याह—**ममेति** । आत्मस्वरूपानुभवानुरोधादात्मनि ममाहंकारादीनामसत्त्वे ज्ञाते तेनैव ज्ञानेन कृतकृत्यत्वात्कर्मणां विफलत्वादात्मनः तच्छेशषत्वासिद्धिरित्यर्थः ॥ २३ ॥

देहव्यतिरिक्तात्मदर्शिनः सर्वेषु पारलौकिककर्मसु अधिकाराभ्युपगमादस्त्यात्मविदोऽपि कर्मशेषतेत्याशङ्क्य तस्यात्मवित्त्वाभावान्मैवमित्याह—**योऽहमिति** । कर्तृत्वभोक्तृत्वप्रमातृत्वेनात्मानं जानन्नात्मज्ञो न चेत्तर्हि कः स्यादात्मविदित्याशङ्क्य योऽहंकर्त्रादिसाक्षिणमात्मानं वेत्ति स भवत्यात्मविदित्याह—**योऽन्यथेति** ॥ २४ ॥

आत्मा चेदहङ्कारादतिरिच्यते तर्हि तस्मिन्नात्मनि कथं कर्तृत्वभोक्तृत्वप्रथेत्याशङ्क्याह—**यथान्यत्वेऽपीति** । आत्मनो देहादिभ्यो वस्तुतोऽन्यत्वेपि तेषु तादात्म्यमाध्यासिकं यथाऽभिमतं तथैवाकर्तुरभोक्तुरपरिज्ञानादहङ्काराध्यासद्वारा कर्तृता भोक्तृता च भातीत्यर्थः ॥ २५ ॥

अहङ्काराविवेकादात्मनि कर्तृत्वादिभ्रान्तिरित्ययुक्तम् । सवृत्तिकस्याहंकारस्यात्मनश्च व्यतिरेकासिद्धेरित्याशङ्क्याह—**दृष्टिरिति** । दृष्ट्यादीनां सान्तःकरणानां साक्षिवेद्यत्वात्ततो व्यतिरेकः साक्षिणः स्वप्ने सिद्ध्यतीत्यर्थः । दृष्ट्यादीनामन्तःकरणसहितानां दृश्यत्वेन तत्साक्षिणो व्यतिरेकमुक्त्वा सुषुप्ते दृष्ट्यादीनामज्ञानात्ममात्रत्वेनास्तमयादद्वितीयस्य तस्यापरोक्षचिन्मात्रत्वोपपत्तेश्च सुघटो व्यतिरेकः स्यादित्याह—**तासामिति** ॥ २६ ॥

**परलोकभयं यस्य नास्ति मृत्युभयं तथा ।**
**तस्यात्मज्ञस्य शोच्याः स्युः सब्रह्मेन्द्रा अपीश्वराः ॥२७॥**
**ईश्वरत्वेन किं तस्य ब्रह्मेन्द्रत्वेन वा पुनः ।**
**तृष्णा चेत्सर्वतश्छिन्ना सर्वदैन्योद्भवाऽशुभा ॥२८॥**
**अहमित्यात्मधीर्या च ममेत्यात्मीयधीरपि ।**
**अर्थशून्ये यदा यस्य स आत्मज्ञो भवेत्तदा ॥२९॥**
**बुद्ध्यादौ सत्युपाधौ च तथाऽसत्यविशेषता ।**
**यस्य चेदात्मनो ज्ञाता तस्य कार्यं कथं भवेत् ॥३०॥**
**प्रसन्ने विमले व्योम्नि प्रज्ञानैकरसेऽद्वये ।**
**उत्पन्नात्मधियो ब्रूत किमन्यत्कार्यमिष्यते ॥३१॥**
**आत्मानं सर्वभूतस्थममित्रं चात्मनोऽपि यः ।**
**पश्यन्निच्छत्यसौ नूनं शीतीकर्तुं विभावसुम् ॥३२॥**

---

अहंकर्तृव्यतिरेकापादनेन तत्साक्षिणो ब्रह्मत्वापादनेन च को लाभः स्यादित्याशङ्क्य परलोकसम्बन्धिभयाभावो मृत्युभयाभावश्चेत्यभिप्रेत्य द्विविधभयाभावज्ञापकं दर्शयति—**परलोकेति** । कृतार्थत्वेन प्रसिद्धा ब्रह्मेन्द्रादयोऽपि यदा शोच्यत्वेनात्मविदो ज्ञायन्ते तदा तस्योभयोरभावाधिगतिरित्यर्थः ॥ २७ ॥

न तेषां शोच्यत्वं प्रार्थनीयत्वादित्याशङ्क्य ब्रह्मविदस्तत्प्रार्थनाभावान्मैवमित्याह—**ईश्वरेति** ॥ २८ ॥

कदा तर्हि ब्रह्मात्मज्ञो भवतीत्याशङ्क्याह—**अहमिति** । शास्त्राचार्यानुगृहीतस्य पदार्थविवेकवतो यस्मिन्काले बुद्धिद्वयं न प्रवर्तकं तस्मिन्काले तस्य वाक्याद्यथोक्ता विद्योदेतीत्यर्थः ॥ २९ ॥

यथोक्तज्ञानोत्पत्त्यनन्तरं ज्ञानवतो नास्ति कार्यशेषत्वमित्याह—**बुद्ध्यादाविति** । अवस्थाद्वये बुद्ध्यादावुपाधौ विद्यमाने, सुषुप्ते च तस्मिन्नसति यस्य शास्त्राचार्यानुगृहीतस्यात्मनो निर्विशेषता वेदाश्चेत्प्रमाणमिति [ वत् ] निश्चिताऽवगता तदा तस्य कृतार्थत्वान्न कथञ्चित्कार्यं संभवतीत्यर्थः ॥ ३० ॥

आत्मविदो नास्ति कार्यविशेषतेत्यत्र हेत्वन्तरमाह—**प्रसन्न इति** । आगन्तुकनैसर्गिकदोषरहिते व्योमवन्निरवयवत्वादिलक्षणे चैतन्यतावन्मात्रे कार्यकारणविभागशून्ये ब्रह्मण्यहस्मीति उत्पन्नज्ञानस्य न कार्यमवशिष्टमस्तीत्ययुक्ता कार्यशेषतेत्यर्थः ॥ ३१ ॥

नन्वात्मविदोऽपि श्रेयोऽवाप्तिप्रतिबन्धकस्य शत्रोः संभवात्तत्परिहारार्थं किञ्चिदनुष्ठेयं स्यादिति चेन्नेत्याह—**आत्मानमिति** । यथा रवेरुष्मस्वभावस्य शीतीकरणमशक्यं तथा निर्विशेषब्रह्मात्मविदोऽपि मित्रामित्रादिदर्शनायोगान्नानुष्ठानशेषोपपत्तिरित्यर्थः ॥ ३२ ॥

**प्रज्ञाप्राणानुकार्यात्मा छायेवाक्षादिगोचरः ।**
**ध्यायतीवेति चोक्तो हि शुद्धो मुक्तः स्वतो हि सः ॥३३॥**
**अप्राणस्याऽमनस्कस्य तथाऽसंसर्गिणो दृशेः ।**
**व्योमवद्व्यापिनो ह्यस्य कथं कार्यं भवेन्मम ॥३४॥**
**असमाधिं न पश्यामि निर्विकारस्य सर्वदा ।**
**ब्रह्मणो मे विशुद्धस्य शोध्यं नान्यद्विपाप्मनः ॥३५॥**
**गन्तव्यं च तथा नैव सर्वगस्याऽचलस्य च ।**
**नोर्ध्वं नाधस्तिरो वापि निष्कलस्यागुणत्वतः ॥३६॥**
**चिन्मात्रज्योतिषो नित्यं तमस्तस्मिन्न विद्यते ।**
**कथं कार्यं ममैवाद्य नित्यमुक्तस्य शिष्यते ॥३७॥**
**अमनस्कस्य का चिन्ता क्रिया वाऽनिन्द्रियस्य का ।**
**'अप्राणो ह्यमनाः शुभ्र' इति सत्यं श्रुतेर्वचः ॥३८॥**

---

किञ्चात्मनः सोपाधिकस्य निरुपाधिकस्य वा कार्यशेषत्वमिति विकल्प्याऽऽद्यमङ्गीकरोति—**प्रज्ञेति।** यथा चन्द्रादिछाया जलपात्रानुविधायिनी तच्चलनादिकमनुकरोति । तथाऽऽत्माभासोऽपि बुद्ध्यादिगतो बुद्ध्यविवेकात्प्रज्ञाप्राणश्चेत्युभयानुकारीति ध्यायतीव लेलायतीवेति श्रुत्योच्यते । तस्मादात्मा सोपाधिकः सन् कार्यशेषो भवत्येवेत्यर्थः । द्वितीयं दूषयति—**शुद्ध इति ।** स्वतश्चात्मा शुद्धो मुक्तो निश्चलो यस्मादालक्ष्यते ततो नासौ कार्यशेषतां गन्तुमर्हतीत्यर्थः ॥ ३३ ॥

निरुपाधिकस्यात्मनो न कार्यशेषतेत्युपपादयति—**अप्राणस्येति ।** क्रियाशक्तिभागेन ज्ञानशक्तिभागेन चोपाधिना सम्बन्धविधुरस्य स्वभावतश्चासंसर्गिणोऽसङ्गस्य चैतन्यमात्रस्याकाशवदनवच्छिन्नस्य कर्त्तव्यं नैव सम्भवति । ततो न निरुपाधिकस्य कार्यशेषोपपत्तिरित्यर्थः ॥ ३४ ॥

आत्मविदोऽपि कस्यचिदसमाधानविधूननार्थं व्यापारः स्यादित्याशङ्क्य सर्वदा निर्विकारत्वात्तस्य मे नासमाधिरित्याह—**असमाधिमिति ।** तथापि शोद्धव्यस्य पाप्मनः शोधनार्थं व्यापारः स्यादित्याशङ्क्य विशुद्धब्रह्मस्वभावत्वान्नैवमित्याह—**ब्रह्मण इति ।** ॥ ३५ ॥

अन्यन्नपश्यामीत्युक्तं तदयुक्तम् । गन्तव्यस्य गमनसाधनस्य च ब्रह्मविदो ज्ञातव्यत्वादित्याशङ्क्यानवच्छिन्नत्वादचलत्वाच्चात्मनो निर्गुणब्रह्मनिष्ठस्य गन्तव्यं गमनसाधनं च नैव पश्यामीत्याह—**गन्तव्यं चेति ।** किञ्च निर्गुणत्वान्निरवयवत्वाच्चात्मनो देशभेदाभावान्न गन्तव्यादिविभागसिद्धिरित्याह—**नोर्ध्वमिति ।** ॥ ३६ ॥

आत्मनो गुणादिरहितत्त्वं कथमित्याशङ्क्य चिन्मात्रज्योतिष्ट्वात्तस्मिन्गुणादिहेतोरज्ञानस्य सदैवासत्त्वादित्याह—**चिन्मात्रेति ।** एवंलक्षणस्य मम नित्यमुक्तस्येदानीमवगतब्रह्मभावस्य न कथञ्चिदपि कार्यं विधातुं शक्यमिति फलितमाह—**कथमिति ।** ॥ ३७ ॥

किञ्चात्मविदोऽज्ञानासम्बन्धात्तत्कार्येण मनसा चक्षुरादिना च सम्बन्धाभावादुभयविधक्रियाऽसिद्धेर्नास्ति क्रियाशेषतेत्याह—**अमनस्कस्येति ।** आत्मनो मनःप्राणादिराहित्ये प्रमाणमाह—

अकालत्वाददेशत्वाददिक्त्वादनिमित्ततः ।
आत्मनो नैव कालादेरपेक्षा ध्यायतः सदा ।।३९।।

यस्मिन्देवाश्च वेदाश्च पवित्रं कृत्स्नमेकताम् ।
व्रजेत्तन्मानसं तीर्थं यस्मिन्स्नात्वाऽमृतो भवेत् ।।४०।।

न चास्ति शब्दादिरनन्यवेदनः परस्परेणापि न चैव दृश्यते ।
परेण दृश्यास्तु यथा रसोदयः तथैव दृश्यत्वत एव दैहिकाः ।।४१।।

अहंममेत्येषणयत्नविक्रियासुखादयस्तद्वदिह प्रदृश्यतः ।
दृश्यत्वयोगाच्च परस्परेण ते न दृश्यतां यान्ति ततः परो भवान् ।।४२।।

अहंक्रियाद्या हि समस्तविक्रिया सकर्तृका कर्मफलेन संहता ।
चितिस्वरूपेण समन्ततोऽर्कवत् प्रकाश्यमानाऽसिततात्मनो ह्यतः ।।४३।।

दृशिस्वरूपेण हि सर्वदेहिनां वियद्यथा व्याप्य मनांस्यवस्थितः ।
अतो न तस्मादपरोऽस्ति वेदिता परोऽपि तस्मादत एक ईश्वरः ।।४४।।

---

**अप्राण इति।** निर्दोषस्य श्रुतिवचसो यथार्थत्वादज्ञानमूलयोर्मनःप्राणयोरात्मविदोऽभावान्न तस्य क्रियोपपत्तिरित्यर्थः ।। ३८ ।।

किञ्च कालादिरहितत्वादात्मनः सदा[1] तथाविधमात्मानमवगच्छतो नैव कालादेरपेक्षा क्रियोपयुक्ता । तस्मान्नात्मविदोऽस्ति क्रियाशेषतेत्याह—**अकालत्वादिति** । निमित्तं राहुदर्शनसंक्रमणादि ।। ३९ ।।

आत्मविदो देशकालादिसव्यपेक्षे कर्मण्यपेक्षाभावेऽपि प्रयागादितीर्थे स्यादपेक्षा तस्य मुक्तिहेतुत्वस्मरणादित्याशङ्क्य ब्रह्मात्मज्ञानलक्षणे तीर्थे साक्षादेव मुक्तिहेतौ स्नातस्य नास्ति तीर्थान्तरापेक्षेत्याह—**यस्मिन्निति** । ।। ४० ।।

एवं कृतार्थत्वापादकं ब्रह्मात्मज्ञानं केन लभ्यमित्याशङ्क्य पदार्थविवेकवता मुमुक्षुणेति विवक्षितत्वात् पदार्थविवेकमुक्तमेव संक्षिप्य वक्तुमादौ स्थूलदेहव्यतिरेकमात्मनो विशदयति—**नचेति** ।। ४१ ।।

एवं स्थूलदेहव्यतिरेकमात्मनस्तद्ग्राहकस्योक्त्वा सूक्ष्मदेहव्यतिरेकं तस्योपन्यस्यति—**अहमिति** । स्थूलदेहवदहंकारादयः सूक्ष्मदेहात्मका व्यवहारे न स्वतः सिद्ध्यन्ति । नापि तस्मादेव हेतोस्ते परस्परेण दृश्यन्ते । अतः स्वतोऽन्योन्यतश्च ग्रहणायोगात्तद्ग्राहकस्ततो व्यतिरिक्तः स्यादित्यर्थः ।। ४२ ।।

अहंकारादिग्राहकस्य ततो व्यतिरिक्तत्वेऽपि तत्सम्बन्धप्रतीतेर्नित्यमुक्तत्वासिद्धिरित्याशङ्क्य तत्सम्बन्धस्यापि साक्षित्वान्मैवमित्याह—**अहंक्रियेति** ।। ४३ ।।

बुद्धितद्वृत्तिसाक्षित्वेनासितत्त्वमनवरुद्धत्वमात्मनो यद्यपि सिद्धं तथापि न ब्रह्मत्वं लभ्यते । प्रतिदेहं भेदप्रतीतेरित्याशङ्क्य तदभेदे प्रमाणाभावाद्युक्ता ब्रह्मात्मतेत्याह—**दृशीति** ।। ४४ ।।

---

१. अतः परं "तथाविधत्व दज्ञानमूलयोर्मनः प्राणयोर्माभात्मानमवगच्छतो" इतिपाठः—क ।

**शरीरबुध्द्योर्यदि चान्यदृश्यता निरात्मवादाः सुनिराकृता मया ।**
**परश्च शुद्धो ह्यविशुद्धिकर्मतः सुनिर्मलः सर्वगतोऽसितोऽद्वयः ॥४५॥**
**घटादिरूपं यदि तेन गृह्यते मनः प्रवृत्तं बहुधा स्ववृत्तिभिः ।**
**अशुद्ध्यचिद्रूपविकारदोषता मतेर्यथा वारयितुं न पार्यते ॥४६॥**
**यथा विशुद्धं गगनं निरन्तरं न सज्जते नापि च लिप्यते तथा ।**
**समस्तभूतेषु सदैव तेष्वयं समः सदात्मा ह्यजरोऽमरोऽभयः ॥४७॥**
**अमूर्तमूर्तानि च कर्मवासना दृशिस्वरूपस्य बहिः प्रकल्पिताः ।**
**अविद्यया ह्यात्मनि मूढदृष्टिभिरपोह्य नेतीत्यवशेषितो दृशिः ॥४८॥**
**प्रबोधरूपं मनसोऽर्थयोगजं स्मृतौ च सुप्तस्य च दृश्यतेऽर्थवत् ।**
**तथैव देहप्रतिमानतः पृथग् दृशेः शरीरं च मनश्च दृश्यतः ॥४९॥**
**स्वभावशुद्धे गगने घनादिके मलेऽपयाते सति चाविशेषता ।**
**यथा च तद्वच्छ्रुतिवारितद्वये सदाऽविशेषो गगनोपमे दृशौ ॥५०॥**

---

देहद्वयसाक्षी ब्रह्मस्वभावश्चेदात्मा कुतस्तर्हि तस्य नास्तित्वादिकमेके मन्यन्ते तत्राह—**शरीरेति**। देहद्वयस्यान्येन स्थायिना ग्राह्यता यदि प्रागुक्तन्यायेन प्रतिपन्ना, तदा श्रुतिप्रत्यभिज्ञादिप्रमया बौद्धादिराद्धान्ता निराकृता भवन्ति, स चायं साक्षी संसारहेतुधर्माधर्माख्यकर्मणः सकाशात्परो व्यतिरिक्तो यतः सिद्धोऽतः सुनिर्मलोऽनवच्छिन्नो द्वैतस्य दृश्यतया तत्सम्बन्धरहितश्च सिध्यतीत्यर्थः ॥ ४५ ॥

बुद्धिशरीरयोरात्मदृश्यत्वे सम्प्रतिपत्त्यभावमाशङ्क्योक्तलक्षणमात्मानमिच्छता तयोर्दृश्यत्वमाश्रयितव्यमित्याह—**घटादीति**। बहुधा स्ववृत्तिभिः प्रवृत्तं मनो पटाद्याकारं यदि ते तव पक्षे न गृह्यते तदा बुद्धिवदात्मनो दोषपरम्परा निवारयितुं न शक्यते। साक्षित्वानभ्युपगमे सत्यवश्यंभावित्वादित्यर्थः ॥ ४६ ॥

घटादिरूपस्य मनसो दृश्यत्वेऽपि सर्वभूतस्थत्वादात्मनः सङ्गादिदोषात्कुतः सुनिर्मलत्वमित्याशङ्क्याह—**यथेति**—॥ ४७ ॥

कथमात्मनो विशुद्धत्वमित्याशङ्क्यामूर्तादिनिराकरणद्वारेण श्रुत्याऽऽत्मस्वरूपप्रतिपादनादित्याह—**अमूर्तेति** ॥ ४८ ॥

अमूर्तमूर्तादीनामात्मसम्बन्धित्वेन प्रतीयमानानां कुतः श्रुत्या निराकरणमित्याशङ्क्य स्थूलसूक्ष्मदेहात्मकानां सर्वेषां दृश्यत्वादित्याह—**प्रबोधरूपमिति**। **अर्थवदि**त्यर्थाकारं मनसो रूपं दृश्यत इत्यन्वयः। देहप्रतिभा देहवासना ॥ ४९ ॥

ननु श्रुत्या प्रतीयमानसंसारनिरासद्वारेणात्मा प्रतिपाद्यते चेन्निवृत्तसंसारस्यानिवृत्तसंसारस्य चाविशेषत्वादनित्यत्वादिदोषप्रसक्तिरित्याशङ्क्याह—**स्वभाव इति**। स्वभावशुद्धत्वाद् दृशो न कदाचिदध्यस्तनिवृत्तिव्यतिरेकेण स्वरूपे विशेषः स्यात्। निवृत्तिस्तु मिथ्याप्रतियोगिकत्वादधिष्ठानभूतदृगात्मव्यतिरिक्ता न भवतीत्यर्थः ॥ ५० ॥

॥ विवृतं स्वप्नस्मृतिप्रकरणं चतुर्दशम् ॥ १४ ॥

# ॥ नान्यदन्यत्प्रकरणम् ॥ १५॥

नान्यदन्यद्भवेद्यस्मान्नान्यत्किंचिद्विचिन्तयेत् ।
अन्यस्यान्यात्मभावे हि नाशस्तस्य ध्रुवो भवेत् ॥ १ ॥
स्मरतो दृश्यते दृष्टं पटे चित्रमिवार्पितम् ।
यत्र येन च तौ ज्ञेयौ सत्त्वक्षेत्रज्ञसंज्ञकौ ॥ २ ॥
फलान्तं चानुभूतं यद्युतं कर्त्रादिकारकैः ।
स्मर्यमाणं हि कर्मस्थं पूर्वं कर्मैव तच्चितः ॥ ३ ॥
द्रष्टुश्चान्यद्भवेद्दृश्यं दृश्यत्वाद्घटवत्सदा ।
दृश्याद्द्रष्टाऽसजातीयो न धीवत्साक्षिताऽन्यथा ॥ ४ ॥

---

॥ नान्यदन्यत्प्रकरणम् ॥

सत्यज्ञानानन्दपूर्णानाद्यन्तं द्वैतवर्जितम् । ब्रह्माहमस्म्यहं ब्रह्मास्म्यसङ्गो नित्यमुक्त ॐ । **केचिदेकदेशीयाः** स्वभावशुद्धो न भवत्यात्मा किन्तु संसारी सन्नेव ज्ञानध्यानादिसाधनेन ब्रह्मभावमेष्यतीति मन्यन्ते तान्प्रत्याह—**नान्यदन्यदिति** । अन्यदब्रह्मरूपं स्वरूपे स्थिते नान्यद्ब्रह्म भवितुमर्हति तद्रूपस्थितिविरोधात् । नापि तद्रूपे नष्टे तस्यान्यभावस्तस्यैव प्राप्तुरभावात् । **यत** एवं ततोऽ ब्रह्माहं संसारी ब्रह्मभविष्यामीति न किञ्चिदन्यच्चिन्तयेदित्यर्थः । यदि ब्रह्मणोऽन्यस्याब्रह्मणः संसारिणो ध्यानादिनाऽन्यब्रह्मभावः साध्येत तदा तस्य संसारिणः स्वरूपनाशोऽवश्यंभावी स्यात् । तस्मादात्मनो ब्रह्मभावं मोक्षमिच्छता न ब्रह्मात्मभेदो वास्तवोऽस्तीति स्वीकर्तव्यमित्याह—**अन्यस्येति** ॥ १ ॥

अन्यस्यान्यभावासम्भवान्न चेदन्यद्ध्येयं न च स्वात्मनि ध्यानं संभवति कथं तर्हि निदिध्यासनविधिः स्यादित्याशङ्क्य नैरन्तर्येण पदार्थविवेकसम्पादनं तदर्थः स्यादित्यभिप्रेत्याह—**स्मरत इति** । दृष्टं नीलपीतादि स्मरतो यत्रान्तःकरणे तद्वासनामयं पटे चित्रमिवार्पितमुपलभ्यते । येन चेतनेन तद्दृश्येत **तौ** सत्त्वं क्षेत्रज्ञश्चेत्येवमात्मकेन विवेकेन ज्ञातव्यावित्यर्थः ॥ २ ॥

अन्तःकरणस्याप्रत्यक्षत्वात्कथं तत्रस्थं नीलपीतादि स्मृतौ द्रष्टुंशक्यमित्याशङ्क्याह—**फलान्तमिति** । कर्त्रादिकारकैर्युक्तं सुखादिफलावसानं च यद्द्वैतं पूर्वमनुभूतं तदिदानीं स्मर्यमाणं कर्मस्थं दृश्यात्मतया स्थितमिव दृश्यते । यस्मात्पूर्वंदृष्टस्येदानीमाश्रयत्वेन चेतोऽनुभूयते तस्मात्पूर्वमपि चित्कर्मतया चेतोऽनुभूतं गम्यते । अन्यथाऽन्तःकरणे तत्स्मरणानुपपत्तेरित्यर्थः ॥ ३ ॥

केचिदात्मैव द्रष्टा दृश्यश्चेत्याश्रयन्तः स्वाश्रयं वासनामयंरूपं स्वयमेव द्रष्टा पश्यतीति नान्तःकरणस्य प्रत्यक्षतेत्याचक्षते तान्प्रत्याह—**द्रष्टुश्चेति** । द्रष्टृदृश्ययोर्भेदेऽपि परिणामित्वेन साजात्यमाशङ्क्याह—**दृश्यादिति** । यदि तयोरसजातीयत्वं मिथो विलक्षणत्वं नेष्यते र्वाहि धीवदेव साक्षिताऽऽत्मनो न स्यात्, परिणामित्वादित्यर्थः ॥ ४ ॥

**स्वात्मबुद्धिमपेक्ष्यासौ विधीनां स्यात्प्रयोजकः ।**
**जात्यादिः शववत्तेन तद्वन्नानात्मताऽन्यथा ॥ ५ ॥**

**न प्रियाप्रिय इत्युक्तेर्नादेहत्वं क्रियाफलम् ।**
**देहयोगः क्रियाहेतुस्तस्माद्विद्वान् क्रियास्त्यजेत् ॥ ६ ॥**

**कर्मस्वात्मा स्वतन्त्रश्चेन्निवृत्तौ च तथेष्यताम् ।**
**अदेहत्वे फलेऽकार्ये ज्ञाते कुर्यात्कथं क्रियाः ॥ ७ ॥**

**जात्यादीन्संपरित्यज्य निमित्तं कर्मणां बुधः ।**
**कर्महेतुविरुद्धं यत्स्वरूपं शास्त्रतः स्मरेत् ॥ ८ ॥**

**आत्मैकः सर्वभूतेषु तानि तस्मिंश्च खे यथा ।**
**पर्यगाद्व्योमवत्सर्वं शुक्रं दीप्तिमदिष्यते ॥ ९ ॥**

---

ननु भवत्येवात्मा साक्षी ब्राह्मण्यादिजातिमतस्तस्य विधिशेषत्वादित्याशङ्क्याह—**स्वात्मेति** । **असौ जात्यादिः** स्वस्मिन्नात्मबुद्धितादात्म्याध्यासमपेक्ष्य **विधीनां** प्रवर्तकः **स्यात्** । यथा **शवो** मम माता मम पितेति वाऽध्यासानुसारेण संस्कारप्रयोजको दृश्यते न त्वध्यासाभावे संस्कारप्रयोजकत्वं तस्योपलभ्यते । तेन शववदेव जात्यादिरात्मधर्मो न भवति । अन्यथा जात्यादिमत्त्वे घटवदात्मनोऽनात्मत्वप्रसङ्गादित्यर्थः ॥ ५ ॥

नाध्यासात् कर्तृत्वं मोक्षाय विदुषोऽपि क्रियानुष्ठानादित्याशङ्क्याह—**न प्रियेति** । यत्क्रियाफलं तत्प्रियाप्रियसंस्पर्शि दृष्टम् । मोक्षे चाशरीरं[1] वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतेर्नाप्रियप्रियसंस्पर्शोऽस्ति । ततोऽशरीरत्वं कैवल्यं क्रियाफलम् । किन्तु देवादिदेहप्राप्तिरेव तत्फलम् । यस्मान्मोक्षो न क्रियासाध्यः देहयोगस्तु क्रियया साध्यते । तस्मादेवं विद्वान् 'न कर्मसाध्या मुक्तिः ज्ञानादेव तु से'ति विजानन्विशुद्धसत्त्वो ब्रह्मात्मत्वं जिज्ञासमानः सर्वाणि कर्माणि त्यक्त्वा ज्ञानसाधनश्रवणादिनिष्ठः स्यादित्यर्थः ॥ ६ ॥

ननु सर्वेषां कर्मणामात्मकर्तव्यत्वेन प्रतीतेर्न विद्वान्क्रियास्त्यक्तुं शक्नोतीति चेन्नेत्याह—**कर्मस्विति** । कामादियुक्तस्य व्यापारेषु स्वाधीनतावद्विशुद्धसत्त्वस्य बुभुत्सोस्तत्त्यागेऽपि स्वातन्त्र्यमस्तीत्यर्थः । कर्मसु प्रयोजनाभावाच्च परित्यागो मुमुक्षोः सिद्ध्यतीत्याह—**अदेहत्व इति** । देहादिराहित्ये मोक्षलक्षणफले कर्मभिरसाध्ये शास्त्रादिना सिद्धे केनापि प्रकारेण मुमुक्षुर्न कर्माणि पारयतीत्यर्थः ॥ ७ ॥

किं क्रियापरित्यागमात्रादेवाकार्यं विदेहत्वं प्राप्यते नेत्याह—**जात्यादीनिति** ॥ ८ ॥

आत्मा किंलक्षणः स्मर्तव्यः किं वा शास्त्रमित्याशङ्क्य यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते[2] । 'सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धमि'ति मन्त्रद्वयं व्याकरोति—**आत्मैक इति** ॥ ९ ॥

---

१. इदं खपुस्तके नोपलभ्यते । २. ईशावास्ये

**व्रणस्नाय्वोरभावेन स्थूलं देहं निवारयेत् ।**
**शुद्धापापतया लेपं लिङ्गं चाकायमित्युत ॥१०॥**
**वासुदेवो यथाऽश्वत्थे स्वदेहे चाब्रवीत्समम् ।**
**तद्वद्वेत्ति य आत्मानं समं स ब्रह्मवित्तमः ॥११॥**
**यथा ह्यन्यशरीरेषु ममाहन्ता न चेष्यते ।**
**अस्मिंश्चापि तथा देहे धीसाक्षित्वाविशेषतः ॥१२॥**
**"रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।**
**गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा" ॥१३॥**
**यन्मनास्तन्मयोऽन्यत्वे नात्मत्वाप्तौ क्रियाऽऽत्मनि ।**
**आत्मत्वे चानपेक्षत्वात्सापेक्षं हि न तत्स्वयम् ॥१४॥**
**खमिवैकरसा ज्ञप्तिरविभक्ताऽजराऽमला ।**
**चक्षुराद्युपधाना सा विपरीता विभाव्यते ॥१५॥**

---

**व्रणस्नाय्वोरिति च**। सर्वदोषविनिर्मुक्तो निर्विशेषोऽद्वितीयः सन्नात्मा शास्त्राचार्यद्वारा सदाऽनुसन्धातव्यो मुमुक्षुणेत्यर्थः ॥ १० ॥

यथोक्तमात्मानं यो वेत्ति स ब्रह्मविदामुत्तमो भवतीत्याह—**वासुदेव इति**। अश्वत्थे निकृष्टे स्वदेहे चोत्कृष्टे सममात्मानं भगवानुक्तवान् । "अश्वत्थः सर्ववृक्षाणां" "वृष्णीनां वासुदेवोऽस्मी"ति[1] ॥ ११ ॥

तद्युक्तम् तस्योपाधिविशेषे ममाहंकाराभावात्, न तथा मुमुक्षोर्युक्तमुपाधिविशेषे ममाहंकारोपलब्धेरित्याशङ्क्याह—**यथेति**। ममाहमोर्भावो ममाहन्ता सा मां प्रत्यन्यदेहेषु यथा नेष्यते, तथा स्वदेहेऽपि सा नेष्यते। साक्षित्वस्योभयत्र तुल्यत्वादित्यर्थः ॥ १२ ॥

मुमुक्षोः रागद्वेषादिदोषस्यात्मसम्बन्धित्वेन प्रतीतेर्न ममाहङ्कारादिराहित्यमित्याशङ्क्याह—**रूपेति**। नीलपीतादिसंस्कारेण तुल्यो भवत्याधिराश्रयो ययोस्तौ रागद्वेषौ तथा रूपादिवासनाया रागद्वेषयोर्भयस्य दुःखादेश्चान्तःकरणनिष्ठत्वेनानुभवादात्मा शुद्धः सिद्धयतीत्यर्थः ॥ १३ ॥

ननु न सदाऽऽत्मनः शुद्धिर्युक्ता, किन्तु 'यं यं वापि स्मरन् भावमि'ति स्मृतेरशुद्धोऽपि पुरुषो ब्रह्मभावनया ब्रह्म भविष्यतीत्याशङ्क्याह—**यन्मना इति**। यस्मिन्देवादौ मनो यस्येति यन्मनाः। ध्यायी पुमानुक्तः स तन्मयो भवतीत्यन्यत्वे सति ध्यानादिक्रियायास्तत्रार्थवत्त्वसंभवादात्मत्वस्यात्मरूपावस्थानस्य मोक्षस्यावाप्तौ नैव क्रिया स्वात्मन्यर्थवती भवितुमुत्सहते। स्वात्मरूपस्य चतुर्विधक्रियाफलविलक्षणत्वात् । आत्मत्वे सति क्रियापेक्षाभावान्मोहमात्रव्यवहितत्वाच्च न तत्र क्रियापेक्षा युक्ता। यदि च क्रियासापेक्षं कैवल्यमिष्टं न तर्हि तदात्मस्वरूपं सिद्धयेत् क्रियापेक्षस्यानात्मत्वादित्यर्थः ॥ १४ ॥

चिदेकरसत्वाद्विभागादिमलाभावाच्च सदा शुद्धत्वमात्मनः श्रद्धेयमित्याह—**खमिवेति**। एवंविधा चेदेषा ज्ञप्तिस्तर्हि जायते नश्यतीत्यादिप्रतीतिस्तत्र कथमित्याशङ्क्याह—**चक्षुरादीति** ॥१५॥

---

१. भ० गी० ११ ।

दृश्यत्वादहमित्येष नात्मधर्मो घटादिवत् ।
तथाऽन्ये प्रत्यया ज्ञेया दोषाश्चात्माऽमलो ह्यतः ॥१६॥
सर्वप्रत्ययसाक्षित्वादविकारी च सर्वगः ।
विक्रियेत यदि द्रष्टा बुद्ध्यादीवाल्पविद्भवेत् ॥१७॥
न दृष्टिर्लुप्यते द्रष्टुश्चक्षुरादेर्यथैव तत् ।
नहि द्रष्टुरिति ह्युक्तं तस्माद्द्रष्टा सदैकदृक् ॥१८॥
सङ्घातो वाऽस्मि भूतानां करणानां तथैव च ।
व्यस्तं वाऽन्यतमो वाऽस्मि को वाऽस्मीति विचारयेत् ॥१९॥
व्यस्तं नाहं समस्तं वा भूतमिन्द्रियमेव वा ।
ज्ञेयत्वात्करणत्वाच्च ज्ञाताऽन्योऽस्माद्घटादिवत् ॥२०॥
आत्माग्नेरिन्धना बुद्धिरविद्याकामकर्मभिः ।
दीपिता प्रज्वलत्येषा द्वारैः श्रोत्रादिभिः सदा ॥२१॥
दक्षिणाक्षिप्रधानेषु यदा बुद्धिर्विचेष्टते ।
विषयैर्हविषा दीप्ता ह्यात्माग्निः स्थूलभुक्तदा ॥२२॥
हूयन्ते तु हवींषीति रूपादिग्रहणे स्मरन् ।
अरागद्वेष आत्माग्नौ जाग्रद्दोषैर्न लिप्यते ॥२३॥

---

यदमलत्वमात्मनो दर्शितं तत्प्रपञ्चयति—**दृश्यत्वादिति** । प्रत्ययशब्देन परिणामा गृह्यन्ते । दोषा रागादयः ॥ १६ ॥

अहमादेरात्मधर्मत्वाभावेऽपि नात्मनो विशुद्धिः सिद्ध्यति विकारित्वात्परिच्छिन्नत्वाच्चेत्याशङ्क्याह—**सर्वेति** । विक्रियावत्त्वे च सर्वसाक्षित्वानुपपत्तिरित्याह—**विक्रियेति** । ॥ १७ ॥

आत्मनोऽपि बुद्ध्यादिवदल्पप्रकाशकत्वमेव ज्ञानस्य साधनाधीनस्योत्पत्तिविनाशवत्त्वादित्याशङ्क्याह—**नेति** । भुङ्क्ते पश्यतीति भुक्साक्षीत्यर्थः[1] ॥ १८ ॥

यस्मादात्मा शुद्धस्वभावोऽपि सन्नुपाधिसम्बन्धादन्यथा प्रतीयते तस्मादात्मानं ब्रह्मत्वेन प्रतिपत्तुं पदार्थविवेकं कुर्यादित्याह—**संघातो वेति** । ॥ १९ ॥

विचारफलं पदार्थविवेकं कथयति—**व्यस्तमिति** ॥ २० ॥

**व्यस्तमिति** पदार्थविवेकं [2]दर्शयित्वेदानीमवस्थात्रयविवेकद्वारा तत्साक्षिणस्तुरीयस्याधिगमप्रकारं दर्शयति—**आत्माग्नेरिति** । आत्मैवाग्निरिध्यते दीप्यते व्यवहारयोग्यःक्रियते यया सा बुद्धिरविद्यादिभिः प्रेरिता गवाक्षनिस्सृतदीर्घप्रभान्यानेन परिणमते तज्जागरितमित्यर्थः ॥ २१ ॥

तदा चात्मा स्थूलपदार्थदर्शी भवतीत्याह—**दक्षिणेति** ॥ २२ ॥

दक्षिणस्याङ्गस्य श्रेष्ठत्वप्रसिद्धेर्दक्षिणाक्षि द्वारेषु प्रधानमित्यवधेयम् । उक्तज्ञानवतोऽवान्तरफलमाह—**हूयन्त इति** ॥ २३ ॥

---

१. सदैकभुक्—मू० पा० । २. संक्षेपतो दर्शयित्वा—क ।

**मानसे तु गृहे व्यक्तः सोऽविद्याकर्मवासनाम् ।**
**पश्यंस्तैजस आत्मोक्तः स्वयंज्योतिः प्रकाशिता ॥२४॥**
**विषया वासना वापि चोद्यन्ते नैव कर्मभिः ।**
**यदा बुद्धौ तदा ज्ञेयः प्राज्ञ आत्मा ह्यनन्यदृक् ॥२५॥**
**मनोबुद्धीन्द्रियाणां च ह्यवस्थाः कर्मचोदिताः ।**
**चैतन्येनैव भास्यन्ते रविणेव घटादयः ॥२६॥**
**तत्रैवं सति बुद्धीज्ञ आत्मभासाऽवभासयन् ।**
**कर्ता तासां यदर्थास्ता मूढैरेवाभिधीयते ॥२७॥**
**सर्वज्ञोऽप्यत एव स्यात्स्वेन भासाऽवभासयन् ।**
**सर्वं सर्वक्रियाहेतोः सर्वकृत्त्वं तथाऽऽत्मनः ॥२८॥**
**सोपाधिश्चैवमात्मोक्तो निरुपाख्योऽनुपाधिकः ।**
**निष्कलो निर्गुणः शुद्धस्तं मनो वाक्च नाप्नुतः ॥२९॥**
**चेतनोऽचेतनो वापि कर्ताऽकर्ता गतोऽगतः ।**
**बद्धो मुक्तस्तथा चैकोऽनेकः शुद्धोऽन्यथेति वा ॥३०॥**
**अप्राप्यैव निवर्तन्ते वाचो धीभिः सहैव तु ।**
**निर्गुणत्वात् क्रियाभावाद्विशेषाणामभावतः ॥३१॥**

---

जागरितावस्थामुक्त्वा स्वप्नावस्थामुपन्यस्यति—**मानसे त्विति** ॥ २४ ॥

सुषुप्तिं दर्शयति—**विषयेति** । अन्यदात्मव्यतिरिक्तं विषयं संस्कारं वा न पश्यतीत्यनन्यदृगुच्यते ॥ २५ ॥

अवस्थात्रयसाक्षिणं तुरीयं नित्यविज्ञप्तिमात्रमात्मानमुदाहरति—**मन इति** ॥ २६ ॥

यद्यात्मा निर्विकारः साक्षी कथं तर्हि बुद्धीनां कर्तोच्यते तत्राह—**तत्रैवमिति** । तस्मिन्नात्मनि निर्विकारे मोहेनावस्थात्रयेऽध्यस्ते सति यस्यात्मनः सुखदुःखप्रतिभासार्था बुद्धयः स्वीक्रियन्ते स ताश्चैतन्याभासेन प्रकाशयन्निर्विकारोऽपि मूढैः शास्त्राचार्योपदेशरहितैरेव बुद्धीनां कर्तेति व्यपदिश्यत इत्यर्थः ॥ २७ ॥

ज्ञातृत्वव्यपदेशं दर्शयित्वा सर्वज्ञत्वसर्वकर्तृत्वव्यपदेशमपि निर्विकारस्यात्मनो दर्शयति—**सर्वज्ञ इति** ॥ २८ ॥

आत्मनि सर्वज्ञत्वादिव्यपदेशोऽभ्युपगतश्चेत्तथैवात्मा परमार्थतः स्यादित्याशङ्क्याह—**सोपाधिरिति** । निरुपाधिकस्य निरुपाख्यत्वं व्यनक्ति—**तमिति** ॥ २९ ॥

मनो वाक् च नाप्नुतस्तमित्युक्तं व्यक्तीकरोति—**चेतन इति** ॥ ३० ॥

**अप्राप्यैवेति च** । कस्माद्वाचो धियश्चाप्राप्य निवर्तन्त इत्याशङ्क्य परमार्थतः प्रवृत्तिद्वाराभावादित्याह—**निर्गुणत्वेति** । विशेषा गोधनादयः । आत्मनि शब्दप्रवृत्तिहेतूनां षष्ठ्यादीनां बुद्धिप्रवृत्तिहेतूनां रूपादीनां परमार्थतोऽभावादारोपितरूपैरेतैः सर्वोऽपि व्यवहारस्तत्र सिद्ध्यतीत्यर्थः ॥३१॥

**व्यापकं सर्वतो व्योम मूर्तैः सर्वैर्वियोजितम् ।**
**यथा तद्वदिहात्मानं विद्याच्छुद्धं परं पदम् ॥३२॥**

**दृष्टं हित्वा स्मृतिं तस्मिन्सर्वग्रश्च तमस्त्यजेत् ।**
**सर्वदृग्ज्योतिषा युक्तो दिनकृच्छार्वरं यथा ॥३३॥**

**रूपस्मृत्यन्धकारार्थाः प्रत्यया यस्य गोचराः ।**
**स एवात्मा समो द्रष्टा सर्वभूतेषु सर्वगः ॥३४॥**

**आत्मबुद्धिमनश्चक्षुर्विषयालोकसङ्गमात् ।**
**विचित्रो जायते बुद्धेः प्रत्ययोऽज्ञानलक्षणः ॥३५॥**

**विविच्यास्मात्स्वमात्मानं विद्याच्छुद्धं परं पदम् ।**
**द्रष्टारं सर्वभूतस्थं समं सर्वभयातिगम् ॥३६॥**

**समस्तं सर्वगं शान्तं विमलं व्योमवत्स्थितम् ।**
**निष्कलं निष्क्रियं सर्वं नित्यं द्वन्द्वैर्विवर्जितम् ॥३७॥**

---

आत्मा तर्हि किंलक्षणः समारोपितषष्ठ्यादिद्वारेण प्रतिवक्तव्यः स्यादित्याकाङ्क्षायामाह—**व्यापकमिति** । इह वेदान्तसमयेऽवस्थात्रयसाक्षिणमात्मानं सत्यज्ञानादिलक्षणं ब्रह्म जानीयादित्यर्थः ॥ ३२ ॥

एवमात्मानं ज्ञात्वा पुनरवस्थात्रयाभिमानं परित्यजेदित्याह—**दृष्टं हित्वेति** । दृष्टं जागरितं तस्मिन्दृष्टे स्मृतिं स्वप्नं हित्वा सर्वं जागरितादि ग्रस्यते येन तमसा तत्सर्वग्रः तत् तमः सुषुप्तं त्यजेत् । कोऽसावित्यपेक्षायामाह—**सर्वदृगिति** । सर्वसाक्षी प्रत्यगात्मा ज्योतिषा ब्रह्मणा स्वयमेकीभूतः सवितेव शार्वरं तमो यथोक्तं सुषुप्तं तमो वर्जयेदित्यर्थः ॥ ३३ ॥

उक्तमेव त्यागप्रकारं प्रकटयति—**रूपेति** । यच्चक्षुरादिना रूप्यते तज्जागरितं रूपमुच्यते । स्मृतिः स्वप्नः संस्कारजत्वात् । अन्धकारः सुप्तं तमोरूपत्वात् । तेऽर्था येषां प्रत्ययानां ते यस्य वेद्याः स एवात्मा निर्विशेषोऽनवच्छिन्नश्चेति ज्ञात्वा पूर्वोपदिष्टं द्रष्ट्रादि त्यजेदित्यर्थः ॥ ३४ ॥

आत्मा चेदुक्तस्वभावोऽभ्युपगम्यते कुतस्तत्र विचित्रः संसारप्रत्ययो जायते तत्राह—**आत्मेति** । अविद्यापरिकल्पितोपाधीनामात्मनश्च विवेकानुपलब्धेरनर्थात्मको विचित्रः संसारप्रत्ययो भवतीत्यर्थः ॥ ३५ ॥

अज्ञानकल्पितोपाध्यविवेकादात्मनो विचित्रसंसारानर्थः स्यादिति स्थिते मुमुक्षुणा कर्तव्यं दर्शयति—**विविच्येति** । पञ्चम्या बुद्ध्यादिरुच्यते ॥ ३६ ॥

वेद्यमेवात्मरूपं विशिनष्टि—**समस्तमिति** । समस्तशब्दस्य सर्वशब्दस्य च ब्रह्मात्मद्वये विशेषप्रतिपत्त्यर्थत्वादपुनरुक्तता । येऽत्र विधिमुखेन निषेधमुखेन च विशेषा निर्दिश्यन्ते तानशेषानेव साक्षिणि त्वंपदार्थे तत्पदार्थे च ब्रह्मण्यनुसन्धाय तुल्यलक्षणत्वमनयोर्निश्चित्य तत्त्वमसिवाक्यादहं ब्रह्मेति निश्चिनुयादित्यर्थः ॥ ३७ ॥

**सर्वप्रत्ययसाक्षी ज्ञः कथं ज्ञयो मयेत्युत ।**
**विमृश्यैवं विजानीयाज्ज्ञानकर्म न वेति वा ॥३८॥**
**अदृष्टं द्रष्टृविज्ञातं दभ्रमित्यादिशासनात् ।**
**नैव ज्ञेयं मयाऽन्यैर्वा परं ब्रह्म कथंचन ॥३९॥**
**स्वरूपाऽव्यवधानाभ्यां ज्ञानालोकस्वभावतः ।**
**अन्यज्ञानानपेक्षत्वाज्ज्ञातं चैव सदा मया ॥४०॥**
**नान्येन ज्योतिषा कार्यं रवेरात्मप्रकाशने ।**
**स्वबोधान्नान्यबोधेच्छा बोधस्यात्मप्रकाशने ॥४१॥**
**न तस्यैवान्यतोऽपेक्षा स्वरूपं यस्य यद्भवेत् ।**
**प्रकाशान्तरदृश्यो न प्रकाशो ह्यस्ति कश्चन ॥४२॥**
**व्यक्तिः स्यादप्रकाशस्य प्रकाशात्मसमागमात् ।**
**प्रकाशस्त्वर्ककार्यः स्यादिति मिथ्यावचो ह्यतः ॥४३॥**
**यतोऽभूत्वा भवेद्यच्च तस्य तत्कार्यमिष्यते ।**
**स्वरूपत्वादभूत्वा न प्रकाशो जायते रवेः ॥४४॥**

---

ब्रह्मात्मत्वेन ज्ञातव्यमित्युक्ते विषये मुमुक्षुं शिक्षयति—**सर्वप्रत्ययेति** । यो हि सर्वेषां प्रत्ययानां साक्षी प्रत्यगात्मा स कथं वर्तते । स किं घटादिवज्ज्ञेय उत न ज्ञेय इत्येवं विमृश्य ब्रह्म प्रत्यग्भूतमविषयत्वेन ज्ञातं न तु विषयत्वेनेत्येवं विजानीयात् । वाशब्दस्त्वर्थे प्रयुक्तो द्वितीयस्तु वाशब्दः प्रत्यगात्मन्यपि समानमविषयत्वेन ज्ञानमिति सूचयतीत्यर्थः ॥ ३८ ॥

उक्तया रीत्या विमर्शे ब्रह्मात्मनो ज्ञेयत्वपक्षस्तावन्न संभवतीति साधयति—**अदृष्टमिति** । 'यदि मन्यसे सुवेदेति दह्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपमि'ति ज्ञेयस्यानात्मत्वोपदेशाददृष्टमित्यादिश्रुतेश्च ज्ञेयत्वं ब्रह्मात्मनो न युक्तमित्यर्थः ॥ ३९ ॥

सम्प्रत्यविषयत्वेन ब्रह्मात्मनो ज्ञानं 'यस्यामतमि'त्यादिश्रुत्यवष्टम्भेन स्पष्टयति—**स्वरूपेति** । यदन्यदेशादिव्यवहितं जडं च तत्र ज्ञानादिव्यवहारो न स्वरूपे नित्ये चैतन्ये सम्भवति स्वतःस्फुरणादित्यर्थः ॥ ४० ॥

ज्ञानस्वरूपस्य नान्यज्ञानापेक्षेत्येतद् दृष्टान्तेन साधयति—**नान्येनेति** ॥ ४१ ॥

दृष्टान्तस्य दार्ष्टान्तिकस्य च नैरपेक्ष्यं विवृणोति—**न तस्येति** । इतश्च दृष्टान्तस्य दार्ष्टान्तिकस्य च न प्रकाशान्तरापेक्षेत्याह—**प्रकाशान्तरेति** ॥ ४२ ॥

नन्वादित्यस्य घटादिप्रकाशकत्ववदात्मप्रकाशकत्वमपि सम्भवति तथाऽऽत्मा बुद्ध्यादीनां प्रकाशकः स्वरूपमपि प्रकाशयिष्यतीत्याशङ्क्याह—**व्यक्तिः स्यादिति** । यतो दृष्टान्तासिद्धिस्ततो दार्ष्टान्तिकमपि न सिद्ध्यतीत्यर्थः ॥ ४३ ॥

कस्मात् घटादिप्रकाशोऽर्ककार्यो मुख्यादिवृत्त्या न भवतीत्याशङ्क्याह—**यत इति** ॥ ४४ ॥

**घ्राणादीनि तदर्थाश्च पृथिव्यादिगुणाः क्रमात् ।**
**रूपालोकवदिष्टं हि सजातीयार्थमिन्द्रियम् ॥ २ ॥**
**बुद्ध्यर्थान्याहुरेतानि वाक्पाण्यादीनि कर्मणे ।**
**तद्विकल्पार्थमन्तःस्थं मन एकादशं भवेत् ॥ ३ ॥**
**निश्चयार्था भवेद्बुद्धिस्तां सर्वार्थानुभाविनीम् ।**
**ज्ञाताऽऽत्मोक्तः स्वरूपेण ज्योतिषा व्यञ्जयन्सदा ॥ ४ ॥**
**व्यञ्जकस्तु यथाऽऽलोको व्यङ्ग्यस्याकारतां गतः ।**
**व्यतिकीर्णोऽप्यसंकीर्णस्तद्वज्ज्ञः प्रत्ययैः सदा ॥ ५ ॥**
**स्थितो दीपो यथाऽयत्नः प्राप्तं सर्वं प्रकाशयेत् ।**
**शब्दाद्याकारबुद्धीर्ज्ञः प्राप्तास्तद्वत्प्रपश्यति ॥ ६ ॥**

इन्द्रियाण्यात्मेत्यपरो लोकायतः तं प्रत्याह—**घ्राणादीनीति**। घ्राणं पार्थिवं, रूपादिषु[1] गन्धस्यैव **व्यञ्जकत्वात्** हिङ्गुवत्। एवं रसनमप्याप्यं रसादिषु रसस्यैव व्यञ्जकत्वात् आस्योदकवत्। चक्षुस्तैजसं **रूपादिषु** रूपस्यैव व्यञ्जकत्वात् दीपवत्। त्वग्वायवीया स्पर्शादिषु स्पर्शस्यैवाभिव्यञ्जकत्वात्। **व्यजनवायुवत्**। श्रोत्रमाकाशीयं शब्दादिषु शब्दस्यैव व्यञ्जकत्वात् वेणुविवरवत् इति भौतिकत्वानु**मानात्** घटादिवदनात्मत्वमिन्द्रियाणामित्यर्थः। यथा तैजसस्य रूपस्य प्रकाशको दीपादिस्तैजसो **दृष्टस्तथा यदिन्द्रियं** यज्जातीयमर्थं प्रकाशयति तत्तज्जातीयं भवितुमर्हतीत्युक्तमनुमानजातं सूचयति—**रूपालोकवदिति** ॥ २ ॥

इन्द्रियाणां करणत्वादनात्मत्वं कार्यकथनेनैकादशत्वनियमं च कथयति—**बुद्ध्यर्थानीति**। **कर्मणे** वचनादानविहरणोत्सर्गानन्दाख्याय। तेषामिन्द्रियाणां विषयविकल्पार्थं क्रमेण गन्धादिज्ञान**सिद्ध्यर्थमेकादशं** मनो भवेत्।[2] अन्यथा कदलीफलादौ हस्तविन्यस्ते पुनरास्वाद्यमाने युगपदनेकार्थ**सम्प्रयोगादनेकज्ञानप्रसङ्गादित्यर्थः** ॥ ३ ॥

बुद्धिर्नात्मा करणत्वाद्दीपवदिति बौद्धं प्रत्याह—**निश्चयार्थेति**। सा स्वसंवेद्येत्यपि **वक्तुं न** शक्यमित्याह—**तामिति**। रूपालोकयोर्भास्यभासकयोर्भेदो यथा तद्वदात्मा सर्वार्थग्राहिकां बुद्धिं **स्वरूपेण ज्योतिषा व्यञ्जयन्सदा** बुद्धेर्विलक्षणः सिद्ध्यतीत्यर्थः ॥ ४ ॥

यदा बुद्धेरात्मा प्रकाशकोऽभिमतस्तदा तया संसर्गादशुद्धिरापद्येतेत्याशङ्क्याह—**व्यञ्जक इति**। **यथा** दीपादिरालोको व्यङ्ग्यस्य घटादेः समाकारतां गतो व्यतिकीर्णवदुपलक्षितोऽपि वस्तुतोऽसङ्कीर्णः **गृह्यते**। तद्वदात्मा प्रत्ययैः बुद्धिपरिणामैर्बुद्ध्या च सङ्कीर्णवदुपलब्धोऽपि वस्तुतोऽसङ्कीर्णः शुद्धः सिद्ध्यतीत्यर्थः ॥ ५ ॥

बुद्ध्यादेरत्यन्तविलक्षणो निर्व्यापारश्चेदात्मा कथं बुद्ध्यादि भासयेदित्याशङ्क्य दृष्टान्तेनोत्तरमाह—**स्थितो दीप इति** ॥ ६ ॥

१. एवकारः मनसि व्यभिचारवारणाय। ततश्च स्वरूपासिद्धिः घ्राणस्य गन्धत्वगन्धाभावव्यञ्जकत्वेन गन्धेतराव्यञ्जकत्वस्य एवकारार्थस्य तस्मिन्नसंभवात्। अतः रूपादिषु मध्ये इत्युक्तम्। एवमग्रेपि योजनीयम्।

२. अन्यथा दीर्घशष्कुलीभक्षणादौ युगपत् सर्वेन्द्रियजन्यज्ञानानि स्युः इत्यपि वेद्यम्।

**शरीरेन्द्रियसंघात आत्मत्वेन गतां धियम् ।**
**नित्यात्मज्योतिषा दीप्तां विशिंषन्ति सुखादयः ॥ ७ ॥**

**शिरोदुःखादिनाऽऽत्मानं दुःख्यस्मीति हि पश्यति ।**
**द्रष्टाऽन्यो दुःखिनो दृश्याद्द्रष्टृत्वाच्च न दुःख्यसौ ॥ ८ ॥**

**दुःखी स्याद्दुःख्यहंमानाद्दुःखिनो दर्शनान्न वा ।**
**संहतेऽङ्गादिभिर्द्रष्टा दुःखी दुःखस्य नैव सः ॥ ९ ॥**

**चक्षुर्वत्कर्मकर्तृत्वं स्याच्चेन्नानेकमेव तत् ।**
**संहतं च ततो नात्मा द्रष्टृत्वात्कर्मतां व्रजेत् ॥१०॥**

**ज्ञानयत्नाद्यनेकत्वमात्मनोऽपि मतं यदि ।**
**नैकज्ञानगुणत्वात्तु ज्योतिर्वत्तस्य कर्मता ॥११॥**

---

तथापि सुखित्वादिस्मरणादात्मनः शुद्धिरसिद्धेत्याशङ्क्याह—**शरीरेन्द्रियेति** ॥ ७ ॥

शरीरादिसम्बन्धिनीं धियं सुखादयो विशिंषन्ति नात्मानमिति कुतो निश्चय इत्याशङ्क्याह—**शिर इति**। देहावयवगतेन दुःखेनात्मानं दुःख्यस्मीति यस्मादुपलभते तस्माद्देहादिष्वात्मत्वेन गता बुद्धिरेव दुःखिनी। तद्द्रष्टा तु दुःखिनो दृश्याद्विलक्षणो न दुःखी भवितुमुत्सहते। द्रष्टृत्वादेव तस्य दुःखित्वानुपपत्तिरित्यर्थः ॥ ८ ॥

द्रष्टृत्वाच्च न दुःख्यसावित्येतदेव स्पष्टयति—**दुःखीति**। किमयमात्मा दुःखपरिणामवत्यहमित्यभिमानाद् दुःखी स्यात्। किंवा परिणामिनो दुःखिनः साक्षित्वान्न स्वयं दुःखीति विवेक्तव्यम्। तत्राद्ये गौरोऽहमितिवदहमभिमानस्य भ्रान्त्यापि सम्भवान्नास्ति वस्तुतो दुःखितेति मत्वा द्वितीयं प्रत्याह—**संहत इति**। हस्तादिभिर्देहावयवैर्घ्राणादिभिश्चेन्द्रियैः संयुक्ते यद्दुःखं तस्य साक्षी नैव दुःखी भवितुमर्हति। मध्यस्थस्योदासीनस्य लोके कार्यान्वियादर्शनादित्यर्थः ॥ ९ ॥

दुःखिनोऽपि द्रष्टृत्वेऽपि दुःखित्वमात्मनो युक्तमिति शङ्कते—**चक्षुर्वदिति**। यथा चक्षुषो दर्पणस्थतया दृश्यत्वं, तस्यैव बहिरवस्थानेन द्रष्टृत्वं, तथाऽऽत्मनोऽपि दृश्यत्वं द्रष्टृत्वं च स्यादित्यर्थः। गोलकांशस्य दर्पणस्थस्य दृश्यत्वं, शक्तिमत्त्वांशस्य मुखनिविष्टस्य द्रष्टृत्वमिति दृष्टान्तस्योभयथात्वोपपत्तेर्नेदं प्रकृतानुगुणमुदाहरणमित्यत्राह—**नेति**। चक्षुषश्च सावयवत्वादुक्तव्यवस्था युक्तेत्याह—**संहतमिति**। आत्मा तु नानेकात्मको नापि देहादिभिः संहन्यते। ततो द्रष्टृत्वेन समाप्तत्वान्न कर्मतां गन्तुमर्हतीत्याह—**तत इति** ॥ १० ॥

आत्मनोऽपि ज्ञानादिभिरनेकात्मकत्वाद्भास्यभासकत्वं स्यादिति शङ्कते—**ज्ञानेति**। [1]विज्ञानघनश्रुतैरात्मनो ज्ञानैकस्वभावत्वान्नानेकात्मत्वम्। ततो ज्योतिर्वत्तस्य न स्वकर्मतेति दूषयति—**नैकेति**। ॥ ११ ॥

---

१. विज्ञानघन एवैतेभ्यो भूतेभ्यः बृ. २. ५.

ज्योतिषो द्योतकत्वेऽपि यद्वन्नात्मप्रकाशनम् ।
भेदेऽप्येवं समत्वाज्ज्ञ आत्मानं नैव पश्यति ॥१२॥
यद्धर्मा यः पदार्थो न तस्यैवेयात्स कर्मताम् ।
न ह्यात्मानं दहत्यग्निस्तथा नैव प्रकाशयेत् ॥१३॥
एतेनैवात्मनाऽऽत्मानो[1] ग्रहो बुद्धेर्निराकृतः ।
अंशोऽप्येवं समत्वाद्धि निर्भेदत्वान्न युज्यते ॥१४॥
शून्यतापि न युक्तैवं बुद्धेरन्येन दृश्यता ।
युक्ताऽतो घटवत्तस्याः प्राक्सिद्धेश्च विकल्पतः ॥१५॥
अविकल्पं तदस्त्येव यत्पूर्वं स्याद्विकल्पतः ।
विकल्पोत्पत्तिहेतुत्वाद्यद्यस्यैव तु कारणम् ॥१६॥
अज्ञानं कल्पनामूलं संसारस्य नियामकम् ।
हित्वाऽऽत्मानं परं ब्रह्म विद्यान्मुक्तं सदाऽभयम् ॥१७॥

---

दृष्टान्तं व्याचष्टे—**ज्योतिष इति**। द्रव्यबोधांशभेदेऽप्येवं ज्योतिरंशयोरिव समत्वादात्मानमात्मा नैव पश्यतीति दार्ष्टान्तिकमाह—**भेदेऽपीति** ॥ १२ ॥

स्वरूपेणांशद्वारेण वा यद्यप्यात्मानमात्मा नैव पश्यति तथापि स्वगुणस्य ज्ञानस्य कर्मतां यास्यतीत्याशङ्क्याऽऽत्मा न स्वीयप्रकाशगोचरो वस्तुत्वात् वह्निवदित्याह—**यद्धर्मेति** ॥ १३ ॥

उक्तन्यायं बौद्धपक्षेऽप्यतिदिशति—**एतेनैवेति**। बुद्धेरात्मनः स्वरूपस्यात्मनः स्वेन ग्रहो यथोक्तदृष्टान्तेन निराकृतो न सिद्ध्येदित्यर्थः। एकेनांशेन ग्राहकत्वमंशान्तरेण ग्राह्यत्वं बुद्धेरसिद्धमित्याह—**अंशोऽपीति**। अंशोऽपि तस्य निरंशत्वान्न घटत इत्याह—**निर्भेदत्वादिति** ॥ १४ ॥

शून्यवादं निराचष्टे—**शून्यतेति**। यथैकस्या बुद्धेर्ग्राह्यग्राहकता न युक्तेत्युक्तं एवमपरोक्षतया प्रतीयमानायास्तस्याः शून्यताऽपि न युक्ता। तेन घटादेरिवान्येन साक्षिणा ग्राह्यता बुद्धेरुक्ता। ततस्तस्याः साक्षिणि पर्यवसानान्न शून्यताशङ्केत्यर्थः। किञ्च तस्याः बुद्धेर्ग्राह्यग्राहकरूपविकल्पापेक्षायाः प्रागेव सुषुप्तादौ साक्षिणः सिद्धेर्न शून्यता बुद्धेः सिद्ध्येत्। अन्यथा परामर्शायोगादित्याह—**प्रागिति** ॥ १५ ॥

किञ्च यद्यस्यान्वयिकारणं दृष्टं तत्तस्मात्प्रागेव सिद्धमेष्टव्यम्। यथा घटादेरन्वयिकारणं मृदादिस्तस्मात्प्रागेव सिद्धम्। तथा सदनुविद्धस्य भेदजातस्य कारणं सदपि पूर्वसिद्धमस्तीत्याह—**अविकल्पमिति** ॥ १६ ॥

समस्तविकल्परहितं ब्रह्म कथं विकल्पस्य कारणमित्याशङ्क्याज्ञानद्वारा तस्य कारणत्वमाह—**अज्ञानमिति**। तर्हि ब्रह्म किमज्ञानविशिष्टमेव द्रष्टव्यं नेत्याह—**हित्वेति**। अज्ञानं सकार्यं हित्वा तत्साक्षिणमात्मानं तत्त्वमसिवाक्यादहं ब्रह्मास्मीत्युक्तलक्षणं ब्रह्म विद्यादित्यर्थः ॥ १७ ॥

---

१. आत्मान इति प्रयोग आर्षः। आत्मन इत्यर्थः।

**जाग्रत्स्वप्नौ तयोर्बीजं सुषुप्ताख्यं तमोमयम् ।**
**अन्योन्यस्मिन्नसत्त्वाच्च नास्तीत्येतत्त्रयं त्यजेत् ॥१८॥**
**आत्मबुद्धिमनश्चक्षुरालोकार्थादिसङ्करात् ।**
**भ्रान्तिः स्यादात्मकर्मेति क्रियाणां सन्निपाततः ॥१९॥**
**निमीलोन्मीलने स्थाने वायव्ये ते न चक्षुषः ।**
**प्रकाशत्वान्मनस्येवं बुद्धौ न स्तः प्रकाशतः ॥२०॥**
**सङ्कल्पाध्यवसायौ तु मनोबुद्ध्योर्यथा क्रमात् ।**
**नेतरेतरधर्मत्वं सर्वं चात्मनि कल्पितम् ॥२१॥**
**स्थानावच्छेददृष्टिः स्यादिन्द्रियाणां तदात्मताम् ।**
**गता धीस्तां हि पश्यनज्ञो देहमात्र इवेक्ष्यते ॥२२॥**
**क्षणिकं हि तदत्यर्थं धर्ममात्रं निरन्तरम् ।**
**सादृश्याद्दीपवत्तद्धीस्तच्छान्तिः पुरुषार्थता ॥२३॥**

---

संसारनियामकमज्ञानं हित्वा वेद्यो ब्रह्मत्वेनात्मा चेत्तर्हि कः संसारस्तस्य वा कारणमज्ञानं किंलक्षणं ततो वा कथं विवेकः स्यादित्याशङ्क्याह—**जाग्रदिति**। अन्योन्यव्यभिचारित्वाद्दृश्यत्वाच्च रज्जुसर्पवद्वस्तु न भवतीति ज्ञात्वा सर्वमेतत्त्यजेदित्यर्थः ॥ १८ ॥

नन्ववस्थात्रये त्यक्तेऽपि नात्मनो ब्रह्मत्वं कर्तृत्वेन प्रतीतेरित्याशङ्क्याह—**आत्मेति**। **अर्थादी**त्यादिशब्देन देशकालादि गृह्यते। तेषामात्मादीनां संकरात्तादात्म्याध्यासात्क्रियाणामुदयादात्मनोऽस्ति कर्मेति भ्रान्तिः स्यात्तत आत्मनः स्वतो निष्क्रियत्वान्निष्क्रियब्रह्मत्वमविरुद्धमित्यर्थः ॥ १९ ॥

अन्यव्यापारस्यान्यत्रारोपे दृष्टान्तमाह—**निमीलोन्मीलने इति**। ये गोलकस्थाने निमीलोन्मीलने दृष्टे ते वायुकार्ये क्रियात्मकस्य वायोस्तदाश्रयत्वसंभवान्न चक्षुषः तस्य प्रकाशरूपत्वात् क्रियाश्रयत्वानुपपत्तेस्तथापि तत्रारोप्येते। तथा मनसि बुद्धौ च चलनाचलने न स्वतो विद्येते प्रकाशरूपत्वात्तथाप्यारोप्येते। चञ्चलं मनः स्थिरा बुद्धिरिति व्यपदेशदर्शनादित्यर्थः ॥ २० ॥

मनोबुद्ध्योरसाधारणधर्मप्रदर्शनपूर्वकं दार्ष्टान्तिकं निगमयति—**सङ्कल्पेति** ॥ २१ ॥

आत्मनो देहपरिमाणत्वान्नानवच्छिन्नब्रह्मत्वं संगच्छते, न च तत्कल्पितमिति दिगम्बरमतमाशङ्क्याह—**स्थानेति**। इन्द्रियाणामन्यत्र वृत्त्यभावाद्देहावच्छेदो गृह्यते। तेन तेषां देहपरिमाणत्वात्सेन्द्रियदेहे तादात्म्यं गता बुद्धिरिति सापि मध्यमपरिमाणा। तां च पश्यन्नात्मा देहमात्र इव भ्रान्त्या दृश्यते। स्वरूपेण त्वनन्त एव। अन्यथा घटादिवदनित्यत्वादिप्रसङ्गादित्यर्थः ॥ २२ ॥

दिगम्बरमतं निराकुर्वता यदनन्तपरिमाणत्वमात्मनो दर्शितं तदमृष्यमाणः शाक्यः शङ्कते—**क्षणिकं हीति**। तदिति ज्ञानं ज्ञेयं च गृह्यते। द्वित्रिक्षणस्थायित्वं परिहृत्य स्वरसभङ्गुरत्वं दर्शयितुमत्यर्थमित्युक्तम्। धर्ममात्रमिति मात्रचा स्थायि किञ्चिदधिष्ठानं नास्तीत्युच्यते। स्वरसभङ्गुरत्वे पूर्वोत्तरक्षणेष्वसद्बुद्धिः स्यादित्याशङ्क्याव्यवच्छेदेनोत्पद्यमानत्वान्नैवमित्याह—**निरन्तरमिति**। यदि क्षणिकं ज्ञानं ज्ञेयं च कथं तदेवेदमिति प्रत्यभिज्ञानमित्याशङ्क्याह—**सादृश्यादिति**। तस्य स्थायित्वप्रतिभासस्य ग्राह्यग्राहकत्वमूलस्य वाऽज्ञानस्य वा विद्यमानताप्रतिभासस्य निवृत्तिरेव मुक्तिरित्याह—**तच्छान्तिरिति** ॥ २३ ॥

स्वाकारान्यावभासं च येषां रूपादि विद्यते ।
येषां नास्ति ततश्चान्यत्पूर्वासङ्गतिरुच्यते ॥२४॥
बाह्याकारत्वतो ज्ञप्तेः स्मृत्यभावः सदा क्षणात् ।
क्षणिकत्वाच्च संस्कारं नैवाधत्ते क्वचित्तु धीः ॥२५॥
आधारस्याप्यसत्त्वाच्च तुल्यतानिर्निमित्ततः ।
स्थाने वा क्षणिकत्वस्य हानं स्यान्न तदिष्यते ॥२६॥
शान्तेश्चायत्नसिद्धत्वात्साधनोक्तिरनर्थिका ।
एकैकस्मिन्समाप्तत्वाच्छान्तेरन्यानपेक्षता ॥२७॥
अपेक्षा यदि भिन्नेऽपि परसंतान इष्यताम् ।
सर्वार्थे क्षणिके कस्मिंस्तथाप्यन्यानपेक्षता ॥२८॥

---

बौद्धमतं दूषणविभागविज्ञानाय विविच्य कथयति—**स्वाकारेति**। स्वाकारस्यान्येन ज्ञानेनावभासोऽस्यास्तीति तत्तथोच्यते। तदिदं रूपादि येषां बाह्यार्थवादिनां विद्यते येषां च ज्ञानमात्रवादिनां ज्ञानादन्यद्वस्तु नास्ति, चशब्दाद्येषां तदपि विज्ञानं वस्तुतो नास्ति शून्यमेव सर्वमित्येतद्दर्शयति। पूर्वस्य बाह्यार्थवादस्यासंगतिरघटमानतोच्यते प्रथममित्यर्थः ॥ २४ ॥

कथं बाह्यार्थवादस्याघटमानतेत्येतदाह—**बाह्येति**। क्षणिकत्वेन ज्ञेयसम्बन्धायोगाद् ज्ञप्तेरेव विज्ञानस्य बाह्याकारत्वप्रसङ्गात् विज्ञानवादापत्तेर्बाह्यार्थवादासिद्धिरित्यर्थः। किञ्च चैत्रानुभूते मैत्रस्य स्मृत्यदर्शनात्त्वन्मते स्मृत्यभावश्च सदा प्रसज्येत। क्षणिकत्वादनुभवितुः स्मर्तुश्चैकत्वासम्भवादित्याह—**स्मृतीति**। किञ्च, बुद्धेः संस्काराधायकत्वमपि नोपपद्यते। क्षणिकत्वादेव संस्काराधानकालेऽनवस्थानात्। तथा च कथं संस्कारजन्या स्मृतिरित्याह—**क्षणिकत्वाच्चेति** ॥ २५ ॥

किञ्चाधारस्य स्थायिनोऽभावादपि संस्कारसमर्पकत्वं बुद्धेर्न सिद्ध्यतीत्याह—**आधारस्येति**। यदुक्तं सादृश्यप्रयुक्ता स्थायित्वभ्रान्तिरिति तत्राह—**तुल्यतेति**। गुणावयवसामान्याभावाद्द्रष्टुश्चासत्त्वात्तुल्यता न लभ्यते। प्राचोनयोगाननुषङ्गादित्यर्थः। यदि पूर्वापरक्षणयोः[1] सादृश्यद्रष्टा स्थायी कश्चिदास्थीयते तत्राह—**स्थाने वेति**। तच्छब्देन क्षणिकत्वस्य हानं परामृश्यते ॥ २६ ॥

यत्तु क्षणिकत्वादिभावनया स्थायित्वादिभ्रान्तिशान्तिर्मुक्तिरिति, तत्राह—**शान्तेश्चेति**। संततेरवस्तुत्वादेकैकस्मिन्क्षणे च भ्रमाभावस्य स्वारसिकत्वान्न युक्ता शान्तेः साधनापेक्षेत्यर्थः ॥ २७ ॥

किञ्चास्मिन्पक्षे लोकेऽपि साध्यसाधनभावो न सिद्ध्यतीत्याह—**अपेक्षेति**। कार्यकारणक्षणानामत्यन्तविलक्षणत्वाद्भिन्नेऽपि क्षीरादौ दध्याद्यपेक्षा यदि विवक्ष्यते तर्हि परसन्ताने सिकतादौ किमित्यपेक्षा नेष्यते। तथा[2] च सिकताभ्योऽपि दधि जायेतेत्यतिप्रसक्तिरित्यर्थः। प्रसिद्ध्यवष्टम्भेनातिप्रसङ्गपरिहारशङ्कामनुवदति—**सर्वेति**। सर्वजनस्यार्थे कार्यकारणभावलक्षणे विषये दधिक्षीरमित्यादौ प्रसिद्धे यदेकं क्षणिकं क्षीरादि तत्रैवापेक्षा कार्यस्य दध्यादेः सिध्येत्। न यत्र क्वापि, प्रसिद्धिविरोधात्। तथा च कुतोऽतिप्रसक्तिरित्यर्थः। प्रसिद्ध्याश्रयणेऽपि न चान्यापेक्षा युक्तेत्याह—**तथापीति** ॥ २८ ॥

---

१. स्याद्द्रष्टा—मा। २. यथा—क।

तुल्यकालसमुद्भूताावितरेतरयोगिनौ ।
योगाच्च संस्कृतो यस्तु सोऽन्यं हीक्षितुमर्हति ॥२९॥
मृषाध्यासस्तु यत्र स्यात्तन्नाशस्तत्र नो मतः ।
सर्वनाशो भवेद्यस्य मोक्षः कस्य फलं वद ॥३०॥
अस्ति तावत्स्वयं नाम ज्ञानं वात्माऽन्यदेव वा ।
भावाभावज्ञतस्तस्य नाभावस्त्वधिगम्यते ॥३१॥
येनाधिगम्यतेऽभावस्तत्सत्स्यात्तन्न चेद्भवेत् ।
भावाभावानभिज्ञत्वं लोकस्य स्यान्न चेष्यते ॥३२॥
सदसत्सदसच्चेति विकल्पात्प्राग्यदिष्यते ।
तदद्वैतं समत्वात्तु नित्यं चान्यद्विकल्पितात् ॥३३॥
विकल्पोद्भवतोऽसत्त्वं स्वप्नदृश्यवदिष्यताम् ।
द्वैतस्य प्रागसत्त्वाच्च सदसत्त्वादिकल्पनात् ॥३४॥

---

तत्र हेतुमाह—**तुल्यकालेति**। एककालभाविनौ यौ पर्जन्याङ्कुरौ परस्परसम्बद्धौ तयोर्मध्ये पर्जन्यसम्बन्धाद्योऽङ्कुरः संस्कृतोऽतिशयमापन्नोऽस्ति सोऽन्यं पर्जन्यमपेक्षितुमर्हतीति प्रसिद्धम्। **क्षणभङ्गु**रवादे तु भिन्नकालत्वान्मिथः सम्बन्धाभावादुपकार्योपकारकत्वानुपपत्तेर्नापेक्षा युक्तेत्यर्थः ॥ २९ ॥

यथा क्षणभङ्गपक्षे मोक्षानुपपत्तिरुक्ता तथा त्वत्पक्षेऽपि ब्रह्मात्मनोऽनाधेयातिशयत्वात्तुल्या मोक्षानुपपत्तिरित्याशङ्क्याह—**मृषेति**। यत्र ब्रह्मात्मन्यविद्यया कर्तृत्वादिमिथ्याध्यासो भवति तत्राहं ब्रह्मास्मीति ज्ञानादज्ञाननिवृत्तिद्वारा यथोक्ताध्यासनिवृत्तिरेवास्मत्पक्षे मोक्षो विवक्ष्यते। न हेयोपादेयरूपः संगृह्यते। तस्मादस्मत्पक्षे वस्तुतोऽनाधेयातिशयत्वेऽपि नास्ति मोक्षानुपपत्तिरित्यर्थः। शून्यवादे दोषान्तरमाह—**सर्वेति**। अधिष्ठानारोप्ययोरुभयोरपि नाशे फलाभावात्फलासिद्धेर्मोक्षासिद्धिरित्यर्थः ॥ ३० ॥

सर्वनाश एव मोक्षो बलादापतति। परमार्थस्यास्तित्वे मानाभावादित्याशङ्क्याह—**अस्तीति**। सर्ववादिभिः स्वयंप्रकाशं ज्ञानं आत्मा शून्यमित्यादिव्यपदेशैः स्वीकृतं परमार्थं वस्तु तावदेकमस्ति तस्य च लौकिकभावाभावाभिज्ञत्वान्नाभावोऽधिगम्यते केनापीत्यर्थः ॥ ३१ ॥

तस्यापि कस्यचिदभावो भावीत्याशङ्क्य तस्य सत्त्वप्राप्तेस्त्वत्पक्षनिवृतिरस्मत्पक्षप्राप्तिश्चेत्याह—**येनेति**। सतोऽधिगन्तुरनङ्गीकारे लोकस्य विभागज्ञानानुपपत्तेः स्वानुभवविरोधः स्यादित्याह—**न चेदिति** ॥ ३२ ॥

ननु यद्यपि भावाभावविभागज्ञमस्ति वस्तु किञ्चिदिति ज्ञातुं शक्यते तथापि कथमीदृशमिति विशेषतस्तदधिगन्तुं शक्यमित्याशङ्क्याह—**सदिति**। तदद्वैतमित्यत्र सदसदादेर्वैषम्यहेतोरभावादिति हेतुमाह—**समत्वादिति**। तस्यैव विनाशरहितत्वं विशेषान्तरमाह—**नित्यं चेति**। सदसदादेर्विकल्पिताद्विलक्षणाद्वैतत्वे हेत्वन्तरमाह—**अन्यदिति** ॥ ३३ ॥

नानारूपे द्वैते प्रतीयमाने कथमिदमद्वैतमित्याशङ्क्याह—**विकल्पेति**। द्वैतस्यासत्त्वं मिथ्यात्वं विकल्परूपेण भेदेनोद्भवनाज्जायमानत्वात्सदसत्वादिकल्पनात्प्रागसत्त्वाच्च स्वप्नवदेष्टव्यम्। अतो

**वाचारम्भणशास्त्राच्च विकाराणां ह्यभावता ।**
**मृत्योः स मृत्युमित्यादेर्मम मायेति च स्मृतेः ॥३५॥**
**विशुद्धिश्चात एवास्य विकल्पाच्च विलक्षणः ।**
**उपादेयो न हेयोऽत आत्मा नान्यैरकल्पितः ॥३६॥**
**अप्रकाशो यथाऽऽदित्ये नास्ति ज्योतिःस्वभावतः ।**
**नित्यबोधस्वरूपत्वान्नाज्ञानं तद्वदात्मनि ॥३७॥**
**तथाऽविक्रियरूपत्वान्नावस्थान्तरमात्मनः ।**
**अवस्थान्तरवत्त्वे हि नाशोऽस्य स्यान्न संशयः ॥३८॥**
**मोक्षोऽवस्थान्तरं यस्य कृतकः स चलो ह्यतः ।**
**न संयोगो वियोगो वा मोक्षो युक्तः कथंचन ॥३९॥**

---

भिन्नत्वात्कार्यत्वात्कल्पनाकालमात्रभावित्वाच्च सम्मतवन्मिथ्यात्वं द्वैतस्य सिद्धमित्यद्वैतमविरुद्ध-मित्यर्थः ॥ ३४ ॥

न्यायतो द्वैतस्य मिथ्यात्वमुक्त्वा शास्त्रादपि तन्मिथ्यात्वं सिद्धयतीत्याह—**वाचारम्भणेति** । "वाचारम्भणं[1] विकारो नामधेयमि"ति वाक्यात्कार्यानृतत्त्वप्रतिपादकात्, "मृत्योः[2] स मृत्युमाप्नोती"त्यादेर्निन्दाश्रवणाच्च विकारसत्यत्वे तदयोगात् विकाराणामाकाशादीनां यतो मिथ्यात्वमवगम्यते तस्मादद्वितीयत्वमविरुद्धमित्यर्थः । किञ्च "दैवी[3] ह्येषा गुणमयी"त्युपक्रम्य मामेवेश्वरं परापरप्रकृति-वियुक्तमात्मत्वेन प्रपद्यन्ते ये ते मायामेतां तरन्तीति भगवदनुशासनान्मायायाः सकार्याया ब्रह्मात्मज्ञान-निरस्यत्वसिद्धेरपि सिद्धमद्वैतमित्याह—**ममेति** ॥ ३५ ॥

द्वैतस्य मिथ्यात्वादेवाशुद्धिहेतोरभावादात्मनो विशुद्धिरपि सिद्धेत्याह—**विशुद्धिरिति** । विकल्पो द्वैतं, ततो हेयोपादेयरूपाद्विलक्षणत्वादात्मनः स्वेनान्यैर्वा स्वयमुपादेयो हेयो वा [ न ] भवितु-मुत्सहते । तस्मान्निर्विशेषो विशुद्धश्चिद्धातुरात्मेत्याह—**विकल्पाच्चेति** । किञ्चात्मा न केनचिदपि कल्प्यते तदविषयत्वादतोऽपि सर्वविशेषशून्यः शुद्धः सिद्धयतीत्याह—**नान्यैरिति** ॥ ३६ ॥

कस्मादात्मा कल्पितो न भवतीत्याशङ्क्य कल्पनाहेतोरज्ञानस्य वस्तुतस्तत्राभावादित्याह—**अप्रकाश इति** ॥ ३७ ॥

यथाऽऽत्मनो न कल्पितत्वं तथा तस्यावस्थान्तरमपि नास्तीत्याह—**तथेति** । विपक्षे दोषमाह—**अवस्थान्तरेति** ॥ ३८ ॥

मोक्षस्यावस्थान्तरत्वात्कथमस्यावस्थान्तरराहित्यमित्याशङ्क्याह—**मोक्ष इति** । यस्य वादिनो मोक्षोऽवस्थान्तरात्मा क्रियते तस्य पक्षे कृतकत्वादसौ मोक्षश्चलो विनाशी स्यात्तेन न स मोक्षो भवेदित्यर्थः । मा भूदवस्थान्तरं मोक्षः । ब्रह्मणा संयोगो वा प्रकृतेर्वियोगो वा स्यादित्याशङ्क्याह—**नेत्यादिना** ॥ ३९ ॥

---

१. छा ६-२. २. बृ. ४. ४. ३. गी. ७.

संयोगस्याप्यनित्यत्वाद्वियोगस्य तथैव च ।
गमनागमने चैव स्वरूपं तु न हीयते ॥४०॥
स्वरूपस्यानिमित्तत्वात्सनिमित्ता हि चापरे ।
अनुपात्तं स्वरूपं हि स्वेनात्यक्तं तथैव च ॥४१॥
स्वरूपत्वान्न सर्वस्य त्यक्तुं शक्यो ह्यनन्यतः ।
ग्रहीतुं वा ततो नित्योऽविषयत्वापृथक्त्वतः ॥४२॥
आत्मार्थत्वाच्च सर्वस्य नित्य आत्मैव केवलः ।
त्यजेत्तस्मात्क्रियाः सर्वाः साधनैः सह मोक्षवित् ॥४३॥
आत्मलाभः परो लाभ इति शास्त्रोपपत्तयः ।
अलाभोऽन्यात्मलाभस्तु त्यजेत्तस्मादनात्मताम् ॥४४॥
गुणानां समभावस्य भ्रंशो न ह्युपपद्यते ।
अविद्यादेः प्रसुप्तत्वान्न चान्यो हेतुरुच्यते ॥४५॥

---

तत्र हेतुमाह—**संयोगस्येति** । ननु न संयोगादिलक्षणो मोक्षः किन्तु संसारिणः संसारदेशात्परमात्मदेशगमनं वा परमात्मनः साधकोपकाराय तन्निकटदेशागमनं वा मोक्षः स्यादित्याशङ्क्य तयोर्निरवयवत्वाद्विक्रियावत्त्वाभावान्नैवमित्याह—**गमनेति** । स्वपक्षे मोक्षस्य नित्यत्वमाह—**स्वरूपं त्विति** ॥ ४० ॥

तस्य ह्यन्यभावे कारणनिरपेक्षत्वेनाकार्यत्वं हेतुमाह—**स्वरूपस्येति** । अपरे पुनरवस्थान्तरादयः सनिमित्तत्वात्कार्यत्वेनानित्या भवन्तीत्याह—**सनिमित्ता हीति** । स्वरूपस्यानिमित्तत्वं साधयति—**अनुपात्तमिति** । यतः स्वरूपं स्वेनान्येन चोपात्तं न, स्वरूपत्वेन नित्यत्वात् । तथैव स्वेनान्येन वा न त्यक्तं स्वरूपत्वादेव त्यक्तुमयोग्यत्वात् । तस्मादनिमित्तत्वान्नित्यमेव स्वरूपमित्यर्थः ॥ ४१ ॥

आत्मा केनचिदपि हातुमुपादातुं वा शक्यो न भवतीत्युक्तमुपपादयति—**स्वरूपत्वादिति** । सर्पादि रज्जुवदाकाशादेः सर्वस्यात्मभूतत्वादात्मा तेन त्यक्तुं शक्यो नेत्यत्र हेतुमाह—**अनन्यत इति** । परमार्थतोऽन्यस्याभावात्तेनात्मनो हेयत्वाभाववदुपादेयत्वमपि नास्तीत्याह—**ग्रहीतुं वेति** । हेयत्वाहेयत्वयोरभावे हिशब्दसूचितं फलितमाह–**तत इति** । आत्मनो हानादानयोरयोगे हेतुद्वयमाह—**अविषयत्वेति** ॥४२॥

आत्मनो नित्यत्वे हेत्वन्तरमाह—**आत्मार्थत्वाच्चेति** । यस्मादात्मा नित्योऽन्यत्सर्वमनित्यमात्मार्थं आत्मावस्थानं च मोक्षस्तस्मान्मुमुक्षुणा ससाधनं कर्म त्याज्यमित्याह—**त्यजेदिति** ॥ ४३ ॥

अतश्च मोक्षवित्क्रियास्त्यजेदित्याह—**आत्मलाभ इति** । "आत्मलाभान्न परं विद्यत" इति शास्त्रम् । सर्वप्रवृत्तीनामात्मार्थत्वादित्याद्युपपत्तयः । स्वरूपस्यानिमित्तत्वान्नास्यालाभः सम्भवतीत्याशङ्क्याह—**अलाभ इति** । स्वाज्ञानपरिकल्पिताहंकाराद्यात्मत्वभ्रमोऽस्यालाभो नाम । तस्माद्ब्रह्मात्मज्ञानेन तन्मूलाज्ञाननिवर्त्तनेनाहंकाराद्यात्मभ्रमं परित्यजेदित्यर्थः ॥ ४४ ॥

सांख्यास्तु त्रिगुणमचेतनं प्रधानं पुरुषस्य भोगापवर्गार्थं महदादिरूपेण परिणमते । तदविवेकादस्य संसारो, मोक्षस्तु तद्विवेकान्न ब्रह्मात्मज्ञानादिति मन्यन्ते । तत्र प्रथमं परिणामासम्भवमाह—

**इतरेतरहेतुत्वे प्रवृत्तिः स्यात्सदा न वा**
**नियमो न प्रवृत्तीनां गुणेष्वात्मनि वा भवेत् ॥४६॥**
**विशेषो मुक्तबद्धानां तादर्थ्ये न च युज्यते ।**
**अर्थार्थिनोस्त्वसम्बन्धो नार्थी ज्ञो नेतरोऽपि वा ॥४७॥**
**प्रधानस्य च पारार्थ्यं पुरुषस्याविकारतः ।**
**न युक्तं सांख्यशास्त्रेऽपि विकारेऽपि न युज्यते ॥४८॥**
**सम्बन्धानुपपत्तेश्च प्रकृतेः पुरुषस्य च ।**
**मिथोऽयुक्तं तदर्थत्वं प्रधानस्याचितित्वतः ॥४९॥**
**क्रियोत्पत्तौ विनाशित्वं ज्ञानमात्रे च पूर्ववत् ।**
**निर्निमित्ते त्वनिर्मोक्षः प्रधानस्य प्रसज्यते ॥५०॥**

---

**गुणानामिति** । सत्त्वरजस्तमसां गुणानां साम्यं हि प्रधानम् । तस्य समभावस्य प्राक्कालीनस्य **भ्रंशो नाम च्युतिः** । पूर्वावस्थात्यागेनावस्थान्तरापत्तिस्तथाविधः परिणामो नैव घटते । तस्यामवस्थायाम**विद्यादेर्धर्मादेश्च** लीनत्वादीश्वरस्य चाऽनभ्युपगमादभ्युपगमेऽपि तस्य पुरुषत्वेनोदासीनत्वादन्यस्य **सर्वस्य प्रधानकार्यत्वादित्यर्थः** ॥ ४५ ॥

सत्त्वादीनां गुणानामन्योन्यप्रवृत्तिनिमित्तत्वमाशङ्क्याह—**इतरेतरेति** । यदि गुणानामन्योन्यप्रवृत्तिहेतुत्वं तदा प्रवृत्तिर्महदादेरुत्पादः सदा स्यात्सर्वदा हेतोः सत्त्वात् । न चेदेवं कदाचिदपि **प्रवृत्तिर्न स्यात्** । हेतोरप्रयोजकत्वादित्यर्थः । क्रमेणोत्पत्तिस्थितिसंहाराणां प्रसिद्धत्वान्न यौगपद्यमित्याशङ्क्याह—**नियम इति** । यस्मादुत्पत्त्यादीनां प्रवृत्तीनां नियामको गुणाश्रयो वाऽऽत्माश्रयो वा न कश्चिदुपपद्यते तस्मान्न तासां नियमः सम्भवेदित्यर्थः ॥ ४६ ॥

कथञ्चित्प्रधानप्रवृत्त्यभ्युपगमेऽपि दोषो दुर्निवारः स्यादित्याह—**विशेष इति** । प्रधानस्य **पुरुषार्थत्वे** सति सर्वसाधारण्यात् बद्धान्मुक्तांश्च प्रति विशेषो न युज्यते । तेन सर्वान्प्रति प्रवर्तते न वा **कमपि** प्रतीत्यव्यवस्थेत्यर्थः । किञ्च शेषशेषिणोः सम्बन्धो वक्तव्यः । स च नासङ्गत्वात्पुरुषस्य । **नार्थी ज्ञो** निर्विशेषत्वात् । नेतरोऽपि प्रधानाख्यो जडत्वादिति न तयोः सङ्गतिरित्याह—**अर्थेति** ॥४७॥

प्रधानस्य पारार्थ्यासम्भवे हेत्वन्तरमाह—**प्रधानस्य चेति** । विकारेऽपि पुरुषस्यानित्यत्वप्रसङ्गान्न तादर्थ्यं प्रधानस्य युक्तमित्याह—**विकारेऽपीति** ॥ ४८ ॥

प्रधानपुरुषयोः सम्बन्धाभावमुक्तं प्रपञ्चयति—**सम्बन्धेति** । न हि पुरुषस्यासङ्गस्य निर्विकार**स्य प्रकृत्या सङ्गतिः सङ्गच्छते** । नापि प्रकृतेर्जडत्वाच्चिदेकतानेन पुरुषेणोदासीनस्वभावेन सम्बन्धः **सिद्ध्यति** । तथा च तयोर्मिथः सम्बन्धाभावान्नार्थार्थित्वोपपत्तिरित्यर्थः ॥ ४९ ॥

निर्विकारत्वं पुरुषस्योक्तं व्यनक्ति—**क्रियोत्पत्ताविति** । यदि पुरुषे काचित्क्रियोत्पद्येत तदा **तस्य** सक्रियत्वाद्विनाशित्वं क्षीरादिवदापद्येत । नित्यश्च पुरुषोऽभ्युपगतः । तेन तस्य निर्विकारत्वमित्यर्थः । ननु देहादिवत्पुरुषस्यापरा क्रिया न स्वीक्रियते किन्तु ज्ञानलक्षणैव क्रियाऽभ्युपगम्यते । तत्राह—**ज्ञानेति** । यदि जन्यज्ञानत्वं पुरुषस्येष्टं तदा पूर्ववद्विनाशित्वम् । अजन्यज्ञानत्वे च न तादर्थ्यं **प्रकृतेः** सिद्ध्येदित्यर्थः ।यदि पुरुषशेषत्वं विनापि प्रधानप्रवृत्तिरिष्येत तदा निर्निमित्ते प्रधानव्यापारे **सत्यनिर्मोक्षः** प्रसज्यते । सदा व्यापारप्रसङ्गादित्याह—**निर्निमित्त इति** ॥ ५० ॥

**न प्रकाश्यं यथोष्णत्वं ज्ञानेनैवं सुखादयः ।**
**एकनीडत्वतोऽग्राह्याः स्युः कणादादिवर्त्मनाम् ॥५१॥**
**युगपत्समवेतत्वं सुखविज्ञानयोरपि ।**
**मनोयोगैकहेतुत्वादग्राह्यत्वं सुखस्य च ॥५२॥**
**तथाऽन्येषां च भिन्नत्वाद्युगपज्जन्म नेष्यते ।**
**गुणानां समवेतत्वं ज्ञानं चेन्न विशेषणात् ॥५३॥**
**ज्ञानेनैव विशेषत्वाज्ज्ञानाप्यत्वं स्मृतेस्तथा ।**
**सुखं ज्ञातं मयेत्येवं तवाज्ञानात्मकत्वतः ॥५४॥**
**सुखादेर्नात्मधर्मत्वमात्मनस्तेऽविकारतः ।**
**भेदादन्यस्य कस्मान्न मनसो वाऽविशेषतः ॥५५॥**

---

साङ्ख्यपक्षे बन्धमोक्षाभावेऽपि वैशेषिकादिपक्षे तद्व्यवस्थोपपत्तिरित्याशङ्क्याह—**नेति**। यथोष्णत्वमग्निनिष्ठमग्निष्ठेन प्रकाशेन न प्रकाश्यमेकाश्रयत्वाद्ग्राह्यग्राहकत्वायोगात्। तथाऽऽत्मगताः सुखदुःखादयो न तद्गतेन ज्ञानेन ग्राह्या भवितुमर्हन्ति एकाश्रयत्वादेव ग्राह्यग्राहकत्वस्य तेषु दुर्ग्रहत्वात्। तस्मात्काणादादिमतानुसारिणां मतेऽपि कुतो बन्धमोक्षव्यवस्था सिद्ध्यतीत्यर्थः ॥५१॥

एकाश्रयत्वाज्ज्ञानसुखादीनां भास्यभासकत्वानुपपत्तिरित्युक्त्वा युगपत्तेषामसम्भवादपि भास्यभासकत्वानुपपत्तिरित्याह—**युगपदिति**। मनोयोगस्यैकं कार्यं प्रति हेतुत्वादनेकगुणोत्पत्तिहेतुत्वानभ्युपगमात्पूर्वसंयोगनाशे तत्कार्यस्य नष्टत्वाद्युगपत्समवेतत्वं न घटते। नापि समवाये प्रमाणमस्ति। ततो न ज्ञानेन सुखादेर्ग्राह्यत्वम्। न चात्ममनसोर्निरवयवत्वादात्मनोऽस्ति संयोगः संयोगविभागवत्त्वे घटादिवद्विकारित्वमनित्यत्वं च दुर्वारमापद्येतेत्यर्थः ॥ ५२ ॥

यथा ज्ञानसुखयोर्युगपज्जन्माभावाद् ग्राह्यग्राहकत्वानुपपत्तिरित्युक्तं तथेच्छादीनामपि विलक्षणत्वादेकस्मिन्काले जन्म नेष्यते। एकस्यात्ममनः संयोगस्यानेककार्योत्पत्तिहेतुत्वानुपपत्तेरुक्तत्वादतो न तेषां ग्राह्यग्राहकत्वसिद्धिरित्यतिदिशति—**तथेति**। ज्ञानेन दुःखादीनां भास्यत्वं मा भूदात्मसमवेतत्वमेव तेषां ज्ञानं नामेत्याशङ्क्य ज्ञानेन तेषां विशेषितत्वदर्शनान्नैवमित्याह—**गुणानामिति** ॥ ५३ ॥

तदेव विशदयति—**ज्ञानेनैवेति**। ज्ञानसंस्कारजनितस्मृतिविषयत्वादपि ज्ञानव्याप्यत्वं सुखादेर्वक्तव्यमित्याह—**स्मृतेरिति**। किञ्च तव मते ज्ञानादेरस्वयंप्रकाशत्वादात्मसमवेतत्वमात्रेण न तत्सिद्धिः सिद्ध्येत्याह—**तवेति** ॥ ५४ ॥

ज्ञानसुखादीनामात्मगुणत्वाभ्युपगमेन भास्यभासकत्वानुपपत्तिरुक्ता न च तेषामात्मगुणत्वमात्मनो निर्विशेषत्वादित्याह—**सुखादेरिति**। सर्वगतत्वेनाविकारत्वादविकारस्य च गुणवत्त्वे सम्प्रतिपन्नदृष्टान्ताभावान्नात्मनो गुणवत्त्वमित्यर्थः। किञ्च गुणगुणिनोर्भवता भेदाङ्गीकारादात्मान्तरस्य मनसो वा ते सुखादयः कुतो न स्युर्विशेषाभावात्। अदृष्टादेरप्यात्मीयत्वासिद्धेरनियामकत्वादित्याह—**भेदादिति** ॥ ५५ ॥

स्यान्मालाऽपरिहार्या तु ज्ञानं चेज्ज्ञेयतां व्रजेत् ।
युगपद्वापि चोत्पत्तिरभ्युपेताऽत्र इष्यते ॥५६॥
अनवस्थान्तरत्वाच्च बन्धो नात्मनि विद्यते ।
नाशुद्धिश्चाप्यसङ्गत्वादसङ्गो हीति च श्रुतेः ॥५७॥
सूक्ष्मैकागोचरेभ्यश्च न लिप्यत इति श्रुतेः ।
एवं तर्हि न मोक्षोऽस्ति बन्धाभावात्कथंचन ॥५८॥
शास्त्रानर्थक्यमेव स्यान्न बुद्धेर्भ्रान्तिरिष्यते ।
बन्धो मोक्षश्च तन्नाशः स यथोक्तो न चान्यथा ॥५९॥
बोधात्मज्योतिषा दीप्ता बोधमात्मनि मन्यते ।
बुद्धिर्नान्योऽस्ति बोद्धेति सेयं भ्रान्तिर्हि धीगता ॥६०॥
बोधस्यात्मस्वरूपत्वान्नित्यं तत्रोपचर्यते ।
अविवेकोऽप्यनाद्योऽयं संसारो नान्य इष्यते ॥६१॥

---

किञ्च ज्ञानं ज्ञानान्तरवेद्यं परैरिष्यते तदयुक्तमित्याह—**स्यादिति**। अथैकस्मादेव संयोगाद् घटज्ञानं तज्ज्ञानं चेत्यन्तो मालायाः स्यादिति मन्यसे तर्हि मनः संयुक्तात्मसमवायलक्षणसामग्र्यास्तुल्यत्वात्तत्ज्ज्ञानविषयं ज्ञानान्तरं तदैव स्याद् घटादिज्ञानान्तराणि च तदैव स्युस्तत्सामग्र्या अपि सम्भवादित्याह—**युगपदिति** ॥ ५६ ॥

इतश्च वैशेषिकादिकल्पना न युक्तेत्याह—**अनवस्थेति**। अनवस्थान्तरत्वात् कूटस्थत्वेन आत्मनोऽवस्थान्तररहितत्वादिति यावत्। आत्मनि परमार्थतो बन्धाभाववत्परमार्थतो मोक्षोऽपि नास्तीति वक्तुं चशब्दः ॥ ५७ ॥

इतश्च पारमार्थिकमात्मनि बन्धनादिकं न सिद्ध्यतीत्याह—**सूक्ष्मैकेति**। तवापि तर्हि बन्धमोक्षव्यवस्था नैव सुस्थेति साम्यमाशङ्कते—**एवमिति** ॥ ५८ ॥

बन्धमोक्षाभावे का क्षतिरित्याशङ्क्य स एवाह—**शास्त्रेति**। मोहपरिकल्पितभ्रान्तिनिवर्त्तनेन शास्त्रसाफल्यं दर्शयन्नुत्तरमाह—**नेत्यादिना**। अज्ञानं कल्पनामूलमित्यादिना यथा पूर्वत्रात्माज्ञाननिबन्धनो बन्धः स्वज्ञानप्रयुक्तो मोक्ष इत्युक्तम् तथैवासौ बन्धो मोक्षश्चाभ्युपगन्तव्यो न पारमार्थिको बन्धो मोक्षो वा सम्भवतीत्याह—**स यथेति** ॥ ५९ ॥

अज्ञानमूलबुद्धिधर्माध्यासलक्षणो बन्धः चिदात्मनीत्युक्तमुपपादयति—**बोधेति**। चिदात्माभासाज्ञानकञ्चुकः सन्नज्ञानकार्यभूतां साभासां बुद्धिमविवेकादात्मत्वेन गतः संसरतीत्यर्थः ॥ ६० ॥

बुद्धौ बोधस्य प्रतीयमानत्वे स्वाभाविकत्वं किन्न स्यादित्याशङ्क्याह—**बोधस्येति**। आत्मनः स्वरूपस्यैव बोधस्याविवेकाद्बुद्धावध्यासश्चेदयमविवेकः सादिरनादिर्वेति वीक्षायामाह—**अविवेकोऽपीऽति**। तथा ब्रह्मात्मज्ञानेन तस्यैव निवृत्तिर्न संसारस्येत्याशङ्क्याह—**संसार इति**। स चायमविवेकः प्रवाहरूपेणानादिस्तेन संसारस्यापि प्रवाहरूपेणानादित्वम्। न चाविवेकादन्यः संसारस्तेन विवेकादविवेकनिवृत्तिर्वाक्यार्थज्ञानादज्ञाननिवृत्त्या संसारनिवृत्तिरित्यर्थः ॥ ६१ ॥

**मोक्षस्तन्नाश एव स्यान्नान्यथाऽनुपपत्तितः ।**
**येषां वस्त्वन्तरापत्तिर्मोक्षो नाशस्तु तैर्मतः ॥६२॥**
**अवस्थान्तरमप्येवमविकारान्न युज्यते ।**
**विकारेऽवयवित्वं स्यात्ततो नाशो घटादिवत् ॥६३॥**
**तस्माद्भ्रान्तिरतोऽन्या हि बन्धमोक्षादिकल्पनाः ।**
**साङ्ख्यकाणादबौद्धानां मीमांसाह[र्हे]तकल्पनाः ॥६४॥**
**शास्त्रयुक्तिविहीनत्वान्नादर्तव्याः कदाचन ।**
**शक्यन्ते शतशो वक्तुं दोषास्तासां सहस्रशः ॥६५॥**
**अपि निन्दोपपत्तेश्च यान्यतोऽन्यानि चेत्यतः ।**
**त्यक्त्वाऽतो ह्यन्यशास्त्रोक्तीर्मतिं कुर्याद्दृढां बुधः ॥६६॥**
**श्रद्धाभक्ती पुरस्कृत्य हित्वा सर्वमनार्जवम् ।**
**वेदान्तस्यैव तत्त्वार्थे व्यासस्याभिमते तथा ।६७॥**
**इति प्रणुन्ना द्वयवादकल्पना निरात्मवादाश्च तथा हि युक्तितः ।**
**व्यपेतशङ्काः परवादतः स्थिरा मुमुक्षवो ज्ञानपथे स्युरित्युत ॥६८॥**

---

बन्धस्याज्ञानात्मकत्वे फलितमाह—**मोक्ष इति**। ज्ञानादज्ञाननिवृत्त्या तत्कार्यस्य बन्धस्य ध्वस्तिरेव मुक्तिर्नान्यो मोक्षो युज्यते। अन्यस्य मोक्षस्यानुपपत्तेरुक्तत्वादित्यर्थः। येषां पुनर्वादिनां स्वरूपादन्यवस्तुप्राप्तिर्मोक्षोऽभ्युपगम्यते तैर्नाश एव मोक्षो विवक्षितः। स्वरूपस्यान्यभावेऽवस्थानायोगान्न स्वरूपनाशो युज्यते फलिनोऽभावादित्याह—**येषामिति** ॥ ६२ ॥

मा भूद्वस्त्वन्तरापत्तिर्मोक्षोऽवस्थान्तरापत्तिः स्यादित्याशङ्क्याह—**अवस्थान्तरमिति**। आत्मनो विकाराभावस्यासिद्धिमाशङ्क्योक्तम्—**विकार इति** ॥ ६३ ॥

वेदान्तसिद्धान्तादन्या बन्धस्य मोक्षस्य तदुभयसाधनस्यात्मस्वरूपस्य च कल्पनाः श्रुतिन्यायानुभवविरुद्धत्वाद्विभ्रमत्वाच्च प्रामाणिकैरादर्त्तव्या न भवन्तीत्याह—**तस्मादिति**। केषां पुनरेताः कल्पना नादर्त्तव्याः स्युरित्याशङ्क्याह—**साङ्ख्येति**। एतेषां कल्पनाः सर्वा भ्रान्तिरिति पूर्वेण सम्बन्धः ॥६४॥

तासां भ्रान्तिप्रदत्वादेव प्रमाणयुक्तिविरुद्धानामनादर्त्तव्यत्वं फलितमाह—**शास्त्रेति**। तासु शास्त्रयुक्तिविरोधमेव स्फोरयति—**शक्यन्त इति** ॥ ६५ ॥

इतश्च साङ्ख्यादिकल्पना नादर्त्तव्या इत्याह—**अपीति**। यान्यतोऽन्यानि शास्त्राणि पृथिव्यां विविधानि वै। शङ्कनीयानि विद्वद्भिर्धर्मशुद्धिमभीप्सुभिः। या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ इत्यादिनिन्दावचनाच्च यथोक्तकल्पना नादर्त्तव्या इत्यर्थः। यस्मादेवं वेदबाह्याः कल्पना निन्दितास्तस्माद्वेदान्तशास्त्रादन्यशास्त्रोक्तीस्त्यक्त्वा दृढां बुद्धिं विवेकाय मुमुक्षुः सततं कुर्यादित्याह—**त्यक्त्वेति** ॥ ६६ ॥

कथं मतिं कुर्यात्कुत्र चेत्यपेक्षायामाह—**श्रद्धेति** ॥ ६७ ॥

उक्तं परपक्षनिराकरणं सप्रयोजनं संक्षिप्य कथयति—**इति प्रणुन्ना इति**। प्रणुन्ना निराकृताः।

स्वसाक्षिकं ज्ञानमतीव निर्मलं विकल्पनाभ्यो विपरीतमद्वयम् ।
अवाप्य सम्यग्यदि निश्चितो भवेत् निरन्वयो निर्वृतिमेति शाश्वतीम् ।।६९।।
इदं रहस्यं परमं परायणं व्यपेतदोषैरभिमानवर्जितैः ।
समीक्ष्य कार्या मतिरार्जवे सदा न तत्त्वदृक्स्वान्यमतिर्हि कश्चन ।।७०।।
अनेकजन्मान्तरसंचितैर्नरो विमुच्यतेऽज्ञाननिमित्तपातकैः ।
इदं विदित्वा परमं हि पावनं न लिप्यते व्योम इवेह कर्मभिः ।।७१।।
प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्विताायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे ।।७२।।
परस्य देहे न यथाभिमानिता परस्य तद्वत्परमार्थमीक्ष्य च ।
इदं हि विज्ञानमतीव निर्मलं संप्राप्य मुक्तोऽथ भवेच्च सर्वतः ।।७३।।
नहीह लाभोऽभ्यधिकोऽस्ति कश्चन स्वरूपलाभात् स इतो हि नान्यतः ।
न देयमन्द्रादपि राज्यतोऽधिकं स्वरूपलाभं त्वपरीक्ष्य यत्नतः ।।७४।।

---

परवादेभ्यो व्यपेतशङ्कास्तत्प्रामाणिकत्वशङ्कावर्जिताः अतएव स्थिरा निश्चलाः ज्ञानपथे मुमुक्षुवः स्युरिति यतोऽतः प्रयोजनात्प्रणुन्ना इति सम्बन्धः ।। ६८ ।।

ब्रह्मात्मज्ञानस्यैव परमपुरुषार्थसाधनत्वमिति तदीयस्वरूपानुवादपूर्वकं दर्शयन्मुमुक्षूणां तन्निष्ठत्वमावश्यकमिति दर्शयति—**स्वसाक्षिकमिति** । निरन्वयो निरस्ताज्ञानतत्कार्यसम्बन्धः ।। ६९ ।।

इदानीमुक्तज्ञानाधिकारिणं संक्षिप्योपन्यस्यति—**इदमिति** ।। ७० ।।

[1]एवमतियत्नलभ्येन तज्ज्ञानेन किं फलं प्राप्यते तदाह—**अनेकेति** ।। ७१ ।।

यथोक्तज्ञानमाचार्येण कस्मै दातव्यमित्यपेक्षायामाह—**प्रशान्तेति** । सदेति दीर्घकालत्वं सततमिति नैरन्तर्यमुच्यते । यथोक्तार्थकारिणे तथैवानुष्ठायिने ।। ७२ ।।

यथोक्तोऽधिकारी गुरुणा श्राविततत्त्वमस्यादिवाक्यः सन्कथं ब्रह्मात्मानमवगच्छति । किं वा फलं प्राप्नोतीत्यपेक्षायामुक्तमेव संक्षिप्याह—**परस्येति** । न हि देवदत्तस्यान्यदीये देहे ममाहंभावोऽभिमानो भवति । तथा परमार्थमहं ब्रह्मेति विज्ञाय स्वदेहेऽप्यभिमानरहितः सर्वानर्थरहितो निर्वृणोतीत्यर्थः ।। ७३ ।।

किमिति यत्नेन शिष्यपरीक्षणं क्रियते यस्मै कस्मै चिदुपस्थिताय दयालुना गुरुणा दातव्येत्याशङ्क्याह—**न हीति** । स्वरूपं ब्रह्मात्म लभ्यते येन तद्ब्रह्मात्मज्ञानं स्वरूपलाभं । तदेवेह शास्त्रोक्तसाधनस्य मुमुक्षोः श्रावितत्त्वमस्यादिवाक्यस्य पदार्थविवेकवतो निर्विचिकित्समहं ब्रह्मेति साक्षात्काररूपं ज्ञानं वाक्यादुत्पन्नं मोक्षकारणमिति सिद्धम् ।। ७४ ।।

।। पार्थिवप्रकरणं विवृत्तं षोडशम् ।।

---

१. एवमपि यत्नलभ्येन क. ख.

# सम्यङ्मतिप्रकरणम् ॥ १७ ॥

आत्मा ज्ञेयः परो ह्यात्मा यस्मादन्यन्न विद्यते ।
सर्वज्ञः सर्वदृक् शुद्धस्तस्मै ज्ञेयात्मने नमः ॥ १ ॥
पदवाक्यप्रमाणज्ञैर्दीपभूतैः प्रकाशितम् ।
ब्रह्म वेदरहस्यं यैस्तान्नित्यं प्रणतोऽस्म्यहम् ॥ २ ॥
यद्वाक्सूर्यांशुसंपातप्रणष्टध्वान्तकल्मषः ।
प्रणम्य तान् गुरून् वक्ष्ये ब्रह्मविद्याविनिश्चयम् ॥ ३ ॥
आत्मलाभात्परो नान्यो लाभः कश्चन विद्यते ।
यदर्था वेदवादाश्च स्मार्ताश्चापि तु याः क्रियाः ॥ ४ ॥
आत्मार्थोऽपि हि यो लाभः सुखायेष्टो विपर्ययः ।
आत्मलाभः परः प्रोक्तो नित्यत्वाद्ब्रह्मवेदिभिः ॥ ५ ॥

---

सम्यङ्मतिप्रकरणम् ॥ १७ ॥

परपक्षप्रतिक्षेपमुखेनोक्तं ज्ञानं मोक्षसाधनं स्वपक्षसाधनेन व्यक्तीकर्तुं प्रकरणान्तरमारभमाणो देवताभक्तेर्ज्ञानप्राप्त्यावन्तरङ्गसाधनं व्यक्तीकर्तुं प्रकरणान्तरं सूचयति—**आत्मा ज्ञेय इति**। नन्वात्मवत् ज्ञेयत्वं घटादेरपि विद्यते ज्ञातुरन्यस्यभावादित्याशङ्क्य घटादे रूपादिमत्वाच्चक्षुरादिगम्यत्ववदात्मनो रूपादिराहित्यान्न चक्षुरादिसापेक्षत्वमिति विवक्षितमाह—**परो हीति**। तस्य स्वप्रकाशत्वं चक्षुराद्यविषयत्वं चोक्तमद्वितीयत्वमाह—**यस्मादिति**। तस्यैव सामान्यविशेषाभ्यां सर्वत्राप्रतिबद्धज्ञानत्वेन तटस्थरूपं दर्शयति—**सर्वज्ञ इति**। तर्हि सर्वसम्बन्धादशुद्धिः शङ्क्यते, नेत्याह—**शुद्ध इति**। ज्ञेयात्मत्वं = शास्त्रप्रतिपाद्यत्वम् ॥ १ ॥

गुरुभक्तेरपि देवताभक्तेरिव ज्ञानप्राप्त्यावन्तरङ्गत्वं दर्शयितुं गुरुपरम्परां प्रणमति—**पदवाक्येति**। दीपभूतैः सर्वप्रकाशनसामर्थ्यैः ॥ २ ॥

सामान्येनाचार्यपरम्परां नमस्कृत्य विशेषेण स्वगुरुनमस्कारपूर्वकमुद्देश्यप्रतिज्ञां करोति—**यद्वागिति**। ब्रह्मविद्यायां विनिश्चयो निर्विचिकित्सता येन न्यायेन भवति तं वक्ष्य इत्यर्थः ॥ ३ ॥

किमर्थं ब्रह्मविद्याविनिश्चयो वक्ष्यते तत्राह—**आत्मेति**। आत्मलाभस्य प्रामाणिकत्वं सूचयति—**यदर्था इति**। श्रुतयः स्मृतयश्च यथाऽऽत्मज्ञाने पर्यवस्यन्ति तथा ताभिः विहिताः सर्वाः क्रियाः क्रियमाणाश्चित्तशुद्धिद्वारा तत्रैव निष्ठां प्राप्नुवन्तीत्याह—**अपि त्विति** ॥ ४ ॥

पुत्रादिलाभादात्मलाभस्य परत्वेऽपि पुत्रादिपरित्यागेन नात्मलाभोपायाश्रयणं युक्तं तस्याप्यात्मसुखहेतुत्वादित्याशङ्क्याह—**आत्मार्थोपोऽति**। योऽपि पुत्रादेरर्थस्य लाभः स्वार्थः सन्नस्यैवात्मनः सुखायेष्यते स कदाचिद्विपर्ययो विपरीतो भवति पुत्रादेरेव कदाचिद्दुःखहेतुत्वदर्शनादित्यर्थः। आत्मलाभस्य लाभान्तरापेक्षया परत्वमुक्तं स्फोरयति—**आत्मेति** ॥ ५ ॥

**स्वयं लब्धस्वभावत्वाल्लाभस्तस्य न चान्यतः ।**
**अन्यापेक्षस्तु यो लाभः सोऽन्यदृष्टिसमुद्भवः ॥ ६ ॥**
**अन्यदृष्टिस्त्वविद्या स्यात्तन्नाशो मोक्ष उच्यते ।**
**ज्ञानेनैव तु सोऽपि स्याद्विरोधित्वान्न कर्मणा ॥ ७ ॥**
**कर्मकार्यस्त्वनित्यः स्यादविद्याकामकारणः ।**
**प्रमाणं वेद एवात्र ज्ञानस्याधिगमे स्मृतः ॥ ८ ॥**
**ज्ञानैकार्थपरत्वात्तं वाक्यमेकं ततो विदुः ।**
**एकत्वं ह्यात्मनो ज्ञेयं वाक्यार्थप्रतिपत्तितः ॥ ९ ॥**
**वाच्यभेदात्तु तद्भेदः कल्प्यो वाच्योऽपि तच्छ्रुतेः ।**
**त्रयं त्वेतत्ततः प्रोक्तं रूपं नाम च कर्म च ॥१०॥**

---

तस्य नित्यत्वं कुतोऽवगम्यते तत्राह—**स्वयमिति**। पुत्रादिलाभस्य साधनाधीनत्वेनानित्यत्वं विशेषमाह—**अन्येति**। अन्यदृष्टेः सकाशाद् समुद्भवो यस्य स तथोक्तः। आत्मलाभस्तु नैवं, तेन नित्य इत्यर्थः ॥ ६ ॥

अन्यदृष्टिसमुद्भवादनित्यश्चेदनात्मलाभस्तर्हि कासावन्यदृष्टिस्तत्राह—**अन्यदृष्टिरिति**। अन्यस्मिन्ननात्मनि दृष्टिः प्रतीतिर्यतो भवति साऽन्यदृष्टिः। उक्तलक्षणो मोक्षो ज्ञानमन्तरेणैव स्यादिति चेन्नेत्याह—**ज्ञानेनैवेति**। ज्ञानेनाज्ञानस्य सकार्यस्य विरोधित्वात्तन्निवृत्तिलक्षणो मोक्षस्तेनैव भवति न कर्मणा कर्माज्ञानयोर्विरोधाभावादित्यर्थः ॥ ७ ॥

कर्मणा सकार्याविद्यानिवृत्तिरूपो मोक्षो विरोधाभावान्माभूत्तथापि स्वर्गादिवन्मोक्षस्य कर्मसाध्यत्वं स्यादित्याशङ्क्याह—**कर्मेति**। मिथ्याप्रत्ययरागमूलकर्मसाध्यत्वादित्याह—**अविद्येति**। न मोक्षस्य कर्मसाध्यत्वं किन्तु ज्ञानैकलभ्यत्वमित्यत्र किं प्रमाणं तदाह—**प्रमाणमिति**। कर्मणोऽनित्यफलत्वं ज्ञानस्य मोक्षफलत्वमित्यस्यार्थस्याधिगमे प्रमाणम् ॥ ८ ॥

"[१]तद्यथेह कर्मचितो लोकः क्षीयते" "[२]ब्रह्मविदाप्नोति परमि"त्यादिवेद एव यतो विद्वद्भिः स्मृतस्ततोऽध्ययनविद्ध्युपात्तस्य वेदस्य परमपुरुषार्थसाधनज्ञानैकार्थपरत्वात्तं वेदमेकं वाक्यं प्रामाणिका विदुरित्याह—**ज्ञानेति**। किं तर्हि तेन ज्ञानेन ज्ञेयमित्याशङ्क्याह—**एकत्वमिति**। सत्यं ज्ञानमित्यवान्तरवाक्यार्थप्रतिपत्तिद्वाराऽऽत्मनो ब्रह्मैकत्वं विज्ञेयमित्यर्थः ॥ ९ ॥

नन्वात्मनो ब्रह्मणश्चैकत्वमयुक्तमपर्यायशब्दभेदादर्थभेदावगमादित्याशङ्क्याह—**वाच्यभेदादिति**। तद्भेदोऽपर्यायवाचकशब्दभेदो वाच्यार्थभेदात्कल्प्यते त्वया, वाच्योऽपि चार्थो भिन्नस्तच्छ्रुतेश्च पर्य्यायशब्दभेदश्रवणादेव कल्प्यते। तथा चान्योन्याश्रयादविद्याकल्पितस्य वाच्यवाचकभेदस्य नाद्वितीयब्रह्मात्मविरोधितेत्यर्थः। त्रयं वा इदं नामरूपं कर्मेत्यादिश्रुत्यैवात्मातिरिक्तं त्रयं प्रोक्तं ततोऽनेकत्वमेव वेदार्थः स्यादिति शङ्कते—**त्रयं त्विति** ॥ १० ॥

---

१. छा. ७. १.  २. तै. २. १.

**असदेतत्त्रयं तस्मादन्योन्येन हि कल्पितम् ।**
**कृतो वर्णो यथा शब्दाच्छ्रुतोऽन्यत्र धिया बहिः ॥११॥**
**दृष्टं चापि यथा रूपं बुद्धेः शब्दाय कल्पते ।**
**एवमेतज्जगत्सर्वं भ्रान्तिबुद्धिविकल्पितम् ॥१२॥**
**असदेतत्ततो युक्तं संविन्मात्रं न कल्पितम् ।**
**वेदश्चापि स एवाद्यो वेद्यं चान्यत्तु कल्पितम् ॥१३॥**
**येन वेत्ति स वेदः स्यात्स्वप्ने सर्वं तु मायया ।**
**येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ॥१४॥**
**येन स्वप्नगतो वक्ति सा वाग्घ्राणं तथैव च ।**
**रसनस्पर्शने चैव मनश्चान्यत्तथेन्द्रियम् ॥१५॥**
**कल्प्योपाधिभिरेवैतद्भिन्नं ज्ञानमनेकधा ।**
**आधिभेदाद्यथा भेदो मणेरेकस्य जायते ॥१६॥**

---

प्रागुक्तान्योन्याश्रयत्वदोषादन्योन्यापेक्षया समीक्षितमेतत् त्रयं न प्रमातुं शक्यं किन्तु लोकप्रसिद्धं मिथ्याभूतमनूद्यते तेन नाद्वैतविरोधितेति सिद्धान्तवाद्याह—**असदिति** । अन्योन्यापेक्षया दृष्टस्य कल्पितत्वे दृष्टान्तमाह—**कृत इति** । यथा हीन्द्रादेर्वर्णभेदः सहस्राक्षत्वाद्याकारः शब्दादेव श्रुतोऽन्यत्वबुद्ध्या कुड्यादौ कृतो निवेशितो मिथ्या कथ्यते । नहि शब्दाद्बुद्धिस्थस्याकारविशेषस्य भित्त्यादावन्यत्वधिया कृतस्य सत्यत्वमस्तीत्यर्थः ॥ ११ ॥

दृष्टान्तान्तरेण दार्ष्टान्तिकं स्पष्टयति—**दृष्टञ्चेति** । यथा च भित्तिपटादौ देवदत्तादे रूपं दृष्टं बुद्धौ निक्षिप्तं बुद्धेरागत्य शब्दव्यवहाराय समर्थो भवति । एवमेव जगत्सर्वं नामरूपकर्मात्मकं भ्रान्तबुद्ध्या मिथ्याज्ञानेन परिकल्पितं रज्जुसर्पादिवन्मिथ्यैवेत्यर्थः ॥ १२ ॥

जगतो मिथ्यात्वे फलितमाह—**असदिति** । सर्वं जगत्कल्पितं चेत्तर्हि शून्यवादः स्यात् । **मैवम्** । चिन्मात्रस्यात्मनः सर्वकल्पनास्पदत्वेनाकल्पितत्वादित्याह—**संविदिति**[1] । वेदाचार्यादेरात्मप्रतिपत्तिहेतुत्वेनाकल्पितत्वमाशङ्क्योक्तं—**वेदश्चेति** । आत्मैवाविद्यया शास्त्राचार्यादिरूपेण स्वज्ञानहेतुतां प्रतिपद्यते । वेद्यश्च लौकिको वैदिकश्चात्मैव तद्व्यतिरिक्तस्तु कल्पितो मिथ्यैवेत्यर्थः ॥ १३ ॥

कथं पुनरात्मैवाद्यो वेदो वेद्यश्चेत्याशङ्क्य स्वप्नदृष्टान्तेन साधयति—**येनेति**[2] ॥ १४-१५ ॥

कथमेकरूपं ज्ञानं वेदादिरूपेणानेकधा भिद्यते तत्राह—**कल्प्योपाधिभिरिति** । स्वप्ने कल्प्योपाधिवशादेकमेव चैतन्यं अनेकधा भिन्नमित्यत्र दृष्टान्तमाह—**आधीति** । यथा नीलपीताद्युपधानभेदान्नीलपीतात्मता स्फटिकादेस्तथा ज्ञानविशेषस्यापीत्यर्थः ॥ १६ ॥

---

१. सच्चिन्मात्रमिति मु. पु. पाठः

२. आत्मैव प्रकाशकप्रकाश्यचक्षुरादिकरणरूपेण स्वप्ने भासते ।

जाग्रतश्च तथा भेदो ज्ञानस्यास्य विकल्पितः ।
बुद्धिस्थं व्याकरोत्यर्थं भ्रान्त्या तृष्णोद्भवक्रियः ॥१७॥
स्वप्ने तद्वत्प्रबोधे यो बहिश्चान्तस्तथैव च ।
आलेख्याऽध्ययने यद्वत्तदन्योन्यधियोद्भवम् ॥१८॥
यदाऽयं कल्पयेद्भेदं तत्कामः सन् यथाक्रतुः ।
यत्कामस्तत्क्रतुर्भूत्वा कृतं यत्तत्प्रपद्यते ॥१९॥
अविद्याप्रभवं सर्वमसत्तस्मादिदं जगत् ।
तद्वता दृश्यते यस्मात्सुषुप्ते न च गृह्यते ॥२०॥
विद्याविद्ये श्रुतिप्रोक्ते एकत्वान्यधियौ हि नः ।
तस्मात्सर्वप्रयत्नेन शास्त्रे विद्या विधीयते ॥२१॥

---

एवं स्वप्ने निर्भेदस्य ज्ञानस्य मणेरिवाविद्याकल्पितोपाधिभेदादशेषव्यवहारास्पदत्वमुक्त्वा जागरितेऽपि ज्ञानस्य सर्वव्यवहारास्पदत्वमुपपन्नमिति दार्ष्टान्तिकमाह—**जाग्रतश्चेति**। कथं भेदस्य विकल्पितत्वं तत्राह—**बुद्धिस्थमिति**। आत्मा खल्वज्ञानकञ्चुको बुद्धिं परिकल्प्य तदविवेकादनेकरूपं प्रपञ्चं स्वात्मनि कल्पयतीत्यर्थः[1] ॥ १७॥

स्वप्नदृष्टान्तेनोक्तमर्थं निगमयति—**स्वप्न इति**। बाह्यमाभ्यन्तरं सर्वमन्योन्यापेक्षया कल्पितमित्येतदुदाहरणान्तरेण दर्शयति—**आलेख्येति**। यथा आलेख्यापेक्षयाऽध्ययनं श्लोकादेरध्ययनापेक्षया च पुनरालेखनं पत्रादौ मिथ्यैव, सर्वगतानां निरवयवानां वर्णानां लेखनाद्यसम्भवात्। तथा तदन्तर्बहिश्चान्योन्यधियोद्भवं मिथ्यैव। बहिर्दृष्टं बुद्धौ निदधाति बुद्धौ च वासनामयं स्थितम्। ततो बहिः शब्दव्यवहाराय प्रसारयतीत्यन्योन्यसापेक्षत्वेन वस्तुत्वायोगाद्युक्तं मिथ्यात्वमित्यर्थः ॥ १८॥

एतदेव स्पष्टयति—**यदाऽयमिति**। पूर्वभ्रान्तिसंस्कारवशादयमात्मा यदा भेदं कल्पयति तदा तत्कामस्तदभिलाषो भवति। तत्कामश्च तत्राध्यवसायलक्षणक्रतुमान् भवति। ततश्च यत्कामस्तत्क्रतुस्तत्साधनकर्मानुष्ठाय तत्फलं प्रतिपद्यते। पुनश्च तत्संस्कारवशाद्भेदं परिकल्पयति। तत्कामश्च क्रतुर्भवतीत्येवमन्योन्यधियोद्भूतहेतुफलात्मना संसरतीत्यर्थः[2] ॥ १९॥

अन्योन्यापेक्षया संसारस्योद्भूतत्वे फलितमाह—**अविद्येति**। तस्मादित्यपेक्षितं पूरयति—**तद्वतेति** ॥ २०॥

यद्यविद्याविनिर्मितमनिर्वाच्यं जगदुच्यते तर्हि जगद्धेतुरविद्या कीदृशी, कीदृशी च विद्या तन्निवृत्तिहेतुः। केन वा तयोर्गम्यत्वं तत्राह—**विद्याविद्ये इति**। यस्मात् "अथ योऽन्यामन्योऽसावन्योऽहमि"त्यादिश्रुत्याऽनुभवसिद्धैवाविद्या संसारहेतुरनूद्यते। विद्या तु ब्रह्मात्मनोरेकत्वधीः स्वतोऽप्राप्ता प्रमाणमपेक्षते। तस्मादज्ञानकाण्डे श्रवणादिद्वारा तत्त्वमस्यादिश्रुत्या तात्पर्येण व्युत्पाद्यत इत्याह—**तस्मादिति** ॥ २१॥

---

१. भ्रान्तिप्रयुक्ततृष्णाख्यकामो हानादिरूपा क्रिया यस्य सः बुद्धिकल्पितमर्थं व्याकरोति तेन व्यवहरति।

२. तथाच श्रुतिः यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते बृ. ४.४

**चित्ते ह्यादर्शवद्यस्माच्छुद्धे विद्या प्रकाशते।**
**यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥२२॥**
**शारीरादितपः कुर्यात्तद्विशुद्ध्यर्थमुत्तमम्।**
**मनआदिसमाधानं तत्तद्देहविशोषणम् ॥२३॥**
**"मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः।**
**तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते" ॥२४॥**
**दृष्टं जागरितं विद्यात्स्मृतं स्वप्नं तदेव तु।**
**सुषुप्तं तदभावं च स्वमात्मानं परं पदम् ॥२५॥**
**सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः।**
**स्वात्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाऽभवम् ॥२६॥**
**तदेवैकं त्रिधा ज्ञेयं मायाबीजं पुनः क्रमात्।**
**मायाव्यात्माऽविकारोऽपि बहुधैको जलार्कवत् ॥२७॥**

---

शास्त्रे सर्वप्रयत्नेन विद्या चेद् व्युपाद्यते तर्हि मुमुक्षुः किमिति न प्रतिपद्यत इत्याशङ्क्य चित्तशुद्ध्यभावादित्यभिप्रेत्य कर्त्तव्या चित्तशुद्धिरित्याह—**चित्ते हीति** ॥ २२ ॥

तर्हि कैरुपायैश्चित्तं शोधनीयं तत्राह—**यमैरिति**। अहिंसा ब्रह्मचर्य्यादयो यमाः तपःशब्देन स्वाध्यायादयो गृह्यन्ते। तपोभिरित्यादि प्रपञ्चयति—**शारीरादीति**। तदेव तपो विवक्षितं विशदयति—**मन आदीति** ॥ २३ ॥

यमनियमादिभिरुपायैः श्रवणादिभिश्च संस्कृतचित्तोऽवस्थात्रयात्तत्साक्षिणं विविच्य ब्रह्मत्वेन वाक्याज्जानीयादित्याह—**दृष्टमिति**। इन्द्रियजं ज्ञानं जागरितम्। इन्द्रियोपरमे जागरितसंस्कारजं ज्ञानं स्वप्नः। द्वयोरप्यभावः सुषुप्तम्। तेषां साक्षी स्व आत्मेति जानीयादित्यर्थः ॥ २४, २५ ॥

अवस्थात्रयहेतोरात्मनः सत्यज्ञानादिलक्षणब्रह्मत्वमयुक्तमित्याशङ्क्य नात्मनोऽवस्थात्रयहेतुत्वमित्याह—**सुषुप्ताख्यमिति**। कथं तर्हि सति बीजे मुक्तिरित्याशङ्क्याह—**स्वात्मेति**। अभवमनुत्पादकं स्यादित्यर्थः ॥ २६ ॥

सुषुप्ताख्यस्य तमसो दाहेऽपि स्वप्नजागरितयोर्दाहे पृथगेव यत्नः स्यादित्याशङ्क्याह—**तदेवैकमिति**। तदेकमेव मायाख्यं जागरिते विश्ववैश्वानररूपेण स्वप्ने तैजसहिरण्यगर्भात्मना सुषुप्ते प्राज्ञाव्याकृतप्रकारेण त्रिधाऽधिगन्तव्यम्। तत्पुनः श्रवणाद्यनुष्ठानक्रमेण समुत्पन्नाद्वाक्यीयादेव ब्रह्मात्मसाक्षात्कारादशेषतो व्यावर्त्तते तथा च तमसो दाहातिरेकेण स्वप्नादिदाहे पृथगेव यत्नो न क्रियते स्वप्नादेस्तमोमात्रत्वात्तन्निवृत्तौ निवृत्तत्वादित्यर्थः। यथोक्तस्य तमसोऽस्वातन्त्र्यादपेक्षितमाश्रयं दर्शयति मायावीति। कूटस्थासङ्गाद्वितीयस्यात्मनस्तदाश्रयत्वं कथमित्याशङ्क्याह—**अविकारोऽपीति**। आत्मस्वभावालोचनया तत्र तमसोऽसंसर्गेऽपि तमःस्वभावादाश्रयान्तराभावात्तत्रैवास्याश्रितत्वात्कूटस्थोऽद्वितीयोऽप्यात्मा तमःसम्बन्धादेव सचलोऽनेकश्च लक्ष्यत इत्यर्थः। तत्तत्पात्रस्थसलिलसम्बन्धादादित्यवत्। अतो ब्रह्मैवैकमनाद्यनिर्वाच्याज्ञानसम्बन्धादन्यथा भातीत्यर्थः ॥ २७ ॥

बीजं चैकं यथा भिन्नं प्राणस्वप्नादिभिस्तथा ।
स्वप्नजाग्रच्छरीरेषु तद्वच्चात्मा जलेन्दुवत् ॥२८॥
मायाहस्तिनमारुह्य मायाव्येको यथा व्रजेत् ।
आगच्छंस्तद्वदेवात्मा प्राणस्वप्नादिगोचरः ॥२९॥
न हस्ती न तदारूढो मायाव्यन्यो यथा स्थितः ।
न प्राणादि न तद्द्रष्टा तथा ज्ञोऽन्यः सदादृशिः ॥३०॥
अबद्धचक्षुषो नास्ति माया मायाविनोऽपि वा ।
बद्धाक्षस्यैव सा मायाऽमायाव्येव ततो भवेत् ॥३१॥
साक्षादेव स विज्ञेयः साक्षादात्मेति च श्रुतेः ।
भिद्यते हृदयग्रन्थिर्न चेदित्यादितः श्रुतेः ॥३२॥
अशब्दादित्वतो नास्य ग्रहणं चेन्द्रियैर्भवेत् ।
सुखादिभ्यस्तथाऽन्यत्वाद्बुद्ध्या वाऽपि कथं भवेत् ॥३३॥
अदृश्योऽपि यथा राहुश्चन्द्रे बिम्बं यथाऽम्भसि ।
सर्वगोऽपि तथैवाऽऽत्मा बुद्धावेव स गृह्यते ॥३४॥

---

उक्तमेव दृष्टान्तदार्ष्टान्तिकरूपेण प्रपञ्चयति—**बीजंचैकमिति**। यथैकमेवाविद्यारूपं बीजमव्याकृतहिरण्यगर्भविराडात्मभिरुपाधिभिर्भिन्नं, तथा हिरण्यगर्भादिदेहेषु चिदाभासो भिन्नस्तदविवेकादात्मापि साक्षी तद्वदेव भिन्नो लक्ष्यते। यथा नानाविधेषु सलिलेषु तत्र तत्र चन्द्रमण्डलं भिन्नमुपलभ्यते तथैव स्थूलसूक्ष्मदेहभेदेषु मोहकल्पितेषु चिदाभासवदात्मापि तदविविक्तो भिन्नो भातीत्यर्थः ॥ २८ ॥

नन्वात्मनो मायाकल्पितेषु प्राणादिषु बहुत्वं चेत्तस्य व्यापारवत्त्वमपि तद्वदेव स्यादित्याशङ्क्य दृष्टान्तेन निरस्यति—**मायेति** ॥ २९ ॥

प्राणादिसम्बन्धमङ्गीकृत्योक्तं सोऽपि वस्तुतो नास्तीत्याह—**न हस्तीति** ॥ ३० ॥

परमार्थात्मसद्भावेऽपि मायासम्बन्धोऽपरिहार्यः स्यादित्याशङ्क्याह—**अबद्धेति**। लोके तावदप्रतिबद्धदृष्टेर्नास्ति मायादर्शनम्। मायाविनो दर्शने सत्यप्यवस्तुत्वनिश्चयान्न तत्कृतो भयादिर्भवति। किन्तु बद्धाक्षस्यैव सा हस्त्यादिमाया भासते सत्यतया हर्षविषादादिहेतुश्चनिश्चीयते। तथा ब्रह्मात्मज्ञानाद्वस्तुतो ब्रह्मास्मीति ज्ञानाद्विद्वान्मायाव्येव मायातत्कार्यबन्धविधुरो मुक्तः स्यादित्यर्थः। साक्षाद्ब्रह्मात्मज्ञानादमायावी मायातत्कार्यबन्धविनिर्मुक्तो भवतीत्यर्थः ॥ ३१ ॥

श्रुतिसिद्धः श्रद्धेयः स्यादित्याह—**साक्षादिति**। 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर' इति श्रुतेरपरोक्षज्ञानमेव परमार्थज्ञानं तत एव बन्धमोक्षः। 'भिद्यते हृदयग्रन्थि'रित्यादिदर्शनात्। 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टि' रित्यादिश्रुतेश्चेत्यर्थः ॥ ३२ ॥

साक्षादात्मविज्ञानमुक्तमाक्षिपति—**अशब्दादीति** ॥ ३३ ॥

तत्त्वमस्यादिवाक्योत्थबुद्धिवृत्तौ प्रतिबिम्बितः परमात्मा स्वतोऽपरोक्षः स्फुरति ऐन्द्रियकत्वाभावेऽपीति परिहरति—**अदृश्योऽपीति** ॥ ३४ ॥

**भानोर्बिम्बं यथा चौष्ण्यं जले दृष्टं न चाऽम्भसः ।**
**बुद्धौ बोधो न तद्धर्मस्तथैव स्याद्विधर्मतः ॥३५॥**
**चक्षुर्युक्ता धियो वृत्तिर्या तां पश्यन्नलुप्तदृक् ।**
**दृष्टेर्द्रष्टा भवेदात्मा श्रुतेः श्रोता तथा भवेत् ॥३६॥**
**केवलां मनसो वृत्तिं पश्यन् मन्ता मतेरजः ।**
**विज्ञाताऽलुप्तशक्तित्वात्तथा शास्त्रं न हीत्यतः ॥३७॥**
**ध्यायतीत्यविकारित्वं तथा लेलायतीत्यपि ।**
**अत्र स्तेनेति शुद्धत्वं तथाऽनन्वागतश्रुतेः ॥३८॥**
**शक्त्यलोपात्सुषुप्ते ज्ञस्तथा बोधेऽविकारतः ।**
**ज्ञेयस्यैव विशेषस्तु यत्र वेति श्रुतेर्वचः ॥३९॥**
**व्यवधानाद्धि पारोक्ष्यं लोकदृष्टेरनात्मनः ।**
**दृष्टेरात्मस्वरूपत्वात्प्रत्यक्षं ब्रह्म तत्स्मृतम् ॥४०॥**

---

बुद्धौ बोधो गृह्यते चेत्तद्धर्मः स्यादित्याशङ्क्य दृष्टान्तेन निराचष्टे—**भानोरिति**। विधर्मत्वं बुद्धेर्जडत्वात् ॥ ३५ ॥

न केवलं शास्त्रीयबुद्धावेव विशुद्धचिद्धातुः परमात्मा स्फुरति किन्तु लौकिकीष्वपि बुद्धिवृत्तिष्वात्मा स्वतोऽपरोक्षः साक्षितया स्फुरतीत्याह—**चक्षुरिति**। न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया इत्यादिश्रुतिरत्रानुकूलेति दर्शयति—**तथेति**। चक्षुर्युक्ता चक्षुर्द्वारिका रूपाकारा या धीवृत्तिस्तां स्वाभासद्वारा पश्यन्दृष्टेर्द्रष्टेत्युच्यते। एवमिन्द्रियान्तरद्वारामपि धीवृत्तिं पश्यन् श्रुतेः श्रोतेत्यादिव्यवहारविषयो भवति ॥ ३६ ॥

इदानीं वाह्येन्द्रियनिरपेक्षधीवृत्तिसाक्षित्वं दर्शयति—**केवलामिति**। विज्ञाता अध्यवसायलक्षणाया धीवृत्तेः साक्षित्वात् अलुप्तशक्तित्वात्-अलुप्तचित्स्वभावत्वात् "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इति श्रुतेः ॥ ३७ ॥

द्रष्टृत्वादिव्यपदेशाद्विकारित्वादशुद्धिप्रसक्तावाह—**ध्यायतीति** । ध्यायतीवेतीवशब्दश्रुतेरविकारित्वम्। अत्र स्तेनोऽस्तेनो भवति' 'अनन्वागतं पुण्येनानन्वागतं पापेने'ति श्रुतेश्च शुद्धत्वमवगम्यत इत्यर्थः ॥ ३८ ॥

ननु सुप्ते ज्ञानाभावात् जागरितस्वप्नयोश्च तद्भावादात्मा विकारीत्याशङ्क्याह—**शक्त्यलोपादिति**। बोधशब्देनावस्थाद्वयमुच्यते। तत्राप्यात्मनोऽपरोक्षत्वे हेतुरविकारत इति। ननु सुषुप्ते नाज्ञासिषमिति परामर्शो बोधे च जानामीत्यनुभवस्तत्कथमवस्थात्रये निर्विशेषचिद्रूपतेत्याशङ्क्याह—**ज्ञेयस्येति**। सुषुप्ते ज्ञेयस्याज्ञानातिरिक्तस्यासत्त्वमवस्थान्तरे तु तस्य सत्त्वमित्यत्र नियामकमाह—**यत्र वेति** ॥ ३९ ॥

यदुक्तमात्मनः स्वतोऽपरोक्षत्वं निर्विकारत्वञ्च तदिदानीं स्पष्टयति—**व्यवधानाद्धीति** ॥ ४० ॥

**न हि दीपान्तरापेक्षा यद्वद्दीपप्रकाशने ।**
**बोधस्यात्मस्वरूपत्वान्न बोधोऽन्यस्तथेष्यते ॥४१॥**
**विषयत्वं विकारित्वं नानात्वं वा न हीष्यते ।**
**न हेयो नाप्युपादेय आत्मा नान्येन वा ततः ॥४२॥**
**सबाह्याभ्यन्तरोऽजीर्णो जन्ममृत्युजरातिगः ।**
**अहमात्मेति यो वेत्ति कुतो न्वेव बिभेति सः ॥४३॥**
**प्रागेवैतद्विधेः कर्म वर्णित्वादेरपोहनात् ।**
**तदस्थूलादिशास्त्रेभ्यस्तत्त्वमेवेति निश्चयात् ॥४४॥**
**पूर्वदेहपरित्यागे जात्यादीनां प्रहाणतः ।**
**देहस्यैव तु जात्यादिस्तस्याप्येवं ह्यनात्मता ॥४५॥**
**ममाहं चेत्यतोऽविद्या शरीरादिष्वनात्मसु ।**
**आत्मज्ञानेन हेया स्यादसुराणामिति श्रुतेः ॥४६॥**

---

लोकानां दृष्टेरनात्मविषयाया अनात्मनश्च घटादेर्देशकालादिव्यवधानात्पारोक्ष्यं न त्वेवमात्मनो व्यवधानमस्ति । तस्मात्सदैव प्रत्यक्षं ब्रह्मेत्यर्थः । यस्मादपरोक्षदृष्टिरूपं प्रत्यक्षं ब्रह्म तस्मान्न परमार्थतस्तज्ज्ञाने घटादेरिवान्यज्ञानापेक्षेत्याह—**नहीति** ॥ ४१ ॥

एवमपरोक्षत्वमात्मनो विशदीकृत्याविकारित्वं विशदीकुर्वन्निर्विशेषत्वमाह—**विषयत्वमिति** । नान्येन तस्यैव बाधादसत्त्वादित्यर्थः ॥ ४२ ॥

ननु कुतोऽस्य निर्विकारत्वं नरकपातादिभीतिदर्शनात्तन्निवृत्त्यर्थं धर्मानुष्ठानसिद्धेरित्याशङ्क्याज्ञानावस्थायामेव भीतिरनुष्ठानञ्च न ज्ञानावस्थायामित्याह—**सबाह्येति** ॥ ४३ ॥

ज्ञानिनोऽपि यावज्जीवादिश्रुतिचोदितान्यग्निहोत्रादीनि कर्माणि सन्तीत्याशङ्क्याह—**प्रागिति** । तस्य ब्रह्मात्मरूपस्य विधिर्विधानं प्रतिपादनं तस्मात्पूर्वमेवाग्निहोत्रादिकर्म नोर्ध्वं ब्रह्मात्मज्ञानेन कर्मानुष्ठानप्रयोजकस्य वर्णित्वमाश्रमित्वमित्यादेरभिमानस्यापास्तत्वादित्यर्थः । अधिकारिणो वर्णित्वादियुक्तस्य न कर्मत्यागोपपत्तिरित्याशङ्क्याह—**तदिति** । तद्ब्रह्मास्थूलादिलक्षणं त्वमेवेति तत्त्वमसिवाक्यान्निश्चयादधिकारित्वेन प्रसिद्धस्याहं ब्रह्मेति बोधोत्पत्तौ कर्मानुपपत्तिरित्यर्थः ॥४४॥

वर्णित्वादेरपोहे युक्तिमाह—**पूर्वदेहेति** । तथापि वर्त्तमानदेहस्यात्मत्त्वात्तद्गतजात्यादेरप्रहाणमित्याशङ्क्याह—**तस्यापीति** । पूर्वदेहवद्वर्तमानदेहस्याप्यागमापायित्वेऽनात्मत्वान्न तद्धर्मस्य जात्यादेरप्रहाणमित्यर्थः ॥ ४५ ॥

शरीरादिष्वात्मत्वाभिमानस्य प्रसिद्धत्वेनाहेयत्वमाशङ्क्याह—**ममाहमिति** । यतः शरीरादिषु वस्तुतोऽनात्मस्वागमापायिषु शुद्धस्यात्मनोऽविद्यावशान्ममाहमित्यभिमानस्तस्मा"दसुराणां ह्येषोपनिषदि"ति श्रुतेर्देहात्मदर्शनस्य हेयत्वमित्यर्थः ॥ ४६ ॥

**दशाहाशौचकार्याणां पारिव्राज्ये निवर्तनम् ।**
**यथा ज्ञानस्य संप्राप्तौ तद्वज्जात्यादिकर्मणाम् ॥४७॥**
**यत्कामस्तत्क्रतुर्भूत्वा कृतं त्वज्ञः प्रपद्यते ।**
**यदा स्वात्मदृशः कामाः प्रमुच्यन्तेऽमृतस्तदा ॥४८॥**
**आत्मरूपविधेः कार्यं क्रियादिभ्यो निवर्तनम् ।**
**न साध्यं साधनं वाऽऽत्मा नित्यतृप्तः स्मृतेर्मतः ॥४९॥**
**उत्पाद्याप्यविकार्याणि संस्कार्यं च क्रियाफलम् ।**
**नातोऽन्यत्कर्मणा कार्यं त्यजेत्तस्मात्ससाधनम् ॥५०॥**
**तापान्तत्वादनित्यत्वादात्मार्थत्वाच्च या बहिः ।**
**संहृत्याऽऽत्मनि तां प्रीतिं सत्यार्थी गुरुमाश्रयेत् ॥५१॥**
**शान्तं प्राज्ञं तथा मुक्तं निष्क्रियं ब्रह्मणि स्थितम् ।**
**श्रुतेराचार्यवान्वेद तद्विद्धीति स्मृतेस्तथा ॥५२॥**
**स गुरुस्तारयेद्युक्तं शिष्यं शिष्यगुणान्वितम् ।**
**ब्रह्मविद्याप्लवेनाशु [1]स्वान्तध्वान्तमहोदधिम् ॥५३॥**

ज्ञानादूर्ध्वं न कर्म तत्प्रयोजकं वा जात्यादीत्येतदृष्टान्तेन साधयति—**दशाहाशौचेति** । यथाहि सपिण्डताभिमानाभावान्मुनेराशौचादिनिवृत्तिरेवं जात्याद्यभिमानाभावाद्विदुषः कर्म निवर्तत इत्यर्थः ॥ ४७ ॥

ब्रह्मात्माज्ञानमूलः संसारो यस्मात्तस्माद् ब्रह्मात्मज्ञानात् प्राक्कामादियुक्तो धर्माधर्मद्वारा संसरति । ब्रह्मात्मज्ञाने च कामादिरहितो मुक्तो भवतीत्याह—**यत्काम इति** ॥ ४८ ॥

कामकर्मनिवृत्त्या मोक्षेऽपि कुतः कामकर्मनिवृत्तिरित्याशङ्क्याह—**आत्मेति** । यद्यपि क्रियाकारकफलेभ्यो निवर्तनमात्मनः स्वरूपबोधनद्वारा क्रियते तथापि तस्य साध्यसाधनान्यतरान्तर्भावात्क्रियासंस्पर्शित्वमित्याशङ्क्य विज्ञानमानन्दं ब्रह्मेत्यादिकूटस्थपरमानन्दश्रुतेर्मैवमित्याह—**न साध्यमिति** ॥ ४९ ॥

आत्मस्वरूपावस्थानलक्षणस्य मोक्षस्य चतुर्विधक्रियाफलविलक्षणत्वान्मुमुक्षुर्दाराग्न्यादिसम्बन्धं कर्म वर्जयेदिति फलितमाह—**उत्पाद्येति** ॥ ५० ॥

ससाधनं कर्म त्यक्त्वा मुमुक्षुणा कर्त्तव्यमर्थं दर्शयति—**तापान्तत्वादित्यादि** ॥ ५१ ॥

अशेषत्वादपि स्वस्याभ्यर्हितत्वादात्मन्येव प्रीतिः कार्येत्यर्थः । किंलक्षणं गुरुमुपगच्छेदित्यपेक्षायामाह—**शान्तमिति** । गुरोराश्रयणीयत्वे प्रमाणमाह—**श्रुतेरिति** ॥ ५२ ॥

उक्तप्रमाणानुरोधेनोक्तविशेषणस्य गुरोराश्रयणे फलं सूचयति—**स गुरुरिति** । युक्तं समाहितम् । अमानित्वादयः **शिष्यगुणाः** ॥ ५३ ॥

१. स्वान्तं अन्तःकरणं, अत्र तदुपहितो जीवोऽभिप्रेतः ।

**दृष्टिः स्पृष्टिः श्रुतिर्घ्रातिर्मतिर्विज्ञातिरेव च ।**
**शक्तयोऽन्याश्च भिद्यन्ते चिद्रूपत्वेऽप्युपाधिभिः ॥५४॥**

**अपायोद्भूतिहीनाभिर्नित्यं दीप्यन् रविर्यथा ।**
**सर्वदृक् सर्वगः शुद्धः सर्वं जानाति सर्वदा ॥५५॥**

**अन्यदृष्टिः शरीरस्थस्तावन्मात्रो ह्यविद्यया ।**
**जलेन्द्वाद्युपमाभिस्तु तद्धर्मा च विभाव्यते ॥५६॥**

**दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा तत्प्रविहाय च ।**
**अथोन्मील्यात्मनो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः ॥५७॥**

**प्राणाद्येवं त्रिकं हित्वा तीर्णोऽज्ञानमहोदधिम् ।**
**स्वात्मस्थो निर्गुणः शुद्धो बुद्धो मुक्तः स्वतो हि सः ॥५८॥**

---

कथं पुनरुक्तलक्षणो गुरुः सम्यग्ज्ञानेनाप्रयत्नेन शिष्यं संसारसागरात्तारयेदित्यपेक्षायां प्रथमं पदार्थविवेकं कारयतीत्यभिप्रेत्य पदार्थशुद्धिं संक्षेपतो दर्शयति–**दृष्टिरिति** । दृश्यादिशक्तीनामन्यासां च रसयति वक्त्यादिशक्तीनां चिद्रूपत्वाविशेषान्न भिन्नतेत्याशङ्क्यार्थेन्द्रियोपाधिकबुद्धिवृत्तिद्वारा काल्पनिको भेदः सिद्ध्यतीत्याह्—**चिद्रूपत्वेऽपीति** ॥ ५४ ॥

दृश्यादीनां स्वारस्येनाभिन्नत्वमौपाधिकत्वेन भिन्नत्वमित्यभीष्टेपि कथं पदार्थशुद्धिरित्यपेक्षायामाह—**अपायेति** । यथाऽऽदित्यो जगति स्वरश्मिभिः नित्यं दीप्यते, तथा स्वभावतो जन्मविनाशशून्यया चिच्छक्त्याऽयमात्मा पूर्वोक्तदृश्यादिसाक्षित्वेन सदा दीप्यमानो वर्तते । स च सर्वं कार्यं कारणं च कल्पितं व्याप्नोति । सर्वं च सामान्येन पश्यति । सर्वस्य साभासत्वात्स ह्यशुद्धेर्भास्यत्वात्परिशुद्धः सिद्ध्यति । सर्वं च सर्वस्मिन् काले स्वाभासद्वारा विशेषतो जानाति । तदेवं पदार्थशुद्धिः सिद्ध्यतीत्यर्थः ॥ ५५ ॥

उक्तलक्षणश्चेदात्मा कथं तस्य संसारोपलब्धृत्वं परिच्छेदप्रतिभासश्चेत्याशङ्क्याह्–**अन्यदृष्टिरिति** । अविद्यया शरीरद्वयगतस्तावन्मात्रमात्मानं मन्यमानो भेददर्शी परिच्छिन्नं संसारिणं चात्मानं पश्यतीत्यर्थः । तदेव दृष्टान्तेन स्पष्टयति—**जलेन्द्विति** । यथा जलचन्द्रादिभिर्वियच्चन्द्रादीनां परिच्छेदश्चलनादिव्यवहारस्तथाऽऽत्मनः सर्वव्यवहारातीतस्याविद्याकल्पितोपाधिभिः सर्वो व्यवहारस्तस्मादात्मनि परिच्छेदव्यवहारस्यौपाधिकतया स्वतोऽसौ शुद्धोऽपरिच्छिन्नश्चेत्यर्थः ॥ ५६ ॥

आत्मनः सत्यज्ञानादिरूपस्याविद्याकल्पितः संसारव्यवहारस्ततश्चाचार्यप्रसादाद्विविक्तपदार्थः समाधियुक्तोऽवस्थात्रयसाक्षिणमवस्थात्रयाद्विविच्य ब्रह्मत्वेन ज्ञात्वा मुच्यते मुमुक्षुरित्याह—**दृष्ट्वेति** ॥ ५७ ॥

कथमनध्वगो ब्रह्म प्राप्नोतीत्यपेक्षायामाह—**प्राणाद्येवमिति** । पदार्थविवेकद्वारा वाक्यार्थज्ञानादज्ञाननिवृत्तौ स्वतो मुक्तत्वाद्विदुषो गतिव्यतिरेकेण ब्रह्म प्राप्तस्यापुनरावृत्तिर्युक्तेत्यर्थः ॥ ५८ ॥

**अजोऽहं चामरोऽमृत्युरजरोऽभय एव च ।**
**सर्वज्ञः सर्वदृक् शुद्ध इति बुद्धो न जायते ॥५९॥**
**पूर्वोक्तं यत्तमोबीजं तन्नास्तीति विनिश्चयः ।**
**तदभावे कुतो जन्म ब्रह्मैकत्वं विजानतः ॥६०॥**
**क्षीरात्सर्पिर्यथोद्धृत्य क्षिप्तं तस्मिन्न पूर्ववत् ।**
**बुद्ध्यादेर्ज्ञस्तथाऽसत्यान्न देही पूर्ववद्भवेत् ॥६१॥**
**सत्यं ज्ञानमनन्तं च रसादेः पञ्चकात्परम् ।**
**स्यामदृश्यादिशास्त्रोक्तमहं ब्रह्मेति निर्भयः ॥६२॥**
**यस्माद्भीताः प्रवर्तन्ते वाङ्मनःपावकादयः ।**
**तदात्मानन्दतत्त्वज्ञो न बिभेति कुतश्चन ॥६३॥**
**नामादिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये ।**
**प्रणमेत्कं तदाऽऽत्मज्ञो न कार्यं कर्मणा तथा ॥६४॥**
**विराड्वैश्वानरो बाह्यः स्मरन्नन्तः प्रजापतिः ।**
**प्रविलीने तु सर्वस्मिन् प्राज्ञोऽव्याकृतमुच्यते ॥६५॥**

---

केन प्रकारेणात्मानं प्रतिपद्यमानो न पुनः शरीरं गृह्णाति तत्राह—**अजोऽहमिति** ॥ ५९ ॥

ज्ञानवतो भूयः शरीरग्रहणाभावे कारणमाह—**पूर्वोक्तमित्यादि** । सुषुप्ताख्यं तमोऽज्ञानमित्यादिनोक्तम् ॥ ६० ॥

साक्षादात्मानमहं ब्रह्मास्मीति पश्यतोऽपि पूर्ववद्व्यवहारदर्शनात्तत्कृतधर्माधर्मनिबन्धनः संसारः स्यादित्याशङ्क्य बाधितानुवृत्तिमात्रत्वान्न संसारहेतुत्वं स्यादिति दृष्टान्तपूर्वकमाह—**क्षीरादिति** । **यथा नवनीतं** क्षीरादुद्धृत्य तस्मिन्नेव निःसारे क्षिप्तं न पूर्ववद्भवति । तथा बुद्ध्यादेरसत्यादात्मानं विविच्याहं ब्रह्मास्मीति वाक्यादवगच्छन्बुद्ध्यादौ वर्तमानोऽपि न पूर्ववद्देहद्वयाभिमानभागी **बद्धः सिद्ध्येदित्यर्थः** ॥ ६१ ॥

किंलक्षणमात्मानं पश्यन् विद्वान्निर्भयोऽसंसारी स्यादित्याकाङ्क्षायामाह—**सत्यमिति** । **रसादेः पञ्चकादन्नमयादिकोशपञ्चकात्** ॥ ६२ ॥

अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयन इति शास्त्रोक्तं विदुषो निर्भयत्वे भयहेतोरात्मत्वावगमं हेत्वन्तरमाह—**यस्मादिति** । वागादयोऽध्यात्ममधिदैवमग्न्यादयः ॥ ६३ ॥

ननु विदुषोऽपि हरिहरहिरण्यगर्भादीनां नमस्कार्यत्वात्तदतिक्रमे भयं संभावितमिति चेन्नेत्याह **नामादिभ्य इति** । परिपक्वायां विद्यायां विदुषो गुणाभावात्कृतकृत्यत्वान्न कर्मणा ज्ञानेन वा कर्तव्यं किञ्चिदस्तीत्यर्थः ॥ ६४ ॥

भूम्नो नामादिभ्यो विलक्षणत्वेऽपि कथमद्वयत्वमित्याशङ्क्य नामादिरूपावस्थात्रयस्याध्यस्तत्वात्तत्साक्षिणस्तुरीयस्य भूम्नोऽद्वयत्वमिति वक्तुमवस्थात्रयमनुवदति—**विराडिति** । अध्यात्माधिदैवतयोरेकत्वाभिप्रायेण विराड्वैश्वानरादिरूपेणावस्थात्रयमुक्तम् ॥ ६५ ॥

वाचारम्भणमात्रत्वात्सुषुप्तादित्रिकं त्वसत् ।
सत्यो ब्रह्माहमित्येवं सत्यसन्धो विमुच्यते ॥६६॥
भारूपत्वाद्यथा भानोर्नाहोरात्रे तथैव च ।
ज्ञानाज्ञाने न मे स्यातां चिद्रूपत्वाविशेषतः ॥६७
शास्त्रस्यानतिशङ्क्यत्वाद्ब्रह्मैव स्यामहं सदा ।
ब्रह्मणो मे न हेयं स्याद्ग्राह्यं वेति च संस्मरेत् ॥६८॥
अहमेव च भूतेषु सर्वेष्वेको नभो यथा ।
मयि सर्वाणि भूतानि पश्यन्नेवं न जायते ॥६९॥
न बाह्यं मध्यतो वाऽन्तर्विद्यतेऽन्यत्स्वतः क्वचित् ।
अबाह्यान्तःश्रुतेः किञ्चित्तस्माच्छुद्धः स्वयंप्रभः ॥७०॥
नेति नेत्यादिशास्त्रेभ्यः 'प्रपञ्चोपशमोऽद्वयः' ।
अविज्ञातादिशास्त्राच्च नैव ज्ञेयो ह्यतोऽन्यथा ॥७१॥
सर्वस्यात्माऽहमेवेति ब्रह्म चेद्विदितं परम् ।
स आत्मा सर्वभूतानामात्मा ह्येषामिति श्रुतेः ॥७२॥

---

तस्यावस्थात्रयस्य मिथ्यात्वे सति तत्साक्षिणो वस्तुभूतस्याहं ब्रह्मेति सम्यग्ज्ञानान्मुक्तिरित्याह—**वाचारम्भणेति** ॥ ६६ ॥

आत्माज्ञानादध्यस्तः संसारस्तज्ज्ञान्मुक्तो भवतीत्युक्ते ज्ञानाज्ञानयोरात्मधर्मत्वं स्यादित्याशङ्क्याह—**भारूपत्वादिति** ॥ ६७ ॥

आत्मनो निर्विशेषत्वशास्त्रप्रामाण्याद्ब्रह्मैवाहं सदा स्यामिति स्मरेत् तस्य मे ब्रह्मणस्त्याज्यमादेयं वा नास्तीति सर्वदाऽनुसन्दध्यादित्याह—**शास्त्रस्येति** ॥ ६८ ॥

किं तद् ब्रह्मात्मपरं शास्त्रं किं वा ब्रह्मात्मत्वं सर्वदाऽनुसन्दधानस्य फलमित्याशङ्क्य 'यस्तु सर्वाणि भूतानि' इत्यादिमन्त्रमुदाहरन्नुत्तरमाह—**अहमेवेति** ॥ ६९ ॥

तदेतद्ब्रह्मापूर्वमनपरमित्यादिवाक्यमपि निर्विशेषब्रह्मात्मपरमस्तीत्याह—**न बाह्यमिति** ! उक्तं श्रुत्यर्थमाश्रित्य फलितमाह—**तस्मादिति** ॥ ७० ॥

शास्त्रान्तराण्याश्रित्य सर्वप्रपञ्चसंस्पर्शशून्यत्वमात्मनो दर्शयति—**नेति नेत्यादीति** । कार्यकारणरहितश्च अन्यदेव तद्विदितादित्यादिशास्त्रादात्मेत्याह—**अविज्ञातादीति** । तस्मान्मुमुक्षुणा सप्रपञ्चत्वेन न ज्ञेय इत्याह—**नैव ज्ञेयो ह्यतोऽन्यथेति** ॥ ७१ ॥

एवमुक्तलक्षणं ब्रह्माऽऽत्मत्वेन पश्यतः किं स्यादित्यपेक्षायामाह—**सर्वस्यात्मेति** ॥ ७२ ॥

जीवश्चेत्परमात्मानं स्वात्मानं देवमञ्जसा ।
देवो[वेदो]पास्यः स देवानां पशुत्वाच्च निवर्तते ॥७३॥
अहमेव सदात्मज्ञः शून्यस्त्वन्यैर्यथाम्बरम् ।
इत्येवं सत्यसन्धत्वादसद्धाता न बध्यते ॥७४॥
कृपणास्तेऽन्यथैवातो विदुर्ब्रह्म परं हि ये ।
स्वराड्योऽनन्यदृक् स्वस्थस्तस्य देवा असन्वशे ॥७५॥
हित्वा जात्यादिसम्बन्धान्वाचोऽन्याः सह कर्मभिः ।
ओमित्येवं स्वमात्मानं सर्वं शुद्धं प्रपद्यथ ॥७६॥
सेतुं सर्वव्यवस्थानामहोरात्रादिवर्जितम् ।
तिर्यगूर्ध्वमधः सर्वं सकृज्ज्योतिरनामयम् ॥७७॥
धर्माधर्मविनिर्मुक्तं भूतभव्यात्कृताकृतात् ।
स्वमात्मानं परं विद्याद्विमुक्तं सर्वबन्धनैः ॥७८॥
अकुर्वन्सर्वकृच्छुद्धस्तिष्ठन्नत्येति धावतः ।
मायया सर्वशक्तित्वादजः सन् बहुधा मतः ॥७९॥
राजवत्साक्षिमात्रत्वात्सान्निध्याद्भ्रामको यथा ।
भ्रामयञ्जगदात्माहं निष्क्रियोऽकारकोऽद्वयः ॥८०॥

---

उक्तसाधनसम्पन्नो जीवन्नेव ब्रह्मत्वं विदित्वा देवानां पशुभावान्निवृत्तः सन् कृतकृत्यो भवतीत्याह—**जीवश्चेति** ॥ ७३ ॥

यदुक्तं सत्यसन्धो विमुच्यत इति तदेव स्पष्टयति—**अहमेवेति** । असद्धातेत्यसतः सकार्यस्याज्ञानस्य नाशयितेत्यर्थः ॥ ७४ ॥

एवंविधज्ञानाभावादितरे पशुभूताः शोच्या भवन्तीत्याह—**कृपणा इति** । यो यथोक्तलक्षणं वेद स पशुभावाद् व्यावृत्तो मुच्यत इत्याह—**स्वराडिति**। असन्निति छान्दसः प्रयोगः। आसन्निति तु वक्तव्यम् तस्य ब्रह्मविदः सर्वे देवा वशे वर्त्तन्त इत्यर्थः ॥ ७५ ॥

यत आत्मज्ञानादेव कृतकृत्यता तस्मादात्मज्ञाने मुमुक्षुभिरोङ्कारद्वारा प्रयतितव्यमिति शिष्यान् शिक्षयति—**हित्वेति** ॥ ७६ ॥

तमेव प्रतिपत्तव्यमात्मानं विशिनष्टि—**सेतुमिति । धर्माधर्मेति च** । उक्तविशेषणमात्मानं किमिति विद्यादित्यपेक्षायामाह—**स्वमिति** ॥ ७७-७८ ॥

कर्त्तृत्वादिश्रवणादात्मनो बन्धरहितत्वं कथमित्याशङ्क्य कर्त्तृत्वादेर्मायामयत्वादित्याह—**अकुर्वन्निति** । धावतो मनआदीन्प्राणानतीत्य गच्छति तत्र तत्र चैतन्याभासस्याभिव्यक्तेस्तत्रात्मा गत इव लक्ष्यत इत्यर्थः ॥ ७९ ॥

एतदेव प्रपञ्चयति—**राजवदिति** ॥ ८० ॥

**निर्गुणं निष्क्रियं नित्यं निर्द्वन्द्वं यन्निरामयम् ।**
**शुद्धं बुद्धं तथा मुक्तं तद्ब्रह्मास्मीति धारयेत् ॥८१॥**
**बन्धं मोक्षं च सर्वं यत इदमुभयं हेयमेकं द्वयं च**
**[1]ज्ञेयाज्ञेयाभ्यतीतं परममधिगतं तत्त्वमेकं विशुद्धम् ।**
**विज्ञायैतद्यथावच्छ्रुतिमुनिगदितं शोकमोहावतीतः**
**सर्वज्ञः सर्वकृत्स्याद्भवभयरहितो ब्राह्मणोऽवाप्तकृत्यः ॥८२॥**
**न स्वयं स्वस्य नान्यश्च नान्यस्यात्मा च हेयगः ।**
**उपादेयो न चाप्येवमिति सम्यङ्मतिः स्मृता ॥८३॥**
**आत्मप्रत्यायिका ह्येषा सर्ववेदान्तगोचरा ।**
**ज्ञात्वैतां हि विमुच्यन्ते सर्वसंसारबन्धनैः ॥८४॥**

---

यस्मादेवमात्मा स्वतो नित्यशुद्धबुद्धमुक्तब्रह्मस्वभावस्तस्मात्तं तथैव जानीयादित्याह—**निर्गुणमिति** । भूयोऽपि पथ्यं वक्तव्यमिति न्यायान्नैतेषु श्लोकेषु पौनरुक्त्यं शङ्कितव्यमिति भावः ॥८१॥

उक्तमर्थजातं संक्षिप्य प्रतिपत्तिसौकर्यार्थं कथयति—**बन्धमिति** । सर्वं पूर्वोक्तं निःशेषं बन्धं सुखदुःखात्मकं, मोक्षं ब्रह्मस्वरूपावस्थानं विज्ञाय कृतकृत्यः स्यादिति सम्बन्धः । यस्मादज्ञानाद्बन्धो यस्माच्च ज्ञानान्मोक्षस्तदिदमुभयं बन्धमोक्षाख्यं ससाधनं ज्ञात्वा तथैकमनुवृत्तं कारणं द्वयञ्च व्यावृत्तं कार्यमुभयं हेयं विज्ञाय ज्ञेयाज्ञेयाभ्यामतीतं यत्परं तत्त्वं ब्रह्म वेदान्तेष्वधिगतमद्वितीयमशेषसंसार-संस्पर्शशून्यं तच्च यथावदेव श्रुतिभिर्मुनिभिश्च निगदितं प्रत्यक्त्वेन प्रतिपद्य शोकमोहावतीतो भवति । तत्र को मोहः कः शोक एकत्वमनुपश्यत इति श्रुतेः । यथोक्ततत्त्वज्ञानतश्च सर्वज्ञो विज्ञायते ज्ञातव्यवस्त्वन्तराभावात् । कर्त्तव्याभावाच्च सर्वकृदसौ संपद्यते । उक्तादेव ज्ञानाद्भवभयरहितश्च निश्चीयते । 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति श्रुतेः । 'अथ ब्राह्मण' इति श्रुतेर्ब्रह्मभावमापन्नश्च तज्ज्ञानाद्भवति तदाप्त्या च सकलकर्मफलावाप्तिद्वारा कृतकृत्यतामाप्नोति । 'एतद्बुद्ध्वा बुद्धि-मान्स्यात्कृतकृत्यश्च भारते'ति स्मृतेरित्यर्थः ॥ ८२ ॥

कथमात्मानं जानन्कृतकृत्यः स्यादित्यपेक्षायामाह—**न स्वयमिति** । स्वस्य हेयत्वं न गम्यते नाप्युपादेयो भवति । एकस्मिन्कर्मकर्तृभावासम्भवात् । नचान्यः स्वस्योपादेयो हेयो वा भवितुमुत्सहते । अद्वितीये स्वात्मन्यन्यस्याभावात् । न चान्यस्यान्यो वा स्वयं वाऽऽत्मा हेयः स्यादुपादेयो वा यथोक्त-न्यायाविशेषात् उक्तलक्षणा धीः सम्यङ्मतिर्ब्रह्मविद्भिः स्मृता । तस्मादेवं जानन्कृतकृत्यः स्यादित्यर्थः ॥ ८३ ॥

कूटस्थचैतन्यैकरसे पूर्णे वस्तुनि हानाद्यसंभवान्न हेयमुपादेयं वा किञ्चिदस्तीत्येवंविधाया धियः सम्यङ्मतित्वे हेतुमाह—**आत्मप्रत्यायिकेति** । आत्मानं ब्रह्मत्वेन प्रत्याययतीत्यात्मप्रत्यायिका विदुषां स्वानुभवारूढा वेदान्तप्रसिद्धा च यथोक्ता मतिः । एतां ज्ञात्वा लब्ध्वा मुच्यन्ते यस्मात्तस्मादेव सम्यङ्-मतित्वमित्यर्थः ॥ ८४ ॥

---

१. ज्ञेयं ज्ञेयाभ्यतीतं—रामतीर्थपाठः ।

रहस्यं सर्ववेदानां देवानां चापि यत्परम् ।
पवित्रं परमं ह्येतत्तदेतत्संप्रकाशितम् ॥८५॥
नैतद्देयमशान्ताय रहस्यं ज्ञानमुत्तमम् ।
विरक्ताय प्रदातव्यं शिष्यायानुगताय च ॥८६॥
ददतश्चात्मनो ज्ञानं निष्क्रयोऽन्यो न विद्यते ।
ज्ञानमिच्छंस्तरेत्तस्मायुक्तः शिष्यगुणैः सदा ॥८७॥
ज्ञानं ज्ञेयं तथा ज्ञाता यस्मादन्यन्न विद्यते ।
सर्वज्ञः सर्वशक्तिर्यस्तस्मै ज्ञानात्मने नमः ॥८८॥
विद्यया तारिताः स्मो यैर्जन्ममृत्युमहोदधिम् ।
सर्वज्ञेभ्यो नमस्तेभ्यो गुरुभ्योऽज्ञानसंकुलम् ॥८९॥

## ॥ तत्त्वमसिप्रकरणम् ॥ १८ ॥

येनात्मना विलीयन्ते उद्भवन्ति च वृत्तयः ।
नित्यावगतये तस्मै नमो धीप्रत्ययात्मने ॥ १ ॥

---

प्रकरणोक्तं ज्ञानमिदानीं स्तौति—**रहस्यं सर्ववेदानामित्यादि** ॥ ८५ ॥

एतस्य गोपनीयत्वं सूचयति—**नैतद्देयमित्यादिना** । तस्यानुपयोगशङ्कां शिथिलयति-**विरक्तायेति** ॥ ८६ ॥

एवंलक्षणं ज्ञानं प्रयच्छन्नाचार्यो यस्मात्कृतकृत्यत्वान्न प्रलोभादिना तत्प्रदातुं प्रवर्त्तते तस्मान्मुमुक्षुरमानित्वादिशिष्यगुणसंपन्नः स्यात् यथा कृपयाऽऽचार्यो विद्यां दद्यादित्याह—**ददतश्चेति** ॥ ८७ ॥

प्रकरणस्यादाविवोपसंहारेऽपि देवतानमस्कारं तद्भक्तेर्विद्याप्राप्तावन्तरङ्गत्वज्ञापनार्थं प्रकरोति—**ज्ञानं ज्ञेयं तथेत्यादिना** ॥ ८८ ॥

पूर्ववद्गुरुभक्तेरपि ज्ञानप्राप्तावन्तरङ्गत्वं ज्ञापयितुमन्तेऽपि गुरून् प्रणमत्याचार्यः—**विद्यया तारिताः स्मो यैरित्यादिना** । अज्ञानसंकुलं मिथ्याज्ञानबहुलम् । जन्ममृत्यूपेतं संसारसमुद्रं विद्यया यैस्तारिताः स्मस्तेभ्यो गुरुभ्यो नमो भूयादित्यर्थः ॥ ८९ ॥

॥ विवृतं सम्यङ्मतिप्रकरणं सप्तदशम् ॥

## तत्त्वमसिप्रकरणम् ॥ १८ ॥

पूर्वस्मिन्प्रकरणे ब्रह्मात्मविषयमपरोक्षज्ञानं मोक्षसाधनं वेदान्तेभ्यो भवतीत्युक्तम् । तदयुक्तम् । वेदान्तानां स्वर्गकामादिवाक्यवत्परोक्षज्ञानहेतुत्वादपरोक्षज्ञानं तु प्रसंख्यानादेव सिद्ध्यतीति केचित् । तन्निराकरणार्थं प्रकरणान्तरं प्रारभमाणो देवतानमस्कारव्याजेन वेदान्तवेद्यमपरोक्षब्रह्मात्मानमन्तःकरणतद्वृत्तिभावाभावसाक्षिणं कूटस्थावगतिरूपं प्रकरणप्रतिपाद्यं दर्शयति—**येनात्मनेति** ॥ १ ॥

प्रमथ्य वज्रोपमयुक्तिसंभृतैः श्रुतेररातीञ्शतशो वचोऽसिभिः ।
ररक्ष वेदार्थनिधिं विशालधीः नमो यतीन्द्राय गुरोर्गरीयसे ॥ २ ॥

नित्यमुक्तः सदेवास्मीत्येवं चेन्न भवेन्मतिः ।
किमर्थं श्रावयत्येवं मातृवच्छ्रुतिरादृता ॥ ३ ॥

सिद्धादेवाहमित्यस्माद्युष्मद्धर्मो निषिध्यते ।
रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनैः ॥ ४ ॥

शास्त्रप्रामाण्यतो ज्ञेया धर्मादेरस्तिता यथा ।
विषापोहो यथा ध्यानाद् ह्रुतिः स्यात्पाप्मनस्तथा ॥ ५ ॥

सद्ब्रह्माहं करोमीति प्रत्ययावात्मसाक्षिकौ ।
तयोरज्ञानजस्यैव त्यागो युक्ततरो मतः ॥ ६ ॥

सदस्मीति प्रमाणोत्था धीरन्या तन्निभोद्भवा ।
प्रत्यक्षादिनिभा वाऽपि बाध्यते दिग्भ्रमादिवत् ॥ ७ ॥

---

स्वोक्तेऽर्थे मुमुक्षूणां विश्वासार्थं स्वसंप्रदायशुद्धिं स्वाचार्यगुणोपवर्णनपूर्वकं कथयति—**प्रमथ्येति** ॥ २ ॥

एवं परापरगुरुनमस्कारव्याजेन प्रकरणार्थं स्वसंप्रदायशुद्धिं चोक्त्वा तत्त्वमस्यादिवाक्यादेवापरोक्षज्ञानमिति प्रकरणसिद्धान्तमाह—**नित्यमुक्त** इति ॥ ३ ॥

नित्यापरोक्षस्वभावत्त्वादेवात्मनो वाक्यादेवापरोक्षज्ञानेन तदज्ञानतत्कार्यनिवृत्तिः फलतीत्याह—**सिद्धादेवेति** । अस्मत्पदलक्ष्यादहमित्यपरोक्षतया सिद्धादात्मनः सकाशाद्युष्मद्धर्म्मः समूलो युक्त्या सहितैस्तत्त्वमस्यादिशासनैर्निषिद्ध्यते । यथा रज्ज्वामारोपिता सर्पबुद्धिर्युक्त्या प्रकाशोत्पत्त्या निवर्त्तते तद्वदित्यर्थः ॥ ४ ॥

तन्निवृत्तिं दृष्टान्ताभ्यां स्पष्टयति—**शास्त्रेति** । ध्यानान्मन्त्रबीजादेर्गायत्र्यादिजपाच्च पापहानिर्यथा पाप्मशब्देनानर्थराशिर्गृह्यते । तथा तत्त्वमसिवाक्यं शक्तिविशेषादपरोक्षज्ञानं जनयतीत्यर्थः ॥ ५ ॥

ननु तत्त्वमसिवाक्योत्थप्रत्ययवदहं करोमीति प्रत्ययो दृश्यते तेन विरोधात् अहं ब्रह्मास्मीति प्रत्ययस्य कथं प्रतिष्ठा स्यात्तत्राह—**सद्ब्रह्माहमिति** ॥ ६ ॥

अज्ञानजस्यैव त्यागो नान्यस्येत्यभ्युपगमेऽपि कोऽज्ञानजः को वा प्रमाणज इति जिज्ञासायामाह—**सदस्मीति** । ब्रह्मास्मीति धीस्तत्त्वमस्यादिवाक्योत्थत्वाद्बलवती । करोमीति धीस्तु तन्निभोद्भवा प्रमाणाभासोत्था बाध्येत्यर्थः । वाक्यजन्यज्ञानस्य प्रत्यक्षबाधनसामर्थ्यं नास्तीत्याशङ्क्याह—**प्रत्यक्षादीति** । यथा प्राची प्रतीचीति वा प्रत्यक्षनिश्चयप्राप्तापि दिग्बुद्धिराप्तवाक्योत्थविज्ञानादानुमानिकज्ञानाद्वा बाध्यते । तथा ब्रह्मास्मीत्यपि धिया कर्ताऽस्मीत्यादिधीरध्यक्षवदवस्थितापि बाध्यैवेत्यर्थः ॥ ७ ॥

**कर्ता भोक्तेति यच्छास्त्रं लोकबुद्ध्यनुवादि तत् ।**
**सदस्मीति श्रुतेर्जाता बाध्यतेऽन्यैतयैव धीः ॥ ८ ॥**
**सदेव त्वमसीत्युक्ते नात्मनो मुक्तता स्थिरा ।**
**प्रवर्तते प्रसंचक्षामतो युक्त्याऽनुचिन्तयेत् ॥ ९ ॥**
**सकृदुक्तं न गृह्णाति वाक्यार्थज्ञोऽपि यो भवेत् ।**
**अपेक्षतेऽत एवान्यदवोचाम द्वयं हि तत् ॥१०॥**
**नियोगोऽप्रतिपन्नत्वात्कर्मणां स यथा भवेत् ।**
**अविरुद्धो भवेत्तावद्यावत्संवेद्यता दृढा ॥११॥**
**चेष्टितं च यतो मिथ्या स्वच्छन्दः प्रतिपद्यते ।**
**प्रसङ्ख्यानमतः कार्यं यावदात्माऽनुभूयते ॥१२॥**
**सदस्मीति च विज्ञानमक्षजो बाधते ध्रुवम् ।**
**शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः ॥१३॥**

---

ब्रह्मास्मीति बुद्धेरिव कर्तृत्वभोक्तृत्वबुद्धेरपि कर्त्ता भोक्ता विज्ञाताऽऽमेति शास्त्रजन्यत्वाविशेषान्न ब्रह्मास्मीति बुद्धया बाध्यत्वसिद्धिरित्याशङ्क्याह—**कर्तेति** । अनयोर्बुद्धयोरेवं व्यवस्थितत्त्वादेतया शास्त्रोत्थया ब्रह्मास्मीति धिया कर्तृत्वादिधीरन्या बाध्यत इति युक्तमेवोक्तमित्यर्थः ॥ ८ ॥

तत्त्वमस्यादिवाक्यस्यापरोक्षब्रह्मात्मप्रतिपादकत्वे प्रतिपादिते स्वयूथ्यमतमुत्थापयति—**सदेवेति** । प्रसंचक्षां प्रसंख्यानं शब्दावृत्तिं युक्त्या सहाभ्यसेत् । त्वं तदेवेति वाक्यादेव निर्विचिकित्सब्रह्मात्माप्रतिपत्तेरित्यर्थः ॥ ९ ॥

नन्ववान्तरवाक्यार्थापरिज्ञानात्सदस्मीत्यप्रतिपत्तिः, नतु वाक्यासामर्थ्यात् । नहि पदार्थज्ञानादृते वाक्यार्थज्ञानमित्याशङ्क्याह—**सकृदुक्तमिति** । योऽप्यवान्तरवाक्यात्तदर्थभूतं पदार्थं जानाति सोऽपि सकृदुक्तं तत्त्वमसिवाक्यार्थं यतो न प्रतिपद्यते । अत एवान्यत्सहकारिकारणं वाक्यमपेक्ष्यते । तच्च द्वयं शब्दानुचिन्तनं युक्त्यनुचिन्तनं च पूर्वश्लोकेऽवोचमित्यर्थः ॥ १० ॥

ननु तत्त्वमस्यादिवाक्ये विधिर्नोपलभ्यते । ब्रह्मात्मभावस्य स्वतः सिद्धेर्मुमुक्षोर्नियोगो नोपपद्यते तत्राह—**नियोगेति** । वाक्यमात्रादैक्यस्याप्रतिपन्नत्वात्तत्प्रतिपत्तिदार्ढ्यपर्यन्तं प्रसङ्ख्यानविषये नियोगस्तावदविरुद्धः सिद्ध्येत् । यथा ज्योतिष्टोमादिकर्मणां नियोगो भवेत्तथेत्यर्थः ॥ ११ ॥

किञ्च विधिमन्तरेण स्वेच्छातश्चेद्वाक्यार्थं प्रतिपद्यते तदा पारमहंस्यमपि चेष्टितं यमनियमात्मकं मिथ्या प्रसज्येत तस्मात्प्रसंख्यानमात्मसाक्षात्कारपर्यन्तं नियोगवशात्कार्यमित्याह—**चेष्टितमिति** ॥ १२ ॥

किञ्चाक्षजो बोधो दृढसंस्कारः शब्दोत्थं विज्ञानं बाधते रागादिदोषैर्मुमुक्षुर्बहिराकृष्यते । तत्परिहारार्थमपि प्रसंख्यानं विधिना कार्यमित्याह—**सदस्मीति** ॥ १३ ॥

श्रुतानुमानजन्मानौ सामान्यविषयौ यतः ।
प्रत्ययावक्षजोऽवश्यं विशेषार्थो निवारयेत् ।१४॥
वाक्यार्थप्रत्ययी कश्चिन्निर्दुःखो नोपलभ्यते ।
यदि वा दृश्यते कश्चिद्वाक्यार्थश्रुतिमात्रतः ॥१५॥
निर्दुःखोऽतीतदेहेषु कृतभावोऽनुमीयते ।
चर्या नोऽशास्त्रसंवेद्या स्यादनिष्टं तथा सति ।१६॥
सदसीति फलं चोक्त्वा विधेयं साधनं यतः ।
न तदन्यत्प्रसङ्ख्यानात्प्रसिद्धार्थमिहेष्यते ॥१७॥
तस्मादनुभवायैव प्रसंचक्षीत यत्नतः ।
त्यजन्साधनतत्साध्यविरुद्धं शमनादिमान् ॥१८॥
नैतदेवं रहस्यानां नेति नेत्यवसानतः ।
क्रियासाध्यं पुरा श्राव्यं न मोक्षो नित्यसिद्धतः ।१९॥

---

न केवलं चिरनिरूढत्वेन प्रत्यक्षस्य प्राबल्यं विशेषविषयत्वादपि तस्य बलवत्त्वं मन्तव्यमित्याह—**श्रुतानुमानेति** ॥ १४ ॥

यदि च वाक्यार्थज्ञानमात्रात्प्रसंख्याननिरपेक्षात्कृतकृत्यता स्यात्तदा केनचिद् वाक्यार्थज्ञानिना निर्दुःखेन भवितव्यं न चासौ दृष्टोऽस्तीत्याह—**वाक्यार्थेति** । वामदेवादिर्वाक्यार्थज्ञानी कृतकृत्यो दृष्टोऽस्तीत्याशङ्क्याह—**यदि वेति** ॥ १५ ॥

**निर्दुःख इति** । पूर्वदेहेषु कृतभावोऽनुष्ठितप्रसङ्ख्यानोऽनुमीयते निर्दुःखत्वलिङ्गेनेत्यर्थः । किञ्च विध्यनभ्युपगमे नोऽस्माकं पारमहंसी चर्या शास्त्रसंवेद्या न स्यात् । तथा सति तत्परित्यागेऽप्यारूढपतितत्वं न सिद्ध्येत् तच्चानिष्टमित्याह—**चर्येति** ॥ १६ ॥

कस्तर्हि प्रसंख्यानविधिवादे सिद्धब्रह्मात्मोपदेशस्यार्थः स्यादित्याशङ्क्याह—**सदसीति** । ब्रह्मास्मीति वर्तमानापदेशेन साधनविधानाय फलमभिधीयते सर्वत्र फलमुक्त्वा साधनं विधेयमित्यभ्युपगमादित्यर्थः । कस्मात्तर्हि ज्योतिष्टोमादिकमेव साधनमिह न विधीयेत तत्राह—**न तदिति** । प्रसंख्यानादन्यत्प्रसिद्धार्थं स्वतः सिद्धार्थव्यञ्जनार्थं साधनमिह वेदान्तेषु नेष्यते । ज्योतिष्टोमादेर्व्यञ्जकत्वसामर्थ्याभावादित्यर्थः ॥ १७ ॥

पूर्वपक्षमुपसंहरति—**तस्मादिति** । साधनं प्रसंख्यानं तत्साध्यमैकात्म्यज्ञानं ताभ्यां विरुद्धकर्मनिष्ठत्वं तत्त्यजन् प्रसंख्यानं शमदमादियुक्तः सन्कुर्यादित्यर्थः ॥ १८ ॥

परिहारमुपक्रमते—**नैतदेवमिति** । नेतिनेतीति सकलविशेषप्रतिषेधेन वेदान्तानां ब्रह्मात्म-बोधने पर्यवसानान्नियोगनिष्ठत्वं न प्रतिभातीत्यर्थः । यत्तु सिद्धब्रह्मात्मस्वरूपकथनं प्रसंख्यानानुष्ठानार्थं न तावता कृतकृत्यतार्थमित्युक्तं सदसीति फलं चोक्त्वेत्यादिना तत्राह—**क्रियेति** । यत् क्रियासाध्यं फलं तदेव क्रियापेक्षया प्रवृत्त्यङ्गत्वेन पूर्वमेव श्राव्यं न मोक्षस्तदा कथनीयः । नित्यसिद्धत्वेनाननुष्ठेयत्वात्तस्मात्तावता कृतकृत्यतार्थमेव तत्त्वमसिवाक्यमपरोक्षब्रह्मज्ञानोत्पादनेनाज्ञानतत्कार्यनिवर्त्तनेनापरोक्षाद्वितीयब्रह्मात्मस्वरूपे पर्यवस्यतीत्यर्थः ॥ १९ ॥

पुत्रदुःखं यथाऽध्यस्तं पित्राऽदुःखे स्व आत्मनि ।
अहंकर्त्रा तथाऽध्यस्तो नित्यादुःखे स्व आत्मनि ॥२०॥
सोऽध्यासो नेति नेतीति प्राप्तवत्प्रतिषिध्यते ।
भूयोऽध्यासविधिः कश्चित्कुतश्चिन्नोपपद्यते ॥२१॥
आत्मनीह यथाऽध्यासः प्रतिषेधस्तथैव च ।
मलाध्यासनिषेधौ खे क्रियेते च यथाऽबुधैः ॥२२॥
प्राप्तश्चेत्प्रतिषिध्येत मोक्षोऽनित्यो भवेद्ध्रुवम् ।
अतोऽप्राप्तनिषेधोऽयं दिव्यग्निचयनादिवत् ॥२३॥
संभाव्यो गोचरे शब्दः प्रत्ययो वा न चान्यथा ।
न संभाव्यौ तदात्मत्वादहंकर्तुस्तथैव च ॥२४॥
अहंकर्त्रात्मनि न्यस्तं चैतन्ये कर्तृतादि यत् ।
नेति नेतीति तत्सर्वं साहंकर्त्रा निषिध्यते ॥२५॥

---

तत्त्वमसिवाक्यमपरोक्षाद्वितीयब्रह्मात्मज्ञानद्वारा तदज्ञानं तदध्यस्तं च दुःखित्वादिसंसारं निवर्तयतीति वक्तुं ब्रह्मात्मन्यज्ञानेनाध्यस्तं दुःखादीत्यत्र दृष्टान्तमाह—**पुत्रदुःखमिति** । उक्तदृष्टान्तानुसारेणाहंकर्त्रा साभासाहंकाराविवेकेनात्मना स्वे दुःखादिरहिते दुःखादिसाक्षिण्यात्मनि परिशुद्धे तदविवेकाद्दुःखादि परिकल्पितमिति दार्ष्टान्तिकमाह—**अहं कर्त्रेति** । आत्मनि दुःखमिति शेषः ॥ २० ॥

अपरोक्षब्रह्मात्मन्यज्ञानेन प्राप्तोऽध्यासो ब्रह्मात्मविषयेण विज्ञानेनाज्ञाननिवृत्त्या निवर्त्तत इत्याह—**सोऽध्यासः** । प्राप्तवदिति वस्तुवृत्त्या अप्राप्तमपि रजतादिवन्निषिध्यत इत्यर्थः । सुषुप्तावस्थायामिव ब्रह्मात्मज्ञानेनाध्यासो निवृत्तोऽपि पुनरुद्भविष्यतीत्याशङ्क्य कारणस्याज्ञानस्य ज्ञानेन बाधितत्वान्नैवमित्याह—**भूय इति** । विधिरुद्भवः । कारणस्याज्ञानस्य निवृत्तत्वादित्यर्थः ॥ २१ ॥

नन्वविषयब्रह्मात्मनि विषयिण्यध्यासो न सिद्ध्यति पुरोऽवस्थिते शुक्तिकादौ विषये विषयान्तरस्य रजतादेरध्यासदर्शनादित्याशङ्क्य व्यभिचारमाह—**आत्मनीहेति** । यथा देहव्यतिरिक्तात्मवादिनामात्मनि जन्मजराध्यासस्तत्प्रतिषेधश्च दृश्यते यथा वाऽविवेकिभिराकाशे मलाध्यासनिषेधाविन्द्रियाग्राह्येऽपि क्रियेते तथाऽऽत्मनि प्रसिद्धिमात्रेण दुःखाद्यध्यासनिषेधौ भवतोऽतः शक्यौ परिहर्त्तुमित्यर्थः ॥ २२ ॥

कस्मात्पुनरात्मनि परमार्थवृत्त्यैव प्राप्तः संसारो न निषिध्यते तत्राह—**प्राप्तश्चेत्** । प्रमाणसिद्धस्य बन्धस्य प्रतिषेधे तन्निवृत्तिलक्षणस्य मोक्षस्यागन्तुकत्वात्तदनित्यत्वमावश्यकं स्यादित्यर्थः । प्रमाणप्राप्तस्य प्रतिषेधासंभवात्पृथिव्यामिवाग्निचयनं नान्तरिक्षे न दिवीति भ्रमप्राप्तं यथा प्रतिनिषिध्यते तथा प्रमाणाप्राप्तस्य संसारस्यात्मनि भ्रान्तिसिद्धस्य प्रतिषेधोऽयमिति फलितमाह—**अतोऽप्राप्तेति** ॥२३॥

आत्मनि बन्धसम्बन्धबोधकप्रमाणाभावादपि न तत्र बन्धस्य सत्यताप्राप्तिरस्तीत्याह—**संभाव्य इति । न चान्यथेति** । अगोचरे शब्दः प्रत्ययो वा लोके न संभाव्यते । ततश्चात्मन्यपि शब्दप्रत्ययौ न संभाव्यौ शब्दप्रत्यययोरपि तस्य स्वरूपत्वात् । अहंकर्त्तुश्च स्वरूपत्वात्स्वरूपे च शब्दः प्रत्ययः प्रत्ययी वा न प्रवर्त्तत इत्यर्थः ॥ २४ ॥

आत्मनि प्रमाणप्राप्तस्य प्रतिषेधायोगादज्ञानप्राप्तो बन्धो निषिध्यते तत्रेत्युपसंहरति—**अहंकर्त्रेति** ॥२५॥

**उपलब्धिः स्वयंज्योतिर्दृशिः प्रत्यक्सदक्रियः ।**
**साक्षात्सर्वान्तरः साक्षी चेता नित्योऽगुणोऽद्वयः ॥२६॥**

**सन्निधौ सर्वदा तस्य स्यात्तदाभोऽभिमानकृत् ।**
**आत्मात्मीयं द्वयं चातः स्यादहंममगोचरः ॥२७॥**

**जातिकर्मादिमत्त्वाद्धि तस्मिञ्शब्दास्त्वहंकृति ।**
**न कश्चिद्वर्तते शब्दस्तदभावात्स्व आत्मनि ॥२८॥**

**आभासो यत्र तत्रैव शब्दाः प्रत्यग्दृशि स्थिताः ।**
**लक्षयेयुर्न साक्षात्तमभिदध्युः कथंचन ॥२९॥**

**न ह्यजात्यादिमान्कश्चिदर्थः शब्दैर्निरूप्यते ॥३०॥**

**आत्माभासो यथाहंकृदात्मशब्दैस्तथोच्यते ।**
**उल्मुकादौ यथाग्न्यर्थाः परार्थत्वान्न चाञ्जसा ॥३१॥**

---

तत्त्वमस्यादिना शास्त्रेणाध्यस्तदुःखित्वादिनिषेधेऽपि कथमात्मसिद्धिरित्याशङ्क्याह—**उपलब्धिः ।** आत्मनोऽनुपलब्ध्यादिरूपत्वे प्रमाणाभावादुपलब्ध्यादिस्वभावः स चासौ स्वतः सिद्ध्यतीत्यर्थः ॥ २६ ॥

आत्मात्मीयद्वयमहंममप्रत्ययगोचरत्वेन प्रसिद्धमिति कथमात्मा स्वतः सिद्धः स्यादित्याशङ्क्याह–**सन्निधौ ।** अभिमानकृदहंकारश्चैतन्यस्य सन्निधौ सति चैतन्यवदाभाति ततश्च तदविवेकादात्माऽऽत्मीयं चेति द्वयमहं ममेति भ्रान्तिधियो गोचरः स्यादिति चिदात्मनः स्वतः सिद्धत्वे न विरुद्धतेत्यर्थः ॥ २७ ॥

तथापि शब्दप्रमेयत्वादात्मनः स्वतः सिद्धिर्नास्तीत्याशङ्क्याह—**जातीति ।** विशिष्टस्य शब्दप्रमेयत्वेऽपि केवलात्मनस्तदभावातस्य स्वतःसिद्धिरविरुद्धेत्यर्थः ॥ २८ ॥

स्वतः सिद्धे चिदात्मनि जातिगुणादिशब्दप्रवृत्तिनिमित्ताभावान्न कश्चिदपि शब्दो वर्त्तते चेत्कथं तर्हि वेदान्तवेद्यतेत्याशङ्क्याह—**आभासो** ॥ २९ ॥

यत्राहंकारादौ चिदाभासो जायते तत्रैव स्थिताः शब्दाः प्रत्यग्भूतं दृगात्मानं लक्षयेयुः न तु तं साक्षादभिदध्युरित्यत्र हेतुमाह—**नह्यजाति** ॥ ३० ॥

अहंकारातिरिक्तश्चेदात्मा लक्षणाद्वारेण वेदान्तैस्तात्पर्येण प्रतिपाद्येत तर्हि कथमहंकारे लोकस्यात्मशब्दप्रयोगः स्यादित्याशङ्क्याह—**आत्मेति ।** तथेति-आत्मवदित्यर्थः आत्माभासोपेतेऽहमादौ वर्त्तमानाः शब्दास्तत्साक्षिणं लक्षयन्ति न साक्षादभिदधतीत्यत्र दृष्टान्तमाह—**उल्मुकादौ ।** श्लोकार्द्धम् । यथोल्मुकं दहत्ययो दहतीत्यादिप्रयोगे नैवोल्मुकादिशब्दाः साक्षादेवाग्नौ प्रयुज्यन्ते तेषामलाताद्यर्थत्वात्तथापि दहतेरनुपपत्त्या लक्षणयाऽग्न्यर्थास्तथा लक्षणयाऽहमात्मादिशब्दा ब्रह्मात्मप्रतिपत्त्यर्था भवन्तीत्यर्थः ॥ ३१ ॥

**मुखादन्यो मुखाभासो यथाऽऽदर्शानुकारतः ।**
**आभासान्मुखमप्येवमादर्शाननुवर्तनात् ॥३२॥**
**अहंकृत्यात्मनिर्भासो मुखाभासवदिष्यते ।**
**मुखवत्स्मृत आत्माऽन्योऽविविक्तौ तौ तथैव च ॥३३॥**
**संसारी च स इत्येक आभासो यस्त्वहंकृतिः ।**
**वस्तु च्छाया स्मृतेरन्यन्माधुर्यादि च कारणम् ॥३४॥**
**ज्ञैकदेशो विकारो वा तदभासाश्रयः परे ।**
**अहंकर्तैव संसारी स्वतन्त्र इति केचन ॥३५॥**
**अहंकारादिसंतानः संसारी नान्वयी पृथक् ।**
**इत्येवं सौगता आहुस्तत्र न्यायो विचार्यताम् ॥३६॥**
**संसारिणां कथा त्वास्तां प्रकृतं त्वधुनोच्यते ।**
**मुखाभासो य आदर्शे धर्मो नान्यतरस्य सः ।**
**द्वयोरेकस्य चेद्धर्मो वियुक्तोऽन्यतरे भवेत् ॥३७॥**

---

आभासोयत्रेत्यत्रात्माभासः सिद्धान्तिनाऽभ्युपगतः । तस्य वस्तुत्वमवस्तुत्वं वेति वीक्षाया-मनिर्वाच्यत्वं वक्तुं दृष्टान्तमाह—**मुखादन्यो** ॥ ३२ ॥

मुखस्य मुखाभासस्य तदाश्रयस्य वा प्रतीतितो भेदं प्राप्तमुक्त्वा दार्ष्टान्तिकमाह—**अहं-कृत्यात्मेति** । आत्मात्माभासतदाश्रयाणां प्रातिभासिकभेदेऽपि वस्तुतो नात्मातिरिक्तं किञ्चिदस्ति, चिदात्मपरतन्त्रानाद्यनिर्वाच्याविद्यायां तत्कार्यो चाहंकारादौ प्रतिबिम्बद्वारा तदेव चिदात्मतत्त्वम-विद्यया संसरतीत्यर्थः ॥ ३३ ॥

स्वमतमेव दृढयितुं मतान्तरमाह—**संसारीति** । आभासस्यावस्तुत्वान्न बन्धमोक्षभाक्त्वं युक्तमित्या-शङ्क्याह—**वस्त्विति** । आभासः छायेत्यनर्थान्तरम् । नाक्रामेत्कामतश्छायामित्यादिवाक्यमत्र प्रमाणयति—**स्मृतेरिति** । अन्यच्च माधुर्यं छायावस्तुत्वे कारणमस्ति छायायामासीनस्य मुखे माधुर्योप-लब्धेः शैत्योपलब्धेश्च छाया वस्त्वेवेत्याह—**अन्यदिति** ॥ ३४ ॥

एकदेशिनां मतत्रयमाह—**ज्ञैकदेशो** । ममैवांश इति स्मृतेः परमात्मैकदेशो जीवः संसारी, व्युच्चरन्तीति श्रुतिबलाद्विकारो वा चैतन्यछायाविशिष्टोऽहंकारो वा संसारीत्यर्थः । भाट्टाद्यभिमतमाह—**अहंकर्तेति** ॥ ३५ ॥

बौद्धादिमतमाह—**अहंकारादि** । यथोक्तेषु संसारिविकल्पेषु कश्चिदन्यतमः स्वेच्छया विकल्पः स्वीक्रियतामित्याशङ्क्यान्यतमस्यापि न्याय्यत्वाभावात्प्रागुक्तसिद्धान्तसिद्धिरित्यभिसन्धायाह—**तत्रेति** । ॥ ३६ ॥

प्रासङ्गिकीं संसारिचिन्तां हित्वा प्रकृतामाभासनिरूपणां प्रस्तौति—**संसारिणामिति** । श्लोकार्द्धम् प्रकृतमाभासमेव निरूपयन्नादौ मुखाभासंदृष्टान्तत्वेनापरमार्थतयोपपादयति—**मुखाभासो** । योऽयमादर्शे मुखाभासो दृश्यते स किमादर्शमुखयोर्यस्य कस्यचिद्धर्मः किंवा मुखस्यैव धर्मोऽथवा द्वयोरेव धर्मो यदि वा

मुखेन व्यपदेशात्स मुखस्यैवेति चेन्मतम् ।
नादर्शानुविधानाच्च मुखे सत्यविभावतः ॥३८॥
द्वयोरेवेति चेत्तन्न द्वयोरेवाप्यदर्शनात् ।
अदृश्यस्य सतो दृष्टिः स्याद्राहोश्चन्द्रसूर्ययोः ॥३९॥
राहोः प्रागेव वस्तुत्वं सिद्धं शास्त्रप्रमाणतः ।
छायापक्षे त्ववस्तुत्वं तस्य स्यात्पूर्वयुक्तितः ॥४०॥
छायाक्रान्तेर्निषेधोऽयं न तु वस्तुत्वसाधकः ।
न ह्यर्थान्तरनिष्ठं सद्वाक्यमर्थान्तरं वदेत् ॥४१॥
माधुर्यादि च यत्कार्यमुष्णद्रव्याद्यसेवनात् ।
छायाया न त्वदृष्टत्वादपामेव च दर्शनात् ॥४२॥

---

वस्त्वन्तरमिति विकल्प्य पक्षासंभवं प्रतिज्ञातं प्रपञ्चयति—**द्वयोरिति** । यद्यादर्शमुखयोर्यस्य कस्यचिदाभासो धर्मो विवक्षितो मतस्तदा मुखधर्मत्वे दर्पणादिविप्रकर्षेऽपि मुखे दृश्यमानतद्धर्मरूपादिवदाभासो दृश्येत । दर्पणधर्मत्वे मुखवियोगे दर्पणे भासमाने सत्याभासो भासेत—नचैवमस्ति । तस्मादन्यतरस्याभासो धर्मो यस्य कस्यचिदित्ययुक्तमित्यर्थः ॥ ३७ ॥

कल्पान्तरमनुवदति—**मुखेनेति** । यद्यपि मुखाभास इति मुखेनाभासो व्यपदिश्यते तथापि नाभासो मुखस्यैव धर्मो दर्पणानुविधानान्मुखैकधर्मत्वेऽपि तदयोगात् । किंचासत्यपि मुखे दर्पणवियोगे नाभासो भवति तस्मान्न मुखस्यैवाभासो धर्मः स्यादिति दूषयति—**नादर्शेति** ॥ ३८ ॥

कल्पान्तरमनूद्य प्रत्याह—**द्वयोरेवेति** । नहि मुखदर्पणयोरुभयोरपि वियुक्तयोराभासो दृश्यते नापि संयुक्तयोरसौ धर्मो यथा कथञ्चन संयोगेऽपि तदुपलम्भासंभवादित्यर्थः । आभासस्य वस्त्वन्तरत्वमिति पक्षान्तरं दृष्टान्तपूर्वकमाशङ्कते—**अदृश्यस्येति** । यथेह लोके सर्वकरणैरनुपलब्धस्यापि राहोर्विद्यमानस्य दर्शनं चन्द्रे सूर्ये वा उपाधौ कदाचिद्भवेत् । एवं मुखाभासयोर्विषयिविषयसम्बन्धोपाधावाभासस्य वस्तुभूतस्यैवाभिव्यक्तिः स्यादित्यर्थः ॥ ३९ ॥

प्रागेव चन्द्रादिसम्बन्धाद्वस्तुत्वं ज्योतिःशास्त्रप्रामाण्यादेव राहोरधिगतम् । प्रकृते त्वादर्शसम्बन्धात्पूर्वमूर्ध्वं वा नह्यतिरिक्तवस्तुता मुखाभासस्य केनचित्प्रमाणेनावगम्यत इति दूषयति—**राहोरिति** । किंच भूम्यादिच्छायैव राहुरित्यङ्गीकाराद्दृष्टान्तेऽपि नास्ति सम्प्रतिपत्तिरित्याह—**छायेति** । तस्येति राहोः उक्तिः । मुखाभासो य आदर्श इत्यादिनोक्तां युक्तिं तत्र हेतूकरोति—**पूर्वेति** । दृष्टान्तस्यावस्तुत्वान्मुखाभासोऽपि वस्तुभूतो न भवतीति भावः ॥ ४० ॥

नाक्रामेत्कामतः छायामित्यादिस्मृतेर्वस्तुत्वं छायायाः स्यादित्युक्तमित्याशङ्क्याह—**छायाक्रान्तेरिति** । ननु छायालम्बनप्रतिषेधपरमपि वचनं तस्यावस्तुत्वमपि बोधयिष्यति नेत्याह । **नहीति** । वाक्यभेदप्रसङ्गादित्यर्थः ॥ ४१ ॥

यत्तु माधुर्यादिकार्यहेतुत्वेन वस्तुत्वं छायायाः सिद्ध्येदिति तद्दूषयति—**माधुर्यादि** ॥ ४२ ॥

आत्माभासाश्रयाश्चैवं मुखाभासाश्रया यथा ।
गम्यन्ते शास्त्रयुक्तिभ्यामाभासासत्त्वमेव च ॥४३॥
न दृशेरविकारित्वादाभासस्याप्यवस्तुतः ।
नाचितित्वादहंकर्तुः कस्य संसारिता भवेत् ॥४४॥
अविद्यामात्र एवातः संसारोऽस्त्वविवेकतः ।
कूटस्थेनात्मना नित्यमात्मवानात्मनीव सः ॥४५॥
रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः ।
अवस्तुसन्नपि ह्येष कूटस्थेनात्मना तथा ॥४६॥
आत्माभासाश्रयश्चात्मा प्रत्ययैः स्वैर्विकारवान् ।
सुखी दुःखी च संसारी नित्य एवेति केचन ॥४७॥
आत्माभासापरिज्ञानाद्याथात्म्येन विमोहिताः ।
अहंकर्तारमात्मेति मन्यन्ते ते निरागमाः ॥४८॥

---

दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति—**आत्मा** । यथा मुखं तदाभासस्तदाश्रयश्चेत्येते व्यवहारतो विभक्ता भासन्ते तथैवात्मा तदाभासः तदाश्रयश्चेत्येते मिथो विलक्षणा गम्यन्ते । एको देवः सर्वभूतेषु गूढः इत्यादिशास्त्राद्बुध्यादेर्विषयान्तरस्यागमापायिनो नित्यसिद्धसाक्ष्यात्मव्यतिरेकेण स्फुरणानुपपत्तेरिति युक्तेश्चात्मास्तित्वं सिद्धम् । अग्निर्यथैको भुवनं प्रविष्ट इत्यादिशास्त्रात्कूटस्थासङ्गाद्वितीयात्मनोऽविद्यातत्कार्यसंस्पर्शानुपपत्तेः सुखदुःखाद्यनुभवासिद्धौ अज्ञानादावाभासाद्युपगमेन तदविवेकादज्ञानतत्कार्यसंस्पर्शभ्रमप्रसिद्ध्या सुखदुःखाद्यनुभवसिद्धिरित्येवमात्मकयुक्तेश्चात्माभासास्तित्वं सिद्ध्यति । 'अव्यक्तात्पुरुषः परः अक्षरात्परतः परः' इत्यादिशास्त्रादसङ्गत्वादिलक्षणस्यात्मनः साक्षादाकाशादिरूपेण परिणामायोगादनाद्यनिर्वचनीयं किञ्चिदज्ञानं तदुपाधिभूतमभ्युपगन्तव्यमिति युक्तेश्चात्माभासाश्रयो निश्चीयते । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति श्रुतेरागमापायित्वयुक्तेश्चात्माभासासत्त्वं प्रतिभाति । 'ब्रह्म वेद' इति शास्त्रात् जडत्वादियुक्तेश्चाज्ञानादेराश्रयस्याप्यसत्त्वं निश्चितमिति चशब्दार्थः । एवमात्मा तदाभासस्तदाश्रयश्चेति त्रितयमुक्तलक्षणात्सिद्धमित्यर्थः ॥ ४३ ॥

संसारमोक्षसिद्ध्यर्थमात्माभासाश्रयास्त्वयोक्ताः । न चैतेषामेकस्यापि संसारमोक्षौ युक्काविति शङ्कते—**न दृशेरिति** ॥ ४४ ॥

विचार्यमाणे संसारस्य वस्तुत्वासंभवादात्मन्यविद्यामात्रः संसारः स्यादित्युत्तरमाह—**अविद्येति** ॥ ४५ ॥

त्रयाणामविवेकादवस्तुत्वानुपपत्तेरात्मसत्तया सतावानात्मन्येवाविद्यया संसारो भातीत्युक्तं तदेव दृष्टान्तेन स्पष्टयति—**रज्जुसर्प इति** ॥ ४६ ॥

कल्पनालाघवमाश्रित्य चोदयति—**आत्मेति** । एवकारार्थे चकारः । नचागमो मूलभूतोऽस्ति तेन लाघवेऽपि स्वोत्प्रेक्षामात्रमेतत् इत्युत्तरमाह—**आत्माभासेति** ॥ ४७ ॥

**आत्मा** । आत्मा परमार्थसत्यस्तदाभासो मिथ्येति याथात्म्येन यथावस्थितरूपेणापरिज्ञानाद्विमोहिताः श्रुतिसम्प्रदायशून्यास्ते स्वोत्प्रेक्षया भ्राम्यन्तीत्यर्थः ॥ ४८ ॥

संसारो वस्तुसंस्तेषां कर्तृमोक्तृत्वलक्षणः ।
आत्माभासाश्रयाज्ञानात् संसरन्त्यविवेकतः ॥४९॥
चैतन्याभासता बुद्धेरात्मनस्तत्स्वरूपता ।
स्याच्चेत्तं ज्ञानशब्दैश्च वेदः शास्तीति युज्यते ॥५०॥
प्रकृतिप्रत्ययार्थौ यौ भिन्नावेकाश्रयौ यथा ।
करोति गच्छतीत्यादौ दृष्टौ लोकप्रसिद्धितः ॥५१॥
नानयोर्द्व्याश्रयत्वं च लोके दृष्टं स्मृतौ तथा ।
जानात्यर्थेषु को हेतुर्द्व्याश्रयत्वे निगद्यताम् ॥५२॥
आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।
उभयं चाविवेकेन जानातीत्युच्यते मृषा ॥५३॥
न बुद्धेरवबोधोऽस्ति नात्मनो विद्यते क्रिया ।
अतो नान्यतरस्यापि जानातीति च युज्यते ॥५४॥
नाऽप्यतो भावशब्देन ज्ञप्तिरित्यपि युज्यते ।
न ह्यात्मा विक्रियामात्रो नित्य आत्मेति शासनात् ॥५५॥

---

परपक्षे मोक्षोऽपि दुर्लभः स्यादित्याह—**संसार इति** । स्वपक्षे पुनराभासाभ्युपगमे त्रयाणामविवेकद्वारेण बन्धस्तद्विवेकेन मोक्षश्चेत्याह—**आत्माभासेति** ॥ ४९ ॥

आत्माभासाश्रयाविवेकद्वारा बन्धस्तद्विवेकद्वारा मोक्षश्चेत्युक्तम् । इदानीमाभासाभ्युपगमे लाभान्तरमाह—**चैतन्येति** । साभासायां बुद्धौ गृहीतसम्बन्धैर्ज्ञानानन्दादिशब्दैरात्मानं वेदो लक्षणया बोधयतीत्यभ्युपगमादात्माभासो नापलापमर्हतीत्यर्थः ॥ ५० ॥

तथापि जानात्यवगच्छतीत्यादिशब्दगम्यत्वमात्मनो न सिद्ध्यतीति शङ्कते—**प्रकृतीति** ॥ ५१ ॥

प्रकृत्यर्थः क्रिया प्रत्ययार्थः कर्तृत्वं तयोरेकाश्रयत्वं यथा दृष्टं, तथा भिन्नाश्रयत्वमपि किं न स्यादित्याशङ्क्याह—**नानयोरिति** । जानातिर्ज्ञानमर्थो येषां जानात्यवगच्छतीत्यादीनां भिन्नाश्रयत्वे हेतुर्नास्तीत्यर्थः ॥ ५२ ॥

किं प्रकृतिप्रत्ययार्थयोरेकाश्रयत्वमात्रं नास्तीति चोद्यते किं वा परमार्थैकाश्रयत्वं नास्तीति । तत्र प्रथमं प्रत्याह—**आत्माभासस्त्विति** । आत्माभासो बुद्धिश्चेत्युभयं परमार्थात्माविवेकेन जानातीत्यादिशब्देन मृषैवोच्यते । तस्मादज्ञानद्वारेण प्रकृतिप्रत्ययार्थयोरेकाश्रयत्वप्रसिद्धिरविरुद्धेत्यर्थः ॥ ५३ ॥

द्वितीयं दूषयति—**न बुद्धेरवेति** ॥ ५४ ॥

निरूप्यमाणे जानात्यवगच्छतीत्यादिप्रयोगो यथा न घटते तथा ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या आत्मनि ज्ञानशब्दप्रयोगोऽपि न सम्भवतीत्याह—**नाप्यत इति** । भावो नाम धात्वर्थसामान्यम् । न चात्मा तद्रूपः पारतन्त्र्यप्रसङ्गात् । अतो नात्मनि भावव्युत्पत्त्या ज्ञानशब्दोपपत्तिरित्यर्थः ॥ ५५ ॥

न बुद्धेर्बुद्धिवाच्यत्वं करणं न ह्यकर्तृकम् ।
नापि ज्ञायत इत्येवं कर्मशब्दैर्निरुच्यते ॥५६॥
न येषामेक एवात्मा निर्दुःखोऽविक्रियः सदा ।
तेषां स्याच्छब्दवाच्यत्वं ज्ञेयत्वं चात्मनः सदा ॥५७॥
यदाऽहंकर्तुरात्मत्वं तदा शब्दार्थमुख्यता ।
नाशनायादिमत्त्वात्तु श्रुतौ तस्यात्मतेष्यते ॥५८॥
हन्त तर्हि न मुख्यार्थो नापि गौणः कथंचन ।
जानातीत्यादिशब्दस्य गतिर्वाच्या तथापि तु ॥५९॥
शब्दानामयथार्थत्वे वेदस्याप्यप्रमाणता ।
सा च नेष्टा ततो ग्राह्या गतिरस्य प्रसिद्धितः ॥६०॥
प्रसिद्धिर्मूढलोकस्य यदि ग्राह्या निरात्मता ।
लोकायतिकसिद्धान्तः स चानिष्टः प्रसज्यते ॥६१॥
अभियुक्तप्रसिद्धिश्चेत्पूर्ववद्दुर्विवेकता ।
गतिशून्यं न वेदोऽयं प्रमाणं संवदत्युत ॥६२॥

---

करणव्युत्पत्त्या ज्ञानशब्दस्यात्मनि प्रवृत्तिं प्रत्याह—**न बुद्धेर्बुद्धीति**। बुद्धेरन्तःकरणस्य बुद्धिशब्दपर्यायज्ञानशब्दवाच्यत्वं करणव्युत्पत्त्या कथञ्चिदुपपद्यते। न त्वात्मनस्तद्युज्यते न हि करणमकर्तृकमस्ति तथा चात्मनश्चेत्करणत्वं कर्त्रन्तरमेष्टव्यमित्यनिष्टमापतेदित्यर्थः। कर्मव्युत्पत्त्या विज्ञानादिशब्दस्यात्मनि प्रयोगो न सिद्ध्यतीत्याह—**नापीति**। कर्तृकरणाभावे तदपेक्षकर्मत्वस्यापि वक्तुमशक्यत्वादित्यर्थः॥ ५६॥

तवापि सर्वमेतत्तुल्यमित्याशङ्क्याह—**न येषामिति**। आत्माभासाश्रयाविवेकेन शब्दवाच्यत्वादि स्वपक्षः सिद्ध्यतीत्युक्तत्वान्न सिद्धान्ते कश्चिदपि दोषोऽस्तीत्यर्थः॥ ५७॥

आत्माभासाश्रयाविवेकमन्तरेणापि शब्दप्रवृत्तिरात्मन्यविरुद्धेति भाट्टादिमतं दर्शयति—**यदाहंकर्तुरिति**। अहंकर्तुरशनायादिमत्त्वादात्मनश्च तद्राहित्यस्य श्रुतौ सिद्धत्वात्तयोर्मिथो विलक्षणत्वान्नाहंकर्तुरात्मतेति परिहरति—**नेत्यादिना**॥ ५८॥

मुख्याभावे गौणोऽपि शब्दार्थो न स्यादिति शङ्कते—**हन्त तर्हि**॥ ५९॥

कस्माज्जानातीत्यादिशब्दस्य वाच्यैव गतिरित्याशङ्क्यान्यथा वेदस्याप्रामाण्यप्रसङ्गादित्याह—**शब्दानामिति**॥ ६०॥

प्रसिद्ध्यैव गतिराश्रीयते चेत्किं प्राकृतप्रसिद्ध्या किं वा पाणिन्यादिप्रसिद्ध्या साऽऽश्रयितव्या। नाद्य इत्याह—**प्रसिद्धिरिति**॥ ६१॥

द्वितीयं दूषयति—**अभियुक्तेति**। बुद्धेरात्मनो वा दुर्विवेकं चेत् ज्ञातृत्वं तर्हि गतिशून्यमेव वेदो वदिष्यति नेत्याह—**गतीति**॥ ६२॥

आदर्शमुखसामान्यं मुखस्येष्टं हि मानवैः ।
मुखस्य प्रतिबिम्बो हि मुखाकारेण दृश्यते ॥६३॥
यत्र यस्यावभासस्तु तयोरेवाविवेकतः ।
जानातीति क्रियां सर्वो लोको वक्ति स्वभावतः ॥६४॥
बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते ।
तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ॥६५॥
स्वरूपं चात्मनो ज्ञानं नित्यं ज्योतिःश्रुतेर्यतः ।
न बुद्ध्या क्रियते तस्मान्नात्मनाऽन्येन वा सदा ॥६६॥
देहेऽहंप्रत्ययो यद्वज्जानातीति च लौकिकाः ।
वदन्ति ज्ञानकर्तृत्वं तद्वद्बुद्धेस्तथात्मनः ॥६७॥
बौद्धैस्तु प्रत्ययैरेवं क्रियमाणैश्च चिन्निभैः ।
मोहिताः क्रियते ज्ञानमित्याहुस्तार्किका जनाः ॥६८॥
तस्माज्ज्ञाभासबुद्धीनामविवेकात्प्रवर्तिताः ।
जानातीत्यादिशब्दश्च प्रत्ययो य[illegible] तत्स्मृतिः ॥६९॥

---

चिदात्मन औपाधिको जानातीत्यादिशब्दप्रयोग इत्यङ्गीकृत्य सिद्धान्ती दृष्टान्तमाह—**आदर्शेति** । आदर्शे यन्मुखं तेन सामान्यमेकत्वं बहिःस्थितस्य स्वमुखस्येष्टं व्यक्त्यन्तरोपादनानुपपत्तेर्मदीयमेवेदं मुखमिति प्रत्यभिज्ञानाच्चेत्यर्थः । उक्तमेकत्वमुपपादयति—**मुखस्येति** ॥ ६३ ॥

कल्पितमुखस्य परमार्थमुखस्य चान्योन्यमविवेकादितरेतरधर्माध्यारोपणान्मुखं मलिनमल्पं वक्त्रं चलतीत्यादिव्यपदेशवदात्मन्यपि सर्वमुपपन्नमिति दार्ष्टान्तिकमाह—**यत्रेति** ॥ ६४ ॥

अवभासो नामाभासः प्रतिबिम्बभावः तद्द्वारेणात्मानात्मनोरन्योन्यधर्माध्यासेन जानातीत्यादिव्यपदेशो भवति इत्युक्तमेव स्पष्टयति—**बुद्धेरिति** ॥ ६५ ॥

ननु ज्ञानं बुद्ध्यादिभिरात्मसम्बन्धित्वेन क्रियते कथमुच्यते चैतन्यमात्रस्वरूपं बुद्धावध्यारोप्यते इति तत्राह—**स्वरूपमिति** ॥ ६६ ॥

बुद्ध्यात्मनोरन्योन्यधर्माध्यासेन व्यवहारे दृष्टान्तमाह—**देहेति** । अहम्प्रत्ययायोग्ये देहे घटादितुल्ये मनुष्योऽहमित्यहंप्रत्ययो यथा दृश्यते । यथा बुद्धेर्जडत्वेन ज्ञातृत्वायोग्येऽपि चिदाभासव्याप्त्या ज्ञातृत्वमारोप्य जानातीति लौकिका व्यवहरन्ति तथाऽऽत्मनोऽपि व्यवहाररहितस्य विकारिचित्ताविवेकाद्विकारित्वादिव्यपदेशसिद्धिरित्यर्थः ॥ ६७ ॥

ननु तार्किका ज्ञानस्योत्पत्तिविनाशौ पश्यन्तो ज्ञानं क्रियत इत्याहुः । ततो न नित्यज्ञानमात्मस्वरूपमिति तत्राह—**बौद्धैस्तु इति** ॥ ६८ ॥

ज्ञाने जन्मविनाशप्रतिभासस्यौपाधिकत्वान्न स्वरूपेण क्रियमाणतेत्यर्थः । आदर्शमुखसामान्यमित्यादिना आत्मानात्मनोराभासद्वारेणाविवेकाज्जानातीत्यादिव्यवहारमुपपाद्य प्रसक्तानुप्रसक्तं च परिहृत्य

**आदर्शानुविधायित्वं छायाया अस्यते मुखे ।**
**बुद्धिधर्मानुकारित्वं ज्ञाभासस्य तथेष्यते ॥७०॥**

**बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिताः ।**
**ग्राहका इव भासन्ते दहन्तीवोल्मुकादयः ॥७१॥**

**स्वयमेवावभास्यन्ते ग्राहकाः स्वयमेव च ।**
**इत्येवं ग्राहकास्तित्वं प्रतिषेधन्ति सौगताः ॥७२॥**

**यद्येवं नान्यदृश्यास्ते किं तद्वारणमुच्यताम् ।**
**भावाभावौ हि तेषां यौ नान्यग्राह्यौ सता यदि ॥७३॥**

**अन्वयी ग्राहकस्तेषामित्येतदपि तत्समम् ।**
**अचितित्वस्य तुल्यत्वादन्यस्मिन् ग्राहके सति ॥७४॥**

**अध्यक्षस्य समीपे तु सिद्धिः स्यादिति चेन्मतम् ।**
**नाध्यक्षेऽनुपकारित्वादन्यत्रापि प्रसङ्गतः ॥७५॥**

---

प्रकृतमनुसरति—**तस्मादिति** । यथोक्तः शब्दस्तदनन्तरभावी तदर्थप्रत्ययस्तदनुसारिणां तत्रैवार्थे स्मृतिश्चेत्येते सर्वे व्यवहारा यथोक्ताविवेककृता एवेत्यर्थः ॥ ६९ ॥

ज्ञाभासबुद्धीनामविवेकमूलः सर्वो व्यवहार इत्युक्तमेव दृष्टान्तेन स्पष्टयति—**आदर्शानुविधेति** । छायेत्याभासो निर्दिश्यते । अस्यते समारोप्यते इत्यर्थः ॥ ७० ॥

यस्माच्चिदाभासा बुद्धिस्तस्मात्तत्परिणामेषु ग्राहकत्वप्रतिभाससिद्धिरित्याह—**बुद्धेस्त्विति** ॥७१॥

बुद्धेश्चिदाभासत्वेन तत्परिणामानामपि चिदाभासत्वाद्ग्राहकत्वधीरित्युक्तम् अजानन्तः स्वोत्प्रेक्षामात्रमनुसरन्तो बौद्धा विरुद्धं वदन्तीत्याह—**स्वयमेवेति** ॥ ७२ ॥

बुद्धौ बुद्धिवृत्तिषु चाभासस्य विद्यमानत्वात्तदविवेकनिबन्धनो भ्रमो बौद्धानामित्येवमेतत् चोद्यं परिहर्तुं शक्यं नान्यथेत्यभिप्रेत्य स्वयूथ्यं पृच्छति—**यद्येवमिति** ॥ ७३ ॥

नान्येन साक्षिणा दृश्यास्ते प्रत्यया भवेयुरित्येवं यदि बौद्धा वदन्ति तदा किं तेषां निवारणमुच्यताम् इत्युक्ते स्वयूथ्योक्तिः—**अन्वयीति** । तेषां प्रत्ययानां जन्मविनाशौ न सदा साक्षिवेद्यौ । **किन्तु** सोऽहमिति प्रत्यभिज्ञासिद्धःस्थायी ग्राहकोऽस्ति तावता बौद्धमतापाकरणमिति यदि **मतमित्यर्थः** । दूषयति—**एतदपीति** । ग्राहकरूपमपि प्रत्ययसमं जडम् । ततो न भावाभावसिद्धिरित्यर्थः ॥ ७४ ॥

साक्षिण्यसति भावाभावसिद्धिर्नास्तीति चेत् तर्हि विनैवाभासं साक्षिसान्निध्यादेव **भावा**-भावयोस्सिद्धिर्भविष्यतीति शङ्कते—**अध्यक्षस्येति** । परिहरति—**नेत्यादिना** । अहंकारादौ **अध्यक्ष**-चैतन्यस्यानुपकारित्वादाभासोदयाहेतुत्वादन्यत्रापि काष्ठलोष्टादौ सन्निधानाविशेषेण सिद्धिप्रसङ्गान्न सन्निधिमात्रेण सिद्धिरित्यर्थः ॥७५॥

अर्थी दुःखी च यः श्रोता स त्वध्यक्षोऽथवेतरः ।
अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥७६॥
कर्ताध्यक्षः सदस्मीति नैव सद्ग्रहमर्हति ।
सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥७७॥
अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा ।
अस्मदस्तु विविच्यैव त्वमेवेति वदेद्यदि ।
प्रत्ययान्वयिनिष्ठत्वमुक्तदोषः प्रसज्यते ॥७८॥
त्वमित्यध्यक्षनिष्ठश्चेदहमध्यक्षयोः कथम् ।
संबन्धो वाच्य एवात्र येन त्वमिति लक्षयेत् ॥७९॥
द्रष्टृदृश्यत्वसंबन्धो यद्यध्यक्षेऽक्रिये कथम् ॥८०॥
अविक्रियत्वेऽपि तादात्म्यमध्यक्षस्य भवेद्यदि ।
आत्माध्यक्षो ममास्तीति संबन्धाग्रहणे न धीः ॥८१॥

---

आत्माभासानभ्युपगमे बौद्धादिदोषपरिहारानुपपत्तिमुक्त्वा शास्त्रीयो बन्धमोक्षव्यवहारोऽपि निरनुग्रहाध्यक्षवादिनो न सिद्ध्यतीति वक्तुं विकल्पयति—**अर्थी** । दुःखित्वेन च मोक्षार्थित्वेन च प्रसिद्धः श्रोतैवाध्यक्षो विवक्षितः । किं वा तयोर्मिथो भेदोऽस्तीति विकल्पार्थः । प्रथमपक्षं प्रत्याह—**अध्यक्षस्येति** । आभासानङ्गीकारात्तद्द्वारेणाविद्यातत्कार्यसम्बन्धासिद्धेर्नाध्यक्षशुद्धस्य दुःखत्वादिसिद्धिरित्यर्थः ॥ ७६ ॥

द्वितीयं दूषयति—**कर्ताध्यक्ष इति** । श्रोतुरध्यक्षस्य च भिन्नत्वे कर्तृभोक्तृत्वादियुक्तः श्रोता जडत्वाच्चेतनोऽध्यक्षोऽहं सद्ब्रह्मास्मीति सद्ग्रहं नैवार्हतीत्यर्थः । तत्रैव दोषान्तरमाह—**सदेवेति** ॥७७॥

चिदाभासानभ्युपगमे बन्धमोक्षव्यवहारानुपपत्तिमुक्त्वा स्वपक्षे तदुपपत्तिमाह—**अविविच्येति** । आत्मानात्मरूपमुभयमाभासद्वारेणाविवेकापन्नं कृत्वा यथाप्राप्तार्थित्वाद्युपादाय श्रुतिस्तत्त्वमसीति तादात्म्यं वक्ति चेत्तथा सति सम्यगहं ब्रह्मास्मीति ग्रहः स्याच्चिदात्मनः स्वतो ब्रह्मत्वात् । अतो वाक्यीय-ब्रह्मात्मज्ञानादविद्यातत्कार्यनिवृत्तिराभासकृताविवेकाद्यभावाद्बन्धमोक्षव्यवहारसिद्धिरित्यर्थः । साङ्ख्या-दिपक्षमनुभाष्य प्रतिक्षिपति—**अस्मदस्त्विति** । साक्षिणो मुञ्जादिवेषीकान्निष्कृष्य केवलमहङ्कर्तारं त्वमेव ब्रह्मेति श्रुतिद्वारेणाचार्यो यदि ब्रूयात्तदा तत्त्वमसीति श्रुतेरहङ्कारनिष्ठत्वान्मिथ्यावादित्वमुक्तो दोषः स्यादित्यर्थः ॥ ७८ ॥

अहंकर्तृविषयो ह्युपदेशोऽध्यक्षे पर्यवस्यति त्वंशब्देनाहङ्कर्तृविषयेणाध्यक्षस्य लक्ष्यमाणत्वा-दिति शङ्कते—**त्वमित्यध्यक्षेति** । अहङ्काराध्यक्षयोः सम्बन्धाभावान्नाहङ्कारनिष्ठेन शब्देनाध्यक्षस्य लक्ष्यत्वमिति दूषयति—**अहमिति** । अहंकारस्य दृश्यत्वमध्यक्षस्य द्रष्टृत्वमिति सम्बन्धमाशङ्क्याध्यक्षस्य कूटस्थत्वान्मैवमित्याह—**द्रष्टृदृश्यत्वेति** ॥ ७९-८० ॥

सम्बन्धान्तरं शङ्कते—**अविक्रियत्वेऽपि** । यत्र शुक्लः घट इति तादात्म्यं तत्र घटस्य शौक्ल्यमिति सम्बन्धग्रहणं दृष्टं तथा ममाहङ्कर्तुरात्माऽध्यक्षोऽस्तीति सम्बन्धाग्रहणे तादात्म्यधीर्न संभवतीत्याह—**आत्मेति** ॥ ८१ ॥

**संबन्धग्रहणं शास्त्रादिति चेन्मन्यसे न हि ।**
**पूर्वोक्ताः स्युस्त्रिधा दोषा ग्रहो वा स्यान्ममेति च ॥८२॥**
**अदृशिर्दृशिरूपेण भाति बुद्धिर्यदा तदा ।**
**प्रत्यया अपि तस्याः स्युस्तप्तायोविस्फुलिङ्गवत् ॥८३॥**
**आभासस्तदभावश्च दृशेः सीम्नो न चान्यथा ।**
**लोकस्य युक्तितः स्यातां तद्ग्रहश्च तथा सति ॥८४॥**
**नन्वेवं दृशिसंक्रान्तिरयःपिण्डेऽग्निवद्भवेत् ।**
**मुखाभासवदित्येतदादर्शे तन्निराकृतम् ॥८५॥**
**कृष्णायो लोहिताभासमित्येतद्दृष्टमुच्यते ।**
**दृष्टदार्ष्टान्ततुल्यत्वं न तु सर्वात्मना क्वचित् ॥८६॥**
**तथैव चेतनाभासं चित्तं चैतन्यवद्भवेत् ।**
**मुखाभासो यथाऽऽदर्शे आभासश्चोदितो मृषा ॥८७॥**

---

एष आत्मान्तर्हृदयेऽणीयानित्यादिशास्त्रादहंकाराध्यक्षयोः सम्बन्धः सिद्ध्यतीति शङ्कते—**सम्बन्ध इति** । परिहरति **नहीति** । अध्यक्षस्य सम्बन्धग्रहणं न युज्यते निर्विकारत्वात् । नाप्यहंकारस्य जडत्वात् । जडं प्रति श्रुतेः बोधकत्वमपि न युक्तमिति त्रिधा दोषाःस्युरित्यर्थः । सम्बन्धग्रहोऽपि ममाध्यक्षोऽस्तीति सम्बन्धग्रहःस्यात् । न त्वहमध्यक्ष एवेति ग्रहो युक्तः । सोऽपि न स्याज्जडत्वादित्याह—**ग्रहो वेति** ॥ ८२ ॥

आत्मानात्मनोस्सम्बन्धासिद्धिं परमते दर्शयित्वा स्वमते मिथ्यातादात्म्यं दर्शयति—**अदृशिरिति** ॥८३॥

**बुद्धेः** बुद्धिवृत्तीनां च चैतन्याभासवत्त्वे लौकिकवैदिकसर्वव्यवहारसिद्धिरित्याह—**आभास इति** । **भावाभावयोर्दृगवधित्वात्** दृशेः सीम्नः सकाशाल्लोकस्याभासतदभावौ नैव चिदाभासमन्तरेण युक्तितः स्याताम् । चैतन्यस्य नित्यत्वेन भावाभावायोगात्, तस्माच्चैतन्याभासाभ्युपगमे स्फुरणास्फुरणे साक्षिणः **सिद्ध्यतः** नान्यथेत्यात्माभासः स्वीकर्तव्य इत्यर्थः ।—**किञ्च** तत्त्वमसिवाक्यात्तस्यात्मनोऽहं **ब्रह्मास्मीति ग्रहो** बुद्धेश्चिदाभासत्वे सत्येव घटते तद्द्वारेणैवोपपत्तेरतोऽपि चिदाभासोऽभ्युपेय इत्याह—**तद्ग्रहश्चेति** ॥ ८४ ॥

तप्तायोविस्फुलिङ्गवदित्युक्तत्वादात्मनो विकारप्राप्तिरिति शङ्कते—**नन्वेवमिति** । आदर्शे प्रतिबिम्बस्य मुखाभासस्य यथा मिथ्यात्वं तथा तच्चैतन्यं मिथ्यैव बुद्ध्यादिनिष्ठत्वेनाभातीत्येतेनैवैतच्चोद्यं निराकृतमित्याह—**मुखेति** ॥ ८५ ॥

**दृष्टान्तस्य संक्रमणरूपत्वाद्दार्ष्टान्तिकस्यापि** तथात्वं स्यादित्याशङ्क्य कस्यचिदेवांशस्य दृष्टान्त**त्वेन विवक्षितत्वा**न्मैवमित्याह—**कृष्णाय इति** । दृष्टशब्देन दृष्टान्तो गृह्यते । संक्रमणादिदृष्टान्तनिविष्टं **दार्ष्टान्तिके** कस्मान्न गृह्यते तत्राह—**दृष्टेति** ॥ ८६ ॥

दृष्टान्ते विवक्षितमंशमुदन्यस्य दार्ष्टान्तिकेऽपि तथाविधमंशं दर्शयति—**तथैवेति** । कृष्णायस्याग्निव्याप्ते **लौहित्यप्रत्ययवदन्तःकरणं** तद्विकारजातं चाचेतनमपि चैतन्यव्याप्त्या चेतनवद्भातीत्यर्थः । किंचादर्शे मुखाभासो यथा मृषेत्युक्तं तथाऽऽत्माभासोऽपि मिथ्या पूर्वमेवोक्तः तस्मादाभासस्य मिथ्यात्वादपि न कूटस्थत्वविरोधो दृशेरित्याह—**मुखेति** ॥ ८७ ॥

चित्तं चेतनमित्येतच्छास्त्रयुक्तिविवर्जितम् ।
देहस्यापि प्रसङ्गः स्याच्चक्षुरादेस्तथैव च ।।८८।।
तदप्यस्त्विति चेत्तन्न लोकायतिकसङ्गतेः ।
न च धीर्दृशिरस्मीति यद्याभासो न चेतसि ।।८९।।
सदस्मीति धियोऽभावे व्यर्थं स्यात्तत्त्वमस्यपि ।
युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ।।९०।।
ममेदंप्रत्ययौ ज्ञेयौ युष्मद्येव न संशयः ।
अहमित्यस्मदीष्टः स्यादयमस्मीति चोभयोः ।। ९१ ।।
अन्योन्यापेक्षया तेषां प्रधानगुणतेष्यते ।
विशेषणविशेष्यत्वं तथा ग्राह्यं हि युक्तितः ।। ९२ ।।
ममेदं द्वयमप्येतन्मध्यमस्य विशेषणम् ।
धनी गोमान्यथा तद्वद्देहोऽहंकर्तुरेव च ।। ९३ ।।

---

आत्माभासद्वारेण किमिति चित्तस्य चेतनत्वमुच्यते । स्वतस्तस्य चेतनत्वं किन्न स्यात्तत्राह—**चित्तमिति** । किञ्च दृश्यस्य चित्तस्य स्वतश्चेतनत्वे दृश्यस्यापि देहादेश्चिद्रूपत्वप्रसक्तिरित्यतिप्रसक्तिपरम्परां दर्शयति—**देहेति** ।। ८८ ।।

इष्टापत्तिमाशङ्क्य परिहरति—**तदप्यस्त्विति चेदिति** । तन्न, लोकायतिकसङ्गतेः । इतश्चाचेतनस्यैव चित्तस्य चेतनाभासवत्त्वमास्थेयम् । अन्यथा द्वाराभावादहं ब्रह्मास्मीति आगन्तुकधीर्नसिद्ध्येदित्याह **नचेति** ।। ८९ ।।

ब्रह्मास्मीति धियोऽभावे वा का क्षतिस्तत्राह—**सदस्मीति** । सार्थकं चेदिदं वाक्यं किमिति तर्हि सर्वो झटिति ब्रह्मास्मीति न प्रतिपद्यते तत्राह—**युष्मदिति** ।। ९० ।।

तमेव युष्मदस्मद्विवेकं दर्शयितुमात्मानात्मविषयाणां प्रत्ययानां विषयानुक्त्वा तद्विषयाणां गुणप्रधानभावं विशेष्यविशेषणभावं दर्शयति—**ममेदमिति** । केवलात्मन्यहंप्रत्ययः । उभयोरात्मानात्मनोर्गुणप्रधानभावेन स्थितयोरयमस्मीति प्रत्ययः ।। ९१ ।।

इदानीमात्मानात्मविषयाणां गुणप्रधानभावमाह—**अन्योन्यापेक्षयेति** चैतन्यस्याप्यन्तःकरणव्यञ्जकापेक्षत्वादन्तःकरणस्य जडत्वेन साधकापेक्षत्वात्त्रयाणां ज्ञात्वा करोमि कृत्वा भवामीत्यादिषु गुणप्रधानभावःस्यादित्यर्थः । तत्र गुणो विशेषणं प्रधानं विशेष्यः स्यादित्याह—**विशेषणेति** ।। ९२ ।।

ममेदमित्यादिना विशेषणविशेष्यत्वं युक्तिग्राह्यमित्युक्तमेव व्यक्तीकरोति—**ममेदं द्वयमिति** । मध्यमस्यात्मनो देहांतस्यावच्छेदकं ममेदमिति द्वयमपि इत्यत्र दृष्टान्तमाह—**धनीति** । यथा धनादि देहाद्यभिमानवतः कर्त्तुरेव विशेषणम् । तथा देहः स्थूलो अहंकर्त्तुर्विशेषणमित्याह—**तद्वदिति** ।। ९३ ।।

बुद्ध्यारूढं सदा सर्वं साहंकर्त्रा च साक्षिणः ।
तस्मात्सर्वावभासो ज्ञः किञ्चिदप्यस्पृशन्सदा ॥ ९४ ॥
प्रतिलोममिदं सर्वं यथोक्तं लोकबुद्धितः ।
अविवेकधियामस्ति नास्ति सर्वं विवेकिनाम् ॥ ९५ ॥
अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च ।
स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥९६॥
नाद्राक्षमहमित्यस्मिन्सुषुप्तेऽन्यन्मनागपि ।
न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥९७॥
स्वयंज्योतिर्न हि द्रष्टुरित्येवं संविदोऽस्तिताम् ।
कौटस्थ्यं च तथा तस्याः प्रत्ययस्य तु लुप्तताम् ॥
स्वयमेवाब्रवीच्छास्त्रं प्रत्ययावगती पृथक् ॥९८॥

---

अहंकर्तृसहितं सर्वमेव बाह्यं वस्तु तत्राध्यारोपितं सर्वदा साक्षिणो विशेषणम् । साक्षित्वस्य बुद्ध्यादिसाक्ष्यार्थप्रयुक्तत्वादित्याह—**बुद्ध्यारूढमिति** । यस्मादहंकर्त्रा सह सर्वस्य साक्ष्यस्य तादात्म्यात् स्वाभासद्वारेण सर्वमवभासयतीति सर्वावभासकश्चित्स्वभावो वस्तुतो न किञ्चिदपि साक्ष्यं संस्पृशन्वर्तते तस्य सर्वदैवासङ्गस्वभावत्वादित्याह—**तस्मादिति** ॥ ९४ ॥

एष विवेकिनां मार्गो विपरीतस्त्वविवेकिनां क्षेत्रादावप्यात्मनो विशेषणत्वप्रत्ययादित्याह—**प्रतिलोममिति** । लोको बाह्यार्थोपहतचेताः । तस्य बुद्धिर्बाह्यार्थप्रधानैव तेन बाह्यार्थं प्रधानीकृत्य तद्विशेषणत्वेन प्रत्यगर्थं लोको विनियुङ्क्ते । ततो विपरीतमेतद्विशेषणविशेष्यत्वादि सर्वमविवेकधियामविविक्तानात्मस्वरूपाणामस्ति । विवेकिनामवगतात्मस्वरूपाणां पुनर्नेदं सर्वं विद्यते । स्वप्नावस्थायामिव सर्वस्यात्माविद्याविलसितत्वादित्यर्थः ॥ ९५ ॥

नन्वेवमन्वयव्यतिरेकाभ्यां सर्वसंसारधर्मविनिर्मुक्तात्मावगमात् किं वाक्येनेत्याशङ्क्याह—**अन्वयेति** । आत्मपदार्थो द्रष्टा साक्षी न दृश्यः । साक्ष्यं च साहङ्कारं सर्वं जगदात्मपदार्थस्यैव शेषभूतं न कश्चिदपि जडोऽर्थः शेषी सम्भवति । आत्मेत्यादिपदमपि यथोक्तार्थस्यैव समर्थकं न कदाचिदपि दृश्यार्थमधिकरोति इत्येवं पदपदार्थयोरन्वयव्यतिरेकौ युक्तिरेव स्यात् । अहमित्यत्र विवेकावधारणेन वाक्यार्थे अन्वयव्यतिरेकव्यापारः । तस्मादेतदेव वाक्यं वाक्यार्थावधारणे प्रभवतीत्यर्थः ॥ ९६ ॥

किञ्चावस्थात्रयं परस्परव्यभिचारि चैतन्यं तु सुषुप्तेऽपि न व्यभिचरतीति प्रकारान्तरेणात्मानात्मविवेकं दर्शयति—**नाद्राक्षमिति** । प्रतीयत इति व्युत्पत्त्या प्रत्ययशब्देन प्रमातृप्रमाणप्रमेयलक्षणः सर्वो विशेषो गृह्यते ॥ ९७ ॥

अन्वयव्यतिरेकव्यापारनिष्ठा या प्रदर्शिता सा शास्त्रसम्मता न स्वबुद्धिपरिकल्पितेत्याह—**स्वयंज्योतिरिति** । अयं श्लोकः षट्पदी । प्रत्ययो घटादिर्विषयः अवगतिरात्मस्वरूपभूता दृष्टिः ते पृथक्कूटस्थतयाऽनित्यतया चाब्रवीदित्यर्थः ॥ ९८ ॥

एवं विज्ञातवाक्यार्थे श्रुतिलोकप्रसिद्धितः ।
श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये ॥९९॥
ब्रह्मा दाशरथेर्यद्वदुक्त्यैवापानुदत्तमः ।
तस्य विष्णुत्वसंबोधे न यत्नान्तरमूचिवान् ॥१००॥
अहंशब्दस्य निष्ठा या ज्योतिषि प्रत्यगात्मनि ।
सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥१०१॥
श्रुतमात्रेण चेन्न स्यात्कार्यं तत्र भवेद्ध्रुवम् ।
व्यवहारात्पुरापीष्टः सद्भावः स्वयमात्मनः ॥१०२॥
अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा ।
तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेष्वसंशयः ॥१०३॥
प्रतिबन्धविहीनत्वात्स्वयं चानुभवात्मनः ।
जायेतैव प्रमा तत्र स्वात्मन्येव न संशयः ॥१०४॥

---

युष्मदस्मद्विवेकमुपपाद्यावगतपदपदार्थे पुरुषे महावाक्यं फलवद्भवतीत्याह—**एवमिति** । अवान्तरवाक्यार्थो वाक्यार्थशब्देनोच्यते ॥ ९९ ॥

वाक्यश्रवणमात्रान्मोहापोहे दृष्टान्तमाह—**ब्रह्मेति** । दृष्टान्ते त्वं विष्णुरसीत्युक्तमात्रादेव मोहनिवृत्तिरित्यत्र हेतुमाह—**तस्येति** ॥ १०० ॥

तत्त्वमसीति बोधितोऽपि मुमुक्षुरहं ब्रह्मेति न प्रतिपद्यते । कर्ताहमित्यादिप्रत्यक्षविरोधादित्याशङ्क्य कर्तृभोक्तृसाक्षिणोऽहमादिशब्दलक्षितस्य ब्रह्मत्वोपदेशान्नैवमित्याह—**अहंशब्दस्येति** । तत्रेति सप्तम्या वाक्यार्थज्ञानमुच्यते ॥ १०१ ॥

यदि पुनरवगतपदपदार्थस्य वाक्यादहं ब्रह्मास्मीति ज्ञानं समूलसंसारनिवर्त्तकं नेष्यते तदा प्रामाण्यसिद्ध्यर्थमेवावश्यं कार्यपरत्वं कल्पनीयम् । न च तद्युक्तं विद्वदनुभवविरोधादित्याह—**श्रुतमात्रेणेति** । श्रुतमात्रे फलं न भवति चेतदाऽपरमनुष्ठानं कल्प्यम् । इह तु फलं दृश्यत एवेति भावः । किञ्च सिद्धेऽर्थे शास्त्रस्याप्रामाण्यं किं विपर्यासलक्षणं किं वा निष्फलत्वं उत संशयरूपं अनुत्पत्त्यात्मकं वा नाद्य इत्याह—**व्यवहारादिति** । शास्त्रीयव्यवहारात्पूर्वमप्यात्मसद्भावस्येष्टत्वान्न शुक्तिरूप्यज्ञानवत् ब्रह्मात्मज्ञानस्याप्रामाण्यमित्यर्थः ॥ १०२ ॥

द्वितीयं प्रत्याह—**अशनायादीति** । वाक्यश्रवणसमकाले चाशनायादिनिवृत्त्यर्थं विदुषां प्रमोपजायते तेन वाक्यीयज्ञानस्य नास्ति नैष्फल्यमित्यर्थः । तृतीयं दूषयति—**तत्त्वमसीति** । तत्र हि प्रमा जायमाना कदाचिदपि संशयवती न भवतीत्यर्थः ॥ १०३ ॥

हुंफडादिशब्दवदनुत्पत्तिलक्षणमप्रामाण्यमिह नास्ति पदार्थज्ञानस्य प्रतिबन्धाभावादिति चतुर्थं शिथिलयति—**प्रतिबन्धेति** । कृतान्वयव्यतिरेकस्यासम्भावनादिप्रतिबन्धाभावाद्विषयस्य चानुभवात्मत्वेनानुभवितुं योग्यत्वात्तत्र ब्रह्मास्मीत्येव प्रमा जायेतैवेत्यर्थः ॥ १०४ ॥

**किं सदेवाहमस्मीति किंवाऽन्यत्प्रतिपद्यते ।**
**सदेव चेदहंशब्दः सता मुख्यार्थ इष्यताम् ॥१०५॥**
**अन्यच्चेत् सदहंग्राहप्रतिपत्तिर्मृषैव सा ।**
**तस्मान्मुख्यग्रहे नास्ति वारणाऽवगतेरिह ॥१०६॥**
**प्रत्ययी प्रत्ययश्चैव यदाभासौ तदर्थता ।**
**तयोरचितिमत्त्वाच्च चैतन्ये कल्प्यते फलम् ॥१०७॥**
**कूटस्थेऽपि फलं योग्यं राजनीव जयादिकम् ।**
**तदन्तात्मत्वहेतुभ्यां क्रियायाः प्रत्ययस्य च ॥१०८॥**
**आदर्शस्तु यदाभासो मुखाकारः स एव सः ।**
**यथैवं प्रत्ययादर्शो यदाभासस्तदा ह्यहम् ॥१०९॥**

---

प्रमाणस्वरूपनिरूपणेनाहं ब्रह्मास्मीति ज्ञानमुक्त्वा प्रतिपत्तृस्वरूपनिरूपणेनापि वाक्यादपरोक्षात्मज्ञानमेव युक्तमिति वक्तुं विकल्पयति—**किं सदेवेति** । तत्राद्ये विकल्पे परस्यानिष्टापत्तिमाह—**सदेवेति** । सदस्मीति किं सदेव प्रतिपद्यते उतान्यः ? आद्ये प्रतिपत्तुरेव विषयत्वात्सदस्मीत्यपरोक्षप्रमा युक्ता अहंशब्दस्य सद्रूपेण ब्रह्मणा मुख्यार्थत्वादित्यर्थः ॥ १०५ ॥

द्वितीयं प्रत्याह—**अन्यच्चेदिति** । प्रमाणस्वरूपस्य प्रमातृस्वरूपस्य च निरूपणेन वाक्यादहंब्रह्मास्मीत्यपरोक्षा प्रतिपत्तिरेव युक्तेत्युपसंहरति—**तस्मादिति** । अन्यस्य सदस्मीति ग्रहणस्य मृषार्थत्वप्रसङ्गात्सत एव सदस्मीति प्रतिपत्तिः स्वीकार्या तस्मात्सदस्मीत्यवगतेः प्रतिबन्धकं न किञ्चिदस्तीत्यर्थः । तत्त्वमसिवाक्यमिहेत्युच्यते ॥ १०६ ॥

कूटस्थत्वादात्मनो मातृत्वानुपपत्तौ फलसम्बन्धो न सिद्ध्यतीत्यस्यात्मग्रहे निवारकमित्याशङ्क्याह—**प्रत्ययी** । अन्तःकरणतत्परिणामौ यदाभासाधारौ तयोरात्मशेषत्वात् जडत्वाच्च फलाश्रयत्वानुपपत्तेस्तद्द्वाराऽस्य फलस्य कल्पनयाऽऽत्मसम्बन्धः स्यादित्यर्थः ॥ १०७ ॥

निर्व्यापारस्यापि फलसम्बन्धे दृष्टान्तमाह—**कूटस्थेति** । राजामात्ययोश्च स्वस्वामिसम्बन्धोऽस्ति नाध्यक्षाध्यक्ष्ययोरिति वैषम्यमाशङ्क्याह—**तदन्तेति** । स एव कूटस्थात्मा अन्तो निष्ठा अवसानमात्मरूपं च ययोः क्रियाप्रत्यययोस्तौ तदन्तात्मानौ तयोर्भावस्तत्त्वम् । तदन्तत्वतदात्मत्वे एव हेतू ताभ्यां तदन्तात्मत्वहेतुभ्यां तत्फलमात्मन्येवोपचरितम् । राजनीव योधानां जयादिकमित्यर्थः । परिशुद्धस्य प्रमातृत्वं नास्तीत्यभिप्रेत्येदमुक्तम् ॥१०८॥

इदानीं चित्प्रतिबिम्बस्य तु भवत्येव स्वोपाधिव्यापारेण प्रमातृत्वमित्याह—**आदर्शस्त्विति** । येन मुखाकारेण विशिष्टतया भासत इति यदाभासोऽयमादर्शः स च मुखाकारस्तत्र दृश्यमानः स एव ग्रीवादेशस्थो मुखाकार एवेति बिम्बप्रतिबिम्बयोरैक्यं यथा लोके प्रसिद्धम् एवं प्रत्ययादर्शोऽहंकारो येन चित्प्रतिबिम्बेन भास्यत इति यदाभासः स चित्प्रतिबिम्बः स एव बिम्बकल्पः परमात्मैव । तदा हि बिम्बप्रतिबिम्बयोरेकत्वे सत्यहं ब्रह्मास्मीति ज्ञानं सिद्ध्यतीत्यर्थः । यस्मादन्तःकरणस्थाभासस्य परमार्थात्मनश्च प्रागुक्तरीत्या सम्बन्धोऽस्ति तस्मादहं ब्रह्मास्मीत्येवमधिकृतस्य प्रतिपत्तिः स्यात् ॥१०९॥

इत्येवं प्रतिपत्तिः स्यात्सदस्मीति च नान्यथा ।
तत्त्वमित्युपदेशोऽपि द्वाराभावादनर्थकः ॥११०॥
श्रोतुः स्यादुपदेशश्चेदर्थवत्त्वं तथा भवेत् ।
अध्यक्षस्य न चेदिष्टं श्रोतृत्वं कस्य तद्भवेत् ॥१११॥
अध्यक्षस्य समीपे स्याद्बुद्धेरेवेति चेन्मतम् ।
न तत्कृतोपकारोऽस्ति काष्ठाद्यद्वन्न कल्प्यते ॥११२॥
बुद्धौ चेत्तत्कृतः कश्चिन्नन्वेवं परिणामिता ।
आभासेऽपि च को दोषः सति श्रुत्याद्यनुग्रहे ॥११३॥
आभासे परिणामश्चेन्न रज्ज्वादिनिभत्ववत् ।
सर्पादेश्च तथाऽत्रोचमादर्शे च मुखत्ववत् ॥११४॥
नाऽऽत्माभासत्वसिद्धिश्चेदात्मनो ग्रहणात्पृथक् ।
मुखादेश्च पृथक्सिद्धिरिह त्वन्योन्यसंश्रयः ॥११५॥

---

उक्तसम्बन्धानङ्गीकारे तु नैव प्रतिपत्तिर्युक्ता तस्मादुक्तसम्बन्धोऽवश्यम्भावीत्याह—**इत्येवमिति** । उक्तसम्बन्धानभ्युपगमे दोषान्तरमाह—**तत्त्वमिति** ॥ ११० ॥

उपदेशस्यानर्थकत्वं स्पष्टयति—**श्रोतुः** । आभासद्वारकस्य श्रोतुः सत्त्वे स्यादुपदेशस्यार्थवत्त्वं आभासानङ्गीकारात्तदभावे तदानर्थक्यमित्यर्थः । किञ्च श्रोतृत्वमध्यक्षस्यान्यस्य वा विवक्षितम् । प्रथमे प्रागुक्तन्यायेनोपदेशस्य युक्तमर्थवत्त्वम् । द्वितीये त्वध्यक्षव्यतिरिक्तस्य जडत्वान्न श्रोतृत्वोपपत्तिरित्युक्तदोषतादवस्थ्यमित्याह—**अध्यक्षस्येति** ॥ १११ ॥

अध्यक्षाध्यक्ष्ययोः श्रोतृत्वाभावेऽपि परमात्मसमीपे वर्त्तमानाया बुद्धेरेव श्रोतृत्वं स्यादिति शङ्कते—**अध्यक्षस्य समीप इति** । यथा काष्ठादेर्जडत्वाद्बुद्धेरुपकारो नास्ति तथा सन्निहितेनाध्यक्षेण कृतोपकारतया बुद्धेरुपकारो नाङ्गीक्रियते । तथा च सामीप्यमात्रेण बुद्धेः श्रोतृत्वं कल्पयितुं अशक्यमित्याह—**न तदिति** ॥ ११२ ॥

बुद्धावध्यक्षकृतः सन्नुपकारो मया नाभ्युपगम्यते तदभ्युपगमे सत्यध्यक्षस्य परिणामित्वप्रसङ्गादिति शङ्कते—**बुद्धौ चेदिति** । श्रुतिस्मृतिन्यायानुगृहीते चिदाभासे बिम्बगते स्वीकृते बुद्धिजनकत्वमात्रेण नाध्यक्षस्य परिणामित्वप्रसक्तिरित्याह—**आभासेऽपीति** ॥ ११३ ॥

उक्तमेव दृष्टान्तेन स्पष्टयति—**आभासे परिणाम इति** । यथा रज्ज्वज्ञानविजृम्भितस्य सर्पादि रज्जुनिभत्वं मिथ्या तथाऽऽत्माज्ञानविजृम्भितस्य बुद्ध्यादेर्मिथ्यैव चिन्निभत्वम् । तस्मादाभासजनकत्वानुरोधेन परिणामित्वमात्मनो नैव शङ्कितव्यमित्यर्थः । किञ्चादर्शे मुखस्यावस्थितत्वं मिथ्या न परिणाम इत्युक्तं यथा तथा बुद्धावात्मनोऽवस्थित्वं मिथ्येत्युक्तत्वान्न परिणामित्वप्रसक्तिरित्युक्तं स्मारयति—**तथेति** ॥ ११४ ॥

बुद्धेरेवात्मत्वं गृहीत्वा तस्याश्चिन्निभत्वमाक्षिपति—**नात्माभासत्वेति** । बुद्धेरात्माभासत्वं न सिद्ध्यति । आत्मनो बुद्धेः सकाशात्पृथग्ग्रहणाभावादित्ययुक्तम् । आदर्शमुखतदाभासवत् बुद्ध्यात्मतदाभासानां पृथक्प्रथनसम्भवादित्याशङ्क्याह—**मुखादेस्त्विति** ॥ ११५ ॥

अध्यक्षस्य पृथक्सिद्धावाभासस्य तदीयता ।
आभासस्य तदीयत्वे ह्यध्यक्षव्यतिरिक्तता ॥११६॥
नैवं स्वप्ने पृथक्सिद्धेः प्रत्ययस्य दृशेस्तथा ।
रथादेस्तत्र शून्यत्वात्प्रत्ययस्याऽऽत्मना ग्रहः ॥११७॥
अवगत्या हि संव्याप्तः प्रत्ययो विषयाकृतिः ।
जायते स यदाकारः स बाह्यो विषयो मतः ॥११८॥
कर्मेप्सिततमत्वात्स तद्वान् कार्ये नियुज्यते ।
आकारो यत्र चार्प्येत करणं तदिहोच्यते ॥११९॥
यदाभासेन संव्याप्तः स ज्ञातेति निगद्यते ।
त्रयमेतद्विविच्याऽत्र यो जानाति स आत्मवित् ॥१२०॥
सम्यक्संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः ।
एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पितः ॥१२१॥

---

अन्योन्याश्रयत्वमेव विशदयति—**अध्यक्षस्य पृथक्सिद्धौ** । अध्यक्षस्य भेदप्रतीतौ चिदाभासस्य तदीयत्वसिद्धौ चाध्यक्षस्य ततो भेदसिद्धिरिति तस्मान्नाभाससिद्धिरित्यर्थः ॥ ११६ ॥

स्वप्नावस्थायां प्रत्ययस्यान्तःकरणस्य दृशेश्च साक्षिणः साक्षिसाक्ष्यभावेन भेदस्य प्रतिपन्नत्वान्नास्ति परस्पराश्रयतेत्युत्तरमाह—**नैवमिति** । स्वप्ने प्रत्ययस्यैव ग्राह्यत्वमुपपादयति—**रथादेरिति** । तत्र विषयान्तराभावादन्तःकरणस्यैव वासनात्मकस्यात्माधीनत्वेन ग्रहणमित्यर्थः ॥ ११७ ॥

आत्मनोऽन्तःकरणसाक्षिणो ग्राह्यव्यतिरेकार्थं ग्राह्यस्वरूपमाह—**अवगत्येति** । चिदाभासस्य व्याख्यानान्तरे तु साभासान्तःकरणात्चिदात्मनः स्वप्ने भेदः प्रतीयते । रथादेर्वासनारञ्जितबुद्ध्याकारत्वात् स्वरूपेणासम्भवात् । बुद्ध्याकारतया आत्मावभास्यत्वात् । आत्मनश्च स्वमहिम्ना पृथगेव सिद्धेः । सुषुप्तौ च बुद्धिगतचिदाभासोपरमेऽप्यात्मनः सत्त्वात्ततो भेदसिद्धेरित्यर्थः । व्याप्तश्चित्तपरिणामो यस्य घटादेराकारवान्जायते स बाह्योविषयः । साक्षिण्यतिरिक्तो विषयो दर्शितः ॥११८॥

सम्प्रति कर्म करणं कर्तेति त्रितयं साक्षिव्यतिरेकार्थं दर्शयति—**कर्म्मेप्सित** । स बाह्यो विषयः कर्मेत्युच्यते प्रमाणक्रियया व्याप्तुमिष्टतमत्वात् तद्वान् बाह्यविषयेच्छावान् कुर्विति चोदनया प्रेर्यते स कर्ता । यत्र बुद्धिविपरिणामे विषयेणाकारस्समर्पितस्तत्करणम् विषयव्यक्तेरित्यर्थः । घटादिव्यक्तिः सप्तम्यर्थः ॥ ११९ ॥

यस्य चैतन्यस्याभासेन संव्याप्तोऽहंकारः परिणमते सा चिद्धातुर्ज्ञातेत्याह—**यदाभासेन** । कर्त्रादित्रयं भोक्त्रादित्रयं ज्ञात्रादित्रयं श्रेयोमार्गे स्थितत्त्वात् साक्षिणो विविच्य यो बुध्यते सः लक्ष्यत्वंपदार्थं यथावदवगच्छतीत्याह—**त्रयमिति** ॥ १२० ॥

यथा प्रमात्रादिभ्यो वैविक्त्यं नित्यावगतिस्वभावस्यात्मनो दर्शितं तथा प्रत्ययभेदेभ्योऽपि वैविक्त्यं प्रत्येतव्यमित्याह—**सम्यक्संशय** । अवगतावपि सम्यगवगतिः संशयावगतिर्मिथ्यावगतिरिति भेदोऽस्तीत्याशङ्क्य प्रत्ययैरेवोपाधिभूतैस्तत्र भेदोऽर्पितो न स्वतो यतस्तस्मादेकैवावगतिरित्याह—**भेदस्त्विति** ॥ १२१ ॥

आधिभेदाद्यथा भेदो मणेरवगतेस्तथा ।
अशुद्धिः परिणामश्च सर्वं प्रत्ययसंश्रयात् ॥१२२॥
प्रथनं ग्रहणं सिद्धिः प्रत्ययानामिहाऽन्यतः ।
आपरोक्ष्यात्तदेवोक्तमनुमानं प्रदीपवत् ॥१२३॥
किमन्यद्ग्राहयेत्कश्चित् प्रमाणेन तु केनचित् ।
विनैव तु प्रमाणेन निवृत्त्याऽन्यस्य शेषतः ॥१२४॥
शब्देनैव प्रमाणेन निवृत्तिश्चेदिहोच्यते ।
अध्यक्षस्याप्रसिद्धत्वाच्छून्यतैव प्रसज्यते ॥१२५॥
चेतनस्त्वं कथं देह इति चेन्नाप्रसिद्धितः ।
चेतनस्यान्यतः सिद्धावेवं स्यादन्यहानतः ॥१२६॥
अध्यक्षः स्वयमस्त्येव चेतनस्याऽपरोक्षतः ।
तुल्य एवं प्रबोधः स्यादन्यस्याऽसत्त्ववादिना ॥१२७॥

---

एतमर्थं दृष्टान्तेन स्पष्टयति—**आधिभेदात्** । आत्मनि रागादिमत्त्वं कर्तृत्वादिमत्त्वञ्च सर्वमपि भेदवदन्तःकरणोपाधिकृतं न वास्तवमित्याह—**अशुद्धिरिति** ॥ १२२ ॥

ग्राहकादिव्यतिरिक्तात्मसिद्धौ किं प्रमाणमुक्तमित्याशङ्क्याह—**प्रथनमिति** । इह व्यवहारभूमौ प्रत्ययानां बुद्धितद्वृत्तीनां प्रथनं प्रकाशनं ग्रहणं गृहीतिरुपादानं सिद्धिः सत्त्वाभ्युपगमश्चान्यतो भवितुमर्हति । अपरोक्षत्वात्प्रत्ययानां स्वतस्तदयोगात्तदनेनानुमानमेवोक्तं भवति । तत्र दृष्टान्तमाचष्टे—**प्रदीपवदिति** । साश्रयाः प्रत्ययाः स्वातिरिक्ताधीनसिद्धिकाः अचिद्रूपत्वात् । ये त्वचिद्रूपास्ते स्वातिरिक्ताधीनसिद्धिकाः यथा प्रदीपाधीनसिद्धिका घटादय इत्यर्थः ॥ १२३ ॥

ये तु प्रतिषेधमुखेनैवात्मनि प्रमाणप्रवृत्तिं मन्यन्ते तान्प्रति विधिमुखेनापि प्रमाणप्रवृत्तिं प्रतिपादयितुं विकल्पयति—**किमन्यदिति** । कथं प्रमाणेन विना प्रतिपादनं तत्राह—**निवृत्त्येति** । आत्मन्यारोपितस्यानात्मनो निरासद्वारेणाध्यक्षस्यावशिष्टत्वात्तस्य मानेन बिना प्रतिपत्तिरित्यर्थः ॥ १२४ ॥

प्रथमे कल्पे प्रमाणप्रवृत्तिर्विधिमुखेनैवेष्टेत्यङ्गीकृत्य द्वितीयमनुवदति—**शब्देनैव** । आत्मन्यध्यस्तस्य शब्देन निवृत्तिरेवोच्यते । स त्वात्मा मानेन विना सिद्ध्यति चेदित्यर्थः । अस्मिन्पक्षे ब्रह्मात्मनो मानान्तरेणाप्रसिद्धेः शब्दस्य च तत्राऽव्यापारादात्मनः शून्यतैव प्राप्नोति इति दूषयति—**अध्यक्षस्येति** ॥१२५॥

चेतनाचेतनयोर्विरुद्धरूपत्वकथनेनान्यनिवृत्तिः शब्देन क्रियते । तत्कुतः शून्यताप्रसक्तिरिति शङ्कते—**चेतनस्त्वमिति** । देहादिव्यतिरिक्तस्य चेतनस्याप्रसिद्धत्वान्नैवमिति प्रत्याचष्टे—**नेत्यादिना** । सिद्धे हि धर्मिणि प्रतियोगिनि वा अयमयं न भवतीति तादात्म्यनिषेधेन विरुद्धरूपत्वोपदेशः स्यात् । न चाद्यापि चेतनपदार्थोऽज्ञस्य पृथक्सिद्धोऽस्तीत्यर्थः ॥ १२६ ॥

स्वतः प्रसिद्धत्वादात्मा नात्यन्तमप्रसिद्धः स्यादिति शङ्कते—**अध्यक्षः स्वयमिति** । यथा शून्यवादिनः स्वतः सिद्धोऽस्त्यात्मेति न प्रमाणमन्तरेण प्रबोधो जायते तथाऽज्ञस्यापीत्युत्तरमाह—**तुल्य एवेति** ॥ १२७ ॥

अहमज्ञासिषं चेदमिति लोकस्मृतेरिह ।
करणं कर्म कर्ता च सिद्धास्त्वेकक्षणे किल ॥१२८॥
प्रामाण्येऽपि स्मृतेः शैघ्र्याद्यौगपद्यं विभाव्यते ।
क्रमेण ग्रहणं पूर्वं स्मृतेः पश्चात्तथैव च ॥१२९॥
अज्ञासिषमिदं मां चेत्यपेक्षा जायते ध्रुवम् ।
विशेषोऽपेक्ष्यते यत्र तत्र नैवैककालता ॥१३०॥
आत्मनो ग्रहणे चाऽपि त्रयाणामिह संभवात् ।
आत्मन्यासक्तकर्तृत्वं न स्यात्करणकर्मणोः ॥१३१॥
व्याप्तुमिष्टं च यत्कर्तुः क्रियया कर्म तत्स्मृतम् ।
अतो हि कर्तृतन्त्रत्वं तस्येष्टं नाऽन्यतन्त्रता ॥१३२॥
शब्दाद्वाऽनुमितेर्वाऽपि प्रमाणाद्वा ततोऽन्यतः ।
सिद्धिः सर्वपदार्थानां स्यादज्ञं प्रति नाऽन्यथा ॥१३३॥

---

स्मृतिबलेन स्वतः सिद्धाध्यक्षसिद्धिरिति शङ्कते—**अहमज्ञासिषमिति**। व्यवहारभूमौ लोकप्रसिद्ध-कर्त्रादिविषयस्मृत्यनुरोधादेकस्मिन्क्षणे कर्त्रादयः सिध्यन्ति। न हि तेषां स्मृतिरनुभवादृते युज्यते। अनुभूते स्मृतिनियमादतो यतस्त्रयोऽपि युगपदनुभूयन्ते सोऽध्यक्षः स्वतः सिद्धोऽस्तीत्यर्थः॥ १२८॥

एतन्निराकरोति—**प्रामाण्येपि**। पूर्वानुभवगमकत्वांशेन स्मृतेर्यद्यपि प्रामाण्यं तथापि न युगपत् त्रितयसिद्धिगमकत्वं यस्मात्क्रमेणैव पूर्वं ग्रहणं वृत्तं स्मृतिरपि पश्चात्तथैव भवति यौगपद्यं तु शतपत्रशत-व्यतिभेदनवत् शैघ्र्यात्प्रतिभातीत्यपि संभावितत्वादित्यर्थः॥ १२९॥

स्मृतेर्यौगपद्याभावे हेत्वन्तरमाह—**अज्ञासिषमिदमिति**। केनचिदज्ञासिषं इत्युक्ते विषये वा मातरि वा तव ज्ञानमिति श्रोतुर्विशेषापेक्षा निश्चयेन दृश्यते, यत्र च विशेषोऽपेक्ष्यते तस्मिन्विषये नैवैककालता युक्ता स्मृतेः। कर्तृकरणकर्मणां अनुभवस्य यौगपद्ये त्रितयविषयस्मृतेरपि यौगपद्यात्त्रयाणामव्यभिचारा-द्विशेषापेक्षाभावादतस्तदपेक्षादर्शनान्न यौगपद्यं त्रितयानुभवस्य तदीयस्मृतेश्चेत्यर्थः॥ १३०॥

कर्त्रादीनां युगपदनुभवसाधनाभावादपि युगपन्नास्ति सिद्धिरित्याह—**आत्मनो ग्रहणे**। ग्राहकादीनां एकैकस्य स्वरूपग्रहणे अन्येषां त्रयाणां च कर्तृकरणकर्मणां अपेक्षासंभवादनवस्था स्यादित्यर्थः। तैरेव कर्त्रा-दिभिरन्योन्यस्वरूपसिद्धेर्नानवस्था स्यादित्याशङ्क्याह—**आत्मनीति**। स्वरूपसिद्धौ कर्त्तुरुपक्षीणं कर्तृत्वं करणकर्मणोः सिद्धौ तदेव न स्यात्। अन्यत्रोपक्षीणत्वात्। न च कर्त्रादिः स्वरूपसिद्धिं प्रति कर्तृत्वादि युक्तं एकत्र तद्भावस्य विरुद्धत्वादित्यर्थः॥ १३१॥

कर्त्रादीनां यौगपद्येन सिद्ध्यभ्युपगमे व्याकरणविरोधोऽपि स्यादित्याह—**व्याप्तुमिष्टं च**। कर्तृ-करणकर्मणां पूर्वपूर्वायत्तत्वादुत्तरोत्तरसिद्धेर्न युगपत् सिद्धिरित्याह—**अतो हीति**॥ १३२॥

विधान्तरेणानधिगतवस्तुप्रतिपत्तेरयोगाद्विधिरूपेण प्रवृत्तप्रमाणेनैव तथाभूतवस्तुसिद्धिरिति फलितमाह—**शब्दाद्वा**॥ १३३॥

**अध्यक्षस्यापि सिद्धिः स्यात्प्रमाणेन विनैव वा ।**
**विना स्वस्य प्रसिद्धिस्तु नाज्ञं प्रत्युपयुज्यते ॥१३४॥**
**तस्यैवाऽज्ञत्वमिष्टं चेज्ज्ञानत्वेऽन्या मतिर्भवेत् ।**
**अन्यस्यैवाऽज्ञतायां च तद्विज्ञाने ध्रुवा भवेत् ॥१३५॥**
**ज्ञातता स्वात्मलाभो वा सिद्धिः स्यादन्यदेव वा ।**
**ज्ञातत्वेऽनन्तरोक्तौ त्वं पक्षौ संस्मर्तुमर्हसि ॥१३६॥**
**सिद्धिः स्यात्स्वात्मलाभश्चेद्यत्नस्तत्र निरर्थकः ।**
**सर्वलोकप्रसिद्धत्वात् स्वहेतुभ्यस्तु वस्तुनः ॥१३७॥**
**ज्ञानज्ञेयादिवादेऽतः सिद्धिर्ज्ञातत्वमुच्यते ।**
**अध्यक्षाध्यक्ष्ययोः सिद्धिर्ज्ञेयत्वं नाऽऽत्मलाभता ॥१३८॥**
**स्पष्टत्वं कर्मकर्त्रादेः सिद्धिता यदि कल्प्यते ।**
**स्पष्टताऽस्पष्टते स्यातामन्यस्यैव न चाऽऽत्मनः ॥१३९॥**

---

जडानामर्थानां प्रमाणादेव सिद्धत्वेपि चेतनस्याध्यक्षस्य नैवमित्याशङ्क्य निरस्ताशेषानर्थस्यापि तस्य तत्त्वमस्यादिवाक्येन वा सिद्धिर्वाक्यमन्तरेण स्वमहिम्नैव वा सिद्धिरिति विकल्पयति **अध्यक्षस्यापि** इति । यदि तस्य तत्त्वमस्यादिवाक्येनावगतिस्तदा समूलसंसारनिवर्त्तकत्वेनोपयुक्तेत्यङ्गीकृत्य द्वितीयं प्रत्याह—**विनेति** । प्रमाणं विना स्वस्याध्यक्षस्य या स्वमहिम्ना सिद्धिः सा नाज्ञं प्रत्युपयुज्यते । सत्यामपि तस्यां सकार्याज्ञानानिवृत्तेरित्यर्थः ॥ १३४ ॥

किञ्चाज्ञत्वमपि चेतनस्याहङ्कारस्य वा ? यदि ब्रह्मात्मनश्चेतनस्याज्ञत्वं तदा तस्य ज्ञानत्वेन स्वरूपव्यतिरिक्ता तत्त्वमस्यादिलक्षणा मितिरेष्टव्या । स्वरूपविज्ञानस्याज्ञानतत्कार्यानिवर्तकत्वादित्याह—**तस्यैवाज्ञत्वमिति** । यदि पुनरध्यक्षव्यतिरिक्तस्य क्वचिदहङ्कारादेरज्ञता तदापि प्रकृतस्याध्यक्षस्य विज्ञानार्थमव्यभिचारिणी मितिरेष्टव्या । नचाध्यक्षव्यतिरिक्तो ज्ञोऽस्ति । नान्योऽतोस्ति द्रष्टेत्यादिश्रुतेरित्याह—**अन्यस्यैवेति** ॥ १३५ ॥

अध्यक्षस्य सिद्धिस्वरूपत्वान्मानापेक्षा नास्तीत्याशङ्क्य सिद्धिशब्दार्थं विकल्पयति—**ज्ञाततेति** । अन्यदिति स्पष्टत्वमुच्यते । प्रथमं प्रत्याह—**ज्ञातत्व इति** । यदि ज्ञातत्वं सिद्धिशब्दार्थः स्वीक्रियते तदा तस्यैवाज्ञत्वमिष्टं चेदित्यादिनोक्तौ पक्षावनुसन्धातव्यौ । तत्र चाध्यक्षस्य वाऽन्यस्य वा ज्ञत्वे ज्ञातत्वं प्रमाणादेव सिद्ध्यतीत्युक्तम् । अतो ज्ञातत्वे सिद्धिशब्दार्थे बलादेवाध्यक्षे प्रमाणावृत्तिः स्यादित्यर्थः ॥१३६॥

द्वितीयमनूद्य लब्धस्वरूपे तस्मिन्प्रमाणव्यापारवैयर्थ्यं स्यादित्याह—**सिद्धिःस्यादिति** । वस्तुस्वरूपलाभार्थमेव प्रमात्रादिव्यापारोऽर्थवानित्याशङ्क्याह—**सर्वेति** ॥ १३७ ॥

द्वितीयपक्षासंभवे फलितमाह—**ज्ञानज्ञेयादि** । ज्ञानं ज्ञेयं ज्ञातता चास्तीति यस्य वादस्तस्य पक्षे ज्ञातत्वमेव सिद्धिशब्दार्थः स्यादित्यर्थः । ज्ञातत्वमेव व्याकरोति—**अध्यक्षेति** ॥ १३८ ॥

तृतीयं कल्पमुत्थापयति—**स्पष्टत्वम्** । चिदाभासोदयानुदयद्वारा कर्त्रादेः स्पष्टत्वास्पष्टत्वे साक्षिणः स्याताम् न तु केवलस्य कर्त्रादेरिति दूषयति—**स्पष्टत्वमिति** ॥ १३९ ॥

अद्रष्टुर्नैव चान्धस्य स्पष्टीभावो घटस्य तु ।
कर्त्रादेः स्पष्टतेष्टा चेद्द्रष्टृताऽध्यक्षकर्तृका ॥१४०॥

अनुभूतेः किमन्यस्मिन् स्यात्तवाऽपेक्षया वद ।
अनुभवितरीष्टा स्यात् सोऽप्यनुभूतिरेव नः ॥१४१॥

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥१४२॥

भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ।
सत्त्वं नाशित्वमस्याश्चेत् सकर्तृत्वं तथेष्यताम् ॥१४३॥

न कश्चिच्चेष्यते धर्म इति चेत्पक्षहानता ।
नन्वस्तित्वादयो धर्मा नास्तित्वादिनिवृत्तयः ।
न भूतस्तर्हि नाशित्वं स्वालक्षण्यं मतं हि ते ॥१४४॥

---

उक्तमेवार्थं दृष्टान्तेन स्पष्टयति—**अद्रष्टुर्नैव**। दृष्टिरहितस्य जडतमस्य घटादितुल्यस्य न वा अन्धस्य ज्ञानविषयत्वव्यतिरिक्तं प्राकट्यं नाम। किं च न स्पष्टत्वमभीष्टमस्ति नहि घटकर्तृकं साक्षात्प्रथनं संभवतीत्यर्थः। यदि तु कर्त्रादेः स्पष्टत्वं प्राकट्यं नामेष्टं तर्हि तद्विलक्षणस्यैवाभासद्वारा द्रष्टृता वक्तव्येति फलितमाह—**कर्त्रादेरिति** ॥ १४० ॥

उक्तममृष्यमाणः शाक्यः शङ्कते—**अनुभूतेः**। तस्याः स्वप्रकाशत्वादन्यापेक्षया न किञ्चित्तव फलमस्तीत्यर्थः। अनुभूतेर्भावत्वेनानुभवित्रधीनत्वात्तस्मिन्नपेक्षाऽभीष्टेत्याशङ्क्यानुभविताप्यस्माकमनुभूतिरेव व्यतिरेके प्रमाणाभावादित्याह—**अनुभवितरीति** ॥ १४१ ॥

कथं पुनरनुभूतिरनुभविताऽनुभाव्यश्चेति भेदव्यवहारः स्यादित्याशङ्क्यानुभूतिरेव क्षणिका संवृत्या भेदेन भातीत्याह—**अभिन्नोऽपीति** ॥ १४२ ॥

येषां पुनर्भूतिर्या सैव क्रिया कारकं च सैवोच्यते तेषां कोऽन्यो बुद्धिव्यतिरिक्तः स्यादित्याह—**भूतिर्येषामिति**। यदुक्तमनुभूतेरन्यापेक्षा नास्तीति तत्र किमसौ जन्मविनाशवती किं वा नेति विकल्प्याद्ये जन्मविनाशयोः व्यतिरिक्तकर्त्रधीनत्वदर्शनादनुभूतेः सकर्तृकत्वमपि स्वीकर्तव्यं तथा सति तस्या नान्यापेक्षेत्ययुक्तमित्याह—**सत्त्वमिति** ॥ १४३ ॥

द्वितीये क्षणिकपक्षक्षतिरित्याह—**न कश्चिदिति**। धर्माणामन्यापोहरूपत्वान्नोक्तदोषोऽस्तीति शङ्कते—**नन्वस्तित्वादयो**। स्वेनैव स्वं लक्ष्यते ज्ञायत इति स्वलक्षणस्तस्य भावःस्वालक्षण्यं तवानुभूतेः अनुमतं ततः सविकल्पकज्ञानाविषयत्वान्नाशादीनां च तद्गोचरत्वादनुभूतेर्नाशित्वादि न प्राप्नोतीति दूषयति—**न भूतेरिति** ॥ १४४ ॥

स्वलक्षणावधिर्नाशोनाशोऽनाशनिवृत्तिता ।
अगोरसत्त्वं गोत्वं ते न तु तद्गोत्वलक्षणम् ॥१४५॥
क्षणवाच्योऽपि योऽर्थः स्यात्सोऽप्यन्याभाव एव ते ॥१४६॥
भेदाभावेऽप्यभावस्य भेदो नामभिरिष्यते ।
नामभेदैरनेकत्वमेकस्य स्यात्कथं तव ॥१४७॥
अपोहो यदि भिन्नानां वृत्तिस्तस्य कथं गवि ।
नाभावा भेदकाः सर्वे विशेषा वा कथंचन ॥१४८॥
नामजात्यादयो यद्वत्संविदस्तेऽविशेषतः ॥१४९॥
प्रत्यक्षमनुमानं च व्यवहारे यदिच्छसि ।
क्रियाकारकभेदैस्तदभ्युपेयं ध्रुवं भवेत् ॥१५०॥
तस्मान्नीलं तथा पीतं घटादिर्वा विशेषणम् ।
संविदस्तदुपेयं स्याद्येन चाप्यनुभूयते ॥१५१॥

---

एतदेव स्फुटयति—**स्वलक्षणेति**। स्वलक्षणं स्वप्रमाणकं वस्तु नाशस्यावधिः सीमा समस्तविकल्परहितामनुभूतिं न स्प्रष्टुं शक्नोतीत्यर्थः। किञ्च नाशो नाम अनाशनिवृत्तिमात्रं अनाशोऽपि नाशनिवृत्तिमात्रम्। अतोऽन्योन्याश्रयत्वान्न वस्तुसंस्पर्शित्वमित्याह—**अनाश इति**। गोत्वादावपि तुल्यमन्योन्याश्रयत्वमित्याह—**अगोरिति**। अश्वत्वादेरगोपदार्थस्य निवृत्तिस्तव गोत्वं नतु गोः स्वलक्षणम् वस्त्विति तदप्यगोत्वं व्यावृत्तिरूपमेवेत्यन्योन्याश्रयत्वात् तव मते गोत्वादेरपि न सिद्धिरित्यर्थः॥ १४५ ॥

किञ्चाऽपोहवादिपक्षे योऽपि क्षणशब्दवाच्यः क्षणिकोऽर्थो विवक्षितः सोऽप्यक्षणिकाभावत्वात्प्रतियोगित्वेनाक्षणिकमर्थमाक्षिपतीत्याह—**क्षणवाच्योऽपि** ॥ १४६ ॥

किञ्चापोहस्य भेदाभावेऽप्यगोत्वमनश्वत्वमित्यादिनामभिर्भेदस्त्वयेष्टः स च न सम्भवतीत्याह—**भेदेति**। किमित्यपोहस्यागोत्वादिनामभेदाद्भेदो न संभवतीत्याशङ्क्य निःस्वभावत्वादित्याह—**नामेति** ॥ १४७ ॥

किञ्च प्रतियोगिनामानन्त्यात्तदवगममन्तरेणापोहस्य गवि वृत्तिर्न ज्ञातुं शक्यत इत्याह—**अपोह इति**। किञ्च क्षणिकत्वपक्षे गोत्वादयोऽन्यापोहत्वादभावाः सन्तो न व्यावर्त्तकाः स्युः। तथा च खण्डादयश्च न विशेष्या भवेयुः मिथः सम्बन्धानिरूपणात्तथा च खण्डो गौर्नीलमुत्पलमित्यादिविशिष्टव्यवहारानुपपत्तिरित्याह—**नाभावा भेदकाः इति** ॥ १४८ ॥

विशिष्टव्यवहारानुपपत्तौ दृष्टान्तमाह—**नामेति**। यथा त्वत्पक्षे संविदो विशेषाभावान्नामजात्यादयो भेदका न भवन्ति तथा भेदाभावादपोहस्यापि विशेषणत्वविशेष्यत्वासिद्धेर्विशिष्टव्यवहारानुपपत्तिरित्यर्थः॥ १४९ ॥

किञ्च प्रत्यक्षमनुमानञ्च प्रमाणद्वयं भवतेष्यते तदनुरोधेन भूतिर्येषां क्रिया सैव चेति मतं हातव्यमित्याह—**प्रत्यक्षमनुमानं चेति** ॥ १५० ॥

फलितमुपसंहरति—**तस्मान्नीलमिति** ॥ १५१ ॥

रूपादीनां यथाऽन्यः स्याद्ग्राह्यत्वाद्ग्राहकस्तथा ।
प्रत्ययस्य तथाऽन्यः स्याद्व्यञ्जकत्वात्प्रदीपवत् ॥१५२॥

अध्यक्षस्य दृशेः कीदृक्संबन्धः संभविष्यति ।
अध्यक्ष्येण तु दृश्येन मुक्त्वाऽन्यो द्रष्टृदृश्यताम् ॥१५३॥

अध्यक्षेण कृता दृष्टिर्दृश्यं व्याप्नोत्यथाऽपि वा ।
नित्याध्यक्षकृतः कश्चिदुपकारो भवेद्धियाम् ॥१५४॥

स चोक्तस्तन्निभत्वं प्राक्सव्याप्तिश्च घटादिषु ।
यथाऽऽलोकादिसंव्याप्तिर्व्यञ्जकत्वाद्धियस्तथा ॥१५५॥

आलोकस्थो घटो यद्वद्बुद्ध्यारूढो भवेत्तथा ।
धीव्याप्तिः स्याद्घटारोहो धियो व्याप्तौ क्रमो भवेत् ॥१५६॥

---

येनानुभूयते सोऽपि द्रष्टाऽभ्युपगन्तव्य इत्युक्तं तत्रानुमानमाह—**रूपादीनामिति**। प्रत्यय-शब्दा बुद्धिः अतिरिक्तग्राहकग्राह्या ग्राह्यत्वाद्रूपादिवदिति बुद्धिग्राहकसाक्षिसिद्धिरित्यर्थः। **किञ्च** प्रत्ययः स्वातिरिक्तग्राहकग्राह्यो व्यञ्जकत्वाद्दीपवत् । व्यञ्जकत्वञ्च जडप्रकाशत्वमित्याशयेनानुमानान्तर-माह—**तथेति** ॥ १५२ ॥

कस्तर्हि साक्षिसाक्ष्ययोः सम्बन्धः स्यादित्याशङ्क्य द्रष्टृदृश्यभावं तयोः सम्बन्धं दर्शयति—**अध्यक्षस्येति** ॥ १५३ ॥

द्रष्टृदृश्यसम्बन्धाभ्युपगमे बलादाभासोऽभ्युपगन्तव्य इति दर्शयितुं विकल्पयति—**अध्यक्षेणेति** ॥ १५४ ॥

तेन परिणामिना कृता परिणामरूपा दृष्टिर्दृश्यमर्थं व्याप्नोतीत्येकः पक्षः। किं **वा कूटस्थेन तेन सन्निधिमात्रेण** बुद्धितद्वृत्तीनामुपकारोऽनुग्रहः कृतः तदेतद् द्रष्टृदृश्यत्वमिति पक्षान्तरं तत्र तावत्परिणामप्रसङ्गादाद्यस्य सावद्यत्वं मत्वा द्वितीयमङ्गीकुर्वन्नाह—**स चोक्तः**। स चोपकारो बुद्धेश्चिन्निभत्वं नाम प्रागेवोक्तोऽस्माभिरित्याभाससिद्धिरित्यर्थः कथं तर्हि वाह्यार्थसाधकत्वं तत्राह—**संव्याप्तिश्चेति**। यथा घटादेरादित्याद्यालोकेन दीपादिना च संव्याप्तिर्दृष्टा तथा व्यञ्जकत्वाविशेषा-द्बुद्धेर्घटादिविषयेषु व्याप्तिरस्तीति बुद्धेः साक्षिदृश्याया विषयसाधकत्वमित्यर्थः ॥ १५५ ॥

बुद्ध्यारूढप्रकरणे विषयस्य बुद्ध्यारूढत्वाभिधानादत्र च प्रमाद्वारेण बुद्धेर्विषयव्यापकत्ववचनात् मिथो विरोधः स्यादित्याशङ्क्यैकार्थत्वान्न विरोध इति दृष्टान्तपूर्वकमाह—**आलोकस्थ इति**।**यथाऽऽलोक-**व्याप्तो घट आलोकस्थ उच्यते एवं बुद्धिव्याप्तो बुद्ध्यारूढ उच्यते। एतदेव स्पष्टयति—**धीव्याप्तिरिति**। घटस्य बुद्धावारोहो नाम तत्र व्याप्तिरेव तर्हि बुद्धेरात्मनश्च घटावभासकत्वे को भेद इति तत्राह—**धियो व्याप्ताविति**। बुद्धिः क्रमेण विषयानवभासयति परिणामित्वादात्मा तु युगपदेव सर्वमवभास-यतीति विशेष इत्यर्थः ॥ १५६ ॥

पूर्वा स्यात्प्रत्ययव्याप्तिस्ततोऽनुग्रह आत्मनः ।
कृत्स्नाध्यक्षस्य नो युक्तः कालाकाशादिवत्क्रमः ॥१५७॥
विषयग्रहणं यस्य कारणापेक्षया भवेत् ।
सत्येव ग्राह्यशेषे च परिणामी स चित्तवत् ॥१५८॥
अध्यक्षोऽहमिति ज्ञानं बुद्धेरेव विनिश्चयः ।
नाध्यक्षस्याविशेषत्वान्न तस्यास्ति परो यतः ॥१५९॥
कर्त्रा चेदहमित्येवमनुभूयेत मुक्तता ।
सुखदुःखविनिर्मोको नाहंकर्तरि युज्यते ॥१६०॥
देहादावभिमानोत्थो दुःखीति प्रत्ययो ध्रुवम् ।
कुण्डलीप्रत्ययो यद्वत्प्रत्यगात्माभिमानिना ॥१६१॥

---

वैलक्षण्यान्तरं चास्तीत्याह—**पूर्वा स्यात्**। अनुग्रहो नामोपकारश्चिदाभासोदयः। प्रथमं बुद्धिर्घटादिविषयं प्राप्य पश्चात्तदाकारसहिता सुखदुःखादिफलपर्यन्ता साक्षिणः साक्ष्यतां गच्छतीत्यर्थः। अध्यक्षस्यापि बुद्धेरिव क्रमेणैव विषयसाधकत्वं किन्न स्यादित्याशङ्क्याह—**कृत्स्नेति**। न हि कालस्याकाशस्यादित्यस्य वा स्वगोचरव्याप्तौ क्रमोऽस्ति। तथा सर्वाध्यक्षस्य स्वाज्ञानतत्कार्ययोः सदा चिदाभासव्याप्तेर्न क्रमः सम्भवतीत्यर्थः ॥ १५७ ॥

अध्यक्षस्यापि विषयावभासकत्वाद्बुद्धेरिव परिणामित्वं स्यादित्याशङ्क्याह—**विषयग्रहणमिति**। अध्यक्षस्तु करणनिरपेक्षः स्वाभासद्वारेणाशेषबुद्धितद्वृत्तिसाक्षी न परिणामीत्यर्थः ॥ १५८ ॥

तस्यापि ब्रह्मास्मीति ज्ञानाकारेण परिणामः स्यादित्याशङ्क्याह—**अध्यक्षोऽहमिति**। यदि निर्विशेषस्याध्यक्षस्यापि ब्रह्मास्मीति परिणामः स्यात्तदा तस्यापि बुद्धेरिवान्येन साक्षिणा भवितव्यम्। न च तस्यान्यः साक्षी सम्भवतीत्याह—**न तस्येति** ॥ १५९ ॥

अन्तःकरणस्य ब्रह्मास्मीति ज्ञानाकारपरिणामश्चेत्तस्यैव फलभागितापि स्यादित्याशङ्क्याह—**कर्त्रेति**। साभासान्तःकरणेन परिणामिना ब्रह्माहमिति नित्यमुक्तब्रह्मरूपता यदि साक्षात्क्रियेत तदा तत्र सुखादिमत्वेनानुभूयमाने तद्विनिर्मोकस्यायुक्तत्वान्न तस्य फलभागित्वं किन्त्वात्मन एव फलित्वमित्यर्थः ॥ १६० ॥

यथाऽहंकर्तुः सुखादिमत्त्वेन प्रतीतेर्न युक्ता मुक्तता तथाऽऽत्मनोऽपीत्याशङ्क्याध्यक्षस्य स्वतोऽशनायाद्यतीतस्य साभासबुद्ध्यविवेकमूलतो दुःखीति प्रत्ययस्य तद्विवेके मुक्तत्वानुभवः सम्भवतीत्याह—**देहादाविति**। यस्मान्मिथ्याभिमानोत्थः सुखी दुःखीत्यात्मनि प्रत्ययस्तस्मात्प्रत्यगात्मानं नित्यमुक्तत्वादिलक्षणं ब्रह्मरूपेणाऽवगमयता विवेकिप्रत्ययेन प्रागुक्ताविवेकिप्रत्ययस्य बाध्यता सिद्ध्यतीत्याह—**प्रत्यगात्मेति**। इहेति वेदान्तसमयोक्तिः ॥ १६१ ॥

बाध्यते प्रत्ययेनेह विवेकेनाऽविवेकवान् ।
विपर्यासेऽसदन्तं स्यात्प्रमाणस्याप्रमाणतः ॥१६२॥
दाहच्छेदविनाशेषु दुःखित्वं नान्यथाऽऽत्मनः ।
नैव ह्यन्यस्य दाहादावन्यो दुःखी भवेत्क्वचित् ॥१६३॥
अस्पर्शत्वाददेहत्वान्नाहं दाह्यो यतः सदा ।
तस्मान्मिथ्याभिमानोत्थं मृते पुत्रे मृतिर्यथा ॥१६४॥
कुण्डल्यहमिति ह्येतद्बाध्येतैव विवेकिना ।
दुःखीति प्रत्ययस्तद्वत् केवलाहंधिया सह ॥१६५॥
सिद्धे दुःखित्व इष्टं स्यात् तच्छक्तिश्छन्दसाऽऽत्मनः ।
मिथ्याभिमानतो दुःखी तेनाऽर्थापादनक्षयः ॥१६६॥
अस्पर्शोऽपि यथा स्पर्शमचलश्चलनादि च ।
अविवेकात्तथा दुःखं मानसं चात्मनीक्षते ॥१६७॥
विवेकात्मधिया दुःखं नुद्यते चलनादिवत् ।
अविवेकस्वभावेन मनो गच्छत्यनिच्छतः ॥१६८॥

---

अविवेकवता विवेकी प्रत्ययः किं न बाध्यते विरोधाविशेषादित्याशङ्क्याह—**विपर्यासे** । मिथ्याज्ञानेन सम्यग्ज्ञानस्य बाध्यत्वे प्रमाणस्य वस्तुबोधकस्य मिथ्याज्ञानेन बाधात्तद्बलाद्वस्तुनिश्चयानुपपत्तेः सर्वशून्यतान्तमापद्येत । तथा च कुतो वैपरीत्यशङ्केत्यर्थः ॥ १६२ ॥

आत्मनो मुख्यमेव दुःखित्वं किं न स्यादित्याशङ्क्यान्यस्य दाहादावन्यस्य दुःखित्वायोगादात्मनश्च देहे दाहादौ दुःखित्वोपलम्भाद्देहे तादात्म्याध्यासात्तस्य दुःखित्वमित्याह—**दाहच्छेदेति** । अन्यथेत्यध्यासमन्तरेणेत्यर्थः ॥ १६३ ॥

आत्मनःस्वतो दाहादिसम्बन्धादध्यासमन्तरेणैव दुःखित्वं किं न स्यादित्याशङ्क्याह—**अस्पर्शत्वादिति** । अग्न्यादिसंबन्धशून्यत्वं अस्पर्शत्वं अदेशत्वं पादाद्यवयवराहित्यम् ॥ १६४ ॥

दुःखित्वप्रत्ययस्यात्मन्यध्यासात्मकत्वे दृष्टान्तपूर्वकं फलितमाह—**कुण्डल्यहमिति** । केवले शुद्धे ब्रह्मण्यहं ब्रह्मास्मीति धीः केवलाहंधीस्तया दुःखित्वप्रत्ययस्य कालत्रयेऽपि निवृत्तिरित्यर्थः ॥ १६५ ॥

आत्मनो मोक्षोपदेशानुपपत्त्या दुःखित्वे सिद्धे तदनुपपत्त्या तच्छक्तिमत्त्वमेष्टव्यमित्याशङ्क्याह—**सिद्धे दुःखित्व इष्टम्** । न च प्रमाणेन केनचिदात्मनो दुःखित्वं निश्चितं अतो न तस्य तच्छक्तिमत्त्वं कदाचिदपि स्वीकर्त्तव्यमित्याह—**मिथ्येति** । अर्थादनुपपत्त्या यच्छक्तिमत्त्वापादनं तस्य क्षयोऽन्यथोपपत्तिः उक्तन्यायेन सिद्धेत्याह—**तेनेति** ॥ १६६ ॥

संसारस्य वस्तुत्वं निराकृत्याध्यासात्मकत्वमुक्तं प्रपञ्चयति—**अस्पर्शोऽपीति** । यथा स्थूलदेहव्यतिरिक्तस्तदविवेकात्तद्धर्मानात्मनि मन्यते तथा सूक्ष्मदेहाविवेकात्तद्धर्मानपि स्वात्मनि पश्यतीत्यर्थः ॥१६७॥

संसारस्याध्यासात्मकत्वे फलितमाह—**विवेकात्मेति** । मानसं दुःखं तदविवेकादारोपितं साक्षिणीत्युक्तमन्वयव्यतिरेकाभ्यां साधयति—**अविवेकेति** ॥ १६८ ॥

तदा तु दृश्यते दुःखं नैश्चल्ये नैव तस्य तत् ।
प्रत्यगात्मनि तस्मात्तद्दुःखं नैवोपपद्यते ॥१६९॥
त्वंसतोस्तुल्यनीडत्वान्नीलाश्ववदिदं भवेत् ॥१७०॥
निर्दुःखवाचिना योगात् त्वंशब्दस्य तदर्थता ।
प्रत्यगात्माभिधानेन तच्छब्दस्य युतेस्तथा ॥१७१॥
दशमस्त्वमसीत्येवं वाक्यं स्यात्प्रत्यगात्मनि ॥१७२॥
स्वार्थस्य ह्यप्रहाणेन विशिष्टार्थसमर्पकौ ।
प्रत्यगात्मावगत्यन्तौ नान्योऽर्थोऽर्थाद्विरोध्यतः ॥१७३॥
नवबुध्यपहाराद्धि स्वात्मानं दशपूरणम् ।
अपश्यञ्ज्ञातुमेवेच्छेत् स्वमात्मानं जनस्तथा ॥१७४॥

---

ब्रह्माज्ञानमूलमनोनिबन्धनत्वाद्दुःखित्वादिभ्रमस्य ब्रह्मात्मज्ञानेन मूलनिवृत्तौ निवृत्तिरित्याह—**प्रत्यगात्मनीति**॥ १६९ ॥

एवं युक्त्या प्रत्यगात्मनो निर्दुःखत्वे सिद्धे वाक्यादेव त्वं ब्रह्मासीति ज्ञानं सिद्ध्यतीत्याह—**त्वंसतोरिति** । यथा नीलाश्वपदयोः सामानाधिकरण्यादेकद्रव्यनिष्ठत्वं तथा त्वंतच्छब्दयोः सामानाधिकरण्यादिदं तत्त्वमसिवाक्यमखण्डार्थनिष्ठं भवेदित्यर्थः ॥ १७० ॥

तदेव स्फुटयति—**निर्दुःखेति** । सच्छब्देन निर्दुःखवाचिना योगात्त्वंशब्दस्य निर्दुःखब्रह्मार्थता सिद्ध्यति । तच्छब्दस्यापि त्वंशब्देन प्रत्यगात्माभिधायिना युतेः संबन्धात्तथा प्रत्यगात्मार्थत्वमित्यर्थः ॥ १७१ ॥

तत्त्वमसिवाक्यमुक्तन्यायेनापरोक्षवस्तुप्रतिपादकमित्येतद् दृष्टान्तेन स्पष्टयति-**दशम इति** ॥१७२॥

तत्त्वंपदयोः एकार्थत्वे पर्यायित्वान्न सहप्रयोगः स्यादित्याशङ्क्याह—**स्वार्थस्य** । प्रत्यक्षपरोक्षलक्षणस्य स्वार्थस्यापरित्यागेनैतौ शब्दौ विशिष्टार्थसमर्पकौ । ततो वाच्यभेदान्न पर्यायितेत्यर्थः । तर्हि विशिष्टार्थसमर्प्पकत्वान्नाखण्डार्थत्वं तत्राह—**प्रत्यगात्मेति** । कल्पितभेदपरामर्शेनैकपदार्थनिष्ठता तर्हि सामानाधिकरण्यं तदनुपपत्त्या लक्षणया प्रत्यगात्मावगतिपरत्वं पदयोः सिद्ध्यतीत्यर्थः । त्वंतदर्थयोरंशांशिभावेन कार्यकारणभावेन वा पदद्वयसामानाधिकरण्यमन्यथासिद्धमित्याशङ्क्याह—**नान्योऽर्थ इति** । अतोऽर्थादेकरसाद्विरोधिकार्यकारणत्वांशांशित्वादिर्योऽन्योऽर्थो न स वेदान्तेषु प्रतिपाद्यते । "अन्यत्रास्मात्कृताकृतात्" "निष्कलं निष्क्रियमि"त्यादिविरोधादित्यर्थः ॥ १७३ ॥

ननु किमिति महता प्रयत्नेनाखण्डार्थप्रतिपत्तये व्याप्रियते किमिति वा प्रसङ्ख्यानादिलक्षणा क्रिया नोपदिश्यत इत्याशङ्क्य मुमुक्षोर्जिज्ञासुत्वादचिकीर्षुत्वाच्चेति दृष्टान्तपूर्वकं दर्शयति—**नवबुद्ध्यपहारादिति** । [ नेह ] दशमो माणवको नवैव वयमिति बुद्ध्या चित्तस्य स्वात्मनो बहिरपहृतत्वाद्दशानां पूरणं स्वात्मानमजानानश्चावगंतुमेव दशममिच्छेन्न कर्त्तुं तथा मुमुक्षुरपि ब्रह्मात्मानं ज्ञातुमेवेच्छति न कर्त्तुं तस्मात्तत्त्वमसिवाक्ये प्रतिपत्तिरेव व्युत्पाद्यते न क्रियेत्यर्थः ॥ १७४ ॥

अविद्याबद्धचक्षुष्ट्वात्कामापहृतधीः सदा ।
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥१७५॥
दशमस्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः ।
स्वमात्मानं विजानाति कृत्स्नान्तःकरणेक्षणम् ॥१७६॥
इदं पूर्वमिदं पश्चात् पदं वाक्यं भवेदिति ।
नियमो नैव वेदेऽस्ति पदसाङ्गत्यमर्थतः ।
अन्वयव्यतिरेकाभ्यां ततो वाक्यार्थबोधनम् ॥१७७॥
वाक्ये हि श्रूयमाणानां पदानामर्थसंस्मृतिः ॥१७८॥
यदा नित्येषु वाक्येषु पदार्थस्तु विविच्यते ।
वाक्यार्थज्ञानसंक्रान्त्यै तदा प्रश्नो न युज्यते ॥१७९॥
अन्वयव्यतिरेकोक्तिः पदार्थस्मरणाय तु ।
स्मृत्यभावे न वाक्यार्थो ज्ञातुं शक्यो हि केनचित् ॥१८०॥
तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः ।
व्यज्यते नैव वाक्यार्थो नित्यमुक्तोऽहमित्यतः ॥१८१॥

---

ब्रह्मात्मभूतश्चेन्मुमुक्षुर्नात्मानमनात्मराशेर्विविच्य ब्रह्मत्वेन किमिति न जानातीत्याशङ्क्य स्वभावतोऽनात्मविषयत्वाच्चित्तस्याचार्योपदेशं विना न शक्नोति ज्ञातुमिति दृष्टान्तेन कथयति—**अविद्याबद्धेति** ॥ १७५ ॥

शास्त्राचार्योपदेशयुक्तो मुमुक्षुर्विविच्यात्मानं ब्रह्मत्वेन जानातीति दृष्टान्तपुरःसरं दर्शयति—**दशम इति** ॥ १७६ ॥

त्वंशब्दस्यानुवादकत्वात्पूर्वं प्रयोगात् तच्छब्दस्य चापूर्वार्थवादित्वात् पश्चात्प्रयोगो युक्तः स्यादित्याशङ्क्याह—**इदं पूर्वमिति** । वेदे पदानां सम्बन्धोऽर्थबलान्न पाठबलादाहरपात्रं पात्रमाहरेत्युभयथा प्रयोगदर्शनात्तस्मादनुवादकस्यापि पश्चात्पाठे चापूर्वप्रतिपादकस्यापि पूर्वपाठो न विरोधीत्यर्थः ॥ १७७ ॥

उक्तेऽर्थे हेतुमाह—**वाक्ये हीति** ॥ १७८ ॥

आचार्येण ब्रह्मासीत्युपदिष्टो मुमुक्षुरहं कथं 'ब्रह्म स्यामि'ति पृच्छति । तदनुपपत्त्या [ कथं ] तत्त्वमसि वाक्यमैक्यबोधनार्थमित्याशङ्क्याह—**यदा नित्येषु** । वेदवाक्येषु शिष्यबुद्धौ वाक्यार्थज्ञानसमुदयार्थमन्वयव्यतिरेकाभ्यां पदार्थो वृद्धव्यवहारानुसारेण विविच्यते तदा कथमहं ब्रह्म स्यामिति प्रश्नो न घटते । तस्मात्पदार्थाव्युत्पत्तिनिबन्धनः प्रश्नो न वाक्यासामर्थ्यादित्यर्थः । पदार्थानभिज्ञस्यैव प्रश्नः स्यादित्युक्तमेव प्रकटयति—**अन्वयेति** ॥ १८० ॥

पदार्थाज्ञाने प्रश्नस्य सावकाशत्वादन्वयव्यतिरेकाभ्यां पदार्थज्ञाने प्रयतितव्यमित्याह—**तत्त्वमस्यादि** । अतो वाक्यादिति यावत् ॥ १८१ ॥

अन्वयव्यतिरेकोक्तिस्तद्विवेकाय नान्यथा ।
त्वंपदार्थविवेके हि पाणावर्पितबिल्ववत् ॥१८२॥
वाक्यार्थो व्यज्यते चैवं केवलोऽहंपदार्थतः ।
दुःखीत्येतदपोहेन प्रत्यगात्मविनिश्चयात् ॥१८३॥
तत्रैवं संभवत्यर्थे श्रुतहानाश्रुतार्थधीः ।
नैव कल्पयितुं युक्ता पदवाक्यार्थकोविदैः ॥१८४॥
प्रत्यक्षादीनि बाधेरन् कृष्णलादिषु पाकवत् ।
अक्षजादिनिभैरेतैः कथं स्याद्वाक्यबाधनम् ॥१८५॥
दुःख्यस्मीति सति ज्ञाने निर्दुःखीति न जायते ।
प्रत्यक्षादिनिभत्वेऽपि वाक्यान्न व्यभिचारतः ॥१८६॥
स्वप्ने दुःख्यहमभ्यासं दाहच्छेदादिहेतुतः ।
तत्कालभाविभिर्वाक्यैर्न बाधः क्रियते यदि ॥१८७॥

---

पदार्थज्ञानाभावे वाक्यार्थज्ञानायोगात् त्वंपदार्थज्ञानार्थमन्वयव्यतिरेकयोरुक्तिस्तत्र तत्र प्रसिद्धेत्याह—**अन्वयव्यतिरेकोक्तिः** । वाक्यार्थज्ञानार्थमेव किमित्यन्वयव्यतिरेकोक्तिर्न स्यादित्याशङ्क्यान्वव्यतिरेकयोर्भेदविषयत्वादखण्डवाक्यार्थविषयत्वायोगादित्याह—**नान्यथेति** ॥ १८२ ॥

अन्वयव्यतिरेकाभ्यां पदार्थविवेके सति वाक्यादेवाखण्डवाक्यार्थस्यापरोक्षत्वेन प्रतिपत्तिः सिद्ध्यतीत्याह—**वाक्यार्थो व्यज्यत इति** । चकारोऽवधारणे । अपरोक्षत्वेनाखण्डवाक्यार्थप्रतिपत्तिमेव प्रकटयति—**एवमिति** । दुःखीति दुःखविशिष्टत्वेन दृष्टस्येदमंशस्यापोहेन तत्साक्षितया प्रत्यगात्मनोऽनिदंचिद्धातोर्विनिश्चयात्तस्यैव केवलाहंपदार्थस्य निष्प्रपञ्चस्य साक्षिमात्रावशिष्टत्वात्तस्याखण्डाद्वितीयं ब्रह्मतावन्मात्रतेत्येव सफलमपरोक्षज्ञानं वाक्यात्प्रकटीभवतीत्यर्थः ॥ १८३ ॥

उक्तन्यायेन वाक्यादेवापरोक्षवाक्यार्थज्ञानमुपपाद्येदानीं पूर्ववादिकल्पनाया निर्मूलत्वमाह—**तत्रैवमिति** । तस्मिन्नखण्डवाक्यार्थे प्रागुक्तन्यायेन घटमाने सति श्रुतस्याखण्डापरोक्षार्थस्य हानमश्रुतस्य सखण्डपरोक्षार्थस्य धीश्चेत्येवं न कल्पयितुं शक्यते विद्वद्भिरित्यर्थः ॥ १८४ ॥

तत्र पूर्ववाद्याह—**प्रत्यक्षादीनीति** । यथा कृष्णलान् श्रपयेदिति कृष्णलेषु सुवर्णकणेषु श्रूयमाणोऽपि पाकः तेषु पाकफलासंभवात्प्रत्यक्षेण बाध्यते तथा श्रुतं ब्रह्मात्मत्वं प्रत्यक्षादिभिर्बाध्यते । तस्मादश्रुतप्रसङ्ख्यानादिकल्पना युक्तेत्यर्थः । कर्तृत्वादिप्रतिभासानामितरेतराध्यासप्रसूतत्वेन विभ्रमत्वाद्बाधकत्वासिद्धिरिति सिद्धान्तयति—**अक्षजादीति** ॥ १८५ ॥

दुःख्यस्मीति ज्ञानस्य प्रत्यक्षादिनिभत्वेऽपि तत्र प्रत्यक्षगन्धस्य विद्यमानत्वात् वाक्याद्बलवत्त्वान्न ततो निर्दुःखीति ज्ञानं सिध्यतीति शङ्कते—**दुःख्यस्मीति** । तद्दूषयति—**न व्यभिचारत इति** ॥ १८६ ॥

तमेव व्यभिचारं स्फोरयति—**स्वप्ने इति** । अहमद्य स्वप्नावस्थायां दाहच्छेदादिवशाद्दुःखवानासम् । तच्च दुःखं तत्कालीनाप्तोपदेशान्निर्दुःखोऽसीत्येवं रूपाद्बाध्यते तथा तत्त्वमस्यादिवाक्यजनितेनापि ज्ञानेन जागरिते प्रतीतस्य दुःखस्य बाधो युक्त एवेत्यर्थः । स्वप्नकालभाविभिर्वाक्यैस्तत्कालीनस्य दुःखस्य बाधो न क्रियते तेषामाभासत्वादिति शङ्कते—**तत्कालेति** ॥ १८७ ॥

समाप्तेस्तर्हि दुःखस्य प्राक्च तद्बाध इष्यताम् ।
न हि दुःखस्य सन्तानो भ्रान्तेर्वा दृश्यते क्वचित् ॥१८८॥

प्रत्यगात्मन आत्मत्वं दुःख्यस्मीत्यस्य बाधया ।
दशमं नवमस्येव वेद चेदविरुद्धता ॥१८९॥

नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥१९०॥

अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥१९१॥

सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि ॥१९२॥

प्रबोधेन यथा स्वाप्नं सर्वदुःखं निवर्तते ।
प्रत्यगात्मधिया तद्वद्दुःखित्वं सर्वदाऽऽत्मनः ॥१९३॥

कृष्णलादौ प्रमाऽजन्म तदन्यार्थाऽमृदुत्वतः ।
तत्त्वमस्यादिवाक्येषु न त्वेवमविरोधतः ॥१९४॥

---

तथापि न दोषोऽस्तीत्याह—**समाप्तेः**। दुःखस्य समाप्तेरूर्ध्वं प्राक्च तद्बाधोऽवश्यंभावीत्युक्तम्। तत्र हेतुमाह—**न हीति** ॥ १८८ ॥

प्रत्यक्षादिना तत्त्वमस्यादिवाक्यस्य विरोधाभावे हेत्वन्तरमाह—**प्रत्यगात्मनः**। आत्मत्वं प्रत्यग्भूत-ब्रह्मत्वम् ॥ १८९ ॥

उक्तमेव न्यायं संक्षिप्य प्रतिपत्तिसौकर्यार्थं स्मारयति—**नित्यमुक्तत्वमिति**। अन्यतःशब्देन प्रसंख्यानाद्यनुष्ठानमुच्यते। तर्हि वाक्यस्य निरपेक्षस्यैव स्वार्थज्ञानहेतुत्वे श्रुतवाक्यस्य सर्वस्यापि श्रुत-वाक्यार्थज्ञानमापद्येतेत्याशङ्क्याह—**वाक्यार्थस्येति** ॥ १९० ॥

कथं तर्हि पदार्थस्मृतिस्तत्राह—**अन्वयव्यतिरेकाभ्यां**। पदार्थज्ञाने सति श्रुताद्वाक्याद्वाक्यार्थज्ञानं भवतीति फलितमाह—**एवं निर्दुःखमात्मानमिति** ॥ १९१ ॥

वाक्यार्थज्ञानस्य निर्दोषवाक्यजन्यत्वात्प्रमात्वं कोटिद्वयासंस्पर्शित्वादसंदिग्धत्वमबाध्यत्वाद-विपर्यस्तत्वमित्येतदाह—**प्रमेति**। एतदेव प्रागुक्तदृष्टान्तेन स्पष्टयति—**दशम इति** ॥ १९२ ॥

प्रदर्शितप्रक्रियया प्राप्तस्य वाक्योत्थज्ञानस्य फलं दृष्टान्तेन दर्शयति—**प्रबोधेन** ॥ १९३ ॥

यदुक्तं कृष्णलादिविपाकवदिति तत्र वैषम्यमाह—**कृष्णलादौ**। आदिपदेन किंकणान् वहन्ती-त्यादि गृह्यते। तत्र हि प्रमा न जायते। तण्डुलेभ्यो अन्यस्यार्थस्य कृष्णलादेस्तण्डुलानामिव मृदुत्वस्य पाकफलस्यायोगात्तत्र पुरुषस्यानैश्वर्यादशक्यनियोगानुपपत्तेरित्यर्थः। दार्ष्टान्तिके विशेषं दर्शयति—**तत्त्वमस्यादीति** ॥ १९४ ॥

वाक्ये तत्त्वमसीत्यस्मिन् ज्ञातार्थे तदसिद्धयम् ।
त्वमर्थे सत्यसाहाय्याद्वाक्यं नोत्पादयेत्प्रमाम् ॥१९५॥
तत्त्वमोस्तुल्यनीडाथमसीत्येतत्पदं भवेत् ॥१९६॥
तच्छब्दः प्रत्यगात्मार्थस्तच्छब्दाथस्त्वमस्तथा ।
दुःखित्वाप्रत्यगात्मत्वं वारयेतामुभावपि ॥१९७॥
एवं च नेति नेत्यर्थं गमयेतां परस्परम् ॥१९८॥
एवं तत्त्वमसीत्यस्य गम्यमाने फले कथम् ।
अप्रमाणत्वमस्योक्त्वा क्रियापेक्षत्वमुच्यते ॥१९९॥
तस्मादाद्यन्तमध्येषु कुर्वित्येतद्विरोध्यतः ।
न कल्पामोऽश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः ॥२००॥
यथाऽनुभूयते तृप्तिर्भुजेर्वाक्यान्न गम्यते ।
वाक्यस्य विधृतिस्तद्वद्गोशकृत्पायसीक्रिया ॥२०१॥

---

विविक्तपदार्थस्य तत्त्वमस्यादिवाक्यात्प्रमा जायत इत्युक्तम् । तत्र पदार्थेष्वपि त्वंपदार्थ—विवेके यत्नवता भवितव्यमित्याह—**वाक्य इति** । त्वंपदार्थज्ञानेऽपि वाक्यमहं ब्रह्मेति प्रमां नोत्पादयति तत्त्वंपदयोस्सामानाधिकरण्यद्वारेणोपयोगवदसिपदस्योपयोगाभावादित्याशङ्क्याह—**तत्त्वमोरिति** । तत्त्वमित्युक्ते कुरु चिन्तयेति वा साकाङ्क्षत्वादसीति सिद्धैक्यानुवादे नैराकाङ्क्ष्यमित्यर्थः ॥ १९६ ॥

निराकाङ्क्षसामानाधिकरण्ये सति को लाभः स्यादित्याशङ्क्याह—**तच्छब्द इति** । यथा प्रत्यगात्मविषयस्तच्छब्दस्तथा त्वंशब्दस्य तच्छब्दार्थ एवार्थो भवतीत्युक्तेऽपि किं लभ्यते ? तत्राह—**दुःखित्वेति** ॥ १९७ ॥

तत्त्वंशब्दावन्योऽन्यसन्निधानाद्विरुद्धार्थनिवारकावित्येवमङ्गीकारे निःशेषार्थगमकत्वं तयोः सिद्ध्यतीत्याह—**एवं चेति** ॥ १९८ ॥

यस्माद्वाक्यस्य पदानां सामानाधिकरण्यद्वाराऽखण्डापरोक्षब्रह्मात्मनिष्ठत्वं तस्माद्वाक्यस्य तथाविधार्थप्रतिपादकत्वं नास्तीत्ययुक्तमित्याह—**एवं तत्त्वमसीत्यस्य** ॥ १९९ ॥

प्रसङ्ख्यानादिनिरपेक्षं तत्त्वमसिवाक्यं स्वमहिम्नैवापरोक्षमर्थं यतो बोधयति ततः क्रियापेक्षकत्वं वाक्यस्यायुक्तमित्युपसंहरति—**तस्मादिति** । आदौ तत्त्वमसीति प्रथमोपदेशे मध्येऽन्वयव्यतिरेकिग्रहणकाले अन्ते निर्विचिकित्सब्रह्मानुभवकाले तत्त्वमसीति चेतः समाधानं कुर्विति कल्पनमश्रुतत्वेन श्रुतत्यागानुपपत्त्या च विरुद्धमित्यर्थः ॥ २०० ॥

वाक्याद्ब्रह्मात्मानुभवः स्यादित्युक्तमाक्षिपति-**यथानुभूयत इति** । लोके भुजिक्रियातः तृप्तिरनुभूयते न तु देवदत्तो भुक्त इत्यादिवाक्यादेव तृप्तिर्गम्यते । यथा वा गोशकृता पयसा पायसी क्रिया नोपपद्यते तद्वद्वाक्याद्ब्रह्मात्मन्यपरोक्षप्रतिपत्तिः स्यादिति वाक्यस्य विवृत्तिर्न युज्यते तस्माद्वाक्यात्परोक्षार्थप्रतिपत्तिरेवेत्यर्थः ॥ २०१ ॥

**सत्यमेवमनात्मार्थेवाक्यात्पारोक्ष्यबोधनम् ।**
**प्रत्यगात्मनि न त्वेवं संख्याप्राप्तिवदध्रुवम् ॥२०२॥**
**स्वसंवेद्यत्वपर्यायः स्वप्रमाणक इष्यताम् ।**
**निवृत्तावहमः सिद्धः स्वात्मनोऽनुभवश्च नः ॥२०३॥**
**बुद्धीनां विषयो दुःखं नो यस्य विषया मताः ।**
**कुतोऽस्य दुःखसंबन्धो दृशेः स्यात्प्रत्यगात्मनः ॥२०४॥**
**दृशिरेवाऽनुभूयेत स्वेनैवाऽनुभवात्मना ।**
**तदाभासतया जन्म धियोऽस्याऽनुभवः स्मृतः ॥२०५॥**
**अशनायादिनिर्मुक्तः सिद्धो मोक्षस्त्वमेव सः ।**
**श्रोतव्यादि तवेत्येतद्विरुद्धं कथमुच्यते ॥२०६॥**
**सेत्स्यतीत्येव चेत्तस्याच्छ्रवणादि तदा भवेत् ।**
**मोक्षस्यानित्यतैवं स्याद्विरोधे नान्यथा वचः ॥२०७॥**

---

अनात्मनि परोक्षप्रतिपत्तावपि वाक्यादपरोक्षप्रतिपत्तिरात्मन्यपरोक्षत्वादित्युत्तरमाह—**सत्यमेवमनात्मार्थे**। यथा दशमस्त्वमसीत्युक्ते दशसंख्यापूरणस्य दशमस्य दशमोऽस्मीत्यरोक्षत्वेनावाप्तिर्दृष्टा तथा तत्त्वमसीत्युक्ते ब्रह्मास्मीत्यपरोक्षब्रह्मावाप्तिर्युक्तेत्युक्तवानहमिति पूर्वोक्तं स्मारयति—**सङ्ख्येति** ॥ २०२ ॥

कथं प्रत्यगात्मनोऽपरोक्षब्रह्मस्वभावत्वं तत्राह—**स्वसंवेद्येति**। कथं प्रमाणनिरपेक्षा प्रत्यगात्मप्रतीतिरित्याशङ्क्य सुषुप्तावहङ्कारादेरिदमंशस्य निवृत्तावात्मनोऽनुभवात्प्रमाणाधीनतामन्तरेण तदनुभवसिद्धिरित्याह—**निवृत्ताविति** ॥ २०३ ॥

अपरोक्षस्वभावत्वेऽपि प्रत्यगात्मनो दुःखादिमत्त्वेन प्रतीतेर्न वाक्यान्नित्यमुक्तब्रह्मानुभवसिद्धिरित्याशङ्क्य दुःखित्वादेः साक्षित्वात्तत्साक्षिणस्तत्सम्बन्धासिद्धेर्मैवमित्याह—**बुद्धीनामिति** ॥ २०४ ॥

प्रत्यगात्मनः सम्बन्धरहितत्वे कथमहं ब्रह्मास्मीति वाक्यादनुभवः स्यादित्याशङ्क्याह—**दृशिरेवेति**। आत्मनोऽनुभवमेव प्रकटयति—**तदाभासतयेति**। कूटस्थात्माभासाक्रान्तत्वेन स्वाकाररहिताया बुद्धेः केवलापूर्वाद्याकारायाः शास्त्राचार्यप्रसादाज्जन्माऽस्यात्मनोऽनुभवो ब्रह्मविद्भिरिष्यते। अतोऽशेषसम्बन्धरहितस्यापि वाक्यादहं ब्रह्मेति प्रतिपत्तिरविरुद्धेत्यर्थः ॥ २०५ ॥

वाक्येन सामानाधिकरण्यादिद्वारेणाशनायादिनिर्मुक्तस्त्वमित्यवबोध्य प्रसङ्ख्यानाद्यनुष्ठानं कुरु त्वमित्याचार्यस्य शास्त्रस्य चायुक्तं विरोधादित्याह—**अशनायादीति** ॥ २०६ ॥

यथोक्तमुक्तत्वस्य प्रसंख्यानाधीनत्वात्प्रसंख्यानादिविधानमुपपन्नमित्याशङ्क्याह—**सेत्स्यतीत्येवेति**। तद्ब्रह्मुक्तत्वं प्रसंख्यानाद्यनुष्ठानाद्भविष्यतीत्यङ्गीकारादनुष्ठानं मुमुक्षोरिष्टं चेत्तदा श्रवणाद्यनुष्ठेयं भवेत्। एवं च मोक्षस्याभीष्टस्यानित्यत्वं कृतकत्वादापद्येत। अन्यथा तस्य नित्यत्वे तस्य प्रसंख्यानादिविधायकं वचो विरुध्येत। तस्मान्मोक्षस्य प्रसंख्यानाद्यधीनत्वे नित्यता न लभ्या नित्यत्वे तस्य प्रसंख्यानादि न सिद्धयतीत्यर्थः ॥ २०७ ॥

श्रोतृश्रोतव्ययोर्भेदो यदीष्टः स्याद्भवेदिदम् ।
इष्टार्थकोप एवं स्यान्न युक्तं सर्वथा वचः ॥२०८॥
सिद्धो मोक्षोऽहमित्येवं ज्ञात्वाऽऽत्मानं भवेद्यदि ।
चिकीर्षुर्यः स मूढात्मा शास्त्रं चोद्घाटयत्यपि ॥२०९॥
न हि सिद्धस्य कर्तव्यं सकार्यस्य न सिद्धता ।
उभयालम्बनं कुर्वन्नात्मानं वञ्चयत्यपि ॥२१०॥
सिद्धो मोक्षस्त्वमित्येतद्वस्तुमात्रं प्रदर्श्यते ।
श्रोतुस्तथात्वविज्ञाने प्रवृत्तिः स्यात्कथं न्विति ॥२११॥
कर्ता दुःख्यहमस्मीति प्रत्यक्षेणाऽनुभूयते ।
कर्ता दुःखी च माभूवमिति यत्नो भवेत्ततः ॥२१२॥
तद्विज्ञानाय युक्त्यादि कर्तव्यं श्रुतिरब्रवीत् ।
कर्तृत्वाद्यनुवादेन सिद्धत्वानुभवाय तु ॥२१३॥
निर्दुःखो निष्क्रियोऽकामः सिद्धो मोक्षोऽहमित्यपि ।
गृहीत्वैव विरुद्धार्थमादध्यात्कथमेव सः ॥२१४॥

---

इतश्च प्रसंख्यानवादो युक्तो न भवतीत्याह—**श्रोतृश्रोतव्ययोरिति**। मुमुक्षोर्ब्रह्मात्मभावस्य च भेदश्चेदिष्टस्तदा प्रसंख्यानाद्यनुष्ठानं भवेत्तथा चेष्टार्थस्य ब्रह्मात्मभावस्यापलापः स्यात्। किं बहुना सर्वप्रकारेण प्रसंख्यानादिविधिरूपं त्वदीयं वचो न युक्तम्। श्रोतृश्रोतव्यभेदाभ्युपगमे मुख्यब्रह्मात्मभावविरोधात्तदनभ्युपगमे चानुष्ठानायोगादित्यर्थः ॥ २०८ ॥

वाक्यादवगतब्रह्मात्मभावस्य प्रसंख्यानाद्यनुष्ठानायोगादवगतब्रह्मात्मभावोऽहं वाक्यादिति मन्यमानः सन् योऽपि प्रसंख्यानादिकं कर्तुमिच्छति स मूढः शास्त्रप्रतारकः स्वात्मवञ्चकश्चेत्याह—**सिद्धो मोक्षः**। उद्घाटयति उत्थापयति स्वार्थात्प्रच्यावयतीत्यर्थः ॥ २०९ ॥

तदेव स्फुटयति—**नहि सिद्धस्येति**। वञ्चयति पुरुषार्थायोग्यं करोतीति यावत् ॥ २१० ॥

सदसीति फलं चोक्त्वेत्यादिना प्रकरणादावुक्तं स्वाभिप्रायं प्रसंख्यानवादी प्रकटयति—**सिद्धो मोक्षः**। केनाभिप्रायेण वस्तुत्वमात्रप्रदर्शनं तत्राह—**श्रोतुरिति**। तथात्वविज्ञानं नित्यमुक्तब्रह्मात्मत्वविज्ञानम्। प्रवृत्तिर्नाम प्रसंख्यानाद्यनुष्ठानम् ॥ २११ ॥

कथमेवं श्राविते प्रसंख्यानाद्यनुष्ठानप्रवृत्तिः श्रोतुः स्यादित्याशङ्क्याह—**कर्त्तेति**। यतो यथोक्तमनुष्ठानं ततो ब्रह्मात्मवस्तुमात्रकथनादूर्ध्वमित्यर्थः ॥ २१२ ॥

शब्दयुक्त्याम्रेडनं कर्त्तव्यमिति प्रमाणप्रयोजनाभ्यां सह प्रसंख्यानावश्यंभावं निगमयति—**तद्विज्ञानायेति**। प्रसङ्ख्यानादिकं चेत्कर्तव्यं तदा कर्तृत्वादेरपि श्रुत्याक्षिप्तत्वाद् बाधो न स्यादित्याशङ्क्याह—**कर्तृत्वादीति** ॥ २१३ ॥

नेयमपि कल्पना समीचीनेति समाधत्ते—**निर्दुःख इति**। वाक्यात् ज्ञानमेव न जायत इति वक्तुमशक्यमप्रामाण्यप्रसङ्गात्। जातं चेज्ज्ञानं तर्हि तद्विरुद्धानुष्ठानप्रतिपत्तिरयुक्तेत्यर्थः ॥ २१४ ॥

**सकामः सक्रियोऽसिद्ध इति मेऽनुभवः कथम् ।**
**अतो मे विपरीतस्य तद्भवान् वक्तुमर्हति ॥२१५॥**
**इहैव घटते प्रश्नो न मुक्तत्वानुभूतये ।**
**प्रमाणेन विरोधी यः सोऽत्रार्थः प्रश्नमर्हति ॥२१६॥**
**अहं निर्मुक्त इत्येव सदसीत्यन्यमानजः ।**
**प्रत्यक्षाभासजन्यत्वाद्दुःखित्वं प्रश्नमर्हति ॥२१७॥**
**पृष्टमाकाङ्क्षितं वाच्यं दुःखाभावमभीप्सितम् ॥२१८॥**
**कथं हीदं निवर्तेत दुःखं सर्वात्मना मम ।**
**इति प्रश्नानुरूपं यद्वाच्यं दुःखनिवर्तकम् ॥२१९ ।**
**श्रुतेः स्वात्मनि नाशङ्का प्रामाण्ये सति विद्यते ।**
**तस्मादात्मविमुक्तत्वं प्रत्याययति तद्वचः ।**
**वक्तव्यं तत्तथार्थं स्याद्विरोधेऽसति केनचित् ॥२२०॥**
**इतोऽन्योऽनुभवः कश्चिदात्मनो नोपपद्यते ।**
**अविज्ञातं विजानतां विज्ञातारमिति श्रुतेः ॥२२१॥**

---

तदेव प्रश्नद्वारा प्रकटयति—**सकाम इति** ॥ २१५ ॥

अतः सकामत्वादेर्विपरीतस्य मम कथं सकामत्वाद्यनुभवः स्यादित्यस्मिन्नेवार्थे प्रश्नो युज्येतेत्यत्र युक्तिमाह—**इहैवेति** ॥ २१६ ॥

कोऽर्थस्तर्हि प्रमाणेन विरोधीत्यपेक्षायामाह—**अहं निर्मुक्तः** ॥ २१७ ॥

शिष्याकाङ्क्षावशेनापि प्रसंख्यानानुष्ठानकल्पनं वेदान्तेषु न युक्तमित्याह—**पृष्टमाकाङ्क्षितमिति** । दुःखस्य सर्वप्रकारस्याभावो यस्मिन् ब्रह्मरूपे तत्तथोक्तम् तस्यैव परमानन्दत्वेनाभीष्टत्वमाह—**अभीप्सितमिति** ॥ २१८ ॥

इष्टत्वमेव स्पष्टयति—**कथं होति** । यदुक्तमाकाङ्क्षितं वाच्यमिति तन्निगमयति—**इति प्रश्नानुरूप इति** ॥ २१९ ॥

ननु पृष्टमेवोच्यते प्रसङ्ख्यानद्वारेण तद्व्यतिरेकेण श्रुतेः सामर्थ्याभावात्तत्राह—**श्रुतेरिति** । स्वात्मनि स्वप्रमेये श्रुतेर्न सामर्थ्याभावाशङ्का स्वतः प्रामाण्यादित्यर्थः । श्रुतेः स्वार्थे स्वतः प्रामाण्ये फलितमाह—**तस्मादात्मेति** । तस्य वक्तव्यमध्यक्षादिना केनचित् । असति विरोधे स्वार्थे यथार्थधीहेतुत्वादित्याह—**तथार्थमिति** ॥ २२० ॥

वाक्यस्य परोक्षसंसर्गात्मकवस्तुबोधकत्वाद्ब्रह्मात्मनश्चापरोक्षासंसर्गात्मकत्वात्तत्प्रतिपत्तये प्रसङ्ख्यानादि युक्तमेवेत्याशङ्क्याह—**इतोऽन्योऽनुभवः** । वाक्यजन्यादसंसृष्टापरोक्षानुभवादिति यावत् । आत्मनोऽसंसृष्टापरोक्षस्वाभाव्यादित्यर्थः । तत्त्वमस्यादिवाक्यादेवाखण्डापरोक्षब्रह्मात्मप्रतिपत्तिरित्यत्र प्रमाणमाह—**अविज्ञातमिति** । बुद्ध्याद्यविषयस्यासंसृष्टापरोक्षस्य प्रत्यगात्मनो वाक्यादेवापरोक्षतेत्यर्थः । ॥ २२१ ॥

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
साधनत्वं ब्रजत्येवं शान्तो दान्तानुशासनात् ।।२२२।।
त्वमर्थं प्रत्यगात्मानं पश्येदात्मानमात्मनि ।
वाक्यार्थं तत आत्मानं सर्वं पश्यति केवलम् ।।२२३।।
सर्वमात्मेति वाक्यार्थे विज्ञातेऽस्य प्रमाणतः ।
असत्त्वे ह्यन्यमानस्य विधिस्तं योजयेत्कथम् ।।२२४।।
तस्माद्वाक्यार्थविज्ञानान्नोर्ध्वं कर्मविधिर्भवेत् ।
नहि ब्रह्मास्मि कर्तेति विरुद्धे भवतो धियौ ।।२२५।।
ब्रह्मास्मीति च विद्येयं नैव कर्तेति बाध्यते ।
सकामो बद्ध इत्येवं प्रमाणाभासजातया ।।२२६।।
शास्त्राद्ब्रह्मास्मि नान्योऽहमिति बुद्धिर्भवेद्दृढा ।
यदा युक्ता तदैवंधीर्यथा देहात्मधीरिति ।।२२७।।
सभयादभयं प्राप्तस्तदर्थं यतते च यः ।
स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न हीच्छति ।।२२८।।

---

यदुक्तं "चर्या नोऽशास्त्रसंवेद्यास्यादि"ति ( १६ ) तत्राह—**त्वं पदार्थेति** ।। २२२ ।।

सन्यासोपायस्त्वंपदार्थविवेको वाक्यार्थज्ञाने साधनं कथमित्यपेक्षायां पदार्थज्ञानस्य वाक्यार्थज्ञानस्य च क्रमं दर्शयति—**त्वमर्थमिति** ।। २२३ ।।

पदार्थविवेकद्वारा वाक्यार्थज्ञाने सति "नियोगोऽप्रतिपन्नत्वादि"त्यादिनोक्तमयुक्तमित्याह—**सर्वमात्मेति** ।। २२४ ।।

वाक्यार्थज्ञानादूर्ध्वं पुंसो नियोगायोग्यत्वे फलितमाह—**तस्माद्वाक्यार्थं** । तत्र हेतुमाह—**नहीति** २२५ ।।

द्वयोर्विरोधस्य तुल्यत्वाद्ब्रह्मास्मीतिधीरेव कर्त्तास्मीति धिया कस्मान्न बाध्यते तत्राह—**ब्रह्मास्मीति** । यस्मादियं प्रमाणवस्तुपरतन्त्रत्वाद्विद्या तस्मात्प्रमाणाभासजन्यया कर्त्तास्मीति धिया नव बाध्यते किन्तु कामसहितोऽहं कर्त्ता भोक्ता बद्धोऽस्मीत्येवं प्रमाणाभासेन जातत्वाद्भ्रान्तिरेषा धीः सा तया पूर्वोक्तया ब्रह्मास्मीति विद्यया बाध्या सम्यग्धिया भ्रान्तिबाधस्य प्रसिद्धत्वादित्यर्थः ।। २२६ ।।

ब्रह्मास्मीति ज्ञानस्यैव बाधकत्वं न कर्त्ताऽस्मीति ज्ञानस्येत्युक्तमेव दृष्टान्तेन स्पष्टयति—**शास्त्राद्ब्रह्मास्मि** । ब्रह्मैवाहमस्मि न तु कर्त्ता भोक्ता वा ब्रह्मणो नान्योऽहमिति बुद्धिः यदा तत्त्वमस्यादिशास्त्रादतिदृढोत्पद्यते तदा सकामो बद्धोस्मीत्येवं धीर्न युक्ता । यथा देहव्यतिरिक्तकर्त्तृत्वभोक्तृत्वबुद्धौ सत्यां देह एवात्मेति धीर्भवतां विरुध्यते तथा ब्रह्मास्मीति बुद्धौ कर्त्ता भोक्तास्मीति बुद्धिर्विरुद्धा न सिद्ध्यतीत्यर्थः ।। २२७ ।।

अवगतब्रह्मात्मभावस्य नानुष्ठानं सिद्ध्यतीत्यत्र दृष्टान्तमाह—**सभयादभयमिति** । जिज्ञासोर्ज्ञानिनश्च क्रियाशेषत्वमुक्तन्यायादनुपपन्नमित्यर्थः ।। २२८ ।।

यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः ।
पदार्थज्ञानबुद्धस्य वाक्यार्थानुभवार्थिनः ।।२२९।।
अतः सर्वमिदं सिद्धं यत्प्रागस्माभिरीरितम् ।।२३०।।
यो हि यस्माद्विरक्तः स्यान्नासौ तस्मै प्रवर्तते ।
लोकत्रयाद्विरक्तत्वान्मुमुक्षुः किमितीहते । २३१।।
क्षुधया पीडयमानोऽपि न विषं ह्यत्तुमिच्छति ।
मृष्टान्नध्वस्ततृड् जानन् नामूढस्तज्जिघत्सति ।।२३२।।
वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।
उज्जहारालिवद्यो नस्तस्मै सद्गुरवे नमः ।।२३३।।

## ।। अथ तृष्णाज्वरनाशकप्रकरणम् ।। १९ ।।

प्रयुज्य तृष्णाज्वरनाशकारणं चिकित्सितं ज्ञानविरागभेषजम् ।
न याति कामज्वरसन्निपातजां शरीरमालां शतयोगदुःखिताम् ।। १ ।।
अहं ममेति त्वमनर्थमीहसे परार्थमिच्छन्ति तवान्य ईहितम् ।
न तेऽर्थबोधो न हि मेऽस्ति चार्थिता ततश्च युक्तः शम एव ते मनः ।। २ ।।

---

यदुक्तं प्रसङ्ख्यानाभियोगेन[1] संन्यासी न नियुक्तश्चेद्यथेष्टाचरणप्राप्तिरिति तत्राह—**यथेष्टाचरणप्राप्तिः**। न तावज्जिज्ञासोः संन्यासिनो यथेष्टचेष्टाप्राप्तिः । संन्यासविधौ शमादिविधौ च प्रत्यर्थिनि सति तदयोगात् । कर्मभिर्वेदोक्तैरीश्वरार्थैः संस्कृतस्य विशुद्धान्तःकरणस्य विहितेष्वपि कर्मसु प्रवृत्तिरहितस्य कुतो निषिद्धेषु प्रवृत्तिरित्यर्थः । किञ्च पदार्थविषयेणाज्ञानेन वाक्यार्थानुभवे प्रतिबद्धस्य विक्षिप्तस्य वाक्यार्थानुभवमेवार्थयमानस्य त्वंपदार्थविचारपुरःसरं वाक्यार्थानुभवोपार्जने व्यग्रत्वान्न **यथेष्टचेष्टा** जिज्ञासोर्युज्यते । ज्ञानिनस्तु 'नैव किञ्चित् करोमी'त्यनुभवाद्भिक्षाचरणेऽपि न कर्तृत्वं कुतो यथेष्टाचरणं ? शरीरस्थितिस्तु प्रारब्धेनाज्ञानलेशकृतेन कर्मणा घटिष्यते । न च तद्वशादेव यथेष्टचेष्टाचरणं तद्धेतुकर्मारब्धे शरीरे ज्ञानस्य विरुद्धत्वादित्याह—**पदार्थज्ञानेति** ।। २२९ ।।

।। इति तत्त्वमसिप्रकरणमष्टादशम् ।।

### अथ तृष्णाज्वरनाशकप्रकरणम् ।। १९ ।।

तत्त्वमसिवाक्यादेवाखण्डापरोक्षमद्वितीयं ब्रह्माहमस्मीति साक्षादवगमान्निवृत्ताज्ञानतत्कार्यः स्वतो मुक्त एव मुच्यत इत्युक्तम् । इदानीमात्ममनःसंवादव्याजेन प्रकरणान्तरं चिकीर्षुस्तत्र प्रयोजनमाह—**प्रयुज्येत्यादिना श्लोकेन** ।। १ ।।

विशिष्टं चिकित्सितं कृत्वा शरीरमालाशतैर्योगात्सुदुःखितां विशेषणवतीं न यातीत्युक्तम् । तत्र चिकित्सनप्रकारमात्ममनःसंवादेन दर्शयति—**अहं ममेत्यादि** । भो मनस्त्वमहं ममेति व्यर्थमीहसे ।

---

1 प्रसंख्याननियोगे न—क०

यतो न चान्यः परमात् सनातनात् सदैव तृप्तोऽहमतो न मेऽर्थिता ।
सदैव तृप्तश्च न कामये हितं यतस्व चेतः प्रशमाय ते हितम्[1] ॥ ३ ॥

षडूर्मिमालाभ्यतिवृत्त एव यः स एव चात्मा जगतश्च नः श्रुतेः ।
प्रमाणतश्चापि मया प्रवेद्यते मुधैव तस्माच्च मनस्तवेहितम् ॥ ४ ॥

त्वयि प्रशान्ते नहि चास्ति भेदधीर्यतो जगन्मोहमुपैति मायया ।
ग्रहो हि मायाप्रभवस्य कारणं ग्रहाद्विमोके नहि साऽस्ति कस्यचित् ॥ ५ ॥

न मेऽस्ति मोहस्तव चेष्टितेन हि प्रबुद्धतत्त्वस्त्वसितो ह्यविक्रियः ।
न पूर्वतत्त्वोत्तरभेदता हि नो वृथैव तस्माच्च मनस्तवेहितम् ॥ ६ ॥

यतश्च नित्योऽहमतो न चान्यथा विकारयोगे हि भवेदनित्यता ।
सदा प्रभातोऽहमतो हि चाद्वयो विकल्पितं चाप्यसदित्यवस्थितम् ॥ ७ ॥

---

अतस्तव चेष्टितं पुरुषशेषमिच्छन्ति साङ्ख्यास्तदयुक्तम् । अस्योपकारं करोमीति तव जडत्वेन बोधाभावान्मम चोदासीनत्वेनार्थिताऽभावादित्युक्तमुपजीव्य फलितमाह—**ततश्चेति** ॥ २ ॥

किमित्यात्मनो भोगापवर्गापेक्षा नास्तीत्यपेक्षायामाह—**यतो न चान्य इत्यादि** ॥ ३ ॥

किमित्यात्मा मनो बोधयति तत्राह—**षडूर्मिमाला** । अशनायापिपासाशोकमोहजरामृत्यवः षडूर्मय इव तन्मालाभ्योऽभ्यतिवृत्तो योऽयं परमात्मा स एव नोऽस्माकं जगतश्चात्मा मया प्रमाणेन प्रवेद्यते । प्रमाणमेवाह—**श्रुतेरिति** । प्रमाणशब्देनानुभवो गृह्यते । चशब्देन स्मृतिरुच्यते । अपिशब्देन न्यायः समुच्चितः । जीवेश्वरयोरभेदेन जीवस्यार्थित्वाभावे फलितं निगमयति—**मुधैवेति** ॥ ४ ॥

अशनायादीनामात्मसम्बन्धित्वेन प्रतीयमानानां कथमात्मधर्मत्वं वारयितुं शक्यमित्याशङ्क्य भेदधीमूलत्वाद्भेदधियश्च मनोऽनुविधायित्वादित्याह—**त्वयि प्रशान्ते** । यतो यस्याः भेदबुद्धेर्मोहमाकुलीभावं मायया मृषैवेत्यर्थः । भेदधियो व्याकुलतोत्पादहेतुत्वमन्वयव्यतिरेकाभ्यां साधयति—**ग्रहो हीत्यादिना** । ग्रहो भेदबुद्धिः । मायाप्रभवो व्याकुलतोत्पादः । सेति व्याकुलतोच्यते ॥ ५ ॥

इतश्च भो मनस्त्वया वृथैव चेष्टितमित्याह—**न मेऽस्ति मोहस्तव** । असितो बन्धरहितः । पूर्वतत्त्वं पूर्वावस्था, उत्तरभेद उत्तरावस्था । तयोरुद्भवो यस्मान्न विद्यते । तस्मादविक्रियोऽहं तस्माच्च मनश्चेष्टितं व्यर्थमित्यर्थः ॥ ६ ॥

नित्यत्वाच्चात्मनो नान्यथाभावोऽस्तीत्याह—**यतश्चेति** । आत्मनो नित्यत्वादन्यथाभावो विकारो नास्तीत्युक्त्वा विकाराङ्गीकारे नित्यत्वानुपपत्तिमाह—**विकारेति** । किञ्चात्मनः सर्वदा चैतन्यैकतानत्वादद्वितीयत्वमेष्टव्यमित्याह—**सदा प्रभात इति** । कार्यकारणात्मके द्वैतप्रपञ्चे जाग्रति कुतोऽद्वितीयत्वं तत्राह—**विकल्पितं चेति** । द्वैतस्य द्वैतत्वादेव चन्द्रद्वैतवन्मिथ्यात्वावगमादवस्थितमात्माद्वैतमविरुद्धमित्यर्थः ॥ ७ ॥

---

१. अधिकं० पा०

**अभावरूपं त्वमसीह हे मनो निरीक्ष्यमाणे न हि युक्तितोऽस्तिता ।**
**सतो ह्यनाशादसतोऽप्यजन्मतो द्वयं च चेतस्तव नास्तितेष्यते ॥ ८ ॥**
**द्रष्टा च दृश्यं च तथा च दर्शनं भ्रमस्तु सर्वस्तव कल्पितो हि सः ।**
**दृशेश्च भिन्नं न हि दृश्यमीक्ष्यते स्वपन् प्रबोधेन तथा न भिद्यते ॥ ९ ॥**
**विकल्पना वाऽपि तथाऽद्वया भवेदवस्तुयोगात्तदलातचक्रवत् ।**
**न शक्तिभेदोऽस्ति यतो न चाऽऽत्मनां ततोऽद्वयत्वं श्रुतितोऽवसीयते ॥१०॥**
**मिथश्च भिन्ना यदि ते हि चेतनाः क्षयस्तु तेषां परिमाणयोगतः ।**
**ध्रुवो भवेद्भेदवतां हि दृष्टतो जगत्क्षयश्चापि समस्तमोक्षतः ॥११॥**
**न मेऽस्ति कश्चिन्न च सोऽस्मि कस्यचिद्यतोऽद्वयोऽहं न हि चास्ति कल्पितम् ।**
**अकल्पितश्चास्मि पुरा प्रसिद्धितो विकल्पनाया द्वयमेव कल्पितम् ॥१२॥**

मनसाऽऽत्मनः सद्वितीयत्वमाशङ्क्याह—**अभावरूपमिति** । युक्तितो निरीक्ष्यमाणे सति मनसो वस्तुतोऽस्तिता नास्तीत्येतदेव स्पष्टयति—**सतो हीति** । तथापि मनसि किमायातमित्याशङ्क्याह—**द्वयं चेति** । यस्माज्जन्मनाशाख्यं द्वयं तेऽस्ति अतः सदसद्वैलक्षण्येनानिर्वाच्यत्वात्तव परमार्थसत्त्वमद्वैतविरोधि नेष्टमित्यर्थः ॥ ८ ॥

द्रष्टादृश्यमित्यादिप्रपञ्चस्य प्रमाणोपलब्धत्वादसत्त्वानुपपत्तेरात्मनोऽद्वितीयत्वं न सिद्ध्यतीत्याशङ्क्याह—**द्रष्टा चेति** । कल्पितो ह्ययमिति पाठः । त्रिविधो हि प्रपञ्चो मनोविकल्पितो यस्मादसौ सर्वोऽपि भ्रान्तिसिद्धो मिथ्यैवेति नात्मन्यद्वितीये कश्चिद्विरोधोऽस्तीत्यर्थः । किञ्च यथा स्वपन् पुरुषो दृशेर्भिन्नं दृश्यं नैवेक्षते तथा प्रबोधेऽपि सतो भिन्नं दृश्यं न प्रतीयते । भेदग्राहिप्रमाणस्य दुष्प्रतिपादत्वात्तेन प्रतीतिमात्रमेव द्वैतमित्याह—**दृशेश्चेति** ॥ ९ ॥

विकल्पनाया द्वितीयस्या विद्यमानत्वान्नाद्वैतसिद्धिरित्याशङ्क्याह—**विकल्पना वापि** । यथा न रजतभुजङ्गादिकल्पनाऽधिष्ठानातिरेकेणान्यत्रास्ति तथेयमपि नाद्वयाधिष्ठानव्यतिरिकेण वस्तुतो भवति । तथा चावस्तुत्वात्तस्या न वस्त्वद्वैतविरोधितेत्यर्थः । कल्पनाया वस्तुत्वाभावे दृष्टान्तमाह—**तदिति** । तच्च लोके यथाऽलातस्योल्मुकस्य भ्रमतश्चक्राकारता न पृथग्वस्तु विद्यते तथा कल्पनाऽप्यद्वयाधिष्ठानव्यतिरेकेण न वस्तुत इत्यर्थः । दृष्टिः श्रुतिर्मतिरित्यादिशक्तिभेदात्प्रतिशरीरमात्मना भेदप्रतीतेश्च नाद्वयत्वमित्याशङ्क्याह—**न शक्तिभेद इति** । न हि दृष्ट्यादिशक्तीनां भेदो [1]दृष्ट्यादीनां स्वप्रकाशात्ममात्रत्वात् । न चात्मनां भिन्नत्वमौपाधिकभेदेन व्यवस्थोपपत्तेः । भेदे प्रमाणाभावात्प्रमाणविरोधाच्चेत्यर्थः ॥ १० ॥

आगमविमुखानामात्मभेदकल्पनां प्रत्याह—**मिथश्च भिन्ना इति** । वस्तुतः परिच्छिन्नत्वादात्मनां क्षयोऽवश्यंभावीत्यत्र व्याप्तिमाह—**भेदवतामिति** । अनन्तैर्गतकल्पैरनन्तानामात्मनां मुक्तत्वादिदानीं जगत्क्षयश्च स्यात्तदा [ इति ] दोषान्तरमाह—**जगदिति** ॥ ११ ॥

ननु तवापि जगज्जीवेश्वरादिभेदस्य विद्यमानत्वाद्दोषसाम्यमित्याशङ्क्याह—**न मेऽस्ति-कश्चित्** । न च कल्पिते सति कुतोऽद्वयत्वमिति युक्तम् । तस्य कल्पितत्वादेव वस्तुत्वाभावस्योक्तत्वा-

१. दृश्यादि—क.

विकल्पना चाप्यभवे न विद्यते सदन्यदित्येवमतो न नास्तिता ।
यतः प्रवृत्ता तव चापि कल्पना पुरा प्रसिद्धेर्न च तद्धि कल्पितम् ॥१३॥

असद्द्वयं तेऽपि हि यद्यदीक्ष्यते न दृष्टमित्येव न चैव नास्तिता ।
यतः प्रवृत्ता सदसद्विकल्पना विचारवद्वाऽपि तथाऽद्वयं च सत् ॥१४॥

सदभ्युपेतं भवतोपकल्पितं विचारहेतोर्यदि तस्य नास्तिता ।
विचारहानाच्च तथैव संस्थितं न चेत्तदिष्टं नितरां सदिष्यते ॥१५॥

असत्समं चैव सदित्यपीति चेदनर्थवत्त्वान्नरशृङ्गतुल्यतः ।
अनर्थवत्त्वं त्वसति ह्यकारणं न चैव तस्मान्न विपर्ययेऽन्यथा ॥१६॥

---

दित्याह—**नहीति** । कल्पितविभागस्य तर्कासहत्वमिष्टमेव; पारमार्थिकं वस्तु सर्वव्यवहारातीतम् । अद्वितीय वादित्यर्थः । द्वैतवदद्वैतस्यापि पदार्थत्वाविशेषात्कल्पितत्वं स्यादित्याशङ्क्याह—**अकल्पितश्चास्मि** । प्रागेव कल्पनायाः सिद्धत्वादात्मवस्तुनोऽकल्पितत्वात् कल्पनानन्तरोपलब्धं द्वैतमेव कल्पितमित्यर्थः ॥ १२ ॥

किञ्च सदन्यद्वैत्यादिकल्पनागोचरत्वाभावादपि नात्मनोऽस्ति कल्पितत्वं तस्य सदेकतानत्वादित्याह—**विकल्पना चापि** । अभवे जन्मविनाशादिरहिते वस्तुनीति यावत् । किञ्च भो मनस्तवापि कल्पना यतः प्रवृत्ता तदात्मवस्तु न कल्पितं तव विकल्पनाधिष्ठानत्वेन पूर्वमेव सिद्धत्वादित्याह—**यतः प्रवृत्ता** ॥ १३ ॥

इतश्चात्मवस्तुनो नासत्वं तदसत्वहेतोर्दृश्यत्वस्य तस्मिन्नसत्त्वादित्याह—**असद्द्वयमिति** । हे मनस्तवापि यद् यद् दृश्यं तदेव द्वयमसद्भवति । अद्वैतं त्वात्मतत्त्वं त्वया न दृष्टं इत्यनेनैव हेतुना तस्य नास्तिता न प्रतिज्ञातुं शक्यते । तस्य परमार्थसद्भावोऽभ्युपगन्तव्य इत्यर्थः । किञ्च, यतः प्रवृत्ता सदसद्विकल्पना तस्य सत्वेन भवितव्यं निरधिष्ठानभ्रमायोगात् । यथाविचारमन्तरेण निर्णयानुपपत्तेः सोऽभ्युपगम्यते । चशब्दादपिशब्दाच्च रज्वादिकं यथाऽधिष्ठानमिति दृष्टान्तबाहुल्यं दर्शयति । यथा च सर्पादिबाधो रज्ज्वाद्यवधिर्दृश्यते तथा सदसद्द्वयद्वैतनिषेधावधिरिष्यते । नेत्येवं निषेधादर्शनादित्याह—**यतः प्रवृत्ता** ॥ १४ ॥

किञ्च, लोके विचारोऽपि सन्मात्रे प्रतिपन्ने विशेषविषयो दृश्यते । तेन विचारसिद्ध्यर्थं सदेकं सर्वस्य सिद्धमित्याह—**सदभ्युपेतमिति** । तदेव विपक्षे दोषोक्त्या व्यक्तीकरोति—**यदीति** । तस्य सतो नास्तिता यदि स्यात्तदा विचारहानं विषयाभावादापद्येत तदापि तन्मात्रं स्थितमेव । विचारमन्तरेणासत्वानिश्चयादित्यर्थः । विचारहानं चेन्नेष्टं तर्हि विचारस्यालम्बनत्वेन साक्षित्वेन च सदेष्टव्यमित्याह—**न चेदिति** ॥ १५ ॥

यदर्थक्रियाकारि तत्सद्विपरीतमसदिति मतमनुवदति—**असत्सममिति** । विमतं सदसत्समं अर्थक्रियाशून्यत्वात्खरशृङ्गवदित्यर्थः । अर्थक्रियाशून्यत्वमसत्त्वे प्रयोजकं मानं न भवति । क्रियोत्पत्तेः पूर्वमुदासीनवस्तुदर्शनादन्योन्याश्रया च्चेत्याह—**अनर्थवत्त्वमिति** ॥ १६ ॥

**असिद्धतश्चापि विचारकारणाद्द्वयं च तस्मात्प्रसृतं च मायया।**
**श्रुतेः स्मृतेश्चापि तथा हि युक्तितः प्रसिद्ध्यतीत्थं न तु युज्यतेऽन्यथा ॥१७॥**
**विकल्पनाच्चापि विधर्मकं श्रुतेः पुरा प्रसिद्धेश्च विकल्पतोऽद्वयम्।**
**न चेति नेतीति यथा विकल्पितं निषिद्ध्यतेऽत्राप्यविशेषसिद्धये ॥१८॥**
**अकल्पितेऽप्येवमजेऽद्वयेऽक्षरे विकल्पयन्तः सदसच्च जन्मभिः।**
**स्वचित्तमायाप्रभवं च ते भवं जरां च मृत्युं च नियान्ति संततम् ॥१९॥**
**भवाभवत्वं तु न चेदवस्थितिर्न चास्य चान्यस्थिति जन्म नान्यथा।**
**सतो ह्यसत्त्वादसतश्च सत्त्वतो न च क्रियाकारकमित्यतोऽप्यजम् ॥२०॥**
**अकुर्वदिष्टं यदि वाऽस्य कारकं न किञ्चिदन्यन्ननु नास्त्यकारकम्।**
**सतोऽविशेषादसतश्च सच्च्युतौ तुलान्तयोर्यद्वदनिश्चयान्न हि ॥२१॥**

---

विचारहेतुत्वान्मायया जगदुपादानत्वाच्चासिद्धो हेतुरित्याह—**असिद्धतः**। ब्रह्मणो मायया जगद्धेतुत्वमित्येवं कुतः सिद्धयतीत्यपेक्षायामाह—**श्रुतेःस्मृतेरिति**। युक्तिभिः प्रकृतिश्चेत्यादिभिः। ब्रह्मणो जगद्धेतुत्वं हित्वाऽन्यथा प्रधानादेर्जगद्धेतुत्वं नैव युज्यते। रचनानुपपत्त्यादिन्यायविरोधादित्याह—**न त्विति** ॥ १७ ॥

सर्वविकल्पहेतुत्वादद्वयस्य तद्युक्तं स्यात्कार्यकारणयोः सम्बन्धस्यावश्यकत्वादित्याशङ्क्याह—**विकल्पनाच्च**। विधर्मकं विरुद्धस्वभावकं वस्तुतस्तदस्पृष्टमित्यर्थः। तत्रास्थूलादिवाक्यं प्रमाणयति—**श्रुतेरिति**। विकल्पनापेक्षाया पूर्वमेवाद्वयस्य तदसंसृष्टस्य सिद्धत्वाच्च वस्तुतो विकल्पनासंस्पर्शशून्यमद्वयं सिद्धयतीति श्रुतिसिद्धेऽर्थे युक्तिमाह—**पुरेति**। श्रुतेः समस्तविकल्परहितमात्मतत्त्वमित्युक्तं तदेव प्रपञ्चयति **न चेति**। यथा सत्यज्ञानादिवाक्येन निर्विशेषं ब्रह्म बोद्धयते तथा वीप्सारूपेण निषेधवाक्येनास्मिन्ब्रह्मात्मनि सर्वं कल्पितं निषिद्धयते। सर्वस्यापि निषिद्धस्यात्मावशेषः समाप्तिरिति प्रतिपत्त्यर्थमित्यर्थः ॥ १८ ॥

यथोक्ते श्रुत्यर्थेऽपि ये विकल्पयन्ति ते महान्तमनर्थं प्राप्नुवन्तीत्याह—**अकल्पितेति** ॥ १९ ॥

किञ्च ब्रह्माजमद्वितीयमभ्युपगन्तव्यम्। जन्मनो दुर्निरूपत्वात्तस्य हि जन्मान्यदस्ति नवेति विकल्प्याद्यं प्रत्याह—**भवाभवत्वमिति**। जातस्य जन्मनो जनिराहित्यमभवत्वं न चेदिष्यते तदाऽवस्थितिर्न स्यात्तस्य भवस्यान्यो भवोऽस्तीति अनवस्था स्यादित्यर्थः। यदि पुनर्भवस्य जन्मनो नान्यो भवो जन्मास्तीत्यनवस्थासमाधिस्तदापि न जन्म संभवति सज्जन्मपक्षे नाशावश्यंभावे सतोऽसत्त्वापातात्। असज्जन्मपक्षे च जन्मनः सत्त्वापत्तिरूपत्वादसतः सत्त्वप्रसङ्गात्। न च स्वभावहानमुपपद्यते निःस्वरूपत्वापत्तेरित्याह—**जन्मेत्यादिना**। जन्म नाम क्रिया धात्वर्थत्वात्। जन्मैव जायत इत्युक्ते क्रिया कारकमित्युक्तं भवति। तच्च नोपपद्यते द्वैरूप्यानुपपत्तेरेकस्येत्येतदाह—**न चेति** ॥ २० ॥

इतश्चाजं वस्तु स्वीकर्त्तव्यमित्याह—**अकुर्वत्**। अस्य जन्मनो यत्कारकं तदकुर्वत्कुर्वद्वा ? यद्यकुर्वदिष्टं तदा न किञ्चिदन्यदकारकं स्यात् किन्तु सर्वमेव कारकं भवेत् तदेव स्फुटयति—**नन्विति**। किं तदकुर्वत्कारकं सदसद्वा ? सच्चेत् तस्य विशेषाभावान् कार्यमपि सर्वदा स्यात् न वा कदाचिदपीत्याह—

**न चेत्स इष्टः सदसद्विपर्ययः कथं भवः स्यात्सदसद्व्यवस्थितौ ।**
**विभक्तमेतद्द्वयमप्यवस्थितं न जन्म तस्माच्च मनो हि कस्यचित् ॥२२॥**
**अथाऽभ्युपेत्याऽपि भवं तवेच्छतो ब्रवीमि नार्थस्तव चेष्टितेन मे ।**
**न हानवृद्धी न यतः स्वतोऽसतो भवोऽन्यतो वा यदि वाऽस्तिता तयोः ॥२३॥**
**ध्रुवा ह्यनित्याश्च न चान्ययोगिनो मिथश्च कार्यं न च तेषु युज्यते ।**
**अतो न कस्यापि हि किञ्चिदिष्यते स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥२४॥**
**समं तु तस्मात्सततं विभातवद्द्वयाद्विमुक्तं सदसद्विकल्पितात् ।**
**निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमानशेषनिर्वाणमुपैति दीपवत् ॥२५॥**

---

**सत इति ।** असच्चेदकुर्वत्कारकं तदापि तस्य विशेषाभावादुक्तदोषतादवस्थ्यमित्याह—**असतश्चेति ।** ननु कारकस्याकुर्वतो यदकुर्वत्त्वं पूर्वं सदवस्थितं तस्य प्रच्युतौ सत्यां कुर्वत्वे सति कार्यमुत्पाद्येत तथा च कुर्वत्कारकमिति पक्षे न किञ्चिदघमिति मन्वानः शङ्कते—**सच्च्युताविति ।** कारकस्य सत्त्वाभावे तद्गतस्य कुर्वत्वस्यापि सत्त्वायोगात्कारकत्वे कुर्वत्वे च सत्येव कार्योत्पत्तौ तुलाकोट्योः नमनोन्नमनयोरिव कार्यकारणयोर्यौगपद्यादिकं कार्यमिदं कारणमिति निश्चयायोगान्न कार्यकारणत्वसिद्धिरित्युत्तरमाह—**तुलान्तयोरिति** ॥ २१ ॥

यदि कारकगतं कुर्वत्त्वं पूर्वं पश्चाद्भावि कार्यमिति क्रमभावित्वमिष्टं तदा कुर्वत्वस्यापि सदाभावे तत्कार्यस्यापि सदाभावित्वप्रसक्त्या कादाचित्कत्वेन कुर्वत्वांन्तरापेक्षायामनवस्थानाच्च सत्सदेवासच्चासदेव तयोः स्वरूपविपर्यासो नोपपद्यते सर्वप्रमाणविरोधात्तथा च तयोः स्वस्वासाधारणेनाकारेणावस्थाने भवो न संभवीत्याह—**न चेत्स इति ।** कथमित्युक्तामेवानुपपत्तिं व्यनक्ति—**विभक्तमिति** ॥ २२ ॥

इच्छतो मनसोऽपेक्षावशाज्जन्माभ्युपगमेऽपि स्वपक्षे न कश्चिद्दोषोऽस्तीत्याह—**अथाभ्युपेत्य ।** कथं मनश्चेष्टितेन तवार्थो नास्ति हानेः वृद्धेर्वा सम्भवादित्याशङ्क्य न कर्मणा वर्धते नो कनीयानिति श्रुतेर्न हानिवृद्धी प्रत्यगात्मनः स्यातामित्याह—**न हानवृद्धी इति ।** किञ्च हानं वृद्धिश्चैत्यस्य द्वयं, तस्यासत्त्वं सत्त्वं वा ? यद्यसत्त्वं तदा तस्य स्वतोऽन्यतो वा भवो यतो न संभवति असत्त्वान्नरविषाणवत् । अतो नासत्त्वपक्षो युक्तिमानित्याह—**नेत्यादिना ।** यदि हानं वृद्धिश्चेत्युभयोरस्तिता सत्ता स्वीक्रियते । तथापि सत्त्वादेव मनश्चेष्टितं वृथैवेत्याह—**यदीति** ॥ २३ ॥

सम्बन्धानिरूपणादपि न हानादिसंभावना प्रत्यगात्मनोऽस्तीत्याह—**ध्रुवा ह्यनित्याः ।** कूटस्थाः निर्विकारत्वान्नान्ययोगिनः । क्षणिकाश्च नान्ययोगिनः सम्बन्धकालपर्यन्तमवस्थानासम्भवात् । मिथश्च-ध्रुवाविनाशिनो वा न सम्बन्धिनः, सम्बन्धस्य सम्बन्धत्वासम्बन्धत्वाभ्यां दुर्निरूपत्वादत एव न तदाश्रयं किञ्चित्कार्यं स्यादित्यर्थः । पूर्वोक्तन्यायेन सम्बन्धवैधुर्ये सर्वमपि वस्तु विशकलितं स्यादित्याह—**अत इति ।** किञ्च स्वयमात्मस्वरूपतत्त्वं परमार्थरूपं निश्चयेन परमार्थवृत्त्या न शब्दगोचरतामाचरति सम्बन्धराहित्यादेवेत्याह—**स्वयं चेति** ॥ २४ ॥

किञ्च प्रागुक्तनीत्या निरुक्तिगोचरत्वाभावात् द्वयात्सदसदित्येवं विकल्पितात् व्यावृत्तमात्मतत्त्वमास्थेयम् । ततश्च निर्विशेषं तत्परमार्थस्वरूपं स्वप्रकाशत्वेनैव सिद्ध्यतीत्याह—**समं त्विति ।** यस्मादेवं

**अवेद्यमेकं यदनन्यवेदिनां कुतार्किकाणां च सुवेद्यमन्यथा ।**
**निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न याति मोहं ग्रहदोषमुक्तितः ॥२६॥**

**अतोऽन्यथा न ग्रहनाश इष्यते विमोहबुद्धेर्ग्रह एव कारणम् ।**
**ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो यथा प्रशान्ति परमां तथा व्रजेत् ॥२७॥**

**विमथ्य वेदोदधितः समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः ।**
**तथाऽमृतं ज्ञानमिदं हि यैः पुरा नमो गुरुभ्यः परमीक्षितं च यैः ॥२८॥**

---

सर्वदोषरहितमात्मतत्त्वं तस्मात्तत्परिज्ञानान्मुक्तिरित्याह—**निरीक्ष्येति**। युक्तिर्मननं, श्रुतिः श्रवणं ताभ्यां निदिध्यासनसहिताभ्यां आत्मानं निरीक्ष्य बुद्धिर्निःशेषाज्ञानतत्कार्यनिवृत्त्या स्वरूपेणावतिष्ठते। **यथा** दीपस्तैलादिनिवृत्तौ तेजोमात्ररूपेण तिष्ठतीत्यर्थः ॥ २५ ॥

कथमात्मनिरीक्षणं विषयत्वेनाविषयत्वेन वेत्याशङ्क्याह—**अवेद्यमिति** । अन्यथा वेद्यत्वेनेत्यर्थः । इत्थमवेद्यत्वेनानन्यत्वेन वाऽऽत्मानमगुणं निरीक्ष्य स्वयमगुणग्रहो गुणेषु सत्त्वादिषु सविकारेषु ग्रहोऽभिनिवेशस्तद्रहितो मोहं नायातीत्याह—**निरीक्ष्येति** विदुषः साक्षित्वाद्यभिमानाभावे मिथ्याज्ञानादज्ञानकार्यान्निवृत्ति हेतुमाह—**ग्रहेति** ॥ २६ ॥

किमिति महता यत्नेनाविषयत्वेन ब्रह्मात्मनो वेदनमुच्यते तत्राह—**अतोऽन्यथा** । उक्तलक्षणाद्ब्रह्मज्ञानात्प्रकारान्तरेण ग्रहस्य मिथ्याज्ञानस्य नाशो नेष्यते चेत्तन्नाशो मा भूदित्यशङ्क्यविमोहबुद्धेराकुलीभावरूपाया ग्रह एव मिथ्याज्ञानमेव कारणं ततो ग्रहानिवृत्तौ मोक्षासिद्धिरित्याह—**विमोहेति** । ननु ब्रह्मात्मज्ञानेन तदज्ञानमेव निवर्तते न ग्रहो मिथ्याज्ञानं अविरोधादिति तत्राह—**ग्रहोऽपीति** । **यथा**ऽग्निरनिन्धनो निवृत्तिमात्यन्तिकीं गच्छति तथा ग्रहोऽपि मिथ्याज्ञानात्मकः स्वकारणाज्ञाननिवृत्तौ हेत्वाभावादात्यन्तिकीं निवृत्तिं गच्छेत्, उपादाननिवृत्त्यैव कार्यस्यात्यन्तिकी निवृत्तिरित्यङ्गीकारादित्यर्थः ॥ २७ ॥

पद्यभागपरिसमाप्तावपि गुरून्नमस्यति—**विमथ्य** यथा । पुरा महात्मभिरक्षुद्रचित्तैः सुरैरिन्द्रादिभिर्महाब्धिर्नाम क्षीरोदधिस्ततो मथित्वा प्रसिद्धममृतं समुद्धृतं तथा वेदनामधेयादुदधेरालोड्य ज्ञानमिदममृताख्यं यैर्गुरुभिरुद्धतं यैश्च परब्रह्म प्रत्यक्त्वेन करतलामलकवदपरोक्षमीक्षितं तेभ्यो गुरुभ्यस्त्रिविधोऽपि प्रह्वीभावो भूयादित्यर्थः ॥ २८ ॥

॥ इति तृष्णाज्वरनाशकप्रकरणमेकोनविंशम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिता

श्रीसहस्रोपद्यभागटीका समाप्ता ॥

सत्यज्ञानानन्दपूर्णानाद्यन्तं द्वैतवर्जितम् ।
ब्रह्माहमस्म्यहं ब्रह्मास्म्यसङ्गो नित्ययुक्ता [ मुक्तकः ] ॥

# उपदेशसाहस्री

## श्रीशङ्करभगवत्पादविरचिता

( गद्यभागः )

**अथ मोक्षसाधनोपदेशविधिं व्याख्यास्यामो मुमुक्षूणां श्रद्धानानामर्थिनामर्थाय ॥१॥**

**तदिदं मोक्षसाधनं ज्ञानं साधनसाध्यादनित्यात्सर्वस्माद्विरक्ताय त्यक्तपुत्रवित्तलोकैषणाय प्रतिपन्नपरमहंसपारिव्राज्याय शमदमदयादियुक्ताय शास्त्रप्रसिद्धशिष्यगुणसंपन्नाय शुचये ब्राह्मणाय विधिवदुपसन्नाय जातिकर्मवृत्तविद्याभिजनैः परीक्षिताय शिष्याय ब्रूयात् पुनः पुनर्यावद्ग्रहणं दृढीभवति ॥ २ ॥**

**श्रुतिश्च—"परीक्ष्य ... तत्त्वतो ब्रह्मविद्याम्" इति। दृढगृहीता हि विद्याऽऽत्मनः श्रेयसे**

---

## श्री भगवदानन्दज्ञानाचार्यकृता टीका

ॐ सर्वोपनिषदर्थसारसङ्ग्राहिका गद्यपद्यात्मिका हीयमुपदेशसाहस्री। तत्र पद्यभागं प्रागुक्तया परिपाट्या परिसमाप्य गद्यभागमवतारयन्भगवान्भाष्यकारस्तावदोंकारश्चाथ शब्दश्चेत्यादिस्मृतिप्रामाण्यादथशब्दोच्चारणरूपं मङ्गलाचरणं कृत्वा चिकीर्षितप्रतिज्ञां प्रकरोति—**अथ मोक्षसाधनोपदेशविधिं व्याख्यास्यामः**। तत्र प्रवृत्त्यङ्गत्वेनाधिकार्याद्यनुबन्धं सूचयति—**मुमुक्षूणां श्रद्धानानामर्थिनामर्थाय ॥ १ ॥**

तेषामुपकाराय मोक्षार्थज्ञानोपदेशप्रकारव्याख्याने स्थिते प्रथमं शिष्यानुशासनप्रकरणं प्रारिप्सुः शिष्याय कीदृशाय विद्या वक्तव्येत्याशङ्कायामाह—**तदिदं मोक्षसाधनं ज्ञानं साधनसाध्यादनित्यात्सर्वस्माद्विरक्ताय त्यक्तपुत्रवित्तलोकैषणाय प्रतिपन्नपरमहंसपारिव्राज्याय शमदमादियुक्ताय शास्त्रप्रसिद्धशिष्यगुणसम्पन्नाय शुचये ब्राह्मणाय विधिवदुपसन्नाय जातिकर्मगुणवृत्तविद्याभिजनैः परीक्षिताय शिष्याय ब्रूयात् यावद् ग्रहणं दृढीभवति।**

मोक्षसाधनं ज्ञानं विधिवदुपसन्नाय शिष्याय ब्रूयादिति सम्बन्धः। **साधनसाध्यादित्यादिविशेषणानि** हेतुहेतुमद्भावेन सम्बध्यन्ते। पारिव्राज्यविशेषणञ्च गृहस्थादीनां मुख्याधिकारनिषेधार्थम्। "नाविरक्ताय संसारान्नानिरस्तैषणाय च। न चेदमव्रते देयं वेदान्तार्थप्रकाशनम् ॥"

इति दर्शनात्। अद्वेष्टा सर्वभूतानां, अमानित्वमदम्भित्वं इत्यादयः शास्त्रप्रसिद्धाः शिष्यगुणाः। क्षत्रियादेरधिकारेऽपि मुख्यत्वाद्ब्राह्मणग्रहणम्। **विधिवदिति** शास्त्रोक्तक्रमकथनम्। शास्त्रद्वारा विद्याधिकारः शूद्रादेर्नेति दर्शयितुं विशिनष्टि—**जातीति**। आचार्योपदेशस्य फलपर्यन्तत्वं सूचयति—**पुनः पुनर्यावद्ग्रहणं दृढीभवति** ॥ २॥।

यथोक्तविशेषणविशिष्टोऽधिकारी ब्रह्मविद्यायामित्यत्र प्रमाणमाह—**श्रुतिश्च परीक्ष्य लोकान् —तत्त्वतो ब्रह्मविद्यामिति**। परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्। प्रोवाच तां तत्त्वतो ब्रह्मविद्यामित्येवं प्रकारा श्रुतिः उक्ते ब्रह्मविद्याधिकारिण्यस्तीत्यर्थः। यावद्ग्रहणं विद्याया दृढीभवति

संतत्यै च भवति। विद्यासन्ततिश्च प्राण्यनुग्रहाय भवति, नौरिव नदीं तितीर्षोः। शास्त्रं च—"यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः" इति। अन्यथा च ज्ञानप्राप्त्यभावात् "आचार्यवान् पुरुषो वेद", "आचार्याद्धैव विद्या विदिता", "आचार्यः प्लावयिता तस्य सम्यग्ज्ञानं प्लव इहोच्यते" इत्यादिश्रुतिभ्यः, 'उपदेक्ष्यन्ति ते ज्ञानम्" इत्यादिस्मृतिभ्यश्च ॥ ३ ॥

शिष्यस्य ज्ञानाग्रहणं[1] च लिंगैर्बुद्ध्वा तदग्रहणहेतूनधर्मलौकिकप्रमादनित्यानित्य-[2]वस्तुविवेकविषयासञ्जातदृढपूर्वश्रुतत्वलोकचिन्तावेक्षणजात्याद्यभिमानादींस्तत्प्रतिपक्षैः श्रुति-

तावत्पुनः पुनराचार्यो ब्रूयादित्युक्तम्। तत्र हेतुमाह—**दृढगृहीता हि विद्याऽऽत्मनः श्रेयसे संतत्यै च भवति**। सन्ततिः शिष्यप्रशिष्यादिपरम्पराविच्छित्तिहानिः। तयापि सन्तत्या किं सिद्धयतीति तत्राह—**विद्यासन्ततिश्च प्राण्यनुग्रहाय भवति। नौरिव नदीं तितीर्षोः**। यथा नद्यां निमग्नस्य नदीं तितीर्षोः निस्तारहेतुरिष्टा नौः। तथा दुःखसमुद्रे निमग्नस्य प्राणिनः शिष्यप्रशिष्यादिलक्षणा विद्यासन्ततिरनुग्रहाय भवतीत्यर्थः। अधिकारिणः शूद्रत्वाशङ्कापरिहारार्थं जातिपरीक्षणं तस्यैव कुष्ठाद्यभावलिङ्गेन प्राक्तनं सुकृतित्वं ज्ञातव्यम्। वृत्तशब्दिताचारविचारेण संवादद्वारा विद्यादिनिरूपणेन च वैशिष्ट्यं द्रष्टव्यमित्यत्र प्रमाणमाह—**शास्त्रं च यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूयः** इति। यद्यपि विद्यागुरवे विद्यानिष्क्रयार्थमिमां पृथिवीं समुद्रपरिवेष्टितां वित्तपूर्णामिव दद्यात्तथाप्येतदेव विद्यादानं ततोऽधिकमिति शास्त्रस्थितेर्विशिष्टाधिकारिणे क्षेत्रमात्रस्यापि दातव्यत्वान्महाधनब्रह्मविद्यादाने विशिष्टाधिकार्यन्वेषणमावश्यकमिति भावः। किमित्याचार्येण ब्रह्मविद्या शिष्यमन्विष्य तस्मै दीयते स्वयमेव विशिष्टस्य शिष्यस्य न्यायाद्यनुसन्धानेन विद्योदेष्यतीत्याशङ्क्याह—**अन्यथा च ज्ञानप्राप्त्यभावात्**। तथा च श्रुतिः-आचार्यवान्पुरुषो वेद। आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्। आचार्यः प्लावयता तस्य ज्ञानं प्लव इहोच्यते—इत्याद्या श्रुतिः।

स्मृतिश्च। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इत्याद्या। आचार्योपदेशमन्तरेणेति यावत्। आचार्येणैव विशिष्टाय शिष्यायोपदेष्टव्या विद्येत्यत्र श्रुतिस्मृती दर्शयति—**आचार्यवानिति**। 'उपदेक्ष्यन्ति ते ज्ञानमि'त्यादिस्मृतेश्च स्वयमेवातिसूक्ष्मार्थविषयं ज्ञानं न भवतीति प्रतिभातीत्यर्थः ॥ ३ ॥

सम्प्रत्याचार्यस्य विद्योपदेशानन्तरं कृत्यान्तरमाह—**शिष्यस्य ज्ञानाग्रहणं तल्लिङ्गैर्बुद्ध्वा अग्रहणहेतूनधर्मलौकिकप्रमाद-नित्यानित्यविवेकविषयासंजातदृढपूर्वश्रुतत्व-लोकचिन्तावेक्षणजात्याद्यभिमानादीन्, तत्प्रतिपक्षैः श्रुतिस्मृतिविहितैरपनयेदक्रोधादिभिरहिंसादिभिश्च यमैर्ज्ञानाविरुद्धैश्च नियमैः अमानित्वादिगणं च ज्ञानोपायं सम्यक् ग्राहयेत्।**

बहिर्मुखादिलिङ्गैस्तस्य ज्ञानाग्रहणं बुद्ध्वा तदग्रहणहेतूनपनयेदिति सम्बन्धः। तानेवाग्रहणहेतूनपनेयानुदाहरति—**अधर्मेत्यादिना**। बहिर्मुखादेवाधर्मः सञ्चितः सम्भावितः। **लौकिकप्रमादः** सम्प्रति प्रतीयमानः कामचारवादभक्षणादिः इदं नित्यमिदमनित्यमिति विवेकविषयं न संजातं दृढं पूर्वश्रुतत्वं, **लोकचिन्तावेक्षणं** अशास्त्रीयलोकव्यवहारानुसरणं जातिदेशपुत्रवित्तादिष्वभिमानो

१. ज्ञेयपदार्थाग्रहणं ज्ञानाजननं वा। २. वस्तु इत्यंशः टीकायां न दृश्यते।

**स्मृतिविहितैरपनयेदक्रोधादिभिः अहिंसादिभिश्च यमैः, ज्ञानाविरुद्धैश्च नियमैः ॥ ४ ॥**

**अमानित्वादिगण[1] च ज्ञानोपायं सम्यग्ग्राहयेत् ॥ ५ ॥**

**आचार्यश्चोहापोहग्रहणधारणशमदमदयानुग्रहादिसम्पन्नो लब्धागमो दृष्टादृष्टभोगेष्वनासक्तस्त्यक्तसर्वकर्मसाधनो ब्रह्मवित् ब्रह्मणि स्थितोऽभिन्नवृत्तो दंभदर्पकुहकशाठ्यमायामात्सर्यानृताहंकारममत्वादिदोषविवर्जितः केवलपरानुग्रहप्रयोजनो विद्योपयोगार्थी । पूर्वमुपदिशेत्—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "यत्र नान्यत्पश्यति", "आत्मैवेदं सर्वम्", "ब्रह्मैवेदं सर्वम्", "आत्मा वा इदमेक एवाग्र आसीत्" 'सर्वं खल्विदं ब्रह्म" इत्याद्या आत्मैक्यप्रतिपादनपराः श्रुतीः ॥ ६ ॥**

---

दम्भादयश्चाभिमानादीनिति यावत् । पूर्वोक्तानामधर्माणां प्रतिकूलाः श्रुतिस्मृत्योर्विहितास्ते के स्युर्यैरग्रहणहेतूनामपनयः स्यादित्यपेक्षायामाह—**अक्रोधादिभिरिति** । आदिशब्देनानुग्रहादयो गृह्यन्ते । अहिंसादिभिरित्यादिशब्देन ब्रह्मचर्यास्तेयादिग्रहणम् । नियमाः शौचसंतोषादयः कृच्छ्रचान्द्रायणतीर्थयात्रादिनिवृत्त्यर्थं ज्ञानाविरुद्धैरित्युक्तम् ॥ ४ ॥

आचार्यस्य कृत्यान्तरमाह—**अमानित्वादीति** ॥ ५ ॥

तस्य कृत्यं दर्शयित्वा लक्षणमाह—**आचार्यश्चोहापोहग्रहणधारणशमदमदयानुग्रहादिसम्पन्नो लब्धागमो दृष्टादृष्टभोगेष्वनासक्तः त्यक्तसर्वकर्मसाधनो ब्रह्मवित् ब्रह्मणि स्थितोऽभिन्नवृत्तो दम्भदर्पकुहकशाठ्यमायामात्सर्यानृताह[2]ङ्कारममत्वादिदोषवर्जितः केवलपरानुग्रहप्रयोजनो विद्योपयोगार्थी । पूर्वमुपदिशेत्** । शिष्येणानुक्तस्यापि तदपेक्षितस्य स्वयमूहनमूहः शिष्यगतमिथ्याज्ञाननिराकरणे सामर्थ्यमपोहः । विहितबोधसामर्थ्यं ग्रहणं, उक्तस्य श्रुतस्यार्थस्याविस्मरणं **धारणम्** । प्रतिषिद्धविषयादन्तःकरणोपरमः **शमः** । तस्मादेव बाह्यकरणोपरमो **दमः** । दुःखिषु प्राणिष्वनुजिघृक्षा **दया** । तदनन्तरं दुःखापनयाय यत्नोऽनुग्रहः । आदिपदेना**मानित्वादयो** गृह्यन्ते । **लब्धागमत्वं** आचार्यात्प्राप्तोपदेशत्वं, ऐहिकामुष्मिकभोगवैतृष्ण्यम**नासक्तत्व**मित्याह—**दृष्टेति** । **ब्रह्मवित्त्वं** महावाक्यार्थाभिज्ञत्वम् । **ब्रह्मणि स्थितत्त्वं** वाक्यीयस्वानुभवानुरोधेन तत्रैव पर्यवसितत्वम् । **अभिन्नवृत्तत्त्वम**परित्यक्तसदाचारवत्त्वं स्नानादिमत्त्वं वा । **दम्भो** धर्मध्वजित्वम् । **कुहकं** परवञ्चनम् । धनादिनिमित्तो मदो **दर्पः । शाठ्यं** नैष्ठुर्यम् । **माया** बहिरन्यथा प्रकाशनम् । **मात्सर्यं** गुणेषु दोषख्यापनम् । **अनृतमसत्यवचनम् । आदि**पदं सर्वदोषसंग्रहार्थम् । विद्योपयोगमिच्छतस्तादर्थ्येन प्रथममुपदेशप्रकारं दर्शयति—**पूर्वमिति** । कथमुपदिशेदित्याशङ्कायामात्मैकत्वप्रतिपादनपराः श्रुतीः शिष्यस्याग्रे प्रथमं पठेदित्याह-सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयम् । यत्र नान्यत्पश्यति । 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वम्' । आत्मा वा इदमेक एवाग्र आसीत् । सर्वं खल्विदं ब्रह्मेत्याद्याः । यदि यथोक्तश्रुत्युपदेशादेवोत्तमबुद्धित्वादात्मैकत्वं प्रतिपद्य कृतकृत्यः स्यात्तदा तं प्रति नास्ति वक्तव्यमित्यभिप्रेत्याधिकार्यन्तरं प्रति श्रुतिभिः स्मृतिभिश्च ब्रह्मणो लक्षणं ग्राहयेदित्याह—**आत्मैकत्वप्रतिपादनपराः श्रुतीः** ॥ ६ ॥

---

१. गुणं० पा० । २. मात्सर्याहङ्कार ।

उपदिश्य च ग्राहयेद्ब्रह्मणो लक्षणम्—"य आत्माऽपहतपाप्मा", "यत्साक्षादपरोक्षाद्ब्रह्म", "योऽशनायापिपासे", "नेति नेति", "अस्थूलमनणु", "स एष नेति नेति", "अदृष्टं द्रष्टृ", "विज्ञानमानन्दम्", "सत्यं ज्ञानमनन्तम्", "अदृश्येऽनात्म्येऽनिरुक्ते", "स वा एष महानज आत्मा", "अप्राणो ह्यमनाः", "सबाह्याभ्यन्तरो ह्यजः", "विज्ञानघन एव", "अनन्तरमबाह्यम्", "अन्यदेव तद्विदितादथो अविदितादधि", "आकाशो वै नाम" इत्यादिश्रुतिभिः ॥ ७ ॥

स्मृतिभिश्च—"न जायते म्रियते वा", "नादत्ते कस्यचित्पापम्", "यथाकाशस्थितो नित्यम्", "क्षेत्रज्ञं चापि मां विद्धि", न सत्तन्नासदुच्यते", "अनादित्वान्निर्गुणत्वात्" "समं सर्वेषु भूतेषु", "उत्तमः पुरुषस्त्वन्यः" इत्यादिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रतिपादनपराभिस्तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च ॥८॥

एवं श्रुतिस्मृतिभिर्गृहीतपरमात्मलक्षणं शिष्यं संसारसागरादुत्तितीर्षुं पृच्छेत्—कस्त्वमसि सोम्य ? इति ॥ ९ ॥

स यदि ब्रूयात्—ब्राह्मणपुत्रोऽदोन्वयो ब्रह्मचार्यासम्, गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राट् संसारसागराज्जन्ममृत्युमहाग्राहादुत्तितीर्षुरिति ॥ १० ॥

---

उपदिश्य च ग्राहयेत् ब्रह्मणो लक्षणम्—'य आत्मापहतपाप्मा' 'यत्साक्षादपरोक्षाद्ब्रह्म' 'योऽशनापिपासे' 'नेति नेति' 'अस्थूलमनणु' 'स एष नेतिनेत्यात्मा' 'अदृष्टं द्रष्टृ' 'विज्ञानमानन्दम्' 'सत्यं ज्ञानमनन्तम्' 'अदृश्येऽनात्म्ये' 'स वा एष महानज आत्मा' 'अप्राणो ह्यमनाः' 'सबाह्याभ्यन्तरो ह्यजः' 'विज्ञानघन एव' 'अनन्तरमबाह्यम्' 'अन्यदेव तद्विदितादथो अविदितात्' 'आकाशो वै नाम' इत्यादिश्रुतिभिः ॥ ७ ॥

स्मृतिभिश्च—'न जायते म्रियते वा' 'नादत्तो कस्यचित्पापम्' 'यथाकाशस्थितो नित्यम्' 'क्षेत्रज्ञं चापि मां विद्धि' 'न सत्तन्नासदुच्यते' 'अनादित्वान्निर्गुणत्वात्' 'समं सर्वेषु भूतेषु' 'उत्तमः पुरुषस्त्वन्यः' इत्यादिभिः श्रुत्युक्तलक्षणाविरुद्धाभिः परमात्मासंसारित्वप्रतिपादनपराभिस्तस्य सर्वेणानन्यत्वप्रतिपादनपराभिश्च । उदाहृतस्मृतीनां श्रुतिसंवादेन प्रामाण्यं सूचयति—श्रुत्युक्तेति ॥८॥

परमात्मलक्षणपरिज्ञानवन्तं शिष्यं प्रत्याचार्यस्य कर्त्तव्यं प्रश्नं प्रथमं दर्शयति—

एवं श्रुतिस्मृतिभिः गृहीतपरमात्मलक्षणं शिष्यं संसारसागरादुत्तितीर्षुं पृच्छेत् कस्त्वमसि सोम्येति ॥ ९ ॥

तत्र शिष्यस्य देहात्मत्वमाश्रित्य शङ्कामुत्थापयति—स यदि ब्रूयात् ।

ब्राह्मणपुत्रः अदोऽन्वयः ब्रह्मचार्यासम् गृहस्थो वा, इदानीमस्मि परमहंसपरिव्राट् संसारसागरात् जन्ममृत्युमहाग्राहात् उत्तितीर्षुरिति असावन्वयो वंशो यस्य मम सोऽहं तथा ॥ १० ॥

आचार्यो ब्रूयात्—इहैव तव सोम्य मृतस्य शरीरं वयोभिरद्यते, मृद्भावं वाऽऽपद्यते। तत्र कथं संसारसागरादुत्तर्तुमिच्छसीति। नहि नद्या अवरे कूले भस्मीभूतो नद्याः पारं तरिष्यतीति[1] ॥ ११ ॥

स यदि ब्रूयात्—अन्योऽहं शरीरात्। शरीरं तु जायते, म्रियते, वयोभिरद्यते, मृद्भावमापद्यते, शस्त्राग्न्यादिभिश्च विनाश्यते, व्याधिभिश्च युज्यते[2]। तस्मिन्नहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः। पुनः पुनः शरीरविनाशे धर्माधर्मवशाच्छरीरान्तरं यास्यामि, पूर्वनीडविनाशे पक्षीव नीडान्तरम्। एवमेवाहमनादौ संसारे देवतिर्यङ्मनुष्यनिरयस्थानेषु स्वकर्मवशादुपात्तमुपात्तं शरीरं त्यजन्, नवं नवं चान्यदुपाददानः, जन्ममरणप्रबन्धचक्रे घटीयन्त्रवत् स्वकर्मणा भ्राम्यमाणः, क्रमेणेदं शरीरमासाद्य, संसारचक्रभ्रमणादस्मान्निर्विण्णः, भगवन्तमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमाय। तस्मान्नित्य एवाहं शरीरादन्यः—शरीराण्यागच्छन्त्यपगच्छन्ति च वासांसीव पुरुषस्येति। १२॥

---

शरीरस्यात्मत्वे संसारसागरादुत्तितीर्षा नोपपद्यते। तस्यात्रैवान्यथाभूतस्य परलोकगमनायोग्यत्वावगमादित्याह—**आचार्यो ब्रूयात्। इहैव तव सोम्य मृतस्य शरीरं वयोभिरद्यते मृद्भावं वाऽऽपद्यते तत्र कथं संसारसागरादुत्तर्तुमिच्छसीति**। इहैवान्यथाभूतस्य नास्ति परलोकसंभावनेत्येतद्दृष्टान्तेन स्पष्टयति—**नहि नद्या अवरे कूले भस्मीभूतो नद्याः पारं तरिष्यतीति** ॥ ११ ॥

शिष्यस्तु देहातिरिक्तमात्मानमादाय शङ्कते—

**स यदि ब्रूयादन्योऽहं शरीरात् शरीरन्तु जायते म्रियते वयोभिरद्यते मृद्भावं वाऽऽपद्यते शस्त्राग्न्यादिभिश्च विनाश्यते व्याधिभिश्च युज्यते**। कथं तर्हि तव शरीरत्वेन प्रतिभानमित्याशङ्क्याह—**तस्मिन् अहं स्वकृतधर्माधर्मवशात् पक्षी नीडमिव प्रविष्टः**। तर्हि गृहीतदेहविनाशे पुनः शरीरान्तरं तव कथं सिध्येत्तत्राह—**पुनः पुनः शरीरविनाशे धर्माधर्मवशात् शरीरान्तरं यास्यामि पूर्वनीडविनाशे पक्षीव नीडान्तरम्। एवमेवाहमनादौ संसारे देवतिर्यङ्मनुष्यनिरयस्थानेषु स्वकृतकर्मवशादुपात्तमुपात्तं शरीरं त्यजन् नवं नवं च अन्यदुपाददानो जन्ममरणप्रबन्धचक्रे घटीयन्त्रवत् स्वकर्मणा भ्राम्यमाणः क्रमेणेदं शरीरमासाद्य संसारचक्रभ्रमणात् अस्मान्निर्विण्णो भगवन्तमुपसन्नोऽस्मि संसारचक्रभ्रमणप्रशमायेति**। तत्तत्कर्मानुसारेण तत्तच्छरीरं प्रतिपद्यमानस्य तव मदुपगमनं कथमधुना सम्वृत्तमित्याशङ्क्याह—**एवमिति**। इतिशब्दो यथोक्तन्यायेन शरीराव्यतिरेको मम नास्तीत्येवमर्थः। शरीरादन्यत्वे फलितमाह—**तस्मान्नित्य एवाहं शरीरादन्यः**। आत्मन्यागमापायप्रतीतौ कथं शरीरान्यत्वेन नित्यत्वमित्याशङ्क्याह—**शरीराणि आगच्छन्त्यपगच्छन्ति च वासांसीव पुरुषस्येति** ॥ १२ ॥

---

१. तरिष्यसीति। २. व्याध्याधिभिश्च प्रयुज्यते। पा०

"यस्तु सर्वाणि भूतानि", "तदेजति तन्नैजति", 'वेनस्तत्पश्यन्", "तदेवाग्निः", "अहं मनुरभवं सूर्यश्च", 'अन्तः प्रविष्टः शास्ता जनानाम्", 'सदेव सोम्य", "तत्सत्यं स आत्मा तत्त्वमसि" इत्यादिश्रुतिभ्यः ॥ ३७ ॥

स्मृतिभ्यश्च "पूः प्राणिनः सर्व एव गुहाशयस्य", "आत्मैव देवताः", "नवद्वारे पुरे", "समं सर्वेषु भूतेषु", 'विद्याविनयससंपन्ने", 'अविभक्तं विभक्तेषु", "वासुदेवः सर्वम्" इत्यादिभ्य एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ॥ ३८ ॥

स यदि ब्रूयात्—यदि 'भगवन् अनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजः" कृत्स्नः प्रज्ञानघन एव, सैन्धवघनवदात्मा सर्वमूर्तिभेदवर्जित आकाशवदेकरसः, किमिदं दृश्यते, श्रूयते वा, साध्यं साधनं वा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रतिपत्तिविषयमिति ॥ ३९ ॥

आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते, श्रूयते वा, साध्यं साधनं साधकश्चेति। परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेरनेकवदवभासते—तिमिरदृष्ट्याऽने-

---

च सृष्टे जगति स्रष्टुरेवाविकृतस्य परस्य जीवभावेन प्रवेशो निर्दिश्यते। तेन जीवब्रह्मणोर्न भेदोऽस्तीत्याह—**सत्यं ज्ञानमनन्तम्। तस्माद्वा एतस्मात्**'। '**तत्सृष्ट्वा तदेवानुप्राविशत्**। तत्रैव श्रुत्यन्तरमाह—'एको देवः सर्वभूतेषु'। 'अशरीरम् शरीरेष्वनवस्थेष्ववस्थितम्', महान्तं विभुमात्मानम्, मत्वा धीरो हर्षशोकौ जहातीति सम्बन्धः। जन्ममरणादिशून्यत्वेन कूटस्थमाह—**न जायते म्रियते वा। स्वप्नान्तं जागरितान्तम्**। स्वप्नान्तं स्वप्नस्वरूपम्। जागरितान्तं जागरस्वरूपम् यः पश्यति, तं महान्तं मत्वा हर्षशोकौ जहातीति पूर्ववत्। 'स म आत्मेति विद्यात्'। 'यस्तु सर्वाणि भूतानि', 'तदेजति तन्नैजति' 'वेनस्तत्पश्यन् विश्वा भुवनानि विद्वान्यत्र विश्वं भवन्त्येकनीडमि'त्यत्र वेनो नाम कान्तिमान्परिशुद्धश्चिद्रूपेणावस्थितो विद्वान्निगद्यते। तदेवाग्निस्तद्वायुरित्यादिना सर्वात्मत्वं दर्शितम्। तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे **'अहं मनुरभवं सूर्यश्च'**। **'अन्तःप्रविष्टः शास्ता जनानाम्'**, **'सदेव सोम्येदमग्र आसीत्'**। **'तत्सत्यम् स आत्मा तत्त्वमसीत्यादिश्रुतिभ्यः** ॥ ३७ ॥

**स्मृतिभ्यश्च-"पूः प्राणिनःसर्व एव गुहाशयस्य" 'आत्मैव देवताः'**। **'नवद्वारे पुरे' 'समं सर्वेषु', 'विद्याविनयसम्पन्ने' 'अविभक्तं विभक्तेषु' 'वासुदेवः सर्व'मित्यादिभ्यः**। सर्वप्राणिनो गुहाशयस्यात्मनः पूः पुरमित्यर्थः। श्रुतिस्मृतिसिद्धं ब्रह्मात्मैकत्वमुपसंहरति—**एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम्** ॥ ३८ ॥

उक्ते ब्रह्मात्मैकत्वे लौकिकवैदिकव्यवहारविरोधमाशङ्कते—**स यदि ब्रूयात्—'यदि भगवन् अनन्तरोऽबाह्यः', 'सबाह्याभ्यन्तरो ह्यजः' 'कृत्स्नः प्रज्ञानघन एव' 'सैन्धवघनवदात्मा सर्वमूर्तिभेदविवर्जितः' आकाशवदेकरसः किमिदम् तर्हि दृश्यते श्रूयते वा साध्यं साधनं साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धम् वादिशतविप्रतिपत्तिविषय इति** ॥ ३९ ॥

पारमार्थिकब्रह्मात्मैकत्वस्याविद्याकृतव्यवहारेण विरोधो नास्तीत्याह—**आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते श्रूयते वा साध्यं साधनं साधकश्चेति परमार्थतस्त्वेक एवात्मा अविद्या-**

कचन्द्रवत्। 'यत्र वा अन्यदिव स्यात्", "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति", 'मृत्योः स मृत्युमाप्नोति", "अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्'''अथ यदल्पं तन्मर्त्यम्" इति, "वाचारम्भणं विकारो नामधेयम्", "अनृतम्", "अन्योऽसावन्योऽहम्" इति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम्—"एकमेवाद्वितीयम्", "यत्रत्वस्य" "को मोहः कः शोकः" इत्याद्येकत्वविधिश्रुतिभ्यश्चेति ॥४०॥

यद्येवं, भगवन्, किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते, उत्पत्तिः प्रलयश्चेति ? ॥ ४१ ॥

अत्रोच्यते—अविद्यावत उपात्तशरीरादिभेदस्येष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानत इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयत् शास्त्रम्, न साध्यसाधनादिभेदं विधत्ते, अनिष्टरूपः संसारो हि स इति। तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयादि एकत्वोपपत्तिप्रदर्शनेन ॥ ४२ ॥

अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः अनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजः

---

दृष्टेरनेकवदाभासते। तिमिरदृष्टेरनेकचन्द्रवत्। **'यत्र वा अन्यदिव स्यात्' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति'। 'मृत्योः स मृत्युमाप्नोति'। अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम् अथ यदल्पम् तन्मर्त्यमिति, 'वाचारम्भणं विकारो नामधेयम्'। 'अन्योऽसावन्योऽहमि'ति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम् 'एकमेवाद्वितीयम्' 'यत्र त्वस्य', 'तत्र को मोहः कः शोक' इत्याद्येकत्वविधिश्रुतिभ्यश्चेति।**

द्वैतस्याविद्याकृतत्वे श्रुतीरुदाहरति—**यत्रेत्यादिना**। तत्रैव श्रुतार्थापत्तिं कथयति—**एकमेवेति**॥४०॥

भेदस्याविद्याकृतत्वे कर्मकाण्डश्रुतेरविद्यमानसाध्यसाधनादिभेदवादिन्या मिथ्यार्थत्वेनाप्रामाण्यप्रसक्तिरिति शङ्कते—**यद्येवं भगवन् किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते उत्पत्तिः प्रलयश्चेति।**

सृष्टिवाक्यस्य च प्रामाण्यान्यथानुपपत्त्या भेदस्य सत्यतेत्याह—**उत्पत्तिः प्रलयश्चेति** ॥ ४१ ॥

कर्मकाण्डश्रुतेः सृष्ट्यादिश्रुतेः प्रामाण्योपपत्तिं दर्शयति—**अत्रोच्यते**। तत्र कर्मकाण्डाख्यं शास्त्रं तावत्प्रसिद्धभेदानुवादेन साध्यसाधनविषयाज्ञानमनिवर्त्तयत्प्रमाणम्। मिथ्याभूतस्याप्यर्थक्रियासामर्थ्यान्न तु भेदमवबोधयति तस्यानिष्टत्वादित्याह—**अविद्यावत उपात्तशरीरादिभेदस्येष्टानिष्टयोगिनमात्मानं मन्यमानस्येष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः साधनैरेवेष्टप्राप्तिमनिष्टनिवृत्तिं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयच्छास्त्रं न साध्यसाधनादिभेदं विधत्ते। अनिष्टरूपः संसारो हि स इति**। सम्प्रति सृष्ट्यादिवाक्यस्य तात्पर्यमाह—**तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयादि एकत्वोपपत्तिप्रदर्शनेन**। तज्जत्वात्तत्कृतत्वात्तत्प्रतिष्ठितत्वाच्च तन्मात्रमित्युपपत्त्यभिधानव्याजेनैकत्वे तात्पर्यादिदमपि सृष्ट्यादिवाक्यमविद्यामेवोन्मूलयतीत्यर्थः ॥ ४२ ॥

अस्तु सृष्ट्यादिश्रुतेरुपदिष्टनीतितोऽविद्यानिवर्तकत्वम्। तावता किं सिध्यति तत्राह—**अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः 'अनन्तरोऽबाह्यः', 'सबाह्याभ्यन्तरो ह्यजः',**

रूपाभ्यामन्यः फेनस्थानीयाभ्यां, शुद्धः प्रसन्नस्तद्विलक्षणः । ते नामरूपे अव्याकृते सती व्याक्रियमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ।। १९ ।।

ततोऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायुभावमापद्येते, ततोऽप्यग्निभावम्, अग्नेरब्भावं, ततः पृथिवीभावम्—इत्येवंक्रमेण पूर्वपूर्वभावस्योत्तरोत्तरानुप्रवेशेन पञ्च महाभूतानि पृथिव्यन्तान्युत्पन्नानि । ततः पञ्चमहाभूतगुणविशिष्टा पृथिवी । पृथिव्याश्च पञ्चात्मिका व्रीहियवाद्या ओषधयो जायन्ते । ताभ्यो भक्षिताभ्यो लोहितं, शुक्रं च स्त्रीपुंसशरीरसम्बन्धि जायते । तदुभयमृतुकालऽविद्याप्रयुक्तकामखजनिर्मथनोद्भूतं मन्त्रसंस्कृतं गर्भाशये निषिच्यते । तत् स्वयोनिरसानुप्रवेशेन विवर्धमानं गर्भीभूतं नवमे, दशमे वा मासि जायते ।। २० ।।

तज्जातं लब्धनामाकृतिकं जातकर्मादिभिर्मन्त्रसंस्कृतं पुनःउपनयनसंस्कारयोगेन ब्रह्मचारिसंज्ञं भवति । तदेव शरीरं पत्नीसंयोगसंस्कारयोगेन गृहस्थसंज्ञं भवति । तदेव वनस्थसंस्कारेण तापससंज्ञं भवति । तदेव क्रियाविनिवृत्तिनिमित्तसंस्कारेण परिव्राट्संज्ञं भवति । इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम् ।। २१ ।।

---

मित्याह—शुद्ध इति ।। पूर्वस्य वाक्यस्यार्थमनूद्याकाशाद्वायुरित्यस्यार्थमाह—**ते नामरूपे अव्याकृते सती व्याक्रियमाणे फेनस्थानीये आकाशनामाकृती संवृत्ते ।। १९ ।।**

वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीति वाक्यत्रयस्यार्थं संगृह्णाति—

**ततोऽपि स्थूलभावमापद्यमाने नामरूपे व्याक्रियमाणे वायुभावमापद्येते । ततोऽप्यग्निभावम् अग्नेरब्भावं ततः पृथिवीभावमिति ।** सूक्ष्मभूतोत्पत्तिक्रमेण स्थूलभूतानामुत्पत्तिमत्र विवक्षितामुपसंहरति—**एवं क्रमेण पूर्वपूर्वस्योत्तरोत्तरानुप्रवेशेन पंचभूतानि पृथिव्यन्तान्युत्पन्नानि ।** उत्तरस्मिन्नुत्तरस्मिन्भूते पूर्वस्य पूर्वस्य भूतस्यानुप्रवेशेन पञ्चानां भूतानामन्तिमा पृथिवी शब्दस्पर्शरूपरसगन्धगुणविशिष्टा निष्पन्नेत्याह—**ततः पञ्चमहाभूतगुणविशिष्टा पृथिवी । पृथिव्याश्च पञ्चात्मिका व्रीहियवाद्या ओषधयो जायन्ते ।** पृथिव्या ओषधय इत्यस्यार्थमाह—**पृथिव्याश्चेति ।** ओषधीभ्योऽन्नमित्यस्यार्थमाह—**ताभ्यो भक्षिताभ्यो लोहितं शुक्रञ्च स्त्रीपुंशरीरसम्बन्धि जायते ।** अन्नात् पुरुष इत्यस्यार्थं कथयति—**तदुभयमृतुकालेऽविद्याप्रयुक्तकामखजनिर्मथनोद्भूतं मन्त्रसंस्कृतं गर्भाशये निषिच्यते । तत्स्वयोनिरसानुप्रवेशेन वर्धमानं गर्भीभूतं दशमे नवमे वा मासि जायते ।** अविद्याप्रयुक्तः कामखजो मन्था तस्य निर्मथनादुद्भूतम् । "गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुक" इत्यादिमन्त्रसंस्कृतं भवतीत्याह—**तदिति** ।।२०।।

एवं सृष्टिक्रममुपोद्घातरूपेणोक्त्वा यदुक्तं भिन्नजात्यन्वयसंस्कारं शरीरमिति तदिदानीं दर्शयति—

**तज्जातं लब्धनामाकृतिकं जातकर्मादिसंस्कृतं पुनरुपनयनसंस्कारयोगेन ब्रह्मचारिसंज्ञं भवति । तदेव शरीरं पत्नीयोगसंस्कारयोगेन गृहस्थसंज्ञं भवति । तदेव वनस्थसंस्कारेण तापससंज्ञं भवति । तदेव क्रियाविनिवृत्तिनिमित्तसंस्कारेण परिव्राट्संज्ञं भवति । इत्येवं त्वत्तो भिन्नं भिन्नजात्यन्वयसंस्कारं शरीरम् ।** भिन्नजात्यन्वयसंस्कारं शरीरमिति शेषः ।। २१ ।।

मनश्चेन्द्रियाणि च नामरूपात्मकान्येव, "अन्नमयं हि सोम्य मनः" इत्यादिश्रुतिभ्यः ॥ २२ ॥

कथं चाहं भिन्नजात्यन्वयसंस्कारवर्जित इत्येतच्छृणु—योऽसौ नामरूपयोर्व्याकर्ता नामरूपविलक्षणः, स एव नामरूपे व्याकुर्वन्-सृष्ट्वेदं शरीरं स्वयं संसारधर्मवर्जितो नामरूप इह प्रविष्टोऽन्यैरदृष्टः स्वयं पश्यन्, तथाऽश्रुतः शृण्वन्, अमतो मन्वानः, अविज्ञातो विजानन्, "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इत्यस्मिन्नर्थे श्रुतयः सहस्रशः—"तत्सृष्ट्वा तदेवानुप्राविशत्", "अन्तः प्रविष्टः शास्ता जनानाम्", "स एष इह प्रविष्टः", 'एष त आत्मा", "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत", "एष सर्वेषु भूतेषु गूढोत्मा", "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः" "अशरीरं शरीरेषु" इत्याद्याः ॥ २३ ॥

---

स्थूलशरीराभिमानादेवं शिष्यं व्युत्थाप्य सूक्ष्मशरीरादपि व्युत्थापयति—**मनश्चेति** । **मनश्चेन्द्रियाणि च नामरूपात्मकान्येव "अन्नमयं हि सोम्य मन" इत्यादिश्रुतिभ्यः** ।

मन आदिरात्मा न भवति भौतिकत्वाद् घटवदित्यभिप्रेत्य भौतिकत्वं साधयति । 'अन्नमयं हि सोम्य मन' इत्यादिश्रुतिभ्यः ॥ २२ ॥

द्वितीयं चोद्यमनूद्य निरस्यति—

**कथं चाहं भिन्नजात्यन्वयसंस्कारवर्जित इत्येतच्छृणु** । परमात्मा नामरूपयोर्व्याकर्ता नामरूपाभ्यां विलक्षणो नामरूपे व्याकुर्वन्व्याकृताभ्यां नामरूपाभ्यां सृष्टे शरीरे स्वयं स्रष्टा नामरूपात्मके तस्मिन् जीवभावेन प्रविष्टः सर्वैः संसारधर्मैर्जातिकर्मादिभिर्वर्जितः । परस्य तदभावात्तस्यैव जीवत्वात्तस्मिन्निवास्मिन्नपि तदयोगादित्याह—

**योऽसौ नामरूपयोर्व्याकर्ता नामरूपविलक्षणः स एष नामरूपे व्याकुर्वन्सृष्ट्वेदं शरीरं स्वयं संसारधर्मवर्जितो नामरूप इह प्रविष्टोऽन्यैरदृष्टः स्वयं पश्यन् तथाऽश्रुतः शृण्वन् अमतो मन्वानः अविज्ञातो विजानन् सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते, इत्येतस्मिन्नर्थे श्रुतयः सहस्रशः 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अन्तः प्रविष्टः शास्ता जनानाम्, 'स एष इह प्रविष्टः', 'एष त आत्मा', 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत', 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवताः, अशरीरं शरीरेष्वित्याद्याः** ।

परमात्मा चेदिह शरीरे नामरूपात्मके प्रविष्टस्तर्हि किमिति सर्वैर्नोपलभ्यते । नीडप्रविष्टशकुनिवदित्याशङ्क्य अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ता अविज्ञातो विज्ञातेति श्रुत्यर्थं दर्शयति—**अन्यैरिति** । तत्रैव श्रुत्यन्तरं पठति—**सर्वाणीति** । विचित्य निर्माय धीरः सर्वज्ञो नामानि च तेषां कृत्वा जीवभावमापन्नोऽभिवदन्यदास्ते यो वर्तते तं विद्वानमृतो भवतीति सम्बन्धः । परेणाव्याप्तदेशाभावात्तस्य प्रवेशो न सिद्ध्यतीत्याशङ्क्य यथा व्यापकस्याप्याकाशस्य जले प्रतिबिम्बभावेन प्रवेशोऽनुभवसिद्धस्तथा परस्याप्यात्मनोऽविद्यातत्कार्येषु प्रतिबिम्बभाव एव प्रवेशो नानाश्रुतिस्मृतिसिद्धो नापलापमर्हतीत्याह **अस्मिन्निति** ॥ २३ ॥

स्मृतयोऽपि—"आत्मैव देवताः सर्वाः", "नवद्वारे पुरे देही", "क्षेत्रज्ञं चापि मां विद्धि", "समं सर्वेषु भूतेषु", "उपद्रष्टाऽनुमन्ता च", "उत्तमः पुरुषस्त्वन्यः", "अशरीरं शरीरेषु" इत्याद्याः। तस्माज्जात्यन्वयसंस्कारवर्जितस्त्वमिति सिद्धम् ॥ २४ ॥

स यदि ब्रूयात्—अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसारी, अन्योऽसौ मद्विलक्षणोऽसंसारी देवः, तमहं बल्युपहारनमस्कारादिभिर्वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तितीर्षुरस्मि–कथमहं स एव ? इति ॥ २५ ॥

आचार्यो ब्रूयात्—नैवं सोम्य, प्रतिपत्तुमर्हसि–प्रतिषिद्धत्वाद्भेदप्रतिपत्तेः। कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह—'अन्योऽसावन्योऽहमस्मीति न स वेद", "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्येवमाद्याः ॥ २६ ॥

एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति ॥ २७ ॥

अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः। "स आत्मा तत्त्वमसि" इति परमात्मभावं विधाय "आचार्यवान् पुरुषो वेद" इत्युक्त्वा "तस्य तावदेव चिरम्' इति मोक्षं दर्शयन्ति अभेदविज्ञानादेव। सत्याभिसन्धस्यातस्करस्येव दाहाद्यभावदृष्टान्तेन

---

**स्मृतयोऽपि—'आत्मैव देवताः सर्वा' 'नवद्वारे पुरे देही', 'क्षेत्रज्ञं चापि मां विद्धि', 'समं सर्वेषु भूतेषु', 'उपद्रष्टाऽनुमन्ता च', 'उत्तमः पुरुषस्त्वन्यः 'अशरीरं शरीरेषु' इत्याद्याः**। तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वं इति सिद्धम्।

परस्यैवात्मनो जीवभावे श्रुतिस्मृतिसिद्धे फलितमाह—**तस्मात् जात्यन्वयसंस्कारवर्जितस्त्वमिति सिद्धम्** ॥ २४ ॥

परमात्माभेदोपदेशेन जीवस्य संसारवर्जितत्वमुक्तम्। तत्र स्वानुभवविरोधं शङ्कते—**स यदि ब्रूयात् अन्य एवाहमज्ञः सुखी दुःखी बद्धः संसारी अन्योऽसौ मद्विलक्षणः असंसारी देवस्तमहं** बल्युपहार-**नमस्कारादिभिर्वर्णाश्रमकर्मभिश्चाराध्य संसारसागरादुत्तितीर्षुरस्मि कथमहं स एवेति**।

कथं तर्हि तव संसारनिवृत्तिरित्याशङ्क्याह—**तमहमिति**। अभेदप्रतिपत्त्या संसारनिवृत्तिस्तु न सिद्ध्यति स्वप्रतिपत्तिविरुद्धत्वादिति निगमयति—**कथमिति** ॥ २५ ॥

जीवेश्वरयोरन्यत्वं प्रतिपत्तुमयुक्तमिति परिहरति—**आचार्यो ब्रूयात्—नैवं सोम्य, प्रतिपत्तुमर्हसि, कथंप्रतिषिद्धत्वाद्भेदप्रतिपत्तेः। कथं प्रतिषिद्धा भेदप्रतिपत्तिरित्यत आह–अन्योऽसावन्योऽहमस्मीति न स वेद, ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इत्येवमाद्याः**।

यत्तु भेदप्रतिपत्तेरुक्तं प्रतिषिद्धत्वं तत्प्रश्नद्वारा प्रकटयति—**कथं प्रतिषिद्धा भेदप्रतिपत्तिरिति** चेत्तत्राह - **अन्योऽसावन्योऽहमस्मि न स वेद'** यथा पशुः। **'ब्रह्म तम् परादाद्योऽन्यत्रात्मनो ब्रह्म वेद मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इत्येवमाद्याः** श्रुतयो भेदप्रतिपत्तिं निषेधन्तीति सम्बन्धः ॥ २६ ॥

न केवलं भेदप्रतिपत्तिं निषेधन्ति श्रुतयः किन्त्वनर्थहेतुत्वमपि दर्शयन्तीत्याह—**एता एव श्रुतयो भेदप्रतिपत्तेः संसारगमनं दर्शयन्ति** ॥ २७ ॥

**अभेदप्रतिपत्तेश्च मोक्षं दर्शयन्ति सहस्रशः 'स आत्मा तत्त्वमसी'ति परमात्मभावं विधाय आचार्यवान्पुरुषो वेदेत्युक्त्वा तस्य तावदेव चिरमिति मोक्षं दर्शयन्ति अभेदविज्ञानादेव सत्याभिसन्ध-**

संसाराभावं दर्शयन्ति। भेददर्शनादसत्याभिसन्धस्य संसारगमनं दर्शयन्ति तस्करस्येव दाहादिदृष्टान्तेन "त इह व्याघ्रो वा" इत्यादिना च ॥ २८ ॥

अभेददर्शनात् "स स्वराड्भवति" इत्युक्त्वा, तद्विपरीतेन भेददर्शनेन संसारगमनं दर्शयन्ति—"अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति" इति प्रतिशाखम्। तस्मान्मृषैवैवमवादीः "ब्राह्मणपुत्रोऽदोऽन्वयः संसारी परमात्मविलक्षणः" इति ॥ २९ ॥

तस्मात्–प्रतिषिद्धत्वाद्भेददर्शनस्य, भेदविषयत्वाच्च कर्मोपादानस्य, कर्मसाधनत्वाच्च यज्ञोपवीतादेः कर्मसाधनोपादानस्य परमात्माभेदप्रतिपत्त्या प्रतिषेधः कृतो वेदितव्यः। कर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमात्माऽभेदप्रतिपत्तिविरुद्धत्वात्, संसारिणो हि कर्माणि विधीयन्ते, तत्साधनानि च यज्ञोपवीतादीनि, न परमात्मनोऽ-

---

स्यातस्करस्येव दाहाद्यभावदृष्टान्तेन संसाराभावं दर्शयन्ति। भेददर्शनादसत्याभिसन्धस्य संसारगमनं दर्शयन्ति तस्करस्येव दाहादिदृष्टान्तेन। अभेदप्रतिपत्तिरेव कर्त्तव्येत्यत्र हेतुमाह—**अभेदप्रतिपत्तेश्चेति। अभेदविज्ञानादेव सत्याभिसंधस्यातस्करस्येव दाहाद्यभावदृष्टान्तेन संसाराभावं दर्शयन्ति।** 'ऐतदात्म्यमिदं सर्वं तत्सत्यमिति श्रुतेरैकात्म्यमेव सत्यं तत्र सन्धानदार्ढ्यं यस्य तस्य संसाराभावमभेदविज्ञानादेव दर्शयन्ति। पुरुषं सौम्य हस्तगृहीतमानयन्ति इत्याद्याः श्रुतयोऽतस्करस्य तप्तपरशुग्रहणे दाहाद्यभावदृष्टान्तेनेत्यर्थः। 'वाचारम्भरणं विकारो नामधेयमि'त्यादिश्रुतेरसत्यं मनुष्यत्वब्राह्मणत्वादि, तदभिमन्यमानस्य परमात्मभेददर्शनात् ता एव श्रुतयः संसारं दर्शयन्तीत्याह—**भेददर्शनादसत्याभिसन्धस्य संसारगमनं दर्शयन्ति तस्करस्येव दाहादिदृष्टान्तेन।** सुषुप्ते च सति सम्पद्य न विदुः सति सम्पत्स्यामह इत्यैक्यज्ञानाभावापराधेन 'त इह व्याघ्रो वा' सिंहो वेत्यादिना यद्यद्भवन्ति तदाभवन्तीति संसारगमनं दर्शयन्तीत्याह—**त इह व्याघ्रो वेत्यादिना** ॥ २८ ॥

इतश्चाभेदप्रतिपत्तिरेव कर्त्तव्येत्याह—**अभेददर्शनात् स स्वराड्भवतीत्युक्त्वा तद्विपरीतेन भेददर्शनेन संसारगमनं दर्शयन्ति—अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्तीति प्रतिशाखम्।** सर्वासु शाखास्वभेदप्रतिपत्त्या कैवल्यं सिद्ध्यतीत्युक्तत्वात्तस्मिन्नेवार्थे श्रुतीनामस्ति तात्पर्यमिति सूचयति—**प्रतिशाखमिति।** श्रुतीनामैक्ये तात्पर्ये सिद्धे फलितमाह—**तस्मात् मृषैवैवमवादीः ब्राह्मणपुत्रोऽदोन्वयः संसारी परमात्मविलक्षण इति** ॥ २९ ॥

परमात्मैक्यप्रतिपत्तौ च श्रुतितात्पर्ये सिद्धे सर्वकर्मतत्साधनसंन्यासोऽपि श्रुत्यभिप्रेतः सेत्स्यतीत्याह—**तस्मात् प्रतिषिद्धत्वाद्भेददर्शनस्य भेदविषयत्वाच्च कर्मोपादानस्य कर्मसाधनत्वाच्च यज्ञोपवीतादेः कर्मसाधनोपादानस्य परमात्माभेदप्रतिपत्त्या प्रतिषेधः कृतो वेदितव्यः कर्मणां तत्साधनानां च परमात्माभेदप्रतिपत्तिविरुद्धत्वात्।**

विद्वद्विषयत्वान्न विद्याविरुद्धत्वेन त्याज्यत्वमित्याशङ्क्याह—**संसारिणो हि कर्माणि विधीयन्ते**

**भेददर्शिनः। भेददर्शनमात्रेण च ततोऽन्यत्वम् ॥ ३० ॥**

**यदि कर्माणि कर्तव्यानि, न निविवर्तयिषितानि, कर्मसाधनासम्बन्धिनः कर्मनिमित्तजात्याश्रमाद्यसम्बन्धिनश्च, परमात्मनआत्मनैवाभेदप्रतिपत्तिं नावक्ष्यत्—"स आत्मा तत्त्वमसि" इत्येवमादिभिर्निश्चितरूपैर्वाक्यैः। भेदप्रतिपत्तिनिन्दां च नाभ्यधास्यत् ॥ ३१ ॥**

**"एष नित्यो महिमा ब्राह्मणस्य", "अनन्वागतं पुण्येनानन्वागतं पापेन", "अत्र स्तेनोऽस्तेनः"—इत्यादिना कर्मासम्बन्धिस्वरूपत्वं कर्मनिमित्तवर्णाद्यसम्बन्धरूपतां च नाभ्यधास्यत्, कर्माणि च कर्मसाधनानि च यज्ञोपवीतादीनि यद्यपरितित्याजयिषितानि; तस्मात्ससाधनं कर्म परित्यक्तव्यं मुमुक्षुणा—परमात्माभेददर्शनविरोधात्—आत्मा च पर एव प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥ ३२ ॥**

---

**तत्साधनानि च यज्ञोपवीतादीनि न परमात्मनोऽभेददर्शिनः। भेददर्शनमात्रेण च ततोऽन्यत्वम्।** संसारिणोऽपि परमात्मनोऽनन्यत्वात्कथं कर्मविधिरित्याशङ्क्याह— **भेददर्शनमात्रेणेति** ॥ ३० ॥

यत्तु परमात्मैक्यप्रतिपत्त्या कर्मणां तत्साधनानां च श्रुत्या प्रतिषेधः कृत इति तद्व्यतिरेकमुखेन प्रपञ्चयति—

**यदि च कर्माणि कर्त्तव्यानि न निविवर्तयिषितानि कर्मसाधनासम्बन्धिनः कर्मनिमित्तजात्याश्रमाद्यसम्बन्धिनश्च परमात्मनः आत्मनैवाभेदप्रतिपत्तिं नावक्ष्यत्स आत्मा तत्त्वमसीत्येवमादिभिर्निश्चितरूपैर्वाक्यैः भेदप्रतिपत्तिनिन्दां च नाभ्यधास्यत्।** किंच मृत्योः स मृत्युमाप्नोतीत्यादिना भेदप्रतिपत्तिनिन्दोच्यते सा च नाभिधीयेत यदि कर्माणि तत्साधनानि च न त्याजयितुमिष्टानि अतो भेदप्रतिपत्तिनिन्दादर्शनात्तानि तित्याजयिषितानीत्याह—**भेदेति** ॥ ३१ ॥

**एष नित्यो महिमा ब्राह्मणस्य अनन्वागतं पुण्येनानन्वागतं पापेन अत्र स्तेनोऽस्तेन इत्यादिना कर्मासम्बन्धिस्वरूपत्वं कर्मनिमित्तवर्णाश्रमाद्यसम्बन्धरूपतां च नाभ्यधास्यत् कर्माणि च कर्मसाधनानि च यज्ञोपवीतादीनि यद्यपरितित्याजयिषितानि। तस्मात् ससाधनं कर्म परित्यक्तव्यं मुमुक्षुणा परमात्माभेददर्शनविरोधात् आत्मा च पर एवेति प्रतिपत्तव्यः यथाश्रुत्युक्तलक्षणः।**

किञ्च कर्मभिरसम्बद्धत्वं कर्मनिमित्तैर्वर्णाश्रमादिभिश्चासम्बद्धत्वमात्मनोऽभिधीयते ततोऽपि कर्माणि तत्साधनानि च परित्याजयितुमिष्टानीत्याह—**'एष' इत्यादिना।** फलितं निगमयति **तस्मा ससाधनं कर्म परित्यक्तव्यम् मुमुक्षुणा।** तच्छब्दार्थमेव स्फोरयति—**परमात्माऽभेददर्शनविरोधात्।** मुमुक्षुणा कर्तव्यं परमात्माभेददर्शनमेव दर्शयति—**आत्मा च पर एव प्रतिपत्तव्यो यथाश्रुत्युक्तलक्षणः ॥ ३२ ॥**

स यदि ब्रूयात्—भगवन्, दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदना; अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम । परश्चायमात्मा, "अयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" सर्वसंसारधर्मविवर्जितः श्रूयते सर्वश्रुतिषु स्मृतिषु च । कथं तद्विलक्षणोऽनेकसंसारधर्मसंयुक्तः परमात्मानमात्मत्वेन मां च संसारिणं परमात्मत्वेनाग्निमिव शीतत्वेन प्रतिपद्येय ? संसारी च सन्, सर्वाभ्युदयनिःश्रेयससाधनेऽधिकृतः, अभ्युदयनिःश्रेयससाधनानि कर्माणि तत्साधनानि यज्ञोपवीतादीनि कथं परित्यजेयम् ? इति ॥ ३३ ॥

तं प्रति ब्रूयात्—यदवोचो दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति; तदसत् । कस्मात् ? दह्यमाने च्छिद्यमान इव वृक्ष उपलब्धुरुपलभ्यमाने कर्मणि शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वाद्दाहादिसमानाश्रयैव वेदना । यत्र हि दाहश्छेदो वा क्रियते, तत्रैव व्यपदिशति दाहादिवेदनां लोकः, न वेदनां दाहाद्युपलब्धरीति । कथं ? क ते वेदनेति पृष्ट शिरसि मे वेदना, उरस्युदर इति वा, यत्र दाहादिस्तत्रैव व्यपदिशति, न तूपलब्धरीति । यद्युपलब्धरि वेदना स्यात् वेदनानिमित्तं वा दाहच्छेदादि, वेदनाश्रयत्वेनोपदिशेद्दाहाद्याश्रयवत् ॥ ३४ ॥

---

जीवपरमात्मानौ भिन्नौ विरुद्धत्वात् । पयः पावकवदित्यनुमानविरोधं शङ्कते—

**स यदि ब्रूयाद्भगवन्दह्यमाने च्छिद्यमाने वा देहे प्रत्यक्षा वेदना अशनायादिनिमित्तं च प्रत्यक्षं दुःखं मम । परश्चात्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सर्वसंसारधर्मविवर्जितः श्रूयते सर्वश्रुतिषु स्मृतिषु च । कथं तद्विलक्षणोऽनेकसंसारधर्मयुक्तः परमात्मानमात्मत्वेन मां च संसारिणं परमात्मत्वेनाग्निमिव शीतत्वेन प्रतिपद्येय ।** यदुक्तं सर्वकर्मणां तत्साधनानां च संन्यासः सिद्ध्यतीति तत्राह—**संसारी च सन्सर्वाभ्युदयनिःश्रेयससाधनेऽधिकृतोऽभ्युदयनिःश्रेयससाधनानि कर्माणि तत्साधनानि च यज्ञोपवीतादीनि कथं परित्यजेयमिति ॥** ३३ ॥

तत्रानुमानं हेत्वसिद्ध्या दूषयितुमुपक्रमते—**तं प्रति ब्रूयात् यदवोचो दह्यमाने छिद्यमाने वा देहे प्रत्यक्षा वेदनोपलभ्यते ममेति तदसत् । कस्मात् दह्यमाने छिद्यमान इव वृक्ष उपलब्धुरुपलभ्यमाने कर्मणि शरीरे दाहच्छेदवेदनाया उपलभ्यमानत्वात् दाहादिसमानाश्रयैव वेदना ।** यथा वृक्षे दह्यमाने छिद्यमाने च दृश्यमाने तस्मिन्नेव द्रष्टुर्दर्शिकर्मणि दाहछेदौ तत्प्रयुक्तक्लेशप्रतीतिश्च तत्रैव दृष्टा । तथैव देहे दह्यमाने छिद्यमाने चोपलभ्यमाने दाहादिसमानाश्रयैव दाहादिवेदना देहनिष्ठा तद्वेदनायाः शरीरे दृश्यत्वात् । अतोऽनात्मनि वेदनोपलब्धिरित्यर्थः । दाहादिवेदनाया दाहादिसमानाश्रयत्वमेव लोकव्यपदेशवशेन विशदयति—**यत्र हि दाहः छेदो वा क्रियते तत्रैव व्यपदिशति दाहादिवेदनां लोको न दाहाद्युपलब्धरीति ।** तमेव लोकव्यपदेशं प्रश्नद्वारेण प्रकटयति—**कथम् । क्व ते वेदनेति पृष्टः शिरसि मे वेदनोरस्युदर इति वा यत्र दाहादिस्तत्रैव व्यपदिशति नोपलब्धरीति ।** कर्मकारकगतत्वेन वेदना अदृश्यमानत्वान्नोपलब्धुर्वेदनावत्त्वमित्युक्तम् । तत्रैव युक्त्यन्तरमाह—**यद्युपलब्धरि वेदना स्यात् वेदनानिमित्तं वा दाहच्छेदादि वेदनाश्रयत्वेनोपदिशेत् दाहाद्याश्रयवत् ।**

**स्वयं च नोपलभ्येत, चक्षुर्गतरूपवत् । तस्माद्दाहच्छेदादिसमानाश्रयत्वेनोपलभ्यमानत्वाद्दाहादिवत्कर्मभूतैव वेदना । भावरूपत्वाच्च साश्रया तण्डुलपाकवत् । वेदनासमानाश्रय एव तत्संस्कारः स्मृतिसमानकाल एवोपलभ्यमानत्वात्, वेदनाविषयः तन्निमित्तविषयश्च द्वेषोऽपि संस्कारसमानाश्रय एव । तथा चोक्तम्—**

**"रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् ।**
**गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदा" ॥ ३५ ॥**

**किमाश्रयाः पुना रूपसंस्कारादय इति ? उच्यते—यत्र कामादयः । क्व पुनस्ते कामादयः ? "कामः संकल्पो विचिकित्सा" इत्यादिश्रुतेर्बुद्धावेव । तत्रैव रूपादिसंस्कारादयोऽपि, "कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदये" इति श्रुतेः । "कामा येऽस्य हृदि श्रिताः", "तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य", "असङ्गो ह्ययम्",**

---

तदा वेदनाश्रयत्वेनोपलब्धारमुपदिशेत् । यथा दाहाद्याश्रयं देहमुपदिशति न च तथा लोकस्य व्यपदेशो दृश्यत इत्यर्थः ॥ ३४ ॥

इतोऽपि नोपलब्धृगता वेदना सिद्धयतीत्याह—

**स्वयं च नोपलभ्येत** । यथा चक्षुर्गतं रूपं तेनैव चक्षुषा न गृह्यते । तथाऽऽत्मगता चेद्वेदना नैवात्मनोपलभ्येत । कर्तृत्वकर्मत्वयोरेकत्रानुपपत्तेरित्यर्थः । आत्मनो वेदनाश्रयत्वासंभवमुपसंहरति—**तस्माद्दाहच्छेदादिसमानाश्रयत्वेनोपलभ्यमानत्वाद्दाहादिवत्कर्मभूतैव वेदना** । आत्मा वेदनाश्रयो न भवति किन्तु निराश्रयैव वेदनेत्याशङ्क्य क्रियात्वात्तस्याः साश्रयत्वं, पाकादिवदित्याह—**भावरूपत्वाच्च साश्रया तण्डुलपाकवत्** । अनादिसन्ततिपतितपूर्वक्षणस्यैव वासनात्वात्तस्या न कश्चिदाश्रयोऽस्तीत्याशङ्क्याह—**वेदनासमानाश्रय एव तत्संस्कारः स्मृतिसमानकाल एवोपलभ्यमानत्वाद्वेदनाविषयस्तन्निमित्तविषयश्च द्वेषोऽपि संस्कारसमानाश्रय एव** । तत्समानाश्रयतत्संस्कारानभ्युपगमे वेदनानुसन्धानासंभवप्रसक्तिरित्यर्थः । वेदनायाः स्वसंवेद्यत्वात्तत्संस्कारो नास्तीत्याशङ्क्याह—**स्मृतीति** । दुःखादिवेदना स्वव्यतिरिक्तसंविदो विषयः स्मृतितुल्यकाल एवोपलभ्यमानत्वात् घटादिवदित्यर्थः । यथा द्वेषस्य निराश्रयत्वं तथा संस्कारस्यापीत्याशङ्क्याह—**तन्निमित्तेति** । तस्या वेदनाया यन्निमित्तं दाहादि तद्विषयो द्वेषोऽपि संस्कारेण तुल्याश्रय एव । तस्माद् द्वेषादेरन्तःकरणनिष्ठत्वादात्मा शुद्धः सिद्धयतीत्यर्थः । उक्तेऽर्थे पद्यभागगतं वाक्यमुदाहरति—**तथा चोक्तम्—रूपसंस्कारतुल्याधी रागद्वेषौ भयं च यत् । गृह्यते धीश्रयं तस्माज्ज्ञाता शुद्धोऽभयः सदेति** । नीलपीतादिरूपसंस्कारेण तुल्य आधिराश्रयो ययोस्तौ रागद्वेषौ रूपसंस्कारतुल्याधी गृह्येते भयं च धीश्रयं बुद्धयाश्रयं गृह्यते यद्यस्मात्तस्माज्ज्ञाता सदा शुद्धोऽभयश्चेत्यर्थः ॥ ३५ ॥

साधारण्येनानात्माश्रयत्वमुक्तं वेदनादीनामिदानीं प्रश्नपूर्वकं विशेषतो निर्दिशति—

**किमाश्रयाः पुनः रूपसंस्कारादय इति । उच्यते । यत्र कामादयः** । कामाद्याश्रयमपि प्रश्नद्वारा श्रुत्यवष्टम्भेन स्पष्टयति—**क्व पुनस्ते कामादयः ? 'कामः संकल्पो विचिकित्सेत्यादि' श्रुतेः बुद्धावेव** । बुद्धावेव रूपसंस्कारादीनामवस्थितत्वे प्रमाणमाह—**तत्रैव रूपसंस्कारादयोऽपि 'कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय' इति श्रुतेः । 'कामा येऽस्य हृदिश्रिता', 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य',**

"तद्वा अस्यैतदतिच्छन्दाः" इत्यादिश्रुतिशतेभ्यः; "अविकार्योऽयमुच्यते", "अनादित्वान्निर्गुणत्वात्" इत्यादिभ्यः—इच्छाद्वेषादि च क्षेत्रस्यैव विषयस्य धर्मः, नात्मन इति—स्मृतिभ्यश्च कर्मस्थैवाशुद्धिः नात्मस्थेति ॥ ३६ ॥

अतो रूपादिसंस्काराद्यशुद्धिसम्बन्धाभावान्न परस्मादात्मनो विलक्षणत्वमिति प्रत्यक्षादिविरोधाभावाद्युक्तं पर एवात्माऽहमिति प्रतिपत्तुम्, "तदात्मानमेवावेत् अहं ब्रह्मास्मीति", 'एकधैवाऽनुद्रष्टव्यम्", "अहमेवाधस्तात्", "आत्मैवाधस्तात्", 'सर्वमात्मानं पश्येत्", "यत्र त्वस्य सर्वमात्मैव", ' इदं सर्वं यदयमात्मा", 'स एषोऽकलः", अनन्तरोऽबाह्यः "अनन्तरमबाह्यम्", "सबाह्याभ्यन्तरो ह्यजः", "ब्रह्मैवेदम्", "एतया द्वारा प्रापद्यत", "प्रज्ञानस्य नामधेयानि", "सत्यं ज्ञानमनन्तं ब्रह्म", "तस्माद्वा एतस्मात्", 'तत्सृष्ट्वा तदेवानुप्राविशत्", "एको देवः सर्वभूतेषु गूढः सर्वव्यापी", "अशरीरं शरीरेषु", "न जायते म्रियते वा विपश्चित्", "स्वप्नान्तं जागरितान्तम्", "स म आत्मेति विद्यात्",

---

असङ्गो ह्ययम् 'तद्वा अस्यैतदतिच्छन्दा' इत्यादिश्रुतिशतेभ्यः हृदि बुद्धौ श्रिता आश्रिता इत्यर्थः। आत्मनः शुद्धत्वे प्रमाणमाह—**तीर्णो हीति**। हृदयस्य बुद्धेः सर्वाञ्छोकांस्तीर्णोऽतिक्रान्तो भवतीत्यर्थः। तदेतदस्यात्मनो रूपमतिच्छन्दाः। दैर्घ्यं छान्दसं **अतिचच्छन्दा** अतिकामं शुद्धानन्दत्वादित्यर्थः। अविकार्योऽयमुच्यते। अनादित्वान्निर्गुणत्वादित्यादिस्मृतिभ्यश्चेति सम्बन्धः। श्रुतिभ्यः स्मृतिभ्यश्चात्मा शुद्धश्चेदुच्यते कस्य तर्हि धर्मोऽग्निहोत्रादिरशुद्धिर्वेत्याशङ्क्याह—**इच्छेति**। **नात्मन इति कर्मस्थैवाशुद्धिर्नात्मस्थेति**। न करोति न लिप्यत इत्यादिस्मृतिभ्यो भातीति सम्बन्धः ॥ ३६ ॥

प्रकृतमुपसंहरति—**अतो रूपसंस्काराद्यशुद्धिसम्बन्धाभावान्न परस्मादात्मनो विलक्षणत्वमिति प्रत्यक्षादिविरोधाभावाद् युक्तं परमात्माहमिति प्रतिपत्तुम्**। अभेदप्रतिपत्तौ प्रमाणमाह—**'आत्मानमेवावेदहं ब्रह्मास्मि', 'एकधैवानुद्रष्टव्यम्' 'अहमेवाधस्तात्' 'आत्मैवाधस्तात्' 'स एवाधस्तात्स उपरिष्टादि'ति** परोक्षत्वेन भूम्नो निर्देशात्तस्य परोक्षत्वाशङ्कां व्यावर्त्तयति—**अहमेवेति**। अहंकारस्यात्मत्वं वारयति—**आत्मैवेति**। अधस्तादुपरिष्टादिति परिच्छिन्नत्वं परिहृत्य पूर्णत्वमाह—**'सर्वमात्मानं पश्येत्'**। अविद्यावस्थायां कर्तृकरणादिभेदो भाति विद्यावस्थायां तद्दर्शनं नास्तीत्याह—**'यत्र त्वस्य सर्वमात्मैवाभूत्'**। ब्रह्मक्षत्रादिभेदस्यात्मव्यतिरेकेणासत्त्वं दर्शयति—**'इदं सर्वं यदयमात्मा' 'स एषोऽकलोऽमृत इति'**। जीवस्य ब्रह्मत्ववादिनीमाथर्वणश्रुतिमुदाहरति—**'स एषोऽनन्तरोऽबाह्यः'**। अन्तर्बहिर्विभागशून्यत्वमेकरसत्वं निर्दिशति—**अनन्तरमबाह्यम्**। कार्यकारणविभागवैधुर्यं कथयति—**सबाह्याभ्यन्तरो ह्यजः**। समस्तस्य वस्तुनो ब्रह्ममात्रत्वात्तदतिरेकेण न किञ्चिदस्तीति सूचयति—**ब्रह्मैवेदम्**। मूर्द्धन्यद्वारा शरीरं प्रविष्टस्य परस्यैव जीवभावान्न जीवब्रह्मभेदोऽस्तीत्याह—**'एतया द्वारा प्रापद्यत'**। यानि कानिचिन्नामानि तानि प्रज्ञानस्य ब्रह्मणो नामानीति सर्वात्मत्वं दर्शयति—**'प्रज्ञानस्य नामधेयानि भवन्ति'**। ब्रह्मविदाप्नोति परमिति सूत्रितं ब्रह्म सत्यमित्यादिना लक्षितम्। तस्माद्वा एतस्मादित्यादिना ततः सृष्टिराकाशादेरुच्यते। तत्सृष्ट्वा तदेवानुप्राविशदिति

"यस्तु सर्वाणि भूतानि", "तदेजति तन्नैजति", "वेनस्तत्पश्यन्", "तदेवाग्निः", "अहं मनुरभवं सूर्यश्च", "अन्तः प्रविष्टः शास्ता जनानाम्", "सदेव सोम्य", "तत्सत्यं स आत्मा तत्त्वमसि" इत्यादिश्रुतिभ्यः ॥ ३७ ॥

स्मृतिभ्यश्च "पूः प्राणिनः सर्व एव गुहाशयस्य", "आत्मैव देवताः", "नवद्वारे पुरे", "समं सर्वेषु भूतेषु", "विद्याविनयससंपन्ने", "अविभक्तं विभक्तेषु", "वासुदेवः सर्वम्" इत्यादिभ्य एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम् ॥ ३८ ॥

स यदि ब्रूयात्—यदि 'भगवन् अनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजः" कृत्स्नः प्रज्ञानघन एव, सैन्धवघनवदात्मा सर्वमूर्तिभेदवर्जित आकाशवदेकरसः, किमिदं दृश्यते, श्रूयते वा, साध्यं साधनं वा साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धं वादिशतविप्रतिपत्तिविषयमिति ॥ ३९ ॥

आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते, श्रूयते वा, साध्यं साधनं साधकश्चेति। परमार्थतस्त्वेक एवात्मा अविद्यादृष्टेरनेकवदवभासते—तिमिरदृष्ट्याऽने-

---

च सृष्टे जगति स्रष्टुरेवाविकृतस्य परस्य जीवभावेन प्रवेशो निर्दिश्यते। तेन जीवब्रह्मणोर्न भेदोऽस्तीत्याह—**सत्यं ज्ञानमनन्तम्। तस्माद्वा एतस्मात्'। 'तत्सृष्ट्वा तदेवानुप्राविशत्।** तत्रैव श्रुत्यन्तरमाह—'एको देवः सर्वभूतेषु'। 'अशरीरम् शरीरेष्वनवस्थेष्ववस्थितम्', महान्तं विभुमात्मानम्, मत्वा धीरो हर्षशोकौ जहातीति सम्बन्धः। जन्ममरणादिशून्यत्वेन कूटस्थमाह—**न जायते म्रियते वा। स्वप्नान्तं जागरितान्तम्।** स्वप्नान्तं स्वप्नस्वरूपम्। जागरितान्तं जागरस्वरूपम् यः पश्यति, तं महान्तं मत्वा हर्षशोकौ जहातीति पूर्ववत्। 'स म आत्मेति विद्यात्'। 'यस्तु सर्वाणि भूतानि', 'तदेजति तन्नैजति' 'वेनस्तत्पश्यन् विश्वा भुवनानि विद्वान्यत्र विश्वं भवन्त्येकनीडमि'त्यत्र वेनो नाम कान्तिमान्परिशुद्धश्चिद्रूपेणावस्थितो विद्वान्निगद्यते। तदेवाग्निस्तद्वायुरित्यादिना सर्वात्मत्वं दर्शितम्। तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे **'अहं मनुरभवं सूर्यश्च'। 'अन्तःप्रविष्टः शास्ता जनानाम्', 'सदेव सोम्येदमग्र आसीत्'। 'तत्सत्यम् स आत्मा तत्त्वमसी'त्यादिश्रुतिभ्यः** ॥ ३७ ॥

**स्मृतिभ्यश्च-"पूः प्राणिनःसर्व एव गुहाशयस्य" 'आत्मैव देवताः'। 'नवद्वारे पुरे' 'समं सर्वेषु', 'विद्याविनयसम्पन्ने' 'अविभक्तं विभक्तेषु' 'वासुदेवः सर्व'मित्यादिभ्यः।** सर्वप्राणिनो गुहाशयस्यात्मनः पूः पुरमित्यर्थः। श्रुतिस्मृतिसिद्धं ब्रह्मात्मैकत्वमुपसंहरति—**एक एवात्मा परं ब्रह्म सर्वसंसारधर्मविनिर्मुक्तस्त्वमिति सिद्धम्** ॥ ३८ ॥

उक्ते ब्रह्मात्मैकत्वे लौकिकवैदिकव्यवहारविरोधमाशङ्कते—**स यदि ब्रूयात्—'यदि भगवन् अनन्तरोऽबाह्यः', 'सबाह्याभ्यन्तरो ह्यज': 'कृत्स्नः प्रज्ञानघन एव' 'सैन्धवघनवदात्मा सर्वमूर्तिभेदविवर्जित': आकाशवदेकरसः किमिदम्** तर्हि **दृश्यते श्रूयते वा साध्यं साधनं साधकश्चेति श्रुतिस्मृतिलोकप्रसिद्धम् वादिशतविप्रतिपत्तिविषय इति** ॥ ३९ ॥

पारमार्थिकब्रह्मात्मैकत्वस्याविद्याकृतव्यवहारेण विरोधो नास्तीत्याह—**आचार्यो ब्रूयात्—अविद्याकृतमेतद्यदिदं दृश्यते श्रूयते वा साध्यं साधनं साधकश्चेति परमार्थतस्त्वेक एवात्मा अविद्या-**

कचन्द्रवत्। "यत्र वा अन्यदिव स्यात्", "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति", "मृत्योः स मृत्युमाप्नोति", "अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्...अथ यदल्पं तन्मर्त्यम्" इति, "वाचारम्भणं विकारो नामधेयम्", "अनृतम्", "अन्योऽसावन्योऽहम्" इति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम्—"एकमेवाद्वितीयम्", "यत्रत्वस्य" "को मोहः कः शोकः" इत्याद्येकत्वविधिश्रुतिभ्यश्चेति ॥४०॥

यद्येवं, भगवन्, किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते, उत्पत्तिः प्रलयश्चेति? ॥ ४१ ॥

अत्रोच्यते—अविद्यावत उपात्तशरीरादिभेदस्येष्टानिष्टयोगिनमात्मानं मन्यमानस्य साधनैरेवेष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानत इष्टप्राप्तिं चानिष्टपरिहारं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयत् शास्त्रम्, न साध्यसाधनादिभेदं विधत्ते, अनिष्टरूपः संसारो हि स इति। तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयादि एकत्वोपपत्तिप्रदर्शनेन ॥ ४२ ॥

अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः अनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजः

---

दृष्टेरनेकवदाभासते। तिमिरदृष्टेरनेकचन्द्रवत्। 'यत्र वा अन्यदिव स्यात्' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति'। 'मृत्योः स मृत्युमाप्नोति'। अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम् अथ यदल्पम् तन्मर्त्यमिति, 'वाचारम्भणं विकारो नामधेयम्'। 'अन्योऽसावन्योऽहमि'ति भेददर्शननिन्दोपपत्तेरविद्याकृतं द्वैतम् 'एकमेवाद्वितीयम्' 'यत्र त्वस्य', 'तत्र को मोहः कः शोक' इत्याद्येकत्वविधिश्रुतिभ्यश्चेति।

द्वैतस्याविद्याकृतत्वे श्रुतीरुदाहरति—यत्रेत्यादिना। तत्रैव श्रुतार्थापत्तिं कथयति—एकमेवेति ॥४०॥ भेदस्याविद्याकृतत्वे कर्मकाण्डश्रुतेरविद्यमानसाध्यसाधनादिभेदवादिन्या मिथ्यार्थत्वेनाप्रामाण्यप्रसक्तिरिति शङ्कते—यद्येवं भगवन् किमर्थं श्रुत्या साध्यसाधनादिभेद उच्यते उत्पत्तिः प्रलयश्चेति।

सृष्टिवाक्यस्य च प्रामाण्यान्यथानुपपत्त्या भेदस्य सत्यतेत्याह—उत्पत्तिः प्रलयश्चेति ॥ ४१ ॥

कर्मकाण्डश्रुतेः सृष्ट्यादिश्रुतेः प्रामाण्योपपत्तिं दर्शयति—अत्रोच्यते। तत्र कर्मकाण्डाख्यं शास्त्रं तावत्प्रसिद्धभेदानुवादेन साध्यसाधनविषयाज्ञानमनिवर्त्तयत्प्रमाणम्। मिथ्याभूतस्याप्यर्थक्रियासामर्थ्यान्न तु भेदमवबोधयति तस्यानिष्टत्वादित्याह—अविद्यावत उपात्तशरीरादिभेदस्येष्टानिष्टयोगिनमात्मानं मन्यमानस्येष्टानिष्टप्राप्तिपरिहारोपायविवेकमजानतः साधनैरेवेष्टप्राप्तिमनिष्टनिवृत्तिं चेच्छतः शनैस्तद्विषयमज्ञानं निवर्तयच्छास्त्रं न साध्यसाधनादिभेदं विधत्ते। अनिष्टरूपः संसारो हि स इति। सम्प्रति सृष्ट्यादिवाक्यस्य तात्पर्यमाह—तद्भेददृष्टिमेवाविद्यां संसारमूलमुन्मूलयति उत्पत्तिप्रलयादि एकत्वोपपत्तिप्रदर्शनेन। तज्जत्वात्तत्कृतत्वात्तत्प्रतिष्ठितत्वाच्च तन्मात्रमित्युपपत्त्यभिधानव्याजेनैकत्वे तात्पर्यादिदमपि सृष्ट्यादिवाक्यमविद्यामेवोन्मूलयतीत्यर्थः ॥ ४२ ॥

अस्तु सृष्ट्यादिश्रुतेरुपदिष्टनीतितोऽविद्यानिवर्तकत्वम्। तावता किं सिध्यति तत्राह—अविद्यायामुन्मूलितायां श्रुतिस्मृतिन्यायेभ्यः 'अनन्तरोऽबाह्यः', 'सबाह्याभ्यन्तरो ह्यजः',

**सैन्धवघनवत्प्रज्ञानघन एवैकरस आत्मा आकाशवत्परिपूर्ण इत्येवैका प्रज्ञा प्रतिष्ठिता परमार्थदर्शिनो भवति, न साध्यसाधनोत्पत्तिप्रलयादिभेदेनाशुद्धिगन्धोऽप्युपपद्यते ॥४३॥**

**तच्चैतत्परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्यभिमानकृतपाङ्क्तरूपपुत्रवित्तलोकैषणादिभ्यो व्युत्थानं कर्तव्यं, सम्यक्प्रत्ययविरोधात्तदभिमानस्य। भेददर्शनप्रतिषेधार्थोपपत्तिश्चोपपद्यते। न ह्येकस्मिन्नात्मन्यसंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति। न ह्यग्नौ शीतत्वबुद्धिः, शरीरे वाऽजरामरणबुद्धिः। तस्मादविद्याकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥४४॥**

## ॥ अथ कूटस्थाद्वयात्मबोधप्रकरणम् ॥२॥

**सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चिद्ब्रह्मचारी जन्ममरणलक्षणात् संसारान्निर्विण्णो मुमुक्षुर्विधिवदुपसन्नः प्रपच्छ—भगवन्, कथमहं संसारान्मोक्षिष्ये**

---

**'सैन्धवघनवत् प्रज्ञानघन एवैकरस आत्मा आकाशवत्परिपूर्ण' इत्येवैका प्रज्ञा प्रतिष्ठिता परमार्थदर्शिनो भवति। न साध्यसाधनोत्पत्तिप्रलयादिभेदेनाशुद्धिगन्धोऽप्युपपद्यते ॥४३॥**

यत्तु सर्वकर्मसंन्यासानुपपत्तिः इति तत्राभ्युदयकामस्य यद्यपि संन्यासानुपपत्तिस्तथापि तत्त्वजिज्ञासुना सन्यासोऽवश्यं कर्त्तव्य इत्याह—**तच्चैतत्परमात्मदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्यभिमानकृतपाङ्क्तरूपपुत्रवित्तलोकैषणाभ्यो व्युत्थानं कर्त्तव्यम्। सम्यक्प्रत्ययविरोधात्तदभिमानस्य। तच्चेतदिति**। पञ्चभिर्यजमानजायापुत्रवित्तकर्मभिर्निर्वृत्तं पाङ्क्तम्। किञ्च यदि पुत्रवित्तादिभेदाभिमानस्य सम्यग्धीविरोधित्वं तदा मृत्योः स मृत्युमाप्नोतीत्यादिप्रतिषेधस्यार्थवत्वं युक्तम्। अन्यथा वैयर्थ्यप्रसङ्गात्। अतोऽवश्यं सम्यग्ज्ञानकामेन तद्विरुद्धाभिमानत्यागरूपः संन्यासः कर्त्तव्य इत्याह—**भेददर्शनप्रतिषेधार्थोपपत्तिश्च**। भेदाकारदर्शनस्य प्रतिषेधः श्रुतिषु दृश्यते। स च तत्त्वज्ञानकामेन सर्वकर्मसंन्यासे क्रियमाणे सत्युपपद्यते। तस्माज्जिज्ञासुना संन्यासः कर्त्तव्य इत्यर्थः। सम्यग्ज्ञानस्य कर्मसमुच्चितस्य मोक्षसाधनत्वान्न विहितत्यागो युक्तिमानित्याशङ्क्योपपत्तिमेव प्रकटयति—**नह्येकस्मिन्नात्मनि असंसारित्वबुद्धौ शास्त्रन्यायोत्पादितायां तद्विपरीता बुद्धिर्भवति। न ह्यग्नौ शीतबुद्धिः शरीरे वाऽजरामरणादिबुद्धिस्तस्मादविद्याकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः।**

विरुद्धयोः समुच्चयासम्भवं दृष्टान्तेन स्पष्टयति—**नह्यग्नाविति**। ज्ञानवतो मुक्तस्य फलात्मकः संन्यासो विधिं विनापि सिध्यति। मुमुक्षोस्तु जिज्ञासोः साधनात्मकः ससाधनः सर्वकर्मत्यागो वैधः सिद्धो भवतीति उपसंहरति—**तस्मादिति** ॥ ४४ ॥

॥ इति शिष्यानुशासनं नाम प्रथमं प्रकरणम् ॥

## अथ कूटस्थाद्वयात्मबोधप्रकरणम् ॥२॥

शिष्यं देहद्वयाभिमानाद्व्युत्थाप्य ब्रह्मरूपमुपदिशता तद्विपरीतं अब्रह्मरूपमविद्याकृतमुक्तम्। इदानीं तदविद्याकृतत्वं प्रपञ्चयितुं प्रकरणान्तरमवतारयन् प्रथमं प्रश्नमुत्थापयति—**सुखमासीनं ब्राह्मणं ब्रह्मनिष्ठं कश्चिद्ब्रह्मचारी जन्ममरणलक्षणात् संसारात् निर्विण्णो मुमुक्षुर्विधिवदुपसन्नः पप्रच्छ—भगवन् कथमहं संसारान्मोक्षिष्ये।**

शरीरेन्द्रियविषयवेदनावान् जागरिते दुःखमनुभवामि, तथा स्वप्नेऽनुभवामि, पुनः पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य जाग्रत्स्वप्नयोर्दुःखमनुभवामि—किमयमेव मम स्वभावः? किंवाऽन्यस्वभावस्य सतो नैमित्तिकः? इति। यदि अयमेव स्वभावः, न मे मोक्षाशा; स्वभावस्यावर्जनीयत्वात्। अथ नैमित्तिकः, निमित्तपरिहारे स्यान्मोक्षोपपत्तिः ॥४५॥

तं गुरुरुवाच—शृणु वत्स, न तवायं स्वभावः किंतु नैमित्तिकः ॥४६॥

इत्युक्तः शिष्य उवाच—किं निमित्तम्? किं वा तस्य निवर्तकम्? को वा मम स्वभावः? यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावः रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रतिपद्येयेति ॥४७॥

गुरुरुवाच—अविद्या निमित्तं; विद्या तस्या निवर्तिका। अविद्यायां निवृत्तायां तन्निमित्ताभावान्मोक्ष्यसे जन्ममरणलक्षणात्संसारात्, स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति ॥४८॥

शिष्य उवाच—का सा अविद्या? किंविषया वा? विद्या च काऽविद्यानिवर्तिका यया स्वभावं प्रतिपद्येय? इति ॥४९॥

---

नित्यमुक्तत्वादेव तव संसारसंस्पर्शाभावादनायासादेव मोक्षः स्यादित्याशङ्क्य स्वात्मन्यवस्थात्रयप्रतिपत्तेः संसारो भातीत्याह—**शरीरेन्द्रियविषयवेदनावान् जागरिते दुःखमनुभवामि तथा स्वप्नेऽनुभवामि च पुनः पुनः सुषुप्तिप्रतिपत्त्या विश्रम्य विश्रम्य** प्रतीतसंसारनुवृत्त्या कथं मुक्तिरित्याशङ्क्य विकल्पयति—**किमयमेव मम स्वभावः किं वाऽन्यस्वभावस्य सतो नैमित्तिकः इति**। विकल्पद्वयेऽपि फलं कथयति—**यदि स्वभावो न मे मोक्षाशा स्वभावस्यावर्जनीयत्वात्। अथ नैमित्तिको निमित्तपरिहारात्स्यात् मोक्षोपपत्तिः** ॥ ४५ ॥

एवं शिष्येणोक्ते द्वितीयं पक्षमाचार्यः स्वीकरोति—**तं गुरुरुवाच—शृणु वत्स, न तवायं स्वभावो, नैमित्तिकः** ॥ ४६ ॥

**इत्युक्तः शिष्य आह। किं निमित्तम्, किं वा तस्य निवर्तकम्, को वा मम स्वभावः यस्मिन्निमित्ते निवर्तिते नैमित्तिकाभावे रोगनिमित्तनिवृत्ताविव रोगी स्वभावं प्रतिपद्येयेति।**

सप्तम्या निवर्त्यमेव विशिनष्टि—**यस्मिन्निति**। तन्निवर्तकं किमिति सम्बन्धः ॥ ४७ ॥
प्राप्तप्रश्नत्रयस्योत्तरमाह—**गुरुरुवाच-अविद्या निमित्तम्, विद्या तस्या निर्वर्तिका, अविद्यायां निवृत्तायां तन्निमित्ताभावान्मोक्ष्यसे जन्ममरणलक्षणात्संसारात्**। निमित्तं संसारस्येति शेषः। तन्निमित्ताभावादित्यत्र तच्छब्देन संसारो गृह्यते, कारणनिवृत्तौ कार्यनिवृत्तेरावश्यकत्वमभिप्रेत्याह—**स्वप्नजाग्रद्दुःखं च नानुभविष्यसीति** ॥ ४८ ॥

पुनरपि प्रश्नत्रयं दर्शयति—**शिष्य उवाच—का सा अविद्या किंविषया वा, विद्या च का अविद्यानिर्वर्त्तिका यया स्वभावं प्रतिपद्येयेति** ॥ ४९ ॥

**गुरुरुवाच—त्वं परमात्मानं सन्तमसंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे, अकर्तारं सन्तं कर्तेति, अभोक्तारं सन्तं भोक्तेति, विद्यमानं चाविद्यमानमिति—इयमविद्या ॥५०॥**

**शिष्य उवाच—यद्यप्यहं विद्यमानः, तथाऽपि न परमात्मा, कर्तृत्वभोक्तृत्वलक्षणः संसारो मम स्वभावः, प्रत्यक्षादिभिः प्रमाणैरनुभूयमानत्वात्—नाविद्यानिमित्तः, अविद्यायाः स्वात्मविषयात्वानुपपत्तेः । अविद्या नामान्यस्मिन्नन्यधर्माध्यारोपणा—यथा प्रसिद्धं रजतं प्रसिद्धायां शुक्तिकायाम्, यथा प्रसिद्धं पुरुषं स्थाणावध्यारोपयति, प्रसिद्धं वा स्थाणुं पुरुषे, नाप्रसिद्धं प्रसिद्धे, प्रसिद्धं वा अप्रसिद्धे । न चात्मन्यनात्मानमध्यारोपयति, आत्मनोऽप्रसिद्धत्वात्; तथाऽऽत्मानमनात्मनि आत्मनोऽप्रसिद्धत्वादेव ॥५१॥**

**तं गुरुरुवाच—न, व्यभिचारात् । न हि, वत्स, प्रसिद्धं प्रसिद्ध एवाध्यारोपय-**

---

तत्र कार्यद्वारेणाविद्यां दर्शयन्नात्मैव तस्या विषयस्तद्विद्यैव चात्मस्वभावमावेदयन्ती तन्निवर्तिकेत्यप्रेत्य परिहरति—**गुरुराह—त्वं परमात्मानं सन्तं असंसारिणं संसार्यहमस्मीति विपरीतं प्रतिपद्यसे अकर्तारं सन्तं कर्तेति अभोक्तारं सन्तं भोक्तेति विद्यमानं च अविद्यमानमिति इयमविद्या** ॥ ५० ॥

मिथ्याज्ञानकारणभूता अविद्येत्ययुक्तम् । मिथ्याज्ञानातिरिक्ताविद्याभावादिति मन्वानः शङ्कते—**शिष्य आह** । संसारोपादानत्वेन मिथ्याज्ञानातिरिक्ताविद्या सिद्ध्यतीत्याशङ्क्याह ।—**यद्यप्यहं विद्यमानस्तथापि कर्तृत्वभोक्तृत्वलक्षणः संसारो मम स्वभावः प्रत्यक्षादिप्रमाणैरनुभूयमानत्वात् नाविद्यानिमित्तः** । संसारोऽविद्याप्रयुक्तो न भवति प्रामाणिकत्वादात्मवदित्यर्थः । किञ्चात्मनि संसारश्चेदविद्यया विद्यते तर्हि तस्याः स्वात्मभूतप्रत्यगात्मविषयत्वं वक्तव्यम् । तमविषयीकृत्य तत्र संसारसाधकत्वायोगात् । न च प्रत्यगात्मविषयत्वमविद्याया युज्यते । तथा च न तत्राविद्याकृतः संसारः सिध्यतीत्याह—**अविद्यायाः स्वात्मविषयत्वानुपपत्तेः** । तामेवानुपपत्तिं दर्शयितुं अविद्यास्वरूपमनुवदति—**अविद्यानामान्यस्मिन्नन्यधर्माध्यारोपणा** । सा च विषये विषयान्तरस्य भवतीत्युदाहरणाभ्यां साधयति—**यथा प्रसिद्धं रजतं प्रसिद्धायां शुक्तिकायां यथा प्रसिद्धं पुरुषं स्थाणावध्यारोपयति प्रसिद्धं वा स्थाणु पुरुषे** । नाप्रसिद्धं प्रसिद्धे, प्रसिद्धं वा अप्रसिद्धे, शुक्तिकायामध्यारोपयतीति सम्बन्धः । पुरुष इत्यत्रापि तथैव सम्बन्धः । व्यावर्त्यमंशं दर्शयति—**नेत्यादिना** । चकारेण नञनुकृष्यते । तत्रोभयत्रापि पूर्ववदेवान्वयः । विधिप्रतिषेधाभ्यां सामान्यन्यायं प्रदर्श्यात्मानात्मनोरितरेतराध्यारोपणासिद्धिं फलितामुपन्यस्यति—**न चात्मन्यनात्मानमध्यारोपयति आत्मनोऽप्रसिद्धत्वात् । तथाऽऽत्मानमनात्मनि आत्मनोऽप्रसिद्धत्वादेव** अनात्मनि नाध्यारोपयतीति सम्बन्धः॥ ५१ ॥

प्रसिद्धस्यैव प्रसिद्धान्तरे अध्यासस्तस्य संस्कारसमुत्पन्नत्वादित्युक्तम् । प्रत्याह—तं गुरुराह—**न, व्यभिचारात्** । व्यभिचारमेव स्फोरयति—**नहि वत्स, प्रसिद्धं प्रसिद्ध**

**तीति नियन्तुं शक्यम् । आत्मन्यध्यारोपणदर्शनात् । गौरोऽहं, कृष्णोऽहमिति देहधर्मस्याहंप्रत्ययविषये आत्मनि, अहंप्रत्ययविषयस्य च आत्मनः देहेऽयमहमस्मीति ॥ ५२ ॥**

**शिष्य आह—प्रसिद्ध एव तर्ह्यात्माऽहंप्रत्ययविषयतया, देहश्चायमिति । तत्रैवं सति, प्रसिद्धयोरेव देहात्मनोरितरेतराध्यारोपणा स्थाणुपुरुषयोः शुक्तिकारजतयोरिव । तत्र कं विशेषमाश्रित्य भगवतोक्तं प्रसिद्धयोरितरेतराध्यारोपणेति नियन्तुं न शक्यत इति ? ॥५३॥**

**गुरुराह—शृणु, सत्यं प्रसिद्धौ देहात्मानौ । न तु स्थाणुपुरुषाविव विविक्तप्रत्ययविषयतया सर्वलोकप्रसिद्धौ । कथं तर्हि ? नित्यमेव निरन्तराविविक्तप्रत्ययविषयतया प्रसिद्धौ । न हि—अयं देहः, अयमात्मा—इति विविक्ताभ्यां प्रत्ययाभ्यां देहात्मानौ गृह्णाति यतः कश्चित् । अत एव हि मोमुह्यते लोक आत्मानात्मविषये—एवमात्मा, नैवमात्मेति इमं विशेषमाश्रित्य अवोचं नैवं नियन्तुं शक्यमिति ॥ ५४ ॥**

---

**एवाध्यारोपयतीति नियन्तुं शक्यम् । आत्मन्यध्यारोपणदर्शनात् । गौरोऽहम् कृष्णोऽहमिति देहधर्मस्याहंप्रत्ययविषये आत्मन्यहंप्रत्ययविषयस्य च देहे अयमहमस्मीति** देहस्य तद्धर्माणां च गौरादीनामहंप्रत्ययविषये तस्य च देहेऽध्यासो यथाऽनुभूयते तथाऽन्तःकरणस्य तद्धर्माणां च कर्तृत्वादीनां चिदात्मनि तस्य चैतन्यस्य चान्तःकरणे अध्यासः सिध्यति । न हि प्रमीयमाणार्थसंस्कारोऽध्यासनिबन्धनम् । केवलव्यतिरेकाभावादित्यर्थः ॥ ५२ ॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमभिप्रेत्य शङ्कते—**शिष्य आह—प्रसिद्ध एव तर्ह्यात्मा अहंप्रत्ययविषयतया, देहश्चायमिति ।** आत्मनोऽहंप्रत्ययविषयत्वेन देहस्य चेदंकारास्पदत्वेन प्रसिद्धत्वे फलितमाह—**तत्रैवं सति प्रसिद्धयोरेव देहात्मनोरितरेतराध्यारोपणा स्थाणुपुरुषयोः शुक्तिकारजतयोरिव । तत्र कं विशेषमाश्रित्य भगवतोक्तं प्रसिद्धयोरेवेतरेतराध्यारोपणेति नियन्तुं न शक्यत इति ।**

दृष्टान्ते प्रसिद्धस्यैव प्रसिद्धान्तरेऽध्यारोपणेति सिद्धे सत्याचार्यवचनं मूलविकलमनादेयमापन्नमित्याह—**तत्रेति** । दार्ष्टान्तिके त्वहं विषयव्यतिरिक्तस्य चिद्धातोरप्रसिद्धत्वान्न तत्रान्तःकरणस्य तद्धर्मस्य वा कर्तृत्वादेरध्यासः सिध्यतीति भावः ॥ ५३ ॥

दृष्टान्तवद्दार्ष्टान्तिकोपपत्तिमुपपादयितुमुपक्रमते—**गुरुराह—शृणु, सत्यं प्रसिद्धौ देहात्मानौ नतु स्थाणुपुरुषाविव विविक्तप्रत्ययविषयतया सर्वलोकप्रसिद्धौ ।** कथं तर्हि नित्यमेव निरन्तराविविक्त**प्रत्ययविषयतया** ( सर्वलोक ) **प्रसिद्धौ । न** ह्ययं देहः अयमात्मेति विविक्ताभ्यां प्रत्ययाभ्यां **देहात्मानौ** गृह्णाति यतः कश्चित् । दृष्टान्ते देहात्मानौ सर्वलोकप्रसिद्धौ न तथा चिदात्माहङ्काराविति विशेषमाशङ्क्याह—**सत्यमिति** । विविक्तत्वेन देहात्मनोरप्रसिद्धत्वे कथं प्रसिद्धिरभ्युपगम्यत इत्याशङ्क्याह—**कथमिति** । देहात्मनोरविविक्तत्वेन प्रसिद्धिमेव प्रकटयति—**नहीति** । देहात्मनोरविविक्तत्वेनैव प्रसिद्धिरित्यत्र वादिभ्रान्ति लिङ्गत्वेन दर्शयति—**अत एव हि मोमुह्यते लोकः आत्मानात्मविषये एवमात्मा नैवमात्मेति । इमं विशेषमाश्रित्यावोचं नैवं नियन्तुं शक्यमिति ।**

यद्यपि गौरोऽहमित्यादौ पदार्थद्वयं प्रतिभाति तथापि भेदविशिष्टतया न भाति अन्यथा लोकायतिकानां विवादाभावप्रसङ्गात् । अतो यथा तव भेदेनाप्रसिद्धेऽपि अहंकर्तरि गौरत्वाद्यध्यारोपः तथा ममापि चिदात्मन्यहंकारस्य तद्धर्माणां च कर्तृत्वादीनामध्यासो भविष्यतीति मन्वानः सन्नाह—**इतीममिति** ॥ ५४ ॥

नन्वविद्याध्यारोपितं यत्र यत्, तदसत् तत्र दृष्टम्– यथा रजतं शुक्तिकायाम्, स्थाणौ पुरुषः, रज्ज्वां सर्पः, आकाशे तलमलिनत्वमित्यादि- तथा देहात्मनोरपि नित्यमेव निरन्तराविविक्तप्रत्ययेनेतरेतराध्यारोपणा कृता स्यात्– तदितरेतरयोर्नित्यमेवासत्त्वं स्यात्––यथा शुक्तिकादिष्वविद्याध्यारोपितानां रजतादीनां नित्यमेवात्यन्तासत्त्वम्, तद्विपरीतानां च विपरीतेषु, तद्वद्देहात्मनोरविद्ययैवेतरेतराध्यारोपणा कृता स्यात्; तत्रैवं सति देहात्मनोरसत्त्वं प्रसज्येत––तच्चानिष्टम् वैनाशिकपक्षत्वात्। अथ तद्विपर्ययेण देह आत्मन्यविद्ययाध्यारोपितः, देहस्यात्मनि सति असत्त्वं प्रसज्येत, तच्चानिष्टम्, प्रत्यक्षादिविरोधात्। तस्माद्देहात्मानौ नाविद्ययेतरेतरस्मिन्नध्यारोपितौ। कथं तर्हि? वंशस्तंभवन्नित्यसंयुक्तौ ॥५५॥

न, अनित्यत्वपरार्थत्वप्रसङ्गात्। संहतत्वात् परार्थत्वमनित्यत्वं च वंशस्तम्भादिवदेव।

---

आत्मानात्मनोरितरेतराध्यासे द्वयोरपि मिथ्यात्वप्रसक्तेः शून्यवादापत्तिरिति शङ्कते— **ननु यत् यत्राविद्याध्यारोपितं तत्तत्रासद्दृष्टम्**। आरोपितस्याधिष्ठाने नास्तित्वमित्येतद् दृष्टान्तेन स्पष्टयति—**यथा रजत शुक्तिकायां स्थाणौ पुरुषः रज्वां सर्पः आकाशे तलमलिनत्वमित्यादि तथा देहात्मनोरपि नित्यमेव निरन्तराविविक्तप्रत्ययतया इतरेतराध्यारोपणा कृता स्यात् तदितरेतरयोर्नित्यमेवासत्त्वं स्यात्**। यदीत्यध्याहारः। उक्तमेवार्थं दृष्टान्तदार्ष्टान्तिकरूपं प्रपञ्चयति—**इतरेतरयोर्नित्यमेवासत्त्वं स्यात्। यथा शुक्तिकादिष्वविद्याध्यारोपितानां रजतादीनां शुक्तिकादिषु नित्यमेवात्यन्तासत्वं तद्विपरीतानां च विपरीतेषु तद्वत् देहात्मनोरविद्ययैव इतरेतराध्यारोपणा कृता स्यात्। तत्रैवं सति देहात्मनोरसत्वं प्रसज्येत**। तद्विपरीतानां रजतादिव्यतिरिक्तानां सर्पादीनां शुक्तिकादिविलक्षणेषु रज्वादिषु नित्यमेवात्यन्तासत्वमिति सम्बन्धः। कृता स्याच्चेदित्यध्याहारः। प्रसङ्गस्येष्टत्वं निराचष्टे—**तच्चानिष्टं वैनाशिकपक्षत्वादिति। अथ तद्विपर्ययेण देहः आत्मन्यविद्ययाऽध्यारोपितः देहस्यात्मनि असत्त्वं प्रसज्येत। तच्चानिष्टं प्रत्यक्षादिविरोधात्। तस्माद्देहात्मानौ नाविद्यया इतरेतरस्मिन् अध्यारोपितौ, कथं तर्हि वंशस्तम्भवन्नित्यसंयुक्तौ।**

**तस्यासंहतस्य देहे देहमात्रतया अध्यारोपितत्वेनासत्त्वानित्यत्वादिदोषप्रसङ्गो न भवति।** आत्मानात्मनोरितरेतराध्यारोपे शून्यवादश्चेदापद्यते तर्हि देहादावात्मारोपवैपरीत्येन देहादेरेव आत्मन्यध्यारोपः स्यात्तथा सत्यात्मनोऽसत्त्वप्रसङ्गाभावादित्याशङ्कामनूद्य दूषयति—**अथेत्यादिना**। प्रसङ्गस्येष्टत्वं शङ्कित्वा प्रमाणविरोधेन प्रत्यादिशति—**तच्चेति**। इतरेतराध्यासस्यान्यतराध्यासस्य वाऽनुपपन्नत्वमुपपादितमुपसंहरते—**तस्मादिति**। यदीतरेतराध्यासो न घटते कथं तर्हि गौरोऽहमित्यादिसामानाधिकरण्यधीरिति शङ्कते—**कथं तर्हीति**। तत्र मीमांसको ब्रूते—**वंशेति** ॥ ५५ ॥

**न, अनित्यत्वपारार्थ्यप्रसङ्गात्संहतत्वात्परार्थत्वमनित्यत्वं च वंशस्तम्भादिवदेव। किंच यस्तु परैर्देहेन संहतः कल्पित आत्मा स संहतत्वात् परार्थः तेनासंहतः परोऽन्यो नित्यः सिद्धस्तावत्।**

सिद्धान्ती तु पारिशेष्यादितरेतराध्यासं सिसाधयिषुरादौ परपक्षं प्रतिक्षिपति—**नानित्यत्वेति**। प्रसङ्गमेव प्रकटयति—**संहतत्वादिति**। इतश्चात्मा देहादिसंयुक्तो न भवतीत्याह—**किञ्चेति**। देहादिना

**किंच—यस्तु परैर्देहेन संहतः कल्पित आत्मा, स संहतत्वात्परार्थः। तेनाऽसंहतः परोऽन्यो नित्यः सिद्धस्तावत् ॥५६॥**

**तस्यासंहतस्य देहे देहमात्रतयाऽध्यारोपितत्वेनासत्त्वानित्यत्वादिदोषप्रसङ्गो न भवति। ननु तत्र निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥५७॥**

**न। स्वत एवात्मन आकाशस्येवासंहतत्वाभ्युपगमात्। सर्वेणासंहतः स चात्मेति न निरात्मको देहादिः सर्वः स्यात्। यथा चाकाशं सर्वेणासंहतमिति सर्वं न निराकाशं भवति एवम्। तस्मान्न वैनाशिकपक्षप्राप्तिदोषः स्यात् ॥५८॥**

**यत्पुनरुक्तम्—देहस्यात्मन्यसत्त्वे प्रत्यक्षादिविरोधः स्यादिति, तन्न प्रत्यक्षादिभिरात्मनि देहस्य सत्त्वानुपलब्धेः। न ह्यात्मनि—कुण्डे बदरम्, क्षीरे सर्पिः, तिले तैलम्, भित्तौ चित्रमिव च—प्रत्यक्षादिभिर्देह उपलभ्यते। तस्मान्न प्रत्यक्षादिविरोधः॥५९॥**

**कथं तर्हि प्रत्यक्षाद्यप्रसिद्धात्मनि देहाध्यारोपणा, देहे चात्मारोपणा ? ॥६०॥**

---

चेदात्मा संहन्यते स तर्हि संहतत्वादासनादिवदसंहतशेषः स्यादिति संहतविलक्षणात्मसिद्धिरित्याह—**यस्त्विति** ॥ ५६ ॥

आत्मा चेदेवमसंहतः सिध्येत्तर्हि तस्य देहादावधिष्ठाने तन्मात्रत्वेनारोपितत्वे स्वीकृते सत्यसत्त्वादिदोषप्रसङ्गो यः शङ्क्यते स न भवत्यात्मनः संसृष्टत्वेनारोपेऽपि स्वरूपेणारोपाभावादित्यात्मनोऽसंहतत्वफलं कथयति—**तस्येति**। आत्मा परमार्थतोऽसंहतश्चेत्तर्हि देहादेर्निरात्मकत्वमिति पक्षान्तरप्रसक्तिरिति शङ्कते—**ननु च निरात्मको देह इति वैनाशिकपक्षप्राप्तिदोषः स्यात्** ॥ ५७ ॥

परमार्थतः असंहतस्यापि देहादौ संसर्गाध्यासाभ्युपगमाद्देहस्य सात्मकत्वं सिध्यतीति परिहरति—**न, स्वत एवात्मन आकाशस्येवासंहतत्वाभ्युपगमात्। तदेव प्रपञ्चयति—सर्वेणासंहतः स चात्मेति निरात्मकः देहादिः सर्वः स्याद्यथाऽऽकाशः सर्वेणासंहत इति सर्वं न निराकाशं भवति एवम्, तस्माद्वैनाशिकपक्षप्राप्तिदोषो न स्यात्** ॥ ५८ ॥

देहादेरात्मन्यध्यस्तत्वेन तत्रासत्त्वे प्रमाणविरोधः स्यादिति परोदीरितमनुभाष्य दूषयति—**यत्पुनरुक्त; देहस्यात्मन्यध्यस्तत्वेनासत्त्वे प्रत्यक्षादिविरोधः स्यादिति। तन्न। प्रत्यक्षादिभिरात्मनि देहस्य सत्त्वानुपलब्धेः। नह्यात्मनि कुण्डे बदरं क्षीरे सर्पिस्तिले तैलं भित्तौ चित्रमिव च प्रत्यक्षादिभिर्देह उपलभ्यते।** अनुपलब्धिमेव साधयति **नहीति**। आत्मनि देहादेरप्रामाणिकत्वे फलितमाह—**तस्मान्न प्रत्यक्षादिविरोधः** ॥ ५९ ॥

आत्मा प्रमितो वा न वा प्रमितत्वे नाधिष्ठानत्वं आरोप्यत्वं वा, प्रमितिविरोधाद् अप्रमितत्वेऽपि नाधिष्ठानत्वादि सिध्यति। अप्रतिपन्नस्य तदयोगादिति शङ्कते—**कथं तर्हि प्रत्यक्षाद्यप्रमित आत्मनि देहाध्यारोपणा देहे चात्माध्यारोपणा** ॥ ६० ॥

नायं दोषः, स्वभावप्रसिद्धत्वादात्मनः। नहि कादाचित्कसिद्धावेवाध्यारोपणा, न नित्यसिद्धौ—इति नियन्तुं शक्यम्. आकाशे तलमलाद्यध्यारोपणदर्शनात् ॥६१॥

किं भगवन्, देहात्मनोरितरेतराध्यारोपणा देहादिसंघातकृता; अथवाऽऽत्मकृतेति ? ॥६२॥

गुरुरुवाच—यदि देहादिसंघातकृता, यदि चात्मकृता, किं तव स्यात् ? ॥६३॥

इत्युक्तः शिष्य आह—यद्यहं देहादिसंघातमात्रः, ततो ममाचेतनत्वात्परार्थत्वमिति न मत्कृता देहात्मनोरितरेतराध्यारोपणा। अथाहमात्मा परोऽन्यः संघातात्, चितिमत्त्वात्स्वार्थ इति मयैव चितिमताऽऽत्मन्यध्यारोपणा क्रियते सर्वानर्थबीजभूता ॥६४॥

इत्युक्तो गुरुरुवाच—अनर्थबीजभूतां चेन्मिथ्याध्यारोपणां जानीषे, तां मा कार्षीस्तर्हि ॥ ६५ ॥

नैव, भगवन् शक्नोमि न कर्तुम्। अन्येन केनचित्प्रयुक्तोऽहं, न स्वतन्त्र इति ॥ ६६ ॥

---

स्फुरणमात्रस्याधिष्ठानत्वादिप्रयोजकत्वात् प्रमाणविशेषणस्य केवलव्यतिरेकविरहिणो अकिंचित्करत्वादध्यासाविरोधिस्फुरणरूपेण स्वतोऽपरोक्षे चिदात्मनि देहाद्यध्यासः सिध्यतीति परिहरति—**नायं दोषः। स्वाभावसिद्धत्वादात्मनः।** शुक्त्यादौ सम्प्रयुक्ते विषये विषयान्तरस्य रजतादेरध्यासदर्शनात् कथमात्मन्यसम्प्रयुक्ते देहाद्यध्यासः स्यादित्याशङ्क्याह—**नहि कादाचित्कसिद्धावेवाध्यारोपणं न नित्यसिद्धाविति नियन्तुं शक्यम्। आकाशे तलमलाद्यध्यासदर्शनात्** ॥ ६१ ॥

नीरूपद्रव्यत्वेन सर्वगतत्वेन वाऽऽकाशस्याक्षासंयोगित्वेऽपि तत्र साक्षिसिद्धे तलाद्यध्यासदर्शनान्नायं नियमोऽस्तीत्यर्थः। शुक्त्यादौ देवदत्तो रूप्यादिकमध्यस्यतीति दृष्टत्वादिहापि कश्चिदध्यासकर्त्ता वक्तव्यः स्यादिति पृच्छति—**किं भगवन्देहात्मनोरितरेतराध्यारोपणा देहादिसंघातकृता अथ वा आत्मकृतेति** ॥ ६२ ॥

सन्देहवत्प्रयोजनस्यापि वक्तव्यत्वात्पक्षद्वयेऽपि प्रयोजनं विमृशति—**गुरुराह—यदि देहादिसंघातकृता आत्मकृता वा किं तव स्यात्** ॥ ६३ ॥

पक्षद्वयेऽपि क्रमेण प्रयोजनं दर्शयति—**इत्युक्तः शिष्य आह—यद्यहं देहादिसंघातमात्रस्ततो ममाचेतनत्वात्परार्थत्वमिति न मत्कृता देहात्मनोरितरेतराध्यारोपणा। अथाहमात्मा परोऽन्यः संघाताच्चितिमत्त्वात्स्वार्थ इति मयैव चितिमताऽऽत्मन्यध्यारोपणा क्रियते। सर्वानर्थबीजभूता।**

मया हीयमध्यारोपणा क्रियते तत्र मच्छब्दार्थः संघातो वा ततोऽन्यो वा परमात्मेति विकल्प्य क्रमेण प्रत्याचष्टे—**यदीत्यादिना** ॥ ६४ ॥

प्रत्यगात्मैव चिदेकतानः सर्वार्थानर्थबीजभूतमध्यारोपणमात्मनि करोतीत्युक्तं व्यक्तीकर्त्तुमाक्षिपति—**इत्युक्तो गुरुरुवाच—अनर्थबीजभूतां चेन्मिथ्याध्यारोपणां जानीषे तां मा कार्षीस्तर्हि** ॥ ६५ ॥

परस्मादीश्वरात् प्रत्यगात्मनोऽन्यत्वमादाय शिष्यो ब्रूते—**नैव भगवञ्छक्नोमि न कर्तुम्। अन्येन केनचित्प्रयुक्तोऽहं न स्वतन्त्र इति** ॥ ६६ ॥

न तर्हि अचितिमत्त्वात्स्वार्थस्त्वम् । येन प्रयुक्तोऽस्वतन्त्रः प्रवर्तसे, स चितिमान् स्वार्थः । संघात एव त्वम् ॥६७॥

यद्यचेतनोऽहम्, कथं सुखदुःखवेदनां भवदुक्तं च जानामि ? ॥ ६८ ॥

गुरुरुवाच—किं सुखदुःखवेदनाया मदुक्ताच्चान्यस्त्वम्, किंवाऽनन्य एव इति ६९

शिष्य उवाच—नाहं तावद न्यः । कस्मात् ? यस्मात्तदुभयं कर्मभूतं घटादिकमिव जानामि । यद्यनन्योऽहम्, तेन तदुभयं न जानीयाम्, किंतु जानामि, तस्मादन्यः । सुखदुःखवेदनाविक्रिया च स्वार्थैव प्राप्नोति, त्वदुक्तं च स्यात्, अनन्यत्वे । नच तयोः स्वार्थता युक्ता । नहि चन्दनकण्टककृते सुखदुःखे चन्दनकण्टकार्थे, घटोपयोगो वा घटार्थः । तस्मात्तद्विज्ञातुर्मम चन्दनादिकृतोऽर्थः । अहं हि ततोऽन्यः समस्तमर्थं जानामि बुद्ध्यारूढम् ॥७०॥

तं गुरुरुवाच—एवं तर्हि स्वार्थस्त्वं चितिमत्त्वात्, न परेण प्रयुज्यसे । नहि चितिमान् परतन्त्रः परेण प्रयुज्यते, चितिमतश्चितिमदर्थत्वानुपपत्तेः, समत्वात्,

---

अन्येन प्रयुक्तत्वे तव जडत्वादस्वातन्त्र्याद्रथशकटादिसदृशत्वात्प्रवर्तकस्येश्वरस्य चेतनत्वेन स्वातन्त्र्यम् । तव तु संघातमात्रत्वमित्याचार्यो दर्शयति—**न तर्ह्यचितिमत्वात्स्वार्थस्त्वम् । येन प्रयुक्तोऽस्वतन्त्रः प्रवर्तसे स चितिमान्स्वार्थः । संघात एव त्वम्** ॥ ६७ ॥

न मम संघातत्वेनाचेतनत्वं तथा सति सुखदुःखादेर्गुरूपदिष्टस्य च वेदनायोगादिति शङ्कते—**यद्यचेतनोऽहं कथं सुखदुःखवेदनां भवदुक्तं च जानामि** । ६८ ॥

तत्राचार्यो गूढाभिसन्धिर्विकल्पयति—**गुरुराह—किं सुखदुःखवेदनाया मदुक्ताच्चान्यस्त्वम् ! किं वाऽनन्य एवेति** ॥ ६९ ॥

द्वितीयं पक्षं शिष्यमुखेन दूषयति—

**शिष्य आह—नाहं तावदनन्यः । कस्मात् यस्मात्तदुभयं कर्मभूतं घटादिकमिव जानामि** । तदेव व्यतिरेकमुखेन साधयति—**यद्यनन्योऽहं तेन तदुभयं न जानीयां किन्तु जानामि तस्मादन्यः** । तेन सुखादिना गुरूपदिष्टेन चेति यावत् । एकत्र कर्मकर्तृत्वायोगादित्यर्थः । अन्यत्वपक्षे सुखादिविक्रिया गुरूपदिष्टं च मच्छेषः स्यात् । अनन्यत्वे तु तयोः शेषिणोऽभावात्स्वशेषत्वमापद्येयाताम् । अतश्चान्यत्वमेव युक्तमित्याह—**सुखेति** । सुखादिविक्रियाया गुरूपदिष्टस्य च स्वार्थत्वाभावो दृष्टः । तेन साधयति—**नहि चन्दनकण्टककृते सुखदुःखे चन्दनकण्टकार्थे** घटोपयोगो वा घटार्थः । तस्मात्सुखदुःखवेदनाविक्रिया च स्वार्थैव प्राप्नोति त्वदुक्तं चानन्यत्वेन च तयोः स्वार्थता युक्ता विज्ञातुम् । **मम चन्दनादिकृतोऽर्थः अहं हि ततोऽन्यः समस्तमर्थं जानामि । मद्बुद्ध्यारूढम्** ॥ ७० ॥

एवं शिष्यद्वारेणानन्यत्वपक्षं प्रतिक्षिप्यान्यत्वपक्षं स्वीकृत्याचार्यः स्वाभिप्रायं प्रकटयति—

तं गुरुराह—एवं तर्हि स्वार्थस्त्वं **चितिमत्त्वान्न परेण प्रयुज्यसे** । तदेव स्फुटयति—**नहि चितिमान्परतन्त्रः परेण प्रयुज्यते** । चितिमत्त्वेऽपि परेण प्रयुक्तत्वं किं न स्यादित्याशङ्क्य किमुभयोः चितिमत्त्वं किं वाऽन्यतरस्येति विकल्प्याद्यं दूषयति—**चितिमतश्चितिमदर्थत्वानुपपत्तेः, समत्वात्**

प्रदीपप्रकाशयोरिव नाप्यचितिमदर्थत्वं चितिमतो भवति, अचितिमतोऽचितिमत्त्वादेव स्वार्थसम्बन्धानुपपत्तेः नाप्यचितिमतोरन्योन्यार्थत्वं दृष्टम्। नहि काष्ठकुडचे अन्योन्यार्थं कुर्वाते॥७१

ननु चितिमत्त्वे समेऽपि भृत्यस्वामिनोरन्योन्यार्थत्वं दृष्टम् ॥७२॥

नैवम्, अग्नेरुष्णप्रकाशवत्तव चितिमत्त्वस्य विवक्षितत्वात्। प्रदर्शितश्च दृष्टान्तः प्रदीपप्रकाशयोरिवेति। तत्रैवं सति, स्वबुद्धयारूढमेव सर्वमुपलभसे अग्न्युष्णप्रकाशतुल्येन कूटस्थनित्यचैतन्यस्वरूपेण यदि चैवमात्मनः सर्वदा निर्विशेषत्वमुपगच्छसि, किमित्यूचिवान् सुषुप्ते विश्रम्य विश्रम्य जाग्रत्स्वप्नयोर्दुःखमनुभवामि, किमयमेव मम स्वभावः, किंवा न ? इति च किमसौ व्यामोहोऽपगतः किं वा न ? ॥७३॥

इत्युक्तः शिष्य उवाच—भगवन्, अपगतस्त्वत्प्रसादाद्व्यामोहः, किंतु मम कूटस्थतायां संशयः। कथम् ? शब्दादीनां स्वतः सिद्धिर्नास्ति, अचेतनत्वात्; शब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषाम् प्रत्ययानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्याकारत्वस्य स्वतःसिद्ध्यसंभवात्। तस्माद्बाह्याकारनिमित्तत्वं गम्यत इति बाह्याकारवच्छब्दादिसिद्धिः।

---

**प्रदीपप्रकाशयोरिव**। द्वितीयं प्रत्याह—**नाप्यचितिमदर्थत्वं चितिमतः भवति अचितिमतः अचितिमत्त्वादेव स्वार्थत्वानुपपत्तेः**। अस्तु तर्हि द्वयोरेवार्थार्थिनोरचितिमत्त्वं नेत्याह—**नाप्यचितिमतोरन्योन्यार्थत्वं दृष्टम्। नहि काष्ठकुडचे अन्योन्यार्थं कुर्वाते** ॥ ७१ ॥

चितिमतोः समत्वान्न शेषशेषित्वमित्यत्र व्यभिचारं शङ्कते—**ननु चितिमत्त्वे समेऽपि भृत्यस्वामिनोरन्योन्यार्थत्वं दृष्टम्** ॥ ७२ ॥

भृत्यस्वामिनोः संहतत्वेन चेतनत्वाभावादचेतनमेव शरीरम् अन्यार्थमिष्टम्। आत्मनि पुनरग्नेरुष्णत्वादिवत् चितिमत्त्वस्य चिन्मात्रताया विवक्षितत्वान्न शेषशेषित्वोपपत्तिरित्युत्तरमाह—

**नैवम्। अग्नेरुष्णप्रकाशवत् तव चितिमत्त्वस्य विवक्षितत्वात् प्रदर्शितश्च दृष्टान्तः प्रदीपप्रकाशयोरिवेति**। आत्मनश्चिद्रूपस्यापि चिदन्तरशेषत्वं स्यादित्याशङ्क्याह—**दर्शितश्चेति**। अद्वितीये चेतनेऽन्यशेषत्वरहिते सिद्धे सिद्धमस्य परमात्मत्वमिति फलितमाह—**तत्रैवं सति स्वबुद्धयारूढमेव सर्वमुपलभसे अग्न्युष्णप्रकाशतुल्येन कूटस्थनित्यचैतन्यस्वरूपेण**। भवत्वात्मनः सर्वदा निर्विशेषचिन्मात्रत्वेन परमात्मत्वं तथापि किं स्यादित्याशङ्क्याऽवस्थात्रयसम्बन्धद्वारेण तस्मिन्दुःखानुभवाशङ्का पराकृता भवतीत्याह—**यदि चैवमात्मनः सर्वदा निर्विशेषत्वमभ्युपगच्छसि। किमित्यूचिवान् सुषुप्ते विश्रम्य विश्रम्य जाग्रत्स्वप्नयोर्दुःखमनुभवामि किमयमेव मम स्वभावः किंवा नैमित्तिक इति च**। मोहमाहात्म्यादुक्ताशङ्का सावकाशेति चेत्त्राह—**किं तेऽसौ व्यामोहोऽपगतः किं वा न** ॥ ७३ ॥

आत्मनश्चिन्मात्रस्य निर्विशेषस्य परमात्मत्वेनाज्ञानतत्कार्यसम्बन्धाभावस्याचार्यवचनविचारणायां सिद्धत्वान्न मे मोहाशङ्काऽस्तीत्याह—

**इत्युक्तः शिष्य आह-भगवन्नपगतो व्यामोहः त्वत्प्रसादात्**। तर्हि ममेव तवापि कृतार्थतया निरपेक्षतेत्याशङ्क्याह—**किन्तु मम कूटस्थतायां संशय इति**। कथं कूटस्थतायां संशयप्राप्तिरिति पृच्छति—**कथमिति**। शब्दादीनां स्वतः सिद्धिर्नास्त्यचेतनत्वाच्छब्दाद्याकारप्रत्ययोत्पत्तेस्तु तेषां प्रत्ययानामितरेतरव्यावृत्तविशेषणानां नीलपीताद्याकारत्वस्य स्वतः सिध्यसम्भवात् बाह्याकारवच्छब्दादिसम्बन्धनिमित्तत्वं गम्यत इति बाह्याकारवच्छब्दादिसिद्धिः। स्वस्योपलब्धृत्वदर्शनं कूटस्थत्वा-

**तथा प्रत्ययानामप्यहंप्रत्ययालम्बनवस्तुभेदानां संहतत्वादचैतन्योपपत्तेः। स्वार्थत्वासंभवात् स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः, शब्दादिवदेव। असंहतत्वे सति चैतन्यात्मकत्वात्स्वार्थोऽप्यहंप्रत्ययानां नीलपीताद्याकाराणामुपलब्धेति विक्रियावानेव, कथं कूटस्थः ?—इति संशयः ।।७४।।**

**तं गुरुरुवाच—न युक्तस्तव संशयः, यतस्तेषां प्रत्ययानां नियमेनाशेषत उपलब्धेरेवापरिणामित्वात्कूटस्थत्वसिद्धौ निश्चयहेतुमेवाशेषचित्तप्रचारोपलब्धिं संशयहेतुमात्थ। यदि हि तव परिणामित्वं स्यात्, अशेषस्वविषयचित्तप्रचारोपलब्धिर्न स्यात्, चित्तस्य स्वविषये, यथा चेन्द्रियाणां स्वविषयेषु; न च तथाऽऽत्मनस्तव स्वविषयैकदेशोपलब्धिः। अतः कूटस्थतैव तवेति ।।७५।।**

---

निश्चये कारणं दर्शयितुं शब्दादीनां तावत्प्रत्ययाधीनसिद्धिकत्वं दर्शयति—**शब्दादीनामिति**। जडत्वात्तेषां स्वतः सिद्ध्यभावे कुतः सिद्धिरित्याशङ्क्याह—**शब्दादीति**। ये प्रत्ययाः शब्दाद्याकारास्तेऽपि बाह्यालम्बना न भवन्तीति केचित्तान्प्रत्याह—**तेषामिति**। परस्परव्यावृत्तानि शब्दस्पर्शादीनि विशेषणानि येषां तेषामिति। बाह्यः सन्नाकारो येषां शब्दादीनां तैः सम्बन्धो निमित्तं येषां तेषां भावस्तत्त्वम् तद्गम्यते। प्रत्ययानां प्रकाशमात्ररूपत्वेन तेषां स्वतः शब्दाद्याकारत्वासम्भवादर्थधियं विना च संस्कारासम्भवात्तया च बाह्याकारवन्तो ये शब्दादयस्तद्ग्राहकत्वं प्रत्ययानां सिध्यतीत्यर्थः। शब्दादिग्राहकत्वेऽपि प्रत्ययानां न स्वव्यतिरिक्तग्राहकत्वमित्याशङ्क्याह—**तथा प्रत्ययानामप्यहंप्रत्ययालम्बनवस्तुभेदानां संहतत्वादचैतन्योपपत्तेः, स्वार्थत्वासम्भवात्स्वरूपव्यतिरिक्तग्राहकग्राह्यत्वेन सिद्धिः शब्दादिवदेव। अहंप्रत्ययालम्बनं** वस्त्वन्तःकरणं तस्य वृत्तिभेदानां कारकैः संहतत्वादस्वप्रकाशत्वसिद्धेः स्वातन्त्र्येण सिद्ध्ययोगादतिरिक्तग्राहकं प्रति ग्राह्यत्वेन सिद्धिः शब्दादिवदेव वक्तव्येत्यर्थः। सम्प्रति प्रकृतसंशयकारणं निगमयति—**असंहतत्वे सति चैतन्यात्मकत्वात्स्वार्थोऽहंप्रत्ययानां नीलपीताद्याकाराणामुपलब्धेति विक्रियावान्नेव कूटस्थ इति संशयः ।। ७४ ।।**

परोक्तं संशयकारणं विरुद्धत्वेन निराकरोति—

**तं गुरुराह—न युक्तस्तव संशयः।** यो हि परिणामी चित्तादिस्तस्य क्रमेण स्वविषयग्राहकत्वं कतिपयग्राहकत्वं च दृष्टं तद् व्यापकमात्मनो व्यावर्तमानं परिणामित्वमपि तस्य व्यावर्तयतीति। परोदितस्य संशयहेतोर्विरुद्धं साधयति—**यतस्तेषां प्रत्ययानां नियमेनाशेषत उपलब्धेरेवापरिणामित्वात्कूटस्थत्वसिद्धौ निश्चयहेतुमेवाशेषचित्तप्रचारोपलब्धिं संशये हेतुमात्थ।** कूटस्थनिश्चयहेतुमेवात्मनो निःशेषचित्तप्रचारोपलब्धृत्वं मोहात्त्वं संशयकारणं कथयसि। तथा च त्वदीयः संशयो युक्तो नेत्युक्तमेव व्यतिरेकद्वारा स्फोरयति—**यदि हि तव परिणामित्वं स्यात् अशेषस्वविषयचित्तप्रचारोपलब्धिर्न स्यात् चित्तस्येव स्वविषये। यथा चेन्द्रियाणां स्वविषयेषु। न च तथाऽऽत्मनः स्वविषयैकदेशोपलब्धिः।** अपर्यायेणाशेषचित्तप्रचारोपलब्धृत्वादात्मनोऽपरिणामित्वेन कूटस्थत्वं स्थितमिति निगमयति—**अतः कूटस्थतैव तवेति ।। ७५ ।।**

**तत्राह—उपलब्धिर्नाम धात्वर्थो विक्रियैव, उपलब्धुः कूटस्थात्मता चेति विरुद्धम् ॥ ७६ ॥**

**न, धात्वर्थविक्रियायामुपलब्ध्युपचारात् । यो हि बौद्धः प्रत्ययः, स धात्वर्थो विक्रियात्मकः आत्मनः उपलब्ध्याभासफलावसान इत्युपलब्धिशब्देनोपचर्यते, यथा छिदिक्रिया द्वैधीभावफलावसानेति धात्वर्थत्वेनोपचर्यते तद्वत् ॥ ७७ ॥**

**इत्युक्तः शिष्य आह—ननु भगवन् मम कूटस्थत्वप्रतिपादनं प्रत्यसमर्थो दृष्टान्तः ? कथम् ? छिदिः छेद्यविक्रियावसाना उपचर्यते यथा धात्वर्थत्वेन, तथोपलब्धि शब्दोपचरितोऽपि धात्वर्थो बौद्धः प्रत्ययः आत्मन उपलब्धिविक्रियावसानश्चेत्, नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः ॥ ७८ ॥**

---

भूवादीनां धातूनां क्रियावाचित्वादुपलब्धेत्यत्र क्रिया प्रकृत्यर्थो भासते । प्रत्ययार्थस्तु कर्ता भासते । तथा चोपलब्धा कूटस्थश्चेति प्रकृतिप्रत्ययार्थपर्यालोचनायां विरोधः स्यादिति शङ्कते—**तत्राह—उपलब्धिर्नाम धात्वर्थो विक्रियैवोपलब्धुः कूटस्थता चेति विरुद्धम्** ॥ ७६ ॥

**न, धात्वर्थविक्रियायामुपलब्ध्युपचारात् । यो हि बौद्धः प्रत्यय. स धात्वर्थो विक्रियात्मकः आत्मन उपलब्ध्याभासफलावसान इत्युपलब्धिशब्देनोपचर्यते । यथा छिदिक्रिया द्वैधीभावफलावसानेति धात्वर्थत्वेनोपचर्यते तद्वत् ।**

किमेतौ प्रकृतिप्रत्ययार्थौ मुख्यावेवाभीष्टौ किं वा गौणावपि भवतः । नाद्यः, सविता प्रकाशत इत्यादिप्रयोगदर्शनादतिव्याप्तत्वात् । द्वितीयं प्रत्याह—**नेत्यादिना** । यथा वह्निव्याप्तोऽयःपिण्डो दहतीत्युपचारेणोच्यते । तथा प्रज्ञानं ब्रह्म कूटस्थमचलं ध्रुवमित्यादिशास्त्रसिद्धेन नित्योपलब्धिस्वभावेनात्मना व्याप्तोऽहंकारादिरुपलभेऽहमित्युपचर्यते । तेनाऽन्यविषयेण प्रकृतिप्रत्ययव्यपदेशेन प्रकृतिप्रत्ययसाक्षिणो न विरुध्यते कूटस्थत्वमित्यर्थः । मृदादिद्रव्यस्य परिणामो घटादिद्रव्यात्मको दृष्टस्तथाऽहंकारद्रव्यस्य विषयपर्यन्तं सञ्चारिपरिणामो दीर्घप्रभास्थानीयो द्रव्यं स्यात्तथा च कथं तस्य क्रियात्वमुपचरितुं शक्यमित्याशङ्क्याह—**यो हीति** । यथा जले प्रतिबिम्बितः सविता तत्र प्रकाशाभासोदयहेतुस्तथैवात्मा बुद्धिवृत्तौ प्रतिबिम्बितो नित्योपलब्धिस्वभावस्तत्र प्रकाशाभासोदयहेतुर्भवति । ततश्चोपलब्ध्याभासफलावसानत्वाद्बुद्धिपरिणामस्य क्रियात्वेनोपचारः सम्भवतीत्यर्थः । उक्तमेवार्थं दृष्टान्तेन साधयति—**यथेति** ॥ ७७ ॥

दृष्टान्ते वैषम्यं शङ्कते—**इत्युक्तः शिष्य आह-ननु भगवन्मम कूटस्थत्वप्रतिपादनं प्रत्यसमर्थो दृष्टान्तः** । दृष्टान्तस्य दार्ष्टान्तिकानुगुणत्वराहित्यमेव प्रकटयति । **कथं ? छिदिःछेद्यविक्रियावसानोपचर्यते यथा धात्वर्थत्वेन, तथा उपलब्धिशब्दोपचरितोऽपि धात्वर्थो बौद्धः आत्मनः प्रत्ययः उपलब्धिविक्रियावसानश्चेन्नात्मनः कूटस्थतां प्रतिपादयितुं समर्थः** ।

दृष्टान्ते छेद्यविक्रियादर्शनादात्मन्यपिदार्ष्टान्तिके विक्रियाप्रसङ्गात् न कूटस्थत्वसिद्धिरित्यर्थः ॥७८॥

गुरुरुवाच—सत्यमेवं स्यात्, यद्युपलब्ध्युपलब्ध्रोर्विशेषः। नित्योपलब्धिमात्र एव ह्युपलब्धा। न तु तार्किकसमय इवान्या उलपब्धिः, अन्य उपलब्धा च ॥७९॥

ननूपलब्धिफलावसानो धात्वर्थः कथमिति ? ॥ ८० ॥

उच्यते—शृणु। उपलब्ध्याभासफलावसान इत्युक्तम्। किं न श्रुतं त्वया ? न त्वात्मा विक्रियोत्पादनावसान इति मयोक्तम् ॥ ८१ ॥

शिष्य उवाच—कथं तर्हि कूटस्थे मय्यशेषस्वविषयचित्तप्रचारोपलब्धृत्वमित्यात्थ ? ॥ ८२ ॥

तं गुरुराह—सत्यमेवावोचम् तेनैव कूटस्थतामवोचं तव ॥ ८३ ॥

यद्येवं भगवन्, कूटस्थनित्योपलब्धिस्वरूपे मयि शब्दाद्याकारबौद्धप्रत्ययेषु च मत्स्वरूपोपलब्ध्याभासफलावसानवत्सूत्पद्यमानेषु कस्त्वपराधो मम ? ॥८४॥

सत्यम् नास्त्यपराधः, किन्त्वविद्यामात्रस्त्वपराध इति प्रागेवावोचम् ॥ ८५ ॥

---

दृष्टान्ते छिदिछेद्ययोरिव दार्ष्टान्तिके प्रत्यगात्मनः उपलब्धुः उपलब्धेश्च भेदाभावाद्युक्ता कूटस्थतेत्याह—

**गुरुरुवाच—सत्यमेवं स्याद्यद्युपलब्ध्युपलब्ध्रोः विशेषः। नित्योपलब्धिमात्र एव ह्युपलब्धा। न तु तार्किकसमय इव अन्योऽपब्धिरन्यः उपलब्धा च ॥ ७९ ॥**

आत्मैवोपलब्धिश्चेदुपलब्धिफलावसानत्व धात्वर्थस्यायुक्तमुपलब्धेर्नित्यत्वेन फलत्वायोगादिति शङ्कते—

**ननूपलब्धिफलावसानो धात्वर्थः कथमुच्यते ॥ ८० ॥**

उक्तमेव स्मारयन् परिहरति—

**शृणु उपलब्ध्याभासफलावसान इत्युक्तं किं न श्रुतं त्वया ? न त्वात्मा विक्रियोत्पादनावसान इति मयोक्तम्।**

छिदिर्यथा छेद्ये विकारं करोति तथाऽऽत्मन्यपि धात्वर्थो विक्रियामुत्पादयति, तत्कुतोऽस्य कूटस्थतेत्याशङ्क्यानुक्तोपलम्भान्मैवमित्याह **नत्विति** ॥ ८१ ॥

यद्यविक्रियत्वादात्मनोऽभीष्टम् कूटस्थत्वं तर्हि तस्याशेषचित्तप्रचारोपलब्धृत्वं त्वयोक्तं कथं युक्तं क्रियावत्त्वमन्तरेणोपलब्धृत्वासिद्धेरिति शङ्कते—

**शिष्य आह—कथं तर्हि कूटस्थे मय्यशेषचित्तप्रचारोपलब्धृत्वमित्यात्थ ॥ ८२ ॥**

नित्योपलब्धिस्वभावस्यात्मनो विक्रियावत्त्वमन्तरेणैवोपचारादित्युत्तरमाह—**गुरुराह—सत्यमेवावोचं तेनैव कूटस्थतामवोचम् तव ॥ ८३ ॥**

आत्मनः उपचारादुपलब्धृत्वसिद्धेरुपपन्नं तस्य कूटस्थत्वं स्थितं यदि तर्हि तस्य वस्तुतः संसारबन्धो न सिद्ध्यति। अविक्रियत्वादिति शङ्कते—

**यद्येवं भगवन्कूटस्थनित्योपलब्धिस्वरूपे मयि शब्दाद्याकारबौद्धप्रत्ययेषु च मत्स्वरूपोपलब्ध्याभासफलावसानवत्सूत्पद्यमानेषु कस्त्वपराधो मम ॥ ८४ ॥**

परमार्थतस्तव संसारसम्बन्धाभावेऽपि तत्सम्बन्धबुद्धिरविद्याकृता दुर्वारेत्याह—

**सत्यम्। नास्त्यपराधः कित्वविद्यामात्रस्त्वपराध इति प्रागेवावोचम् ॥ ८५ ॥**

**यदि, भगवन्, सुषुप्त इव मम विक्रिया नास्ति, कथं स्वप्नजागरिते ॥ ८६ ॥**

**तं गुरुराह——किंत्वनुभूयेते त्वया सन्ततम् ॥ ८७ ॥**

**शिष्य उवाच——बाढमनुभवामि, किंतु विच्छिद्य विच्छिद्य, न तु सन्ततम् ॥८८॥**

**गुरुराह—तर्हि आगन्तुके त्वेते, न तवात्मभूते। यदि तवात्मभूते, चैतन्यस्वरूपवत्स्वतः सिद्धे सन्तते एव स्याताम्। किंच, स्वप्नजागरिते न तवात्मभूते, व्यभिचारित्वात्, वस्त्रादिवत्। न हि यस्य यत्स्वरूपं, तत्तद्व्यभिचारि दृष्टम्। स्वप्नजागरिते तु चैतन्यमात्रत्वात् व्यभिचरतः। सुषुप्ते चेत्स्वरूपं व्यभिचरेत् तन्नष्टं, नास्तीति बाध्यं वा स्यात्—आगन्तुकानामतद्धर्माणामुभयात्मकत्वदर्शनात्——यथा धनवस्त्रादीनां नाशो दृष्टः, स्वप्नभ्रान्तिलब्धानां त्वभावो दृष्टः ॥ ८९ ॥**

**नन्वेवं, भगवन्, चैतन्यस्वरूपमप्यागन्तुकं प्राप्तम्, स्वप्नजागरितयोरिव सुषुप्तेऽनुपलब्धेः, अचैन्यस्वरूपो वा स्यामहम् ॥ ९० ॥**

---

आत्मनि स्वप्नजागरितोपलब्धिरूपविक्रियोपलब्धेर्न कूटस्थता सुस्थितेति पुनः शङ्कते—

**यदि भगवन्सुषुप्त इव मम विक्रिया नास्ति कथं स्वप्नजागरिते;** आत्मनि परमार्थतः स्वप्नजागरिते ॥ ८६ ॥

उपलब्धेरसिद्धावपि प्रतीत्यनुरोधादिमे एष्टव्ये इत्याचार्यः समाचष्टे—

**तं गुरुराह—किंत्वनुभूयेते त्वया सन्ततम् ॥ ८७ ॥**

सन्ततमिति विशेषणममृष्यन्नाह—**बाढमनुभवामि किन्तु विच्छिद्य विच्छिद्य न तु सन्ततम् ॥८८॥**

यदि स्वप्नजागरितयोरागन्तुकत्वमभ्युपैषि। तर्हि तयोस्तथात्वे सिद्धे न ते तवात्मभूते भवितुमत्सहेते आगन्तुकत्वादनुभूयमानत्वाच्च घटादिवत्। न च तयोरात्मसम्बन्धित्वं सम्बन्धस्य दुर्वचत्वादित्याह।

—**तं गुरुराच—तर्हि आगन्तुके त्वेते न तवात्मभूते।** विपक्षे तयोरागन्तुकत्वमनुभूयमानत्वं च न स्यादित्यप्रयोजकत्वम्-परिहरति—**यदि तवात्मभूते चैतन्यस्वरूपवत्स्वतः सिद्धे संतते एव स्याताम्। किंच स्वप्नजागरिते न तवात्मभूते व्यभिचारित्वाद्वस्त्रादिवदित्याह। नहि यस्य यत्स्वरूपं तत् तद्व्यभिचारि दृष्टम्। स्वप्नजागरिते तु चैतन्यमात्रत्वं व्यभिचरतः। सुषुप्ते चेत् स्वरूपं व्यभिचरेत् तन्नष्टं नास्तीति वा बाध्यमेव स्यात्। आगन्तुकानामतद्धर्माणामुभयात्मकत्वदर्शनात्।** आत्मस्वरूपस्य चैतन्यस्य सुषुप्ते अव्यभिचारदर्शनात्। अव्यभिचारित्वहेतोर्व्यभिचारित्वान्न साधकत्वमित्याशङ्क्याह—**सुषुप्ते चेदिति।** आत्मनि स्वाभाविकत्वाभावेन आगन्तुकत्वमाविष्कर्तुं अतद्धर्माणामित्युक्तम् उभयात्मकत्वदर्शनमुदाहरणाभ्यां स्फोरयति। **यथा धनवस्त्रादीनां नाशो दृष्टः स्वप्नभ्रान्तिलब्धानां त्वभावो दृष्टः ॥ ८९ ॥**

अतिप्रसङ्गमाशङ्कते—**नन्वेवं भगवन् चैतन्यस्य स्वरूपमप्यागन्तुकं प्राप्तं स्वप्नजागरितयोरिव सुषुप्तेऽनुपलब्धेः अचैतन्यस्वरूपो वा स्यामहम्।**

तस्यागन्तुकत्वप्राप्तौ हेतुमाह—**स्वप्नेति।** दृष्टिश्रुतिमत्यादिरूपं हि चैतन्यस्य स्वप्नजागरितशब्दाभ्यामुच्यते। तथा च ते चेन्न सुषुप्ते दृश्येते चैतन्यं तदा नास्तीत्यागन्तुकत्वं तस्य दुष्परिहरमित्यर्थः। किञ्च स्वप्नजागरिते चेदात्मनः स्वरूपभूते न भवतस्तदा चैतन्यमेव स्वरूपं न भवतीत्युक्तं स्यात्। ततश्चात्मनो जडत्वमनुमतं भवेदित्याह—**अचैतन्येति ॥ ९० ॥**

**न, पश्य। तदनुपपत्तेः। चैतन्यस्वरूपं चेदागन्तुकं पश्यसि, पश्य, नैतद्वर्षशतेनाप्युपपत्त्या कलयितुं शक्नुमो वयम्, अन्यो वाऽचैतन्योऽपि; तस्य संहतत्वा पारार्थ्यमनेकत्वं नाशित्वं च न केनचिदुपपत्त्या वारयितुं शक्यम्—अस्वार्थस्य स्वतःसिद्ध्यभावादित्यवोचाम। चैतन्यस्वरूपस्य त्वात्मनः स्वतः सिद्धेरन्यानपेक्षत्वं न केनचिद्वारयतुं शक्यम्, अव्यभिचारात्। ९१॥**

**ननु व्यभिचारो दर्शितो मया—सुषुप्ते न पश्यामीति॥ ९२।**

**न, व्याहतत्वात् कथं व्याघातः? पश्यतस्तव न पश्यामीति व्याहतं वचनम्। न हि कदाचिद्भगवन्, सुषुप्ते मया चैतन्यमन्यद्वा किंचिद्दृष्टम्।**

---

दृष्ट्यादेरौपाधिकरूपस्यागन्तुकत्वेऽपि स्वरूपचैतन्यमात्रमनागन्तुकमिति विचार्य तं विजानीहि इति सिद्धान्ती ब्रूते—

**न पश्येति।** चैतन्यमात्रस्यानौपाधिकस्यागन्तुकत्वानुपपत्ति। उक्तेऽर्थे हेतुमाह—**तदनुपपत्तेरिति।** अनुपपत्तिमेव साधयति—**चैतन्यस्वरूपं चेदागन्तुकं पश्यसि पश्य, नैतद्वर्षशतेनाप्युपपत्त्या कलयितुं शक्नुमो वयम्।** एवं चेत्पश्यसि तर्हि पश्य पर्यालोचय, वयं तु तद्वर्षशतेनापि युक्त्या घटयितुं न शक्नुमः। तद्ग्राहकप्रमाणाभावादित्यर्थः। तर्हि कश्चित्तद्व्यतिरिक्तश्चैतन्यस्याभावं निश्चिनोतीत्याशङ्क्य स किमचेतनश्चेतनो वेति विकल्प्य आद्यं प्रत्याह—स्वाभावमाकलयेत्। स चेच्चैतन्यादन्योऽचैतन्यो मूढोऽभ्युपगम्यते। सोऽपि तर्हि संहतत्वादिदोषभाक्त्वाच्चैतन्यगोचरत्वान्न तस्याभावमुद्भावयेत्। नहि चैतन्यादन्यः स्वयमपि सेद्धुमशक्नुवन् अभावं चैतन्यस्य साधयितुं शक्नोतीत्यर्थः। यदि चैतन्येनैव चैतन्यस्यागन्तुकत्वं गृह्यते तन्न। स्वस्कन्धारोहकल्पायाः स्ववृत्तेरसम्भवाद्भेदकाकारमन्तरेण च भेदायोगादित्यभिप्रेत्याह—**चैतन्यस्वरूपस्यात्मनः स्वतःसिद्धेरन्यानपेक्षत्वं न केनचिद्वारयितुं शक्यम् अव्यभिचारात्।** किञ्चात्मनः स्वसत्तायां चैतन्याव्यभिचारादनागन्तुकं चैतन्यमेषितव्यम्। अतश्चैतन्यादन्यो**ऽचैतन्योऽपि। चैतन्यादन्यस्य संहतत्वात्पारार्थ्यमनेकत्वं नाशित्वं च न केनचिदुपपत्त्या वारयितुं शक्यम्। अस्वार्थस्य स्वतः सिध्यभावादित्यवोचाम।** यच्चैतन्यमनागन्तुकं प्रागभावशून्यं वा शशशृङ्गवदित्याह—**अव्यभिचारादिति।** "**पश्यतस्तदनुपपत्ते**"रित्यादिपाठोऽपि यथोक्तरीत्या नेतव्यः॥ ९१॥

अव्यभिचारस्यासिद्धिमाशङ्कते—**ननु व्यभिचारो दर्शितो मया सुषुप्ते न पश्यामीति।**
अयमहमस्मीत्यात्मानं इमानि भूतानीत्यनात्मानं च सुषुप्ते न पश्यामि तेन तत्र चैतन्याभावादव्यभिचारहेतोरसिद्धिरित्यर्थः॥ ९२॥

सुषुप्ते न पश्यामीति वचनस्य विरुद्धत्वान्मैवं वक्तव्यमित्युत्तरमाह—**न, व्याहतत्वात्।** व्याहतिमेव प्रश्नद्वारा प्रकटयति—**कथं व्याघातः? पश्यतस्तव न पश्यामीति व्याहतं वचनम्।** पश्यतस्तवेत्येतदमृष्यन्नाह—**न कदाचिद्भगवन्सुषुप्ते मया चैतन्यमन्यद्वा किञ्चिद्दृष्टम्।** यदि सुषुप्ते न किंचित्पश्यसि

**पश्यंस्तर्हि सुषुप्ते त्वम्; यस्माद्दृष्टमेव प्रतिषेधसि, न दृष्टिम्। या तव दृष्टिः, तच्चैतन्यम्, इति मयोक्तम्। यया त्वं विद्यमानया न किंचिद्दृष्टमिति प्रतिषेधसि, सा दृष्टिस्त्वच्चैतन्यम्। तर्हि सर्वत्राव्यभिचारात्कूटस्थनित्यत्वं सिद्धं स्वत एव न प्रमाणापेक्षम्। स्वतःसिद्धस्य हि प्रमातुरन्यस्य प्रमेयस्य परिच्छित्तिं प्रति प्रमाणापेक्षा। या त्वन्या नित्या परिच्छित्तिरपेक्ष्यतेऽन्यस्यापरिच्छित्तिरूपस्य परिच्छेदाय सा हि नित्यैव कूटस्था स्वयंज्योतिःस्वभावा आत्मनि प्रमाणत्वे प्रमातृत्वे वा न तां प्रति प्रमाणापेक्षा, तत्स्वभावत्वात् यथा प्रकाशनमुष्णत्वं वा लोहोदकादिषु परतोऽपेक्ष्यते अग्न्यादित्यादिभ्यः, अतत्स्वभावत्वात्. नाग्न्यादित्यादीनां तदपेक्षा, सदा तत्स्वभावत्वात् ॥ ९३ ॥**

**अनित्यत्व एव प्रमा स्यात्, न नित्यत्व इति चेत् ॥ ९४ ॥**

---

तर्हि न किञ्चिदेतावन्तं कालं मया दृष्टमित्युत्थितस्य परामार्शानुपपत्त्या स्वरूपभूताया दृष्टेः अव्यभिचारः सिध्यतीत्याह—**पश्यंस्तर्हि सुषुप्ते त्वम्। यस्मात् दृष्टमेव प्रतिषेधसि न दृष्टिम्। या तव दृष्टिस्तच्चैतन्यमिति मयोक्तम्।** द्रष्टेति यावत्। पश्यतीति पाठेऽप्ययमेवार्थः। आत्मनः सुषुप्ते दृष्टिरस्तीत्यत्र हेतुमाह—**यस्मादिति**। सुषुप्ते दृष्टिरिष्टाऽस्तु तथापि चैतन्यं कथं सिद्धम् ? तत्राह—**या तवेति**। तदेव स्पष्टयति—**यया त्वं विद्यमानया न किंचित् दृष्टमिति प्रतिषेधसि सा दृष्टिस्तच्चैतन्यम्** चैतन्यस्याव्यभिचारे दर्शितरीत्या सिद्धे तस्य कूटस्थत्वं स्वप्रकाशत्वं च सिद्धमित्याह—**तर्हि सर्वत्राव्यभिचारात्कूटस्थनित्यत्वं सिद्धं स्वत एव न प्रमाणापेक्षम्। स्वतः सिद्धस्य हि प्रमातुरन्यस्य प्रमेयस्य परिच्छित्तिं प्रति प्रमाणापेक्षा। या त्वन्या नित्या परिच्छित्तिरपेक्ष्यते अन्यस्यापरिच्छित्तिरूपस्य परिच्छेदाय सा हि नित्यैव कूटस्था स्वयंज्योतिः स्वभावा।**

स्वयंप्रकाशत्वे हेत्वन्तरमाह—**स्वतः सिद्धस्येति**। प्रमाता हि चिद्रूपत्वाद यापेक्षामन्तरेण स्फुरति। असन्दिग्धस्वभावश्च निश्चितः तस्य व्यतिरिक्तं यत्प्रमेयं यदि तस्य जडस्याचिद्रूपस्य परिच्छित्तिर्निश्चितिस्तामुद्दिश्य प्रमाणापेक्षायां सत्यां चितेरन्या प्रमाणजन्या परिच्छित्तिरनित्याऽपेक्ष्यते। प्रमातुरतिरिक्तस्य प्रमेयस्यासंविद्रूपस्य निश्चयाय प्रमाणद्वारा परिच्छित्त्यपेक्षाया युक्तत्वात्। प्रमाता तु संविद्रूपत्वादसन्दिग्धः स्वतः वस्तुत्वाच्च निरपेक्षः स्फुरतीत्यर्थः। संवित्स्वभावत्वं स्फोरयति—**सा हि नित्यैव कूटस्था स्वयंज्योतिः स्वभावा आत्मनि प्रमाणत्वे प्रमातृत्वे वा न तां प्रति मानापेक्षा तत्स्वभावत्वात्।** आत्मनि बुद्धिवृत्तिप्रतिबिम्बिते प्रमाणत्वं, वृत्तिमदन्तःकरणप्रतिबिम्बिते च प्रमातृत्वं कल्प्यते। तत्रोभयत्रात्मनः स्फूर्तिं प्रति न प्रमाणापेक्षा युज्यते। स्वयं संवित्स्वभावत्वादित्यर्थः। असंवित्स्वभावस्यैव प्रमेयस्य प्रमाणापेक्षा नात्मनः संवित्स्वभावत्वे इत्यत्र दृष्टान्तमाह—**यथा प्रकाशनमुष्णत्वं वा लोहोदकादिषु परतोऽपेक्ष्यते अग्न्यादित्यादिभ्यः अतत्स्वभावत्वात्। नाग्न्यादित्यादीनां तदपेक्षा सर्वदा तत्स्वभावत्वात् ॥ ९३ ॥**

नित्यैव संविदित्युक्तमाक्षिपति—**अनित्यत्व एव प्रमा स्यान्न नित्यत्वे इति चेत् ॥ ९४ ॥**

**न, अवगतेर्नित्यत्वानित्यत्वयोर्विशेषानुपपत्तेः—नहि अवगतेः प्रमात्वेऽनित्यावगतिः प्रमा, न नित्या इति विशेषोऽवगम्यते ॥ ९५ ॥**

**नित्यायां प्रमातुरपेक्षाभावः, अनित्यायां तु यत्नान्तरितत्वादवगतिरपेक्षत इति विशेषः स्यादिति चेत् ॥ ९६ ॥**

**सिद्धा तर्ह्यात्मनः प्रमातुः स्वतःसिद्धिः प्रमाणनिरपेक्षतयैवेति ॥ ९७ ॥**

**अभावेऽप्यपेक्षाऽभावः, नित्यत्वादेवेति चेत् ॥ ९८ ॥**

---

चक्षुरादिप्रमाणसामग्रीप्रसूता प्रमैवावगतिरित्युच्यते। तथा च प्रमात्वप्रसिद्ध्यनुपपत्त्यैव संवित्तेरनित्यत्वं वक्तव्यमित्यर्थः।

प्रमाणाभासानां अज्ञानाश्रयणेन संवित्तिः प्रमेत्येतावतैव तद्व्यावृत्तिसिद्धेर्जन्यत्वविशेषणं व्यर्थमित्युत्तरमाह—**न, अवगतेर्नित्यत्वानित्यत्वयोर्विशेषानुपपत्तेः।**

विशेषानुपपत्तिमेव विशदयति न च स्वमते प्रमाणत्वे, अनित्याऽवगतिः प्रमाणं भवति। नित्या न तथेति विशेषो न प्रतिभातीत्यर्थः ॥ ९५ ॥

तत्र पूर्ववादी विशेषं दर्शयति—

**नित्यायां प्रमातुरपेक्षाभावो**ऽनित्यायां तु यत्नान्तरितत्वात् **अवगतिरपेक्षत इति विशेषः स्यादिति चेत्।**

नित्यावगतिपक्षे प्रमातुः स्वावगतये प्रमाणापेक्षा न भवति। अनित्यायां त्ववगतौ प्रयत्नव्यवधानादवगतिसाधनमपेक्षते प्रमातेति विशेषोऽस्तीत्यर्थः ॥ ९६ ॥

नित्यावगतिपक्षे प्रमाणनैरपेक्ष्यं त्वयोच्यते चेत् तर्हि सिद्धमस्मदिष्टमिति सिद्धान्तवाद्याह—**सिद्धा तर्ह्यात्मनः प्रमातुः स्वतः सिद्धिः प्रमाणनिरपेक्षतयैवेति ॥ ९७ ॥**

प्रमाणनिरपेक्षत्वेन स्वतःसिद्धिमभ्यनुजानता प्रमाणाभावापेक्षाऽभ्युपगता भवति। सापि प्रमाणाभावविषयापेक्षा तवायुक्ता नित्यत्वादवगतेरिति पूर्ववाद्याह—**अभावेऽप्यपेक्षाभावो नित्यत्वादेवेति चेत् ॥ ९८ ॥**

**न, अवगतेरेवात्मनि सद्भावादिति परिहृतमेतत् । प्रमातुश्चेत्प्रमाणापेक्षा सिद्धिः कस्य प्रमित्सा स्यात् ? यस्य प्रमित्सा, स एव प्रमाताऽभ्युपगम्यते । तदीया च प्रमित्सा प्रमेयविषयैव, न प्रमातृविषया, प्रमातृविषयत्वेऽनवस्थाप्रसङ्गात्प्रमातुस्तदिच्छायाश्च तस्याप्यन्यः प्रमाता तस्याप्यन्य इति । एवमेवेच्छायाः । प्रमातृविषयत्वे प्रमातुरात्मनोऽव्यवहितत्वाच्च प्रमेयत्वानुपपत्तिः । लोके हि प्रमेयं नाम प्रमातुरिच्छास्मृतिप्रयत्नप्रमाणजन्मव्यवहितं सिद्ध्यति, नान्यथा अवगतिः प्रमेयविषया दृष्टा । न च प्रमातुः प्रमाता स्वस्य स्वयमेव केनचिद्व्यवहितः कल्पयितुं शक्यः इच्छादीनामन्यतमेनापि । स्मृतिश्च स्मर्तव्यविषया, न स्मर्तृविषया । तथेच्छाया इष्टविषयत्वमेव, नेच्छावद्विषयत्वम् । स्मर्त्रिच्छावद्विषयत्वेऽपि ह्युभयोरनवस्था पूर्ववदपरिहार्या स्यात् ॥ ९९ ॥**

---

स्वभावत एवावगतेः सद्भावात्प्रमाणाभावेऽपि नापेक्षाऽस्तीत्युत्तरमाह—**न अवगतेरेवात्मनि सद्भावादिति परिहृतमेतत्** । आत्मनः स्वतस्सिद्धौ हेत्वन्तरमाह—

**प्रमातुश्चेत्प्रमाणापेक्षया सिद्धिः कस्य प्रमित्सा स्यात्** । ततो व्यतिरिक्तस्यैव तद्विषया प्रमित्सा सेत्स्यतीत्याशङ्क्याह—**यस्य प्रमित्सा स एव प्रमाता अभ्युपगम्यते** । किञ्च पुत्रादिकमिष्टं वस्तु लोके प्रमातुमिष्यते । न तु प्रमातृविषया काचिदिच्छा तस्यैव संगच्छते । स्वकर्तृकेच्छाकर्मत्वायोगादित्याह—**तदीया च प्रमित्सा प्रमेयविषयैव न प्रमातृविषया** । प्रमात्रन्तरकर्तृकेच्छाकर्मत्वं प्रमातुरिष्टमित्याशङ्क्यानवस्थाद्वयप्रसङ्गान्मैवमित्याह्—**प्रमातृविषयत्वेऽनवस्थाप्रसङ्गात् प्रमातुस्तदिच्छायाश्च** । तत्र प्रमात्रनवस्थां प्रकटयति—**तस्याप्यन्यः प्रमाता तस्याप्यन्य इति** । तदिच्छानवस्थां कथयति—**एवमेवेच्छायाः** । यदि प्रमातुरिच्छायाः प्रमातृविषयत्वं तदा तदिच्छापि प्रमात्रन्तरविषयेति प्रमात्रनवस्थावदिच्छानवस्था दुर्वारेत्यर्थः । इत्यात्मनः स्वतः सिद्धिर्वक्तव्येत्याह—**प्रमातृविषयत्वे प्रमातुरात्मनोऽव्यवहितत्वाच्च प्रमेयत्वानुपपत्तिः** । आत्मनः सकाशात्प्रमातुरव्यवहितत्वादेव घटादिवत्प्रमेयत्वानुपपत्तेः स्वतः सिद्धिरित्येतदेव प्रपञ्चयति—**लोके हि प्रमेयं नाम प्रमातुरिच्छास्मृतिप्रयत्नप्रमाणजन्मव्यवहितं सिध्यति । नान्यथाऽवगतिः प्रमेयविषया दृष्टा । न च प्रमातुः प्रमाता स्वस्य स्वयमेव केनचिद्व्यवहितः शक्यः कल्पयितुम् इच्छादीनामन्यतमेनापि** । व्यवहारभूमौ हि घटादिकं वस्तु प्रमेयत्वेन प्रसिद्धम् । प्रमाता प्रथमं जिज्ञासते । तस्य चेष्टायां सत्यां तस्मिन्विषये समीहितसाधनत्वस्मृतिरुपावर्तते । ततो याथातथ्येन तज्ज्ञाने प्रयतते । प्रयत्नानन्तरं तत्र चक्षुरादिव्यापारात्प्रमाणमुत्पद्यते । एवं प्रमातुरेतैर्व्यवहितं प्रमेयं प्रसिद्धं भवति । यथोक्तेच्छादिव्यवधानव्यतिरेकेणावगतिर्न प्रमेयविषया लोके क्वापि दृष्टा । प्रमातुश्च स्वयमेव स्वस्येच्छादीनामन्यतमेन केनचिद्व्यवहितिः नैव कल्पयितुं शक्यते । तस्मात्प्रमेयत्वायोगात्प्रमातुः स्वतः सिद्धिरेवास्थेयेत्यर्थः । किञ्च स्मृतिरिव न प्रमातृविषया भवितुमर्हतीत्याह—**स्मृतिश्च स्मर्तव्यविषया** । विपक्षे दोषमाह—**न स्मर्तृविषया । तथेच्छाया इष्टविषयत्वमेव । नेच्छावद्विषयत्वं स्मर्त्रिच्छावद्विषयत्वेऽपि ह्युभयोरनवस्था पूर्ववदपरिहार्या स्यात्** । यदि स्मृतेः स्मर्तृविषयत्वं इच्छायाश्चेच्छावद्विषयत्वं, तदा स्मृतितद्वतोश्च प्रमात्राद्यनवस्थावदनवस्था दुर्वारा प्रसरेत् । स्मृतेः स्मर्तृविषयत्वे स्मर्तृविशेषणभूतस्मृतेरपि स्मृत्यन्तरविषयत्वादिच्छायास्तद्वद्विषयत्वे च तद्विशेषणभूतेच्छाया अपि तथात्वस्य दुष्परिहरत्वादित्यर्थः ॥ ९९ ॥

**ननु प्रमातृविषयावगत्यनुत्पत्तौ, अनवगत एव प्रमाता स्यादिति चेत् ॥१००॥**

**न, अवगन्तुरवगतेरवगन्तव्यविषयत्वात्, अवगन्तृविषयत्वे चानवस्था पूर्ववत्स्यात् अवगतिश्चात्मनि कूटस्थनित्यात्मज्योतिरन्यतोऽनपेक्षैव सिद्धा, अग्न्यादित्याद्युष्णप्रकाशवत् इति पूर्वमेव प्रसाधितम्। अवगतेश्चैतन्यात्मज्योतिषः स्वात्मन्यनित्यत्वे, आत्मनः स्वार्थतानुपपत्तिः कार्यकरणसंघातवत्संहतत्वात्पारार्थ्यं दोषवत्त्वं चावोचाम। कथं? चैतन्यात्मज्योतिषः स्वात्मन्यनित्यत्वे स्मृत्यादिव्यवधानात्सान्तरत्वम्। ततश्च तस्य चैतन्यज्योतिषः प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमात्मन्येवाभावात्, चक्षुरादीनामिव संहतत्वात्, पारार्थ्यं स्यात्। यदा च तदुत्पन्नमात्मनि विद्यते, न तदाऽऽत्मनः स्वार्थत्वम्, तद्भावाभावापेक्षा ह्यात्मानात्मनोः स्वार्थत्वपरार्थत्वसिद्धिः। तस्मादात्मनोऽन्यनिरपेक्षमेव नित्यचैतन्यज्योतिष्ट्वं सिद्धम् ॥ १०१ ॥**

---

यद्विषयावगतिरुत्पद्यते सोऽवगतो व्यवह्रियते। प्रमातरि पुनरवगतेरनुत्पत्तौ स सुषुप्तसमः स्यादिति स्वतः सिद्धत्वबाधकं शङ्कते—**ननु प्रमातृविषयावगत्यनुत्पत्तौ अनवगत एव प्रमाता स्यादिति चेत् ॥१००॥**

किमेतया प्रक्रियया सुषुप्तसाम्यं परिहर्तुमवगतिविषयत्वमात्मनो विवक्ष्यते। किं वा सुषुप्तसाम्यपरिहारोऽस्य मृग्यते। तत्राद्यं दूषयति।

**न अवगन्तुरवगतेरवगन्तव्यविषयत्वात्।** यदि पुनरवगतेरवगन्तृविषयत्वमिष्यते तत्राह—**अवगन्तृविषयत्वेऽनवस्था पूर्ववदपरिहार्या स्यात्।** यथा पूर्वं प्रमात्राद्यनवस्थोक्ता तथाऽवगतेरवगन्तृविषयत्वे तद्विशेषणावगतेरपि तथाविधावगन्तृविषयत्वादवगतेरवगन्तुश्चानवस्था दुःखस्था स्यादित्यर्थः। द्वितीयं प्रत्याह—**अवगतिश्चात्मनि कूटस्थनित्यात्मज्योतिः अन्यतोऽनपेक्षैव सिद्धा अग्न्यादित्याद्युष्णप्रकाशवदिति पूर्वमेव प्रसाधितम्। अवगतेश्चैतन्यात्मज्योतिषः स्वात्मन्यनित्यत्वे आत्मनः स्वार्थत्वानुपपत्तिः।** न केवलं स्वार्थत्वासिद्धिः परार्थत्वं च स्यादित्याह—**कार्यकरणवत्संहतत्वात्पारार्थ्यं दोषवत्त्वं चावोचाम।** उक्तमेवार्थं प्रश्नपूर्वं समर्थयते **कथं? चैतन्यात्मज्योतिषः स्वात्मन्यनित्यत्वे स्मृत्यादिव्यवधानात्सान्तरत्वम्**[1]**। ततश्च तस्य चैतन्यज्योतिषः प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमात्मन्येवाभावात् चक्षुरादीनामिव संहतत्वात्पारार्थ्यं स्यात्।** प्रागूर्ध्वमित्यवधिकरणप्रयुक्तं फलं कथयति—**यदा च तदुत्पन्नमात्मनि विद्यते न तदाऽऽत्मनः स्वार्थत्वम्।** चैतन्यप्रभावापेक्षमात्मनः स्वार्थत्वम्। अनात्मनस्तु परार्थत्वं चेतनाभावापेक्षमित्युक्तमेव व्यनक्ति। **तद्भावाभावापेक्षा ह्यात्मानात्मनोः स्वार्थत्वपरार्थत्वसिद्धिः।** आत्मनः स्वार्थत्वे सिद्धे फलितमाह—**तस्मादात्मनोऽन्यनिरपेक्षमेव नित्यचैतन्यज्योतिष्ट्वं सिद्धम् ॥ १०१ ॥**

---

१. इच्छादिवृत्त्यन्तरपूर्वकत्व—रामतीर्थ।

नन्वे वंसति, असति प्रमाश्रयत्वे, कथं प्रमातुः प्रमातृत्वम् ? ॥ १०२ ॥

उच्यते—प्रमाया नित्यत्वेऽनित्यत्वे च रूपविशेषाभावात् । अवगतिर्हि प्रमा, तस्याः स्मृतीच्छादिपूर्विकाया अनित्यायाः कूटस्थनित्याया वा, न स्वरूपविशेषो विद्यते, यथा धात्वर्थस्य तिष्ठत्यादेः फलस्य गत्यादिपूर्वकस्यानित्यस्यागतिपूर्वस्य नित्यस्य वा रूपविशेषो नास्तीति तुल्यो व्यपदेशो दृष्टः—"तिष्ठन्ति मनुष्याः", "तिष्ठन्ति पर्वताः" इत्यादिः । तथा नित्यावगतिस्वरूपेऽपि, प्रमातरि प्रमातृत्वव्यपदेशो न विरुध्यते, फलसामान्यादिति ॥ १०३ ॥

अत्राह शिष्यः—नित्यावगतिस्वरूपस्यात्मनोऽविक्रियत्वात्कार्यकरणैरसंहत्य तक्षादीनामिव वास्यादिभिः कर्तृत्वं नोपपद्यते । असंहतस्वभावस्य च कार्यकरणोपादानेऽनवस्था

---

आत्मनो नित्यचैतन्यज्योतिष्ट्वे प्रमातृत्वाभावान्न प्रमातृत्वव्यपदेशोपपत्तिरिति शङ्कते—**नन्वेवं सत्यसति प्रमाश्रयत्वे कथं प्रमातुः प्रमातृत्वमिति ॥ १०२ ॥**

चैतन्यस्य कूटस्थज्योतिष्ट्वेऽपि सम्भवत्यौपचारिकं प्रमातृत्वमित्युत्तरमाह—**उच्यते-प्रमायाः नित्यत्वे अनित्यत्वे च रूपविशेषाभावात्** । तदेव विवृणोति—**अवगतिर्हि प्रमा । तस्याः स्मृतीच्छापूर्विकाया अनित्यायाः कूटस्थनित्याया वा न स्वरूपविशेषो विद्यते** । अवगतेर्नित्यत्वे अनित्यत्वे च स्वरूपविशेषाभावात्प्रमातरि व्यपदेशस्य तुल्यत्वोपपत्तिरिति दृष्टान्तेन स्पष्टयति—**यथा धात्वर्थस्य तिष्ठत्यादेः फलस्य गत्यादिपूर्वकस्य अनित्यस्य अगतिपूर्वस्य नित्यस्य वा रूपविशेषो नास्तीति तुल्यो व्यपदेशो दृष्टः । तिष्ठन्ति मनुष्यास्तिष्ठन्ति पर्वता इत्यादिः । तथा नित्यावगतिस्वरूपेऽपि प्रमातरि प्रमातृत्वव्यपदेशो न विरुध्यते फलसामान्यादिति ।**

धात्वर्थस्य तिष्ठत्यादेरिति सामानाधिकरण्यम् । आदिशब्देन भवत्यादि गृह्यते । तदीयं फलं गतिनिवृत्तिः सत्त्वं इत्यादि । गत्यादीत्यादिशब्देन भवनादिग्रहणम् । घटो भवत्यात्मा भवतीत्यादि । स्वरूपत्वेन नित्यत्वेऽपि प्रमातृत्वव्यपदेशोपपत्तिरित्यत्र हेतुमाह—**फलेति** । नित्यत्वे च फलरयावगतेः समानत्वात्प्रमातृत्वव्यपदेशस्यात्मन्यविरुद्धतेत्यर्थः ॥ १०३ ॥

कूटस्थज्योतिःस्वभावत्वेऽपि प्रमातृत्वव्यपदेशमात्मन्यौपचारिकमविरुद्धमुक्त्वा कर्तृत्वासम्भवं वक्तुं चोद्यमुद्भावयति—**अत्राह—शिष्यः नित्यावगतिस्वरूपस्यात्मनोऽविक्रियत्वात्कार्यकरणैरसंहत्य तक्षादीनामिव वास्यादिभिः कर्तृत्वं नोपपद्यते** । कार्यकरणैः संहतिमप्राप्य कर्तृत्वं नोपपद्यते चेर्तहि कार्यकरणोपादानपूर्वककर्तृत्वं भविष्यतीत्याशङ्क्याह—**असंहतस्वभावस्य कार्यकरणोपादानेऽनवस्था**

**प्रसज्येत । तक्षादीनां तु कार्यकरणैर्नित्यमेव संहतत्वमिति वास्याद्युपादाने नानवस्था स्यादिति ॥ १०४ ॥**

**इह तु असंहतस्वभावस्य करणानुपादाने कर्तृत्वं नोपपद्यत इति करणमुपादेयम्, तदुपादानमपि विक्रियैवेति तत्कर्तृत्वे करणान्तरमुपादेयम्, तदुपादानेऽप्यन्यदिति प्रमातुः स्वातन्त्र्येऽनवस्थाऽपरिहार्या स्यादिति । न च क्रियैवात्मानं कारयति, अनिर्वर्तितायाः स्वरूपाभावात् । अथान्यदात्मानमुपेत्य क्रियां कारयतीति चेत्—न, अन्यस्य स्वतःसिद्धत्वाविषयत्वाद्यनुपपत्तेः न ह्यात्मनोऽन्यदचेतनं वस्तु स्वप्रमाणकं दृष्टम् । शब्दादि सर्वमेवावगतिफलावसानप्रत्ययप्रमितं सिद्धं स्यात् । अवगतिश्चेदात्मनोऽन्यस्य स्यात्, सोऽप्यात्मैवासंहतः स्वार्थः स्यात् न परार्थः । न च देहेन्द्रियविषयाणां स्वार्थतामवगन्तुं शक्नुमोऽवगत्यवसानप्रत्ययापेक्षसिद्धिदर्शनात् ॥ १०५ ॥**

---

**प्रसज्यते** । कार्यकरणोपादानमपि क्रियात्वादुपादानान्तरपूर्वकं तदपि तथेत्यनवस्थाप्रसक्तिरित्यर्थः । यथा तक्षादीनां वास्यादिभिः संहतानां वास्योपादानेऽपि नानवस्था तथाऽत्रापि स्यादित्याशङ्क्याह— **तक्षादीनां तु कार्यकरणैर्नित्यमेव संहतत्वमिति** वास्याद्युपादाने नानवस्था स्यात् ॥ १०४ ॥

दार्ष्टान्तिके दृष्टान्ताद्विशेषं दर्शयन्ननवस्थां व्यवस्थापयति—**इह त्वसंहतस्वभावस्य करणानुपादाने कर्तृत्वं नोपपद्यत इति करणमुपादेयम् । तदुपादानमपि विक्रियैवेति तत्कर्तृत्वे करणान्तरमुपादेयम् । तदुपादानेऽप्यन्यदिति प्रमातुः स्वातन्त्र्येऽनवस्थाऽपरिहार्या** । स्वातन्त्र्ये कर्तृत्वे सतीत्यर्थः । एवमात्मनि शिष्येणोक्तं कर्तृत्वासम्भवमभ्युपेत्य क्रियैव धात्वर्थो नियोगो वा कार्यत्वेनावगतः स्वसिद्ध्यर्थं पुरुषं प्रेरयतीति मतान्तरमाशङ्क्य निराकरोति—**न च क्रियैवात्मानं कारयति अनिर्वर्तितायाः स्वरूपाभावात् ।** पूर्वादृष्टमेवात्मानं प्राप्य तत्र कर्तृत्वं सम्पादयतीति मतान्तरमाह— **अथान्यदात्मानमुपेत्य क्रियां कारयतीति चेत्** । अदृष्टस्यात्मव्यतिरिक्तत्वान्न स्वतः सिद्धिर्घटादिवत् न चात्मत्वात्तद्वदेवाविषयत्वम् । न च ताभ्यामनात्मनस्तस्यात्मप्रेरकत्वम् । अतो न पूर्वादृष्टावष्टम्भादात्मनि कर्तृत्वसिद्धिरिति दूषयति—**न अन्यस्य स्वतः सिद्धत्वाविषयत्वाद्यनुपपत्तेः** । अदृष्टस्यानात्मनः स्वतः सिद्धत्वाभावं स्पष्टयति—**न ह्यात्मनोऽन्यदचेतनं वस्तु स्वप्रमाणकं दृष्टम्** । कथं तर्हि शब्दादेः सिद्धिरतत्राह—**शब्दादि सर्वमेवावगतिफलावसानप्रत्ययप्रमितं सिद्धं स्यात्** । नन्वात्मव्यतिरिक्तोऽपीश्वरः सर्वज्ञः सन्नात्मप्रेरकः स्यादिति चेत्तत्राह—**अवगतिश्चेदात्मनोऽन्यस्य स्यात् सोऽप्यात्मैवासंहतः स्वार्थः स्यान्न परार्थः** । लौकिकदृष्ट्या आत्मनोऽन्यस्येश्वरस्य स्वाभाविकी चेदवगतिरिष्टा सोऽप्यस्माकमात्मैव "अयमात्मा ब्रह्मेति" श्रुतेः । अतो न तस्मिन्नात्मप्रेरकत्वोपपत्तिरित्यर्थः । चैतन्याश्रयो देहादिरेवात्मेत्यङ्गीकारात्कथं तस्यासंहतत्वमित्याशङ्क्याह—**न च देहेन्द्रियविषयाणां स्वार्थतामवगन्तुं शक्नुमः । अवगत्यवसानप्रत्ययापेक्षसिद्धिदर्शनात्** ।

यथा वह्निगतेन प्रकाशेन वह्निर्न प्रकाश्यते । तथा देहधर्मश्चेदवगतिर्न तया देहोऽवगम्येत । अवगम्यते च अतो देहो नात्मा ॥ १०५ ॥

**ननु देहस्यावगतौ न कश्चित्प्रत्यक्षादिप्रत्ययान्तरमपेक्षते ॥ १०६ ॥**

**बाढम्, जाग्रत्येवं स्यात् । मृतिसुषुप्तयोस्तु देहस्यापि प्रत्यक्षादिप्रमाणापेक्षैव सिद्धिः, तथैवेन्द्रियाणाम्—बाह्या एव हि शब्दादयो देहेन्द्रियाकारपरिणताः—इति प्रत्यक्षादिप्रमाणापेक्षैव हि सिद्धिः । सिद्धिरिति च प्रमाणफलमवगतिमवोचाम । सा चावगतिः कूटस्था स्वयंसिद्धा आत्मज्योतिः स्वरूपेति च ॥ १०७ ॥**

**अत्राह चोदकः—अवगतिः प्रमाणानां फलं कूटस्थनित्यात्मज्योतिःस्वरूपेति च विप्रतिषिद्धम् । इत्युक्तवन्तमाह—न विप्रतिषिद्धम् । कथं तर्हि ? कूटस्था नित्यापि सती प्रत्यक्षादिप्रत्ययान्ते लक्ष्यते तादर्थ्यात् । प्रत्यक्षादिप्रत्ययस्य अनित्यत्वे, अनित्येव भवति । प्रमाणानां फलमित्युपचर्यते ॥ १०८ ॥**

**यद्येवं भगवन्, कूटस्थनित्यावगतिरात्मज्योतिःस्वरूपैव स्वयंसिद्धा, आत्मनि**

---

अवगत्यपेक्षसिद्धित्वमित्यत्र शङ्कते—**ननु देहस्यावगतौ न कश्चित् प्रत्यक्षादिप्रत्ययान्तरमपेक्षते॥१०६॥**

तत्राद्यमङ्गीकृत्याद्यं दूषयति—

**बाढम् जाग्रत्येवं स्यात् मृतिसुषुप्तयोस्तु देहस्यापि प्रत्यक्षादिप्रमाणापेक्षैव सिद्धिः तथैवेन्द्रियाणाम्** । यथा जडस्य देहस्य प्रत्यक्षाद्यपेक्षा सिद्धिस्तथा इन्द्रियाणामपि जडत्वाविशेषात्तदपेक्षैव सिद्धिरित्याह—**तथेति** । किञ्च देहादिरनात्मा भौतिकत्वादुभयसम्प्रतिपन्नशब्दादिवदित्याह—**बाह्या एव हि शब्दादयो देहेन्द्रियाकारपरिणताः** । किञ्च शब्दादीनां प्रत्यक्षादिसापेक्षसिद्धित्वात्तेषामेव देहाद्याकारपरिणतानां तदपेक्षसिद्धित्वं दृढमित्याह—**इति प्रत्यक्षादिप्रमाणापेक्षैव सिद्धिः** । ननु सिद्धिरुत्पत्तिरुच्यते । न सा प्रत्यक्षाद्यपेक्षा तत्राह—**सिद्धिरिति प्रमाणानां फलमवगतिमवोचाम** । ननु मदशक्तिवद्देहाकारपरिणतेषु भूतेष्ववगतिरुत्पद्यत इति । न, प्रागुक्तन्यायपरास्तत्वादित्याह—**सा चावगतिः कूटस्था स्वयंसिद्धाऽऽत्मज्योतिःस्वरूपेति च** क्रियापदानुषङ्गद्योतकोऽन्यश्चकारः ॥ १०७ ॥

कूटस्था चेदवगतिस्तर्हि फलत्वं तस्या व्याहतमिति चोदयति—**अत्राह चोदकः अवगतिः प्रमाणानां फलं कूटस्थनित्यात्मज्योतिःस्वरूपेति च विप्रतिषिद्धम्** । कूपाकाशकार्यत्ववदौपचारिकं कार्यत्वमुपेत्य फलं दर्शयति—**इत्युक्तवन्तमाह न विप्रतिषिद्धम्** । **कथं तर्हि कूटस्था नित्यापि सती प्रत्ययान्ते लक्ष्यते तादर्थ्यात्** । **प्रत्यक्षादिप्रत्ययस्यानित्यत्वे अनित्येव भवति** । तेन **प्रत्ययानां फलमित्युपचर्यते** ॥ १०८ ॥

प्रमातृत्वं कर्तृत्वं फलत्वं च कूटस्थावगतिस्वरूपे कल्पनामात्रमित्युपपाद्याधुना बाह्यद्वैतस्यापि कल्पितत्वं चोद्यमुखेन दर्शयति—**यद्येवं भगवन् कूटस्थनित्यावगतिरात्मज्योतिःस्वरूपैव स्वयंसिद्धा** । **आत्मनि**

प्रमाणनिरपेक्षत्वात्. ततोऽन्यदचेतनं संहत्यकारित्वात्परार्थम् । येन च सुखदुःखमोहहेतुप्रत्ययावगतिरूपेण पारार्थ्यं, तेनैव स्वरूपेणानात्मनोऽस्तित्वं, नान्येन रूपान्तरेण । अतो नास्तित्वमेव परमार्थतः । यथाहि लोके रज्जुसर्पमरीच्युदकादीनां तदवगतिव्यतिरेकेणाभावो दृष्टः, एवं जाग्रत्स्वप्नद्वैतभावस्यापि तदवगतिव्यतिरेकेणाभावो युक्तः । एवमेव परमार्थतः भगवन्, अवगतेरात्मज्योतिषो नैरन्तर्यभावात्कूटस्थनित्यताऽद्वैतभावश्च, सर्वप्रत्ययभेदेष्वव्यभिचारात् । प्रत्ययभेदाश्चावगतिं व्यभिचरन्ति । यथा स्वप्ने नीलपीताद्याकारभेदरूपाः प्रत्ययास्तदवगतिं व्यभिचरन्तः परमार्थतो न सन्तीत्युच्यन्ते, एवं जाग्रत्यपि नीलपीतादिप्रत्ययभेदास्तामेवावगतिं व्यभिचरन्तोऽसत्यरूपा भवितुमर्हन्ति । तस्याश्चावगतेरन्योऽवगन्ता नास्तीति न स्वेन स्वरूपेण स्वयमुपादातुं

---

**प्रमाणनिरपेक्षत्वात् । ततोऽन्यदचेतनं संहत्यकारित्वात्परार्थम्** । अवगतिविषयस्याचेतनस्य संहत्यकारित्वेन परार्थत्वे शुक्तिरजतादिवन्मिथ्यात्वसिद्धिरित्ययुक्तम् । पुरुषस्यापि जडस्य सत्त्वरजस्तमस्साम्यात्मकप्रकृतिरूपेण परार्थस्यैव सांख्यैः सत्यत्वोपगमादित्याशङ्क्याह—**येन च सुखदुःखमोहप्रत्ययावगतिरूपेण पारार्थ्यं तेनैव स्वरूपेणानात्मनोऽस्तित्वं नान्येन रूपान्तरेणातो नास्तित्वमेव परार्थतः** । सुखस्य दुःखस्य मोहस्य च हेतवो ये प्रत्ययाः बुद्धिपरिणामास्तैरवगतेन रूपेण जडं परमार्थम् । तेनैव स्वरूपेणास्यानात्मनो दृश्यस्य द्रष्टारं प्रत्यस्तित्वं नान्येनातीन्द्रियपरिकल्पितेन । शुद्धं चिद्रूपं स्वतन्त्रं जगत्कारणमित्यादिना रूपान्तरेणास्तित्वे मानाभावात् । आगमविशेषाच्च तेन द्वैतस्य वस्तुतो नास्तित्वमेव द्वैतत्वात्स्वप्नद्वैतवदित्यर्थः । किञ्च विमतं तत्त्वतो नावगत्यतिरेकेणास्ति दृश्यत्वाद्रज्जुसर्पादिवदित्याह—**यथाहि लोके रज्जुसर्पमरीच्युदकादीनां तदवगतिव्यतिरेकेणाभावो दृष्टः एवं जाग्रत्स्वप्नद्वैतभावस्यापि तदवगतिव्यतिरेकेणाभावो युक्तः** । किञ्च यथा द्वैतं मिथ्येति मम प्रतिभासते तथैव कूटस्थनित्यत्वमद्वितीयत्वं चावगतेर्मम प्रतिभाति स्वप्रकाशत्वादनवच्छिन्नत्वादव्यभिचारित्वाच्चेत्याह—**एवमेव भगवन्नवगतेरात्मज्योतिषो नैरन्तर्यात्कूटस्थनित्यता अद्वैतभावश्च सर्वप्रत्ययभेदेष्वव्यभिचारात्** । किञ्च विमतं असत्यं व्यभिचारित्वात्स्वप्नवदित्याह—**प्रत्ययभेदाश्चावगतिं व्यभिचरन्ति । यथा स्वप्ने नीलपीताद्याकारभेदप्रत्ययास्तदवगतिं व्यभिचरन्तः परमार्थतो न सन्तीत्युच्यन्ते । एवं जाग्रत्यपि नीलपीतादिप्रत्ययभेदास्तामेवावगतिं व्यभिचरन्तो असत्यरूपा भवितुमर्हन्ति** । तेन द्वैतस्य मिथ्यात्वे दृश्यत्वं व्यभिचारित्वं च कारणमुक्तम् । तदवगतेरपि तुल्यमिति तस्मिन्मिथ्यात्वप्रसक्तिरित्याशङ्क्याह—**तस्याश्चावगतेरन्योऽवगन्ता नास्तीति न स्वेन रूपेण स्वयमुपादातुं**

**हातुं वा शक्यते, अन्यस्य चाभावात् ॥ १०९ ॥**

**तथैवेति । एषाऽविद्या, यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः । तस्या अविद्याया विद्या निवर्तिका । इत्येवं त्वमभयं प्राप्तोऽसि । नातः परं जाग्रत्स्वप्नदुःखमनुभविष्यसि । संसारदुःखान्मुक्तोऽसीति ॥ ११० ॥**

**ओमिति ॥ १११ ॥**

---

**हातुं वा शक्यते । अन्यस्य चाभावात् ।**

**तथैवेति** । एषाऽविद्या । स्वेन स्वस्य कर्मकर्तृत्वविरोधेन हानोपादानायोगश्चेत् अन्येनैव तर्हि स्वस्य हानोपादाने स्यातां विरोधादित्याशङ्क्याह—**अन्यस्य चेति** ॥ १०९ ॥

अद्वितीयस्य प्रत्यगात्मनः सच्चिदानन्दैकतानस्य परमार्थत्वं द्वैतप्रपञ्चस्य तु मिथ्यात्वमित्येवं शिष्येणोक्तम् । गुरुणा चाभ्यनुज्ञाते विपरीतप्रथा कथमित्याशङ्क्याह—**एषेति** । विद्याऽभावं व्यवच्छेतुं विशिनष्टि—**यन्निमित्तः संसारो जाग्रत्स्वप्नलक्षणः** । अविद्यायास्तर्हि कुतो निवृत्तिरित्याशङ्क्याह—**तस्या अविद्यायाः विद्या निर्वर्त्तिका** । सा च विद्या तवोक्तप्रकारेण संवृत्तेति कृतकृत्यस्त्वमित्याह—**इत्येवं त्वमभयं प्राप्तोऽसि** । विद्योत्पत्तेरूर्ध्वमभयप्राप्तिं व्यक्तीकरोति—**नातः परं जाग्रत्स्वप्नदुःखमनुभविष्यसि । संसारदुःखान्मुक्तोऽसीति** ॥ ११० ॥

**ओमिति** । शिष्योऽपि यथोक्तं यथावद्गृहीत्वा कृतकृत्यत्वमनुजानाति ॥ १११ ॥

॥ इति कूटस्थाद्वयात्मबोधनामकं अवगतिप्रकरणं द्वितीयम् ॥

# ॥ अथ परिसङ्ख्यानप्रकरणम् ॥ ३ ॥

मुमुक्षूणामुपात्तपुण्यापुण्यक्षपणपराणामपूर्वानुपचयार्थिनां परिसंख्यानमिदमुच्यते—अविद्याहेतवो दोषा वाङ्मनःकायप्रवृत्तिहेतवः; प्रवृत्तेश्चेष्टानिष्टमिश्रफलानि कर्माण्युपचीयन्ते इति तन्मोक्षार्थम् ॥ ११२ ॥

तत्र शब्दस्पर्शरूपरसगन्धानां विषयाणां श्रोत्रादिग्राह्यत्वात्, स्वात्मनि परेषु वा विज्ञानाभावः, तेषामेव परिणतानां यथा लोष्टादीनाम्। श्रोत्रादिद्वारैश्च ज्ञायन्ते। येन च ज्ञायन्ते, स विज्ञातृत्वादतज्जातीयः। ते हि शब्दादयोऽन्योन्यसंसर्गित्वाज्जन्मवृद्धिविपरिणामापक्षयनाशसंयोगाविर्भावतिरोभावविकारविकारिक्षेत्रबीजाद्यनेकधर्माणः, सामान्येन च सुखदुःखाद्यनेककर्माणः। तद्विज्ञातृत्वादेव स विज्ञाता सर्वशब्दादि-

---

## अथ परिसङ्ख्यानप्रकरणम् ॥ ३ ॥

विधिरहितपूर्वोक्तविद्यासम्पन्नस्य कृतकृत्यस्य विधितो न किञ्चिदनुष्ठेयमिति प्रतिष्ठापितम्। सम्प्रति येषामपरोक्षं वाक्यार्थज्ञानं स्फुटतरपदार्थज्ञानविरहितत्वान्न संपद्यते तेषामनुष्ठेयशेषं दर्शयति—**मुमुक्षूणामुपात्तपुण्यापुण्यक्षपणपराणामपूर्वानुपचयार्थिनां परिसंख्यानमिदमुच्यते**। परिसंख्यानं वक्ष्यमाणमनुचिन्तनं; तस्य फलमाह—**अविद्याहेतवो दोषा वाङ्मनःकायप्रवृत्तिहेतवः; प्रवृत्तेश्चेष्टानिष्टमिश्रफलानि कर्माणि उपचीयन्त इति तन्मोक्षार्थम्**। तन्मोक्षार्थमित्यत्र तच्छब्देनाविद्यादयो गृह्यन्ते ॥ ११२ ॥

परिसंख्यानं च कुर्वता प्रथममात्मानात्मविवेचनं कर्त्तव्यमित्याह—**तत्र शब्दस्पर्शरूपरसगन्धानां विषयाणां श्रोत्रादिग्राह्यत्वात्स्वात्मनि परेषु वा विज्ञानाभावः तेषामेव परिणतानां यथा लोष्टादीनाम्। श्रोत्रादिद्वारैश्च ज्ञायन्ते। येन च ज्ञायन्ते स ज्ञातृत्वादतज्जातीयः**। यथा बाह्यानां शब्दादीनां लोष्टादिसदृशानां ज्ञानाभावो दृष्टस्तथा तेषामेव शब्दादीनां देहाकारपरिणतानां स्वपरविषयविज्ञानाभावो विज्ञायते। दैहिकाः शब्दादयः स्वपरज्ञानशून्याः शब्दादित्वात् बाह्यशब्दादिवदित्यर्थः। देहस्यानात्मत्वमुक्त्वा तद्विलक्षणमात्मानमनुमातुमारभते। **श्रोत्रादीत्यादिना**। वैलक्षण्यमेव स्फुटयति—ते हि शब्दादयोऽन्योन्यसंसर्गित्वात् जन्मवृद्धिविपरिणामापक्षयनाशसंयोगवियोगाविर्भावतिरोभावविकारविकारिक्षेत्रबीजाद्यनेकधर्माणः सामान्येन च सुखदुःखाद्यनेककर्माणः। तद्विज्ञातृत्वादेव तद्विज्ञाता सर्वशब्दादि-

धर्मविलक्षणः ॥११३

तत्र शब्दादिभिरुपलभ्यमानैः पीडयमानो विद्वानेवं परिसंचक्षीत ॥ ११४ ॥

शब्दस्तु ध्वनिसामान्यमात्रेण, विशेषधर्मैर्वा षड्जादिभिःप्रियैः स्तुत्यादिभिरिष्टैरनिष्टैश्चासत्यबीभत्सपरिभवाक्रोशादिभिर्वचनैर्वा मां दृक्स्वभावमसंसर्गिणमविक्रियमचलमनिधनमभयमत्यन्तसूक्ष्ममविषयं गोचरीकृत्य, स्प्रष्टुं नैवार्हति, असंसर्गित्वादेव मम । अत एव न शब्दनिमित्ता हानिर्वृद्धिर्वा । अतो मां किं करिष्यति स्तुतिनिन्दादिप्रियाप्रियत्वादिलक्षणः शब्दः ?

---

**धर्मविलक्षणः।** जन्मादिविकारैः शरीरस्य विकारे सति देहबीजपुण्याद्यनेकधर्माणस्ते शब्दादयो भवन्ति। तथा विशेषरूपेण केचन शब्दादयः सुखहेतवो जायन्ते। केचन दुःखहेतवः सम्पद्यन्ते। सामान्येन चान्तःकरणाद्यनेकधर्मवन्तो भवन्ति। तद्विज्ञातृत्वादेवात्मा तद्धर्मविलक्षणः सिध्यतीत्यर्थः। दैहिकाः शब्दादयः स्वविजातीयग्राह्याः ग्राह्यत्वाद्घटवदित्यात्मानात्मविवेको दर्शितः ॥ ११३ ॥

सम्प्रति परिसंख्यानप्रकारं दर्शयितुं प्रक्रमते—**तत्र शब्दादिभिरुपलभ्यमानैः पीडयमानो विद्वानेवं परिसंचक्षीत ॥ ११४ ॥**

शब्देन दृश्यमानेन सामान्येन सामान्यात्मना विशेषात्मना च पीडयमानस्य विदुषस्तद्विषये प्रथममनुचिन्तनप्रकारं दर्शयति—**शब्दस्तु ध्वनिसामान्यमात्रेण वा विशेषधर्मैर्वा षड्जादिभिः प्रियैः स्तुत्यादिभिर्वेष्टैरनिष्टैश्चासत्यबीभत्सपरिभवाक्रोशादिवचनैर्वा मां दृक्स्वभावम् असंसर्गिणं अविक्रियं अचलं अनिधनमभयमत्यन्तसूक्ष्ममविषयं गोचरीकृत्य स्प्रष्टुं नैवार्हति। असंसर्गित्वादेव मम। अत एव न शब्दनिमित्ता हानिर्वृद्धिर्वा। अतो मां किं करिष्यति स्तुतिनिन्दादिप्रियाप्रियलक्षणः शब्दः।** विशेषधर्माणामेव प्रियाप्रियभेदेन द्वैविध्यमादर्शयति—**प्रियैरिति**। अनिष्टानप्रियानपि शब्दविशेषानुदाहरति—**असत्येति**। वृद्धानां सभायां वक्तुं अयोग्यं स्त्रीवर्णनाद्यसभ्यम्। वीभत्सं जुगुप्सितं सर्वैरेव सद्भिर्विगर्हितम्। परिभवस्तिरस्कारप्रयोगः। आक्रोशस्त्वधिक्षेपप्रभेदः। अन्यान्यपि परिहासादिवचनान्यादिशब्देन गृह्यन्ते यथोक्तैः विशेषैरात्मानं पीडयितुं शब्दो न शक्नोतीत्यत्र विदुषो विवेकातिरेकं हेतुमाह। **दृक्स्वभावमिति**। असङ्गत्वाच्चात्मनस्तत्र शब्दसंस्पर्शो नास्तीत्याह—**अविक्रियमिति**। स्पन्दशून्यत्वाच्च न तत्रास्ति शब्दनिमित्ता क्रियेत्याह—**अचलमिति**। जननमरणविरहितत्वाच्च तत्र शब्दनिमित्तं कार्यं नास्तीत्याह—**अनिधनमिति**। अविद्यातत्कार्यसंस्पर्शाभावाच्चात्मनि शब्दवैफल्य-

**अविवेकिनं हि शब्दमात्मत्वेन गतं प्रियः शब्दो वर्धयेत्, अप्रियश्च क्षपयेत्, अविवेकित्वात्। नतु मम विवेकिनो बालाग्रमात्रमपि कर्तुमुत्सहते इति। एवमेव स्पर्शसामान्येन तद्विशेषैश्च शीतोष्णमृदुकर्कशादिज्वरोदरशूलादिलक्षणैश्चाप्रियैः प्रियैश्च कैश्चिच्छरीरसमवायिभिर्बाह्यागन्तुकनिमित्तैश्च न मम काचिद्विक्रिया वृद्धिहानिलक्षणा अस्पर्शत्वात्क्रियते, व्योम्न इव मुष्टिघातादिभिः। तथा रूपसामान्येन तद्वि षैश्च प्रियाप्रियैः स्त्रीव्यञ्जनादिलक्षणैररूपत्वान्न मम काचिद्धानिर्वृद्धिर्वा क्रियते। तथा रससामान्येन तद्विशेषैश्च प्रियाप्रियैः मधुराम्ललवणकटुतिक्तकषायैर्मूढबुद्धिभिः परिगृहीतैः अरसात्मकस्य मम न काचिद्धानिर्वृद्धिर्वा क्रियते। तथा गन्धसामान्येन तद्विशेषैश्च प्रियाप्रियैः पुष्पाद्यनुलेपनादिलक्षणैरगन्धात्मकस्य न मम काचिद्धानिर्वृद्धिर्वा क्रियते,**

---

मित्याह। उभयविधेन्द्रियाग्राह्यत्वाच्च तत्र शब्दस्याप्रवृत्तिरित्याह—**अत्यन्तसूक्ष्ममिति**। किञ्च विषये शब्दप्रवृत्तिरुपलभ्यते आत्मा च प्रत्यक्त्वादविषयस्तत्र कुतःशब्दप्रवृत्तिरित्याह—**अविषयमिति**। असंसर्गित्वं पूवोक्तसर्वविशेषणोपलक्षणम्। यथोक्तात्मविद्यावति विदुषि शब्दस्यासंस्पर्शे सिद्धे फलितमाह—**अत इति**। यदि विदुषि हानिवृद्धिहेतुत्वासिद्धेः शब्दो न किञ्चित्करोति। तर्हि कुत्रास्य सावकाशत्वमित्याशङ्क्याह—**अविवेकिनं हि शब्दमात्मत्वेन गतं प्रियः शब्दो वर्द्धयेत्। अप्रियश्च** क्षपयेदविवेकित्वात्। **न मम विवेकिनो बालाग्रमात्रमपि कर्त्तुमुत्सहत इति**। पूर्वोक्तमेव स्पष्टार्थं व्यावर्त्यत्वेन कीर्त्तयति—**नत्विति**। इतिशब्दस्तु परिसंचक्षीतेति पूर्वत्र संबद्धयते। शब्दे सामान्यविशेषात्मनि दर्शितं न्यायं स्पर्शरूपसगन्धेष्वपि तथाविधेष्वतिदिशति—**एवमेव स्पर्शसामान्येन तद्विशेषैश्च शीतोष्णमृदुकर्कशज्वरोदरशूलादिलक्षणैरप्रियैः प्रियैश्च कैश्चित् शरीरसमवायिभिर्बाह्यागन्तुकनिमित्तैश्च न मे काचिद्विक्रिया वृद्धिहानिलक्षणा क्रियते। अस्पर्शत्वाद्व्योम्न इव मुष्टिघातादिभिः, तथा रूपसामान्येन तद्विशेषैश्च प्रियाप्रियैः स्त्रीव्यञ्जनादिलक्षणैररूपत्वान्न काचिन्मम हानिर्वृद्धिर्वा क्रियते। तथा रससामान्येन तद्विशेषैश्च प्रियाप्रियैर्मधुराम्ललवणतिक्तकटुकषायैर्मूढबुद्धिपरिगृहीतैररसात्मकस्य मम न काचिद्धानिर्वृद्धिर्वा क्रियते। तथा गन्धसामान्येन तद्विशेषैश्च प्रियाप्रियैः पुष्पानुलेपनादिलक्षणैरगन्धात्मकस्य न मम काचिद्धानिर्वृद्धिर्वा क्रियते।** प्रियाः शरीरसमवायिनः स्पर्शाश्चन्दनपङ्कस्पर्शो घर्मकाले शिशिरतरस्पर्शश्चेत्येवमादयो बाह्यान्यागन्तुकानि निमित्तानि येषां चन्दनपंकादीनां अस्पर्शत्वादिति च्छेदः। रसादिविशेषाणां कथं प्रियाप्रियत्वं तत्राह—**मधुरेति**।

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति श्रुतेः ॥ ११५ ॥

किंच—य एव बाह्याः शब्दादयः, ते शरीराकारेण संस्थिताः तद्ग्राहकैश्च श्रोत्राद्याकारैः, अन्तःकरणद्वयतद्विषयाकारेण च, अन्योन्यसंसर्गित्वात्संहतत्वाच्च सर्वक्रियासु। तत्रैवं सति विदुषो न मम कश्चिच्छत्रुर्मित्रमुदासीनो वाऽस्ति। तत्र यदि कश्चित्मिथ्याज्ञानाभिमानेन प्रियमप्रियं वा प्रयुयुङ्क्षेत् क्रियाफललक्षणं तन्मृषैव प्रयुयुङ्क्षति सः, तस्याविषयत्वान्मम, "अव्यक्तोऽयमचिन्त्योऽयम्" इति स्मृतेः। तथा सर्वेषां पञ्चानामपि भूतानामविकार्यः, अविषयत्वात् "अच्छेद्योऽयमदाह्योऽयम्" इति स्मृतेः।

---

अस्पर्शत्वादिविशेषणानि कथमात्मनि सिद्धानीत्याशङ्क्याह—"**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदि**"ति **श्रुते**। नित्यमिति विशेषणं प्रत्येकं सम्बध्यते ॥ ११५ ॥

शब्दस्पर्शरूपरसगन्धैः सामान्यविशेषरूपैर्न हानिर्वृद्धिर्वाऽऽत्मनोऽस्तीत्यतस्तैरनभिभवमनुचिन्तनीयमभिधाय शब्दत्वाद्यनभिभवमनुचिन्तनीयमुपन्यस्यति—**किञ्च य एव बाह्याः शब्दादयस्ते शरीराकारेण संस्थितास्तद्ग्राहकैश्च श्रोत्राद्याकारैरन्तःकरणद्वयतद्विषयाकारेण चान्योऽन्यसंसर्गित्वात्संहतत्वाच्च सर्वक्रियासु**। सर्वशब्दाद्यात्मकानि भूतानि बाह्यानि शरीराकारेण तत्तदर्थग्राहकश्रोत्राद्याकारैर्बुद्धिर्मनश्चेत्यन्तःकरणरूपेण तद्विषयसुखाद्याकारेण च परिणमन्ते। तेषामन्योन्यसंसर्गित्वात्सर्वव्यापारेषु च संहतत्वात्। तथा च शब्दत्वादिप्रयुक्ता नात्मनो हानिर्वृद्धिर्वाऽस्तीत्यर्थः। प्रदर्शितप्रकारेण भूतभौतिकानामेव सक्रियत्वे सति साक्षिणो मम निर्विकारस्य न कश्चिन्मित्रादिरस्तीति चिन्तयेदित्याह—**तत्रैवं सति विदुषो न मम कश्चिच्छत्रुर्मित्रं उदासीनो वाऽस्ति**। **तथापि यदि** मिथ्याज्ञानमात्रेण मयि प्रियमप्रियं वा क्रियाफललक्षणं प्रयोक्तुमिच्छेत्। तन्मृषैवासौ प्रयुङ्क्ते तदविषयत्वान्ममेति चिन्तयेदित्याह—**यदि मिथ्याज्ञानाभिमानेन प्रियमप्रियं वा प्रयुयुङ्क्षेत्क्रियाफललक्षणं तन्मृषैव प्रयुयुङ्क्षति सः। तस्याविषयत्वान्मम** "अव्यक्तोऽयमचिन्त्योऽयमि"त्यादिश्रुतेः। आत्मनो बहिरन्तरिन्द्रियाविषयत्वान्न शत्रुत्वं मित्रत्वं वाऽस्तीत्यत्र प्रमाणमाह—"**अव्यक्तोऽयमि**ति। अपरं चिन्तनीयं सप्रमाणं कथयति—**तथा सर्वेषां पञ्चानामपि भूतानामविकार्योऽविषयत्वात्**। **अच्छेद्योऽमदाह्योऽयमित्यादिस्मृतेः**। ननु विद्यावन्तं पुरुषमुपलभ्य तवात्र केचिदनुरागमाचरन्तस्तव प्रियं

याऽपि शरीरेन्द्रियसंस्थानमात्रमुपलक्ष्य, मद्भक्तानां विपरीतानां च प्रियाप्रियादिप्रयुयुक्षा, तज्जा च धर्माधर्मादिप्राप्तिः, तेषामेव, न तु मय्यजरेऽमृतेऽभये। "नैनं कृताकृते तपतः", "न कर्मणा वर्धते नो कनीयान्", "सबाह्याभ्यन्तरो ह्यजः", "न लिप्यते लोकदुःखेन बाह्यः" इत्यादिश्रुतिभ्यः। अनात्मवस्तुनश्चाऽसत्त्वं परमो हेतुः आत्मनश्चाद्वयत्वे, द्वयस्यासत्त्वात्, यानि सर्वाण्युपनिषद्वाक्यानि विस्तरशः समीक्षितव्यानि समीक्षितव्यानीति ॥११६॥

**इति श्रीमत्परमहंस-परिव्राजकाचार्य-श्रीमच्छङ्कर-भगवत्पूज्यपादकृतौ**
**सकलवेदोपनिषत्सारोपदेशसाहस्र्यां**
**गद्यभागः समाप्तः**

---

प्रयोक्तुमिच्छन्तस्तत्कृतं धर्मं सुखं च प्राप्नुवन्ति अप्रियं प्रयुञ्जानास्तत्कृतमधर्मं दुःखञ्च प्रतिपद्यन्ते। तथा च भक्तेषु धर्मादिहेतुत्वादभक्तेष्वधर्मादिहेतुत्वात् विदुषोऽपि धर्मादिद्वारा वृद्धिहानी स्यातामिति चेन्नेत्याह—**याऽपि शरीरेन्द्रियसंस्थानमात्रमुपलक्ष्य मद्भक्तानां विपरीतानां च प्रियाप्रियादिप्रयुयुक्षा तत्कृतधर्माधर्मादिप्राप्तिश्च सा तेषामेव न तु मय्यजरेऽमरेऽमृतेऽभये "नैनं कृताकृते तपतः" न कर्मणा वर्द्धते नो कनीयान्।" "स बाह्याभ्यन्तरो ह्यजः"। "न लिप्यते लोकदुःखेन बाह्यः।" "यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते" इत्यादि श्रुतिभ्यः।** प्रियाप्रियादीत्यादिशब्दादुदासीनत्वमुच्यते। श्रुतिस्मृतिभ्यो विदुषि धर्मादेस्तत्फलस्य वा न प्राप्तिरिति पूर्वेण सम्बन्धः। किञ्च यदि कश्चिदनात्मा नाम पदार्थः स्यात् तदा तत्कृतं प्रियमप्रियं वा सम्भाव्येत। न त्वनात्मास्ति सर्वात्मत्वान्ममेत्यनुसन्दध्यादित्याह—**अनात्मवस्तुनश्चासत्त्वादिति परमो हेतुः।** परमत्वमबाधितत्वं हेतुस्तत्कृतप्रियाप्रिययोः अप्राप्ताविति शेषः। [1]विरोधश्चात्मनोऽद्वयत्वविषयाणि द्वयस्यासत्त्वार्थानि चोपनिषद्वाक्यानि पौनःपुन्येनालोचयितव्यानीत्याह—**आत्मनश्चाद्वयत्वविषयाणि द्वयस्यासत्वार्थानि सर्वाण्युपनिषद्वाक्यानि विस्तरशः समीक्षितव्यानि समीक्षितव्यानि।** अभ्यासो ग्रन्थस्य गद्यपद्यात्मनः समाप्त्यर्थः॥ ११६ ॥

॥ इति परिसंख्यानप्रकरणं तृतीयं समाप्तम् ॥

---

१. विरोधे चेति चेत् समीचीनम्। विरोधो नास्त्येव अद्वयत्वात् यदि विरोधः प्रतिभासेत तदेत्यर्थः।

उपदेशसहस्रीयं गद्यपद्यमयी मया ।
व्याकृता व्याकृताप्यन्यैर्मन्दानुग्रहसिद्धये ।।

व्याक्रियासत्क्रिया सेयं कुर्वंती शर्म निर्मलम् ।
कृतीनां कृतविद्यानामाश्रिता पुरुषोत्तमम् ।।

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीशुद्धानन्दपूज्यपादशिष्य—
श्रीमद्भगवदानन्दज्ञानकृतश्रीसहस्रीटीका समाप्ता ।।

शुभमस्तु



श्रीशंकरभगवत्पादविरचिता

# दशश्लोकी



श्रीमधुसूदनसरस्वतीविरचितः

# सिद्धान्तबिन्दुः



गौडब्रह्मानन्दसरस्वतीविरचिता

# न्यायरत्नावली



श्रीशङ्करभगवत्पादविरचिता

# दशश्लोकी

न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुषुप्त्येकसिद्धस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥
न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयाहंममाध्यासहानात् तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥
न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥
न साङ्ख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥
न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वाऽपरा दिक् ।
वियद्व्यापकत्वादखण्डैकरूपस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥
न शुक्लं न कृष्णं न रक्तं न पीनं न कुब्जं न पीतं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥
न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णुस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥
न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्याऽऽत्मकत्वात्त्रयाणां तुरीयस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८ ॥
अपि व्यापकत्वाद्धितत्त्वप्रयोगात् स्वतः सिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्यत्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥
न चैकं तदन्यद् द्वितीयं कुतः स्यान्न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात् कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥१०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीशङ्करभगवतः कृतौ दशश्लोकी समाप्ता



ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचिता

# दशश्लोकी

श्रीमधुसूदनसरस्वतीस्वामिविरचितेन

# सिद्धान्तबिन्दुना

## संवलिता

श्रीशङ्कराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां बोधाय कुर्वे कमपि प्रयत्नम् ॥१॥

---

अथ

गौडश्रीब्रह्मानन्दसरस्वतीस्वामिकृता सिद्धान्तबिन्दुटीका

# न्यायरत्नावली

नमो नवघनश्यामकामकामितदेहिने[1] ।
कमलाकामसौदामकणकामुकगेहिने ॥१॥
अद्वैतसिद्धेष्टीकायास्तदीयायाश्च संग्रहात् ।
विचित्ररचना काचिद्ब्रह्मानन्देन रच्यते ॥२॥
शङ्करोक्तिसुधाम्भोधेर्गुरूणामुपदेशतः ।
उद्धृतां प्रकटीकुर्वे न्यायरत्नावलीमिह ॥३॥

तत्राद्वितीयस्वप्रकाशनिरतिशयानन्दरूपयोर्जीवब्रह्मस्वरूपयोरैक्यमुक्तानन्दरूपं बोधयत् 'अहं ब्रह्मास्मी'त्यादिवेदान्तमहावाक्यं द्वितीयविषयकप्रत्यक्षादिसर्वप्रमाणबाधकम् । अतोऽनात्मभूतं सर्वं मिथ्येत्याद्यर्थविवेचनवचनरोचमानं श्रीमद्बादरायणशङ्करसुरेश्वराचार्यवर्यकृतमर्यादं वेदान्तदर्शनं

---

१. नवघनश्यामश्चासौ कामकामितदेही चेति कर्मधारयः कमलाकामस्य सुदाम्नः इमे कमलाकामसौदामाः शिवभागवतवत्समासः । तदभिलषितवान् श्रीकृष्णः । पूर्वं स्वाभिलषितप्राप्तिहेत्वदृष्टविरहेपि तत्काल एव पृथुकादानादिनापि तादृशादृष्टं सम्पाद्य याचकाभीष्टदत्वेन लोकविलक्षणो दाता अस्माकमभीष्टमवश्यं दास्यतीति भावः ।

दर्शनेषु सर्वेषु दर्शनीयतमं दर्शनम्। तस्य च विचारशास्त्रस्य विचार्यवेदान्तवाक्यद्वारा परमं तात्पर्यमुक्तैक्ये। अवान्तरं तु शुद्धजीवब्रह्मस्वरूपयोः तदैक्यसाक्षात्कारहेतुश्रवणादौ च। प्रत्यक्षादिप्रमाणसिद्धदृग्दृश्याद्यनेकभागभागिन्यां प्रक्रियायां त्वनुवादकत्वम्।

## पदार्थविवेचनम्

तत्र चानुवाद्यप्रक्रियायां पदार्थो द्विविधः। दृक् दृश्यं च। दृगपि चिद्रूपा उपहितानुपहितरूपेण द्विविधा। अनुपहिता मोक्षदशायां केवलैव भाति, संसारदशायां तु भासमानसर्वानुस्यूतरूपेणापि[1]। तथा च श्रुतिः—'तमेव भान्तमनुभाति सर्वं' मिति। अनुमानमपि–घटादयो भानविषयाः आनयनादिविशेषणतया प्रवृत्तिविषयत्वादिति। घटादिसर्वभासमानपक्षकानुमितौ लाघवादेकभानव्यक्तिर्विषयः। उपहिता तु ईश्वरजीवभेदेन द्विविधा। तत्रेश्वरोऽविद्योपाधौ बिम्बीभूतः। जीवस्तु तत्र प्रतिबिम्बीभूतः। तयोश्चानादिभेदसत्त्वादुपास्योपासकभावेन चित्तशुद्ध्या स्वरूपप्रबोधप्राप्त्या समूलबन्धाद्विमुच्यते जीवः। तदेवमादिसर्वं सकलविद्यापारावारपारीणैः श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ सूत्रितमिति तदेवाश्रित्य प्रकटीक्रियते।

तत्र गुरुपरम्परामूलीभूतश्रीशङ्कराचार्यरूपेश्वरप्रणामरूपं स्वाचरितग्रन्थसमाप्तिप्रतिबन्धकनाशकं मङ्गलं शिष्याणामनुषङ्गतो मङ्गलसम्पादनाय कथयन् मोक्षहेतुतत्त्वधीप्रयोजकं प्रकरणं कर्तव्यतया प्रतिजानीते—**श्रीशङ्करेत्यादिना**। श्रीशङ्कराचार्यश्चासौ नवावतारश्चेति कर्मधारयः। तद्गुणसंविज्ञानबहुव्रीहिणा शङ्कराचार्यप्रणामलाभेऽपि गौरवान्न स आश्रितः। नवं यथा स्यात्तथाऽवतरत्यस्मिन्निति नवावतारः। करणाधिकरणयोश्चेत्यधिकारस्थेन 'अवेतॄस्त्रोर्घञ्' त्यनेन तथाऽनुशासनात्। अवतरणं च तादात्म्याभिमानः[2] [ तस्य ] विषयत्वं सप्तम्यर्थः। तथा च शङ्कराचार्यरूपे शरीरे विश्वेश्वरस्याभिनवतादात्म्यसत्त्वात्तयोरभेदान्वयः। न चावतारशब्दस्य पाचकादिशब्दवत् क्रियाशब्दत्वेन विशेष्यत्वानुपपत्तिः, विशेषणविशेष्यकर्मधारयविधायकसूत्रे द्रव्यशब्दस्यैव विशेष्यत्वमिति पदमञ्जर्यादावुक्तत्वादिति वाच्यम्।[3] तथा सति पुण्डरीकं सिताम्भोजमित्यादावम्भोजपदस्यापि तदनुपपत्त्यापत्तेः।

अथ तस्य योगरूढत्वेन पद्मरूपद्रव्यवाचकत्वस्यापि सत्त्वेन न विशेष्यत्वानुपपत्तिः। तर्ह्यवतारशब्दस्यापि रथादावप्रयोगेण नोक्तानुपपत्तिः। शङ्कराचार्येत्यस्यापि द्रव्यरूपव्यक्तिविशेषरूढत्वस्यापि सत्त्वेनोपपत्तिः। अन्यथा आचार्यशब्दस्यापि—

**आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ;**

---

१. अपि शब्देन केवलरूपं गृह्यते ब्रह्मगतसत्त्वभानयोरनावृतत्वात्।

२. तादात्म्याभिमानः अहमेव श्रीशङ्कराचार्य इत्याहार्यनिश्चयः।

३. जातितद्भिन्नप्रवृत्तिनिमित्तकयोर्मध्ये जातिप्रवृत्तिनिमित्तकस्यैव विशेष्यत्वनियमः अन्यथा उत्पलस्य विशेषणत्वं नीलस्य विशेष्यत्वं चादायउत्पलनीलमिति प्रयोगापत्तेः —रामभद्रीये।

**इह खलु साक्षात्परम्परया वा सर्वान् जीवान् समुद्दिधीर्षुर्भगवान् श्रीशङ्करोऽनात्मभ्यो विवेकेनात्मानं नित्यशुद्धबुद्धमुक्तस्वभावं संक्षेपेण बोधयितुं दशश्लोकीं प्रणिनाय ।**

---

इत्यादिना क्रियावाचकत्वस्योक्तत्वात् शङ्करशब्दस्य द्रव्यवाचकत्वाच्च कर्मधारयत्वानुपपत्तेः । अथवा शङ्कराचार्यरूपं रामकृष्णादिशरीरापेक्षया नवं शरीरमवतरति गच्छतीति नवावतारः । 'कर्मण्यण्' इत्यनुशासनात् कुम्भकारादिवत् । तथा च शङ्कराचार्यरूपेण नवतयाऽवतीर्णं विश्वेश्वरं प्रणम्येत्यर्थः ।

'चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति ।

इति वायुपुराणोक्तेः शङ्कराचार्यस्येश्वरावतारता । चतुर्भिः पद्मपादतोटकहस्तामलकसुरेश्वराचार्यैः । अनेन शुद्धचित्तोऽपि आविद्यकभेदेन ईशजीवादिनानारूपेणोपास्योपासकत्वादिसम्भव इति सूचितम् ।

**वेदान्तशास्त्रेति** । शारीरकमीमांसारूपचतुरध्यायी-तद्भाष्य-तदीयटीकावाचस्पत्य-तदीयटीकाकल्पतरु-तदीयटीकापरिमलरूपग्रन्थपञ्चकेत्यर्थः । श्रवणालसानां संक्षिप्तसाररूपेण तदर्थं श्रोतुकामानाम्-

**बोधायेति ।**

उक्तशास्त्रप्रतिपाद्यार्थनिश्चयायेत्यर्थः । तथा च तच्छास्त्रे श्रुतेऽपि यत्सन्दिग्धं तदनेन प्रकरणेन निश्चेतुं शक्यते इति भावः ।

तच्छास्त्रप्रतिपाद्यानि चोच्यन्तेऽध्यायभेदतः ।
आद्ये श्रुतीनां जीवेशाभेदे तात्पर्यनिश्चयः ॥
द्वितीये तदभङ्गाय दुष्टशास्त्रोपमर्दनम् ।
तृतीये तत्त्वबोधस्य साधनानां निरूपणम् ॥
चतुर्थे तत्फले जीवन्मुक्तिः कैवल्यमीरिते ।
प्रसङ्गः सगुणस्यापि शास्त्रेऽस्त्यत्र तु नो तथा ॥

अत्र विश्वेश्वरमित्यनेन जगत्सृष्ट्यादिसामर्थ्यरूपैश्वर्योक्त्या तन्मूलीभूतसार्वज्ञ्यसूचनेन शास्त्रार्थेषु सुतरामनावरणमिति सूचितम् । विश्वगुरुमित्यनेन नास्तिकषड्दर्शनीकर्तृणामास्तिकपञ्चदर्शनीकर्तृणां च शिक्षक आचार्य इति सूचनात् वेदान्तदर्शनस्य सर्वदर्शनशिरोमणित्वं सूचितम् । कमपीत्यनेन लघुरपि बह्वर्थवहश्चिन्तामणिरिव निबन्धोऽयमिति वक्ष्यमाणमस्य सर्वग्रन्थापेक्षयोपादेयत्वं प्रवर्तमानोत्साहाय सूचितम् ॥ १ ॥

**सर्वानिति ।**

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।

इति स्मृतेः पुराणादिश्रवणे शूद्रस्याप्यधिकारसम्भवात् श्रावकस्य ब्राह्मणस्यैतत्प्रकरणाधीनशास्त्रार्थज्ञानेन व्याख्यानकौशलाच्छूद्रस्योद्धार्यता । कीटादीनामपि कदाचिद्ब्राह्मणादिभावं प्राप्स्यतामुद्धरिष्यमाणतेति भावः । उद्दिधीर्षुः—दुःखेनात्यन्तं विमुमोचयिषुः । विवेकेन भेदेनोप-

**नन्विदङ्कारास्पदेभ्योऽनात्मभ्यो विवेकेनाहङ्कारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति दुःखं चानुभवति। तेन ज्ञातज्ञापकत्वान्निष्प्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं व्यर्थमिति चेन्न। चिद्भास्यत्वेन लक्षणेन इदङ्कारास्पदानामपि देहेन्द्रियमनसां प्रति-**

लक्षितमात्मानं बोधयितुमित्यर्थः। तेन भेदविशिष्टात्मविषयकज्ञानस्योद्धाराहेतुत्वेऽपि न दोषः[1]। नित्यं-कालापरिच्छिन्नम्। शुद्धं–रागद्वेषाद्यशुद्धिरहितम्। बुद्धं-स्वप्रकाशनिरतिशयानन्दम्। मुक्तम्—अविद्यारूपबन्धशून्यम्। स्वभावम्–स्वमेव भावः सत्ता यस्य तम् अनन्याधीनसत्ताकम्। आत्मानम्–अनात्मनामधिष्ठानस्वरूपभूतम्। तद्विज्ञानेन श्रुतिषु सर्वविज्ञानस्य प्रतिज्ञानात्।

## शास्त्रस्यापूर्वत्वसप्रयोजनत्वयोर्विवेचनम्

ननु आत्मानात्मनोस्तादात्म्यारोपसम्भवे तयोर्विवेकज्ञानमुपयुज्यते, तयोस्तु तमःप्रकाशवदत्यन्तविरुद्धत्वेन प्रतीयमानत्वात्तदसम्भवः, आत्मा हि सच्चिदानन्दरूपः प्रतीयते, अनात्मा तु मिथ्याजडदुःखरूपः, तथा चानात्मनां सर्वेषामात्मनि तादात्म्येन कल्पितत्वमित्यौपनिषदमतस्यासम्भवेन आत्मवदनात्मनां सत्यत्वमेव, एवं च 'अहं गौर' इत्यादिप्रत्ययो गौरादिदेहस्वामित्वविषयकः, 'अहं कर्ता दुःखी' त्यादिधीस्तु प्रमैव, 'असङ्गो ह्ययं पुरुष' इत्यादिश्रुतयस्तु स्तुतिपरा इत्याशयेन शङ्कते—**नन्वित्यादिना**। इदङ्कारास्पदेभ्यः-इदमित्याकारकधीविषयेभ्यः। अहङ्कारास्पदम्-अहमित्याकारकधीविषयम्। अनात्मभ्य आत्मानमिति तु फलितार्थोक्तिः। **सर्वो लोक इति**। गौरोऽहमित्यादिज्ञानस्य देहस्वामित्वेनात्मानं गृह्णतो देहादिभिन्नत्वेनात्मज्ञानं विनोत्पत्त्यसम्भवात्सर्वेषां तदस्तीति भावः। ननु पूर्वं ज्ञातस्यापि विवेकस्य शास्त्रीयज्ञानमदृष्टद्वारा मुक्तिहेतुरिति कल्प्यताम्, अत आह—**निष्प्रयोजनत्वादिति**। भाष्यादौ समन्वयसूत्रादिषु दूषितत्वा[2]न्नोक्तकल्पना युक्तेति भावः। चिद्भास्यत्वेन श्रवणादिपरिपाकसहकृतशास्त्रजन्याखण्डाकारमनोवृत्त्यभिव्यक्तचिद्भास्यत्वेन[3]। लक्षणेन—ज्ञापकेन। इदङ्कारास्पदानामात्मभिन्नतया दृढतया ज्ञातानाम्। प्रतिभासतोऽहङ्ककारास्पदत्वेनोक्तमनोवृत्तेः पूर्वं प्रतीयमानात्मतादात्म्यवत्त्वेन। अविवेकात्-उक्तमनोवृत्तिरूपविवेकज्ञानसमुच्छेद्यसकलभ्रमनिदानानाद्यज्ञानकल्पनात्। तथा च आत्मानात्मनोरत्यन्तविरुद्धस्वभावत्वेऽपि तादात्म्यप्रतीतेरनुभूयमानत्वात्तदन्यथानुपपत्त्या तदुपपादकमनाद्यज्ञानं कल्प्यते। यदा तूक्तमनोवृत्त्युत्पत्तिस्तदुत्तरं सकलदृश्यानामाभासीकृतानां प्रारब्धभोगशेषं क्षपयता जीवन्मुक्तेन मिथ्यात्वदृश्यत्वादिहेतुनाऽऽत्मभिन्नत्वेन ज्ञायमानत्वेऽपि न शास्त्रवैयर्थ्यशङ्का। तदा शास्त्रस्याप्याभासीकृतत्वेन वैयर्थ्यस्येष्टत्वादिति भावः।

---

१. तमेवविदित्वाऽतिमृत्युमेतीत्यादिना आत्मान्याविषयकज्ञानस्यैव मुक्तिहेतुत्वबोधनात्। विशिष्टज्ञानस्य विशेषणविषयकत्वनियमात्।

२. तथा च समन्वयसूत्रभाष्यम्। अविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम्। तथा च श्रुतिः न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः इति प्रियाप्रियस्पर्शनप्रतिषेधात् चोदनालक्षणोधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते—इति।

३. चिद्भास्यत्वं यथाश्रुतं नानात्मत्वानुमापकं मनआदीनां चित्वेनैवानुभवात् अत उक्तं श्रवणादीति।

**भासतोऽहङ्कारास्पदत्वेन तदविवेकात्, तेन च शुद्धेऽप्यात्मनि दुःखित्वाद्यभिमानात् शास्त्रीयेण च ब्रह्मात्मैक्यज्ञानेन समूलस्य तस्य निवृत्तेः,**

---

आत्मानात्मनोस्तादात्म्याध्यासे स्थिरीभूते तद्धर्माणामपि मिथः संसर्गाध्यासः प्रतीयते तस्य तन्नियतत्वादित्याशयेनाह—**तेन चेति**। अनात्मतादात्म्याध्यासेन[1] चेत्यर्थः। तृतीयार्थो ज्ञापकहेतुता दुःखित्वाद्यभिमानं प्रति बोध्या। युगपदेव धर्मितादात्म्यधर्मसंसर्गयोरध्यासेन कारकहेतुत्वासम्भवात्। शुद्धे—अनात्मधर्मदुःखादिना परमार्थतो हीने। समूलस्य–मूलीभूताज्ञानसहितस्य। तस्य-उक्ताध्यासस्य निवृत्तेः-उच्छेदात्।

### उच्छेदपदार्थविचारः

ननु कोऽयमुच्छेदः? न ध्वंसः। तस्य हि सत्यत्वे अद्वैतश्रुतिविरोधः। मिथ्यात्वे चरममनोवृत्त्युत्पत्त्युत्तरमुत्पन्नस्य तस्य समुच्छेदकाभावेन उच्छेदाभावात् 'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुतिविरोधः। अथोक्तध्वंसस्य सत्यत्वेऽपि श्रुतेर्न विरोधः, तया भावाद्वैतबोधनादिति चेन्न। असङ्कुचिताद्वैतस्य श्रुत्यर्थतया प्रतीयमानत्वात्[2] अत्रोच्यते। तत्त्वज्ञानाधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानधिकरणत्वं दृश्योच्छेदः। शास्त्रीयचरमतत्त्वज्ञानोत्पत्तिक्षणे च दृश्याधिकरणपूर्वत्वं नास्ति, तदुत्तरतादृशक्षणस्याप्रसिद्धत्वात्। तत्पूर्वत्वस्य क्षणान्तरे प्रसिद्धस्यापि तत्रासम्भवात्। नानाजीवपक्षे तज्जीवीयचरमतत्त्वज्ञानक्षणे तज्जीवीयदृश्याधिकरणकालपूर्वत्वाभावो वाच्यः। जीवान्तरीयदृश्याधिकरणकालपूर्वत्वसत्त्वात्।

ननु दृश्यपूर्वत्वाभाव एव निवेश्यतां किं दृश्याधिकरणकालनिवेशेनेति चेन्न। दृश्यपूर्वत्वं दृश्यप्रागभावकालवृत्तित्वम्। तथा च तदभावो न दृश्योच्छेदशब्दार्थः। चरमतत्त्वज्ञानक्षणवृत्तिदृश्यानामग्रिमकालानुवृत्तिवादिनां तार्किकादीनां मतेऽपि तादृशोच्छेदव्यवहारसम्भवात्,[3] अविद्याद्यनादिदृश्यानां तादृशोच्छेदव्यवहारासम्भवाच्च, तेषां प्रागभावाप्रसिद्धेः। ननु क्षणप्रवेशो व्यर्थः, व्याप्तिविशेषबलेन क्षणस्यैव तादृशपूर्वत्वाभावस्स्वीक्रियते, तत्त्वप्रमाक्षणो यो यो भवति स तत्त्वाज्ञानतत्प्रयुक्तदृश्यकालपूर्वत्वाभाववान्, तत्त्वप्रमोत्पत्तिद्वितीयक्षणः तादृशाभाववानिति वा व्याप्तेः, तत्त्वज्ञानस्य क्षणिकत्वस्वीकारे आद्यः, कस्यापि न क्षणिकत्वमिति पक्षे[4] द्वितीय इति चेत्। सत्यम्। तथापि तादृशव्याप्तिसूचनाय क्षणपदमिति बोध्यम्। अथैवमुच्छेदस्य निर्वचनेऽपि तत्र ज्ञानस्याजनकत्वेन ज्ञानेनेति तृतीयानुपपत्तिरिति चेन्न। तृतीयायाः प्रकृते ज्ञापकहेतुबोधकत्वात्। एतत्समानार्थकश्रुतयोऽप्येवं व्याख्येयाः।

---

१. धर्मितादात्म्याध्यासो न धर्माध्यासे हेतुः, धर्मधर्मिणोः युगपदेवाध्यासात् तस्य कारणत्वानुपपत्तेः। यत्र यत्तादात्म्याध्यासः तत्र तद्धर्माध्यास इति व्याप्तेः ज्ञापकहेतुतासम्भवः।

२. उक्तश्रुत्येत्यादिः।

३. चरमतत्वज्ञानक्षणवृत्तिदृश्यानां तादृशदृश्यप्रागभावकालवृत्तित्वाभावात् मतान्तरसाधारण्यम्।

४. तत्प्रमोत्पत्तिद्वितीयक्षणः तादृशाभाववान् तद्द्वितीयक्षणे कस्याप्यभावात्। तत्वज्ञानस्य द्विक्षणवृत्तित्वात्।

## ज्ञानस्य काम्यत्वोपपत्तिः

अथैवमपि ज्ञाने इच्छानुपपत्तिः, मनोवृत्तिरूपस्य ज्ञानस्य [1]सुख-दुःखाभावान्यत्वात्तत्साधनान्यत्वाच्चेति चेन्न। नितरां निरुध्य मनो निदिध्यासनादिना यतमानतया मुमुक्षुपुरुषे जायमानाया दुःखधारायाः निरतिशयात्मसुखाभिव्यक्तिनिदानत्वेन दुःखत्वेनागणनीयायाश्चरममनोवृत्तिसमुदयक्षणमारभ्य विच्छिन्नाया ध्वंसरूपत्वस्य चरमवृत्तौ सम्भवात्। यस्योत्पत्तिक्षणे हि यद्विच्छिद्यते, तत्पूर्वं च वर्तते, स एव मनःपरिणामस्तस्य ध्वंसः। यथा एकक्षणान्तरितोत्पत्तिकसमानविषयकज्ञानेच्छादिस्थले, तादृशोत्तरपरिणामस्य पूर्वपरिणामध्वंसरूपत्वौचित्यात्। तदन्यस्य ध्वंसस्य स्वीकारे तत्स्वरूपतद्धेतुत्वादिकल्पने गौरवात्। अभिव्यज्यमानात्मसुखव्याप्यत्वाच्च चरमवृत्ताविच्छा। यो हि यदा यदिच्छति स कदाचित्तद्व्याप्यमपीच्छतीति सर्वानुभवसिद्धम्। युक्तं चैतत्। यस्मिन् सत्यवश्यमिष्टाभावस्तत्र द्वेषस्येव, यस्मिन् सत्यवश्यमिष्टं तत्रेच्छाया अनुभवात् चरमतत्त्वज्ञाने इच्छा। इष्टव्याप्यमपि हि लोकैरिष्यत इति सर्वानुभवसिद्धम्। अत एव विपदोऽपि स्वकीयाः श्रीकृष्णभगवद्दर्शनव्याप्यतया कामिताः कुन्त्या। तदुक्तं श्रीभागवते—

विपदस्सन्तु नश्शश्वत्तत्र तत्र जगद्गुरो!।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्॥ इति॥

युक्तं चैतत्। यस्मिन् सत्यवश्यमिष्टसम्बन्धस्तस्यापीष्टत्वौचित्यात्। अत एव "मोक्षः पुनरात्यन्तिकी दुःखनिवृत्तिरित्युक्त्वा काम्यश्च दुःखाभावः दुःखस्य स्वभावतो हेयत्वात्। सुखार्थं तथाऽयमिति चेन्न। दुःखाभावस्य सुखाहेतुत्वात्। अथ सुखव्याप्यत्वात्स तथेति चेन्न। तस्य तदव्याप्यत्वादि" त्युक्तमुदयनाचार्यैर्बौद्धाधिकारे[2]। सुखव्याप्यत्वस्य काम्यत्वाप्रयोजकत्व अथेत्यादिशङ्कानुपपत्तेः। तस्मात्सुखत्वादिवत्सुखादिव्याप्यत्वमपीच्छाप्रयोजकम्।

## आत्मैव सुखमिति सिद्धान्तनिरूपणम्

वस्तुतस्तु अस्मद्दर्शने सुखमात्मैव। चन्दनादियोगजन्यमनोवृत्तेस्तत्र व्यञ्जकत्वमात्रम्। तस्य च न केवलरूपेण काम्यता, सिद्धत्वात्। नापि भानविषयत्वेन, तस्य स्वप्रकाशत्वेन भानाविषयत्वात्, नाप्यावरणाभावविशिष्टतया, आवरणस्य तत्र कल्पितत्वेन तदभावस्यावरणकालेऽपि सत्त्वेन सिद्धत्वात्। किन्तु स्वावरणविरोधिमनोवृत्तिविशिष्टतया। यद्यप्यनवच्छिन्नानन्दरूपेणाऽऽत्मा मूलाज्ञानेन संसारकाले सदैवावृतः, तथाप्यवच्छिन्नसाक्ष्यानन्दाद्यावरणावस्थाविशेषस्य[3] चन्दनादियोगजन्यमनोवृत्त्या समुच्छेदात्तस्याः स्वपूर्वकालीनसाक्ष्यानन्दाद्यावरणं प्रति विरोधित्वेन तद्विशिष्टतया काम्यत्वम्। एवं चरममनोवृत्तेरनवच्छिन्नात्मानन्दावारकमूलाज्ञानविरोधित्वात्तद्विशिष्टतया काम्यता। आवारकाज्ञानविरोधित्वं तु आवारकाज्ञानतत्प्रयुक्तदृश्ययोरुक्तोच्छेदवान् यः क्षणस्तत्र वर्तमानत्वम्। यद्यपि साक्ष्यानन्दे कालान्तरावच्छेदेनावारकाज्ञानस्य एतत्कालीनमनोवृत्त्युत्पत्त्यव्यवहितपूर्वमावारकत्वाभावात् अज्ञानानामनादित्वेऽपि कदाचिदेव कस्यचिदज्ञानस्यावारकत्वमिति सिद्धान्ते स्वीकारात् कालान्तरावच्छेदेनावारकाज्ञाने एतत्कालीनमनोवृत्तिर्न विरोधिनी, तथापि या मनोवृत्तिः

---

१. सुखदुःखेति। सुखदुःखाभावयोर्वा सुखसाधने दुःखाभावसाधने वा इच्छा भवति, मनोवृत्तिरूपज्ञानस्य तद्भिन्नत्वात्तत्र इच्छाभाव इति तात्पर्यम्। क्षणिकज्ञानानामपि द्विक्षणस्थायित्वात्।

२. आत्मतत्त्वविवेकेपुट ४३७ (चौ०प्रकाशन)

३. अज्ञानावस्थाविशेषस्य।

**तस्मादज्ञातज्ञापकत्वात्सप्रयोजनकत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थम्। तस्य चात्मतत्त्वस्य 'तत्त्वमस्यहं ब्रह्मास्मी' त्यादिवेदान्तमहावाक्यमेव प्रमापकम्।**

---

स्वोत्पत्त्यव्यवहितपूर्वकाले यादृशानन्दावारकाज्ञानस्य विरोधिनी तद्विशिष्टतया तादृशानन्दस्य काम्यतेत्युक्तौ न दोषः। तथा च तत्त्वज्ञाने इच्छानुत्पादेऽपि तद्विशिष्टरूपेणानवच्छिन्नानन्द इच्छासम्भवात् तादृशानन्दरूपेष्टप्रयोजकत्वज्ञानाच्छ्रवणादौ प्रवृत्तिः।

वस्तुतस्तु मन्मतेऽपि तार्किकादिमत इव सुखत्वजातिमत्त्वेनैव काम्यता, न तु तादृशवृत्तिमत्त्वेन, गौरवात्। उक्तजातिस्तु तादृशवृत्त्युपहितात्मनि स्वीक्रियते। असत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिति ज्ञानत्वजातिरिव, कैवल्यदशायामात्मनि ज्ञानत्वस्येव, सुखत्वस्यासत्त्वेऽपि तदुपलक्षितप्रकाशसत्त्वान्न दोषः। पदवाच्यतावच्छेदकमात्रस्य तदानीमस्वीकारात् सर्वथापि मुमुक्षोस्तत्र प्रवृत्तिरुपपद्यते।

### तत्त्वज्ञानोत्तरं बन्धाभावोपपादनम्

अथैवमपि तत्त्वधीकालपर्यन्तमनुवर्तमानः संसारबन्धस्तत्त्वज्ञानोत्पत्त्युत्तरकाले क्व गत इति प्रश्ने किमुत्तरं भवद्दर्शन इति चेत्। दर्शनान्तरे यदुत्तरम्। अथ दर्शनान्तर आत्यन्तिको दुःखध्वंसस्तत्त्वज्ञानेन जायत इति चेत्, किं तावता, दुःखं तु क्व गतम्। अथ न कुत्रापि गतम्, तत्त्वज्ञानोत्तरं तु कुतो न प्रमीयत इति चेत्, ध्वंसाधिकरणकालस्य प्रतियोग्यधिकरणत्वाभावनियमस्वीकारादिति चेत्, सत्यम् सखे न खेदं तदा याहि। तत्त्वज्ञानोत्पत्तिक्षणस्य दुःखाधिकरणकालपूर्वत्वाभावनियमोऽपि नापलपितुं शक्यते तद्वत् अस्मदीयदर्शनेऽपि प्रमायाः स्वसमानविषयकाज्ञानतत्प्रयुक्तदृश्यविरोधित्वनियमः, शुक्त्यादिप्रमायां तथा दर्शनात्।

अथ तत्त्वज्ञानस्य संसारनाशहेतुत्वे सत्येवेदमुपपद्यते, नाशजनकस्य प्रतियोगिविरोधित्वनियमात्, अन्यथा व्याप्तिग्राहकतर्कानवतारादिति चेन्न। घटदुःखादीनां तत्तत्कालविशिष्टं कपालात्मादिकमेव नाश इति प्राभाकरादिमतेऽपि मुद्गरपाततत्त्वज्ञानादीनां घटदुःखादिविरोधित्वस्वीकारात्। यदि तेषां तन्न स्यात्, तदाऽग्रेऽपि घटाद्यनुवृत्तिस्स्यादित्यादितर्कावताराच्च। एकाज्ञानपक्षे शुक्त्यादिप्रमाया उक्तविरोधित्वाभावादहृष्टान्तत्वेऽपि व्यतिरेकव्याप्तिग्रहसम्भवात् सम्भवत्येव प्रमाया उक्तविरोधित्वानुमानम्। 'विद्वान्नामरूपाद्विमुक्त' इत्यादिश्रुतिप्रामाण्याच्चोक्तविरोधित्वमिति दिक्।

ननु जीवन्मुक्तिस्वीकारपक्षे तत्त्वज्ञानस्य नोक्तविरोधित्वमिति चेन्न। अप्रामाण्यज्ञानाद्यनास्कन्दितत्वेनेव भ्रमव्याप्यभुज्यमानादृष्टाद्यभावेनापि तत्त्वज्ञानस्य विशेषणीयत्वात् तादृशस्य दर्पणादिसन्निधानासमानकालीनस्य तत्त्वज्ञानस्य प्रतिबिम्बभ्रमविरोधित्ववत् अज्ञानतत्प्रयुक्तदृश्यविरोधित्वसम्भवात् दर्पणादिसन्निधानस्य समकालीने तत्त्वज्ञाने प्रतिबिम्बादिभ्रमविरोधित्वादर्शनात् अज्ञानतज्जन्यभ्रमयोरुच्छेदेऽपि भ्रमसंस्काराधीनभयकम्पादिकार्यदर्शनेन तत्त्वज्ञानाधीनदृढसंस्कारसहिततत्त्वधीविशेषस्यैव उक्तविरोधित्वनियमाच्च। स्वसमानविषयकाज्ञानतत्सम्बन्धतदधीनदृश्यसत्यत्वधीविरोधित्वनियमस्तु तत्त्वधीमात्रस्य न व्याहत इति दिक्। उपसंहरति—**तस्मादिति**।

## आत्मज्ञानेन बन्धोच्छेदे पूर्वपक्षः

नन्वात्मभिन्नवस्तुमात्ररूपस्य समूलबन्धस्य तद्विशिष्टात्मज्ञानेन नोच्छेदः, ज्ञानस्य स्वविषयानिवर्तकत्वात्। 'तमेव विदित्वाऽतिमृत्युमेती' त्यादिश्रुत्याऽऽत्ममात्रविषयकज्ञानस्यैव बन्धनिवर्तकत्वोक्तेश्च। तादृशज्ञानं च न प्रत्यक्षम्, आत्मनो बहिरिन्द्रियायोग्यत्वात्। तस्य स्वप्रकाशत्वेन सुखादीनां स्वप्रकाशसाक्षिमात्रभास्यत्वेन[1] च मनसो बहिरिन्द्रियाद्यसहकृतस्य ज्ञानाकरणत्वाच्च। 'औपनिषदं[2] पुरुषं पृच्छामी' त्यादिश्रुत्या[3] उपनिषद्वाक्यमात्रबोध्यत्वोक्तेश्च। नापि शाब्दम्। परोक्षज्ञानस्य प्रत्यक्षाध्यासानिवर्तकत्वात्।

अत एव नानुमितिः। तत्र ह्यनात्मरूपे पक्षे आत्मनः संसर्गो विषयः? अथवाऽऽत्मरूपे? नाद्यः। तादृशज्ञानस्य बन्धानिवर्तकत्वात्। नान्त्यः। अत्यन्ताभेदे संसर्गासम्भवात्। तद्घटस्तद्घट इत्यादिज्ञानस्याप्रमात्वेन तद्घटादिव्यक्तिभिन्नवस्त्वनुयोगिकसंसर्गेण तद्घटादिव्यक्तिविशिष्टज्ञानत्वं तद्घटादिव्यक्तिप्रमात्वमित्यस्यावश्यवाच्यत्वात्। तद्व्यक्तौ तादात्म्यसम्बन्धेन तद्व्यक्तिविशिष्टज्ञानस्यानुवादरूपत्वेनाप्रमात्वाच्च। स्वकारणीभूताद्घट इति ज्ञानविषयादधिकं घटे द्रव्यत्वसंसृष्टाभेदं विषयीकुर्वतो हि ज्ञानस्य प्रमात्वं युक्तम्। तद्व्यक्तौ तद्व्यक्तिस्वरूपं तद्व्यक्तितादात्म्यं विषयीकुर्वता तु ज्ञानेन स्वकारणीभूततद्व्यक्तिरिति ज्ञानविषयादधिकं किं विषयीकृतम्, येन धारामध्यज्ञानवदप्रमा[4] न स्यात्।

ननु विशेषणतावच्छेदकप्रकारकज्ञानादेर्विशिष्टवैशिष्ट्यबुद्धौ हेतुत्वस्य मीमांसकैरस्वीकारात्, स्वीकारेऽपि कार्यभूतज्ञानस्य विषयतायाः कारणीभूतज्ञानविषयतातो विलक्षणत्वेन[5] च नानुवादकत्वमिति चेन्न। विलक्षणाया अपि विषयतायाः नैष्फल्येन ज्ञानेऽनुवादतुल्यत्वस्य दुर्वारत्वात्। न हि 'घटो घट' इति ज्ञानस्य स्वीकारे तस्य संशयादिनिवृत्तिरूपं फलमस्ति। 'घटो घटो नवे'त्यादिज्ञानस्याहार्यत्वेन तन्निवृत्तेरफलत्वात्। जीवत्वेश्वरत्वोपलक्षितयोः ऐक्याज्ञाननिवृत्तिस्तु तादृशैक्यस्य निर्विकल्पकादेव। तच्च नानुमितिः। तस्याः किञ्चिद्धर्मविशिष्टपक्षसाध्यावगाहित्वनियमात्। तस्मादभेदे सत्यप्युपाधिभेदप्रयुक्तो वा, विशिष्टकेवलभावप्रयुक्तो वा यत्र विशेषणविशेष्यव्यक्त्योर्भेदः; तत्रैवाभेदसंसर्गस्य प्रमा। यथा घटो द्रव्यं विशिष्टसत्ता शुद्धसत्तेत्यादौ। अत एव घटाभावो घटाभाववानित्यादावेकत्वादिविशिष्टघटाभावत्वादिरूपेणैव घटाभावादेर्विशेष्यता।

अत एव च जातिशक्तिवादे अक्षरतात्पर्याभ्यां शब्दमणावुक्तम्—गोत्वमेव गोपदशक्यं न तु गौः, गोत्वविशिष्टस्य शक्यत्वे गोत्वस्यापि शक्यताया आवश्यकत्वेन तस्यैव शक्यताया युक्तत्वात्। न च गोत्वेऽपि इतरव्यावृत्त एव सा वाच्या। तथाच गवेतरासमवेतत्वविशिष्टस्यैव तस्य शक्यत्वादावश्यकत्वं

---

१. सुखादिकं न मानसप्रत्यक्षगम्यं, अस्मन्मते साक्षिप्रत्यक्षमेव मानसप्रत्यक्षस्थानीयं तच्च न मनोजन्यं साक्षिणो नित्यत्वात्।

२. औपनिषदं-सर्वं वाक्यं सावधारणं अतः अब्भक्ष इतिवत् उपनिषदेकवेद्यमित्यर्थः।

३. सावधारणश्रुत्या।

४. धारावाहिकज्ञानगतद्वितीयादिज्ञानानामज्ञातविषयाभावादप्रमात्वम्।

५. 'विलक्षणत्वेनेति' निरूप्यनिरूपकभावभेदे विषयतावैलक्षण्यम्। अत एव समानाकारकज्ञानेषु न विषयताभेद इति तार्किकाः।

गोशक्यत्वस्यापीति वाच्यम् । गोत्वादेः स्वतोव्यावृत्तत्वात् । अन्यथा जात्या व्यक्तिर्व्यावर्त्यते, व्यक्त्या च जातिरित्यन्योन्याश्रयात्, स्वतो व्यावृत्तत्वं च न स्वस्मिन् ज्ञायमानेन स्वेन लिंगेन स्वस्य स्वेतरभिन्नतयाऽनुमीयमानत्वं, स्वस्य स्वासम्बन्धित्वात्, किन्तु स्वाश्रये ज्ञायमानेन स्वेन लिंगेन स्वविशिष्टस्य तदितरभिन्नतयाऽनुमीयमानत्वं परेषामन्त्यविशेषवत् । तथा च तदितरपदेनविशिष्टप्रतियोगिकभेदवतो-ग्रहणात् जातिभिन्नं सत् व्यक्तिभिन्नं यत् ततो भेदस्य साध्यतया विशिष्टपक्षे साध्यं सिद्ध्यत् विशेषणे जातावपि सिद्ध्यति जातिव्यक्त्योर्भेदस्तु धर्मधर्मिभावेन प्रत्यक्षेण सिद्ध्यति । न च धूमादेः धूमत्वादिनेव गोत्वादेः गवेतरासमवेतत्वादिनैव लिङ्गता, तथा च व्यक्तिविशेषितेनैव रूपेण व्यावृत्तस्य शक्यतेति वाच्यम् । धूमादेरननुगतस्य धूमत्वादिना व्याप्तिघटकत्वेऽपि अनुगतगोत्वादेः शुद्धस्यैव तत्स्वीकारात् । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यरूपव्याप्ते; गोत्वाद्यखण्डैकव्यक्तिसाध्यसाधनघटिततया सार्वभौमादिव्याख्यासम्भवात् । न च गोत्वत्वं व्यापकतानवच्छेदकमिति धीकालेपि उक्तव्याप्तिज्ञानादनुमित्यापत्तिरिति वाच्यम् । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगिता यन्निष्ठत्वयत्सम्बन्धावच्छिन्नत्वोभयाभाववती तत्सम्बन्धेन तत्सामानाधिकरण्यस्यैव व्याप्तित्वेन उक्तज्ञानस्य तज्ज्ञानाप्रतिबन्धकत्वेन उक्तापत्तेरिष्टत्वात् । उक्तप्रतियोगितायामुक्तोभयवत्त्वस्यैव तादृशव्याप्तिपक्षे व्यभिचारत्वात् । अस्तु वा व्यक्त्या व्यावृत्तापि जातिः शुद्धैव शक्या । कुतस्तर्हि व्यक्तिधीः जातिशक्तादेव । गवादिपदं हि नियमतः जातिव्यक्ती बोधयति । तस्य जातिशक्तिधीरेव सहकारिणी कल्प्यते लाघवादित्यादि । अथ पूर्वकल्पेपि गोत्वशक्तं गोपदमिति धीर्गोत्वविशिष्टस्य शाब्दधीहेतुः परन्तु जातिः स्वतो व्यावृत्ता । द्वितीयकल्पे तु व्यक्त्या व्यावृत्तेति भेदः तदत्र कल्पद्वयेपि शुद्धगोत्वादे; तत्तादात्म्यासम्भवो व्यक्तमेव ज्ञापितः ।

एवं सामान्यलक्षणायां दीधितिनावुक्तं—गोत्वादिनिष्ठव्याप्यतायां गवेतरासमवेतत्त्वमेवावच्छेदमिति । शुद्धगोत्वे तत्तादात्म्यस्वीकारे तु शुद्धमेवावच्छेदकमुच्येत लाघवात् । आख्यातवादशिरोमणावप्युक्तम् कर्तृकृतां कर्तरि शक्तिर्न तु कृतावेव शक्तिः कर्तरि लक्षणेति । तथा सति हि गवादिपदानामेव गोत्वादिविशिष्टे शक्तिः स्यात् । विनाऽवच्छेदकं गोत्वादौ शक्यत्वस्यासम्भवात् । गोत्वत्वादेरवच्छेदकत्वे च गौरवात् । पश्वादिपदानां तु लोमादावेव शक्यता स्यात् लोमवल्लाङ्गूलवति तु लक्षणा । केवले तादृशशक्ये स्वारसिकप्रयोगाभावस्तु कर्तृकृतोऽपि तुल्य इति ।

शुद्धगोत्वे तत्तादात्म्यस्वीकारे तु शुद्धगोत्वस्यैव तन्निष्ठशक्यतायामवच्छेदकत्वसम्भवात् गोत्वादेरपि शक्यतासम्भवात् असङ्गतमिदं स्यात् । तस्मात् शुद्धात्मनि तस्य सम्बन्धासम्भवात् बन्धनिवर्तकज्ञानं नानुमितिः । नाप्युपमिति; भट्टमते 'स गौरनेन गवयेन' सदृश' इत्याद्युपमितिस्थल इव प्रकृते सदृशवस्तुद्वयावगाहने मतान्तरे[1] पदवाच्यत्वावगाहने च अनात्मविषयकत्वापत्तेः । नाप्यर्थापत्तिः । आत्मनि तत्संसर्गं विना कस्यचिदर्थस्यानुपपन्नत्वाभावात् । संसर्गस्यात्मरूपत्वे अनात्मरूपत्वे वा पूर्वोक्तदोषापत्तेश्च[2] । नाप्यनुपलब्धि-करणकम् । तस्याभावमात्रे प्रमात्वात् । स्वाभावाभावत्वेन भावग्राहकत्वेऽपि अनात्मविषयकत्वतादवस्थ्यात् । प्रमेयस्यात्मत्वे अनात्मत्वे वा पूर्वोक्तदोषापत्तेश्च । तस्मान्नोक्तज्ञानोत्पत्तिसम्भव इत्यत आह—

१. तार्किकमते ।

२. अनात्मत्वे तमेव विदित्वेति श्रुतिबाधः आत्मत्वे घटो घट इतिवत् अबोधकत्वम्, अपूर्वविषयाभावात् ।

**तस्य चेति** । ब्रह्मात्मैक्यस्य चेत्यर्थः । आत्मतत्त्वस्य साक्षिस्वरूपस्य । प्रमापकं प्रत्यक्षप्रमाकरणम् । शब्दकरणकमपि आत्मज्ञानं प्रत्यक्षमेव, साक्ष्यभिन्नविषयकत्वात्[1] । घटचाक्षुषादीनामपि प्रत्यक्षत्वं नेन्द्रियकरणकत्वादिरूपम्, सुखादिप्रत्यक्षे आत्मसाक्षिमात्ररूपे अव्याप्तेः । किन्त्वज्ञानविषयतासामान्यशून्यविषयकत्वम् । घटादिकं च यद्यपि जडत्वात् सर्वदैवाज्ञानाविषयः, तथापि तत्र चाक्षुषादिवृत्त्यभावकाले तदवच्छिन्नचितोऽज्ञानविषयत्वात्तत्तादात्म्यापन्ने घटादावप्यज्ञानविषयत्वव्यवहारः । अत एव चाक्षुषादिवृत्त्यभावकालीने घटादिपरोक्षज्ञाने न प्रत्यक्षत्वव्यवहारः । चाक्षुषादिवृत्तिकालीने तु घटादेरपरोक्षज्ञाने प्रत्यक्षत्वव्यवहारो निष्प्रत्यूहः । विद्यमानसुखादौ तु साक्षी सर्वदैव प्रत्यक्षः । सुखादितादात्म्यापन्नस्य साक्षिणः सर्वदैवाज्ञानाविषयत्वात्, ब्रह्मात्मैक्याकारमनोवृत्तिकाले च ब्रह्मात्मैक्यस्याज्ञानाविषयत्वात्तद्विषयकत्वेनोक्तवृत्तेः प्रत्यक्षतेति न कोऽपि दोषः इति भावः ।

## वृत्तेरज्ञाननाशकत्वोपपादनम्

ननु वृत्तिः प्रत्यक्षरूपा सती अज्ञाननाशिका, प्रत्यक्षत्वं च तस्या अज्ञानाविषयविषयकत्वम्, तथा चाज्ञाननाशात् पूर्वमज्ञानाविषयत्वस्य विषयेष्वभावात् वृत्तेरज्ञाननाशकत्वानुपपत्तिरिति चेन्न । न हि वृत्तिरज्ञाननाशिका, किन्त्वज्ञानाधिकरणक्षणावृत्तिः वृत्तेरेवाज्ञाननाशत्वात् । तत्रापि इन्द्रियजन्या वृत्तिः स्वसमानविषयकाज्ञाननाशः । आत्मविषयिका तु शब्दजन्यापि । तथा च यादृशाज्ञानाभावो यद्वृत्तेरुत्पत्तिक्षणावधि प्रतीयते, सा वृत्तिः तदज्ञाननाश इति तु निष्कर्षः । वृत्तिविशेषस्याज्ञानविशेषनाशकत्वे तु तदुत्पत्तिक्षणे तद्वृत्तितदज्ञानयोः प्रत्ययस्यानुभवविरुद्धस्यापत्तेः । न हि युगपदेकस्मिन्विषये ज्ञातत्वाज्ञातत्वे केनाप्यनुभूयेते । यदि तु घटाद्यवच्छिन्ना चिच्छुद्धचितो न भिन्ना । तथा च ब्रह्मसाक्षात्कारोत्तरं घटाद्याकारवृत्त्यभावकाले अज्ञानाविषयशुद्धचित्तादात्म्यस्य घटादौ सत्त्वात् अपरोक्षव्यवहारापत्तिरित्युच्यते, तदा चितः अपरोक्षत्वमज्ञानाविषयचिद्रूपत्वम् । विशेष्यमात्रस्योक्तौ तत्त्वज्ञानात् पूर्वमपि आत्मब्रह्मणोरैक्यं साक्षात्करोमीति धीस्स्यात् । विशेषणमात्रस्योक्तौ घटादौ सर्वदा अपरोक्षव्यवहारस्स्यात् । दृश्यानामपरोक्षत्वं त्वज्ञानविषयतानवच्छेदकत्वविशिष्टदृश्यत्वम् । तादृशापरोक्षत्वयोरन्यतराश्रयविषयकत्वं ज्ञानस्यापरोक्षत्वम् ।

## महावाक्यार्थज्ञाने पदार्थज्ञानस्यावश्यकता

ननु उक्तवाक्यादपि नोक्तज्ञानस्योत्पत्तिसम्भवः, उक्तवाक्यान्तर्गततत्त्वमादिपदार्थापरिचयात् । मानान्तरप्रमिते हि पदार्थे गृहीतसङ्केतसम्बन्धस्य पदस्य ज्ञानेन उपस्थापिते सति वाक्यार्थः प्रमीयते । तत्त्वमादिपदानां चार्था न मानान्तरेण प्रमिताः । जगत्कारणत्वादिविशिष्टचिद्रूपस्य तत्पदवाच्यस्य हि नानुमानेन ज्ञानम् । 'आद्यकार्यं सकर्तृकम् कार्यत्वात् यद्यत्कार्यं तत्तत् सकर्तृकम्, यथा घट' इत्याद्यनुमानस्याप्रयोजकत्वात् । यदि हि कार्यसामान्ये कर्ता करणं स्यात् तदा कार्यत्वं कर्तृजन्यत्वरूपसकर्तृकत्वव्याप्यं स्यात् । यदा तु घटादिकार्येऽपि न कुलालादिः कारणम्, कुलालादिक्रियादेरवश्यं कारणत्वस्य वाच्यत्वेन कुलालादेः तत्पितृवदन्यथासिद्धत्वात्, तदा आद्यकार्ये कर्तुः कारणत्वस्य का

१. साक्ष्यभिन्नत्वं विषयप्रत्यक्षत्वं तद्विषयकत्वं ज्ञानगतम् ।

**वाक्यं च पदार्थज्ञानद्वारैव ज्ञापकमिति तत्त्वम्पदार्थयोः प्रकृतवाक्यार्थानुकूलयोरन्यतोऽसिद्धत्वात्तावपि शास्त्रेणैव प्रमातव्यौ, यूपाहवनीयादिपदार्थवत्। ततश्च 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ती'त्याद्याः सृष्ट्यादिश्रुतयस्तत्पदवाच्यार्थस्य समर्पिकाः। 'सत्यं ज्ञानमनन्त' मित्यादयस्तु लक्ष्यार्थस्य। एवं जाग्रत्स्वप्नसुषुप्त्यादिश्रुतयः**

---

कथा। आरम्भवादास्वीकारेण आद्यकार्यस्य क्रियासंयोगादिप्रयोज्यत्वासम्भवात्। 'आत्मन आकाशस्सम्भूत' इत्यादिश्रुत्यनुसारेण महत एव आकाशादेः प्रथममुत्पत्तेः। उक्तश्रुतेरस्तावकत्वेन न स्वार्थेऽप्रामाण्यम्। तत्प्रामाण्यवादिनो देवताधिकरणस्य अस्वीकारिणि 'न कदाचिदनीदृशं जगदि'ति मीमांसकसिद्धान्ते सृष्टिप्रलयाभावेन आद्यकार्यस्यैवालीकत्वात्। उक्तान्यथासिद्धिमस्वीकृत्य कुलालादिहेतुत्वं च स्वीकृत्य तद्दृष्टान्तमात्रेणाद्यकार्ये कर्तृजन्यत्वस्वीकारेऽपि बहुजनाश्रयप्रासादादिदृष्टान्तेन पृथिव्यादेर्नानाकर्तृकत्वानुमानापत्तेश्च। अत एव कार्योत्पत्त्यन्यथानुपपत्तिरपि नेशस्य जगत्कारणत्वे मानम्। तथा च तत्पदवाच्यस्याननुभूतत्वेन तत्सम्बन्धित्वेन शुद्धब्रह्मणस्तत्पदलक्ष्यस्य सुतरामननुभूतत्वान्न तत्पदेनोपस्थितिसम्भवः।

**त्वम्पदवाच्यस्य** तु जाग्रदाद्येकैकावस्थाविशिष्टरूपेण साक्षिणा गृहीतत्वेऽपि अवस्थात्रयविशिष्टस्य त्वम्पदमुख्यार्थस्य त्वम्पदलक्ष्यस्य शुद्धजीवस्वरूपस्य चाननुभूतत्वेन न त्वम्पदेनोपस्थितिसम्भव इति तत्त्वम्पदलक्ष्यार्थयोरैक्यं कथं बोध्यमित्यत आह—**वाक्यं चेति**। ज्ञापकं-पदार्थयोरैक्यादिज्ञापकम्। तत्त्वम्पदार्थयोः—पदाभ्यां वाच्ययोर्लक्ष्ययोश्च। प्रकृतवाक्यार्थानुकूलयोः—तत्त्वमसीति वाक्यार्थबुद्धौ प्रयोजकीभूतोपस्थितिविषययोः। वाच्योपस्थितिद्वारकलक्ष्योपस्थितेरेव लक्ष्यघटितवाक्यार्थबोधे हेतुत्वात्। अन्यतः—श्रुतिभिन्नप्रमाणात्। शास्त्रेणैव—श्रुत्यैव। **यूपेत्यादि**। यथा यूपपदार्थोद्देशेन तक्षणादिसंस्कारकर्मविधायकस्य 'यूपं तक्षती'त्यादिवाक्यस्य पर्यालोचनात्तक्षणादिजन्यसंस्कारविशिष्टकाष्ठं यूपपदवाच्यमिति निर्णीय 'यूपे पशुं बध्नाती'त्यादिवाक्याद् यूपसंसर्गो बुध्यते, यथा वा 'वसन्ते ब्राह्मणोऽग्नीनादधीत' 'नक्तं गार्हपत्यमादधाति दिवाऽऽहवनीय' मित्यादिवाक्यपर्यालोचनेन दिवाधानादिसाध्याग्न्यादिराहवनीयादिपदवाच्य इति निर्णीय 'आहवनीये जुहोति 'गार्हपत्ये पत्नीस्संयाजयन्ती'त्यादिवाक्यादाहवनीयादिसंसर्गो बुध्यत इत्यर्थः। **भूतानीति**। उत्पन्नानीत्यर्थः। तेन पञ्चभूतान्यस्य गुणक्रियादेर्दृग्दृश्यतादात्म्येक्षणादेश्च ब्रह्महेतुकत्वलाभः। जायन्ते—उत्पद्यन्ते। जातानि—दृश्यतया प्रादुर्भूतानि दृश्यानीति यावत्। जीवन्ति—सत्तास्फूर्तिमर्यादादिकं प्राप्नानि। प्रयन्तीति शतृप्रत्ययान्तं लयं लभमानानीत्यर्थः। तथा च यतो ब्रह्मणो हेतोः कार्यं सर्वमुत्पद्यते, दृश्यानि सर्वाणि यतः सत्तास्फुरणादि लभन्ते, लीयमानानि च सर्वाणि प्रलयकाले यत्प्रविशन्ति तद्ब्रह्मेत्यर्थः। पञ्चमीतृतीययोर्हेतुसामान्यार्थकत्वेऽपि लीयमानकार्याधारत्वोक्त्योपादानत्वं लभ्यते। तदैक्षत बहु स्यां प्रजायेये'ति 'सोऽकामयत तदात्मानं स्वयमकुरुते'ति ईक्षणकामनाकृतीनां जगत्कारणनिष्ठतया निर्देशाद्ब्रह्मणो जगत्कर्तृतालाभः। 'येने'त्याद्येकवचननिर्देशात् 'य एको जालवानीशत ईशनीभि'रित्यादिश्रुतेश्च जगज्जन्मादिहेतोरेकत्वमिति बोध्यम्। **तत्पदवाच्यार्थस्येति**। तत्त्वमसीति वाक्यप्रवृत्तेः पूर्वं सृष्ट्यादिवाक्यस्य प्रकृतत्वात् प्रक्रान्तवाचितत्पदस्य सृष्ट्यादिकारणं वाच्यमिति भावः। **इत्यादयस्तु लक्ष्यार्थस्येति**। 'ब्रह्मविदाप्नोति पर'मित्यनेन शुद्धब्रह्म-

ज्ञानस्य मोक्षहेतुत्वे उक्ते किं तद्ब्रह्मेत्याकाङ्क्षायां सत्यमित्यादिवाक्यस्य प्रवृत्तत्वेन तत्पदलक्ष्यशुद्ध-ब्रह्मपरत्वमिति भावः।

बुद्धान्तं चेत्याद्या इत्यत्राद्यशब्देन 'तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संल्लयायैव ध्रियते एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यती'ति श्रुतिसंग्रहः। कूले—नद्यास्तीरे, अन्तौ—कर्मफलपरिपाक-रूपौ, अनुसञ्चरति—अनुगच्छति, स्वप्नान्तं—स्वप्नभोगरूपमन्तम्, बुद्धान्तं—जाग्रद्भोगरूपमन्तम्। सुपर्णः-शीघ्रगतिः श्येनः, विपरिपत्य-विशेषेण नानादेशेषु पतित्वा, श्रान्तो भूत्वा, पक्षौ संहत्य संयुक्तीकृत्य, संल्लयाय-नीडाय, ध्रियते-नीडप्राप्त्यर्थं यतते। अन्ताय-उपरतावस्थारूपान्तप्राप्त्यर्थं, धावति-यतते।

**अवस्थात्रयविशिष्टो जीवः सृष्ट्यादित्रयकर्ता ईश्वर इत्येव वक्तव्यमित्युपपादनम्**

ननु जाग्रदाद्येकैकावस्थाविशिष्टस्यापि त्वम्पदवाच्यतासम्भवेनावस्थात्रयविशिष्टस्य सा कथमुक्ता। एवं जन्माद्येकैकहेतुत्वविशिष्टस्यापि तत्पदवाच्यतासम्भवेन जन्मस्थितिसंहाररूपत्रय-हेतोरेव सा कथमुक्ता। न च 'स वा अयमात्मा ब्रह्म' इत्यादिवाक्यस्य 'तद्यथा महामत्स्य' इत्याद्य-वस्थात्रयविशिष्टजीवबोधकवाक्योत्तरं विद्यमानत्वाज्जीवबोधकपदानां महावाक्यस्थानामवस्थात्रय-विशिष्टचिदेव मुख्योऽर्थः, एवं तत्त्वमस्यादिवाक्यस्य जन्मादिहेतुब्रह्मबोधकवाक्योत्तरं सत्त्वात् तादृशं ब्रह्मैव ब्रह्मबोधकपदमुख्यार्थ इति वाच्यम्। श्रुतिष्वप्यवस्थात्रयस्य जन्मादित्रयस्य च कथं निर्देश इति पर्यनुयोगात्, एकैकघटितस्यैव वाच्यतेत्यभिप्रायेणापि उक्तश्रुतिसङ्गतेश्च। न च जन्मलय-हेतुत्वस्याविद्यायामपि सम्भवेनातिप्रसक्त्या स्थितिहेतुत्वमावश्यकम्, एवं विशेषविज्ञानाभावरूप-सुषुप्तेरपि घटादावतिप्रसक्तत्वेन न मुख्यार्थतावच्छेदकत्वम्, ये एव हि तत्त्वम्पदयोर्मुख्यार्थोपलक्षिते स्वरूपे, तयोरेवैक्यं महावाक्येन बोधनीयमिति वाच्यम्। स्थितिहेतुत्वस्य ब्रह्मण्येव सत्त्वात्तदन्यवैयर्थ्यात् घटादौ सुषुप्तिव्यवहाराभावेन उपरतमनस्कत्वस्य तद्विशिष्टानन्दसामान्यानुभवितृत्वस्य वा सुषुप्तित्वात् 'आनन्दभुक् चेतोमुखः प्राज्ञ' इति श्रुत्या तथा बोधात्, जाग्रदाद्यन्यतरमात्रस्यातिप्रसक्तत्वाच्च। न च जन्मादित्रयहेतूनां ब्रह्मविष्णुरुद्राणां जाग्रदाद्यवस्थावतां विश्वतैजसप्राज्ञानां चैक्यं स्वरूपमिति लाभाय श्रुतिषु त्रयमुक्तम्, अन्यथा हि जन्ममात्रहेतुत्वस्य एकवाक्येनोक्तौ प्रदेशान्तरयोर्वाक्याभ्यां स्थिति-संहारयोरेकैकहेतुत्वोक्तौ जन्मादित्रयहेतूनां त्रयाणामैक्यं न लभ्येत, एवं विश्वतैजसप्राज्ञानामप्येक-प्रदेशानुक्तौ नैक्यं लभ्येत, तथा च त्रयाणां त्रिभिरैक्यस्य महावाक्याल्लाभेऽपि स्वरूपत्रयस्य सत्यत्वा-पत्त्या अद्वैतश्रुतिविरोध इति **कल्पतरूक्तं** युक्तमिति वाच्यम्। 'एकमेवाद्वितीय' मित्यादिना ब्रह्मणः, 'असङ्गो ह्ययं पुरुषः सलिल एको द्रष्टाऽद्वैतो भवती' त्यादिना च जीवस्य निरङ्कुशाद्वैतस्वरूप-बोधनात् तदर्थमुक्तप्रयासस्यानौचित्यादिति चेत्।

अत्रोच्यते। जन्मादिहेतुत्वानां जाग्रदाद्यवस्थानां च एकैकमात्रस्योक्तौ महावाक्यस्थतत्त्वम्पदा-भ्यामेकैकमात्रोपलक्षितस्वरूपयोरैक्यं बोध्येत, तथा च तयोरेव भेदभ्रमो निवर्तेत। न तु हेतुतात्रयोप-लक्षितेशस्वरूपादवस्थात्रयोपलक्षितजीवस्वरूपस्य भेदभ्रमो निवर्त्येत। न हि 'छत्री कुण्डली वासस्वी यः स श्यामः स्थूलश्चैत्रो ने'ति भ्रमः छत्री श्याम इति वाक्यजन्यज्ञानेन निवर्तते। निवर्तते तु चैत्र इत्यन्तोक्तवाक्यजन्यज्ञानेन। तादृशज्ञानयोस्तद्व्यक्तिमात्रविषयत्वाविशेषेऽपि सामग्रीविशेषजन्य-

**'तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं चे'त्याद्यास्त्वंपदवाच्यार्थस्य समर्पिकाः। 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, न दृष्टेर्द्रष्टारं पश्ये'रित्यादयस्तु लक्ष्यार्थस्य। तेन प्रथममवान्तरवाक्येभ्योऽनुभूतयोः शुद्धयोर्जीवब्रह्मणोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्त्या**

---

ज्ञानस्यैवोक्तभ्रमनिवर्तकत्वेन सर्वानुभविकत्वात्। तस्मात् त्रितयोपलक्षितस्वरूपयोरैक्यविषयकस्य मूलाज्ञानस्य तादृशैक्यज्ञानं विनोच्छेदासम्भवात्तं विना च तादृशाज्ञानमूलकभेदभ्रमोच्छेदासम्भवात् तादृशज्ञानमावश्यकम्। तच्च त्रितयविशिष्टोपस्थितिपूर्वकशुद्धोपस्थितिजन्यमेवेति तादृशोपस्थित्यर्थमेकस्मिन्नेव वाक्ये त्रितयोक्तिरावश्यिकीति बोध्यम्।

**योऽयमित्यादि।** बृहदारण्यके षष्ठाध्याये तृतीयब्राह्मणे 'एष ब्रह्मलोक' इत्यादिवाक्येन शुद्धजीवब्रह्मणोरैक्यस्य वक्ष्माणत्वेन तदुपयुक्तस्वप्रकाशजीवस्वरूपमादित्यचन्द्राग्निवाचामभावे जीवस्य व्यवहारप्रयोजकं ज्योतिः किमिति प्रश्नपूर्वकेणैव 'आत्मैवास्य ज्योतिभर्वती'त्यन्तेन उक्त्वा 'कतम आत्मे' त्यनेन शुद्धात्मस्वरूपमात्रज्ञाने आकाङ्क्षामुत्थाप्य योऽयमित्यादिवाक्यस्य उक्तत्वेन शुद्धात्मपरत्वम्। तत्र च वाक्येऽयमर्थः—विज्ञानमयो बुद्धिविकाराभिमानी प्राणेषु अभिमानसम्बन्धेन प्राणसम्बन्धी हृदि हृदयस्थमनोऽभिमानी अन्तर्ज्योतिर्मनोवृत्तिरूपबहिर्ज्योतिरन्यस्वभावः पुरुषः पूर्णः। तथा च ज्योतिरात्मेत्यनेनाहमाकारधीविषयत्वे पूर्ववाक्येन ज्योतिषो ज्ञानेऽपि बुद्ध्यादीनां सर्वेषामेव तत्सम्भवाद्विज्ञानमयादिपदैर्बुद्ध्यादिविलक्षणं स्वप्रकाशरूपं प्रदर्शितम्। **तेनेति**। उक्तश्रुतिभिर्वाच्यलक्ष्योभयसमर्पणेनेत्यर्थः। वाच्यसमर्पणस्य फलमाह—**मुख्यार्थान्वयानुपपत्त्येति**। मुख्यवृत्त्युपस्थापितयोर्विशिष्टजीवब्रह्मणोरैक्यबोधस्य प्रमात्वानुपपत्तिज्ञानेनेत्यर्थः। वाच्यलक्ष्योभयसमर्पणस्य फलमाह—**अवान्तरवाक्येत्यादिना**। अवान्तरवाक्येभ्योऽनुभूतयोः शुद्धयोर्लक्षणया स्मरणोपपत्तिरिति योजना। वाच्यसमर्पणे सति वाच्ययोरन्वयानुपपत्तिज्ञानम्, ततश्च वाच्यज्ञानात्तत्सम्बन्धिनो लक्ष्यस्यावान्तरवाक्याधीनपूर्वानुभवाधीनसंस्कारजन्यस्मृत्या तदैक्यरूपवाक्यार्थप्रमेति भावः।

ननु वाच्ययोश्शुद्धयोश्चावान्तरवाक्यानुभूतत्वं वक्तव्यम्, शुद्धयोरपि वा तन्न वक्तव्यम्, तेनेत्यनेनैव तल्लाभात्; किमिति शुद्धयोरेव तदुक्तमिति चेत्। अत्रोच्यते। यद्यपि वाच्ययोरपि यतो वेत्यादिना तद्यथेत्यादिना च वाक्येनानुभवोऽस्ति तथापि तत्र तयोर्नावान्तरवाक्यत्वम्। तत्रैव तात्पर्यपर्यवसानात्, तयोर्ब्रह्मजीवलक्षणबोधकत्वेन लक्षणविशिष्टब्रह्मजीवबोधनद्वारा शुद्धब्रह्मजीवस्वरूपपरत्वात्। लक्षणबोधकवाक्यमात्रस्य लक्षणविशिष्टबोधनद्वारा लक्षणोपलक्षिताखण्डव्यक्तिपरत्वमित्यस्यार्थस्याद्वैतसिद्धिद्वितीयपरिच्छेदे जन्मादिसूत्रकल्पतरौ च व्यवस्थापितत्वात्। **तथा च** यतो वेत्यादिवाक्ययोरपि शुद्धबोधपर्यवसितत्वेन शुद्धयोरेवावान्तरवाक्यानुभूतत्वोक्तिर्युक्तैवेति भावः।

### तत्त्वंपदयोर्वाच्यनिर्णयः

अत्रेदं **बोध्यम्**। वाच्यसमर्पकत्वं तत्पदवाच्यबोधद्वारकशुद्धचिद्बोधपरत्वम्। तेन सत्यादिवाक्यस्यापि सत्यादिपदवाच्यबोधद्वारकशुद्धचिद्बोधपरत्वेऽपि न वाच्यसमर्पकत्वम्। शुद्धबोधपरत्वेऽपि यतो वेत्यादिवाक्यं न स्वरूपलक्षणपरम्। ब्रह्मस्वरूपं सत्यत्वाद्युपलक्षितात्यन्ताभिन्नं न वेत्यादिसंशयाद्यनिवर्तकत्वात्, स्वरूपे भ्रमसंशयनिवर्तकधीपरस्यैव स्वरूपलक्षणपरत्वात्। एवं तत्पदवाच्य-

**लक्षणया स्मरणोपपत्तिः। सुषुप्तौ निर्विकल्पकसाक्षिचैतन्यानुभवाङ्गीकाराच्च।**

---

तावच्छेदकं न सृष्ट्यादित्रितयजनकत्वम्, प्रलये तदभावात्। न हि तदा सृष्ट्याद्यन्यतमस्याप्युपधायकत्वमस्ति। न चोपलक्षणविधया तादृशत्रयोपधायकत्वं वाच्यतावच्छेदकमिति वाच्यम्। काकवन्तो देवदत्तस्य गृहा इत्यादावुत्तृणत्वादेरिवोपलक्ष्यतावच्छेदकस्यावश्यमुपलक्षणबोद्ध्यतया तस्यैव वाच्यतावच्छेदकत्वस्य युक्तत्वात्। किन्तु सृष्ट्यादिजननस्वरूपयोग्यतावच्छेदकीभूताविद्याबिम्बत्वरूपमीश्वरत्वम्। एवं त्वम्पदवाच्यतावच्छेदकमपि नावस्थात्रयवत्त्वम्। मूर्छासमाध्योस्तदभावात्। किन्त्ववस्थात्रयसम्बन्धयोग्यतावच्छेदकीभूताविद्याप्रतिबिम्बत्वरूपं जीवत्वम्। न च मूर्छायां कर्मेन्द्रियव्यापारसत्त्वात् जाग्रद्रूपत्वम् विशेषविज्ञानाभावात्सुषुप्तित्वं च। समाधिकाले तु न जीवस्य त्वम्पदवाच्यतेति जाग्रदाद्यन्यतमवत्त्वस्य त्वम्पदवाच्यतावच्छेदकत्वेऽपि न दोष इति वाच्यम्। [1]मूर्छायां वायुक्रियामात्रेण गात्रकम्पादेस्सत्त्वेऽपि कर्मेन्द्रियव्यापारसत्त्वे मानाभावात्। उपरतमनस्कत्वे सत्यानन्दानुभवितृत्वस्यैव सुषुप्तत्वेन तत्र तदभावात्, तदा गात्रकम्पादिसत्त्वेन जीवस्य त्वम्पदवाच्यतानपायात्। समाधेस्तु असम्प्रज्ञातरूपस्याप्यविद्यानिवृत्तेः पूर्वमपि त्वम्पदार्थसाक्षात्कारहेतुतयाऽनुष्ठेयत्वेन तदानीं जीवत्वसत्त्वेन त्वम्पदवाच्यतानपायात्। नन्ववान्तरवाक्यैश्शुद्धेऽनुभूते सति महावाक्यस्थपदैः शुद्धस्मृतिसम्भवः, अवान्तरवाक्यस्थपदैस्तु कथं शुद्धस्य स्मृतिः? तत्पूर्वं शुद्धस्याननुभवादित्यत आह—**सुषुप्ताविति। निर्विकल्पकेति।** साक्षिस्वरूपसुखस्वरूपाज्ञानस्वरूपाकाराः निर्विकल्पास्तिस्रोऽविद्यावृत्तयः सुषुप्तौ जायन्त इति **विवरणे**ऽङ्गीकृतम्। साक्षिणश्चाविद्योपहितचिद्रूपत्वपक्षेऽप्यविद्यायाः साक्षिस्वरूपाघटकत्वात् शुद्धचिद्रूपत्वमेव। पक्षान्तरे[2] तु वक्ष्यन्त्याचार्या एव—'साक्षी तु सर्वानुगतस्तुरीयः तथा एकः कूटस्थः साक्षी'त्यादि। तथा च सौषुप्तिकनिर्विकल्पकानुभवमूलिकैवावान्तरवाक्यस्थपदजन्या शुद्धस्मृतिरिति भावः।

ननु वार्तिककारमते सुषुप्तौ नोक्तनिर्विकल्पकवृत्तिः स्वीक्रियते। तत्कथमवान्तरवाक्यस्थपदैः स्मरणम्। न चैवं तन्मते 'सुखमहमस्वाप्सं न किञ्चिदवेदिषमि'त्याकारकज्ञानस्य जाग्रत्कालीनस्य स्मृतित्वं न स्यादिति वाच्यम्। तस्य तन्मतेऽनुभवत्वस्वीकारात्। उक्तं हि अव्याकृतप्रक्रियायां वार्तिके—

[3]न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः।
कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक्॥

---

१. "मूर्च्छायां विशेषविज्ञानाभवात् करालवदनत्वगात्रकम्पादिकर्मेन्द्रियव्यापारसत्वाच्च" इति वेदान्तसूत्रमुक्तावल्यां मुग्धेऽर्धसम्पत्तिः परिशेषात्—इति सूत्रे स्वेनैवोक्तस्य विरुद्धमिदं, तत्र मूर्च्छिते कर्मेन्द्रियव्यापारसत्वोक्तेः तथापि अभ्युपेत्यवादः सूत्रवृत्तिवाक्यमिति ध्येयम्।

२. पक्षान्तरे—शुद्धचैतन्यं साक्षीति पक्षे।

३. 'न सुषुप्तिगेति' उत्थितस्य नावेदिषमिति परामर्शः स्वापकालीनाज्ञानविषयककादाचित्काभवोपनायको न। कुतः? आत्मनो देशकालव्यवधानाभावात् तद्गताज्ञानस्यापि न तत्सम्भवः। तथा च नाज्ञासिषमित्यज्ञानं पूर्वकालश्च साक्षिण्यध्यस्तौ तेनैव दृश्येते—इत्यादि आ-टी०।

**अद्वितीयब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिपदानामुपाधिविशिष्टचैतन्ये शक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तत्रैव तदंशे एव संस्कारोद्बोधाच्च ।**

**इच्छन्ति ह्याकाशादिपदादपि निर्विकल्पकं स्मरणम् ।**

---

कालाद्यव्यवधानत्वादिति । यदा स्मृतिः परेण वाच्या, तदापि साक्षिरूपानुभवोऽस्तीत्यर्थः । अत्र हेतुः—न हीति । आत्मस्थं सुषुप्तजीवस्थं साक्षिचैतन्यम्, अतीतभाक् अतीतताभाक् । न चाज्ञानाकारवृत्तिं विना नाज्ञासिषमित्याकारो नोपपद्यत इति वाच्यम् । न किञ्चिदवेदिषमित्यनेनानेकविषयकाज्ञानस्यैवोल्लेखात् । तन्नाशादेव तदवच्छिन्नचिन्नाशरूपसंस्कारोत्पादेन स्मृतिसम्भवात्, नाज्ञासिषमिति स्मृतिरिति मूलाज्ञानस्मृतिनिषेधः । न च तथापि वार्तिकमते साक्षिणः स्वप्रकाशतया सर्वदा भानस्यानपलापात् तद्बलाच्छुद्धस्मृतिरवान्तरवाक्यस्थपदैः स्यादेवेति वाच्यम् । जन्यनिर्विकल्पकं विना तत्सूक्ष्मावस्थारूपसंस्कारजस्मृत्यसम्भवादित्यत आह—**अद्वितीयेति ।** शुद्धेत्यर्थः । विजिज्ञापयिषया—प्रमार्थम् । **उपाधीति ।** सत्यत्वादीत्यर्थः । शक्तत्वेऽपि—शक्ततया ज्ञातत्वेऽपि । चैतन्यमात्रे—शुद्धचैतन्ये । तात्पर्येण—तात्पर्यनिश्चयेन । तदंशे—शुद्धचिद्रूपे, विशिष्टस्यांशे । संस्कारोद्बोधात्—स्मृतिरूपकार्यजनने संस्कारस्य सहकारित्वकल्पनात् । सत्यज्ञानादिपदानामित्यनुषज्यते । तथा च विशिष्टस्यैव पूर्वमनुभूतत्वेन संस्कारसत्त्वेऽपि सत्यादिवाक्ये शुद्धब्रह्मतात्पर्यानुरोधेन तस्य संस्कारस्य सत्यादिपदज्ञानसहकृतस्य शुद्धस्मृतिहेतुत्वं कल्प्यत इति भावः ।

ननु पदपदार्थयोः वृत्तिज्ञानजन्या पदार्थोपस्थितिरेवान्वयबोधे हेतुः, सत्यादिपदस्य शुद्धे लक्षणारूपवृत्तिज्ञानं न सम्भवति, शुद्धस्य पूर्वमज्ञानात् अत आह—**इच्छन्तीति ।** मणिकारादय इति शेषः । शक्तिवादे हि मणावुक्तम्—"आकाशादिपदस्य शब्दाश्रयत्वादिविशिष्टे न शक्तिः, कदाचिदष्टद्रव्यान्यद्रव्यत्वरूपेणाप्याकाशादिपदाच्छाब्दबोधोत्पत्तेस्तद्विशिष्टेऽपि शक्त्यापत्तेरेकस्यामाकाशादिव्यक्तौ केवलायामेव शक्तिसम्भवात् शक्त्यनुगमार्थमेव किञ्चिद्धर्मविशिष्टे शक्तिस्वीकारात् । न च शुद्धे शक्तिज्ञानात्स्मृतौ सत्यां शुद्धस्यैव शाब्दबोधः स्यात्, न तु शब्दाश्रयत्वादिविशिष्टस्येति वाच्यम् । यद्यपि शब्दाश्रयत्वाद्यंशे न शक्तिर्गृह्यते, तथापि शब्दाश्रयत्वेनोपलक्षिताकाशव्यक्तौ शक्तिग्रहस्यैव शब्दाश्रयत्वादिविशिष्टविशेष्यकस्मृतिहेतुत्वसम्भवेन विशिष्टविषयकस्मृतिहेतुकशाब्दबोधसम्भवात् । अथवा आकाशादिपदान्निर्विकल्पकमेव स्मरणमास्ताम् । ततः शुद्धाकाशस्यैव सुबर्थोपरागेण शाब्दबोधे भानसम्भवात् । निर्धर्मितावच्छेदककशाब्दबोधास्वीकारेऽपि आकाशमस्तीत्यादिवाक्यादेकमस्तीत्याकारके, अस्तित्वाश्रयत्वम् एकवृत्तीत्याकारके वा शाब्दबोधे बाधकाभावा"दिति । तदत्र कल्पद्वये मणिकारोक्तेऽपि आद्ये शब्दाश्रयत्वाद्यंशे शक्त्यग्रहात्तद्विशिष्टस्य स्मृत्या शाब्दबोधासम्भवः । यदंशे वृत्तिः पूर्वं ज्ञायते, तत्स्मृतेरेव शाब्दबोधजनकत्वात् । द्वितीये शुद्धस्य पूर्वाननुभूतत्वेन स्मृत्यसम्भवः । तथापि तत्कल्पनेव मन्मतेऽपि युक्तं [1]पूर्वोक्तकल्पनमिति भावः । [2]अत्रापिशब्दस्य स्मरणमित्यस्योत्तरं योजनया उक्ताद्यकल्पमिच्छन्तीत्यपि लभ्यते ।

---

१. पूर्वोक्तेति । विशिष्टसंस्कारस्य शुद्धस्मृतिहेतुत्वमिति ।

२. अत्रापीति । मूलस्थस्य आकाशादिपदादपीत्यपिशब्दस्येत्यर्थः ।

**तात्पर्याधीनत्वाच्छब्दवृत्तेः । एतेन प्रमितिप्रमात्रोर्महावाक्यार्थबोधे भानमपास्तम् असम्प्रज्ञातसमाधेः श्रुतिस्मृतिसिद्धत्वाच्चेति ।**

---

**शुद्धोपस्थितिनिर्वहणम् ।**

ननु तदप्यनुपपन्नमेवेत्यत आह—**तात्पर्याधीनत्वादिति** । तात्पर्यविषयवाक्यार्थप्रमानिर्वाहिकयथासम्भवकल्पनाविषयत्वात् । शब्दवृत्तेः—शब्दार्थसम्बन्धरूपशक्त्यादिज्ञानस्य । तथा च तात्पर्यनिर्वाहाय प्रथमकल्पो लाघवेन युक्त एव । अत एव सर्वेषां पदानां नवीनैस्तथा कल्प्यते । लक्ष्यतावच्छेदके लक्षणाया इव शक्यतावच्छेदके शक्तेर्ग्रहानुपयोगात् । न च लक्ष्यतावच्छेदकेऽपि लक्षणा गृह्यत एव, तीरसम्बन्धिप्रवाहशक्तं गङ्गापदमिति ज्ञानस्यैव तत्त्वात्, तीरसम्बन्धिशक्तत्वस्यैव तीरत्वलक्षणात्वात् । लक्षणासम्बन्धेन लक्ष्यप्रकारकस्यैव हेतुत्वस्वीकारेऽपि उक्तज्ञानस्य समानविषयतया स्वाश्रयसम्बन्धिप्रवाहशक्तत्वसम्बन्धेन गङ्गापदे तीरत्वप्रकारकत्वसम्भवाच्च । तथा च लक्ष्यतावच्छेदक इत्यादिदृष्टान्तश्शिरोमण्युक्तोऽसिद्ध इति वाच्यम् । उक्तशक्तत्वसम्बन्धेन तीरत्वविशिष्टमित्याकारकत्वस्यानुमित्यादिरूपे तीरलक्षणाज्ञानेऽसम्भवात्, जातिशक्तिज्ञानात् व्यक्तिशाब्दधीस्वीकारात् यदंशे वृत्तिरित्याद्युक्तनियमस्य गौरवपराहतत्वाच्च । द्वितीयकल्पोऽपि युक्तः । विशिष्टविषयकशक्त्यनुभवजन्यसंस्कारस्य पदज्ञानसहकृतस्य तात्पर्यानुरोधेन शुद्धविषयकस्मृतिहेतुत्वसम्भवात् । अत एव प्रमेयवदनुभवजन्यसंस्कारस्य शुद्धदशरथत्वादिजातिविशिष्टांश एवोद्बोधकं प्रकल्प्य स्मृते तस्मिन् दशरथादिपदशक्तिग्रहः । अन्यथा शुद्धदशरथत्वादिजातेर्दशरथादिपदेनानुपस्थित्या तात्पर्यविषयशाब्दबोधे तद्विशिष्टस्य भानासम्भवादिति वदन्ति । एवं मन्मतेऽपि विशिष्टशक्तिविषयकस्य सत्यादिपदज्ञानसहकृतविशिष्टसंस्कारस्य तात्पर्यानुरोधेन शुद्धस्मृतिहेतुत्वं कल्प्यते ।

न चैवं लक्षणया शुद्धबोध इति सिद्धान्तविरोध इति वाच्यम् । विशिष्टशक्तेर्विशिष्टशाब्दबोधप्रयोजकत्वस्य औत्सर्गिकस्य त्यागेन विशेष्यमात्रशाब्दबोधप्रयोजकताया लक्षणाशब्देन गौण्या वृत्त्या शास्त्रे व्यवहारात् । प्राचीनतार्किकमीमांसकमतयोरिव मन्मते शक्यसम्बन्धरूपलक्षणाज्ञानस्य शाब्दबोधाहेतुत्वेन शक्तिज्ञानप्रयोज्यत्वेन शक्यसम्बन्ध्युपस्थितेर्लक्षणात्वेन तत्स्वरूपस्यैव शाब्दबोधहेतुत्वेनोक्तसिद्धान्ताविरोधाच्च ।

**एतेन**—तात्पर्यानुरोधतो महावाक्यजन्यज्ञानस्य शुद्धं ब्रह्मैव विषयो नान्यदिति स्वीकारेण । भानं–प्राभाकरसम्मतं विषयत्वम् । मणिकारोक्तप्राभाकरनव्यमते हि सर्वज्ञानेषु स्वं स्वाश्रयश्च विषय इति स्वीक्रियते । प्राचीनप्राभाकरमते तु प्रमाया विषयत्वं न प्रमितिप्रमात्रोः स्वीक्रियते । प्रमायास्तादात्म्यसमवायाभ्यामेव तयोर्व्यवहारसम्भवात् ।

ननु 'तमेव विदित्वातिमृत्युमेती' त्यादिश्रुत्याद्यालोचनेन शुद्धब्रह्मान्यो महावाक्यजन्यज्ञाने विषयो नेति निर्णीयते, तथापि प्रमितिप्रमात्रोर्विषयत्वमेव, तदन्यस्यासाधारणस्य विषयस्यैव तथा निर्णयात्, भवत्सिद्धान्तेऽपि हि प्रमितिप्रमात्रोर्महावाक्यार्थबोधकाले साक्षिणा भाने बाधकाभावः, तथा च प्राभाकरमते नित्यसाक्ष्यसम्भवात् सर्वज्ञानानां मितिमातृविषयकत्वं युक्तमेव, सुषुप्त्यन्यकाले हि सदा मितिमातृमेयरूपा त्रिपुटी मतद्वयेऽपि भासते, तत्राह—**असम्प्रज्ञातेति** । सर्ववृत्तिशून्यनिरुद्धमनोरूपेत्यर्थः । **श्रुतिस्मृतिसिद्धत्वादिति** । मैत्रायणीयशाखादौ हि श्रूयते—

लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।
यदा यात्यमनीभावं तदा तत्परमं पदम् ॥
तावन्मनो निरोद्धव्यं हृदि यावद्गतक्षयम् ।
एतज्ज्ञानं च मोक्षश्च शेषास्तु ग्रन्थविस्तराः ॥

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥

अपामापोऽग्निरग्नौ च व्योम्नि व्योम न लक्षयेत् ।
एवमन्तर्गतं यस्य मनस्स परिमुच्यते ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मोक्षे निर्विषयं स्मृतम् ॥ इति ॥[1]

अत्र भाष्यं–'लयो निद्रा, विक्षेपो विषयस्मृत्यादिः । अमनीभावः मनःप्रवेशकृतविशेषस्यात्मनि त्यागः तम् यदा याति तदा परमं पदं याति । न पुनरावृत्तिप्राप्तिरस्येत्यर्थः । हृदि हृदयसाक्षिणि । गतः प्राप्तः क्षयो विनाशो येन तत्तथा । तथा च सूक्ष्मावस्थारूपस्य मनस आवृतत्वात् अमनीभावे केवलसाक्षिभानं समाधाविति भावः । तस्य परमसुखव्यञ्जकत्वमाह–समाधीति । अन्तःकरणेन शुद्धसत्त्वेन निरुद्धेन गृह्यते व्यज्यते । यद्वा अन्तःकरणावस्थाविशेषवशात् साक्षिणा स्वयं गृह्यते स्वप्रकाशतया तद्भातीति । अपाम् अप्सु आपः क्षिप्ता इत्यध्याहारः । अग्निरग्नौ निक्षिप्त इत्यनुषङ्गः । व्योम घटाद्याकाशम् । एवमिति । तथा च निरुद्धं सत् न्यग्भूतं भवती'ति । असम्प्रज्ञातसमाधिकाले साक्षिस्वरूपं ब्रह्मैव भातीत्यर्थः । एवं कठवल्लीषु श्रूयते—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ।

ज्ञानानि ज्ञानेन्द्रियाणि मनोबुद्धिश्च न विचेष्टति वृत्तिरूपेण न परिणमते । अप्रमत्तः द्वैतभानरूपप्रमादशून्यः । प्रभवाप्ययौ पुण्यहेतुः पापनाशकश्च । निरुद्धस्य मनसोऽपि न्यग्भावेन साक्षिभास्यत्वाभावात् । सौषुप्तलयावस्थाया इव निरुद्धावस्थाया अप्यावृतत्वेन न्यग्भाव इति भावः । तथा च व्याख्यातम्—

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।

इत्यादि गीताश्लोके सरस्वतीभिः । विनियतं सर्ववृत्तिशून्यतया निरुद्धम् । आत्मन्येवावतिष्ठते चितेरेव प्राधान्यात् न्यग्भूतं भवतीति । स्मर्यते च गीतायाम्—

१. मैत्र्युपनिषद् ६।२८ ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा॥

योगसेवया सम्प्रज्ञातसमाधिरूपयोगाभ्यासेन। यत्र यस्मिन् मनःपरिणामे जाते सति चित्तं निरुद्धं सर्ववृत्तिशून्यं सदुपरमते कमपि विषयं न गृह्णाति, विषयाकारपरिणामाभावे च सुषुप्तिवत् सूक्ष्मावस्थं मन इति भावः। यत्र च मनःपरिणामे सति आत्मना शुद्धसत्त्वेन मनसैव व्यञ्जकेन आत्मानं ब्रह्माभिन्नसाक्षिणमेव पश्यन् पुरुषः आत्मन्येव तुष्यति, द्वैतभानप्रयुक्तानन्दाल्पतारहितः तं परिणामं योगसंज्ञितं विद्यात्। निरुद्धेन मनसा ब्रह्मैव भाति, न तदन्यत्। मनसोऽपि न्यग्भावेनावृतत्वादनात्मवर्गाद्विमुखीकरणेन चेति भावः। आत्मन्येव तोषमुपपादयति—यत्र मनः परिणामे सति। आत्यन्तिकं सर्वसुखेभ्य उत्कृष्टं सुखं वेत्ति। विषयसुखाद्भिनत्ति—अतीन्द्रियं विषयेन्द्रिययोगाजन्यम्। सौषुप्तसुखाद्भिनत्ति—बुद्धिग्राह्यं निरुद्धमनोऽभिव्यक्तम्, सुषुप्तौ तु मनो न व्यञ्जकम्, लीनत्वात्। तदुक्तं गौडपादैः—

लीयते तु सुषुप्तौ तन्निरुद्धं नैव लीयते। इति।

आत्यन्तिकत्वे हेतुमाह—यस्मिन् परिणामे स्थितो योगी तत्त्वतो ब्रह्माभिन्नस्वरूपात्परमार्थान्न चलति, द्वैतभानाभावात्। तथा च पातञ्जलसूत्राणि—'योगश्चित्तवृत्तिनिरोधः। तदा द्रष्टुः स्वरूपेऽवस्थानम्। वृत्तिसारूप्यमितरत्र'। इति। तदा सकलचित्तवृत्तिनिरोधकाले द्रष्टुः दृग्रूपस्य पुरुषस्य स्वरूप एव अवस्थानम्, न तु बुद्धिवृत्तौ प्रतिबिम्बितत्वम्। इतरत्र = कालान्तरे तु वृत्तिसारूप्यं बुद्धिवृत्तिप्रतिबिम्बितत्वम्, द्वैतभानं विषयवासना च आत्यन्तिकसुखानभिव्यक्तौ प्रयोजकम्। तत्राद्यं तत्त्वतो न चलतीत्यनेन द्वितीयम् अयमित्यनेन निर्वासनबोधकेन निरस्तम्। एतस्यासम्प्रज्ञातसमाधेरावश्यकतामाह—यं परिणामं लब्ध्वा अवस्थितः अपरं श्रवणादिभिन्नं लाभं महावाक्यार्थधीप्रयोजकं शास्त्रेण नाधिकं मन्यते। तस्यैव शुद्धत्वम्पदार्थसाक्षात्कारद्वारा महावाक्यार्थधीप्रयोजकत्वात्। अधिकमित्यनेन देहाद्यधिष्ठानतया आत्मज्ञानस्य निरोधसमाधिकार्यकारितया तत्तुल्यत्वं ज्ञापितम्। उक्तं च तयोस्तुल्यत्वं **वासिष्ठे** गीताटीकायां च। तत्र वासिष्ठम्—

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव!।
योगस्तद्वृत्तिरोधश्च ज्ञानं सम्यगवेक्षणम्॥
असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः। इति।

चित्तनाशस्य चित्तादर्शनप्रयुक्तस्य शुद्धात्मदर्शनस्य। क्रमौ साधनानुष्ठानक्रमेण क्रियमाणावुपायौ। गीताटीकायां तु-

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।

इति पद्ये तथोक्तम् ।

### देहाद्यधिष्ठानतयाऽऽत्मज्ञानस्य शुद्धसाक्षात्कारहेतुत्वम्

ननु, देहाद्यधिष्ठानतयाऽऽत्मज्ञानं कथं शुद्धात्मसाक्षात्कारं प्रति हेतुः, तस्याप्रमाणत्वादिति चेत् । उच्यते । तादृशविवेकज्ञानोत्तरं देहादीनां हेयतया केवलात्मन एव जिज्ञास्यत्वात् । तेनैव प्रतिबन्धादहङ्काराद्यभाने साक्षिमात्रविषयकसौषुप्तवृत्तिरिवाविद्यावृत्तिविशेषरूपः तादृशविवेकज्ञानोत्तरं त्वम्पदार्थशोधकवाक्यस्मृत्या मनोवृत्तिरूपो वा शुद्धात्मसाक्षात्कारः । एवं निरोधस्थलेऽपि तत्साक्षाकारः । महावाक्यार्थसाक्षात्कारोत्तरमपि तदावश्यकतामाह—**यस्मिन् स्थित इत्यादि ।** गुरुणा तत्त्वदर्शनानाश्यभुज्यमानकर्मजन्येन । प्रारब्धकमपिक्षयाऽपि समाधेर्बलवत्त्वेन तन्नाशकतया दुःखं नोत्पद्यत एव । अत एवाणि**माण्डव्यादीनां** समाधिस्थानां चोरबुद्ध्या शूलाग्रपातितानामपि न दुःखमुत्पन्नम् । प्रत्युत समाधिमाहात्म्येन इतरापेक्षयाप्युत्कृष्टतेति महाभारतादावुक्तमिति भावः । तथा च सम्प्रज्ञातसमाधिपाटवेनासम्प्रज्ञातसमाधिलाभः । सम्प्रज्ञातसमाधिस्तु मनोदेहादिभिन्नतया साक्षिणो ज्ञानप्रवाहरूपः । 'ब्रह्मास्मी'ति शाब्दज्ञानोत्तरं तु तादृशधीप्रवाहरूप एव । असम्प्रज्ञातसमाधिस्तु सकलवृत्तिशून्यनिरोधरूपेण परिणतमावृतं मन एव । **वेदान्तसारादौ** तु 'निरोधरूपेण परिणामोऽपि ( असम्प्रज्ञातः, स ) केवलात्माकारवृत्तिरूपः, मनोवृत्तिभानाभावे समानेऽपि मनोवृत्तिसत्त्वासत्त्वाभ्यामसम्प्रज्ञातसमाधिसुषुप्त्योर्भेदादि'त्युक्तम् । **तन्न** । 'मोक्षे निर्विषयं स्मृतम्, यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह, तद्यच्छेच्छान्त आत्मनी'ति श्रुतीनामुक्तसूत्राणां च विरोधात् । सर्वथा प्रमात्रादिभानशून्यस्यासम्प्रज्ञातसमाधेरावश्यकत्वात्, सुषुप्तिभिन्नसर्वकाले प्रमात्रादिभानमिति स्वीकारासम्भवात्, [1]भिन्नविषयकानुमित्यादिसामग्रीरूपप्रतिबन्धककालीनघटादिमात्रप्रत्यक्षेच्छाजन्ये तत्प्रत्यक्षे व्यभिचारेण सुषुप्तिसमाधिभिन्नसर्वकाले प्रमात्रादिभानमित्यस्याप्यसम्भवात्, प्रमात्राद्यविषयके महावाक्यार्थबोधे बाधकाभाव इति भावः । अथवा अवान्तरवाक्यार्थानुभवकारणपदार्थस्मृतौ सौषुप्तानुभवः कारणमिति सुषुप्तावित्यादिनोक्तम् । वार्तिककारमते सौषुप्तजन्यानुभवास्वीकारात्, तन्मतेऽद्वितीयब्रह्मविजिज्ञापयिषयेत्यादिना शुद्धतात्पर्यज्ञानसहकृतस्य विशिष्टविषयकसंस्कारस्यैव शुद्धविषयकस्मृतिहेतुत्वमुक्तम् । इदानीम् असम्प्रज्ञातसमाधेरपि तादृशस्मृतिहेतुत्वं सम्भवतीत्याशयेनाह—**असंप्रज्ञातेति** । न च नियामकाभावेन न तस्य शुद्धचिद्विषयकत्वसम्भव इति वाच्यम् । सम्प्रज्ञातसमाधिपाटवस्यैव अनात्माकारसर्ववृत्तिनिरोधेच्छासहितस्य केवलात्माकारवृत्तिहेतुत्वात्

१. भिन्ने विषये अनुमितिसामग्री प्रबला, ततो न्यूना शाब्दसामग्री ततो न्यूना प्रत्यक्षसामग्री । समाने विषये तु प्रत्यक्षसामग्री सर्वतः प्रबला, ततो न्यूना शाब्दसामग्री ततो न्यूना अनुमितिसामग्री—इति प्राबल्यदौर्बल्यविचारः अनुभवानुरोधेन निर्णीतः । स्पष्टमिदं पक्षताग्रन्थे । तत्तदिच्छाया उत्तेजकत्वमपि स्वीक्रियत एव । तथा च प्रत्यक्षेच्छाविरहविशिष्टा भिन्नविषयकानुमितिसामग्र्येव प्रत्यक्षापेक्षया प्रबला । प्रकृते च घटमात्रप्रत्यक्षेच्छासत्त्वात् घटमात्रप्रत्यक्षं जायते तत्र न प्रमाणादिभानं, सामान्यतो जायमाने घटप्रत्यक्षे प्रमाता भासेत तद्व्यावर्तयितुं घटमात्रावगाहिप्रत्यक्षं साधयितुं प्रतिबन्धकसत्त्वमुत्तेजकसत्त्वं चावलम्बितम् ।

**पारोक्ष्यसद्वितीयत्वाभ्यां च न तत्त्वम्पदार्थमात्रानुभावादेव कृतकृत्यता। वाच्यार्थभेदावभासान्न पौनरुक्त्यम्।**

'समाधिनिर्धूतमलस्य चेतस' इत्यादिश्रुत्या 'आत्मसंस्थं मनः कृत्वे'त्यादिस्मृत्या च तथा प्रत्ययात्, निरोधविवेकज्ञानयोः पश्चात्केवलात्मसाक्षात्कारस्य पूर्वोक्तस्य कल्पनापेक्षया तयोरेव तत्साक्षात्कारत्वकल्पनस्य युक्तत्वात्, केवलात्मजिज्ञासासहितस्य विवेकज्ञानहेतोरेव विवेकोपलक्षितशुद्धात्मसाक्षात्कारहेतुत्वसम्भवात्। 'मोक्षे निर्विषयं स्मृतम्' इत्यादिश्रुतिस्तु असंप्रज्ञातसमाधेः आत्मान्याविषयकत्वबोधिका। एवं योगसूत्राण्यपि बोध्यानि। अत एवोक्तं संक्षेपशारीरके—

आत्मानात्माकारं स्वभावतोऽवस्थितं तदा चित्तम्।
आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत॥ इति।

न चैवं निरोधस्य संप्रज्ञातसमाधितो विशेषानुपपत्तिरिति वाच्यम्। निरोधरूपपरिणामविशेषत्वप्रमाणाजन्यत्वाभ्यां ततो विशेषात्। अस्मिन् पक्षे निरोधस्यैव वाक्यगतपदार्थस्मृतिहेत्वनुभवत्वेन निरोधस्य वाक्याजन्यत्वेन प्रमाणाजन्यता। तस्मादात्मविषयकनिरोधपरिणामस्य सूक्ष्मावस्थारूपसंस्कारद्वारा शुद्धस्मृतिहेतुत्वं निर्दोषम्। गीताटीकायान्तु निरोधसमाधिरूपस्य योगस्य पुण्यविशेषद्वारा यथार्थप्रत्यक्षहेतुत्वात् परमार्थभूतात्ममात्रप्रत्यक्षहेतुता। उक्तं हि पतञ्जलिना—'निर्विचारवैशारद्येऽध्यात्मप्रसादः। ऋतम्भरा तत्र प्रज्ञा। श्रुतानुमानाभ्यामन्यविषया विशेषार्थत्वादिति। निर्विचारः सूक्ष्मवस्तुविषयकनिर्विकल्पकसमाधिः, तस्य वैशारद्ये पाटवे सति अध्यात्मप्रसादः अत्यन्तसत्त्वोद्रेको भवति। ततः ऋतम्भरा सत्यमेव गृह्णती प्रज्ञा जायते। सा च शब्दानुमानविषयाभ्यामन्यविषया। शब्दानुमानग्रहणायोग्यविशेषविषयत्वात्। अत्र शब्दस्य विषयः तच्छक्त्या ग्राह्यः। तेन ब्रह्मणः शब्दलक्ष्यत्वेऽपि न क्षतिरिति तदर्थः। तथा च योगजधर्मजन्यप्रत्यक्षमेवावान्तरवाक्यस्य पदजन्यस्मृतिमूलमित्युक्तम्।

### ऐक्यसाक्षात्कारस्यावश्यकता

ननु महावाक्यार्थबोधे शुद्धं ब्रह्मैव विषय इत्युक्तम्, तदयुक्तम्, अवान्तरवाक्यार्थस्यापि शुद्धचिद्रूपत्वेन महावाक्यस्यानुवादकत्वापत्तेः तत्राह—**पारोक्ष्यसद्वितीयत्वाभ्यामिति।** ब्रह्मणि परोक्षताभ्रमस्य जीवस्वरूपे दुःखित्वादिभ्रमस्य च सत्त्वादित्यर्थः तत्त्वम्पदार्थानुभवात्—अवान्तरवाक्यजन्यतत्त्वम्पदार्थानुभवात्। कृतकृत्यता—महावाक्यजानुभवकार्योक्तभ्रमनिवृत्तिलाभः। तथा चावान्तरवाक्यजानुभवादुक्तभ्रमनिवृत्त्यभावेन उक्तभ्रममूलीभूतमूलाज्ञानस्यापि न निवृत्तिरिति। अवान्तरवाक्यजन्यबोधोत्तरमज्ञातमैक्यं बोधयन्महावाक्यमननुवादकम्। तज्जन्यबोधेच मूलाज्ञाननिवृत्त्या सर्वभ्रमोच्छेदेन कृतकृत्यतेति भावः। अथ शुद्धब्रह्मप्रमायाः भ्रमनिवर्तकत्वेनावान्तरवाक्यात् शुद्धप्रमोत्पत्तौ न कुतो भ्रमनिवृत्तिरिति चेन्न। उक्तरूपापरोक्षादुःखोपलक्षितस्वरूपस्यापरोक्ष्याभावात्।

ननु तथापि सत्यज्ञानादिपदानां सर्वेषां लक्षणया शुद्धब्रह्मबोधकत्वात् पौनरुक्त्यम्, तत्राह—**वाच्यार्थाभेदावभासादिति।** वाच्यार्थानां तादात्म्यज्ञानजननरूपप्रयोजनसत्त्वादित्यर्थः। सत्य-

मित्यादिनानापदानामिति शेषः। सत्यत्वज्ञानत्वादिविशिष्टानां सत्यादिपदवाच्यानां तादात्म्यबोधनद्वारा शुद्धयोरैक्यं वाक्येन बोध्यते।

## सत्यादिवाक्यस्य भेदभ्रमनिवर्तकत्वप्रकारः

ननु—वाच्ययोस्तादात्म्यधीश्शक्त्यैव वक्तव्या न तु लक्षणया, वक्ष्यमाणरीत्या वाच्यार्थबोधोत्तरं विरोधप्रतिसन्धाने सत्येव लक्षणावतारात्। शक्तिज्ञानजन्योक्तधीस्तु एकवाच्यतावच्छेदकविशिष्टे वाच्यतावच्छेदकान्तरविशिष्टस्य तादात्म्यविषयिका, अन्यथा विशिष्टे विशिष्टान्वयबोधस्य लाक्षणिकादुपहितान्वयादुपलक्षितान्वयाच्च मुख्यत्वस्य लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यादौ [1]महाभाष्याद्युक्तस्यासाङ्गत्यापत्तेः विशिष्टे विशिष्टस्य तादात्म्यधीस्तु विशेषणीभूतयोर्वाच्यतावच्छेदकयोस्तादात्म्यमेकवाच्यतावच्छेदकोपहितेऽपरवाच्यतावच्छेदकोपहिततादात्म्यं चावगाहते, तथा च तादृशबुद्ध्यनुपपत्तिः बाधबुद्धेर्विरोधित्वादिति चेन्न। बाधबुद्धेस्तत्राविरोधित्वात् तदुक्तं खण्डने—

अत्यन्तासत्यपि ज्ञानं ह्यर्थे शब्दः करोति हि। इति।

अत्यन्तासति बाधिते सति। हिशब्देन तादृशज्ञानस्य कलहादिस्थले प्रसिद्धिलाभः। तथा चोक्ततादात्म्यज्ञानस्य सम्भवात्तद्विना विरोधाप्रतिसन्धानेन लक्षणानवतारात्। तदवतारार्थं सत्यादिपदानां विशिष्टतादात्म्यबोधकत्वेनावश्यकत्वम्। न चैवमपि पदद्वयादेव लक्षणावतारसिद्धेस्तृतीयादिपदवैयर्थ्यमिति वाच्यम्। वाच्यार्थानां मिथो भेदज्ञानस्यान्योन्यमभेदज्ञानं विना निवर्तयितुमशक्यत्वात्। ननु सत्यत्वाद्युपलक्षितस्य भेदधीर्ब्रह्मणि निवर्तनीया, तन्निवृत्तेरेव वक्ष्यमाणरीत्या प्रकृतोपयोगात्। तन्निवृत्तिस्तु ब्रह्मणि तत्तादात्म्यबुद्ध्यैव, न तु सत्यादिपदवाच्यतादात्म्यबुद्ध्येति वाच्यार्थभेदावभासादिति मूलमयुक्तमिति चेन्न। ब्रह्मणि सत्यत्वाद्युपलक्षितभेदबुद्धौ सत्यत्वाद्युपहिततादात्म्यबुद्धेरपि विरोधित्वात्। तदुपहिततादात्म्यावगाहितया तद्विशिष्टवाच्याभेदबुद्धेरपि तद्विरोधित्वात्। यथाहि 'भूतलं न द्रव्य'मिति ज्ञाने भूतलं द्रव्यमित्यस्य भूतलं नीलद्रव्यमित्यस्य च ज्ञानस्य विरोधित्वम्, तादात्म्येन द्रव्यप्रकारत्वनिरूपितभूतलविशेष्यताकत्वस्य विरोधिताप्रयोजकस्योभयत्र सत्त्वात्; तथा ब्रह्मत्वोपलक्षिते सत्यत्वाद्युपलक्षितस्य भेदबुद्धौ ताभ्यामुपलक्षितयोरुपहितयोश्च तादात्म्यबुद्धेर्विरोधित्वम्। उपहितप्रकारबुद्धौ शुद्धयोरुपलक्षितयोस्तादात्म्यस्य विषयत्वात्। तस्यां तस्याविषयत्वेऽपि तयोः प्रकारत्वात्। तस्यां तयोरप्रकारत्वेऽपि तयोर्भेदबुद्धौ उपहितयोरेव तादात्म्यबुद्धेर्विरोधित्वात्। अन्यथा इयं सत्ता नेति शुद्धसत्ताभेदबुद्धौ इयं विशिष्टसत्तेति तादात्म्यबुद्धेश्शुद्धघटभेदबुद्धौ च नीलत्वाद्युपहितघटतादात्म्यबुद्धेर्विरोधित्वस्य सर्वानुभाविकस्यापलापापत्तेः। न चोपलक्षितयोश्शुद्धयोर्भेदज्ञानस्य घटो न घट इति ज्ञानवदाहार्यत्वेन न तत्र किमपि ज्ञानं विरोधीति वाच्यम्। भिन्नधर्मोपहितयोरिव भिन्नधर्मोपलक्षितयोरपि भेदज्ञानस्याहार्यत्वाभावात्। न हि यत्र तत्ता, यत्र चेदन्ता, तयोरेकत्रापरस्य भेद इति ज्ञानमाहार्यत्वेन

१. लोहितोष्णीषा इति—अत्र भाष्यं—"भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि-तद्यथा शुक्लवाससमानय लोहितोष्णीषा ऋत्विजः प्रचरन्तीति। तद्गुण आनीयते तद्गुणाश्च प्रचरन्ति"—इति। श्येनयागप्रकरणे अधीतं लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति इति—लोहितोष्णीषत्वमत्र विशेषणं न तूपलक्षणम्।

व्यवह्रियते, तदिदं न द्रव्यं न घट इति ज्ञानवत्। एवं च यत्र ब्रह्मत्वं यत्र च सत्यत्वं तयोरेकत्रापरस्य भेद इत्याकारकज्ञाने तयोरेकत्रापरस्य न भेद इत्याकारज्ञानस्य विरोधित्वं युक्तमेव।

किञ्च वाच्ययोः तादात्म्यज्ञानं एकवाच्यतावच्छेदकविशिष्टे अपरवाच्यतावच्छेकविशिष्टस्य तादात्म्यमवगाहते। नथा च एकवाच्यतावच्छेदकरूपविशेषणे अपरवाच्यतावच्छेदकरूपस्य विशेषणस्यापि तादात्म्यमवगाहत एवेति तद्वदेव एकवाच्यतावच्छेदकोपलक्षितेऽपि विशेष्ये अपरवाच्यतावच्छेदकोपलक्षितस्य विशेष्यस्यापि तादात्म्यमवगाहते। एवं च ब्रह्मत्वोपलक्षिते सत्यत्वाद्युपलक्षिततादात्म्यावगाहनात् वाच्यतादात्म्यज्ञानस्य सुतरामुपलक्षितयोर्भेदबुद्धौ विरोधित्वम्। शुद्धयोः उपलक्षितयोः अत्यन्ताभेदात्। यद्यपि न तादात्म्यं सम्बन्धः, तथापि निरूढलक्षणया विशेषणविभक्त्युपस्थापितस्य भेदाभावस्यैव विशेष्यतया भानं सम्भदति। तयोरेकत्रापरभेदो नेत्याकारकस्य सम्भवात्। भेदाभावत्वस्यैव धर्मितावच्छेदकत्वसम्भवात् न निर्धर्मितावच्छेकत्वं शाब्दबोधे दोषः। नीलो घट इत्यादौ तु तादात्म्यस्य सम्बन्धतासम्भवात् विशेषणविभक्तिः पदसाधुत्वार्था। अत एव मणिकारादिभिरुक्तम्—'विशेषणविभक्तिस्साधुत्वार्था अभेदार्थिका वे'ति। न हि तार्किकादीनाम्मतेऽपि अत्यन्ताभेदे तादात्म्यस्य क्वापि सम्बन्धत्वमुक्तम्, प्रत्युत जातिशक्तिवादादौ शब्दमण्यादिषु तस्यासम्बन्धत्वमेव प्रकटितम्। तच्च पूर्वमेव उक्तम्। न च घटो घट इत्यादौ अत्यन्ताभेदे सम्बन्धाभावादेव शाब्दधीवारणसम्भवेन निराकाङ्क्षत्वोक्त्यैव[1] तद्वारणमसङ्गतमिति वाच्यम्। योग्यताभ्रमेण शाब्दबोधे आपादिते निराकाङ्क्षत्वेन तद्वारणस्य युक्तत्वात्।

न च विशेषणविभक्त्यर्थे तत्प्रकृत्यर्थस्य विशेषणतयाऽन्वयसम्भवेऽपि विशेष्यपदार्थस्य तत्र विशेषणत्वेनान्वयोऽव्युत्पन्न इति वाच्यम्। प्रकृतवाक्यस्थले विशेषणविशेष्यपदार्थयोर्भेदबुद्धिविरोधिशाब्दबोधो हि सर्वानुभवसिद्धः। तत्र शुद्धयोः तादात्म्याभावात् तादात्म्यसंसर्गकतदात्मप्रकारकबोधासम्भवे भेदाभावत्वावच्छिन्नविषयताकबोधस्यावश्यकत्वे विशेष्यपदार्थस्य शुद्धत्वेन विशेष्यत्वासम्भवे चागत्या व्युत्पत्तिवैचित्र्यकल्पनेनोक्तबोधस्वीकारात्। प्रथमाया विशेष्यपदोत्तराया आधेयत्वार्थकतया विशेष्यवृत्तित्वस्य विशेषणभेदाभावे बोधो वा। निपातसाधारणनामार्थयोरभेदेनैवान्वय इति पक्षे घटो न पट इत्यादौ घटवृत्तिपटप्रतियोगिकभेदबोधस्य तस्या आधेयत्वार्थकत्वेनैव निर्वाहात्। गगनं द्रव्यं भवतीत्यादौ भवत्यर्थे तादात्म्यादौ द्रव्यवृत्तित्वबोधाच्च।

## विभक्त्यर्थस्य विभक्त्यर्थेऽन्वयव्युत्पादनम्

व्युत्पन्नश्च विभक्त्यर्थे विभक्त्यर्थस्यान्वयः। क्रयाच्चैत्रस्य धनमित्यादौ स्वत्वे क्रयजन्यत्वस्यान्वयात्। न च शुद्धरूपेणोपस्थितिं पदजन्यां विना शुद्धयोर्भेदाभावः शाब्दबोधे न भातुमर्हतीति वाच्यम्। इतराविशेषणत्वेनोपस्थितिं विनाऽपि प्रकृते विशेषणयोः तादात्म्यभानवत्, घटः प्रमेयवानित्यादौ सर्वमतेऽपि विशेषणयोः तादात्म्यभानवच्चेतराविशेषितेन रूपेणोपस्थितिं पदजन्यां विनाऽपि शुद्धयोः भेदाभावभानसम्भवात् विशिष्टविषयकशक्तिज्ञानाद्विशेषणाद्यन्वययोग्यतातात्पर्यज्ञानादिरूपकारणान्तरसहितात् तादृशविषयताशालिशाब्दधीसम्भवात्। यत्र तु तात्पर्याभावनिर्णया-

---

१. न चेति—निराकाङ्क्षत्वोक्त्यैवेति। तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधे तद्धर्मभेदः कारणं इति व्युत्पत्तिवादे तादृशकारणविरहात् निराकाङ्क्षत्वेन घटो घट इति वाक्यान्न शाब्दबोध इत्युक्तं गदाधरैः। तदयुक्तमित्यर्थः।

दिना विशिष्टयोर्नान्वयबोधः, तत्र विशेषणयोः तादात्म्यस्य शुद्धयोः भेदाभावस्य चाभानात् तादृशशाब्दबोधस्य नोक्तशक्तिज्ञानजन्यत्वम्। किन्तु लक्षणयोपहितयोः तादात्म्यस्य शुद्धयोर्भेदाभावस्याखण्डैक्यस्य वा भानम्। ननु सत्यत्वाद्युपहितस्य सत्यादिपदवाच्यसत्यादिसम्बन्धाऽसम्भवात् सत्यादिपदलक्ष्यत्वासम्भव इति चेन्न। विशिष्टस्य सत्यादिपदवाच्यत्वेन सत्यत्वाद्युपहितस्य तत्र तादात्म्यसत्त्वात्। विशिष्टं हि विशेष्यं विशेषणं चेति द्वयम्। तत्र च उपहितान्यत्वसत्त्वेनोपहिततादात्म्यमस्त्येव। तथा च उपहिततादात्म्यवद्यद्विशेष्यविशेषणोभयं तत्पर्याप्तशक्यताकं सत्यादिपदमित्याकारकलक्षणाज्ञानं सम्भवत्येव।

## उपहितान्वयबोधे लक्षणाज्ञानस्य न कारणत्वम्

वस्तुतस्तु नोपहितान्वयबोधे लक्षणायाः धीः कारणम्, किन्तु शक्तेः। विशिष्टनिरूपितशक्तेरुपहितेनापि निरूप्यत्वात्। उपहितनिरूपितत्वेनैव तत्स्थले शक्तिग्रहो हेतुः, लक्षणास्थल इव तादृशत्वेन शक्तेः स्मृतेः कल्पनात्। 'तात्पर्याद्धि वृत्तिरि'ति मण्युक्तेः। अत एव एकदेशशक्तेरपि लक्षणावदमुख्यवृत्तित्वम्। शक्यतापर्याप्त्यधिकरणे गृह्यमाणशक्तेरेव मुख्यवृत्तित्वात्, न तु विशिष्टनिरूपितत्वेन, विशेषणनिरूपितत्वाप्रतीतेः। तथा चोपहितान्वयस्थले विशिष्टान्वयाभावात् लक्षणेत्युपचारः शुद्धविशेष्यकनिर्विकल्पकशाब्दस्थलवत्। यदि तूपाधौ शक्तेरग्रहे तस्योपहितान्वयबोधे भानासम्भवः, वृत्तिज्ञानविषयस्यैव शाब्दधीविषयत्वात्, अन्यथा उपाधौ शक्तिस्वीकारवैयर्थ्यादित्यालोच्यते; तदा उपहितान्वयबोधेऽपि विशिष्टे शक्तिज्ञानं हेतुः। परन्तु विशिष्टान्वयबोधे तेन जननीये यत् कारणं विशेष्यान्वयिनि विशेषणस्य योग्यताज्ञानं तात्पर्यज्ञानं वा, तस्योपहितान्वयबोधे तेन जननीये प्रतिबन्धकत्वम्, तदभावस्सहकारी। शुद्धविशेष्यान्वयबोधे तु शुद्धविशेष्ये शक्तिज्ञानं हेतुः। एवं च उपहितमात्रान्वयबोधाद्विशिष्टान्वयबोधस्य मुख्यत्वमुपपद्यते। विशिष्टान्वयधीसामग्रीसत्त्वे तदनुत्पत्तेः। शुद्धविशेष्यकशाब्दबोधापेक्षया तु उपहितमात्रान्वयधीः विशिष्टान्वयधीश्च मुख्या। तादृशधीद्वयं लक्षणयेति पक्षस्तु युक्तः। उक्ताभावस्य हेतुत्वाकल्पनेन लाघवात्।[1] एवं च शुद्धयोर्भेदस्य महावाक्यार्थधीपूर्वं बाध्यत्वेन प्रातीतिकत्वात् तज्जनकाज्ञानस्योक्तभेदाभावधीबाध्यत्वसम्भवात् तादृशाभेदधीस्साक्षादेवोक्तधीविरोधिनी, न तु स्वजन्यसंस्कारविशिष्टनिर्विकल्पकप्रमाद्वारा। यदि च शुद्धयोर्भेदो व्यावहारिक एव महावाक्यार्थधीप्रयोजकादवान्तरवाक्यार्थज्ञानात् पूर्वं बाध्यत्वस्यैव प्रातीतिकरूपत्वात्। व्यावहारिकभेदस्य च न व्यावहारिकाभेदधीबाध्यत्वम्। बाध्यसत्ताधिकसत्ताकविषयज्ञानस्यैव बाधकत्वात्। न च उक्ताभेदधीजन्यसंस्कारविशिष्टोक्तनिर्विकल्पकज्ञानस्य उक्तभेदबाधकत्वं सर्वसम्मतम्, तार्किकैस्तस्याकल्पनात्। अभेदव्याप्यतासंस्कारविशिष्टज्ञानस्यैव तैः तत्कल्पनादित्यालोच्यते, तदाऽपि विशेषणविभक्त्या विशेषणभेदाभावस्य यथा बोधः, तथा तया विशेष्यविभक्त्या वा विशेष्यव्यापकत्वस्य विशेष्यनिष्ठभेदाप्रतियोगित्वरूपस्य विशेषणनिष्ठतया शाब्दधी-

१. एवं च शुद्धयोरभेदस्तदा सत्यत्वाद्युपाधिविशिष्टे शक्तिज्ञानस्य कार्यतावच्छेदकमुपहितमात्रान्वयधी-शुद्धविशेष्यमात्रशाब्दधी-विशिष्टान्वयधी-त्रितयसाधारणविशेषणीभूतसत्यत्वाद्यन्यधर्मानवच्छिन्ना सती सत्यत्वाद्यन्यधर्मानुपहितब्रह्मनिष्ठा या विषयता तच्छालिशाब्दत्वम्। न चैवं विशिष्टान्वयशाब्दबोधस्थलेप्युपहितमात्रान्वयधिया शुद्धविशेष्यमात्रशाब्दबोधापत्तिरिति वाच्यम् विशिष्टान्वयभानसामग्रीसत्त्वे तदभावस्यापादयितुमशक्यत्वेन तादृशबोधापत्तेरसम्भवात्।—पा०।

सम्भवात् । अत्यन्ताभिन्नविशेष्यविशेषणस्थले विशेष्यव्यापकत्वविशिष्टतादात्म्यस्य सम्बन्धविधया भानसम्भवात् विशेष्यव्यापकत्वबोधस्यानुभाविकत्वाच्च । पूर्ववद्व्यापकत्वस्य नामार्थद्वयविशेषितरूपेण भानसम्भवाच्च । शुद्धब्रह्मनिष्ठभेदाप्रतियोगित्वस्य सत्यत्वाद्युपलक्षितनिष्ठतया बोधसम्भवेन तादृशव्यापकत्वधीजन्यसंस्कारविशिष्टनिर्विकल्पकप्रमायास्सत्यत्वाद्युपलक्षितस्य भेदः शुद्धब्रह्मनिष्ठ इत्याकारकभेदधीविरोधित्वं सर्वसम्मतं सम्भवत्येव । व्याप्यत्वव्यापकत्वाभ्यां तादात्म्यसम्बन्धावच्छिन्नाभ्यां गृहीतयोरनाहार्यभेदबुद्धेः केनाप्यस्वीकारात् । द्रव्यव्याप्या पृथिवीति ज्ञानजन्यसंस्कारे उद्‌बुद्धे सति पृथिवी द्रव्यं नेति ज्ञानस्यानाहार्यस्यानुत्पत्तेः ।

## विशेषणविशेष्यविभक्त्योः व्यापकत्वार्थकत्वम्

ननु व्यापकत्वं विशेषणविभक्तेर्विशष्यविभक्तेर्वाऽर्थ इति कैरपि तान्त्रिकैर्नोक्तमिति स्वकपोलकल्पितमिति चेन्न । यथा ह्यत्यन्ताभेदे तादात्म्यस्यासम्भवात् भेदाभावस्यापि सम्बन्धत्वासम्भवात् असम्बन्धतया[1] भेदाभावस्य भानाय विशेषणविभक्त्यर्थत्वं **शब्दमणा**वुक्तम्, तथा विशेषणे विशेष्यव्यापकत्वस्य बाधकाभावे सति सम्बन्धतया भानस्य तान्त्रिकैरुक्तत्वात् । विशेष्यविशेषणयो अत्यन्ताभेदे तादृशभानस्य असम्भवात् असम्बन्धतया भानाय विशेष्यविभक्त्यर्थत्वस्य तत्र तान्त्रिकाभिप्रेतत्वमुन्नीयते । तथा च विशेषणविभक्तिरभेदार्थिकेत्यत्र मण्यादिवाक्ये अभेदेत्युपलक्षणम् । व्यापकत्वाद्यर्थिकेत्यपि बोध्यम् । अत एव विशेषणभिन्नभिन्नत्वरूपं विशेषणव्याप्यत्वमपि विशेषणविभक्त्यर्थः सम्भवतीति तत्र विशेष्यवृत्तित्वभानमपि प्रकृते वक्तुं शक्यम् । न चैवमपि व्यापकत्वादिसंस्कारस्यैव उक्तभेदधीविरोधित्वेन तद्विशिष्टाया निर्विकल्पकप्रमायास्तद्विरोधित्वोक्तिरयुक्तेति वाच्यम् । उद्‌बुद्धसंस्कारस्यैव विरोधित्वेनोक्तप्रमाया एव प्रकृते उद्‌बोधकत्वेन विनिगमकाभावात्, उक्तसंस्कारविशिष्टोक्तप्रमाया उक्तसंस्कारोक्तप्रमयोर्वा विरोधित्वेन तदुक्तेर्युक्तत्वात् । अन्यथा व्यावहारिकव्यापकत्वादिविषयकत्वेन संस्कारमात्रस्य बाधकत्वासम्भवात् ।

न च भेदभावज्ञानस्य भेदभ्रमविरोधित्वपक्षे निर्विकल्पकप्रमा व्यर्थेति वाच्यम् । पदार्थज्ञाने तात्त्विकप्रमात्वज्ञानं विना महावाक्यार्थज्ञाने तदसम्भवात्, शुद्धपदार्थज्ञानं विना तद्घटितैक्यनिर्विकल्पकस्यासम्भवात्, ‘ब्रह्मविदाप्नोति परमि’ति श्रुतेः ‘तमेव विदित्वे’त्यादिश्रुत्यनुसारेण शुद्धब्रह्मणो ज्ञानस्य मोक्षहेतुत्वे सिद्धे कैर्विशेषणैरुपलक्षितं तत् ब्रह्मेति जिज्ञासायास्सत्यादिवाक्यजन्यनिर्विकल्पकं विना निवृत्त्ययोगात् भेदाभावज्ञाने शुद्धस्य भानेऽपि सत्यत्वाद्युपलक्षितत्वस्य तत्प्रकारकधीद्वारकनिर्विकल्पकविषयत्वरूपस्याभावात् । न च सिद्धान्ते ऐक्यज्ञानेनैव तदज्ञानस्य भेदभ्रमसहितस्य निवृत्तिसम्भवात् द्वारीभूतसप्रकारकधीः व्यर्थेति वाच्यम् । व्यावर्तकाकारकत्वस्य तत्प्रयोजकत्वेन विशेषणतया तस्याप्रमात्वप्रयोजकत्वेन[2] चोपलक्षणतया तस्यावश्यकत्वे सप्रकारधीद्वारकत्वस्यावश्यकत्वात् । उक्तं चाद्वैतसिद्ध्यादौ तथा ।

---

१. प्रकारतयेत्यर्थः ।

२. अप्रमात्वप्रयोजकत्वेन = विशिष्टयोर्भेदात् तयोरभेदज्ञानस्याप्रमात्वमित्यर्थः ।

## शुद्धयोर्भेदज्ञानस्य तदभावज्ञानप्रतिबध्यत्वविचारः

ननु शुद्धयोर्भेदज्ञाने भेदाभावधीः विरोधिनीत्युक्तम्। शुद्धयोर्भेदज्ञानमेव न सम्भवति। अभावबुद्धौ प्रतियोग्यनुयोगिविशेषणभाननियमात्। तदुक्तं शिरोमण्यादौ 'प्रतियोगिविशेषिततद्भानं विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते' इति[1]। यथा प्रतियोगिनः वैशिष्ट्यमवश्यमभावेऽवगाहते तथाऽनुयोगितावच्छेदकविशिष्टे अवश्यमभावस्य वैशिष्ट्यम्। तुल्यन्यायत्वादिति तदर्थादिति चेन्न। [2]उक्तवाक्ये भानमित्यस्य लौकिकप्रत्यक्षार्थकत्वेन प्रतियोगिविशेषिताभावलौकिकप्रत्यक्षस्यैव तथा नियमात्। [3]ससम्बन्धिविषयकलौकिकप्रत्यक्षे सम्बन्धितावच्छेदकविशिष्टसम्बन्धिविषयकत्वनियमस्य संयोगादिलौकिकप्रत्यक्षे दृष्टत्वात्। न ह्यभावत्वमात्ररूपेण गोत्वादौ शुद्धप्रतियोगिकाभावत्वमात्ररूपेण वा शाब्दधीर्न जायते।

न चोक्तनियमोऽपि न, अयं गौरिति ज्ञानोत्तरं शुद्धगोत्वप्रकारकज्ञानवानहमिति ससम्बन्धिकज्ञानस्य प्रत्यक्षे तत्सम्बन्धिनो गोत्वस्य स्वरूपेणैव भानेन सम्बन्धितावच्छेदकाभानादिति वाच्यम्। तत्र शुद्धगोत्वस्यैव सम्बन्धित्वेन सम्बन्धितावच्छेदकविशिष्टसम्बन्धिविशेषितविषयकलौकिकप्रत्यक्षस्योक्तनियमानपायात्। यद्धर्मावच्छिन्नसम्बन्धिताकं यत् तद्विषयकलौकिकप्रत्यक्षस्य तद्धर्मावच्छिन्नविषयतानिरूपिततन्निष्ठलौकिकविषयताकत्वनियमात्। अयं गौरिति ज्ञानस्य गोत्वनिष्ठविषयतारूपसम्बन्धितायाः केनाप्यनवच्छिन्नत्वात्। शुद्धगोत्वस्य तत्प्रत्यक्षे भानेऽपि यादृशी सम्बन्धिता अवच्छिन्ना अनवच्छिन्ना वा, तादृशरूपेण तन्निरूपकज्ञानादिलौकिकप्रत्यक्षे तस्याः भाननियमस्य पर्यवसितत्वात्। अत एव जातिमानिति ज्ञानस्य जातित्वावच्छिन्नविषयतारूपा सम्बन्धिता तद्रूपेणैव तत्प्रत्यक्षे भाति। तथा च शुद्धप्रतियोगिविशेषितभेदत्वेन भेदस्य परोक्षज्ञाने बाधकाभावः। तादृशभेदस्य तादृशरूपेण लौकिकप्रत्यक्षस्यापि शुद्धगोत्वप्रकारकज्ञानप्रत्यक्षस्येव स्वीकारात्।

न च प्रतियोगितावच्छेदकविशिष्टविशेषिताभावबुद्धेरेव प्रतियोगिमत्ताधीप्रतिबध्यत्वात् तादृशबुद्धेरेव प्रतियोगिमत्ताधीविरोधित्वमिति यदा स्वीक्रियते, तदा तादृशबुद्धेरेव भेदाभावधीविरोधित्वात् तादृशभेदबुद्धिं प्रत्येव तादृशभेदाभावबुद्धेर्विरोधित्वमिति वाच्यम्। शुद्धप्रतियोगिविशेषिताभावबुद्धेरपि शुद्धप्रतियोगिमत्ताधीविरोधित्वस्यावश्यकत्वात्। अन्यथाऽयं घट इत्यादिबुद्धेर्बाधप्रतिबद्धयत्वानुपपत्तेः। न च नायं घट इति भेदधीरेव तत्र प्रतिबन्धिका, तस्या घटतादात्म्यविषयकत्वादिति वाच्यम्। विरोधिन्या अनुमित्यादिसामग्र्याः सत्त्वे, अत्र शुद्धघटत्वमात्रप्रकारकप्रत्यक्षं भवत्वितीच्छया जातस्योक्तप्रत्यक्षस्य घटतादात्म्याविषयकत्वाच्च।

न च शुद्धघटत्वप्रकारकेदंविशेष्यकज्ञानेऽपि घटभेदबुद्धेर्विरोधित्वमिति वाच्यम्। तत्कल्पना-

---

१. प्रतियोगिविशेषिताभावज्ञानं प्रतियोगितावच्छेदकतया ज्ञायमानधर्मेण विशिष्टस्य प्रतियोगिनः वैशिष्ट्यमवगाहते इत्यर्थः।

२. उक्तशिरोमणिवाक्ये इत्यर्थः।

३. नित्यसापेक्षेत्यर्थः।

पेक्षया लाघवेन शुद्धघटत्वविशेषितात्यन्ताभावबुद्धेरेव तत्कल्पनात्। एवं च शुद्धप्रतियोगिकभेदबुद्धौ तदभावबुद्धेर्विरोधित्वं युक्तमेव। न च यादृशयोः भावाभावयोः सहानवस्थाननियमः, तादृशयोरेव तयोर्ज्ञाने मिथो विरोधिनी, शुद्धघटत्वतदभावयोस्तु न सः, शुद्धघटत्ववति शुद्धघटत्वपटत्वोभयाभावादिसत्त्वादिति वाच्यम्। यथा जातिमानिति ज्ञाने जातित्वमात्रावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकज्ञानस्य विरोधित्वकल्पनात् घटवृत्तिजातिरत्र नास्तीति धीर्न विरोधिनी, तथा शुद्धघटत्वप्रकारकज्ञाने घटत्वनिष्ठानवच्छिन्नप्रतियोगिताकात्यन्ताभावज्ञानत्वेन विरोधित्वकल्पनादुक्तोभयाभावादिमत्त्वज्ञानस्याविरोधित्वात्। तथा च तादृशयोर्भावाभावयोः सहानवस्थानस्यापि सत्त्वान्नोक्तदोषः। प्रागभावस्यानवच्छिन्नप्रतियोगिताकत्वेऽपि तद्वत्ताधीर्न विरोधिनी, अत्यन्ताभावत्वस्य निवेशात्। किञ्चोभयत्वविशिष्टं शुद्धघटत्वादतिरिक्तमिति तदभावात्तदभावस्याप्यतिरिक्तत्वाच्छुद्धघटत्व-उक्तोभयाभावयोस्सहानवस्थाननियमाभावेऽपि न क्षतिः। तस्माच्छुद्धघटत्वतदभावधियोरिव शुद्धब्रह्मभेदतदत्यन्ताभावधियोर्विरोधित्वे न किञ्चित् बाधकम्।

### भेदाभावविशेष्यकज्ञानस्य द्वारता सिद्धान्तसिद्धेति निरूपणम्

न च सत्यादिवाक्यात् प्रथमत एव निर्विकल्पकधीर्जायत इति सिद्धान्तेऽपि स्वीकारात् भेदाभावादिविशेष्यकज्ञानस्य द्वारता न युक्तेति वाच्यम्। तस्यापि सिद्धान्ते स्वीकारात्। तदुक्तं **संक्षेपशारीरके—**

समानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः
सर्वैरेव ततः पदैरयमिह ज्ञेयः क्रमः सूरिभिः ॥इति॥

सामानाधिकरण्यं पदयोस्समभिव्याहारज्ञानम्। अन्वयः वाक्यतात्पर्यविषयवाक्यार्थधीप्रयोजकः। विशेषणेतरतया विशेषणविशेष्यभावेन। वाच्यार्थाभेदज्ञानमन्वय इत्यनुषज्यते। विरोधः विरोधज्ञानम्, वाच्यार्थभेदज्ञाने प्रमात्वासम्भवेन तात्पर्याविषयत्वज्ञानान्निर्विकल्पकशाब्दबोधे तात्पर्यज्ञानमिति यावत्। अन्वय इति इत्यनुषज्यते। यदि तु सत्यादिवाक्यजन्यनिर्विकल्पकप्रमोत्तरमर्थापत्त्या सत्यत्वाद्युपलक्षितानामभेदनिश्चयः 'सत्यत्वाद्युपलक्षितानामभेदः परस्परवृत्तिरि'त्याकारको जायते, समानविभक्तिकसत्यज्ञानादिपदजन्यनिर्विकल्पकविषयत्वस्य तादृशाभेदं विनाऽनुपपत्तेः, तदुक्तं **कल्पतरौ—**'इतरव्यावृत्त्यादिकमर्थात्, न तु शब्दादिती'ति पक्षोऽद्वैतसिद्ध्यादावाश्रितः आश्रीयते, तदा नोक्तक्लेशः। वाच्यार्थभेदावभासादिति पाठे तु वाच्यानां मिथो भेदज्ञानस्य सत्त्वात्तन्निवर्तकनिर्विकल्पकज्ञानस्य वाच्याभेदज्ञानद्वारकवाक्यार्थज्ञानस्योत्पत्तये सत्यादिनानापदानामावश्यकत्वात् न पौनरुक्त्यमित्यर्थः। ननु तादृशभ्रमनिवृत्तिं विनापि शुद्धपदार्थद्वयप्रमापूर्वकमहावाक्यार्थप्रमासम्भवात् तादृशभ्रमनिवर्तकज्ञानार्थकतया कथं पदसार्थक्यमिति चेन्न। उक्तज्ञानं विना

**लक्ष्यस्य चार्थस्यैकत्वादखण्डार्थता पदजन्यस्मरणस्य निर्विकल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वमनुभववदेवाविरुद्धम् ।**

---

हि ब्रह्मणोऽसत्यत्वशङ्कया वाक्यार्थज्ञानेऽप्यसत्यविषयकत्वरूपाप्रामाण्यशङ्का स्यात् । एवं ब्रह्मणः स्वप्रकाशकज्ञानानन्दानन्तादिभिन्नत्वशङ्कयाऽप्यपुरुषार्थविनाशित्वादिशङ्कासम्भवात्, मोक्षे परमपुरुषार्थान्यत्वशङ्कया स्वर्गादित्यागपूर्वकमोक्षेच्छादिना श्रवणादौ प्रवृत्तिर्न स्यात् । निष्प्रयोजनत्वशङ्कया ब्रह्मणः श्रुतितात्पर्याभावशङ्कापि स्यात् । तस्मात् तत्तच्छङ्कानिवर्त्तकज्ञानार्थं सत्यज्ञानानन्दानन्तादिपदानामावश्यकतया ।

### पुनः सत्यादिनानापदानामावश्यकत्वनिरूपणम्

किञ्च सत्यत्वाद्युपलक्षितब्रह्मैक्यापन्नजीवस्वरूपाज्ञानस्य तादृशैक्यज्ञानं विना निवृत्त्यसम्भवात् तादृशज्ञानस्य च तादृशब्रह्मविषयकावान्तरवाक्यार्थज्ञानमन्तरेणासम्भवात् तदर्थकतया सत्यादिपदान्यावश्यकानि । अत एव 'अस्थूलमनण्वह्रस्वमदीर्घ'मित्यादिवाक्यगतानि अस्थूलादिपदान्यपि आवश्यकानि, अस्थूलत्वाद्युपलक्षितब्रह्मैक्यज्ञानार्थकत्वात् । अज्ञानस्य तादृशजीवस्वरूपविषयकत्वन्तु सत्यत्वादिविशिष्टब्रह्मधीपूर्वकसत्यत्वाद्युपलक्षितं ब्रह्म न जानामीति व्यवहारविषयत्वम् । एतेन ज्ञानस्य सत्यत्वादिविशिष्टप्रकारकधीद्वारा सत्यादिवाक्यजन्यत्वमेव सत्यत्वाद्युपलक्षितब्रह्मविषयकत्वम्, अज्ञानस्य त्वजन्यत्वात् कथं तादृशब्रह्मविषयकत्वमित्यपास्तम् ।

ननु वाच्याभेदज्ञापकत्वे सत्यादिवाक्यस्य शुद्धब्रह्ममात्रबोधकत्वरूपमखण्डार्थत्वं न स्यात् तत्राह—**लक्ष्यस्य चेति** । एकत्वाच्छुद्धत्वात् । ननु किञ्चिद्धर्मविशिष्टस्यैव स्मृतिः पदज्ञानाधीना वाक्यार्थज्ञानहेतुः, लोके तथा दृष्टत्वात्, तथा च कथं निर्विकल्पकस्मृतिः तथा, तत्राह—**पदजन्यस्मरणस्येति । वाक्यार्थानुकूलस्य** वाक्यार्थबोधहेतोः । **अनुभववदिति** । वाक्यार्थानुभवस्येवेत्यर्थः । यथा चन्द्रस्वरूपमात्रजिज्ञासोत्तरं प्रवृत्तस्य प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यस्याज्ञात चन्द्रस्वरूपमात्रपरत्वम्, विशेषणसंसर्गपरत्वे मानाभावात् । तथा ब्रह्मस्वरूपमात्रजिज्ञासायां प्रवृत्तस्य सत्यादिवाक्यस्य तन्मात्रपरत्वम् । यथा तत्र जिज्ञासाप्रयोजकस्य प्रकृष्टप्रकाशकत्वचन्द्रत्वाद्युपलक्षितयोः भेदसंशयस्य निवृत्तिः तथा तादृशस्य सत्यत्वज्ञानत्वाद्युपलक्षितयोः भेदसंशयस्य निवृत्तिः । यथा च तत्तेदन्तोपलक्षितयोः भेदसंशयभ्रमनिवृत्त्यर्थं प्रयुक्तस्य सोऽयमिति वाक्यस्य तयोरैक्यमात्रपरत्वेन व्यक्तिमात्रनिर्विकल्पकजनकत्वम्, तद्व्यक्तौ तद्व्यक्तेः संसर्गाभावात् । तथा जीवत्वेश्वरत्वोपलक्षितयोः भेदसंशयभ्रमनिवृत्त्यर्थं प्रयुक्तस्य महावाक्यस्य तयोरैक्यमात्रपरत्वेन व्यक्तिमात्रनिर्विकल्पकहेतुत्वम्, तद्व्यक्तौ तद्व्यक्तेः संसर्गाभावात् । न चोपलक्षितव्यक्त्योर्भेदधीरेव न सम्भवति, अभावप्रत्ययस्य प्रतियोग्यनुयोग्यंशे किञ्चित्संसर्गविषयकत्वनियमादिति वाच्यम् । अभावलौकिकप्रत्यक्षस्यैव तथा नियमात् । प्रकृते च जीवस्वरूपस्य प्रत्यक्षत्वेन भेदप्रत्यक्षसम्भवेऽपि ईश्वरस्वरूपस्य परोक्षतया तत्र भेदप्रत्यक्षस्यासम्भवेन तत्र भेदज्ञाने शुद्धयोः प्रतियोग्यनुयोगितासम्भवात् । न च तथापि तादृशभेदज्ञानस्यैक्यप्रमानिवर्त्यत्वानुपपत्तिः, प्रतियोग्यनुयोग्यंशे निर्विशेषणकस्य विरोधिधीनिवर्त्यत्वानभ्युपगमादिति वाच्यम् । प्रतिबद्ध्यत्वरूपनिवर्त्यत्वस्यानभ्युपगमेऽपि ऐक्याज्ञाननिवृत्तिद्वारा नाश्यत्वरूपस्य निवर्त्यत्वस्य तत्रानुभूयमानत्वेन तत्र निर्युक्तिकानभ्युपगमोक्त्या निरासा-

**सविकल्पकवाक्यार्थबोधे च सविकल्पकपदार्थोपस्थितिरङ्गम् । निर्विकल्पकवाक्यार्थबोधे च निर्विकल्पपदार्थोपस्थितिरङ्गम् । प्रकृते च निर्विकल्पको वाक्यार्थबोधः । तस्यैव प्रमात्वेनाज्ञाननिवर्तनसामर्थ्यात् ।**

---

सम्भवात् । न च उक्तज्ञानं प्रति अप्रतिबन्धकस्य निर्विकल्पकस्य जनकत्वे सोऽयमित्यादिकं वाक्यमेव न स्यात् । विपरीतज्ञानप्रतिबन्धकधीजनकत्वस्यैव वाक्यत्वादिति वाच्यम् । विपरीतज्ञानाभावप्रयोजकधीजनकस्यैव वाक्यत्वं त्वयाप्युच्येत ? तादृशप्रयोजकत्वं निर्विकल्पकस्य त्वन्मते न सम्भवति, प्रतिबन्धकत्वाभावात् । मन्मते त्वज्ञाननिवृत्तिद्वारा सम्भवत्येव । यदि चोक्तवाक्यस्य द्वारीभूतं तत्त्वोपलक्षितस्य भेदाभाव इदंत्वोपलक्षितवृत्तिरित्याकारकज्ञानं तद्द्वारा तेन निर्विकल्पकजननात्, तदा तादृशज्ञानस्य तज्जन्यसंस्कारस्य वा निर्विकल्पकोत्पत्तिकाले सत्त्वात्, तादृशनिर्विकल्पकस्य तादृशसंस्कारोद्बोधकत्वात्, तादृशसंस्कारोद्बोधकयोर्भेदधीप्रतिबन्धकत्वं तार्किकरीत्यैव सम्भवति । **परे तु** औपनिषदानां कर्ममीमांसकवत् स्वशास्त्रे व्यवहारात् तद्वदेव विपरीतज्ञानविरोधित्वम्, तैश्च विपरीतज्ञानानुकूलशक्तिनाशद्वारा विपरीतज्ञानाभावप्रयोजकत्वमेव प्रतिबन्धकत्वं विपरीतज्ञानं प्रति विशेषदर्शने स्वीक्रियते । औपनिषदानां तदनुकूलशक्तिरज्ञानमेव । तन्नाशद्वारा तदभावप्रयोजकत्वं निर्विकल्पस्येति तेषामाशयः । तथा च वाक्यार्थानुभवस्य निर्विकल्पकत्वे सिद्धे तन्निर्वाहाय स्मरणमपि तथा कल्प्यमेवेति भावः ।

एवमपि घटमानयेति वाक्यार्थबोधस्य सविकल्पकत्वात् तत्र सविकल्पकस्मरणमावश्यकमिति नाव्यवस्थेत्याह—**सविकल्पकेत्यादि । निर्विकल्पक इति ।** कुत्रचिद्विशेष्यतया विशेषणतयैव वा यत्रात्मा भाति तदन्येत्यर्थः । "अहं ब्रह्म, घटादिकं मिथ्या मिथ्यात्वं घटादिवृत्ति" इति ज्ञाने घटादेरेव विशेष्यत्वविशेषणत्वाभ्यां भानम्, न त्वात्मन इति तत्संग्रहः । 'अहं ब्रह्म, घटादिकमात्मनि कल्पितमि'ति ज्ञाने आत्मा विशेषणतयैव न भाति, किन्त्वसंसृष्टरूपेण विशेषणतयापि भातीति तत्संग्रहः । **प्रमात्वेन**—अबाधितविषयकत्वेन । विशेष्यतया हि भासमान आत्मा संसर्गानुयोगी, विशेषणतया च भासमानः संसर्गप्रतियोगी, तयोश्च मिथ्यात्वात्तदन्यतरविषयकं ज्ञानं न प्रमेति नाविद्यातत्प्रयुक्तदृश्योच्छेदकम्, अधिष्ठानाविषयकत्वादिति भावः ।

### दृश्यविषयकब्रह्मसाक्षात्कारस्य अविद्यानिवर्तकत्वविचारः

ननु 'अहं ब्रह्म, घटो विनाशी'त्यादिसमूहालम्बनस्य दैववशसम्पन्नकारणबलात् घटादिविषयकस्य अविद्योच्छेदकत्वमास्ताम् । इष्टापत्तौ च प्रमात्रादेः महावाक्यार्थबोधे भाननिराकरणस्य पूर्वकृतस्यानुपपत्तिरिति चेन्न । शुद्धस्वरूपान्यस्य तात्पर्याविषयत्वेन वाक्यार्थबोधे नियमतो न भानम् । दैववशसम्पन्नकारणबलात् प्रमात्रादेर्भानं तु स्यादेवेत्याशयबलेन नियमतः प्रमात्रादिभानस्यैव पूर्वं निराकृतत्वात् । न च 'तमेव विदित्वे'त्यादिश्रुत्या आत्मान्याविषयकज्ञानस्याविद्यानिवर्तकत्वोक्त्या प्रमात्रादिविषयकं शुद्धात्मज्ञानं नाविद्यानिवर्तकमिति वाच्यम् । 'अन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोति' इत्यादेरन्नेतरभोजनत्वविशिष्टाजन्यतृप्तिविशेषाद्यर्थकत्ववत्, 'व्याप्त्यादिकमेव विदित्वाऽनुमिनोति, ब्राह्मणानेव दृष्ट्वा अयमतितुष्यति'त्यादौ व्याप्त्याद्यविषयकज्ञानाजन्यानुमित्याद्यर्थकत्ववच्च 'तमेव

विदित्वे'त्यादावात्मान्यविषयकत्वविशिष्टज्ञानाजन्यमुक्त्यर्थत्वाद् आत्माविषयकज्ञानाजन्यमुक्त्यर्थत्वाद्वा। तं विदित्वैवेति योजना तु न युक्ता, श्रुतौ श्रुतसमभिव्याहारभङ्गस्यायुक्तत्वात् उक्तं च **विद्यारण्यश्रीचरणैः**—

न बुद्धिं मर्दयन् दृष्टो घटतत्त्वस्य वेदिता।
उपमृद्नाति चेत् बुद्धिं ध्याताऽसौ न तु तत्त्ववित् ।। इति।

तत्त्वज्ञानस्य इतरविषयकत्वराहित्याय बुद्धिमर्दनं नापेक्ष्यते, इतरविषयस्यापि तत्त्वविषयकत्वसम्भवात्। ध्याने तु विजातीयधीरहितसजातीयधीप्रवाहरूपे तदपेक्ष्यत इति **ध्यानदीपिकास्थोक्तवाक्यार्थः**। यत्तु 'जीवन्मुक्तस्य कदाचिदद्वैतात्मदर्शनं कदाचित् द्वैतदर्शनं न युगपत्सन्तमसबहुलालोकाविवेति विवरणे उक्तम्। तदद्वैतात्मजिज्ञासाकाले तदन्याविषयकज्ञानपरम्। अन्यथा प्रारब्धभोगसामग्रीबलाज्जायमानस्य द्वैतविषयकस्य शुद्धात्मज्ञानस्य वारणासम्भवात्।

## द्वैतविषयकब्रह्मज्ञानस्याहार्यत्वम्

अथवा यथा 'घटो न घट' इति ज्ञानमाहार्यमेव, तथा शुद्धात्मस्वरूपाधिष्ठानतदारोपितद्वैतरूपविरुद्धद्वयविषयिका 'अहं ब्रह्म, घटो विनाशी'त्यादिवृत्तिराहार्यैव वाच्या। सा च न ज्ञानम्। अस्मन्मते हि आहार्यवृत्तिरिच्छादिवत् वृत्त्यन्तरमेव, न तु धीः। अतस्सा नात्मदर्शनमित्यद्वैतात्मदर्शनद्वैतदर्शनयोर्न योगपद्यम्।

न च तार्किकादिमते 'घटो न घट' इति ज्ञानस्य एकधर्मिणि विरुद्धयोरेकविशिष्टे अपरसंसर्गविषयकत्वेनाहार्यत्वेऽप्यतथाभूतमुक्तज्ञानं कथमाहार्यमिति वाच्यम्। 'नेह नानास्ति किञ्चने'त्यादिवाक्यैः प्रपञ्चस्य ब्रह्मणि निषेधात्तदभावस्य शुद्धब्रह्मव्यापकत्वेन ग्रहात्, शुद्धब्रह्मस्वरूपस्य तादात्म्येन घटाद्यभावव्याप्यतया गृहीतत्वात्, तादृशसद्रूपतादात्म्यस्य च दृश्याकारवृत्तौ दृश्यांशे भाननियमस्य सिद्धान्ते स्वीकारात्, 'अहं ब्रह्म सत् घटादिकं विनाशी'त्याकारवृत्तेः घटाद्यभावव्याप्यतया गृहीतत्वेन घटादिविरुद्धे सद्रूपे घटादितादात्म्यविषयकत्वेनाहार्यत्वानपायात्, गन्धाभावव्याप्यतया गृहीते जलादौ गन्धसंसर्गविषयकवृत्तिवत्। अस्मिन् पक्षे च उक्तवृत्तिर्नाविद्यानाशिका, ज्ञानत्वाभावात्। वस्तुतस्तूक्तवृत्तेः द्वैताद्वैतविषयकत्वेऽपि द्वैतांशे प्रमात्वानिश्चयेन प्रमात्वेन निश्चीयमानयोरेव द्वैताद्वैतधियोर्न यौगपद्यमित्यर्थकत्वेनोक्तविवरणवाक्यमविरुद्धम्।

परमार्थतस्तु विशेषदर्शनस्य भ्रमविरोधित्वं सर्वानुभवसिद्धम्। तच्च तार्किकादिमते भ्रमप्रतिबन्धकत्वम्। वेदान्तदर्शने तु विशेषदर्शनस्याधिष्ठानज्ञानरूपस्य भ्रमं प्रति नाशरूपत्वं नाशजनकत्वं वा। तथा च तत्त्वज्ञाने तदुपत्ति (क्षणोत्तर) क्षणवृत्तिदृश्येतरदृश्यप्रतियोगिकनाशत्वस्वीकारात् तत्त्वज्ञानं न भ्रमात्मकम्। स्वस्य स्वनाशत्वासम्भवात्। तादृशक्षणवृत्तिदृश्यन्तु तत्त्वज्ञानमज्ञानसंस्कारः तत्कार्यप्रारब्धकर्मभोगोपयुक्तं अज्ञानोपादानककार्यं चेति तेषां तादृशक्षणवृत्तित्वादेव तन्नाशत्वं न तत्त्वज्ञानस्य सम्भवति। न हि नाशः प्रतियोगिक्षणपूर्वक्षणवृत्तिः। तादृशदृश्येतरदृश्यं त्वज्ञानतत्प्रयुक्तानादिदृश्यं प्रारब्धभोगानुपयुक्तं अज्ञानोपादानककार्यं भ्रमतद्विषयरूपं यत् तस्य

**अतो न लक्ष्यतावच्छेदकमन्तरेण लक्षणानुपपत्तिः प्रकृतवाक्यार्थानुकूलपदार्थोपस्थितेरेव शक्तिलक्षणासाध्यत्वात् ।**

---

सर्वस्य नाशः तत्त्वज्ञानम् । तत्पूर्वनष्टस्यापि सूक्ष्मावस्थारूपनाशं प्रति नाशत्वस्य तत्त्वज्ञाने सत्त्वेन तादृशनष्टप्रतियोगिकनाशत्वस्यापि सत्त्वात्, प्रागभावादिनाशात्मकघटादिनाशे प्रागभावनाशत्ववत् । न चाज्ञानसंस्कारस्य सविषयकभ्रमविशेषोपादानत्वेनावश्यकल्प्यतया तस्यैवाज्ञानादितादृशदृश्यनाशत्वमास्ताम्, तथा च तत्त्वज्ञानस्य घटादिविषयकत्वे बाधकाभाव इति वाच्यम् । पूर्वोक्तश्रुतिसिद्धेन दृश्याविषयकत्वेन तत्त्वज्ञानस्यापि तादृशदृश्यनाशत्वसम्भवात्, तादृशदृश्यनाशरूपसंस्कारोत्पत्तिक्षणोत्पन्नत्वेनैव तत्त्वज्ञानस्य भ्रमरूपत्वासम्भवाच्च । न हि नाशोत्पत्तिक्षणे प्रतियोगी विद्यते ।

किञ्च तत्त्वज्ञानस्योत्पत्तिक्षणमारभ्य क्षणत्रयं भ्रमात्यन्ताभावनियमस्तार्किकादिमते[1] सिद्धः । मन्मते तु तादृशदृश्यात्यन्ताभावनियमः । तथा च तादृशदृश्यवत्क्षणोत्तरक्षणेषु तादृशदृश्यनाशं विना तादृशदृश्यात्यन्ताभावासम्भवात् तत्राद्यक्षणे तादृशनाशस्योत्पत्तिर्वाच्या । स च तत्त्वज्ञानरूपः । ज्ञानसामग्र्याः तद्धेतुत्वस्य क्लृप्तत्वेन क्लृप्तहेतुनैव तदुत्पत्तिनिर्वाहे तद्भिन्ने तस्या हेतुत्वस्य कल्प्यत्वे गौरवात् । ज्ञानतन्नाशयोरेव अज्ञानसंस्कारशब्देन शास्त्रे व्यवहारसम्भवात् । तदन्याज्ञानसंस्कारे मानाभावात् तत्त्वज्ञानमेव तादृशदृश्यनाशः । एवं तत्त्वज्ञानस्य भ्रमनाशकत्वपक्षेऽपि न भ्रमत्वम्, स्वस्य स्वनाशकत्वासम्भवात् । स्वोत्तरवृत्तिज्ञानादीनामेव ज्ञानादिनाशकत्वाङ्गीकारात् । अन्यथा क्षणिकत्वापत्तेः ।

अथवा सन्तमससामान्यात्यन्ताभावः यथा बहुलालोकः तथा तादृशदृश्यसामान्यात्यन्ताभावः तत्त्वधीतन्नाशयोरन्यतरत् । अत एव 'सन्तमसबहुलालोकाविव न युगपत् द्वैताद्वैतदर्शने' इति **विवरण**-दृष्टान्तस्वारस्यम् । **एतेन** नाशजनकत्वेनाभिमता सामग्री [2]अत्यन्ताभावस्य व्याप्या । स च प्रतियोगिमत्क्षणोत्तरक्षणे नाशोत्पत्तिं विनापि सम्भवतीत्युक्तावपि[3] न क्षतिः । **अतो न लक्ष्यावच्छेदकमिति** । निर्विकल्पकस्मरणस्य प्रकृतोपयुक्तत्वात् तद्धेतुतया शुद्धे लक्षणाज्ञानस्य कल्पनाया अन्यत्र दृष्टत्वेन प्रकृतेऽनुपपत्तिर्नेत्यर्थः । उक्तकल्पनोपपत्तौ हेतुमाह—**प्रकृतेति** । **वाक्यार्थानुकूलेति** । वाक्यार्थानुभवजनकेत्यर्थः । **साध्यत्वादिति** । ज्ञानसाध्यत्वादित्यर्थः शक्तिज्ञानप्रयोज्यसम्बन्ध्युपस्थितेः लक्षणात्वमते वाक्यार्थानुभवस्य लक्षणासाध्यत्वात् तज्जनकोपस्थितेरपि तदुक्तिसम्भवः ।

---

१. किञ्चेति—क्षणत्रयं; प्रथम-द्वितीयक्षणयोः न भ्रमसम्भवः तत्त्वज्ञानसमकाले भ्रमासम्भवात् । तृतीये च पूर्वक्षणे तत्त्वज्ञानसद्भावान्न भ्रमसम्भवः ।

२. स्वोत्तरकालत्वसम्बन्धेन अत्यन्ताभावस्य व्याप्या इति ।

३. सम्भवतीति तादृशनाशे स्वीकृतेपि तादृशात्यन्ताभावोपि स्वीकार्य एव, तस्य तद्व्यापकत्वात् । शक्यते च नाशकत्वाभिमतसामग्र्या एवात्यन्ताभावं प्रति क्षेमसाधारणकारणत्वं प्रयोजकरूपोऽखण्डधर्मो वा वक्तुं । एवं शुद्धे लक्षणयाज्ञानस्य शुद्धस्मृतिहेतुत्वं कल्प्यते अन्यथा शुद्धस्मृतेः प्रकृतोपयुक्ताया अनुपपत्तेरित्याह—अतो न लक्ष्यतावच्छेदकमिति । इति पाठः ।

## प्राभाकरमतेन शाब्दबोधविवरणम्

ननु तत्त्वमसी'त्यादिवाक्यानां शाब्दधीजनकत्वं नोपपद्यते, तदादिपदानां कार्यत्वान्वितार्थशाब्दानुभवं प्रत्येव हेतुत्वस्य क्लृप्तत्वात् । तथाहि—'तमानये'त्यादिवाक्यात् पित्राद्युच्चरितात् तदानयनं कार्यमित्यादिकमर्थं बुद्ध्वा तदानयने प्रवृत्तस्य बालकस्य तदानयनरूपाञ्चेष्टामुपलभ्य तत्स्वरूपेण कार्येण तदनुकूलप्रवृत्तिमुक्तबाले अनुमाय तादृशप्रवृत्तिरूपकार्येण तत्कारणभूतां 'तदानयनं कार्य'मित्यादिबुद्धिमुक्तबालेऽनुमिनोति, ततस्तस्या बुद्धेरुपस्थितोक्तवाक्यजन्यतामनुमाय तदाद्येकैकपदस्यानयेत्यादिपदान्तरार्थाघटितकार्यत्वघटितार्थशाब्दानुभवहेतुत्वं कल्प्यते । 'तमपसारये'त्यादावानयनादिकमविषयीकृत्य कार्यत्वं विषयीकृत्यैव तदादिपदार्थबुद्ध्युदयात् । लिङादिपदस्यापि कार्यरूपोऽर्थः 'स्वर्गकामो यजेत' इत्यादौ वेदे शक्त्या प्रतीयमानः कार्यत्वघटित एव । 'ओदनकामः पचेत' इत्यादिलौकिवाक्यस्थलिङादिना लक्षणया बोद्धव्यमानं कार्यत्वं कार्यत्वघटितमेव, तद्विषयकधीविषयस्य तद्घटितपदार्थत्वात् । कार्यत्वविषयको यस्तदादिपदार्थस्य शाब्दबोधस्तत्त्वेनैव तदादिपदज्ञानकार्यता । यदि च 'फलिनो वृक्षास्तानानये'त्यादिवाक्यजन्यशाब्दबोधे स्वातन्त्र्येण फलवृक्षादेः न विषयतेत्यानुभविकम्, तदा तादृशकार्यकारणभावो न स्वीक्रियते परन्तु घटकर्मत्वादिनिष्ठं यत् कार्यत्वविधेयतानिरूपितोद्देश्यतावच्छेदकत्वं तेन सम्बन्धेन शाब्दबोधं प्रति 'घटः कर्मत्व'मित्यादिनिराकाङ्क्षपदाजन्यघटकर्मत्वाद्युपस्थितिः कार्यत्वाद्युपस्थितिविशिष्टा हेतुः । 'आनये'त्यादिपदे श्रूयमाणे 'घट'मित्यादिपदज्ञानं विनापि तादृशोपस्थितिमात्रेणोक्तसम्बन्धेन शाब्दबोधोत्पत्तेः 'घट'मित्यादिपदज्ञानस्य नोक्तधीहेतुत्वम् । कार्यत्वविधेयतानिरूपितोद्देश्यतासम्बन्धेनानयनादिनिष्ठेन शाब्दबोधे 'आनयनं कार्यत्वं'मित्यादिनिराकाङ्क्षपदाजन्यकार्यत्वोपस्थितिविशिष्टा आनयोपस्थितिर्हेतुः । एवं नीलघटकर्मत्वाद्युपस्थितेरपि हेतुत्वम् । पदजन्या तदन्या वा या या उपस्थितिः यादृशयादृशशाब्दबोधोपधायिका, तत्तदुपस्थितिपर्याप्तानां शक्तिविशेषाणामेव तादृशतादृशशाब्दहेतुतावच्छेदकत्वम्, न तु तादृशतादृशोपस्थितित्वाम्, अतो नाननुगमगौरवे । तच्च हेतुत्वं व्यापारविधया । करणत्वं तु तादृशोपस्थितिजनकानां 'घट'मित्यादिपदानां तत्समानविषयकानामध्याहृतमानान्तराणां च विभिन्नशक्तिविशेषवत्त्वेनैव, पदज्ञानेऽध्याहृतमानान्तरे च एकस्याश्शक्तेस्स्वीकारे क्रियापदकारकपदयोरेकस्याप्यज्ञाने शाब्दबोधापत्तेः । कारकपदज्ञानकारकाध्याहारयोरन्यतरस्य क्रियापदज्ञानक्रियाध्याहारयोरन्यतरस्य च फलोपधायकत्वात् । विभिन्नपदे शक्तिस्वीकारे च कारकपदक्रियापदयोः कारकपदक्रियाध्याहारयोः क्रियापदकारकाध्याहारयोर्वा मिलितयोरेव दण्डचक्रवत् फलोपधायकत्वान्नोक्तापत्तिः ।

वस्तुतस्तु कारकपदक्रियापदकारकाध्याहारक्रियाध्याहारेषु न शक्तिचतुष्टयं वाच्यम् । तथा चैकैव लाघवाच्छक्तिरस्तु । तस्या एकस्यैव घटत्वादेस्तत्तद्घटव्यक्तिष्विव क्रियाकारकपदयोः क्रियापदकारकाध्याहारयोः कारकपदक्रियाध्याहारयोश्च पर्याप्तिस्वीकारात् तदुभयसत्त्वे तादृशशाब्दधीरिति । अथवा पर्याप्तिर्न प्रकृते निवेश्यते, तृणफूत्कारसंयोगादाविव क्रियाकारकपदमेलनादिषु त्रिषु एकस्या एव शक्तेः स्वीकारसम्भवात्, क्रियाकारकाध्याहारमेलनादिषु तदस्वीकारसम्भवाच्च । एवं च 'फलिनो वृक्षा' इत्युक्तवाक्ये वृक्षादेर्नान्वयधीः, प्रथमान्तपदस्य विधेयीभूतकृतिसाध्यत्वैकदेशकृतौ

विशेषणतया सम्बोध्यतया वा स्वार्थबोधकत्वात्, 'स्वर्गकामो यजेते'त्यादौ स्वर्गकामस्य कृत्या साध्यो याग इत्यादिशाब्दबोधात् । सम्बोध्यत्वं च प्रकृतवाक्यजन्यशाब्दधीमत्त्वेन तद्वाक्यवक्तुरिच्छाविषयत्वम् प्रथमाविभक्त्यर्थः चैत्रादिनामार्थे तस्यान्वयः । प्रकृते तथाऽन्वये निराकाङ्क्षत्वबाधौ । एवं चार्थान्तरशाब्दबोधस्य कार्यत्वोपस्थितिं विनाऽनुपपत्तेः तदुपस्थापकपदासमभिव्याहृतवाक्ये पदाजन्ययापि तदुपस्थित्यैव वाक्यार्थबुद्ध्युत्पादकत्वं न तां विनापि इति, शाब्दधीमात्रस्य कार्यत्वविषयत्वनियमात् तत्त्वमसीत्यादेः न ब्रह्ममात्रप्रमापकत्वसम्भव इति प्रभाकरानुयायिनो वदन्ति ।

## प्रभाकरमतनिराकरणम्

तदसारम् । तदादिपदस्य हि कार्यत्वघटितार्थशाब्दबोध एव हेतुत्वं कल्प्यते, 'स आगतः, स जीवती'त्यादौ कार्यत्वाविषयकशाब्दबोधस्याप्यानुभविकत्वेन कार्यत्वं विषयीकृत्यैव तदादिपदार्थबुद्ध्युदयादित्युक्तहेतोरसिद्धेः, किन्तु इतरान्वितार्थशाब्दबोधं प्रत्येव । तथा च शाब्दधीजननसामर्थ्यरूपा शक्तिः पदानामितरान्वितघटत्वादावेव, न तु कार्यत्वघटितघटत्वादौ ।

ननु 'स आगतः' इत्यादिवाक्यजन्यबोधात् न प्रवृत्तिः । कार्यताज्ञानस्यैव प्रवर्तकत्वात् । तथा चोक्तरीत्या शाब्दानुभवहेतुत्वस्यान्वितार्थे ग्रहीतुमशक्यतया कथमुक्तहेतुतारूपशक्तिग्रह इति चेत्, शृणु । उक्तवाक्ये तदादिपदस्य श्रोतृपुत्रादिप्रियपरत्वस्यापि सम्भवात्, तदागमनज्ञानस्य सुखहेतुतया उक्तवाक्यार्थबोधादुत्पन्नसुखपुरुषस्य मुखस्मेरत्वेन कार्येण तत्कारणं सुखमनुमीयते, तेन तद्धेतुमुक्तवाक्यार्थज्ञानमनुमिनोति हेत्वन्तराभावस्य निश्चयात् । उक्तवाक्यस्य प्रियागमनधीपरत्वनिश्चयाच्च । ततोऽन्वयव्यतिरेकाभ्यां तदादिपदस्य बुद्धिस्थपुत्रादिरूपेतरान्वितं प्रति तादृशशक्तिर्निर्णीयते । एवं 'नायं सर्प' इत्यादिवाक्यस्थलेऽपि भयनिवृत्तिकार्यनिष्कम्पगात्रत्वादिलिङ्गकनिर्भयत्वाद्यनुमित्यादिप्रकारेण सर्पादिपदस्यान्वितसर्पत्वादौ शक्तिनिर्णयः ।

## तत्त्वमसीत्यादेः अन्वितानुभावकत्वम्

ननु, तथापि 'तत्त्वमसी'त्यादावनुपपत्तिः, अन्वितानुभावकत्वेन क्लृप्तस्य तदादिपदस्यानन्वितब्रह्मानुभावकत्वासम्भवादिति चेन्न । अन्वितेत्यस्य स्वघटितवाक्यतात्पर्यविषयार्थकत्वात् । तथा च यस्य पदस्य स्वघटितवाक्यतात्पर्यविषयो योऽर्थोऽन्वितोऽनन्वितो वा तत्रैव तस्यानुभावकत्वम् ।

## लाक्षणिकं नानुभावकम्

ननु 'तत्त्वमसी'त्यादौ सर्वपदानां लाक्षणिकत्वेनानुभावकत्वमनुपपन्नम् । अनुभावकत्वमेव हि अभिहितान्वयवादे अन्विताभिधानवादे च पदानां शक्तिः । तस्याश्च लाक्षणिकपदेऽपि स्वीकारे मुख्यामुख्यपदविभागानुपपत्तिः । अथाभिहितान्वयवादे तादृशदोषाभावः, पदाभिहितपदार्थज्ञानस्यैवानुभावकत्वेन पदस्याननुभावकत्वात् ।

न चोक्तवादे पदानां संसर्गरूपवाक्यार्थलक्षकत्वस्वीकारात् लक्षणाज्ञानविधया पदज्ञानानामेवानुभावकत्वमिति वाच्यम् । वाक्यार्थे हि स्वरूपसती पदवाच्यसम्बन्धरूपा लक्षणोपयुज्यते, घटमित्यादिपदशक्यस्य घटत्वीयकर्मत्वादेः तत्प्रतियोगिकत्वरूपो यस्सम्बन्धः तदाश्रयस्यैव दर्शनादि-

क्रियानिष्ठस्य निरूपकत्वादिसंसर्गस्योक्तकर्मत्वादिज्ञानानुभाव्यत्वात् । उक्तकर्मत्वाद्यप्रतियोगिकस्य निरूपकत्वस्य क्रियायामुक्तकर्मत्वादेस्संसर्गतया भाने औत्सर्गिकस्य स्वतः प्रमात्वस्य बाधापत्तेः । औत्सर्गिकस्वतःप्रमात्वं च दोषासहिताया ज्ञानसामान्यजनकसामग्र्याः व्यापिका प्रमोत्पत्तिरित्येवंरूपम् । एवं च नोक्तलक्षणाधीः संसर्गशाब्दबोधे उपयुज्यते, नतरां तद्रूपेण पदज्ञानं हेतुरिति चेन्न । अभिहितान्वय इत्यस्य हि अयमर्थः—विभक्त्यन्तपदाभ्यां स्वार्थानुभवौ जन्येते, तादृशानुभवविषयत्वमेव पदार्थस्याभिहितत्वम्, तदुत्तरं तु तादृशानुभवाभ्यामेव विभक्त्यन्तपदार्थयोः संसर्गानुभवः, न तु पदेन, तथा च पदाभिहितयोरर्थयोरन्वयधीः न तु विभक्त्यन्तपदार्थयोर्मध्ये एकपदार्थान्वितस्यापरपदार्थस्य पदजन्यानुभव इति ।

अन्विताभिधानमित्यस्याप्ययमर्थः—एकपदस्य विभक्त्यन्तस्यार्थेनान्वितोऽन्यपदार्थः पदेनानुभाव्यते, न तु विभक्त्यन्तपदार्थमात्रमिति । तथा चाभिहितान्वयपक्षे विभक्त्यन्तप्रत्येकपदजन्यानुभवस्य वाक्यार्थधीहेतुत्वेन 'घटमानये'त्यादौ स्वीकारेण 'तत्त्वमसी'त्यादावपि निर्विकल्पकस्य तादृशस्य प्रकृतिप्रत्ययोभयतात्पर्यविषयार्थानुभवस्यावश्यकत्वेनोक्तदोषानपायात् । घटमित्यादौ हि घटत्वकर्मत्वादिरूपोऽर्थः प्रकृतिप्रत्ययाभ्यामभिधीयते । तादृशाभिधायकत्वरूपशक्तिसम्बन्धमादाय घटादिपदस्य स्वार्थस्मारकत्वम् । अन्वितघटत्वानुभावकत्वमेव घटत्वेन घटपदस्य सम्बन्धः । अन्वितकर्मत्वानुभावकत्वमेव कर्मत्वस्य द्वितीयाविभक्तौ सम्बन्धः । कर्मत्वाद्यन्वयानुभावकत्वस्याभिहितकर्मत्वादावेव स्वीकारेण पदेष्वस्वीकारात् । यदि त्वनुभावकत्वं न स्मारकसम्बन्धस्स्वीक्रियते, तदा घटादिपदस्य घटत्वादिस्मारकत्वं नोपपद्यते । न हि स्मरणानुकूलशक्तिरेव स्मार्यस्मारकयोस्सबन्धः स्मृतिप्रयोजकः, तथा स्वीकारेऽनुभवविरोधात् । तादृशशक्त्यन्तस्य संयोगादेः सम्बन्धस्य हस्तिहस्तिपकादिनिष्ठस्य स्मृतिप्रयोजकस्य दृष्टत्वाच्च । उक्तानुभावकत्वान्यस्य उक्तशक्त्यन्यस्य सम्बन्धस्य च कल्पने गौरवम् ।

## अभिहितान्वयपक्षसमर्थनम्

ननु घटादिपदेषु घटत्वादिस्मारकत्वस्याभिहितान्वयपक्षे स्वीकारे—

अभिहितघटना यदा तदानीं स्मृतिसमबुद्धियुगं पदे विधत्तः ।
परदृशि पुनरन्विताभिधाने पदयुगलात् स्मृतियुग्ममेव पूर्वम् ॥

इति संक्षेपशारीरकोक्तिविरोधः । घटना अन्वयः, परदृशि शुद्धचितीत्यादिर्हि तदर्थः, इति चेन्न । पदपदस्य प्रत्ययान्तप्रकृतिपरत्वात् । तथा च प्रकृतिप्रत्ययाभ्यां जायमाना धीर्न स्मृतिः । घटत्वीयकर्मतामनुभवामीति शृणोमीति चानुभूयमानत्वात् । स्मृतिशक्तत्वान्यस्य स्मृतिप्रयोजकसम्बन्धस्यानुभावकत्वरूपस्यैव पदे वाच्यत्वाच्च । नापि प्रमाऽनुभवः, ज्ञातविषयकत्वात् । अतः स्मृतिसमः ।

ननु केवलेनापि प्रकृतिपदेन प्रत्ययपदेन च घटत्वादेः कर्मत्वादेरनुभव एवाभिहितान्वयपक्षे उत्पद्यते, न स्मृतिः । तथा च पदपदस्य कथं प्रत्ययान्तपरत्वमिति चेन्न ।

प्रत्ययप्रकृतिशब्दतो बहिर्विद्यतेऽभिहितसङ्गतिश्च नः।
प्रत्ययप्रकृतिशब्दयोः पुनर्नित्यमन्वितधियो निमित्तता ॥

इति **संक्षेपशारीरकोक्त्या** प्रकृतिप्रत्यययोः घटत्वाद्यन्वितानुभावकत्वस्यैवोक्तत्वात्। प्रत्ययप्रकृतिशब्दतो बहिरिति। प्रकृतिप्रत्ययशब्दार्थयोः केवलयोः यस्संसर्गः तदन्यस्य पदार्थयोः संसर्गस्येत्यर्थः। विभक्त्यन्तपदार्थप्रतियोगिकसंसर्गस्येति यावत्। अभिहितसङ्गतिरिति। पदाभिहितार्थानुभाव्यतेत्यर्थः। अन्वितधियः प्रकृत्यर्थान्वितप्रत्ययार्थानुभवस्य तद्भूतार्थाधिकरणीय**वार्तिको**क्तपक्षाणां चरमत्वात् अयमेव पक्षः प्रामाणिकः। तथाहि—

भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता ॥
अन्वयव्यतिरेकाभ्यां प्रत्ययार्थस्तु सेष्यते।
कैश्चिदन्यैस्तु धात्वर्थः सामीप्येनोपकारतः ॥
अपरैस्समुदायार्थः तत एव हि गम्यते।
पाकादौ यत्र दृष्टा सा (अस्ति) भवत्यादौ तथैव च ॥

इति वार्तिके। वाक्यार्थः वाक्यजन्यशाब्दधीमुख्यविशेष्यः। आख्यातवत्तया आख्यातसामान्यबोध्यत्वात्। प्रत्यार्थः प्रत्ययमात्रवाच्यः। एवं धात्वर्थादिकं बोध्यम्। ततः अन्वयव्यतिरेकाभ्यां पचतीत्यादिस्थले आख्यातान्त्रये भावनान्वयः। पाक इत्यादिस्थले तद्व्यतिरेकेण भावनाव्यतिरेकः। अस्तिभवत्यादौ = सिद्धकर्तृक्रियावाचकधातौ। तदुक्तं वार्तिके—

सिद्धकर्तृक्रियायोगादाख्यातप्रत्यये सति।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥

## अस्मिन्मते पक्षत्रयविवेचनम्

इति अत्र भावनामात्रं प्रत्ययवाच्यमिति प्रथमपक्ष उक्तः, तत्र भावनेति कर्मत्वादेरुपलक्षणम्। तथा च प्रत्ययमात्रं कर्मत्वादिमात्रस्य वाचकम्। वाचकत्वं च अनुभावकत्वम्। शक्तिविषयकसंस्कारेणोद्बुद्धेन सहितादमादिपदात् कर्मत्वादेः प्रथमत एव शाब्दोऽनुभवः, न तु तत्स्मरणोत्तरम्। एवं घटादिपदादपि घटत्वादेस्तथा। तदस्मिन् पक्षे केवलघटत्वादेश्शाब्दानुभवस्याननुभवपराहतत्वात् द्वितीयतृतीयपक्षावुक्तौ। तत्र द्वितीयपक्षे प्रकृतेः प्रायन्येन मुख्यत्वात् कर्मत्वाद्यन्वितघटत्वाद्यनुभावकत्वम्, धातुपदस्य प्रकृतिमात्रपरत्वात्। सोऽयं सोऽयं पञ्चकं प्रातिपदिकार्थवादः। स्वार्थद्रव्यलिङ्गसङ्ख्याकर्मत्वादिरूपस्य पञ्चकस्य प्रातिपदिकार्थस्य तन्मते स्वीकारात्। उक्तं च वैयाकरणैः—

वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः।
स्याद्वा सङ्ख्यावतोऽर्थस्य समुदायोऽभिधायकः ॥ इति।

न तु तस्या घटत्वाद्यन्वितकर्मत्वाद्यनुभावकत्वम्, तस्यास्तद्वाचकत्वाव्यवहारात्। यन्मुख्यविशेष्यकशाब्दबोधानुकूलशक्तिमत्त्वं यत्पदे तिष्ठति, तत्रैव तद्वाचकत्वव्यवहारात्। कर्मत्वादिप्रकारकघटत्व-

विशेष्यक एव शाब्दबोधे घटपदस्य शक्तत्वात्तद्वाचकत्वव्यवहारः। तार्किकादीनामपि सम्मतमेवैतत्। घटत्वादिवाचकत्वस्य घटादिपदे तैरस्वीकारात्। शक्तिज्ञानस्य तु कारणत्वं घटत्वानुभवानुकूलशक्तित्त्वेनैवेत्यन्यत्। अस्मिन् पक्षे करणत्वविशिष्टं दधि विधीयते, 'दध्नेन्द्रियकामस्य जुहुयादि'त्यत्रेति शास्त्रदीपिकाद्युक्तिः। तदत्रापि पक्षे कर्मत्वादेर्विशेष्यत्वेन बोधस्य सर्वानुभाविकस्य बाधात्तृतीयः पक्ष उक्तः। तत्र घटत्वादिविशिष्टकर्मत्वादिविषयकशाब्दानुभवे प्रकृतिपदोत्तरत्वविशिष्टप्रत्ययपदस्य कारणताग्राहकमानेन विशेषणीभूतप्रकृतेरपि कारणत्वग्रहात् घटत्वाद्यन्वितविषयकशाब्दत्वेन घटादिपदकार्यता। अमादिपदस्य तु प्रकृत्युत्तरत्वविशिष्टत्वेन रूपेण घटत्वादिविशिष्टकर्मतादिशाब्दबोध इवाम्त्वादिकेवलरूपेणान्वितकर्मत्वादिशाब्दत्वावच्छिन्ने कारणत्वम्। द्वितीयपक्षे प्रत्ययः पूर्ववृत्तितारूपेण सामीप्यसम्बन्धेन प्रकृतिनिष्ठकारणतावच्छेदकत्वात् प्रकृतेरुपकारकः। न तु कारणम्। तस्य कारणतायामुपाधित्वेन दण्डत्वादेरिव विशेषणत्वस्यास्वीकारात्। तृतीयपक्षे प्रकृतिरुत्तरवृत्तितारूपेण सामीप्यसम्बन्धेन प्रत्ययनिष्ठकारणतावच्छेदकत्वात् प्रत्ययस्योपकारिका। विशेषणत्वस्वीकारात् ज्ञायमानलिङ्गमिव कारणमपीति भावः। तस्मात् केवलस्य घटत्वादेः स्मृतिरेव नानुभवः। घटत्वाद्यन्वितकर्मत्वादेस्तु न स्मृतिः नापि प्रमानुभवः, तस्य 'घटं पश्ये'त्यादिवाक्यार्थधीपूर्वमिति ज्ञातत्वेनाज्ञातविषयकत्वघटितप्रमात्वस्याभावात्। दर्शनादेर्घटत्वादिकर्मत्वेनाज्ञातत्वेऽपि घटत्वादेः कर्मत्वादिमात्रमुक्तवाक्यं विनापि ज्ञायत एव। अतो 'घटं पश्ये'ति प्रत्ययान्तपदाभ्यां ज्ञातविषयकत्वेन स्मृतिसममनुभवद्वयं जन्यते। अन्विताभिधानपक्षे तु तयोर्घटत्वीयकर्मत्वाद्यन्वयानुभावकत्वस्वीकारात्तदेव सम्बन्धं पुरस्कृत्य घटत्वकर्मत्वादेर्दर्शनाद्यन्वितप्रत्ययार्थस्य च स्मृतिद्वयमेव ताभ्यां जन्यते। प्रकृतिप्रत्ययाभ्यां हि तादृशस्मृतिशक्तत्वं केवलघटत्वादिस्मृतिशक्तत्वमुक्तान्वयानुभावकत्वं वा सम्बन्धं पुरस्कृत्य घटत्वकर्मतात्वयोः स्मृतिद्वयम्। तेन च घटत्वीयकर्मतास्मृतिः। कर्मत्वस्याखण्डशक्तिरूपत्वे तु तस्यैव स्मृतिः। अतः प्रत्ययान्तपदघटकाभ्यां प्रत्येकपदाभ्यां प्रयुक्तत्वादन्वितकर्मतास्मृतिः प्रत्ययान्तपदजन्येति व्यवह्रियते।

नचाभिहितान्वयपक्षे अन्विताभिधानपक्षे च प्रथमत एव घटत्वाद्यन्वितकर्मत्वादिस्मृतिसम्भवात्, तया च यथामतं शाब्दधीसम्भवात् तत्पूर्वस्मृतिस्वीकारो व्यर्थ इति वाच्यम्। अन्वितकर्मतानुभावकतात्वादिरूपेण उक्तानुभावकत्वरूपशक्तिज्ञानं नोक्तकर्मत्वादिशाब्दधीहेतुः, गौरवात्; किन्तु घटत्वानुभावकतात्वकर्मत्वानुभावकतात्वादिरूपेण। तथा चानुभावकत्वरूपशक्तेः यदीयतया ग्रहणं यत्र पदे भवति, ततस्तस्यैव स्मरणादाद्यपक्षे स्मृतिद्वयव्यवधानेन द्वितीयपक्षे स्मृतित्रयव्यवधानेन उक्तशाब्दधीः। अत एव 'घटमानये'त्यादौ घटादेर्लक्षणया शाब्दधीः शक्यस्मृतिजन्याशक्यस्मृतेरेव लक्षणात्वात्। घटेन जलमाहरे'त्यादौ तु घटत्वादेरेव जलाहरणादौ भूतकरणत्वेन शाब्दधीः। अत एव 'व्रीहिभिर्यजेते'त्यादिश्रुतौ व्रीहित्वादेरेव करणत्वेन शाब्दधीः, करणीव्यक्तिपरिच्छेदद्वारा जातिगुणादेरपि करणतासम्भवात्। 'गोमयैः पचति, काष्ठैः पचती'त्यादौ परम्परयापि करणत्वव्यवहारात्। एवं च 'घट'मित्यादिपदस्य ज्ञानं घटत्वान्वितकर्मतादेरादिपक्षे शाब्दधीजनकम्, तदन्वयस्य द्वितीयपक्षे, तथापि 'घट'मिति पदं न घटत्वादिशक्तमुच्यते, 'घटे'त्यस्यैव कर्मत्वकरणत्वादिरूपघटत्वान्वितमात्रं प्रत्यनुभावकत्वात्। उद्बोधकविधया स्वजन्यां स्मृतिं द्वारीकृत्य हि पदज्ञानस्य शाब्दबोधे कारणत्वम्। तच्च यद्रूपविशिष्टपदविशेष्यकजातिरूपार्थशक्तिज्ञानत्वेन हेतुता, तद्रूपविशिष्टपदज्ञानत्वेनैव। तच्च रूपं घट इतिपदत्वं, घट इति पदविशेष्यकस्यैव

घटत्वशक्तिज्ञानस्य लाघवेन घटत्वान्वितविषयकशाब्दधीत्वावच्छिन्नं प्रति **प्रथमपक्षे**[1], घटत्वान्वित-प्रतियोगिकान्वयशाब्दधीत्वावच्छिन्नं प्रति **द्वितीयपक्षे** हेतुत्वात् । द्वितीयाविभक्त्यादिविशेष्यकस्यैव कर्मत्वादिशक्तिज्ञानस्यान्वितकर्मत्वादिशाब्दधीत्वावच्छिन्नं प्रति द्वितीयपक्षे हेतुत्वात् । अत एव 'घटत्वशक्तं घटपद'मित्यादि **मीमांसकानां** व्यवहारः । यत्पदस्य यच्छक्तत्वज्ञानत्वेन हेतुता, तच्छक्तत्वेनैव तत्पदस्य व्यवहारात् ।

वस्तुतस्तु 'अभिहितघटने'त्युक्तवाक्यस्य तत्त्वमस्यादिवाक्यमधिकृत्योक्तत्वात् तत्रैव तत्त्वम्पदयोः स्मृतिसमधीद्वयजनकत्वम् । तादृशधीद्वयस्य निर्विकल्पकत्वात्, पदार्थमात्रविषयकत्वेन पदार्थस्य च सत्यादिवाक्येन पूर्वं ज्ञातत्वात् स्मृतिसमन्वम् । न चोक्तपदाभ्यां प्रत्येकं शाब्दबोधजनने मानाभाव इति वाच्यम् ।

प्रातिपदिकान्यनतिरिक्तविषयाणि प्राह भगवान् प्रथमशाब्दितविभक्त्या ।
पाणिनिरतस्सकलतर्कसमयज्ञो वष्टि वचसोरनतिरिक्तविषयत्वम् ॥

इति **संक्षेपशारीरको**क्त्या तथा लाभात् । अत एव 'संसर्गाविषयकप्रमाऽजनकत्वे[2] सत्यपर्यायशब्दत्व'मिति अखण्डार्थकत्वलक्षणे घटः कलश इत्यादि वारणायापर्यायशब्दत्वमित्युक्तमित्यद्वैतसिद्धावुक्तम् ।

### अभिहितान्वयपक्षे प्रत्ययान्तपदजन्यानुभवः आवश्यकः

किञ्च अभिहितान्वयरक्षार्थमेव प्रत्ययान्तपदमात्रजन्यानुभवोऽवश्यं वाच्यः । अभिहितान्वये हि प्रत्ययान्तप्रकृतिपदमात्रधीजनितेन शाब्दानुभवेन जनितः प्रत्ययान्तपदद्वयार्थशाब्दानुभवः । प्रत्ययान्तपदाभ्यां स्वजन्यस्मृतिद्वारा एकस्यैव शाब्दानुभवस्य स्वीकारे जन्यजनकभावापन्नयोरनुभवयोरसम्भवः । तथा च तत्त्वमसीति वाक्यस्थपदयोरेव स्मृतिसमधीद्वयहेतुत्वात् घटत्वान्वित कर्मत्वादिबोधस्याज्ञातविषयकत्वेऽपि न क्षतिः । तस्मात् आद्यपक्षे घटत्वाद्यन्वितकर्मत्वादिशाब्दज्ञानस्य तादृशकर्मत्वाद्यन्वितशाब्दधीत्वावच्छिन्नं प्रति हेतुत्वेऽपि घटादिपदस्यापि घटत्वाद्यन्वितानुभावकत्वात् तत्त्वमस्यादिवाक्यस्थपदानां लाक्षणिकानामपि प्रत्ययान्तपदतात्पर्यविषयार्थानुभावकत्वात्, तादृशविषयशक्तत्वापत्त्या मुख्यामुख्यपदविभागानुपपत्तिर्दोष इति चेन्न । लक्ष्यार्थशाब्दधीस्थले लक्षणाया एव तादृशधीहेतुत्वात्, लक्षकपदज्ञानस्य तद्धेतुत्वे मानाभावः । तस्याश्शाब्दत्वं तु शब्दाजन्यत्वेऽपि शब्दप्रयोज्यत्वादेव । अन्यथा भट्टमतेऽपि महावाक्यार्थज्ञानस्य शाब्दत्वानुपपत्तेः । यन्मते हि लक्षणाज्ञानं कारणम्, तन्मते गङ्गादिपदविशेष्यकस्य तीरादिसम्बन्धिप्रवाहशक्तत्वज्ञानस्य तीरस्मृतिहेतुत्वात्तस्य तद्द्वारा तीरशाब्दधीहेतुत्वसम्भवः । प्रवाहशक्तत्वप्रकारकगङ्गादिपदज्ञानजन्यप्रवाहस्मृतिजन्यतीरस्मृतिरूपलक्षणाया एव तीरशाब्दधीहेतुत्वमिति प्राचीनतार्किकमीमांसकादिमते तु तादृशस्मृतौ पदज्ञानस्य हेतुत्वे न मानमस्ति । गङ्गापदज्ञानस्य तादृशज्ञानत्वेनोद्बोधकविधया कारणत्वस्य गङ्गापदशक्तिज्ञानजन्यसंस्कारजन्यस्मृतिं प्रत्येव क्लृप्तत्वेन तीरादिशाब्दधीजनकस्मृतिं प्रत्यक्लृप्तत्वात् ।

१. प्रथमपक्षः अभिहितान्वयपक्षः, द्वितीयः अन्विताभिधानपक्षः ।

२. वृत्तिस्मारितातिरिक्तेत्यादिः ।

न चैवं शक्यस्मृत्यैव शक्यार्थशाब्दबुद्धेः सम्भवात् तादृशस्मृतावेव पदज्ञानं हेतुरस्तु, न तूक्तशाब्दबुद्धाविति वाच्यम्। शक्तिग्रहकाले प्रवृत्त्यनुमितशाब्दबोधं प्रति पदज्ञानस्य हेतुतां कल्पयित्वा तस्यास्साक्षादसम्भवेन तदुपपादकतया शक्यस्मृतिद्वारकत्वस्य क्लृप्ततयोक्तस्मृतेः कारणत्वमादाय पदज्ञानकारणत्वस्येदानीं त्यागे उपजीव्यविरोधापत्तेः। शक्यार्थशाब्दधीहेतुधीविषयत्वस्यैव पदे शक्यसम्बन्धरूपत्वेन तत्र तस्याक्लृप्तत्वे सम्बन्धिज्ञानविधया पदज्ञानजन्यायाः शक्यस्मृतेरसम्भवाच्च। लक्ष्यशाब्दधीस्थले तु प्रवृत्त्यनुमितया तया स्वकारणतया न पदं कल्प्यते, किन्तु तादृशलक्षणैव। अतश्च पदं न लक्ष्यस्यानुभावकमिति न तच्छक्तम्, ततश्च लक्ष्यार्थं प्रत्यमुख्यमेवेति न मुख्यामुख्यपदविभागानुपपत्तिः। एवं च तत्त्वमस्यादिवाक्ये सर्वपदलाक्षणिकत्वेऽपि 'लाक्षणिकं नानुभावक'मिति सिद्धान्तस्य न भङ्गः, तत्त्वमादिपदानामनुभावकत्वास्वीकारात्। उक्तपदज्ञानजन्यशक्योपस्थितिमूलकलक्ष्योपस्थितेरेवानुभावकत्वस्वीकारात्।

**भाट्टमते पदाध्याहारावश्यकता; सर्वपदशून्यस्थलेऽपि शाब्दोपपत्तिश्च**

न चैवं भट्टमते पदाध्याहारनियमो न स्यात्, सर्वपदलाक्षणिकस्थले शाब्दबोधस्य पदाजन्यत्ववत् शाब्दबोधहेतुस्मृतेः पदाजन्यत्वसम्भवादिति वाच्यम्। पदप्रयोज्यस्मृतेस्तदन्यस्मृतिसहकारेण शाब्दबुद्धयनुपधायकत्वेन द्वारमित्येव श्रुते पिधेहीति पदस्यावश्यकल्प्यत्वात्। शाब्दीतिन्यायेन[1] श्रुतशब्दस्य शब्देनैवाकाङ्क्षापूरणात्। अत एव यत्र पदं किमपि न श्रूयते, तत्र न पदाध्याहारः यथा—

पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित्।

इति वाक्याधिकरणे भट्टैरुक्तम्। तच्च **न्यायरत्नाकरे** व्याख्यातम्। अश्वत्वाद्यनुपहितं श्वेतत्वं पश्यन् तस्मिन् प्रदेशे हेषाशब्देनाश्वं खुरशब्देन गमनञ्चानुमिमानोऽनुपलब्धिप्रमाणेन तत्प्रदेशे श्वेतत्वाद्यन्वययोग्यवस्त्वन्तरस्याभावं जानन् पुरुषः कल्पयति 'श्वेतत्वादीनामन्यान्वयसाकाङ्क्षाणां मिथोऽन्वयं विनानुपपन्नत्वधीसहकृतं साकाङ्क्षत्वयोग्यत्वसन्निधिसहकृतं च श्वेतत्वादीनां ज्ञानं तेषां मिथोऽन्वयधीकरण'मिति। न च घटमानयेत्यादौ पदानामेकवाक्यताज्ञानस्यार्थज्ञानसहकारितया क्लृप्ततया तदभावेऽर्थज्ञानस्य शाब्दबुध्युपधायकत्वासम्भवात् 'श्वेतोऽश्वो धावती'ति वाक्यमेव तत्र कल्प्यते, न तु तादृशस्यार्थज्ञानस्य शाब्दधीकारणत्वमिति वाच्यम्। नानावर्णघटितपदानां कल्पनापेक्षया एकस्यानुपपत्तिज्ञानस्यैव कल्पनाया लघुत्वात्। मीमांसकमते हि वर्णानां नित्यत्वात् घकारोत्तरटकारत्वं न घटपदत्वम्, किन्तु घज्ञानोत्तरज्ञेयटत्वम्। तथा च वर्णसमसङ्ख्याकज्ञानानां पदघटकत्वात् पदसमसङ्ख्याकज्ञानानां च वाक्यघटकत्वात् अनुपपत्तिज्ञानस्य चैकत्वात् तदपेक्षया तस्य लघुत्वं स्पष्टम्। सम्भवति च श्वेतत्वं तद्देशे दृश्यमानमश्वान्यासंसर्गित्वेन प्रतीयमानमश्वसंसर्गित्वं विनानुपपन्नमिति धीः। एवं धावनेऽप्यनुपपत्तिधीर्बोध्या। तस्माद्यत्र गवाश्वादिमत्त्वेन संशयिते देशे श्वेतत्वं दृश्यते, तत्रैव पदानि कल्पयित्वा तदेकवाक्यताज्ञानात् शाब्दधीः स्वीक्रियते। तदभावे तु तत्र न भवत्येव सा। भवन्त्यपि वा 'गौरश्वो वा श्वेतो धावती'ति संशयात्मिका, विप्रतिपत्तिवाक्यजन्यधीवत्।

१. शाब्दीह्याकाङ्क्षा शब्देन पूर्यत इति न्यायेन।

## श्वेतोऽश्वो धावतीति धीः नार्थापत्तिः

न चैवं 'श्वेतोऽश्वो धावती'ति धीरर्थापत्तिरेव, न शाब्दधीरिति वाच्यम्। पदज्ञानस्य पदार्थ-प्रमायामेवोपक्षीणत्वेन साकाङ्क्षयोग्यासन्नार्थज्ञानस्यैव श्रूयमाणपदस्थले वाक्यार्थशाब्दधीकरणत्वेन क्लृप्ततया शाब्दधीत्वस्यापि तस्यां सिद्धत्वात्। मीमांसकमते गुणे जात्यस्वीकारेण शाब्दत्वार्थापत्तित्वादीनामखण्डोपाधित्वाद्विषयताविशेषरूपत्वाद्वा साङ्कर्यस्यादोषत्वात्। अथवा अश्वान्यद्रव्यवृत्तित्वबाधधीसहकृता द्रव्यवृत्तित्वशाब्दधीसामग्री अश्वद्रव्यवृत्तित्वशाब्दधियं जनयति। इतरबाधधीसहकृतसामान्यसामग्र्या विशेषरूपेण ज्ञानजनकत्वात्। तथा च तादृशज्ञानं शाब्दधीरेव, नार्थापत्तिः। प्राचीनमते तु सामान्यसामग्री सामान्यरूपेणैव ज्ञानजनिका, न त्वितरबाधसहकृतापि विशेषरूपेण। विशेषरूपं विनाऽनुपपत्तिधीस्तु विशेषरूपेणैव। सर्वमते विशेषरूपेणैव धीजनिकेत्याशयेन **न्यायरत्नाकरे**ऽनुपपत्तिज्ञानानुसरणम्। तस्मादुक्तार्थज्ञानं शाब्दसामान्ये करणम्। विशेषकरणं तु पदैकवाक्यत्वज्ञानादिरूपमेकम्, तत्र कार्यतावच्छेदकं तदुत्तरशाब्दधीत्वम्; अपरमनुपपत्तिज्ञानादिकम्, तत्कार्यतावच्छेदकं तदुत्तरशाब्दधीत्वम्। अत एव **प्राभाकर**मतेऽपि घटमित्यादिपदं विना घटकर्मत्वाद्यर्थाध्याहारादपि शाब्दधीः स्वीक्रियते, परन्तु आनयेत्यादिपदधीसहकृतात्। एवं तदर्थाध्याहारादपि तदर्थशाब्दधीः घटमित्यादिपदधीसहकृतादिति बोध्यम्। उक्ताधिकरणे भाष्येऽप्युक्तम्—'अन्तरेणापि पदं शुक्लत्वादेरन्वयधीरि'ति।

## लाक्षणिकस्याननुभावकत्वनियमस्य न परित्यागः

यदि तु 'लाक्षणिकमननुभावकमि'ति **वृद्धोक्तेः** लाक्षणिकपदं स्वजन्यया स्मृत्या नानुभावकमित्यर्थकत्वात् स्वजन्यशक्यस्मृतिजन्यया लक्ष्यस्मृत्या लाक्षणिकस्यानुभावकत्वं स्वीक्रियते एव, तथापि न तस्य लक्ष्यार्थशक्तत्वम्। स्वजन्यशक्यस्मृतिमात्रद्वारकानुभावकत्वस्यैव शक्तित्वात्। अत एव मुख्यामुख्यविभागोऽपि नानुपपन्न इति चिन्त्यते, तदापि न क्षतिः।

वस्तुतस्तु सत्यत्वादिविशिष्टशक्तपदस्य सत्यत्वाद्युपलक्षितविशेष्यमात्रेऽपि शक्तिसत्त्वात्तस्य तदनुभावकत्वेऽपि न लाक्षणिकस्यानुभावकत्वापत्तिः। शक्त्यैवानुभावकत्वेन तत्र तस्य लाक्षणिकत्वाभावात्। प्रत्याख्यातं च पूर्वमस्माभिस्तस्य लाक्षणिकत्वम्। ननु गङ्गादिपदज्ञानस्य गङ्गात्वान्वितशाब्दत्वावच्छिन्नं प्रति हेतुत्वं न युक्तम्। तादृशशाब्दत्वं हि गङ्गात्वप्रकारतानिरूपितसांसर्गिकविषयताशालिशाब्दत्वम्। तथा च उक्तप्रकारताशालिशाब्दत्वेनैव तत्कार्यत्वमुचितम्। एवमन्विताभिधानपक्षे गङ्गात्वान्वितप्रतियोगिकान्वयशाब्दत्वेन गङ्गात्वप्रकारतानिरूपितप्रकारतानिरूपितसांसर्गिकविषयताशालिशाब्दत्वे पर्यवसितेन न तत्कार्यत्वं युक्तम्, किन्तु गङ्गात्वान्वितप्रकारताशालिशाब्दत्वेन, लाघवादिति चेन्न। गङ्गात्वाद्यन्वयनिष्ठसांसर्गिकविषयताया गङ्गादिपदज्ञानकार्यतावच्छेदककुक्षावप्रवेशे आकस्मिकतापत्तेः।

न च 'गङ्गा'मित्यादिपदज्ञानस्य गङ्गात्वान्वितकर्मत्वादिशाब्दधीकरणत्वमवश्यं वाच्यम्, अन्यथा 'अम् गङ्गे'त्यादिज्ञानदपि तदापत्तेः, तथा च तादृशविषयतायास्तादृशकारणनियम्यत्वेनाकस्मिकत्वाभावात् गङ्गादिपदज्ञानस्योक्तहेतुत्वे मानाभाव इति वाच्यम्। तथा सति गङ्गात्वप्रकारताशालिशाब्दत्वस्यापि तत्कार्यतावच्छेदकत्वस्य लोपापत्तेः। परामर्शत्वादेरनुमित्यादिकारण-

तावच्छेदकस्य घटकतया व्याप्तिज्ञानत्वादेरिव 'गङ्गामि'तिपदज्ञानत्वरूपशाब्दधीकारणतावच्छेदकस्य घटकतया 'गङ्गे'तिपदज्ञानत्वस्यान्यथासिद्धत्वात् । अथ स्वतन्त्रान्वयव्यतिरेकाभ्यां प्राचीनमते वह्नि-व्याप्तिज्ञानत्वादिना वह्न्यनुमिताविव गङ्गादिपदज्ञानत्वेन गङ्गात्वप्रकारकशाब्दबोधे हेतुत्वम्, तर्हि गङ्गात्वप्रकारतानिरूपितसांसर्गिकविषयताकशाब्दत्वेनैव तत्कार्यत्वं युक्तम् । तद्रूपेणैवान्वयव्यतिरेक-ज्ञानात् । 'गङ्गां गङ्गया गङ्गायै' इत्यादौ हि तादृशबोधस्यान्वये गङ्गापदस्यावश्यमन्वयः, तत्पदा-भावेऽवश्यं तादृशबोधाभावः । यत्तु गङ्गापदज्ञानत्वेन गङ्गात्वप्रकारकशाब्दत्वावच्छिन्नेऽपि न कारणत्व-मिति । तन्न । गङ्गादिपदमात्रज्ञानादपि गङ्गात्वादिस्मृतिदर्शनेन स्मार्यस्मारकसम्बन्धस्य स्मार्यानु-भावकत्वरूपस्यावश्यकत्वात् ।

न च 'गङ्गामि'त्यस्य स्वजन्यां गङ्गात्वकर्मत्वोपस्थितिं द्वारीकृत्य गङ्गात्वान्वितकर्मत्व-शाब्दधीहेतुत्वस्यास्वीकारे 'गङ्गा कर्मत्वमि'त्यादिपदजन्योपस्थतिसहितात् 'गङ्गे'तिपदज्ञानादपि शाब्दबोधापत्त्या तादृशहेतुत्वमावश्यकम्, तथा च 'गङ्गामि'त्यादेरेव शाब्दधीहेतुस्मृतिहेतुत्वसम्भवात् 'गङ्गे'त्यादेस्तन्नावश्यकम्, शाब्दबोधानुपधायकगङ्गात्वादिस्मृतिहेतुत्वं तु तादृशशाब्दधीहेतुगङ्गा-मित्यादिपदघटकत्वरूपं गङ्गात्वादेस्सम्बन्धमादायाप्युपपद्यत इति गङ्गादिपदं नानुभावकमिति वाच्यम् । उक्तघटकत्वसम्बन्धप्रकारकगङ्गादिपदविशेष्यकसंस्कारोद्बोधकविधया गङ्गादिपदज्ञानस्य गङ्गात्वादिस्मृतिहेतुत्वे गौरवात्, गङ्गात्वानुभावकत्वस्यैव उक्तघटकत्वस्थले निवेशनेन व्याप्तिज्ञान-दृष्टान्तस्योक्तत्वेन च उक्तहेतुत्वौचित्येन गङ्गादिपदस्यानुभावकत्वे सिद्धेऽनुभावकघटकत्वापेक्षया लघोरनुभावकत्वस्यैव प्रयोजकताया युक्तत्वात् । गङ्गापदस्यानुभावकत्वकल्पनापेक्षयाऽनुभावकघट-कत्वघटकानां विशेषणविशेष्यभावस्याविनिगम्यत्वेन स्मृतिं प्रति नानाहेतुत्वानां गुरुतररूपैः कल्पने महागौरवात् । अत एव गङ्गात्वानुभावकत्वविषयकसंस्कारत्वेन शाब्दधीहेतुस्मृतिहेतुत्वम्, न तु गङ्गानुभावकत्वसंस्कारत्वेन, गौरवात् । अतश्च शाब्दबोधोऽपि गङ्गात्वान्वितस्यैव कर्मत्वादेः शक्त्या, न तु गङ्गान्वितकर्मत्वादेरित्या**कृत्यधिकरणे** स्थितम्

किञ्च त्वदुक्तरीत्यापि विनिगमनाभावात् गङ्गापदोत्तराम्पदत्वेनेवाम्पदपूर्वगङ्गापदत्वेनापि ज्ञानं गङ्गात्वकर्मताशाब्दधीहेतुरिति वाच्यम् । तथा च शक्तिज्ञानतज्जन्यसंस्कारयोर्गङ्गात्वानुभावकत्व-प्रकारकगङ्गादिपदविशेष्यकत्वेनैव हेतुतास्तु, अन्वितकर्मत्वादेरिव अम्पदपूर्वत्वादेरपि उक्तहेतुता-वच्छेदकशरीरे निवेशे गौरवात् । अम्पदपूर्वगङ्गापदज्ञानत्वावच्छिन्नाया गङ्गात्वान्वितकर्मत्वादिशाब्द-बोधत्वावच्छिन्नजन्यतानिरूपितजनकताया एव गङ्गापदज्ञाने गङ्गात्वानुभावकतात्वेन भानसम्भवात् । एवं च गङ्गापदत्वेन रूपेण गङ्गात्वं प्रत्यनुभावकत्वरूपसम्बन्धग्रहात् तेन रूपेण तज्ज्ञानस्य तत्स्मृति-हेतुत्वात् तेनैव रूपेण तज्ज्ञानस्य गङ्गात्वान्वितविषयकशाब्दधीहेतुत्वम्, व्यापारजनकतावच्छेदक-त्वेन उपस्थितस्यैव फलजनकतावच्छेदकत्वौचित्यात् । तादृशहेतुत्वनिरूपितजन्यतापि गङ्गात्वान्वित-शाब्दत्वेन, न तु तदन्वितकर्मतादिशाब्दत्वेन, गङ्गात्वान्वितकरणत्वादिशाब्दासंग्रहात् । नापि गङ्गात्वशाब्दत्वेन, 'गङ्गामि'त्यादेः गङ्गात्वकर्मताशाब्दधीहेतुताया आवश्यकत्वेनोक्तत्वात् । यद्वि-शेषयोः कार्यकारणत्वं क्लृप्तं तत्सामान्ययोरपी'ति न्यायेन सामान्यतो हेतुत्वे वाच्ये विशेषरूप-कर्मतादित्यागेऽपि तदन्वयांशस्य त्यागायोगात् । अन्यथा गङ्गात्वान्वयशाब्दत्वावच्छिन्नाभावस्य

गङ्गामिति पदज्ञानत्वगङ्गयेत्यादिपदज्ञानत्वादिरूपविशेषकारणतावच्छेदकावच्छिन्नाभावकूटप्रयुक्तत्वे गौरवात् ।

### गङ्गात्वादिविषयतायाः गङ्गादिपदज्ञानकार्यतावच्छेदकत्वाभावनिरूपणम्

अत एव वह्न्यनुमितित्वावच्छिन्नाभावस्य परामर्शाभावकूटप्रयुक्तत्वे गौरवात् वह्निव्याप्तिज्ञानत्वेनैव वह्न्यनुमितिहेतुता । अपि च गङ्गात्वविषयता नोक्तकार्यतावच्छेदिका, अज्ञातार्थविषयताया एव मीमांसकमते प्रमाणप्रयुक्तत्वस्वीकारात् । प्रमाणकार्यतावच्छेदकत्वस्यैव प्रकृते प्रमाणप्रयुक्तत्वरूपत्वात् । पदार्थमात्रस्य शाब्दबोधात् पूर्वमुपस्थितत्वादज्ञातत्वाभावेन पदार्थयोरन्वयस्यैवाज्ञातत्वेन तद्विषयताया एव तादृशजन्यतावच्छेदकत्वस्यौचित्यात् । अत एव वह्न्यादिव्याप्तिज्ञानादिजन्यतापि वह्न्यादिसम्बन्धविषयकानुमितित्वादिनैव । ननु कर्मत्वादिकारकं गङ्गात्वाद्यन्वितमिति ज्ञानस्य गङ्गामित्यादिशब्दजन्यशाब्दधीपूर्वं सत्त्वे गङ्गात्वाद्यन्वयोऽपि नाज्ञात इति चेन्न । तादृशज्ञानस्योक्तधीपूर्वं सत्त्वानियमेन तादृशसत्त्वाभावकाले गङ्गादिपदज्ञानस्याज्ञातान्वयविषयताप्रयोजकत्वानपायात् कस्याञ्चित् क्रियायां 'कर्मता गङ्गात्वीया' इति ज्ञानस्योक्तशाब्दधीपूर्वं सत्त्वनियमस्त्वसम्भवी । अत एव 'स्मृतिसमबुद्धियुगं पदे विधत्त' इत्यपि तत्त्वमस्यादिवाक्यस्थलाभिप्रायेण पूर्वं व्याख्यातम् । गङ्गात्वादिपदार्थमात्रं त्ववश्यं शाब्दधीमद्भिः सर्वैः पुरुषैः पूर्वं ज्ञातमिति विशेषात् ।

### अन्वयविषयकत्वमेव शाब्दतावच्छेदकं तदेव च पदज्ञानप्रयुक्तं न तु गङ्गादिविषयकत्वम्

किञ्च मीमांसकमते जातेस्संस्थानव्यङ्ग्यतास्वीकारेण गुणकर्मणोरवयवसंयोगविशेषरूपसंस्थानाभावेन तयोर्जात्यस्वीकारेण शाब्दत्वानुमितित्वादेर्ज्ञानगतस्याखण्डस्य धर्मस्यैकस्मिन् ज्ञाने साङ्कर्ये बाधकाभावः । तथा च स्मृत्यनुमितिशाब्दबोधादिसामग्रीणां दैववशेन मेलने सम्पन्ने स्मृतित्वानुमितित्वशाब्दत्वविशिष्टमेकमेव ज्ञानं स्वीक्रियते । एवञ्च 'गङ्गये'त्यादिवाक्यजन्यशाब्दबोधे, पूर्वं अनुमित्यादिधीसामग्रीबलात् पर्वतवह्निसंयोगादिभानेऽपि 'तादृशसंयोगं शाब्दयामी'ति प्रत्ययाभावात्[1] तादृशप्रत्यये तादृशसंयोगविषयकत्वावच्छिन्नशाब्दत्वं विषयो वाच्यः । तादृशशाब्दत्वे च प्रयोजकं पदज्ञानादिकमेवेति तादृशसंयोगादिबोधकपदज्ञानाभावकाले न तादृशशाब्दत्वविशिष्टोत्पत्तिः । तथा च 'पर्वतवह्न्योस्संयोगमनुमिनोमि न तु पर्वतं वह्निं वा अनुमिनोमि, किन्तु साक्षात्करोमि स्मरामि वे'ति प्रत्ययस्येव, 'गङ्गात्वकरणत्वयोः सम्बन्धं शृणोमि, न तु गङ्गात्वं करणत्वं वा शृणोमि; किन्तु स्मरामी'ति प्रत्ययस्य सार्वलौकिकत्वात् गङ्गात्वादिविषयतामात्रस्य शाब्दत्वानवच्छेदकत्वात् । शाब्दत्वानवच्छेदकविषयतायाश्च पदज्ञानादिप्रयुक्तत्वे मानाभावः । अत एव अनुवादवाक्ये वाक्यार्थभूतान्वये स्मरामीति प्रत्ययस्यैव स्वीकारेण तद्विषयतायाश्शाब्दत्वानवच्छेदकत्वेन पदज्ञानाप्रयुक्तत्वात् स्मृतिसामग्रीप्रयुक्तत्वमेव । न च अनुवादवाक्यस्थलेऽपि पदज्ञानादिकारणबलादन्वयविषयतावच्छिन्नशाब्दत्वावच्छिन्नोत्पत्तिः स्यादिति वाच्यम् । उक्तशाब्दत्वावच्छिन्नं प्रति अन्वयाज्ञानस्य हेतुत्वात् । तस्मादन्वयघटितमेव पदशक्यम् ।

---

१. भिन्ने विषये अनुमितिसामग्र्याः प्राबल्यात् न तत्र शाब्दत्वं, कुत इत्यत आह—तादृशेति । तथा च तादृशसंयोगविषयकत्वावच्छिन्नशाब्दत्वाभावात् न तादृशप्रत्ययः ।

अत एवोक्तं **शाबरभाष्ये**—"प्रातिपदिकादुच्चरन्ती[1] द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहे"ति। विशेषको व्यावर्तकः। उपलक्षणविधया व्यावर्तकत्वलाभार्थमितिशब्दः। तथा च प्रातिपदिकार्थोपलक्षितो योऽन्वयः तद्विशिष्टवाचिका सेत्यर्थः। अत एव च **निरुक्तकारै**रुक्तम्—'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति। घटत्वकर्मत्वाद्यंशे प्रकृतिप्रत्यययोरनुवादकत्वादन्वयमात्रांशे पर्यवसितं सहवाचकत्वमिति भावः। **न्यायरत्नमालादौ** तु [2]घटत्वादिकमेव घटादिपदस्य शक्यम्, न त्वन्वयांशस्य तत्र निवेशः। तथा च घटत्वादिमात्रविषयकानुभवो घटादिपदधीजन्यः। न चैवं—स्मृतिरपि तादृशी वाच्या, पदज्ञानस्य साक्षादनुभवाहेतुत्वात्, तथा चानुभवविरोधः, न हि पदज्ञानोत्तरं तादृशधीद्वयं क्रमिकमनुभूयत इति वाच्यम्। तादृशस्मृतौ मानाभावात्, साक्षादेव तस्य तद्धेतुत्वात्—इति। तदिदं पूर्वोपदर्शित**वार्तिकोक्त**पक्षत्रयस्याद्यपक्षावलम्बनम्। तन्न युक्तम्, उक्तभाष्यादिविरोधात्। पदतदर्थयोः सम्बन्धाग्रहेऽपि पदज्ञानादर्थानुभवापत्तेः। अथ यथा **पञ्चपाद्या**मुक्तम्—व्याप्तिसंस्कारसहिता पक्षसम्बद्धधूमादिधीरनुमितिहेतुः, न त्वन्तरा व्याप्तिस्मृतिः कल्प्यते, गौरवादिति, तथा शक्तिसंस्कारसहिता पदधीः पदार्थानुभवहेतुः, न त्वन्तराऽर्थस्मृतिः कल्प्यते, तथा च नोक्तदोष इति चेन्न। तथाप्युक्तयुक्तिभिरन्वयघटितार्थस्यैव पदशक्यत्वात्।

## अभिहितान्वयपक्षस्य प्रामाणिकत्वसमर्थनम्

इदं तु बोध्यम्। अभिहितान्वयमतमेव युक्तम्, 'घटकर्मतां शृणोमीति' अनुभवस्यानपलापात्।

यत्तु समानार्थकपदत्रयस्थले अन्विताभिधानमते पदेषु प्रत्येकमर्थे तदन्वये च शक्तिकल्पनात् षट् शक्तयः कल्प्याः, अभिहितान्वयमते तु पदेषु प्रत्येकमेकैका शक्तिरर्थे च एकैव वाक्यार्थानुभावकशक्तिरिति शक्तिचतुष्टयं ममेति **न्यायरत्नमालोक्तम्**, तन्न। मतद्वयेऽप्युक्तस्थले शक्तिद्वयस्यैव कल्पनात् तृणारणिमणिष्विव वह्निशक्तेः। अभिहितान्वयमते पदत्रयेऽप्यर्थानुभावकशक्तेरेकस्या एव युक्तत्वात्। अन्विताभिधानमतेऽप्यन्वितार्थानुभवरूपकार्यस्यैक्येनार्थेऽन्वये च पृथक्छक्तेरयुक्तत्वात्। अर्थानुभवे अभिहितान्वयमत इवार्थस्मृतौ अन्वितार्थानुभवशक्तेरन्विताभिधानमतेऽप्यावश्यकत्वात्। न हि फलाशक्तो व्यापारः केनापि स्वीक्रियते।

न चैवमुक्तरीत्या साक्षादेवान्वितानुभवहेतुत्वस्य पदज्ञाने सम्भवात् स्मृत्यस्वीकारेणैकैव शक्तिरन्विताभिधानमत इति लाघवमुक्तस्थल इति वाच्यम्। पदधीवाक्यार्थानुभवयोर्मध्ये अर्थज्ञानस्यानुभविकस्यापलापासम्भवात्। अर्थस्मृतिशक्तिस्तु पदज्ञानेऽभिहितान्वयमतेऽपि, क्लृप्तैव परन्तु अर्थानुभवे तादृशस्मृतेर्नोपयोग इति **पञ्चपादिका**दृष्टान्तेनोक्तम्। तस्मादन्वयघटितार्थस्यैव पदशक्यत्वमिति सिद्धम्।

अथ पदार्थद्वयान्वयविषयतावच्छिन्नशाब्दत्वं 'गङ्गा'मित्यादिविभक्त्यन्तपदज्ञानस्यैव जन्यतावच्छेदकम्, 'गङ्गे'त्यादिपदज्ञानजन्यता तु अन्वयविषयतामात्रावच्छिन्नशाब्दत्वेनैवास्ताम्, न तु गङ्गात्वान्वयविषयतावच्छिन्नशाब्दत्वेन, गौरवात्, अन्वयविषयतात्वं च सांसर्गिकविषयतात्वमिति चेन्न। पदसामान्यज्ञानरूपसामान्यकारणस्योक्तशाब्दत्वावच्छिन्नहेतुत्वेऽपि गङ्गापदज्ञानरूपविशेष-

---

१. शा० भा० १-१-२५। २. अर्थतोऽनुवादोऽयम्।

कारणस्य गङ्गात्वविषयतावच्छिन्नसंसर्गतावच्छिन्नशाब्दत्वावच्छिन्नं तादृशसंसर्गतानिरूपितमुख्यविषयतावच्छिन्नशाब्दत्वावच्छिन्नं वा प्रत्येव हेतुत्वौचित्यात्। घटत्वाद्यन्वयविषयतावच्छिन्नशाब्दत्वस्य गङ्गापदज्ञानाप्रयुक्तत्वेनान्वयविषयतामात्रस्य तत्कार्यतावच्छेदके प्रवेशनस्यायुक्तत्वात्। अत एव गङ्गात्वान्वयविषयतामात्रस्य प्रत्यक्षादिसाधारणस्य न तत्कार्यतावच्छेदकत्वम्, किन्तु तदवच्छिन्नशाब्दत्वस्य कर्मतायां 'गङ्गात्वं शाब्दयामी'ति प्रत्ययात् गङ्गात्वविषयतानिरूपितसंसर्गतानिरूपितकर्मताविषयत्वादिकमेव शाब्दत्वावच्छेदकम्, अतस्तादृशेत्याद्युक्तम्। पदज्ञानतज्जन्यस्मृत्योर्नाशेऽपि गङ्गात्वकर्मताविशिष्टं दर्शनमिति महावाक्यार्थबोधस्य उत्पत्तेस्तत्र व्यभिचारात् मुख्येत्युक्तम्। तादृशबोधीयगङ्गात्वकर्मताविषया शाब्दत्वावच्छेदिका। अवान्तरवाक्यार्थबोधे जातेऽपि भ्रमत्वशङ्कया तादृशबोधस्य तादृशकर्मतायामज्ञाननाशकत्वेन तदज्ञानसत्त्वेन तादृशविषयताप्रयोजकसामग्रीसत्त्वात्।

एतेन गङ्गात्वीयकर्मताविषयतावच्छिन्नशाब्दत्ववति बोधे तत्समानविषयकाज्ञानस्य हेतुत्वात् अवान्तरबोधे जाते जायमाने महावाक्यार्थबोधे तादृशशाब्दत्वाभावेनैव तद्वारणात् मुख्येति व्यर्थमित्यपास्तम्। तादृशविशिष्टविषयत्वाघटकविषयतानिरूपकत्वशून्येति मुख्यपदार्थः। गङ्गात्वविषयतायामपि तादृशविशेषणं देयम्। अन्यथा 'गङ्गामि'ति वाक्यजबोधोत्तरं 'शोभनगङ्गामि'ति वाक्यजे शोभनगङ्गात्वकर्मताबोधेऽनुपपत्तेः। न च तादृशहेतुत्वकल्पनं व्यर्थम्, तादृशविषयताशालिशाब्दत्वावच्छिन्नाभावस्तु 'गङ्गा'मित्यादिपदज्ञानाभावकूटादेव, न तु 'गङ्गे'तिपदज्ञानाभावात्, अम्गङ्गेति पदज्ञानकाले तथा वक्तुमशक्यत्वादिति वाच्यम्। तथापि गङ्गापदज्ञानसामान्याभावकालीनस्योक्तशाब्दत्वावच्छिन्नाभावाधिकरणत्वस्य गङ्गापदज्ञानस्य सामान्याभावेनैव प्रयुक्तस्य वाच्यत्वात् अधिकरणताविशेषाणामेव कारणाभावप्रयुक्तत्वात्। अत एव काष्ठस्य दाहाभाववत्त्वं मणिप्रयुक्तम्, न तु जलस्येति धीः। अस्तु वा विभक्त्यन्तगङ्गापदज्ञानत्वेनैव तादृशशाब्दबोधहेतुत्वम्। अथ गङ्गात्वप्रकारतैव तादृशकार्यतावच्छेदके निवेश्यताम्, न तु तद्विषयता; व्यापकरूपत्वेनान्यथासिद्धत्वादिति चेन्न। 'गङ्गास्ती'तिवाक्याद्गङ्गात्वविशेष्यकशाब्दोत्पत्तेः तदसंग्रहापत्तेः। यद्यपि गङ्गात्वत्वादेरुपस्थापकपदाभावात् धर्मितावच्छेदकत्वेनाभानात् निर्धर्मितावच्छेकशाब्दास्वीकाराच्च गङ्गात्वं शुद्धं न विशेष्यम्, तथाप्येकत्वस्य सामानाधिकरण्यसम्बन्धेन गङ्गात्वे विशेषणत्वेनास्तित्वांशे धर्मितावच्छेदकत्वसम्भवः। विशिष्टवैशिष्ट्यबुद्धौ विशेष्यतावच्छेदकप्रकारकधियो हेतुत्वास्वीकारेण प्रथमत एव एकमस्तीति शाब्दधीसम्भवात्।

न चाभिहितान्वयमते नामार्थक्रियान्वयबोधे नामार्थविभक्त्यर्थयोरवान्तरबोधस्य हेतुत्वात्तं विना तदुत्पत्तिर्न सम्भवतीति वाच्यम्। 'श्वेतोऽश्वो धावती'त्याकारकवाक्यजन्यक्रियाबोधानुरोधेन क्रियान्वयबोधमात्रे क्रियान्वय्यर्थज्ञानमात्रस्यैव हेतुत्वेनावान्तरशाब्दबोधस्याहेतुत्वात्। अर्थज्ञानमात्रं तु स्मृतिरनुभवो वा शब्दादन्यतो वा जायत इत्युक्तम्। न च 'गङ्गा'मित्यादौ कर्मत्वादेः जातिवदखण्डत्वेन विशेष्यत्वासम्भव इति वाच्यम्। शक्तिविशेषरूपकर्मत्वादीनामखण्डत्वेऽपि सामानाधिकरण्यसम्बन्धेन सङ्ख्याविशिष्टरूपेण विशेष्यत्वसम्भवात्। परमार्थतस्तु शाब्दबोधे एकपदार्थांशे अपरपदार्थविशेष्यताया किञ्चिद्धर्मावच्छिन्नत्वनियमेऽपि शाब्दबोधीयविशेष्यतामात्रस्य नोक्तनियमः। आढ्यादिपदजन्ये धनवदादिबोधे धनत्वाद्यंशे विशेष्यतायां व्यभिचारात्। तथा चानन्वितयोस्तयोर्गङ्गात्व-

निष्ठानवच्छिन्नविषयतैकत्वनिष्ठैकत्वत्वावच्छिन्नविषयताशालिसमूहालम्बनशाब्दधीसम्भवेन क्रियान्वये तज्जन्यत्वमपि सम्भवत्येव ।

**यत्तु** एकत्वत्वजातेरेव शक्यतया तादृशशाब्दबोधे भानसम्भवेन सङ्ख्याया न विशेष्यता, किन्तु तन्निष्ठजातौ निर्विकल्पकविषयतेति; **तत्तुच्छम्** । भावनायां सङ्ख्याविशिष्टकरणत्वादिबोधे विशेषणीभूतसङ्ख्याया एव द्रव्यपरिच्छेदद्वारा करणत्वेनान्वयस्य आनुभविकत्वात् । सङ्ख्याया एव शक्यत्वेनोक्तजातिमात्रस्याबोधात् । अथ नीलादिवदेकत्वादिकमेकमखण्डमेव शक्यमित्युच्येत, तथापि प्रकृते न कोऽपि दोषः ।

**परे तु** सङ्ख्यादिविशिष्टं कारकं नामार्थे विशेष्यम्, कारकविभक्तेरभावे सङ्ख्यैव विशेष्येत्याहुः । **तदसत्** । प्रधानवाचकनाम्नो मन्त्रघटकतया प्रकृतक्रियान्विततयोपयोगार्थं गुणीभूतसङ्ख्यावाचकस्य बहुवचनस्यैकत्वलक्षणादिकल्पनाया 'अदितिः पाशान् प्रमुमोक्त्वेता'निति मन्त्रादौ **पाशाधिकरणोक्ताया** विरोधापत्तेः[1] । न च प्रथमबोधे सङ्ख्याया विशेष्यत्वेऽपि पार्ष्ठिकबोधे सङ्ख्याया गुणत्वेन भानान्नोक्तविरोध इति वाच्यम् । नामार्थसङ्ख्ययोरन्वयबोधस्य जातत्वेनानाकाङ्क्षितोक्तबोधस्य व्यर्थत्वात् । अरुणैकहायन्योस्तु परिच्छेदकाकाङ्क्षासत्त्वादेवोक्तबोधस्वीकारात् ।

**अन्ये तु** गङ्गादिव्यक्तिरुक्तस्थले सङ्ख्याविशेष्यतया भाति, अस्तित्वाश्रयत्वं तु व्यक्तौ विशेषणं न तु विशेष्यम्, भावनाया एव कारकेषु विशेष्यत्वात् । अत एवोक्तम्—

जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति ।
नित्यत्वात् लक्षणीयाया व्यक्तेस्ते हि विशेषणे ।। इति ।

अत एव घटमानयेत्यादौ कर्मत्वादौ व्यक्तेरेवान्वयः । तथा च गङ्गापदं नोक्तबोधे कारणम्, लाक्षणिकत्वात्[2] । उक्तबोधीयव्यक्तिविषयताया गङ्गात्वान्वयविषयतानिरूपितत्वेऽपि शाब्दत्वानवच्छेदकत्वेन गङ्गापदधीकार्यतानवच्छेदकत्वात्, व्यक्तिगङ्गात्वयोरन्वयस्य पदार्थघटकत्वेन उक्तविषयतायाश्शाब्दत्वानवच्छेदकत्वात्, पदार्थयोरन्वयविषयताया एव शाब्दत्वावच्छेदकत्वादित्याहुः ।

**तदप्यसत्** । तावतापि नाम्नो मुख्यार्थबोधकत्वानुपपादनात्, जातेरेव शक्यताया आकृत्यधिकरणे स्थितत्वात्, व्यक्तिपरिच्छेदद्वारा जातेरेव करणत्वाद्यन्वयधीसम्भवाच्च । प्रकृते जातेरेवान्वयसम्भवे तत्त्यागस्यायुक्तत्वात्, विद्यमानव्यक्त्यवच्छेदेनास्तित्वस्य कालसम्बन्धरूपस्य नष्टव्यक्त्यवच्छेदेन नास्तित्वस्य च जातौ विवक्षासम्भवाच्च । एवमन्विताभिधानपक्षेऽपि गङ्गात्वान्वितविषयतानिरूपितान्वयविषयतानिरूपितविषयतावच्छिन्नशाब्दत्वेनैव गङ्गादिपदधीजन्यता ।

**एतेन** उक्तपक्षे साकाङ्क्षयोग्यासन्नपदान्तरार्थान्वितघटत्वादिकं घटादिपदशक्यम् । तथा च 'घटेन जलमानये'त्यादौ आनयनकरणीभूतं घटत्वं घटपदेनानुभाव्यते, घटत्वकरणकमानयनमानयतिना इति वाक्यार्थभेदात् वाक्यभेदः स्यात् । न च घटपदेनापि घटत्वकरणकमानयनमनुभाव्यत

१. गुणे त्वन्याय्यकल्पनेति न्यायमाश्रित्य तत्र संख्यावाचके लक्षणोक्ता । तच्च नोपपद्यते संख्याया विशेष्यत्वे । तथाचोक्तमन्त्रस्य नोत्कर्षः अपि तु प्रकरण एव विकल्पेन विनियोगः पू० मी० ९-३-४ ।

२. लाक्षणिकस्य चाननुभावकत्वात् ।

इति वाच्यम्। तदा घटपदस्य नानार्थत्वापत्तिः, आनयनस्येव घटत्वस्यापि तदनुभाव्यत्वेन शक्यभेदादित्यादि**शास्त्रदीपिका**द्युक्तिर[1]**पास्ता**। घटत्वान्विते घटपदस्य, करणत्वान्विते तृतीयाविभक्तेः, अन्वितानयने आनयतेः, कार्यत्वान्विते लौकिकलिङादिपदस्य, अन्वितकार्ये वैदिकलोडादिपदस्यानुभावकतया तेषामेकवाक्यतया 'घटत्वकरणकानयनं कार्यमि'त्यनुभवोत्पत्तेः।

### मतद्वयेपि एकवाक्यार्थबोधे आक्षेपः समाधिश्च

अथैवमप्यभिहितान्वयपक्षे घटत्वान्वितस्यान्वितकरणत्वस्य च पृथग्भानेन घटत्वान्वितं करणत्वमित्येव ज्ञानस्याकारो न स्यात्। अन्विताभिधानपक्षे च घटत्वान्वितस्य करणत्वान्वितस्य पृथग्भानेन घटत्वान्वितकरणत्वान्वितमानयनमित्येवाकारो न स्यादिति चेन्न। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूत' इति **निरुक्त**कारानुशासनेनोक्तपृथग्भानाभावेनोक्ताकारनियमस्थितेः। उक्तपृथग्भाने हि सति प्रकृतिप्रत्यययोरेकवाचकत्वरूपस्य सहवाचकत्वस्य भङ्गापत्तिः। 'घटत्वान्वितं करणत्वमि'ति बोधे पदाभ्यां जनिते तु पदयोस्सहवाचकत्वमुपपद्यते। एकस्यैवान्वयस्य भानादुभयकार्यतावच्छेदकविशिष्टस्योत्पत्तिः। एवं द्वितीयपक्षेऽपि घटत्वान्वितविषयतानिरूपितान्वयविषयताया एव करणत्वादि विषयतानिरूपितान्वयविषयतात्वेन पदद्वयकार्यतावच्छेदकविशिष्टस्योत्पत्तिनिर्वाहः। यद्यप्याद्यपक्षे प्रकृतिप्रत्यययोः घटत्वकर्मत्वाद्यंशे न सहवाचकत्वं तथापि न क्षतिः, तदंशविषयतायाः स्मृतित्वावच्छेदकत्वेन शाब्दत्वानवच्छेदकत्वात्, तदंशे वाचकत्वस्यैवाभावेनान्वितांश एव सहवाचकत्वसत्त्वात्। एवं द्वितीयपक्षेऽप्यन्वयांश एव सहवाचकत्वम्। पक्षद्वयेऽपि तदन्यांशो वाच्योपाधिः, न तु वाच्यः। दण्डत्वादिरिव कारणोपाधिः, न तु कारणम्। अत एव घटत्वान्वितयोः शक्ययोर्भेदात् शक्तिभेदापत्तिरित्यपास्तम्। ज्ञाने पदानां शक्तिः शक्यत्वादिति न्यायेन शाब्दज्ञानस्यैव पदशक्यत्वाच्च। अत एव गोत्वोपहिता धानकर्मविशेषा एव धेनुपदशक्याः न तु गोत्वमिति **प्राभाकराः**।

ननु अन्विताभिधानपक्षे 'गङ्गात्वकर्मतां शृणोमी'ति प्रत्ययानुपपत्तिः, गङ्गात्वान्वितान्वितविषयताया एव शाब्दत्वावच्छेदकत्वादिति चेन्न। तत्पक्षे 'गङ्गात्वकर्मतां स्मरामी'ति प्रत्ययस्यैव स्वीकारेण गङ्गात्वकर्मताविषयतायाः शाब्दत्वानवच्छेदकत्वेन स्मृतित्वावच्छेदकत्वस्यैव स्वीकारात्। तत्पक्षे क्रियाकारकान्वयरूपवाक्यार्थस्यैव शाब्दत्वात्। अन्यथा 'घटत्वीया कर्मते'ति शाब्दधीस्वीकारे शाब्दधीमात्रस्य कार्यत्वविषयत्वनियमस्य तत्पक्षे स्वीकृतस्य भङ्गापत्तेः। एवं च तस्याः ज्ञातनिष्ठविषयतात्वादपि प्रमाणाप्रयुक्तत्वेन गङ्गादिपदज्ञानकार्यतावच्छेदकत्वमिति दिक्।

### वेदान्तिमतनिष्कर्षः

वेदान्तदर्शने तु गङ्गादिपदघटितवाक्यतात्पर्यविषयविषयकशाब्दत्वेनैवोक्तकार्यत्वस्वीकारेणेयं गङ्गेति वाक्यात् अखण्डार्थकशाब्दबुद्ध्युपपत्तिः। अत एव तत्त्वमस्यादिवाक्येऽपि नानुपपत्तिः। तदयं निष्कर्षः—अभिहितान्वयपक्षे अन्विताभिधानपक्षे च लाक्षणिकसर्वपदयुक्तवाक्यस्थले पदानामनुभावकत्वाभावेऽपि पदजन्यशक्योपस्थितिजन्यलक्ष्योपस्थितेरेव वाक्यार्थानुभावकत्वम्। न चैवम्—

प्रत्ययप्रकृतिशब्दयोः पुनर्नित्यमन्वितधियो निमित्तता।

---

१. वाक्याधिकरणे अन्विताभिधानवादखण्डने द्रष्टव्यम्।

इति **संक्षपशारीरकौ**क्तिविरोध इति वाच्यम्। तया हि प्रकृतिप्रत्यययोरन्वितविषयकशाब्दधीप्रयोजकत्वमेवोक्तम्। प्रकृतिप्रत्यययोरेकैकमात्रं न स्वार्थमनुभावयति। अत एवैकैकमात्राभिहितार्थानुभवो न प्रकृत्यर्थान्वितप्रत्ययार्था(न्वय)नुभवहेतुः, किन्त्वलाक्षणिकप्रकृतिप्रत्ययाभ्यां मिलिताभ्यां स्वार्थस्मृतिद्वारा स्वार्थयोरन्वयानुभवो जन्यते। लाक्षणिकसर्वपदस्थलेऽपि वाक्यार्थबोधः परम्परया प्रकृतिप्रत्ययाभ्यां प्रयुक्त इत्यत्रैव तस्यास्तात्पर्यात्। अत एव—

प्रत्ययप्रकृतिशब्दतो बहिर्युज्यतेऽभिहितसङ्गतिश्च नः।

इति पूर्वार्धे तथोक्तम्। अथ वा लाक्षणिकस्थले मुख्यार्थान्वये तात्पर्याभावज्ञानद्वारा लाक्षणिकार्थे तात्पर्यज्ञानाय मुख्यार्थान्वयानुभवस्य तात्पर्याविषयस्यापि स्वीकारात् उक्त**संक्षेपशारीरक**ोक्तिः तमादायैव सङ्गमनीया। उक्तं च तत्त्वमस्यादिवाक्यस्थले **संक्षेपशारीरक** एव—

सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डार्थधीः
सर्वैरेव ततः पदैरयमिह ज्ञेयः क्रमस्सूरिभिः॥ इति।

सामानाधिकरण्यं पदयोस्समभिव्याहारधीः। अन्वयः—तात्पर्यविषयवाक्यार्थधीप्रयोजकः। विशेषणेतरतया—विशेषणविशेष्यताशालिनी वाक्यार्थधीः अन्वय इत्यनुषज्यते। विरोधोद्भवः उक्तज्ञाने तात्पर्याभावधीद्वारा लक्ष्यार्थघटितवाक्यार्थज्ञाने तात्पर्यधीरन्वय इत्यनुषज्यते। एवं च अभिहितार्थानुभवस्यापि सर्वपदलाक्षणिकतास्थले वाक्यार्थानुभवहेतुता वक्तुं शक्यते। अत एवा**द्वैतसिद्धौ** तत्त्वमस्यादिवाक्यस्थले पदाभिहितपदार्थानां वाक्यार्थानुभावकत्वमित्युक्तम्। लाक्षणिकस्थले मुख्यार्थान्वयानुभवस्यानावश्यकत्वे तु तदसङ्गतम्, पदार्थस्य पदाभिहितत्वाभावात्। पदजन्यानुभवविषयत्वं हि पदाभिहितत्वम्, न तु पदजन्यधीविषयत्वम्। प्रकृत्यर्थमात्रस्यापि पदाभिहितत्वापत्त्या 'प्रत्ययप्रकृतिशब्दतो बहि'रित्यादि**संक्षेपशारीरक**विरोधात्।

## भट्टमतन्यायमतयोर्भेदनिरूपणम्

ननु तार्किकादिमतेऽपि प्रकृत्यर्थान्वितप्रत्ययार्थशाब्दानुभवस्य क्रियाकारकान्वयबोधे हेतुत्वम्, गङ्गादिपदज्ञानस्य गङ्गादिपदार्थान्वयविषयताकशाब्दसामान्यहेतुत्वं च स्वीक्रियते; तथा च अभिहितान्वयवादात्तन्मतस्याविशेष इति चेन्न। तार्किकादिमते गङ्गादिपदज्ञानस्य स्वप्रयोज्यगङ्गादिपदार्थधीद्वारा तदर्थविषयकशाब्दानुभवहेतुत्वस्वीकारेण स्मृतिरूपोक्तधीद्वारा प्रकृत्यर्थविशेषितप्रत्ययार्थशाब्दधीरूपोक्तानुभवस्य तादृशानुभवद्वारा क्रियाकारकान्वयधीरूपोक्तानुभवस्य च गङ्गादिपदज्ञानात् उत्पत्तिस्वीकारात्। अभिहितान्वयवादे च स्मृतिरूपोक्तार्थधीद्वारा उक्तप्रत्ययार्थशाब्दानुभव एव हेतुत्वस्योक्तपदज्ञाने स्वीकारेण क्रियाकारकान्वयानुभवस्योक्तपदज्ञानादुत्पत्त्यस्वीकारात्, गङ्गापदार्थान्वयविषयतायाश्चोक्तपदज्ञानजन्यतावच्छेदकत्वस्वीकाराच्च द्वयोर्मतयोर्विशेषात्। न ह्यभिहितान्वयवादे क्रियाकारकन्वयानुभवस्य पदज्ञानकरणकत्वं पदज्ञानकरणकानुभवस्यैव तत्करणतास्वीकारात्। पदज्ञानस्य हि स्वप्रयोज्यधीद्वारा स्वार्थशाब्दधीर्न कार्या, प्रयोज्यत्वस्य स्मृतावान्तरवाक्यार्थधीबोधे

**ननु तर्हि वेदान्तवाक्येभ्य एव पदार्थोपस्थितौ वाक्यार्थबोधे च सति तस्य स्वत एव प्रामाण्यात्तेनाज्ञानतत्कार्यनिवृत्त्युपपत्तौ किं विचारेणेति चेत्सत्यम्; वेदान्ता यद्यपि स्वतः प्रामाण्यान्निर्विकल्पकमात्मसाक्षात्कारं जनयन्ति, तथापि तस्य मन्दबुद्धीनां वादिविप्रतिपत्तिजसंशयप्रतिबन्धेन अज्ञाननाशकत्वासामर्थ्यात्, विचारेण तु संशयनिवृत्तौ निरपवादमज्ञाननिवृत्तिरिति संशयबीजभूतवादिविप्रतिपत्तिनिरासार्थं विचार आरभ्यते। तत्र त्वम्पदार्थे प्रथमं विप्रतिपत्तयः प्रदर्श्यन्ते। तत्पदार्थस्य शास्त्रतात्पर्यविषयतया**

---

चानुगतस्यैकस्याभावात्। स्मृतौ हि कार्यत्वं स्मृतित्वेन, शाब्दबोधे च तत्त्वेन। तथा च स्वजन्यस्मृतिद्वाराऽवान्तरवाक्यार्थबोधे पदज्ञानस्य हेतुत्वम्, तद्द्वारा महावाक्यार्थबोधे तु हेतुत्वान्तरम्। तथा च द्वितीये मानाभावात् महावाक्यार्थधीरवान्तरवाक्यार्थज्ञानेनैव जन्यते, न तु पदज्ञानेनेति भट्टमते स्वीक्रियते। न वा तार्किकादिमते अन्वयविषयताघटितरूपेण पदज्ञानस्य कार्यतायां मानमस्ति, ज्ञातार्थविषयताया अपि प्रमाणप्रयुक्तत्वस्वीकारेणोपदर्शितमानासम्भवात्। न हि तन्मते प्रमाणानामज्ञातज्ञापकत्वनियमः।

किञ्च तार्किकादिमते प्रकृत्यर्थविशिष्टप्रत्ययार्थशाब्दबोधोत्तरमेव क्रियाकारकान्वयानुभव इति नियमो न स्वीक्रियते, 'खले कपोत'न्यायेन युगपदेव तादृशानुभवस्यापि स्वीकारात्। वाक्यार्थकर्मके कुलकादौ चावान्तरवाक्यार्थानुभवपूर्वकमहावाक्यार्थधीनियमस्वीकारेऽपि महावाक्यार्थानुभवसामान्यस्य तादृशनियमास्वीकारात्, अभिहितान्वयमते च तादृशनियमस्वीकारात्, स्फुट एवोक्तमतयोर्विशेषः। अन्विताभिधानवादात्तु तार्किकादिमते स्फुटतरो विशेषः। तार्किकैः प्रकृत्यर्थविशिष्टप्रत्ययार्थमात्रस्य शाब्दानुभवस्वीकारात् अन्विताभिधानमते तदस्वीकारादित्यास्तां विस्तरः।

ननु प्रमात्वेन भासमानज्ञानादेवाज्ञाननिवृत्तिरिति **वाक्यजज्ञानीयप्रमात्वभानार्थं** शास्त्रमपेक्ष्यताम् तत्राह—**तस्येति**। स्वत एव—साक्षिमात्रभास्यादेव। **प्रामाण्यात्**—प्रमात्वात्। तेनाज्ञाननिवृत्त्युपपत्तावित्यत्र हेतुरयम्। विचारेण—विचारशास्त्रेण। श्रीकृष्णकृपाकटाक्षैः नितरां शुद्धचित्तस्य न विचारशास्त्रापेक्षेत्याशयेनाह—**सत्यमिति**। तथाप्यतथाभूतान्मन्दाधिकारिणः प्रति विचारशास्त्रमावश्यकमित्याशयेनाह—**वेदान्ता यद्यपीति**। स्वतः प्रामाण्यात्—साक्षिमात्रभास्यं प्रमात्वमुत्सर्गतः प्रापय्य। जनयन्ति—उत्पादयन्ति। संशयप्रतिबन्धेन—तात्पर्यसंशयरूपदोषनियतप्रमात्वावरणप्रयुक्तेनापवादकेन प्रमात्वसंशयरूपेणाज्ञाननिवृत्तिविरोधिना। निरपवादम्—उत्सर्गसिद्धस्वतः प्रमात्वस्यापवादकोक्तसंशयशून्यम्। इदं च निवृत्तिक्रियाविशेषणम्। तथा **चौत्सर्गिकस्वतःप्रमात्वस्य** दोषसमवधाननियतेन प्रमात्वावरणेनापवादात् प्रमात्वसंशयोदयेनानिश्चितप्रमात्वकस्य साक्षात्कारस्य नाविद्यानिवर्तकत्वम्, विचारे सति तु निश्चितप्रमात्वकसाक्षात्कारस्याविद्यानिवर्त्तकतेति भावः। **त्वम्पदार्थे**—भाववद्भिः मोक्षभागित्वेनाभिमते। **शास्त्रतात्पर्येति**। जीवस्वरूपस्य शुद्धस्यापि सुषुप्त्यादिसिद्धत्वेन [illegible]त्, ब्रह्मस्वरूपस्याज्ञातस्यैव सत्यादिवाक्येन शुद्धरूपेण ज्ञापयित्वा महावाक्येन जीवस्वरूपानु—[illegible]दन ब्रह्मस्वरूपस्य तदभेदेन विधानात्, सत्यादिवाक्यविशिष्टमहावाक्यस्य विधायकत्वान्महावाक्यस्यैव द्वारीभूतशुद्धजीवोपस्थितिहेतुत्वम्पदवत्त्वेन शुद्धजीवानुवादकत्वात्, शुद्धब्रह्मण्येव शास्त्र-

**अभ्यर्हितत्वेऽपि त्वम्पदार्थस्य शास्त्रफलमोक्षभागितया ततोऽप्यभ्यर्हितत्वात्। तत्र देहाकारेण परिणतानि चत्वारि भूतान्येव त्वम्पदार्थ इति चार्वाकाः। चक्षुरादीनि प्रत्येकमित्यपरे। मिलितानीत्यन्ये। मन इत्येके। प्राण इत्यपरे। क्षणिकं विज्ञानमिति सुगताः।**

---

तात्पर्यमिति ज्ञायते। महावाक्यार्थनिश्चयात्पूर्वं तत्त्वम्पदलक्ष्यस्वरूपयोर्भेदनिश्चयात् (भेदनिश्चयसत्त्वात्। अथवा जीवब्रह्मस्वरूपयोरेकत्वेन शास्त्रतात्पर्यविषयत्वनिश्चयस्य श्रवणफलस्य काले उक्तविषयत्वरूपाभ्यर्हितत्वनिश्चयेऽपि तत्पूर्वं ) तत्त्वम्पदार्थयोर्जीवस्वरूपस्यैव ब्रह्मस्वरूपाभिन्नतया ज्ञायमानस्य मोक्षभागित्वेन स्वीकारात् जीवोऽभ्यर्हितः। शास्त्रतात्पर्यविषयापेक्षया हि शास्त्राधीनप्रतिपत्तिफलं मुख्यम्, तदर्थं तस्य ज्ञेयत्वात्। फलापेक्षयापि फलकामो मुख्यः, तस्य तद्गतसाक्षात्काररूपभोगजनकत्वादिति भावः। **अभ्यर्हितत्वादिति**। प्रथमश्लोके[1] आचार्यैः पूजितत्वादित्यर्थः। तेन आचार्यैः मोक्षभागित्वेन प्रथमतः जीवस्वरूपस्य विवेचितत्वात् तत्रास्माभिरपि प्रथमं विप्रतिपत्तिरुच्यते। [2]उच्यत इत्यर्थलाभात् आद्यश्लोकस्य प्राथम्येऽपि हेतुलाभः।

## चार्वाकबौद्धमतोपपादनम्

**देहेत्यादि**। यद्यपि भूतानि जडस्वभावानि, तथाऽपि मदिराकारपरिणतस्यान्नस्य मादकत्ववत् देहाकारपरिणतस्य भूतचतुष्टयस्य ज्ञातृत्वम्, 'स्थूलोऽहं जानामि' इति प्रत्ययादिति भावः। चार्वाकैकदेशिनां मतान्याह—**चक्षुरादीनीति**। तत्र मृते देहे ज्ञातृत्वाभावात् पश्यामीत्यादिप्रतीतेश्चेन्द्रियमात्मा। तत्रापि चक्षुषः सर्वापेक्षया अधिकसुखहेतुत्वेन श्रेष्ठत्वात् तदेव ज्ञातृ। तदभावे श्रोत्रमेव, अन्यापेक्षयाऽधिकसुखहेतुत्वात्। तयोरभावे त्वगिन्द्रियम्, तद्धि यद्यपि रात्रिन्दिवं बहुधा विषयग्राहि चक्षुश्श्रोत्रापेक्षया निकृष्टम्, तथापि रसनापेक्षया बहुधा विषयग्राहित्वेन श्रेष्ठम्। तदभावे रसनम्, प्रतिदिनमावश्यककार्यत्वेन घ्राणापेक्षया श्रेष्ठत्वात्। तदभावे घ्राणम्। **मिलितानीति**। यावन्ति इन्द्रियाणि एकशरीरे मरणपर्यन्तं तिष्ठन्ति, तावन्तीत्यर्थः। 'पश्यामी'त्यादिप्रत्ययेभ्यः कस्यचिच्चक्षुषः अधिकसुखम् अधिकविषयग्राहित्वमिव कस्यचिच्छ्रोत्रादिनैव तदुभयमिति विनिगमकाभावात् कस्य केनेन्द्रियेण तदुभयमिति परेण ज्ञातुमशक्यत्वाच्च। अन्यानीन्द्रियाणि आलोचनात्मकनिर्विकल्पकसाधनत्वात् नात्मा। **मनस्तु** सविकल्पकसाधनत्वादन्येन्द्रियप्रवृत्तिमूलसङ्कल्पादिमत्त्वात् श्वेतद्वीपवासिनामन्येन्द्रियाभावेऽपि सत्त्वाच्च आत्मेति **केचित्**। सर्वदा प्राणस्यैकरूपत्वादमनस्कानामपि योग्यादीनां प्राणसत्त्वात् **प्राण** एवात्मेत्यन्ये। **क्षणिकमिति**। यद्यपि सत्यं सर्वं क्षणिकम्, तथापि ज्ञानमेवात्मा, ज्ञानभिन्ने ज्ञातरि मानाभावात्। तत्राहमिति आलयविज्ञानं पूर्वपूर्वेणैव उत्तरोत्तरं जायते। इन्द्रियादिजन्यं प्रवृत्तिविज्ञानं षड्विधम्। न च क्षणिकस्यात्मनः कालान्तरभाविभोगार्थं प्रवृत्त्यनुपपत्तिरिति वाच्यम्। क्षणिकत्वभावनापरिपाकं विना स्थिरत्वगोचरानादिदृढवासनानुच्छेदात्। उक्तपरिपाके तु [3]मोक्षप्राप्त्या प्रवृत्त्यभाव इष्ट एवेति वादिनः चत्वारः सौगताः।

तत्र सर्वाधमः **सौत्रान्तिकः**। स हि मन्यते घटपटादयो बहिर्विषयाः सर्वे नित्यानुमेयाः, घटाद्याकारे हि ज्ञाने घटादीनां प्रतिबिम्बमुपलभ्य, 'तत्प्रतिबिम्बं बिम्बपूर्वकं प्रतिबिम्बत्वात् मुखादिप्रति-

---

१. न भूमिर्न तोयं·······शिवः केवलोऽहमिति श्लोके। २. विप्रतिपत्तिरुच्यते इत्यर्थलाभादिति।

३. शुद्धविज्ञानधारारूपेश्वरप्रवेशरूपमोक्षप्राप्त्या।

**शून्यमिति माध्यमिकाः। देहेन्द्रियातिरिक्तो देहपरिमाण इति दिगम्बराः।**

**बिम्बवदि**'त्यनुमीयते। ततः श्रेष्ठो **वैभाषिकः**। स हि घटादीनां प्रत्यक्षं नापलपति। तयोर्मते भ्रमस्थले शुक्त्यादौ रजताद्यभावेऽपि ज्ञानरूपमेव रजतादिकं जायते, तत्रैव चेदन्त्वादेः संसर्गाध्यासः। ततोऽपि श्रेष्ठो **योगाचारः**। स हि मन्यते घटादिकं सर्वं ज्ञानमेव, बहिरर्थस्य परमाणुसमूहरूपत्वे स्थौल्यादिबुद्ध्यनुपपत्तिः, अवयवित्वे च [1]आवृतत्वानावृतत्वसकम्पत्वाकम्पत्वनीलत्वानीलत्वादिविरुद्धधर्माध्यासस्य भेदकस्य बाधकत्वम्, अतस्तस्य दुर्वचत्वात् तादात्म्यजातीयसम्बन्धस्य घटो द्रव्यमित्यादौ तु क्लृप्तत्वात् तादात्म्यान्यस्य ज्ञानविषययोः सम्बन्धस्य कल्पने गौरवाच्च घटादिकं ज्ञानात्मकमि[2]त्याकारविशेषः ज्ञानस्य निरंशत्वात् विरुद्धनानाकारत्वानां संशयादिस्थलेऽनुपपत्तेर्न वास्तवः। एवं सर्वबौद्धमते प्रमाणप्रमितिप्रमातारोऽपि ज्ञानस्य कल्पिताकाराः। प्रमेयप्रकाशनव्यवहारोपधायकत्वविशिष्टज्ञानरूपा प्रमितिः—प्रमितिव्यवहारानुकूला शक्तिः प्रमाणम्, तदाश्रयः प्रमाता, पूर्वपूर्वज्ञानादेवोत्तरोत्तरज्ञानमुत्पद्यते, ज्ञानं च सर्वं स्वविषयकम्, न तु ज्ञानान्तरविषयः अनवस्थाद्यापत्तेः। विज्ञानवादिमते घटादेः ज्ञानाकारस्यैव विषयत्वेन ज्ञानानां क्षणिकानां भिन्नकालीनत्वेन विषयविषयिभावसम्बन्धाभावात्, त्रयाणामेषां तु विशुद्धक्षणिकविज्ञानभावनया तद्धारारूपे[3]शप्रवेशो मोक्षः। उक्तभावनारूपविज्ञानस्य जीवसन्तानस्थस्य यस्मिन् विशुद्धविज्ञाने हेतुत्वम्, तस्येश्वरसन्तानस्थेन तत्कालीनेन क्षणिकेन विज्ञानेन लाघवादैक्यस्वीकारेण मुक्तजीवेश्वरसन्तानयोरैक्यसम्पत्त्या [4]जीवस्येश्वरसन्तानप्रवेश उच्यते। संसारिनानाजीवस्थानां तु विज्ञानानां नैकसन्तानप्रविष्टतापत्तिः, मिथो विलक्षणत्वात्। तत्सन्तानानां भिन्नकालगतसुषुप्तिपूर्वापरावधिकत्वेन तद्गतज्ञानानां कार्यकारणभावानापन्नत्वाच्च। सुषुप्तिर्हि विज्ञानसन्तानानां पूर्वापरावधिः। उक्तं हि **पञ्चपाद्यां** बौद्धमतविवेचने—'सुषुप्तौ विज्ञानलेशस्याप्यभावात् अकस्मादेव जागरेऽहमिति धीदर्शना'दिति। **बौद्धाधिकारादौ** तु सुषुप्तावप्यालयविज्ञानं प्रवृत्तिविज्ञानरहितं पक्षान्तरमालम्ब्य स्वीकृतम्। ततोऽपि श्रेष्ठो **माध्यमिकः**। स हि मन्यते विज्ञानरूपमपि सर्वं मिथ्यैव। क्षणिकभावनया शून्यभावनया च आत्महानरूपो मोक्ष इति। तदेतत् विज्ञानरूपात्ममिथ्यात्वमतमेव शून्यमात्मेत्यनेनोक्तम्। न हि शून्यं नाम किञ्चित्तत्त्वं तेनोच्यते। अत एव तत्त्वस्य कस्यचित्त्वयानङ्गीकारात् तत्त्वज्ञानं विना सर्वबाधासम्भवेन सर्वमिथ्यात्वासिद्धिरिति तन्मतं दूषितं **भामत्याम्**। सर्वं मिथ्येति **माध्यमिकमतमिति खण्डकारै**रप्युक्तम्।

## दिगम्बरमतम्

**दिगम्बरा** आर्हताः, अर्हन्नाम नित्यसिद्धः पुरुषः, तत्कृतशास्त्रानुयायित्वात्। ते च मन्यन्ते देहसमानपरिमाणः आत्मा, महान्तं देहं त्यक्त्वा न्यूनदेहग्रहणे आत्मनो ह्रासेऽपि न नाशः। परिमाण-

१. अवयवी उत्पत्तेः पूर्वमावृतः पश्चात् स्पष्टः एवं पूर्वं निष्कम्पः पश्चात् सकम्पः।

२.—मिथ्याभूताकारविशेषः ज्ञानस्य निरंशत्वात्।

३—तद्धारेति। शुद्धविज्ञानधारेत्यर्थः।

४. जीवस्येश्वरसन्तानप्रवेश उच्यते। नहि जीवसन्ताने जायमानस्य विशुद्धविज्ञानस्य विशुद्धविज्ञानस्वरूपमोक्षस्येश्वरसन्ताने जायमानज्ञानाद्भेदे मानमस्ति—पाठः।

**कर्ता भोक्ता जडो विभुरिति वैशेषिकतार्किकप्रभाकराः। जडो बोधात्मक इति भाट्टाः। भोक्तैव केवलबोधात्मक इति साङ्ख्याः पतञ्जलिश्च।**

---

भेदेऽपि द्रव्यस्यानशात्। आत्मा सन्ततोर्ध्वगतिस्वभावोपि कर्मपाशेनाऽपि बद्धत्वात्न संसारकाले ऊर्ध्वं गच्छति। कर्मणामत्यन्तोच्छेदे तु सततोर्ध्वगतिं लभते, सैव मोक्षः; अलौकिकाकाशगमनं वेति।

**आस्तिकदर्शनानि**

नास्तिकानां षड्दर्शनीमुक्त्वा आस्तिकानां तामाह—**कर्तेत्यादि। वैशेषिकादयस्तु** आत्मनः सुखदुःखयोगात् तद्धेतुभूतं विहितनिषिद्धक्रियाकर्तृत्वमावश्यकम्। स च ज्ञानस्वरूपभिन्नत्वाज्जडः। जानामीति, ज्ञानाश्रयत्वेन स भाति, न ज्ञानरूपत्वेन। सर्वमूर्तसंयोगित्वरूपविभुत्वमपि तस्यावश्यकम्। अणुपरिमाणत्वे हि देहव्याप्त्यभावेन युगपन्नानावयवावच्छिन्नसुखादिसमवायित्वं न स्यात्, प्रत्यक्षविषयता च न स्यात्, महत्त्वस्य तस्यां प्रयोजकत्वात्। मध्यमपरिमाणत्वे च सावयवत्वेन जन्यत्वापत्तेर्जन्यभावत्वेन विनाशित्वापत्त्या परममहत्परिमाणवत्त्वस्वीकारेण विभुत्वोपपत्तिः। देहादिभिन्नत्वेन आत्मज्ञानपरिपाकात् आत्यन्तिककर्मोच्छेदेनात्यन्तिकदुःखोच्छेदरूपमोक्ष इत्याहुः। **तादृशमेव भाट्टमतम्।** अत्यन्तदुःखोच्छेदः नित्यसुखसाक्षात्कारो वा मोक्षः, मोक्षकाले हि चक्षुरादिविच्छेदेऽपि मनसो विच्छेदास्वीकारात् कर्मरूपस्य प्रतिबन्धस्योच्छेदेन नित्यसुखविशिष्टतयाऽऽत्मानं मनसैव साक्षात्करोति। आत्मनस्तु अंशद्वयमस्ति। चिदंशेन द्रष्टृत्वम्, 'सोऽहमि'तिप्रत्यभिज्ञाविषयत्वादिकं च, अचिदंशेन ज्ञानसुखादिरूपपरिणामित्वं च, 'मामहं जानामी'ति ज्ञेयत्वं च ज्ञानरूपातोन्द्रियव्यापारेण विषयनिष्ठज्ञाततारूपसंवित्कर्तृत्वं चेति विशेषः। **भोक्तैवेति।** न तु कर्ता, बुद्धिरेव कर्त्री, तदविवेकादात्मनः कर्तृत्वव्यवहारः, सर्वत्रैव हि भ्रमस्थले विषययोः असंसर्गाग्रहात् संसर्गव्यवहारः, धर्मिधर्मज्ञानयोर्भेदाज्ञानाच्च ज्ञानैकत्वव्यवहारः, न तु विशिष्टं ज्ञानमस्ति, अन्यथाख्यात्यनभ्युपगमात् असंसर्गाग्रहश्च दोषात्। एवं चासंसर्गग्रहेण न कस्यापि बाध इति लाघवम्। अत एव भ्रमस्थले प्राभाकरोऽप्येवमाहेति भावः। **केवलबोधात्मक इति।** असङ्गस्वप्रकाशकूटस्थचिदात्मकः। अत एव भोक्ता। सुखदुःखाभ्यां विद्यमानाभ्यां बुद्धिधर्माभ्यामविवेकोपलक्षितानुभवस्वरूपं हि भोक्तृत्वम्, तच्च सत्यमेवेति भोक्तैवात्मा। तस्य बुद्धिविवेकज्ञानेन संप्रज्ञातासंप्रज्ञातसमाधिपरिपाकपर्यन्तेनाविवेकनिवृत्त्या दुःखात्यन्तोच्छेदो मोक्ष इति विशेषः। सर्वास्तिकमतसारमतमाह—**अविद्ययेत्यादि। वैशेषिको** हि आस्तिकानामधमः, शब्दप्रामाण्यानभ्युपगमेन वेदप्रामाण्यानङ्गीकारात्। वेदप्रामाण्यस्वीकर्तॄणां मध्येऽपि **तार्किको** न्यूनः, 'असङ्गो ह्ययं पुरुष' इत्यादिशुद्धजीवप्रतिपादकश्रुतीनां तत्त्वमसीत्यादिश्रुतीनां च अभेदभावनापरत्वाभ्युपगमात्, 'इदं सर्वं यदयमात्मा, सर्वं खल्विदं ब्रह्म, ब्रह्मैवेदं सर्वमि'त्यादिश्रुतीनां च ब्रह्मकर्तृकं विश्वमित्यर्थकत्वाभ्युपगमात्। **प्रभाकरभट्टयोस्तु** वेदान्तदर्शने विद्वेषाभावः—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन॥

इति तर्कचरणीयभट्टकारिकया वेदान्तदर्शनपुरस्कारात्। "आत्मा निष्प्रपञ्चं ब्रह्मैव, तथापि कर्मप्रसङ्गिने न तथा वाच्यम्। उक्तं हि श्रीकृष्णेन भगवता—

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।

**अविद्यया कर्तृत्वादिभाक् परमार्थतो निर्धर्मकः परमानन्दबोधरूप एवेत्यौपनिषदाः । एवं सामान्यतोऽहम्प्रत्ययसिद्धे चिदात्मनि वादिविप्रतिपत्तिभिः सन्दिग्धे अहम्प्रत्ययस्यालम्बनविशेषनिर्णयायाह भगवानाचार्यः—**

**न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः ।**
**अनैकान्तिकत्वात् सुषुप्त्येकसिद्धस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥**

**अस्यार्थः—अहम्–अहम्प्रत्ययालम्बनम् । एकः—अद्वितीयः । अवशिष्टः—सर्वद्वैतबाधेऽप्यबाधितः । शिवः-परमानन्दबोधरूपः । तस्यैव मङ्गलरूपत्वात् । केवलो निर्धर्मकः ।**

---

इति **प्रभाकर**ग्रन्थगतोक्तेः । तथापि भट्टैः जडबोधात्मक आत्मेति स्वग्रन्थस्थवाक्येन अविद्योपहितचिद्रूप आत्मेति सूचनात्, **प्रभाकरेण** स्वप्रकाशजन्यबोधाश्रयोऽचिद्रूप आत्मेति स्वग्रन्थे कथनात्, प्रपञ्चज्ञानेऽन्यथाख्यातित्वमात्रस्याप्यकथनाच्च प्राभाकरो भट्टापेक्षया न्यूनः । **भाट्टा** अपि साङ्ख्यपातञ्जलापक्षेया न्यूनाः, साङ्ख्यादिवत्स्वग्रन्थे आत्मन असङ्गत्वाद्यनुक्तेः । **साङ्ख्यास्तु** पातञ्जलापेक्षया न्यूनाः, 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति सूत्रेण हि पतञ्जलिः ईश्वरं स्वीकृतवान् न तथा साङ्ख्या इत्याशयेन **वैशेषिकादि**निर्देशोत्तरं तार्किकादीन् निर्दिष्टवानाचार्यः । निर्धर्मकत्वे हेतुमाह–**अविद्यया कर्तृत्वादिभागिति** । अविद्यात्मककर्तृत्वादिमानित्यर्थः । सन्दिग्धे—'शरीरादिस्वभावो न वे'ति विशेषतः सन्दिग्धे । **अहमित्यादि** । अहम्प्रत्ययस्य यदालम्बनविशेषो देहाद्यात्मकतया भासमानं स्वरूपं तस्य भूम्यादिभिन्नतया निर्णयायेत्यर्थः । अहम्प्रत्ययालम्बनं—देहादितादात्म्येन भासमानं स्वरूपम् । **अद्वितीय इति** । 'एके मुख्यान्यकेवला' इति कोशादावेकशब्दस्य नानार्थकत्वोक्तावपि प्रकृते पदान्तरेणैवात्मनः प्रपञ्चापेक्षया मुख्यत्वान्यत्वयोर्लाभाद् केवलार्थत्वमेव । केवलत्वं च इतरसम्बन्धशून्यत्वम् । तत्रैकेन घटेन जलमाहरेत्यादौ घटत्वादिसंसृष्टस्य करणत्वादौ तात्पर्यावधारणात् एकपदार्थसङ्कोचकल्पनया घटान्तररूपेतरसम्बन्धशून्यत्वबोधः । प्रकृते तु शुद्धस्वरूप एव तात्पर्यावधारणेन सङ्कोचकाभावात् आत्मभिन्नरूपद्वितीयमात्रशून्यत्वं बुध्यत इति भावः । अवशिष्टपदमुपयुक्तसंसृष्टमनुपयुक्तं बोधयति । प्रकृते च आत्मा ज्ञानेनोच्छेद्यतया नोपयुक्तः उच्छेद्यप्रपञ्चसंसृष्टश्चेति स एव तत्पदार्थ इत्याशयेनाह—**अवशिष्ट इति** । ननु शिवपदमिष्टार्थकम्, कथं परमानन्दार्थकमुक्तं उच्छेद्यप्रपञ्चसंसृष्टश्चेति स एव तत्पदार्थ इत्याशयेनाह—**अवशिष्ट इति** । ननु शिवपदमिष्टार्थकम्, कथं परमानन्दार्थकमुक्तं तत्राह—**तस्येति** । **मङ्गलेति** । इष्टेत्यर्थः । ननु एकपदं द्वितीयाभावसंसृष्टपरं न वा ? आद्ये द्वितीयसामान्याभावसंसर्गव्याघातः, संसर्गस्यैव द्वितीयत्वात्, सत्यकामादिश्रुतीनामपि सत्यकामत्वादिसंसृष्टपरत्वापत्तेश्च । द्वितीये एकपदवैयर्थ्यम् सद्वितीयत्वभ्रमानिवर्तकत्वात् तत्राह—**केवलो निर्धर्मक इति** । धर्माभावोपलक्षित इत्यर्थः । तथा च पूर्वोक्तरीत्या उपलक्षणतया द्वैताभावसम्बन्धज्ञानस्यापि सद्वितीयत्वभ्रमनिवर्तकत्वसम्भवात् एकपदं न संसृष्टपरम्[1] । अत एव 'एकमेवाद्वितीयमि'ति श्रुतौ एकपदेन सजातीयस्य अद्वितीयपदेन विजातीयस्य एवकारेण धर्मस्य ब्रह्मणि निषेधः, एवं च एकपदेन सजातीयविजातीययोः केवलपदेन धर्माणां

---

१. न द्वितीयाभावसंसृष्टपरम् ।

**तेनाद्वितीयः सर्वप्रमाणाबाध्यः परमानन्दबोध एवाहम्प्रत्ययालम्बनमित्यौपनिषदपक्ष एव श्रेयानित्यर्थः । एतदुपपादनायेतरवादिमतानि निराकरिष्यन् प्रथमं देहात्मवादं निराकरोति—न भूमिर्न तोयं न तेजो न वायुर्न खमिति। अत्राहमिति सर्वत्र प्रत्येकं नञा सम्बध्यते । या भूमिः सोऽहं न भवामि योऽहं सा भूमिर्न भवतीति च परस्परतादात्म्याभावो द्रष्टव्यः । यद्यपि वादिना प्रत्येकं भूम्यादिरात्मत्वेन नाभ्युपेयते संघातस्यैव तदभ्युपगमात्, तथापि तन्मते अवयव्यनङ्गीकारात्पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन च संयोगादिसम्बन्धानभ्युपगमात् संहन्तुरभावाच्च संघातो नोपपद्यत इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवादो निराकृतः । यद्यपि भूतचतुष्टयतत्त्ववादिनो मते आवरणाभावत्वेनाभिमतस्य स्थिरस्यासत आकाशस्य देहानुपादानत्वम्, तथापि सिद्धान्ते तस्य भावत्व—**

---

निषेध इति न तयोः पौनरुक्त्यमिति भावः । औपनिषदपक्षः—श्रीमच्छङ्कराचार्यमतम् । श्रेयान्—सर्वमतेभ्य उत्कृष्टम् । आत्मनि देहादेः देहादौ चात्मनः तादात्म्याध्यासेन देह एवात्मेति भ्रमोदयात् तन्निवृत्त्यर्थं परस्परतादात्म्याभावः प्रकृते विवक्षित इत्याह—**या भूमिरित्यादि** । संघातस्य—मिलितभूतचतुष्टयस्य । **तथापीत्यादि** । तथापि तन्मते सङ्घातो नोपपद्यत इत्यभिप्रेत्य प्रत्येकभूतनिराकरणेन भौतिकदेहात्मवादो निराकृत इति योजना । सङ्घातोऽवयवी वा ? संयुक्तचतुर्विधपरमाणवो वा ? क्षणिकचतुर्विधपरमाणुपुञ्जस्वरूपो वा ? । तत्राद्यस्यानुपपत्तौ हेतुमाह—**अवयव्यनङ्गीकारादिति** । कपालद्वयमेव घटः, कपालिकाद्वयमेव कपालम्, एवं त्रुटिपर्यन्तं विचारेण त्रुटेरन्यत् किमपि न प्रामाणिकम्, प्रामाणिकत्वे वा अवयवानामवयविनश्च द्विगुणगुरुत्वाद्युपलब्धिः स्यादित्यादियुक्तिभ्यः अवयव्यस्वीकारादित्यर्थः । द्वितीयस्यानुपपत्तौ हेतुमाह—**पञ्चमेत्यादि** । चत्वार्येव भूतात्मकानि तत्त्वानि । न च संयुक्तासंयुक्तस्वरूप वैलक्षण्याय संयोगादिकमवश्यं वक्तव्यमिति कथं चत्वार्येव तत्त्वानीति वाच्यम् । चतुर्विधपरमाणूनां क्षणिकत्वात् संयुक्तत्वेन पराभ्युपगतस्वरूपस्यासंयुक्तत्वेन पराभ्युपगतस्वरूपाद्भेदेन वैलक्षण्योपपत्त्या संयोगादिस्वीकारस्य व्यर्थत्वात् । घट इति उपलभ्यमानास्त्रुटय एव हि घटस्वरूपाः । तदेवंवादिन**श्चार्वाकस्य** मते पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन संयोगादिकं न स्वीक्रियत इति भावः । नन्वेवं अहमित्याकारकधीविषयत्रुटिसङ्घात एवात्मास्तु इत्याशङ्क्योक्तत्रिविधसङ्घातानामनुपपत्तौ हेतुमाह—**संहन्तुरभावादिति** । शरीरोत्पत्तेः पूर्वमात्मनोऽभावात् न चेतनस्य व्यापाराच्छरीरोत्पत्तिः । न च प्रलयास्वीकारेणानादिमातापितृपरम्पराव्यापारेण शरीररूपसङ्घातोत्पत्तिरिति वाच्यम् । शरीरवैचित्र्ये हि नियामकमदृष्टं दृष्टं वा वाच्यम् ? । नाद्यः । प्रत्यक्षमात्रप्रमाणस्वीकारात् परलोकस्वीकारप्रसङ्गाच्च । नान्त्यः । एकजातीयेन मातापितृव्यापारेण उत्पन्नयोः यमलयोः वैलक्षण्यस्य अदृष्टं विनानुपपत्तेः, कारणान्तरस्यापि प्रत्यक्षप्रमाणेनासिद्धत्वाच्च । तथा च क्षणिकत्रुटिसमुदायस्य दृष्टादृष्टद्वारा सङ्घातयितृरूपो यस्संहन्ता तदभावात् सङ्घातस्योत्पत्त्यसम्भव इति भावः । निराकरणेन—आत्मत्वनिराकरणेन । **भौतिकेति**—भूतसमुदायरूपेत्यर्थः । **निराकृत इति** । समुदायस्य प्रत्येकानतिरेकादिति शेषः ।

**यद्यपीत्यादि** । चार्वाकादिनास्तिकानां मते भूतचतुष्टयमेव तत्त्वं तदपि क्षणिकम्, 'यत्सत् तत् क्षणिकमि'ति नियमात् । कथमुक्तनियम इति चेदुच्यते । यत्र यस्य सामर्थ्यं तस्य तत्साधने विलम्बो

**देहोपादानत्वाद्यङ्गीकारात् तत्राप्यात्मत्वप्रसक्त्या तन्निराकृतम्। अथवा न वायुरित्यन्तमेव देहात्मवादस्य निराकरणम्, न खमिति तु शून्यवादस्य, खशब्दस्य शून्यवाचकत्वात्। नेन्द्रियमिति प्रत्येकमिन्द्रियाणामात्मत्वनिरासः। न तेषां समूह इति मिलितानां भूतानां देहावयव्याकारेण परिणतानामिन्द्रियाणां च मिलितानां निरासः। पूर्वं संघातमनभ्युपगम्य प्रत्येकं भूतानि निराकृतानि, अधुना तु संघातमभ्युपगम्यापि निराकृतानीति भेदः। भूतनिराकरणेन भौतिकयोः प्राणमनसोर्निरासः। मनोनिराकरणेन मनोवृत्तेः क्षणिकविज्ञानस्य देहातिरिक्तस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य च निरासः। सिद्धान्ते ज्ञानेच्छासुखादीनामन्तःकरणाश्रयत्वाभ्युपगमात्। कामसङ्कल्पादीन्प्रकृत्य**

---

नास्ति, विलम्बोऽस्ति चेत् सामर्थ्यमेव न स्यात्, तथा च यावत्सु कार्येषु सामर्थ्यं यस्य, तावतां द्वितीयक्षणवृत्तीनां प्रथमक्षणस्थितेन तेन सिद्धिरिति द्वितीयक्षणवृत्तीनां तेन न कस्यचित् तृतीयादिक्षणवृत्तिनस्सिद्धिः, अतो द्वितीयादिक्षणे सत्त्वं वस्तुनो नास्ति, कार्यकारित्वमेव हि वस्तुनः सत्त्वम्, तस्मात् सत्यं क्षणिकम्। यत्तु अलीकं तस्य कार्यकारित्वाभावेन सत्त्वाभावात् नोक्तरीत्या क्षणिकत्वमिति स्थिरत्वमिति प्रमाणागोचरत्वेऽपि विकल्पधीविषयत्वेन व्यवहारः तस्य, तथा च आवरणाभावरूपाकाशस्याभावत्वेनालीकत्वादसत्त्वस्थिरत्वावश्यकत्वात् देहं प्रत्युपादानत्वाभाव इति भावः।

सिद्धान्ते—औपनिषदमते। **आत्मत्वप्रसक्त्येति।** अवयविखण्डनयुक्तिभिराकाशादिस्वरूप एव देहो वाच्यः, तथा च आकाशादिप्रत्येकस्यापि आत्मत्वप्रसक्तिरिति भावः। तन्निराकृतम्—आकाशस्यात्मत्वं निराकृतम्। प्रसिद्धमतनिराकरणप्रस्तावे आधुनिकपक्षनिराकरणस्यासङ्गतत्वादाह—**अथ वेति।** शून्यवादस्य—क्षणिकज्ञानरूपात्मा मिथ्येति वादस्य। खशब्दस्य शून्यवाचकत्वात्—शून्यपदसमानार्थकत्वात्। तथा च खं नात्मेत्यस्य मिथ्याभूतविज्ञानं नात्मेत्यर्थः, खपदस्य सत्यत्वशून्यात्मकमिथ्याविज्ञानबोधकत्वात्। **प्रत्येकमिति।** इन्द्रियपदस्येन्द्रियत्वरूपेण सर्वेन्द्रियबोधकत्वात् सर्वेन्द्रियेषु प्रत्येकमात्मत्वनिराकरणमिति भावः। मिलितानां भूतानां—संहतानां पार्थिवादिपरमाणूनामात्मत्वेन **चार्वाकस्वीकृतानाम्। परिणतानामिति।** यद्यपि चार्वाकेणावयवी न स्वीक्रियते तथाप्यन्यैस्तत्स्वीकारात्तत्रापि प्रसक्तमात्मत्वं निरस्तम्, अवयवावयविनोस्तादात्म्यमते अवयविनः अवयवसमूहात्मकत्वात् समूहपदेन निर्देश इति भावः। अनभ्युपगम्य—उपपद्यते इत्यस्वीकृत्य। उपगम्य—उपपद्यत इति स्वीकृत्य। **भूतनिराकरणेनेति।** न तेषां समूह इति वाक्येनेत्यर्थः। **प्राणमनसोरिति।** अपिशब्दश्शेषः। **मनोनिराकरणेनेत्यादि।** मनोनिराकरणेन क्षणिकविज्ञानस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य च निरास इत्यन्वयः। ननु मनोनिरासेन कुतस्तयोर्निरासः, 'विज्ञानमेव सर्वमि'ति योगाचारमते मनस एवास्वीकारात्तार्किकादिमते कर्तृत्वादिविशिष्टस्य मनोभिन्नत्वादित्याशङ्क्य तयोर्हेतुगर्भं विशेषणमाह **मनोवृत्तेरिति।** मनःपरिणामत्वेनास्मत्सम्मतस्येत्यर्थः। देहातिरिक्तस्य—देहमन आदिभिन्नत्वेन तार्किकादिस्वीकृतस्यापि। तथा च तेषां समूह इत्यस्य भौतिकत्वेनास्मत्सम्मत इत्यर्थकत्वात् योगाचारादिस्वीकृतक्षणिकविज्ञानस्य तार्किकादिस्वीकृतकर्तृत्वादिविशिष्टस्य च मन्मते मनःपरिणामत्वात् भौतिकत्वेनास्मत्सम्मतत्वात् तयोरात्मत्वनिरास इति भावः। कर्तृत्वादिविशिष्टस्य भौतिकत्वमस्मत्सम्मतं श्रुतिसिद्धत्वादित्याह—**ज्ञानेत्यादि।**

**'एतत्सर्वं मन एवे'ति श्रुतेः। तेन देहमारभ्य केवलभोक्तृपर्यन्तानां तत्तद्वाद्यभ्युपगतानामनात्मत्वं प्रतिज्ञातं भवति। तत्र हेतुमाह—अनैकान्तिकत्वादिति। व्यभिचारित्वात् विनाशित्वादिति यावत्। आत्मनो देशकालापरिच्छिन्नत्वात्तत्परिच्छिन्नानां घटादिवदनात्मत्वात् ध्वंसप्रागभावयोश्च ग्रहीतुमशक्यत्वात् अनात्मनां जडत्वात् स्वभिन्नस्य**

---

**मन एवेति**। धर्मधर्मिणोस्तादात्म्यमेव सम्बन्ध इति कामादिमनोधर्माणाम्मनस्तादात्म्योक्तिः। **तेनेति**। भूतनिराकरणेनेत्याद्युक्तव्याख्यानेनेत्यर्थः। **केवलभोक्तृपर्यन्तानामिति**। भोक्तैव आत्मा न तु कर्ता इति साङ्ख्यमते भोक्तृत्वमात्मनः नानुभवस्वरूपत्वमात्रम्, मोक्षेऽपि भोक्तृत्वापत्तेः; किन्तु सुखदुःखसंसृष्टानुभवरूपत्वम्। तथा च भौतिकमनः परिणामसुखादिसंसृष्टरूपेण भौतिकस्यात्मनोऽप्यनात्मत्वं प्रतिज्ञातं 'न तेषां समूह' इत्यनेन सम्भवतीति भावः। **तत्रेति**। देहादिष्वनात्मत्वप्रतिज्ञायामित्यर्थः। **व्यभिचारित्वादिति**। सर्वेषु देशकालवस्तुषु सम्बध्य वर्तते एवेति नियमरहितत्वादित्यर्थः। क्वचिद्देशे काले वस्तुनि वर्तमानो यः अभावः तत्प्रतियोगित्वरूपे पर्यवसितहेतौ वर्तमानपर्यन्तवैयर्थ्यादाह—**विनाशित्वादिति**। विविधो देशकालवस्तुगतः नाशः अदर्शनं यतः स विनाशः, संसर्गाभावतादात्म्याभावयोरन्यतरः तद्विशिष्टत्वात् तत्प्रतियोगित्वात्, अभावप्रतियोगित्वादिति यावत्। अभावप्रतियोगित्वादिति हेतुकरणे अभावपदवैयर्थ्यात् अभावस्यैव प्रतियोगितासम्बन्धेन हेतुतेति बोध्यम्।

यथाश्रुतं तु विनाशित्वादित्यसङ्गतम्, आत्मनः इत्याद्युत्तरग्रन्थेनाभावप्रतियोगित्वस्यात्मभिन्नत्वं प्रत्यव्यभिचारित्वप्रतिपादनवैयर्थ्यात्। अथवा अभावप्रतियोगितात्वरूपसामान्यधर्मविशिष्टस्याव्यभिचारत्वप्रतिपादने ध्वंसप्रतियोगितात्वरूपधर्मविशिष्टस्य सुतरां तद्भवतीत्याशयेनात्मन इत्यादेरुक्तत्वात् यथाश्रुतमेव विनाशित्वादिति रम्यम्। ननु विनाशित्वस्यात्मान्यत्वं प्रति व्याप्यताग्रहो न सम्भवति तर्काभावादित्याशङ्क्यानात्मत्वस्य विनाशित्वहेतुकत्वे हेतुकथनद्वारा तादृशव्याप्यताग्राहकं तर्कं सूचयति—**आत्मन इति**। तथा च विनाशित्वात् अनात्मेत्यनेनोक्ते अनात्मत्वनिष्ठे विनाशित्वहेतुकत्वे हेतुः—देशकालपरिच्छिन्नानां घटादिवदनात्मत्वादिति, तत्र हेतुः—आत्मनो देशकालेत्यादि। आत्मन इति आत्मत्वावच्छेदेनेति शेषः। देशकालापरिच्छिन्नत्वात्—देशकालवृत्त्यभावप्रतियोगिभिन्नत्वग्रहात्, तत्परिच्छिन्नानां–देशकालवृत्त्यभावप्रतियोगिनां तादृशत्वावच्छेदेनेति शेषः। अनात्मत्वात्—अनात्मत्वग्रहात्। तथा च आत्मत्वव्यापकमपरिच्छन्नत्वमिति ग्रहात् परिच्छिन्नत्वरूपविनाशित्वमनात्मत्वव्याप्यतया गृह्यते, परिच्छिन्नत्वं यद्यनात्मत्वव्याप्यं न स्यात् तदाऽऽत्मत्वव्यापकस्यापरिच्छिन्नत्वस्याभावो न स्यात्, भवति तु तादृशाभावरूपम्, तस्मात् अनात्मत्वव्याप्यमिति तर्कपर्यवसानसम्भवादिति भावः। नन्वपरिच्छिन्नत्वस्याभावाप्रतियोगित्वरूपस्यात्मत्वव्यापकतानिश्चये सति उक्ततर्कपर्यवसानं वाच्यम्, स एव न सम्भवति तर्काभावादित्याशङ्क्य तन्निश्चायकं तर्कं ज्ञापयितुमात्मनि ध्वंसप्रागभावाप्रतियोगित्वं तद्धेतूपन्यासपूर्वकमाह—न तस्य ध्वंसप्रागभावावित्यन्तेन ग्रन्थेन **ध्वंसप्रागभावयोरित्यादिना**। चकारेणात्मन इत्यनुषज्यते। आत्मनो ध्वंसप्रागभावयोः ग्रहीतुमशक्यत्वात् न तस्य ध्वंसप्रागभावावित्यग्रे अन्वयः। अशक्यत्वे हेतुमाह—**अनात्मनां जडत्वादिति**। आत्मभिन्नानां ज्ञानरूपत्वाभावात् आत्मभिन्नेनात्मध्वंसप्रागभावौ विषयीकर्तुं न शक्येते इत्यर्थः। नन्वेकस्या आत्मव्यक्तेः ध्वंसप्रागभावौ अन्यात्म-

**चात्मत्वाभावात् आत्मन एकत्वेऽपि सुखदुःखाद्याश्रयाणामन्तःकरणानां भेदाभ्युपगमाद्व्यवस्थोपपत्तेः। स्वेनैव स्वाभावग्रहणे विरोधात् ग्राह्यकाले ग्राहकासत्त्वात् ग्राहकसत्त्वे ग्राह्याभावात् कृतहान्यकृताभ्यागमप्रसङ्गाच्च न तस्य ध्वंसप्रागभावौ। सद्रूपस्यात्मनः सर्वत्रानुगमाच्च नात्यन्ताभावसम्भवः।**

---

व्यक्त्या गृह्येयाताम्, तत्राह—**स्वभिन्नस्य चात्मत्वाभावादिति।** यदात्मव्यक्तेः ध्वंसप्रागभावौ ग्राह्यौ, तद्भिन्नस्यात्मत्वाभावादित्यर्थः। नन्वात्मनो नानात्वमवश्यं वाच्यम्, अन्यथा यदा चैत्रस्सुखी तदा मैत्रोऽपि अवश्यं सुखी स्यात्। न च यदा चैत्रशरीरे चन्दनादियोगः, तदा मैत्रशरीरे तस्यानियमात् सुखानियम इति वाच्यम्। व्यञ्जकचन्दनादियोगं प्रति त्वेकात्मनिष्ठादृष्टस्यैव नियामकत्वात् सर्वशरीरेषु युगपच्चन्दनादियोगोत्पत्त्यापत्तेः। न च शरीरविशेषे चन्दनादियोगं प्रति अदृष्टविशेषस्य हेतुत्वान्नोक्तापत्तिरिति वाच्यम्। तदापि एकस्य तत्त्वदर्शने सति कुत्रापि संसारो नोपलभ्येतेति आत्मनानात्वावश्यकत्वात् तत्राह—**आत्मन एकत्वेऽपीति। व्यवस्थोपपत्तेरिति।** यस्मिन् मनसि चन्दनादियोगहेत्वदृष्टमस्ति तत्रैवोक्तयोगोत्पत्तिः, मनस एव जीवविभाजकोपाधित्वे यस्य मनसो ज्ञानेनोच्छेदः तदुपलक्षितजीवस्यैव मुक्तिः, अविद्याया जीवविभाजकोपाधित्वेपि यत्र मनसि तत्त्वदर्शनं तदुपादानभूताया एव तेनोच्छेद इति व्यवस्थोपपत्तेः। न च मनसि प्रमाणाभाव इति वाच्यम्, 'मम मन इदानीं प्रसन्नम्, इदानीं विक्षिप्तमि'ति साक्ष्यनुभवात्, 'अन्यत्रमना अभूवं नादर्शम्' 'एतत्सर्वं मन एवे'त्यादिश्रुतेश्च तत्र मानत्वादिति भावः। नन्वात्मनैव स्वध्वंसप्रागभावौ गृह्येयाताम् तत्राह—**स्वेनेति।** ग्रहणे—विषयीकरणे। ननु भिन्नकालीनयोरपि विषयविषयिभावसम्भवात् आत्मनः स्वध्वंसादिविषयकत्वं न विरुद्धं तत्राह—**ग्राह्येति।** ग्राह्ययोः—विषययोः आत्मध्वंसप्रागभावयोः काले ग्राहकस्य—विषयिणः आत्मनोऽभावात् ग्राहकस्य विषयिणः आत्मनः सत्त्वे ग्राह्ययोस्तयोरसत्त्वादित्यर्थः। आत्मनो विषयग्राहकत्वं नाम तादात्म्येन विषयसम्बद्धत्वम्। तथा च भिन्नकालीनविषये तादात्म्यासम्भवेनात्मनो ग्राहकत्वासम्भव इति भावः।

आत्मनो ध्वंसप्रागभावाप्रतियोगित्वे, ग्रहीतुमशक्यत्वादिति हेतुं सोपपत्तिकमुक्त्वा हेत्वन्तरमप्याह—**कृतेत्यादि।** आत्मनो नाशस्वीकारे कृतस्य यागादिजन्यादृष्टस्य फलाजनकत्वरूपा हानिः स्यात्, उपादानीभूतस्यात्मनो नाशे तदुपादेयस्यादृष्टस्य नाशावश्यकत्वात्, तथा च कर्तुः फलप्राप्त्यभावेन प्रवृत्त्यनुपपत्तिः। आत्मनः प्रागभावस्वीकारे उत्पद्यमानस्यात्मनः पूर्वं सञ्चितादृष्टाभावेन तदकृतेनादृष्टेन भोगाभ्यागमो वाच्यः, स न सम्भवति, पित्रादिकृतेनादृष्टेन पुत्रादेर्भोगजनने मानाभावात्, तत्कल्पनापेक्षया लाघवात् आत्मनोऽनादित्वकल्पनाया एवोचितत्वादिति भावः। नन्वेतावतापि नात्यन्ताभावाप्रतियोगित्वसाधकतर्कलाभः तत्राह—**सद्रूपस्येति। सर्वत्रानुगमादिति।** घटस्सन् पटस्सन्नित्यादिप्रत्ययेन दृश्यमात्रे सद्रूपसम्बन्धविषयीकरणादित्यर्थः। ननु सद्रूपस्य तादात्म्यमेव दृश्ये भाति, तस्य च न सद्रूपात्यन्ताभावविरोधित्वम्, अतः कथमुक्तप्रत्ययेनात्यन्ताभावनिरास इति चेदुच्यते, यथा 'इदं रजतमि'त्यादिभ्रमस्थले रजतादाविदन्त्वादिसंसर्गोऽपि भासते न त्विदमादितादात्म्यमात्रम्, अधिष्ठानस्य हि तादात्म्यमिव तद्वृत्तिधर्मसंसर्गोऽप्यारोप्येऽध्यस्यते, तथा च सद्रूपस्याधिष्ठानस्य तादात्म्यमिव तद्वृत्तिधर्मसंसर्गोऽपि

**द्वैतस्य मिथ्यात्वेनाधिष्ठानसत्तादात्म्यापन्नतयैव सिद्धत्वात् ।**

घटादावुक्तप्रत्ययेन भ्रमरूपेण विषयीक्रियते। तद्वृत्तिधर्मश्च सद्रूपात्मकसत्त्वनित्यत्वादिकमेव, स्वस्यैव स्वस्मिन् कल्पितधर्मत्वस्वीकारात् । तथा च सद्रूपसत्त्वाद्याधारत्वस्य सद्रूपेऽपि सत्त्वादुक्तप्रत्ययविषयतया दृश्यमात्रेऽपि सत्त्वाच्च सद्रूपस्य सर्वधर्मत्वेन न कुत्राप्यत्यन्ताभाव इति भावः। नन्वेतावतापि नान्योन्याभावाप्रतियोगित्वसाधकतर्कलाभः तत्राह–**द्वैतस्येत्यादि**। द्वैतस्य तत्तादात्म्याभावानुपपत्तिरिति योजना। तादात्म्येनाभावस्तादात्म्याभावः भेद इति यावत्। ननु तादात्म्यस्य मिथ्यात्वेन तद्वत्यपि दृश्ये तदभावः सिद्धान्तेऽपि स्वीक्रियत एवेति कथं तदनुपपत्तिरिति चेन्न। तादात्म्याभावपदस्य भेदार्थकत्वात्। ननु तादात्म्यबलादेव दृग्दृश्ययोर्भेदोऽपि वाच्य एव अत्यन्ताभिन्नयोस्सिद्धान्ते तादात्म्यास्वीकारात्। तत्राह—**सत्तादात्म्यापन्नतयैव सिद्धत्वादिति**। घटस्सन्नित्यादिव्यावहारिकप्रमया व्यावहारिकसत्तादात्म्यविशिष्टतयैव द्वैतस्य प्रमितत्वादित्यर्थः। एवकारेण व्यावहारिकप्रमया दृग्दृश्ययोर्व्यावहारिकभेदग्रहणं नास्तीत्युक्तम्, तथा च व्यावहारिकतादात्म्यान्यथानुपपत्त्या कल्प्योऽपि भेदः प्रातीतिक एव, कार्यकारणभावादिज्ञानकाल एव तदन्यथानुपपत्त्या भेदप्रत्ययात्। न च प्रातीतिकेन भेदेनोपपाद्यं कार्यकारणभावादिकमपि प्रातीतिकं स्यात्, कल्पितधूमान्यथानुपपत्त्या कल्प्यमानवह्नेः प्रातीतिकत्वदर्शनादिति वाच्यम्। पर्वते धूमादर्शनेऽपि धूलीपटलादिकल्पितधूमान्यथानुपपत्त्या कल्पितवह्नेः व्यावहारिकत्वदर्शनेन तथा नियमाभावात्। भेदोपपाद्यतादात्म्यादेः प्रातीतिकत्वे सति समसत्तयोः तयोर्विरोधेन व्यावहारिकत्वावश्यकत्वात्, कपालघटाद्योः कार्यकारणभावस्य प्रातीतिकत्वे क्षतिविरहाच्च। अत एवारम्भणाधिकरणे भाष्यम्—'न हि कार्यकारणभावादिकं वेदान्तिभिः स्वीक्रियते'[1] इति।

### तादात्म्यगतभेदस्य प्रातीतिकत्वम्

यद्यपि तादात्म्यप्रत्ययमात्रे भेदसमानाधिकरणतादात्म्यत्वेन तादात्म्यस्य संसर्गतया भानमिति सयुक्तिकमुक्तं **चन्द्रिकायां** भेदाभेदवादप्रस्तावे प्रथममिथ्यात्वलक्षणविचारे, तथापि कार्यकारणभावाद्यज्ञानदशायां तादात्म्याप्रत्ययेनात्यन्ताभेदज्ञानात् न भेदज्ञानम्, तदाहि—कपालद्वयं घट इत्यादिप्रत्यये विषयः न घटत्वादिकं जातिः, किन्तु कपालद्वयत्वादिकमिति ज्ञायते। तथा चात्यन्ताभेदे सति संसर्गाभावादत्यन्ताभेदोऽपि न संसर्गः किन्तु प्रकारः। न चैवं 'घटो घटः' 'तद्घटस्तद्घटवानि'त्यादाविव 'घटो नील' इत्यादावपि भ्रमत्वव्यवहारः स्यादिति वाच्यम्, साम्याभावात्। 'घटो नील' इत्यादौ घटे औपाधिको भेदो भाति घटत्वे नीलत्वस्य यो भेदस्तस्यैव घटानुयोगिकत्वनीलप्रतियोगिकत्वाभ्यां प्रातीतिकाभ्यां ज्ञानात्। व्यावहारिकोऽपि भेदः ताभ्यां विशिष्टेन रूपेण प्रातीतिक इति विवेकात् उक्तभेदविषयके 'घटो नील' इत्यादौ भ्रमत्वव्यवहारः। उक्तविवेकाभावे तूक्तभेदस्य व्यावहारिकत्वग्रहान्नोक्तज्ञाने भ्रमत्वव्यवहारः। 'तद्घटस्तद्घट' इत्यादौ तु भेदस्य प्रातीतिकत्वग्रहे नोक्तविवेकापेक्षा, औपाधिकत्वाभावादिति तत्र तत्काले सदैव भ्रमत्वग्रहः, तथा च 'घटो नील' इत्यादौ भ्रमत्वव्यवहार

---

१. अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात् इत्यादिना कार्यकारणभावो मिथ्येत्युक्तम्। अर्थतः अनुवादोऽयं न शब्दतः।

## शुक्तिरजतादिवदध्यस्तस्य अधिष्ठानतादात्म्याभावानुपपत्तेः ।

इष्ट एव । स च 'नद्धटस्तद्वानि'त्यादिस्थलीयभ्रमत्वव्यवहारेण न तुल्यः, विशिष्टसत्ता सत्ते'त्यादावपि विशिष्टसत्तात्वस्य यो भेदः, तस्मिन् शुद्धसत्त्वानुयोगिकत्वेन व्यावहारिकेण विशिष्टसत्ताप्रतियोगिकत्वं प्रातीतिकं कल्पितम् । धर्मधर्मिणोर्हि व्यावहारिकतादात्म्यसत्वात् न व्यावहारिको भेदः । विशिष्टसत्तात्वं तु न शुद्धसत्तायां धर्मः, किन्तु विशिष्टायां अतः शुद्धायां तद्भेदः व्यावहारिक एव । घटाकाशमठाकाशयोस्तु औपाधिकोऽपि भेदो व्यावहारिकः । घटमठयोस्तादात्म्याभावेन व्यावहारिकयोस्तादात्म्यभेदयोः विरोधस्य दूषणस्याभावात् । न च तादात्म्यं भेदो वा व्यावहारिक इति विनिगमकशून्यमिति वाच्यम् । तादात्म्यान्यथानुपपत्त्या भेदस्य कल्पनीयतया तादात्म्यादेरुपजीव्यत्वेन प्राबल्यस्यैव व्यावहारिकत्वे प्रयोजकत्वात् । एवं च 'घटस्सन्नि'त्यादिप्रतीतेस्तादात्म्यांशे प्रमात्वेऽपि भेदांशे भ्रमत्वं तद्व्यवहारश्च । वस्तुतो विशेषणाभिन्नतया ज्ञायमाने विशेष्ये तादात्म्येन विशेषणप्रकारकज्ञानत्वं विशेषणांशे तादात्म्येन प्रमात्वम्, न तु विशेषणभेदसमानाधिकरणतादात्म्यसंसर्गकत्वघटितम् । तथा च विशेषणविशेष्ययोर्भेदाग्रहकाले न तादात्म्यप्रमा, तस्या भेदविषयकत्वनियमेन भ्रमत्वानियमश्च, ज्ञानान्तरेण भेदग्रहेऽपि तादात्म्यप्रमासम्भवादिति ध्येयम् । प्रातीतिकभेदप्रतियोगित्वं च न परिच्छिन्नत्वम्, प्रातीतिकध्वंसप्रतियोगित्वस्यापि तत्त्वापत्तेरिति भावः ।

ननु 'घटस्सन्नि'त्यादिप्रत्यये सत्ताजातेः समवायो भाति, न तु सद्रूपतादात्म्यम्, अतो दृश्यमात्रे सद्रूपभेदस्य व्यावहारिकत्वमेवेत्यतोऽधिष्ठानेत्यन्तमुक्तम् । **द्वैतस्य**—दृश्यस्य. मिथ्यात्वेन—सद्रूपज्ञाननिवर्त्यत्वेन । रजतादिवत्—रजतादेरिव । अध्यस्तस्य—सद्रूपाज्ञानमूलकभ्रमविषयस्य । अधिष्ठानेति। कारणीभूताज्ञानाश्रयेत्यर्थः । यथा शुक्तिरजतादेः शुक्तिज्ञाननिवर्त्यत्वरूपमिथ्यात्वेन शुक्त्यवच्छिन्नसद्रूपाज्ञानकल्पितत्वेन उक्ताज्ञानाश्रयस्येदमवच्छिन्नसद्रूपस्य तादात्म्येन भानम्, 'रजतमिदं सदि'ति प्रतीतेः, तथा दृश्यमात्रस्य सद्रूपब्रह्मज्ञाननिवर्त्यत्वरूपमिथ्यात्वेन सद्रूपाज्ञानकल्पितत्वात् सद्रूपतादात्म्येन भानम्, घटस्सन्नि'त्यादिप्रतीतेः । अज्ञानस्य स्वाश्रयतादात्म्यवैशिष्ट्येनैव दृश्यरूपेण परिणामकल्पनात्, अन्यथा सत्ताजात्या द्रव्यगुणकर्ममात्रवृत्त्या 'ध्वंसस्सन्नि'त्यादिप्रत्ययानिर्वाहात्, अनादिदृश्यानामपि अनादिसत्तादात्म्यविशिष्टतयैव प्रत्ययात् । तथा च सर्वत्र सत्तादात्म्यविशिष्टतया भासमानदृश्ये सद्भेदस्य व्यावहारिकस्यासम्भवः । सद्रूपेऽपि सद्रूपात्मकसत्ताधारत्वोपपादनाय कल्प्योऽपि सद्रूपभेदो न व्यावहारिकः, विचारदशायामेव प्रतीतेरिति भावः ।

ननु अनुमित्यादिरूपे गुरुत्वादिप्रत्यये सत्तादात्म्यभानानियमात्सत्तादात्म्याविषयकानुमित्यादिसिद्धगुरुत्वादौ व्यावहारिकसद्भेदसत्त्वे बाधकाभाव इति चेन्न। द्वैतस्येत्यादिना सिद्धत्वादित्यन्तेन 'सर्वव्यावहारिकद्वैतज्ञानं स्वविषयीभूतद्वैतमात्रे सत्तादात्म्यविषयम्, भ्रमत्वात्, प्रातीतिकभ्रमवदि'त्यस्य सूचितत्वात् । न चेदमनुपपन्नम् । ज्ञानजनकसामग्रीमात्रं सत्तादात्म्यविशेषितमेव ज्ञापयतीति नियमस्यानुभवबलेन कल्पनात्। अत एव सर्वोऽपि विषयः कालसम्बन्धित्वरूपसत्त्वेन भातीति भाट्टाः[१] । ज्ञानसम्बन्धित्वरूपसत्त्वेनेति प्राभाकराः[२] । अत एव सद्रूपाधारत्वस्यापि पूर्वोक्तरीत्या सर्वदृश्येषु प्रतीतिसिद्धत्वात्सद्रूपात्यन्ताभावो न कुत्राप्यस्ति । न चोक्ताधारत्वस्य कल्पितत्वात् तद्वति तदत्यन्ता-

१. स्पष्टमिदं शास्त्रदीपिकायां औत्पत्तिकसूत्रे । २. मितिमातृमेयप्रत्यक्षवादित्वात् ।

**तेन आत्मा नाभावप्रतियोगी। अभावप्रतियोगिनश्च देहेन्द्रियादयः। तेनाऽमी नात्मानः। किन्तु स्वप्रकाशबोधरूपाख्ये आत्मनि अद्वैतेऽप्यनाद्य-**

---

भाव इव सद्रूपात्यन्ताभावोऽप्यास्तामिति वाच्यम्। शुद्धस्य सद्रूपस्यात्यन्ताभावो हि न प्रत्यक्षेण गृह्यते किञ्चिद्धर्मविशिष्टप्रतियोगिकाभावस्यैव तेन ग्रहणात्। नाप्यनुमानादिना, व्याप्तिग्राहकतर्काद्यभावात्; प्रत्युत 'सत्यस्य सत्यमि'त्यादिश्रुतिपीडनात् सद्रूपसम्बन्धिनि तदत्यन्ताभावस्वीकारे सद्रूपं मिथ्या स्यात्। येन हि सम्बन्धेन यत् यद्विशिष्टं तत्सम्बन्धावच्छिन्नं तस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्। तथा च सद्रूपस्याधारे आधारत्वसम्बन्धेनाभावस्वीकारेण मिथ्यात्वापत्त्या उक्तश्रुतिः पीड्येत, आधारत्वादेस्तु दृश्यत्वादिना मिथ्यात्वानुमानमुक्तश्रुत्या अनुगृह्यते इति ध्येयम्।

ध्वंसप्रागभावयोरित्यादिना आत्मन अभावाप्रतियोगित्वं स्थिरीकृत्य आत्मन इत्यादिना तत्पूर्ववाक्येन उक्तमर्थमुपसंहरति—**तेनेत्यादिना**। तेन आत्मनः अभावाप्रतियोगित्वग्राहकमानसत्त्वेन। आत्मा नाभावप्रतियोगी—आत्मत्वावच्छेदेन आत्माभावप्रतियोगित्वेन न गृह्यते। **तेनेति**। आत्मत्वव्यापकतया गृहीतं यदभावाप्रतियोगित्वं तदभावत्वेन हेतुनाऽभावप्रतियोगित्वेऽनात्मत्वव्याप्यताग्रहात् अनात्मरूपपक्षे वृत्तित्वग्रहाच्चानुमितिसम्भवेनेत्यर्थः[1]। नात्मानः—आत्मस्वरूपत्वाभाववन्तः। यथाश्रुते आत्मभेदस्य साध्यत्वे तस्य प्रातीतिकस्यैव वाच्यत्वेन[2] देहाद्यात्मवादिनं प्रति उपन्यासानौचित्येन[3] असङ्गतेः। आत्मस्वरूपत्वं चात्ममात्रविषयकधीविषयत्वम्। **ननु** द्वैतस्य पूर्वोक्तमिथ्यात्वे दृश्यत्वादिकमेव हेतुः, दृश्यत्वादिकं च दृक्तादात्म्यादिरूपम्, तस्य कथं मिथ्यात्वव्याप्यता अप्रयोजकत्वादिसंभवात्। अथ दृग्दृश्ययोस्तादात्म्यमनुपपन्नम्, तस्य दृग्दृश्याभ्यां सम्बन्धान्तरस्वीकारे तस्यापि सम्बन्धान्तरम् एवं तस्यापीति अनवस्थानात्। तस्य ताभ्यां सम्बन्धान्तरास्वीकारे ताभ्यामसम्बद्धस्य तस्य कथं तदुभयं प्रति सम्बन्धता, तथा च तत्तादात्म्यमनुपपद्यमानं सत् स्वमिव स्वप्रतियोगित्वानुयोगित्वोपहितत्वरूपेण दृग्दृश्यावपि मिथ्यात्वेन ज्ञापयतीति चेत्, एवमपि तत्तादात्म्योपहितरूपेणैव दृश इव दृश्यस्य मिथ्यात्वं स्यात्, न तदनुपहितरूपेणापि दृश्यस्य। अथानुपपद्यमानदृक्सम्बन्धाधीनसिद्धकत्वात् दृश्यमात्रस्य मिथ्यात्वम्, तर्हि वेदान्तवाक्यजज्ञानीयानुपपद्यमानसम्बन्धाधीनसिद्धिकत्वात् आत्मापि मिथ्या स्यात् **अत आह—किन्तु स्वप्रकाशेत्यादि**। स्वप्रकाशबोधरूपे कल्पिता अनिर्वचनीया एवेति योजना। स्वप्रकाशतादात्म्यवज्जडस्यानुपपन्नत्वेन कल्पितत्वमेवेत्यर्थः। अनुपपद्यमानस्सम्बन्धः स्वोपहितमेव मिथ्यात्वेन ज्ञापयतीति वेदान्तवाक्यजवृत्तिज्ञानविषयत्वोपहितस्य मिथ्यात्वेऽपि न शुद्धब्रह्मणो मिथ्यात्वम्। न हि यत्र यत्रानुपपद्यमानमस्ति तत्तन्मिथ्येति नियमे मानमस्ति। मिथ्योपहितं तु मिथ्यैव, मिथ्याघटितत्वात्। दृक्तादात्म्यानुपहितमपि सर्वं दृश्यरूपं मिथ्या उक्तरीत्याऽनुपपद्यमानेन घटत्वादिसम्बन्धेनोपहितत्वात्। न हि दृश इव दृश्यस्य अनुपहितं रूपमस्ति, दृश्यग्राहकप्रमाणमात्रस्य सम्बन्धोपहितदृश्यग्राहकत्वात् निर्विकल्पक-

---

१. शरीरादयो नात्मानः अभावप्रतियोगित्वादित्यनुमितिः।

२. देहात्मवादे तत्रात्मभेदः प्रतीतिकः।

३. सिद्धसाधनापत्तेः।

**निर्वचनीयाविद्याकल्पिता अनिर्वचनीया एवेति सिद्धान्तरहस्यम् । ननु बोधरूप आत्मेति तत्राभ्युपगमात्सुषुप्तौ च बोधाभावात् गाढं मूढोऽहमासं न किञ्चिदवेदिषमिति सुप्तोत्थितस्य परामर्शात् कथमव्यभिचारिता तस्येत्याशङ्क्याह—सुषुप्त्येकसिद्ध इति । अयमर्थः । आत्मनः सुषुप्तिसाक्षित्वान्न तत्र तदभावः । अन्यथा मूढोऽहमासमिति परामर्शानुपपत्तेः ।**

---

प्रत्यक्षस्याप्रामाणिकत्वात् । प्रामाणिकत्वेऽपि सम्बन्धमगृह्णतोऽपि तस्य सम्बन्धोपहितदृश्यस्वरूपग्राहकत्वेन चरितार्थत्वात् । अनुपहितरूपग्राहकत्वकल्पने गौरवात् । वेदान्तजन्यधीविषयस्तु अनुपहितमेव, तात्पर्यानुरोधात् । तच्च स्वप्रकाशचिदानन्दस्वरूपम्, अन्यथा स्वतःपुरुषार्थरूपमोक्षरूपत्वानुपपत्तेः । तथा च अनात्मानः केनापि स्वरूपेण निर्वक्तुमशक्यत्वात् अनिर्वचनीयाः, उपहितैः स्वीयसर्वरूपैः अनुपपन्नत्वात् विचाराऽसहत्वात् मिथ्याभूता इति भावः ।

ननु तर्हि स्वप्रकाशे शुद्धात्मनि न दृश्यारोपस्सम्भवति, अप्रकाशमान एव शुक्त्यादौ रूप्याद्यारोपदर्शनात्; अथ अज्ञानसम्बन्धात् तत्सम्बन्ध इति चेन्न, तस्यापि तत्रासम्भवात् अत आह—**अनाद्यनिर्वचनीया इत्यादि ।** इदमाद्याकारमनोवृत्तिनिर्गमनात् शुक्त्यादौ साक्षिरूपप्रकाशसम्बन्धे सत्यपि अज्ञानसम्बन्धेन रूप्याद्यारोपात् प्रकाशमानेऽप्यात्मनि अज्ञानात् दृश्यारोपसम्भवः । न च दृष्टान्तेऽप्यसम्भवः, अज्ञानस्यानादित्वात् अनिर्वचयीयत्वाच्च । प्रमाणजन्यज्ञानरूपेणैव प्रकाशेनाज्ञानस्य विरोधः, न तु चित्प्रकाशेन । मन्ददीपान्धतमसयोरिव तयोः स्वीयसर्वकालेषु मिथः संसृष्टतयैवोपलम्भात् । अथापि तयोर्विरोधः स्यात् यद्यज्ञानमुत्पद्येत । न ह्यन्धतमसमपि कृतमन्ददीपे गृहे उत्पद्यते । अथापि महालोकतमसोरिव समसत्ताकत्वे विरोधः स्यात्, अज्ञानं तु विचारासहत्वेन मिथ्याभूतं न परमार्थचित्प्रकाशसमसत्ताकमिति भावः । **सुप्तोत्थितस्य** सुषुप्त्युत्तरं जाग्रतः पुरुषस्य अवेदिषमिति परामर्शादिति योजना । परामर्शात्—स्मरणात् । अव्यभिचारिता—अभावाप्रतियोगिता । सुषुप्तीति । मनोऽवच्छिन्नस्य जीवस्य ब्रह्मणो वा स्वप्नाध्यासोपादानत्वे मनोलयसहितं तद्विषयकमवस्थाज्ञानं सुषुप्तिः, शुद्धब्रह्मण एव तदुपादानत्वे तद्विषयकमूलाज्ञानमेव मनोलयसहितं सा । तत्र पक्षद्वयेऽपि गाढं मूढोऽहमिति मूलाज्ञानस्योल्लेखः । आद्यपक्षे न किञ्चिदवेदिषमित्यनेन स्वप्नोपादानाज्ञानस्य, मनोऽवच्छिन्नचिदज्ञानस्यैव व्यावहारिकप्रपञ्चविषयकत्वस्वीकारादिति । अन्यथा न किञ्चिदवेदिषमिति सर्वव्यावहारिकविषयकाज्ञानस्मृतेरनुपपत्तेः । वस्तुतो घटादिव्यावहारिकपदार्थानां सुषुप्तौ जागरकालीनेन अज्ञानान्तरावृतत्वेन प्रकाशाप्रसक्तेः स्वप्नहेत्वज्ञानविषयत्वास्वीकारेऽपि जीवेशभेदचिदज्ञानसम्बन्धादौ जागरे सदा भानेन प्रकाशप्रसक्तेः स्वप्नहेत्वज्ञानविषयत्वावश्यकत्वात् । **वार्त्तिकमते** जीवस्यानावृतसाक्षितादात्म्येनेशस्य साक्षित्वेन च तयोर्भेदस्य च अनावृतत्वेन सोक्षिभास्यत्वप्रसक्तेः न 'किञ्चिदवेदिष'मित्यनेनोक्तभेदादिविषयकतया मनोऽवच्छिन्नचिदज्ञानस्योल्लेखः, न तु घटादिविषयकतयापि । द्वितीयपक्षे तु मूढोऽहमासमित्याकारं मूलाज्ञानविषयकस्मरणम् । न किञ्चिदवेदिषमित्याकारकं तु उक्तभेदादिविषयकस्य सुषुप्तावनुभूयमानस्य स्वप्नानुपादानस्यापि अज्ञानावस्थाविशेषस्य स्मरणमिति ध्येयम् । **अन्यथेति ।** सुषुप्तिरूपाज्ञानविषयकसाक्षिणः सुषुप्तिकालेऽनङ्गीकार इत्यर्थः । ननु सुपुप्त्याकाराया अविद्यावृत्तेरेव तादृशस्मृतिहेतुत्वसम्भवेन किं

**मातृमानमितिमेयानां व्यभिचारित्वेऽपि तद्भावाभावसाक्षिणः कालत्रयेप्यव्यभिचारात् ।**

सुषुप्तिकालीनसाक्षिस्वीकारेण तत्राह—**मातृमानमितिमेयानामिति** । ज्ञातृज्ञानकरणज्ञानज्ञेयव्यक्तीनां—व्यभिचारित्वेऽपि—साक्षिसम्बद्धे क्वचित्काले अभावेऽपि । कालत्रये—ज्ञात्रादेः पूर्वकालस्थितिकालनाशकालेषु । कालत्रयाव्यभिचारित्वे हेतुमाह—**तद्भावाभावसाक्षिण इति** । ज्ञात्रादिस्वरूपतदभावभासकस्येत्यर्थः ।

यथा प्रतिकर्मव्यवस्थायां वक्ष्यमाणरीत्या देहस्थविषयस्थतदन्येषां मनोवृत्तिभागावच्छिन्नचैतन्यानां प्रमातृप्रमितिप्रमाणरूपत्वम्, तथा सुषुप्तौ मनोवृत्त्यभावेन प्रमाणाद्यभावेऽपि अविद्याविशिष्टा चित् ज्ञात्री, अविद्यावृत्त्यवच्छिन्ना ज्ञानं तत्करणावच्छिन्ना ज्ञानकरणं विषयोपहिता ज्ञेयेति ज्ञात्रादिसाधकोऽनुभवोऽवश्यं वाच्यः । न ह्यविद्यावृत्तिरनुभवः येन तयैव स्मृतिर्वाच्या, अस्वप्रकाशरूपत्वेन स्वयं सन्दिग्धत्वेन सुषुप्त्याद्यर्थासाधकत्वात् । तदुक्तम्—

अप्रत्यक्षप्रकाशस्य नार्थदृष्टिः प्रसिध्यति । इति ।

अस्वप्रकाशज्ञानवादिनोऽर्थप्रकाशो नोपपद्यत इत्यर्थः । ज्ञानस्य स्वप्रकाशत्वं च ज्ञानविषयत्वं विनैव संशयादिविषयत्वायोग्यविद्यमानस्वरूपकत्वम् । अत एवोक्तं तार्किकादिभिरपि 'न हि जानन्नेव जानामि न वेत्याद्यनुभवति' । इयांस्तु विशेषः—यत्तार्किकादिमते ज्ञानस्य स्वाभाववत्त्वज्ञाने प्रतिबन्धकत्वात् संशयाद्यविषयत्वं मन्मते त्वनावृतत्वादिति । अत एव तन्मतं तादृशप्रतिबन्धककल्पनागौरवाद्धेयम् । संशयादिकं प्रति मन्मते आवरणस्य हेतुत्वं तु तन्मते विशेषादर्शनहेतुत्वस्य स्थाने इति न गौरवकरम् । प्रत्युत विशेषादर्शनं व्याप्यतया ज्ञातस्य निश्चयाभावः । तत्त्वं चाज्ञानत्वजातिरूपादावरणत्वाद् गुरुतरम् । गृहीताप्रामाण्यकस्याहार्यस्याव्याप्यवृत्तिविषयकत्वेन गृहीतस्य च निश्चयस्याप्रतिबन्धकत्वात्तदन्यत्वेन निश्चयो विशेषणीयः । ज्ञानस्य स्वरूपसतः प्रतिबन्धकत्वेऽपि तादृशनिश्चयस्य प्रतिबन्धकत्वमावश्यकम् । घटादौ तादृशनिश्चयसत्त्वे 'घटो ज्ञानवान्न वे'ति संशयानुदयात् । आवरणं तु तादृशनिश्चयविषयेऽप्यस्तीति तत्र संशयादिकं स्यादेवेति केवलावरणमेव हेतुरिति मे लाघवम् । ज्ञानस्य ज्ञानान्तरेण स्वेन वा प्रकाश्यत्वे तु अनवस्थाऽऽत्माश्रयगौरवादिकम् । 'साक्षात्करोमि जानामि अनुभवामी'त्यनुगताकारबुद्धौ [1]एकस्यैवानुभवस्य भानात् वृत्त्यविषये सुखादौ 'सुखं जानामी'त्यादिप्रतीतेश्च न वृत्तीनामनुभवत्वम् । तस्मादेकस्य भानस्य तादात्म्यात् तदन्येषु सर्वेषु भातीति व्यवहारः । तस्य चानुभवस्य अनुभवाविषयत्वेऽपि नालीकत्वापत्तिः, वेदान्तवाक्यजन्यप्रमावृत्तिविषयत्वात् कालादिसम्बन्धाच्च । तस्मिन्नुक्तव्यवहारस्तु तत्स्वरूपेणैव, न त्वनुभवान्तरापेक्षः । घटाद्यभावे तद्व्यवहार इव तदन्याभावानपेक्षः । तथा च विषयतासम्बन्धेन उक्तव्यवहारं प्रति अनुभवव्यक्तेः तादात्म्येन हेतुत्वमुक्तव्यवहारपूर्वकालीनत्वविशिष्टायां तद्व्यक्तौ तद्व्यक्तेस्तादात्म्यसत्त्वात् कार्यवति स्वस्मिन्नपि कारणस्य सत्त्वम् । सर्वस्यैव हि कारणस्य कार्यप्राक्कालीन एव कार्योपलक्षिते सत्त्वमपेक्ष्यते । कार्यप्राक्कालीनत्वावच्छेदेन हि यत्र यद्वर्तते, तत्कार्यप्राक्कालीन एव तत्र वर्तते इति नियमादिति भावः ।

१. वृत्तेः तादृशानुभवविषयत्वे उक्तस्थलेषु वृत्तीनां भेदात् एकानुभवभानं न संगच्छेत ।

**ननु प्रमाश्रयः प्रमाता स एव कर्ता भोक्ता प्रदीपवत्स्वपरसाधारणसर्वभासकश्चेति न घटादिवत्साक्षिसापेक्ष इति चेन्न। विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेः दृश्यस्य द्रष्टृत्वाभावात्। प्रमातुश्च परिणामित्वेन दृश्यत्वात् एकस्य कूटस्थस्यैव सर्वसाक्षित्वात्।**

---

### प्राभाकरमतं तन्निराकरणं च

प्राभाकरमतमाशङ्कते—**नन्वित्यादि**। प्रमाश्रयः—ज्ञानाश्रयः। प्रमाता——ज्ञाता। **प्रदीपवदिति**। यथा दीपः स्वस्य स्वप्रभासंयुक्तस्य च चाक्षुषजननरूपावभासने नालोकान्तरसापेक्षः, तथा ज्ञाता स्वनिष्ठज्ञानस्य तद्विषयस्य च व्यवहारजननरूपावभासने नान्यापेक्षो विषयतासम्बन्धेन घटादाविव समवायेन ज्ञातरि तादात्म्येन स्वस्मिंश्च स्वघटकज्ञानस्य सम्बद्धतया तेषु व्यवहारस्य तत एवोत्पत्तिसम्भवात्। तथा च सुषुप्तौ अविद्यावृत्तिरूपज्ञानस्वीकारेऽपि तत्साक्षिस्वीकारो निर्युक्तिकः। 'जानामी'त्यनुगताकारधीस्तु विप्रतिपन्ना। न ह्यनुगताकारबुद्धियर्थमेकं वस्तु स्वीक्रियते, अतिप्रसङ्गादिति भावः। **विकारित्वेन**—परिणामित्वेन। स्वविकारसाक्षित्वानुपपत्तेः—स्वपरिणामविषयकज्ञानवत्त्वानुपपत्तेः। सुखादिरूपेण परिणतस्य प्रमातुः सुखादिरूपापत्त्या पूर्वरूपोच्छेदेन पूर्वरूपस्य न सुखादिप्रमातृत्वसम्भव इति भावः। अथवा **विकारित्वेनेत्यादि**–भिन्नकालीनसुखादिरूपनानापरिणामित्वरूपापन्नत्वेन तादृशपरिणामान् प्रति द्रष्टृत्वानुपपत्तेः एकस्य भिन्नकालीननानापरिणामद्रष्टृत्वं प्रत्यभिज्ञायते 'योऽहं पूर्वं सुखमन्वभूवं सोऽहमिदानीं दुःखमनुभवामि' इत्यादिप्रत्ययात्। तच्च पूर्वापरकालीनमेकं द्रष्टारं विनाऽनुपपन्नम्–त्वन्मते च न द्रष्टुरेकत्वं सम्भवति, विकारित्वेन नानारूपापन्नत्वादिति भावः। ननु प्रमातुरेकदेश एव सुखादिरूपमापद्यते, तथा च तदीयपूर्वरूपस्यापि विद्यमानत्वेन द्रष्टृत्वोपपत्तिः, अत एवोक्तप्रत्यभिज्ञाप्युपपद्यते तत्राह—**दृश्यस्य द्रष्टृत्वानुपपत्तेरिति**। दृश्यस्यानुभवविषयत्वेन भासमानस्यानुभवाश्रयत्वमात्रानुपपत्तेः।

ननु 'अहं सुखमनुभवामी'ति धिया प्रमाश्रयत्वेनैवाहमर्थो भाति न प्रमेयतया तत्राह—**प्रमातुश्च परिणामित्वेन दृश्यत्वादिति**। प्रमातुरपि बीजादिवत् नानाविधभिन्नकालीनपरिणामाश्रयतयाऽनुभवविषयत्वस्वीकारादित्यर्थः। 'अहं सुखी'त्याद्यनुभवस्य सुखादिविशिष्टप्रमातृविषयत्वात् प्रमाश्रयत्वमात्रमहमर्थस्येति वक्तुमशक्यम्। किं च प्रमाविषयत्वमेव तत्र वाच्यम्, न त्वाश्रयत्वम्, उक्तप्रत्यभिज्ञाया विकारिण्यनुपपत्तेः। पूर्वरूपस्य उत्तररूपतादात्म्यात्तदुत्पत्तिविनाशाभ्यां तदुत्पत्तिविनाशप्राप्तेरिति भावः। ननु प्रमाता न परिणामी आरम्भवादस्यैव स्वीकारेण निर्विकारस्यापि प्रमासुखादिसमवायित्वस्वीकारादित्याशङ्क्य धर्मधर्मिणोस्तादात्म्यानुभवात् धर्मस्योत्पत्तिविनाशाभ्यां धर्मिणस्तावदवश्यं वाच्यौ, तदुक्तम्—

उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्। इति।

उपयन् जायमानः अपयन् विनश्यन् विकरोति उत्पत्तिविनाशभाजं करोतीत्याशयेन उपसंहरति—**एकस्येत्यादि**। एकस्य–सर्वदृश्यानुस्यूतस्य। तत्र हेतुः–**कूटस्थस्येति**। स्वसमसत्ताकं

**ननु एकः कूटस्थो निर्धर्मकः साक्षी नाद्रियते अप्रामाणिकत्वादिति चेन्न। 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति, न दृष्टेर्द्रष्टारं पश्येः अदृष्टो द्रष्टा,**

---

रूपान्तरमापद्यते यः तदन्यस्येत्यर्थः। एवकारात् प्रमाता सुखादिरूपं स्वसमसत्ताकपरिणाममापद्यमानो न साक्षीत्यर्थः।

### समवायनिराकरणम्

ननु गुणादिधर्मस्य धर्मिणि तादात्म्यमेव सम्बन्धः न तु समवायाख्यः तदन्यः इत्यत्र का युक्तिरिति चेदत्रोच्यते। यत्र यत्र समवायः प्राभाकराद्यैरुच्यते तत्र तत्र तादात्म्यमेव युक्तम्। तथा हि–संयोगविशेषयुक्तं कपालद्वयं घटः, शाखादिसमुदाय एव सन्निवेशविशेषयुक्तो वृक्ष इत्यनुभवात् तादात्म्यान्यसम्बन्धो न लौकिकानुभवविषयः। 'इह कपाले घट' इत्यादिधीस्तु न लोकानां स्वाभाविकी किन्तु तान्त्रिककल्पनामात्रम्, न ततोऽर्थसिद्धिः अतिप्रसङ्गात्। किञ्च नीलादिगुणस्य घटादौ तादात्म्यास्वीकारे 'घटो नील' इत्यादिसर्वज्ञानेषु घटादौ नीलादिगुणस्य तादात्म्यसम्बन्धेन विशेषणता, न तु समवायेन; तस्यैवासिद्धत्वात्। तथा च 'घटो न नील' इत्यादिज्ञाने नीलादिगुणभेदस्यैव विषयत्वम्, न तु नीलादिसमवायिप्रतियोगिकभेदस्येति नीलादिगुणतादात्म्यधीतद्भेदधियोः 'घटो नीलगुणात्मकः, घटो न नीलगुणात्मक' इत्याकारकयोरेव विरोधित्वं कल्प्यते, सर्वैरेव स्वीकारात्; न तु नीलसमवायितादात्म्यधीनीलसमवायिभेदधियोः, तयोः अलीकत्वात्। तथा च लाघवम्। अपि च नीलादेस्तादात्म्यसम्बन्धेन घटादौ विशिष्टबुद्धिं प्रति घटादौ नीलादिगुणभेदविशिष्टबुद्धेर्विरोधित्वं त्वया मया च कल्प्यम्, त्वया तु समवायेन तत्र तद्विशिष्टबुद्धौ समवायेन यो नीलादिगुणात्यन्ताभावः तद्विविशिष्टबुद्धेर्विरोधित्वं वाच्यमिति समवायतदवच्छिन्नात्यन्ताभावतद्ज्ञानतद्विरोधित्वादिकल्पने तु तव महागौरवम्, तस्मात् कपालघटादिसम्बन्धेषु तादात्म्यत्वरूपोऽखण्डधर्म एव कल्प्यते। 'द्रव्यं घट' इत्यादिधीस्थले सम्बन्धनिष्ठतया क्लृप्तत्वात्। न तु समवायत्वरूपः, क्वाप्यक्लृप्तत्वात्। 'अहं सुखी'त्यादावपि तादात्म्यादिसम्बन्धः सुखादेर्वृत्तिनियामकः क्वचित् संयोग इव। तथा 'घटे रूपमि'त्यादिधीस्तु लोकानां वर्तत एव, तत्रापि तादात्म्यं रूपादेः वृत्तिनियामकमिति दिक्।

### साक्षिणि प्रमाणकथनम्

ननु प्रमाश्रयस्यैव लोके साक्षित्वेन व्यवहारात् एकरूपकूटस्थस्य साक्षित्वं न युक्तम्। न च प्रमाश्रयस्य प्रमेयत्वे विरोधः, गमने गन्तुरिव प्रमायां प्रमातुः कर्मत्वासम्भवादिति वाच्यम्। प्रमोपहितप्रमाविशिष्टरूपभेदेन एकस्यापि प्रमातृत्वप्रमेयत्वोभयोपपत्तेः। अत एव प्रमाया अपि प्रमेयत्वम्, अत्यन्ताभेदे सम्बन्धास्वीकारेऽपि प्रमात्वोपहितप्रमात्वविशिष्टरूपभेदेन विषयित्वविषयत्वोपपत्तेः। न च विकारिणि प्रमातरि नानारूपे उक्तप्रत्यभिज्ञानुपपत्तिरिति वाच्यम्। सुखादिपरिणामात्मकतया नानात्वेऽपि स्वरूपेण प्रमातुरेकत्वात्। एवं च स्वविषयकजन्यप्रमया सर्वव्यवहारोपपत्तौ तदन्यनित्यज्ञानरूपे साक्षिणि मानाभाव इति शङ्कते—**एक इत्यादि**। निर्धर्मकः–प्रमादिधर्मशून्यः। एकादिपदं श्लिष्टम्। एको न साक्षी किन्तु द्वौ त्रयो वा। कूटे कपटे साक्षित्वे यस्तिष्ठति, यो वा धर्मशून्यः, स न साक्षी, धर्मशास्त्रे तथोक्तत्वात् इति श्लेषः। भान्तम्—अपरोक्षव्यवहारविषयम्, अनु—आश्रित्य। किं दृग्दृश्ययोस्सहापरोक्षताव्यवहारमात्रं विवक्षितं तत्राह—**तस्य भासेति**। तदभिन्नभानेनेत्यर्थः।

**नान्योऽतोऽस्ति द्रष्टे'त्यादि वदता वेदान्त-प्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात्। ननु महदेतदिन्द्रजालम्, प्रमाश्रयानकूटस्थान्विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति। बाढम्। इन्द्रजालमेवैतत्स्वप्नवदविद्याविलसितत्वात्। तथापि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमिति चेन्न। दर्पणादिवत्स्वच्छत्वेन चित्प्रति-**

---

विभाति—अपरोक्षव्यवहारविषयः। दृष्टेः–चाक्षुषादिवृत्तिज्ञानस्य, द्रष्टारम्–अनुभवरूपम्, **पश्येः**–चाक्षुषादिवृत्तिविषयीकुर्याः। अदृष्टः–वृत्तिभिन्नानुभवस्यापि अविषयः। तर्हि नित्यचिद्रूपसाक्षिण एव वास्तवं नानात्वमस्तु तत्राह—**नान्योऽतोऽस्ति द्रष्टेति**। यो द्रष्टा सोऽन्तर्यामिस्वरूपादन्यः सन् कुत्रापि नास्ति मिथ्येत्यर्थः। शुद्धेनान्तर्यामिरूपेण द्रष्टा सन् न तु तदन्यरूपेणेति द्रष्टुर्नानात्वं मिथ्येति भावः। **तस्य** कूटस्थचिद्रूपस्य **सर्वसाक्षित्वेन**–स्वभिन्नं सर्वं प्रत्यनुभवरूपतया **अभिषिक्तत्वात्**—लाघवतर्कगङ्गाजलेन संशोध्य सर्वान् प्रति ज्ञापितत्वात्। तथा च लाघवतर्कसहकृतयोक्तश्रुत्या स्वभिन्नसर्वविषयकम् अन्याविषयीभूतमेकं नित्यचिद्रूपं ज्ञानं कल्प्यते। चक्षुरादिजन्यप्रमा तु ज्ञान-व्यञ्जिका, न तु ज्ञानम्; सुखादौ चित एव ज्ञानत्वस्य क्लृप्तत्वात्। तत्र जन्यज्ञानतत्सामग्र्यादिकल्पने तु महागौरम्। यद्यपि यथा प्रमितवक्तरि प्रमातर्येव साक्षिशब्दस्य लोके रूढिः क्लृप्ता, तथापि 'साक्षी चेता' 'सर्वस्य साक्षी'त्यादिश्रुत्या गौण्या वृत्त्या चैतन्येऽपि तत्प्रयोगः। प्रमाता रागद्वेषादिविकारवता-मनेकेषाम् अन्येषु दुष्टादुष्टत्वव्यवहारं जनयति, चैतन्यमपि सर्वेषां विकारवतां व्यवहारं प्रमातृषु जनयतीति सादृश्यादिति भावः। **कूटस्थमप्रमाश्रयमिति**। अप्रमाश्रयस्य साक्षिता लोकविरुद्धा युक्तिविरुद्धा च। सा हि सर्वविकारितादात्म्यरूपा वाच्या। न कूटस्थस्य विकारितादात्म्यं सम्भव-तीति इन्द्रजालवत् सेति भावः। एतत्–कूटस्थस्य साक्षित्वम्, विलसितत्वात्–प्रयुक्तत्वात्। तथापि–अविद्याप्रयुक्तत्वेन मिथ्यात्वात् कूटस्थाकूटस्थतादात्म्यस्यासम्भवपरिहारेऽपि दृश्यस्य–साक्षिभास्य-मनसः। जडत्वेन–साक्षिचिदन्यत्वेन साक्षिचिदाश्रयत्वाभावेन च। **कथं प्रमाश्रयत्वमिति**। प्रमा हि अज्ञातविषयकस्वप्रकाशकज्ञानम्, स्मृतेः प्रमात्वाभावात् स्वप्रकाशत्वाभावे स्वयं सन्दिग्धत्वेन विषय-भासकत्वाभावात्। तथा चाज्ञातं घटादिकं ज्ञात्वा तत्प्रमाजननाय चक्षुर्व्यापारादौ यदा मनः प्रवर्तते, तदा तस्याज्ञातघटादिज्ञातृत्वमनुपपन्नम्, साक्षिण एव तत्सम्भवात्। तदुक्तं विवरणे—'अज्ञाततया ज्ञाततया च सर्वं साक्षिभास्यमि'ति। एवं मनसो घटादिविषयकस्वप्रकाशज्ञानाश्रयत्वमनुपपन्नम्। तथा चाज्ञातघटादिज्ञानाश्रयत्वेनापि मनसः प्रवृत्त्युपपत्तिः न सम्भवति। प्रमिणोमी'ति धीविषयस्य ज्ञानाश्रयत्वस्य चानुपपत्तिः। न च चिद्रूपे ब्रह्मणि घटादेरिव मनसोऽपि तादात्म्येनाध्यासात् घटाद्या-कारनिर्गतमनसो वृत्त्या घटादिचैतन्यस्य मनोऽवच्छिन्नत्वसम्पत्त्या घटादिविषयकस्वप्रकाशचिदा-श्रयत्वं मनसः सम्भवतीति वाच्यम्। मनसो ज्ञानतादात्म्येऽपि ज्ञानाश्रयत्वासम्भवात्। न ह्यधिष्ठाना-श्रयत्वमारोप्ये क्वापि दृष्टम् इति भावः। **ईशस्य जीवस्य वा** जगदुपादानत्वेऽप्येवमिति भावः।

स्वच्छत्वेन—प्रतिबिम्बसम्बन्धयोग्यत्वेन, चित्प्रतिबिम्बग्राहकत्वात्—साक्षिप्रतिबिम्बवत्त्वात्। तथा च साक्षिरूपज्ञानाधारत्वं मनस उपपन्नम्। प्रतिबिम्बत्वं हि मुखादेर्दर्पणादौ अन्तराश्रितत्वम्, दर्पणस्यान्तर्मुखमस्तीत्यनुभवात्। तद्दृष्टान्तेन साक्षिणो मनस्यन्तराश्रितत्वविशिष्टरूपेणाध्यास-

**बिम्बग्राहकत्वाच्चित्तादात्म्याध्यासाद्वा। ननु नीरूपस्य निरवयवस्य कथं प्रतिबिम्ब इति चेत्, काऽत्रानुपपत्तिः? विभ्रमहेतूनां विचित्रत्वात्। जपाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्बदर्शनाच्छब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात्तयोः सम्प्रतिपन्नप्रतिबिम्ब-वैलक्षण्यानिरूपणात्। तथापीन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति चेन्न। व्यभिचारात्।**

---

कल्पनात्। नन्वन्तराश्रितत्वसम्बन्धमात्रेण साक्षी मनोभासको न स्यात्, तादात्म्यस्यैव घटादौ साक्षिभास्यतानियामकत्वेन क्लृप्तत्वात्। अपि च साक्षितादात्म्यं विना अज्ञातघटादिप्रमार्थं मनसः प्रवृत्त्यनुपपत्तेरित्युक्तम्। 'अहमि'ति प्रत्यये साक्षिमनसोस्तादात्म्यस्य भानं सर्वानुभाविकं च; तत्राह— **चित्तादात्म्याध्यासादिति**। साक्षितादात्म्याध्यासादित्यर्थः। 'अविद्योपहितेऽहङ्कारोऽध्यस्यते, तदुपहिते कामादयः तद्विशिष्टे स्थूलशरीरमि'त्यादेः वक्ष्यमाणत्वात् अविद्योपहितस्य साक्षिणः विशेष्यत्वरूपेणाधारत्वेन मनसस्तादात्म्यवत्त्वेन भ्रमे स्फुरणम्, 'अज्ञोऽहमि'ति प्रत्ययात्। शुद्धचित्तु सर्वदृश्याधिष्ठानमेव नाधार इति न विरोधः। 'इदं रजतमि'त्यादिभ्रमे हि इदमादेराधारत्वेन रजत-तादात्म्येन स्फुरणेऽपि शुक्तित्वादिविशिष्टस्याधिष्ठानस्य यथा अस्फुरणं तथा प्रकृतेऽपि।

जीवेशयोर्मनोऽविद्याप्रतिबिम्बत्वपक्षे विम्बचिदेव साक्षी, ईशस्य बिम्बत्वं जीवस्याविद्यायां प्रतिबिम्बत्वमिति पक्षे तु शुद्धचित्, वार्तिकमते तु अविद्याचिदाभासरूप ईशस्साक्षीति पक्षत्रयं मूले वक्ष्यते। तथाप्यविद्यायां तद्वृत्तौ वा प्रतिबिम्बितः जीवः साक्षीति पक्षान्तरमद्वैतसिद्धावुक्तम्। सर्वथापि साक्षिण एव ज्ञानत्वात्तस्यैव मनसि प्रतिबिम्बितत्वेन मनसो ज्ञानाश्रयत्वम्, तत्र मन-स्तादात्म्याध्यासेन मनोभासकत्वं च बोध्यम्। उक्तानां त्रयाणां पक्षाणां मध्ये आद्ये असाक्षिणो[1] जगदुपादानत्वे साक्षिणस्तद्द्वारा मनस्तादात्म्यम्। द्वितीये साक्षिण एव जगदुपादानत्वेन साक्षादेव तत्, अन्यथा तूपादानद्वारा। तृतीये तु साक्षिण एव जगदुपादानत्वात् साक्षादेव तत्। **वस्तुतस्तु** यत्पक्षे यस्साक्षी तदेवोपादानम्, अधिष्ठानस्यैवाध्यासिकतादात्म्येन भासकत्वात् अतस्साक्षा-देव तादात्म्यम्। **निरवयवस्येति**। साक्षिण इति शेषः। विचित्रत्वात्—एकविधत्वाभावात्। सरूपस्येव नीरूपस्यापि प्रतिबिम्बभ्रमरूपकार्योपलम्भात् सरूपस्थलीयकारणाद्विलक्षणं कारणं नीरूपस्थले कल्प्यत इति भावः। ननु प्रतिबिम्बस्य सरूपसावयवत्त्वेनैवप्रतीतिः, रूपावयव-विशिष्टस्यैव हि मुखादेर्दर्पणाद्युपाध्यन्तर्गतत्वमारोपितं प्रतिबिम्बशब्देन व्यवह्रियते, तथा च कथं नीरूपादेः प्रतिबिम्बोक्तिस्तत्राह—**जपाकुसुमेत्यादि**। **प्रतिशब्दाख्यप्रतिबिम्बेति**। मठमध्यस्थपुरुष-कर्णावच्छिन्नत्वेन उपलभ्यमानशब्दस्य मठान्तरुपरिभागावच्छिन्नाकाशरूपोपाध्यन्तर्गतत्वेन प्रतीय-मानत्वात् प्रतिबिम्बत्वमस्तीति प्रतिबिम्बीभूतशब्दबोधिका प्रतिशब्द इत्याख्या यस्येत्यर्थः। तथा च प्रतिबिम्बस्य सरूपसावयवत्त्वेनैव धीरिति न नियमः, किन्तूपाध्यन्तर्गतत्वरूपप्रतिबिम्बत्वेनैवेति भावः। **सम्प्रतिपन्नप्रतिबिम्बेति**। प्रतिबिम्बत्वेन सर्वसम्मतमुखादिप्रतिबिम्बेत्यर्थः। दर्पणाद्यन्तर्गत-त्वेन भ्रमो यावद्दर्पणसन्निधानं तदनुवृत्तिश्च मुखादिप्रतिबिम्बेऽस्ति, जपारूपादावपि स्फटिकाद्यु-पाध्यन्तर्गतत्वभ्रमो यावत् स्फटिकाद्युपाधिसन्निधानं तदनुवृत्तिश्चेति स्फटिकादौ प्रतीयमानजपा-

---

१. शुद्धस्य।

**अनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्याकाशस्यापि जलादौ प्रतिबिम्बोपलम्भात् । अन्यथा जानुमात्रेऽप्युदके अतिगम्भीरप्रतीतिर्न स्यात् । आकाशप्रतिबिम्बस्य साक्षिभास्यत्वेऽपि अधिष्ठानग्रहणार्थं चक्षुषोऽपेक्षणात् ।**

---

कुसुमरूपादेः मुखादिना साम्यमेव, न तु तस्य ततो वैलक्षण्यं निरूपयितुं शक्यमिति भावः । शङ्कते—**तथापीति** । नीरूपादेः प्रतिबिम्बस्वीकारेऽपीत्यर्थः । **साक्षिप्रत्ययक्षस्येति**—साक्षिभास्यस्येत्यर्थः ।

ननु नभसः सुखादिवत् साक्षिभास्यत्वे अन्धस्यापि नभस्साक्षात्करोमीति व्यवहारः स्यादिति **चेत्**, स्यादेव । जाग्रत्स्वप्नयोर्हि भासमानमूर्तावच्छिन्नतया नभो भासत एव । ननूर्ध्वं व्यापृतचक्षुषो यावति नभोभागे संयोगो जायते तावानेव स भासते तस्मात् नभश्चाक्षुषमिति **प्राभाकरमतं न युक्तम्** । किञ्च घटादौ भासमाने तदवच्छिन्नमेव नभो भातीति कुतस्सम्पूर्णमेव नभो भायात् नभसश्चाक्षुषत्वे तु घटादाविव नभस्यपि यावति भागे चक्षुषस्संयोगः तावानेव स भासत इति युक्तमिति **चेन्न** । यथा हि कालस्य साक्षिवेद्यत्वेऽपि भासमानघटाद्यधिकरणक्षणरूपकाल एव तथा, घटाद्याकारवृत्तेर्घटाद्यधिकरणक्षणावरणविरोधित्वस्वीकारेण तस्यैवानावृतसाक्षिसम्बन्धात्, तद्भानेनैव 'इदानीं घटः, इदानीं पट' इत्यादिप्रत्ययोपपत्तेश्च । परोक्षज्ञानेऽपि अतीतानागतक्षणानां वृत्तिविषयत्वस्वीकारादेव सर्वप्रत्ययेषु [1]स्वविषयाधिकरणक्षणविषयत्वनियमोपपत्तेश्च, तथा नभसस्साक्षिवेद्यत्वेऽपि भासमानघटाद्यवच्छिन्नस्यैव तस्य तत्, घटाद्याकारवृत्तेरेव घटाद्यवच्छिन्नाकाशावरणविरोधित्वेन तस्यैवानावृतसाक्षिसम्बन्धात्तावतैव घटाकाशः पटाकाश इत्यादिप्रत्ययोपपत्तेश्च । ऊर्ध्वं व्यापृतेन तु चक्षुषा यावानेवालोकभागो गृह्यते तावदवच्छिन्नाकाशं साक्षिणा गृह्यते । अन्धेनापि त्वचा गृह्यमाणघटादौ तदवच्छिन्नं नभः साक्षिणैव गृह्यते । यदि च तेन तमो गृह्यते, तदा तदवच्छिन्नं नभोऽपि । एवं मनसि गृह्यमाणे तदच्छिन्नं नभोऽपि, शरीरस्यान्तर्बहिराकाशस्य प्रतीतेः । यदि च तम आद्यवच्छिन्नं नभो न प्रतीयत इत्यनुभवः तदा घटाद्याकारेन्द्रियजन्यमनोवृत्त्यभिव्यक्तसाक्षिभास्यं तदास्ताम् । नन्वाच्छादितमुखे घटादौ गृह्यमाणे तदन्तराकाशं साक्षिणा गृह्यतामिति चेन्न । अन्तर्भागस्येन्द्रियाद्यसंयुक्तत्वेन तत्र साक्षिणोऽनभिव्यक्ततया तदवच्छिन्नाकाशस्याभिव्यक्तसाक्षिसम्बन्धाभावात् । तस्मादाकाशाकारमनोवृत्तिं विनापि यद्देशावच्छेदेन साक्ष्यभिव्यक्तस्तद्देशावच्छिन्ननभसस्तद्ग्राह्यतेति भावः । **जानुमात्रेऽप्युदकेऽतिगम्भीरप्रतीतिरिति** । जानुमात्रपरिमाणापेक्षयाऽधिकपरिमाणविशिष्टस्याकाशभागस्य जानुमात्रोदकान्तर्गतत्वेन प्रतीतिरित्यर्थः । जानुद्वयादिपरिमिते जले अन्तर्गततया यावत आकाशभागस्य धीस्तावतो जानुमात्रजलेऽपीति तदन्यथानुपपत्त्या तत्रोपरिस्थितस्य तावत आकाशस्य प्रतिबिम्बत्वमवश्यं वाच्यमिति भावः ।

ननूक्तव्यभिचारोक्तिर्न युक्ता, नभसोऽपि चाक्षुषत्वात् । चक्षुषा हि जलाभिहतेन नभो गृहीत्वा तत्र जलान्तर्गतत्वमारोप्यते, अन्यथा 'जानुद्वयादिपरिमितमाकाशमस्मिन्नुदकेऽन्तर्गतमि'ति भ्रमे चक्षुसंयोगापेक्षा न स्यात्, उक्तभ्रमे आकाशस्य अधिष्ठानत्वेन अधिष्ठानज्ञानार्थं चक्षुरपेक्षेत्यस्य च वक्तुमशक्यत्वात् । तथा च निमीलितचक्षुषोऽपि पुंसः स स्यात् तत्राह—**प्रतिबिम्बस्येत्यादि** । **अधिष्ठानग्रहणार्थमिति** ।

---

१. स्वक्षणाधिकरणविषयकत्व ।

**एतेन नीलं नभ इत्यादिविभ्रमेऽपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ । तत्र सालोकस्याकाशस्याधिष्ठानत्वात् । तस्माच्चाक्षुषबिम्बमेव रूपसापेक्षं नान्यदित्यवधेयम् । तथाप्यात्मनः प्रतिबिम्बे किं प्रमाणमिति चेत्, शृणु ।**

---

अधिष्ठानसामान्यांशस्य चाक्षुषार्थमित्यर्थः । जलस्य आकाशभागविशेषशून्यस्योक्तभ्रममूलीभूताज्ञानविषयत्वरूपमधिष्ठानत्वम्, अतस्तत्सामान्यांशरूपजलज्ञानस्योक्तभ्रमहेतुत्वात्तादृशज्ञानार्थं चक्षुरपेक्षणेऽपि नभसश्चाक्षुत्वासिद्धयोक्तव्यभिचारोक्तिर्युक्तैवेति भावः । नन्वेवमपि 'नील नभ' इत्यादिभ्रमे नभस एवाधिष्ठानत्वात्तच्चाक्षुषार्थतया चक्षुरपेक्षणं वाच्यम्, तथा च नभसस्साक्षिमात्रवेद्यत्वहानिः; उक्तभ्रमे चक्षुरनपेक्षणे तु निमीलितचक्षुषोऽपि स स्यात्तत्राह—**एतेनेति** । अधिष्ठानसामान्यांशभिन्नस्य साक्षिमात्रवेद्यत्वेऽप्युक्तांशज्ञानरूपस्य भ्रमकारणस्य निष्पत्तये चक्षुरपेक्षणमिति वचनेनेत्यर्थः । व्याख्यातौ—चक्षुषो भ्रमोपयोगिताग्राहकत्वेन सूचितौ । 'नीलं नभ' इति भ्रमश्चक्षुस्संयोगे सति भवति, असति च न भवतीत्यन्वयव्यतिरेकाभ्यां तादृशभ्रमकारणेऽधिष्ठानसामान्यज्ञाने चक्षुरपेक्षेति निर्णीयत इति भावः । ननु तथापि नभसश्चाक्षुषत्वमेवागतं तत्राह—**तत्रेति** । 'नीलं नभ' इति वाक्येन कथ्यमाने भ्रम इत्यर्थः । सालोकस्य–सालोकस्यैव । अधिष्ठानत्वात्–अधिष्ठानसामान्यांशरूपत्वात् । तथा च नभश्शब्देन सालोकं नभ एव कथ्यत इति भावः । नन्वेवं सालोकाकाशस्यैव जले प्रतिबिम्ब इति वक्तुं शक्यत्वादिन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति नियमे कथं व्यभिचार उक्तः ? इति चेन्न । चक्षुरपेक्षणान्यथानुपपत्त्या नभोनैल्यभ्रमे सालोकाकाशस्यैव भानम्, जले आकाशप्रतिबिम्बभ्रमे तु सालोकनभसो नियमेन भाने मानाभावः तत्र चक्षुरपेक्षणस्य जलरूपाधिष्ठानग्रहणार्थत्वेनैवोपपन्नत्वादिति भावः ।

ननु यत्र यत्र प्रतिबिम्बभ्रमस्तत्र तत्रोपाधिना संयुक्तास्तेनाभिहताश्चक्षूरश्मयो बिम्बेन सह पश्चात्संयुज्य बिम्बे चाक्षुषमुत्पादयन्ति, पश्चाद् बिम्बे उपाध्यन्तर्गतत्वमारोप्यत इति क्रमनियमः, तथा च रूपं विना बिम्बभूतद्रव्यचाक्षुषाभावात्कथं नभसः प्रतिबिम्बत्वमुक्तं तत्राह–**तस्मादिति** । इन्द्रियग्राह्यस्यैव प्रतिबिम्ब इति नियमाभावादित्यर्थः । चाक्षुषप्रतिबिम्बं–चाक्षुषद्रव्यस्य प्रतिबिम्बम् । रूपसापेक्षम्–उक्तरीत्याऽपेक्षितबिम्बचाक्षुषजनकरूपसापेक्षम् । तथा च सर्वत्र प्रतिबिम्बभ्रमे नोक्तक्रमनियम इति नभःप्रतिबिम्बे बाधकाभाव इति भावः ।

### आत्मनः प्रतिबिम्बे प्रमाणम्

**किं प्रमाणमिति** । ननूक्तरीत्या प्रमाश्रयत्वान्यथानुपपत्तिर्मनस आत्मप्रतिबिम्बवत्त्वे मानमित्यस्योक्तत्वात्कथं पुनर्मानप्रश्न इति चेत्, उच्यते । प्रमिणोमीत्यादिप्रत्यये प्रमातादात्म्यमेव भाति, न तु प्रमाश्रयत्वम् । भातु वा तदेव, तथापि प्रमाया अज्ञातविषयकज्ञानरूपत्वात् ज्ञानस्य चासत्त्वापादकाज्ञानविषयत्वाभावप्रयोजकविशिष्टचिद्रूपत्वात्तादृशचिद्रूपस्यैव ब्रह्मणीव मनस्यप्याश्रयत्वं कल्पितं स्वीक्रियते । अत एव 'आनन्दो विषयानुभवः नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इत्यादिपञ्चपाद्युक्त्या निर्धर्मकब्रह्मणो धर्मो देहादौ कथमध्यस्यत इति पूर्वपक्षस्समाहितः । तथा च तत एव 'ब्रह्मणि ज्ञानमि'तिवत् 'मयि ज्ञानम्, अहं ज्ञानवानि'ति व्यवहारः । न च अहं जानामीतिवद्घटो जानाती'ति व्यवहारः स्यादिति वाच्यम् । उक्ताज्ञानविरोधिविशिष्टचिद्रूपज्ञानस्य ब्रह्मधर्मस्य देहमनसोरेव संसर्गाध्यासात् पूर्वपूर्वतदध्याससंस्काररूपकारणस्य तयोरेव सम्भवेन

**'रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय', 'माया आभासेन जीवेशौ करोती'-त्यादिश्रुतिः 'एकधा बहुधा चैव दृश्यते जलचन्द्रवदि'तिस्मृतिः। 'स एष इह प्रविष्ट आनखाग्रेभ्यः' स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत, तत्सृष्ट्वा तदेवानुप्राविशदि'त्यादिप्रवेशश्रुत्यर्थापत्तिः।**

---

तयोरेव तदध्यासस्वीकारादुक्तज्ञानसमानाधिकरणतदनुकूलव्यापारविशेषस्यैवोक्तव्यवहारविषयत्वेन तस्य घटादावसत्त्वात्। तथा चासत्त्वापादकाज्ञानविरोधिविशिष्टरूपेण चितो मनआश्रितत्वस्वीकारेऽपि साक्षिणो मनस्यन्तर्गतत्वरूपप्रतिबिम्बितत्वे न मानम्। अत एव **वाचस्पति**मते तन्न स्वीक्रियत इति श्रुतेरेव तत्र मानतां वक्तुं किं प्रमाणमिति प्रश्नोपन्यासः। **रूपमिति**। रूप्यते अहमिति धिया व्यवह्रियते आत्मा येन मनसा तत् रूपम्, रूपं रूपं प्रति प्रतिरूपः प्रतिबिम्बरूपः। प्रतिबिम्बशब्दस्येव बिम्बस्वरूपार्थकरूपपदान्तस्य प्रतिरूपशब्दस्यापि प्रतिबिम्बार्थकत्वात्। 'स पक्षी भूत्वा पुरः पुरुष आविशदि'ति पूर्ववाक्येन मनोरूपासु पूर्षु तदन्तर्गतत्वरूपस्य प्रवेशस्योक्तत्वात्तदुत्तरेण 'तदेतदृषिः पश्यन्नवोचद् रूपं रूपं प्रतिरूपो बभूवे'तिवाक्येनोक्तप्रवेशस्यैवोक्तेर्युक्तत्वात्। **तदिति**। प्रतिबिम्बात्मकमित्यर्थः। प्रतिचक्षणाय—अहमित्यादिव्यवहाराय। माया—अविद्या, आभासेन—स्वगतप्रतिबिम्बेन जीवेशौ प्रतिबिम्बबिम्बरूपौ, करोति—सर्वान्प्रति व्यवहारयति। जीवविषयकव्यवहारस्याभासप्रयुक्तत्वं स्फुटमेव। ईशविषयकस्यापि व्यवहारस्य तदस्त्येव। बिम्बत्वोपहितचिद्रूपस्येशस्य आभासप्रयुक्तत्वेन ईशप्रयुक्तस्येशविषयकव्यवहारस्येशद्वारा आभासप्रयुक्तत्वसम्भवात्। इत्यादिश्रुतिरित्यादिपदेन—

यथा ह्येको ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा॥

इत्यादिश्रुतयो ग्राह्याः। **एकधेत्यादि**। परमार्थत एकरूप एवात्मा, तथाप्युपाधिप्रतिबिम्बितबहुप्रकारैर्दृश्यते प्रतीयते, जलप्रतिबिम्बितनानाप्रकारैश्चन्द्रः इवेत्यर्थः।

एक एव तु भूतात्मा भूते भूते व्यवस्थितः।

इति पूर्वार्धम्। **तदित्यादि**। तत् जगत् सृष्ट्वा ब्रह्म तदेव जगत् अनुप्राविशदित्यर्थः। यद्यप्यविद्यायां मनसि च प्रतिबिम्बरूपः प्रवेशः, न तु शरीरघटादौ; तथाप्यविद्यामनस्तद्वृत्तिद्वारा सर्वत्र दृश्ये प्रवेशः। अतीन्द्रियार्थेष्वपीश्वरीयमायावृत्तिविशिष्टरूपेषु प्रतिबिम्बरूपप्रवेश इति बोध्यम्। न चैवमीश्वरीयमायावृत्तिद्वारैव सर्वत्र प्रवेशसम्भवात् मनस्तद्वृत्तिषु प्रवेशस्य प्रकृतश्रुतिबोध्यत्वे मानाभाव इति वाच्यम्। 'रूपं रूपं मि'त्यादिश्रुत्या—

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्॥

इत्यादिपूर्विकया मनःप्रवेशस्यैव प्रतीतेः। 'स एष इह प्रविष्ट आनखाग्रेभ्य' इत्यादिपूर्विकया 'प्राणन्नेव प्राणो नाम भवति वदन्वागि'त्यादिश्रुत्या च तथैव प्रतीतेः। **श्रुत्यर्थापत्तिः**—श्रुतेरन्यथानुप-

**'आभास एव च, अत एव चोपमा सूर्यकादिवदि'त्यादिसूत्राणि च तत्र तत्र मानानि। तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिम्बिवादिनः। मिथ्यात्वमेवेत्याभासवादिनः। स्वरूपे तु न विवाद एवेत्यन्यदेतत्। अचेतनविलक्षणत्वन्तु श्रुतिसिद्धं अनुभवसिद्धं च। तस्मात्सिद्धमन्तःकरणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वम्।**

---

पन्नत्वधीः। प्रवेशबोधनमात्रेण न मनसि प्रतिबिम्बलाभः, अधिष्ठानतयापि प्रवेशसम्भवात्; परन्तु घटादावप्यधिष्ठानतया प्रवेशसम्भवान्नखाग्रपर्यन्तप्रवेशस्य मनस्येवोक्तेः प्रतिबिम्बत्वरूपमनोन्तर्गतत्वरूपप्रवेशविशेषतात्पर्यकत्वं विनाऽनुपपन्नत्वग्रहाल्लक्षणया तादृशप्रवेशबोधनमिति भावः।

'आभास एव चे'त्यस्य द्वितीयाध्यायतृतीयपादस्थसूत्रस्यायमर्थो भाष्योक्तः—'आभास एव च एष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः न स एव साक्षात्। नापि वस्त्वन्तरम्। ततश्च यथा नैकस्मिन् जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते एवमेकैकस्मिन् जीवे कर्मफलसम्बन्धिनि जीवान्तरस्य न तत्फलसम्बन्ध' इति। 'अत एव चोपमा सूर्यकादिवदि'ति तृतीयाध्यायद्वितीयपादस्थसूत्रस्यायं भाष्योक्तार्थः—यत एकोऽयमात्मा निर्विशेषचिद्रूपो 'नेति नेती'त्यादिश्रुतिप्रमितः, अत एवापारमार्थिकीं विशेषवत्तामभिप्रेत्य जलप्रतिबिम्बितसूर्यवदित्युपमोपादीयते 'यथा ह्ययं ज्योतिरात्मा विवस्वानि'त्यादिवाक्येष्विति। इत्यादीत्यादिपदेन 'अम्बुवदग्रहणात्तु न तथात्वम्, वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्, दर्शनाच्चे'ति सूत्राणि गृह्यन्ते। [यथा] मूर्तसूर्यदेशापेक्षया दूरदेशस्थत्वं सूर्यप्रतिबिम्बोपाधेरम्बुनो गृहीतम्, तथा अमूर्तात्मदेशापेक्षया दूरदेशस्थत्वं च मनसो न दृष्टम्। अतो नात्मनो मनसि प्रतिबिम्बोदयः। उपमावाक्यं तु वृद्धिह्रासभाक्त्वं यथा जलगतसूर्यके प्रतीयते, तथा मनोगतमात्मनीति बोधयति, न तु यथा जले सूर्यस्यान्तर्भावरूपसूर्यप्रतिबिम्बितत्वम्, तथा मनस्यात्मन इत्याद्यसूत्रार्थः 'अहं सुखी दुःखी'त्यादिप्रत्ययेष्वात्मनोऽन्तर्भावरूपं प्रतीबिम्बत्वमादायैव वृद्धिह्रासभाक्त्वमेव पूर्वोक्तोपमावाक्येन बोध्यते, न त्वन्तर्भावं त्यक्त्वा, उभयोर्विप्रकृष्टमूर्तप्रतिबिम्बस्य सन्निकृष्टामूर्तप्रतिबिम्बस्य च सामञ्जस्यादुपपन्नत्वात्, सन्निकृष्टामूर्ताकाशादेर्जलादाविव तादृशात्मनोऽपि अहङ्कारप्रत्ययेन मनस्यन्तर्भावसिद्धिः भ्रमहेतूनां नानाविधानामनुभवबलेन कल्पनादिति द्वितीयसूत्रार्थः। 'स पक्षी भूत्वा पुरः पुरुष आविशदि'त्यादिश्रुत्या आत्मनो मनोन्तर्भावोक्तिदर्शनाच्चोक्तार्थः प्रामाणिक इति तृतीयसूत्रार्थः।

ननु 'प्रतिबिम्बरूपं सत्यमिति **विवरणकारादि**मते मनःप्रतिबिम्बस्वरूपस्य चिद्रूपत्वादहमित्याकारधीविषयत्वं युक्तम्, तद्धियश्चेतनविषयकत्वात्। प्रतिबिम्बस्वरूपमुपाध्यन्तर्गतमारोपितं मिथ्ये'ति **वार्तिककारादि**मते तु तस्य कथमहमित्याकारधीविषयत्वं तत्राह—**तस्येत्यादि। श्रुतिसिद्धमिति।** 'तदस्य रूपं प्रतिचक्षणाय' इत्यादिश्रुतिसिद्धमित्यर्थः। मिथ्यात्वपक्षेऽपि तस्याधिष्ठानीभूतचित्तादात्म्याध्यासाच्चेतनत्वमिति भावः। अनुभवसिद्धम्—अहं चेतन इत्याद्यनुभवसिद्धम्। एवं च मनसि चित्प्रतिबिम्बे श्रुत्यादिसिद्धे तत एव प्रमाश्रयत्वं तत्रोपपादनीयम्। प्रेमास्पदत्वनित्यत्वादेर्ब्रह्मधर्मस्य दृश्यमात्रे संसर्गाध्यासस्वीकारेऽपि देहमनसोरेव ज्ञानरूपब्रह्मधर्मसंसर्गाध्यास इति कल्पने मानाभावात्। **वाचस्पति**मते त्वमूर्तस्य प्रतिबिम्बास्वीकारेऽपि स प्रामाणिक इत्याशयेनाह—**तस्मादिति**। चित्प्रतिबिम्बस्य प्रामाणिकत्वादित्यर्थः। **प्रतिबिम्बेति**। अविद्योपहितचित्प्रतिबिम्बेत्यर्थः। प्रमातृत्वं—प्रमाश्रयत्वम्।

**ननु अध्यासोऽपि नोपपद्यते। तथा हि—आत्मनि वाऽनात्मा अध्यस्यते अनात्मनि वा आत्मा ? नाद्यः। तस्य निस्सामान्यविशेषत्वेन सर्वदा भासमानत्वेन सादृश्यादिरहितत्वेन चाधिष्ठानत्वासम्भवात्। नापि द्वितीयः। तस्य मिथ्यात्वाभ्युपगमात्। मिथ्यावस्तुनोऽधिष्ठानत्वे शून्यवादप्रसङ्गात्। तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसङ्गाच्च। न हि सत्यं क्वचिन्निवर्तते निवर्त्यमानं वा ज्ञानेन। श्रुतयश्च—**

**'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥'**

**'तमेव विदित्वाऽतिमृत्युमेति', 'नान्यः पन्था विद्यते अयनाय' 'तरति शोक-**

---

**नन्वध्यासोऽपीत्यादि**। मनसः प्रमातृत्वानुपपत्तेश्चित्प्रतिबिम्बाध्यासेन निरासो न युक्तः, अध्यासस्याप्यनुपपत्तेरित्यर्थः। **निस्सामान्येत्यादि**। आत्मनः स्वप्रकाशत्वेन सदा भानात्सादृश्यादिदोषहीनत्वाच्च नाधिष्ठानता। अज्ञातं हि दोषसंसृष्टमधिष्ठानं भवति। ननु चिद्रूपेणात्मा स्वप्रकाशः न तु पूर्णानन्दरूपेण, तथा चेदन्त्वेन ज्ञातापि शुक्तित्वेनाज्ञाता शुक्तिरिव सोऽधिष्ठानं स्यात् अत उक्तं—**निस्सामान्यविशेषत्वेनेति**। चिद्रूपः सामान्यांशः भ्रमे भासमानत्वात्। पूर्णानन्दस्तु विशेषांशः तदभावात् इति विभागस्याप्यध्यासत्वेन अध्याससामान्यम्प्रति न तस्योपपादकतेति भावः। तस्य—अनात्मनः। मिथ्यात्वाभ्युपगमात्—सिद्धान्तिना स्वरूपतो मिथ्यात्वस्वीकारात्। मिथ्यावस्तुनः—मिथ्यास्वरूपस्य। शून्यवादप्रसङ्गात्–शून्यवादिनं प्रत्यापादितदोषप्रसङ्गात्। सर्वस्य मिथ्यात्वे हि ज्ञानानां बाध्यबाधकत्वव्यवस्था न स्यात् प्रमयैव भ्रमो बाध्यते। शून्यवादे च सर्वस्य मिथ्यात्वात् न प्रमास्तीति बाध्यबाधकभावो न क्वापीति दोष आपादितः। तस्य–अनात्मनः। **अनिर्मोक्षेति**। निश्शेषसंसारोच्छेदाभावेत्यर्थः। निवर्त्तते–उच्छिन्नं भवति। ननु प्रपञ्चसत्यतामते घटादिकं दण्डादिप्रहारेणोच्छिद्यत एव तत्राह–**निवर्त्यमानमिति**। उच्छिद्यमानमित्यर्थः। सत्यमित्यनुषज्यते। तथा च सत्यं यत् तत् ज्ञानोच्छेद्यं न भवतीत्यर्थः। ननु सेतुदर्शनादिना पापादिकं सत्यमुच्छिद्यत एव परमत इति चेन्न। ज्ञानशब्दस्य स्वप्रयोजकाज्ञानसमानविषयकज्ञानार्थकत्वात्। तथा च यद् सत्यं तत् स्वप्रयोजकाज्ञानसमानविषयकज्ञानेन नोच्छिद्यत इत्यर्थः। स्वपदं ज्ञाननाश्यपरम्। तादृशश्च ब्रह्मज्ञानमेव। **भिद्यत इत्यादि**। हृदयस्याहङ्कारचित्तादात्म्याध्यासस्य ग्रन्थिरिव मूलीभूतमज्ञानं भिद्यते विदार्यते आवरणशक्तिमुच्छिद्य भोगसमाप्तिपर्यन्तं विक्षेपशक्तिमात्रविशिष्टं स्थाप्यते। शक्तिद्वयानङ्गीकारे अज्ञानस्वरूपमुच्छिद्य तत्कार्यसंस्कारदेहादिमात्रं स्थाप्यत इत्यर्थः। सर्वसंशयाः–आत्मा कर्ता न वा ? अकर्तापि भोक्ता न वा ? अभोक्तापि ब्रह्म न वेत्यादिसंशयाः। छिद्यन्ते–भिद्यन्ते आवरणशक्तिरूपमूलोच्छेदादुत्पत्त्ययोग्याः क्रियन्त इव यावत्। कर्माणि–अभुज्यमानानि पूर्वसञ्चितपापपुण्यानि। क्षीयन्ते उपादानीभूतविक्षेपशक्तिविशिष्टाज्ञानसत्त्वपर्यन्तं विद्यमानान्यपि स्वाश्रये मनसि सुखादिकं न जनयन्ति। 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति श्रुत्या ज्ञानिनः पुण्यादिना तदीयसुहृदादौ फलजननोक्तेः। उक्तप्राप्त्यस्वीकारे तु नश्यन्तीत्यर्थः। अस्य–दृष्टतत्त्वस्य। हृदयग्रन्थ्यादिषु त्रिषत दन्वयः। तस्मिन्–प्रत्यगात्मनि, दृष्टे–साक्षात्कृते,

**मात्मविदि'त्याद्याः ज्ञानात्सर्वसंसारनिवृत्तिं दर्शयन्त्यः तस्य च मिथ्यात्वं सूचयन्ति। 'एकमेवाद्वितीयम्' 'अतोऽन्यदार्तम्' 'नेह नानास्ति किञ्चन' 'अथात आदेशो नेति नेती'त्याद्याः श्रुतयः साक्षादेव मिथ्यात्वं प्रतिपादयन्ति। दृश्यत्वेन शुक्तिरजतादिवन्मिथ्यात्वानुमानाच्च।**

---

परावरे–परः ईशोऽपि अवरः अध्यस्तत्वेनापकृष्टः यस्माच्छुद्धब्रह्मणः तदभिन्ने। तमेव–आत्मानमेव, अतिमृत्युमेति–अज्ञानमतिक्रामति, नाशयतीति यावत्, अन्यः–तन्मात्रज्ञानादन्यः, पन्थाः–उपायः, अयनाय–स्वरूपप्राप्तये। तरति–नाशयति, शोकम्–अज्ञानम्। **सर्वसंसारेति**। सर्वप्रपञ्चमूलाज्ञानेत्यर्थः। तस्य–सर्वप्रपञ्चस्य। **सूचयन्तीति**। अज्ञानादेर्ज्ञाननिवर्त्यत्वरूपमिथ्यात्वोक्त्या तन्मूलकसर्वप्रपञ्चस्य मिथ्यात्वं सूचितम्, अज्ञानोच्छेदकस्याज्ञानमूलकदृश्योच्छेदकत्वनियमादित्यर्थः। एकं–सजातीयद्वितीयरहितम्। एव स्वगतधर्मरूपद्वितीयरहितम्। अद्वितीयं–विजातीयद्वितीयशून्यम्। 'सदेव सोम्येदमग्र-आसीदि'ति पूर्ववाक्यम्।

**सदेवेत्यादीनां प्रपञ्चमिथ्यात्वबोधकत्वोपपत्तिः**

ननु नानेन वाक्येन सर्वदृश्यमिथ्यात्वं बोध्यते, सृष्टिपूर्वकालावच्छेदेन ब्रह्मणो दृश्याभावबोधनादिति चेन्न। दृश्याभावे अग्रकालावच्छिन्नत्वानन्वयात्। इदं हि वाक्यं सद्रूपं जगत्कारणमनभ्युपगच्छतां सौगतानामद्वितीयजगत्कारणमनभ्युपच्छतां तार्किकादीनां च मतनिराकरणाय। तथा च यदग्रे सृष्टेः पूर्वमासीत् तत् सत् अद्वितीयञ्चेति बोध्यते। तत्र निषेधस्य प्राप्तिपूर्वकत्वात् येन सम्बन्धेन यद्देशकालावच्छेदेन यस्य दृश्यस्य सद्रूपवैशिष्ट्यं प्राप्तम्, तेन सम्बन्धेन तदवच्छेदेन तदभावसम्बन्धस्य तत्र बोधनात् सर्वदृश्यस्य मिथ्यात्वं सिध्यत्येव। 'सदेव सोम्येदमि'त्यत्र इदंशब्देन प्रपञ्चात्मकब्रह्मणि द्वितीयसामान्याभावबोधनात्, इदन्तादात्म्यस्य उद्देश्यतावच्छेदकत्वेन उद्देश्यतावच्छेदकप्रपञ्चतादात्म्यकालावच्छेदेन द्वैताभाववत्त्वलाभेन मिथ्यात्वलाभात्[1]। यद्यपि प्रतियोगिसत्त्वकालावच्छेदेनाभावस्य बोधः, तथापि स नाहार्यः। प्रतियोगिन इदन्त्वरूपदृश्यत्वेन भानात्, आत्मभिन्नत्वरूपद्वितीयत्वावच्छिन्नाभावत्वेनाभावस्य भानात्। 'नेह नानास्ती'त्यादौ तु इहपदेन प्रपञ्चवतो बोधनादुद्देश्यतावच्छेदकप्रपञ्चसत्त्वकालावच्छेदेन द्वैताभाववत्त्वधीः, अतो नानेत्यादिवाक्यान्यपि व्याख्यातानि। **अतोऽन्यदार्तमिति**। अतः आत्मनः, अन्यत् आर्तं–पीडितम्। येन सम्बन्धेन यदवच्छेदेन यत् यत्र तिष्ठति, तत्तदवच्छेदेन तत्र वर्तमानाभावस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताविशिष्टमित्यर्थः। एतस्यापि निषेधवाक्यत्वेन प्राप्त्यनुसारेण निषेधबोधकत्वात्। **दृश्यत्वेनेत्यादि**। 'ब्रह्मान्यत् मिथ्या दृश्यत्वात् शुक्तिरूप्यवदि'त्यनुमानादित्यर्थः। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् शुक्तिरूप्यादौ न सिद्धसाधनम्। ब्रह्मणि बाधवारणाय ब्रह्मान्यदित्येव पक्षः[2]। दृश्यत्वञ्च–दृग्विषयत्वम्। मिथ्यात्वञ्च–सत्स्वरूपान्यत्वम्।

---

१. असति बाधके उद्देश्यतावच्छेदककालावच्छिन्नत्वं विधेये भासत इति नियमात् अन्यथा गन्धप्रागभावावच्छिन्नो घटो गन्धवानिति प्रयोगापत्तेः—विठलमिश्रः।

२. तुच्छवारणाय सत्तादात्म्यं देयमेव।

## मिथ्यात्वनिर्वचनम्

ननु सत्स्वरूपस्य ब्रह्मणो भेदे साध्ये सिद्धसाधनम्, सत्त्वावच्छिन्नप्रतियोगिताकभेदे साध्ये, किमिदं सत्त्वं ? ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वशून्यत्वं चेत् ? तर्हि तादृशमिथ्यात्वमेव साध्यमस्तु। किञ्च तादृशमिथ्यात्वशून्यं सिद्धान्ते ब्रह्मैव, तथा च ब्रह्मत्वापेक्षयोक्तशून्यत्वस्य गुरुत्वेन प्रतियोगितानवच्छेदकत्वात् साध्याप्रसिद्धिरिति चेन्न। परमते उक्तशून्यत्वस्य ब्रह्मभिन्नेऽपि स्वीकारेण पररीत्या परान्प्रत्युक्तसाध्योपन्याससम्भवात्, गुरुरूपस्यापि नव्यैः प्रतियोगितावच्छेदकत्वस्वीकारात्, ज्ञानानिवर्त्यं सर्वं ज्ञेयमित्याकारकयत्किञ्चिद्धीविषयत्वावच्छिन्नप्रतियोगिताकभेदस्य साध्यत्वसम्भवात्,[1] प्रपञ्चसत्यत्ववादिना उक्तधीविषयत्वस्य ब्रह्मणीव प्रपञ्चेऽपि स्वीकारात् न सिद्धसाधनम्। उक्तधीविषयताव्यक्तेः शुद्धाया एवावच्छेदकतया निवेशान्नावच्छेदकगौरवनिबन्धनसाध्याप्रसिद्धः। अलीकवादिनं प्रत्यनुमानोपन्यासे अलीकभेदोऽपि पक्षे विशेषणं वाच्यम्, अन्यथा अलीके भागासिद्ध्यापत्तेः।

अनुकूलतर्कस्तु 'दृश्यं यदि मिथ्या न स्यात् अनुपपद्यमानसम्बन्धकं न स्यात्' इत्यादि पूर्वमेव दर्शितम्। ज्ञाननिवर्त्यत्वं वा साध्यम्, तच्च स्वप्रयोजकाज्ञानाधिकरणकालपूर्वत्वशून्यवृत्तिज्ञानकालिकत्वरूपं ज्ञानोच्छेद्यत्वम्। तत्त्वज्ञानरूपस्य वृत्तिज्ञानस्य कालोपहितत्वात् प्रयोजकाज्ञानाधिकरणकालपूर्वत्वशून्येत्युक्तम्। स्वपदं यत्र ज्ञाननिवर्त्यत्वं स्थाप्यं तत्परम्, शुक्तिरूप्यादावपि ब्रह्मज्ञानमादायैव साध्यसत्त्वम्, अज्ञानाधिकरणकालपूर्वत्वस्थले लाघवादज्ञानकालत्वमेव निवेश्यम्। ननु जीवेशभेदादेरनादित्वेन स्वप्रयोजकाप्रसिद्ध्या तत्र लक्षणासङ्गतिरिति चेन्न। स्वप्रयोजकपदेन स्वकाले वर्तमानमात्रस्योक्तत्वात्, तथा च जीवेशभेदकाले अज्ञानं वर्तत इति तत्र लक्षणान्वयः, अत एवाज्ञाने सः। अस्याज्ञानकाले सत्त्वात् एतस्य साध्यस्य मिथ्यात्वलक्षणत्वे वृत्तिज्ञानं स्वाविषयकं निवेश्यम्, तेन ब्रह्मणि नातिव्याप्तिः[2]।

अथवा येन सम्बन्धेन येन रूपेण यदवच्छेदेन यत्र यदस्ति तदवच्छेदेन तत्र विद्यमानाभावस्य तदवच्छिन्नतद्रूपावच्छिन्नप्रतियोगित्वं साध्यम्, कपालादौ समवायादिसम्बन्धेन घटत्वादिरूपेण यदवच्छेदेन घटादिकमस्ति, तदवच्छेदेन कपालादिनिष्ठस्यात्यन्ताभावस्य समवायादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमते घटादौ स्वीकारात्[3] तत्सम्बन्धावच्छिन्नायास्तादृशाभावप्रतियोगिताया अवच्छेदकत्वं वा तद्रूपे साध्यते,[4] तेन न साध्याप्रसिद्धिः। ननु व्याप्यवृत्तिपदार्थेषु नैतादृशसाध्यसम्भव, तदवच्छेदकाप्रसिद्धेः। किञ्च सिद्धान्ते अभावानां सर्वदेशकालवृत्तित्वेन किञ्चिद्देशकालावच्छिन्नत्वे मानाभावः, तथा च

१. परैः इदं नाभ्युपगतं तेषां प्रपञ्चस्य ज्ञाननिवर्त्यत्वानभ्युपगमात् स्वमते चेदमखण्डार्थं तद्विषयब्रह्मभेदः पक्षे साध्यः।

२. ब्रह्मभिन्नं तादृशपूर्वत्वशून्यब्रह्मविषयकवृत्तिकालिकं, ब्रह्म तु स्वपदेनग्रहणे वृत्तेः ब्रह्मविषयकत्वात् स्वाविषयकवृत्तिकालिकं नेति नातिव्याप्तिः।

३. घटो दृष्टान्तः।

४. अस्मिन् पक्षे रजतत्वं पक्षः घटत्वं दृष्टान्तः इति बोध्यम्।

**आत्माध्यस्ततयैवानात्मनि सिद्धेस्तत्रात्माध्यासः। अनात्माध्यासेन चात्मनो दोषसादृश्यादिसम्भवात् तत्र चानात्माध्यास इत्यात्माश्रयादिदोषप्रसङ्गाच्च। एतेनात्मानात्मा-**

---

उक्तसाध्यं सिद्धान्ते अप्रसिद्धमिति चेत्, तर्हि यदवच्छेदेतदवच्छेदावनिवेश्यावच्छिन्नवृत्तिकत्वशून्याभाव एव निवेश्यः। न चैवं घटादेस्सर्वदेशकालनिष्ठाभावप्रतियोगित्वस्वीकारेऽलीकत्वमेव स्यादिति वाच्यम्। घटादेस्सत्तादात्म्यवत्त्वेन प्रतीयमानत्वेनालीकवैलक्षण्यात्, अलीकं तु न तथा प्रतीयते, अलीकं सत् इति बुद्धेः बौद्धेनाप्यस्वीकारात्, सत्तादात्म्यविनाशवत्त्वादिमत्त्वेनैव घटादेरलीकवैलक्षण्यसम्भवाच्च। तथा च 'सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वे सति सत्तादात्म्यशून्यत्वम्' 'अविनाशित्वं' वा अलीकलक्षणम्। बौद्धमतेऽपि यद्यत् सत् तत् क्षणिकमिति नियमात् प्रपञ्चस्य क्षणिकत्वेन विनाशित्वम्, अलीकस्य स्थिरत्वेनाविनाशित्वमिति स्वीक्रियत एवेति ध्येयम्। आदेशः–उपदेशः अज्ञातार्थज्ञापनम्।

**नेति नेतीति।** प्रत्यक्षादिप्रमाणैर्यद्यत् प्राप्तं तत् इतिशब्दद्वयेन उच्यते, तथा च कपालादौ घटादिकं समवायसम्बन्धेन कालविशेषावच्छेदेन वर्तत इति यत्, तत् नेत्यर्थः—तत्र तेन सम्बन्धेन तदवच्छेदेन तत् नास्तीति यावत्। घटादौ तु घटत्वादिकं समवायादिसम्बन्धेन अवच्छेदकमनपेक्ष्यैव प्राप्तं तथैव निषिध्यते–**साक्षादेवेति।** आर्तपदेन पीडितोक्त्या बाधपीडितत्वलाभेन ज्ञाननिवर्त्यत्वरूपमिथ्यात्वविशिष्टं बोध्यते, अद्वितीयमित्यादौ तु नञ्पदेन प्रतियोग्यवच्छेदकावच्छिन्नाभाववति व्याप्यवृत्त्यभाववति वा लक्षणया। 'नेह नानास्ती'त्यादौ तु नञ्पदेन तादृशाभावो लक्षणया बोध्यते, यत्किञ्चिदवच्छेदेन वर्तमानस्यावच्छेदकाविशेषितस्य वा द्वितीयाभावस्य ब्रह्मणि प्रत्यक्षादिप्राप्ततया उक्ताभावबोधने उक्तवाक्यवैयर्थ्यात्। उक्ताभावघटितमिथ्यात्वस्यानुमानव्याख्याने व्युत्पादितत्वेन तदुत्तरमथात इति ग्रन्थो व्याख्यातः। तदेवमनात्मनो मिथ्यात्वेन श्रुतिसिद्धत्वात्तस्यात्मसंसर्गाध्यासम्प्रति अधिष्ठानत्वानुपपत्तिमुक्त्वाऽऽत्माश्रयादिदोषादपि तामाह—**आत्माध्यस्ततयेत्यादि।** आत्माध्यस्ततया–आत्मसंसृष्टत्वेनैव प्रतीयमानतया, आत्माध्यासः–आत्मसंसर्गाध्यासः, सिद्धान्ते आत्मनोऽनध्यासात्। तथा च अनात्मनो घटस्सन्निति सत्तादात्म्येनैव प्रत्ययादनात्माध्यासस्य आत्मसंसर्गघटितस्यात्मसंसर्गाध्यासापेक्षणीयत्वादात्माश्रयः, आत्मसंसर्गापेक्षोऽनात्मा तत्सापेक्ष आत्मसंसर्ग इत्यन्योन्याश्रयश्चेति भावः। **सादृश्यादीति।** सादृश्यादिज्ञानेत्यर्थः। अध्यासकारणसंस्कारोद्बोधकतया सादृश्यादिज्ञानापेक्षेति भावः। **आत्माश्रयादीति।** अनात्मव्यक्तीनां मध्ये स्वस्य स्वं प्रति दोषविधया कारणत्वे आत्माश्रयः, द्वयोः परस्परं प्रति तत्स्वीकारे अन्योन्याश्रयः, स्वकारणकारणं प्रति स्वस्य तत्स्वीकारे चक्रकम्, एकं प्रत्यन्यस्येत्यादिस्वीकारे अनवस्थेत्यर्थः। **एतेनेति।** अव्यवहितपूर्वोक्तात्माश्रयादिना व्यवहितपूर्वोक्तेनानिर्मोक्षप्रसङ्गश्रुतिविरोधप्रसङ्गाभ्यामनात्मनः सत्यत्वासम्भवेन चेत्यर्थः। आत्मानात्माध्यासस्य–व्यावहारिकयोरात्मसंसर्गानात्माध्यासयोः, अविद्यात्मकत्वात्–अविद्यारूपदोषमूलकत्वात्। व्यावहारिकाध्यासे **यद्यपि** कामकर्मणोरपि दोषत्वम्, 'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा। कामरूपेणे'त्यादिगीतोक्तेः। ज्ञानं–भ्रमाधिष्ठानचैतन्यम्। तथा चाधिष्ठानावरकत्वेनैव दोषत्वलाभात्, 'कर्मक्षये ज्ञानमपास्तदोषमि'त्यादि—

महीं घटत्वं घटतः कपालः कपालिका चूर्णरजस्ततोऽणुः।
जनैस्स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र तत्त्वम्॥

**ध्यासस्याविद्यात्मकत्वान्न विकल्पावसर इत्यपास्तम्, स्वप्रकाशात्मनि अविद्याया अप्यनुपपत्तेः। तथाहि साप्यध्यस्ता, अनध्यस्ता वा? तत्राद्ये कथं नात्माश्रयादिदोषप्रसङ्गः। अन्त्ये तस्यानुच्छेदादनिर्मोक्षप्रसङ्गः। सर्वस्याध्यासमूलत्वे भ्रमप्रमादिव्यवस्था च न स्यात्। एकस्यैवात्मनः प्रमाणप्रमेयप्रमितिप्रमातृरूपता च विरुद्धा। अविरोधाभ्युपगमे वा सौगतमतापत्तिरिति। अत्रोच्यते। अहं मनुष्यः कर्ता भोक्तेत्यादिप्रतीतिस्तावत्सर्वजनसिद्धा। सा च न स्मृतिरपरोक्षावभासत्वाद्भेदाग्रहपूर्वकत्वाच्च। नापि प्रमा, श्रुतियुक्तिबाधितत्वात्। तथा च श्रुतयः—'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः**

---

इत्यादिविष्णुपुराणोक्तेश्च **तथापि** पूर्वपूर्वकामकर्मणोरुत्तरोत्तरतद्धेतुत्वेनानवस्थादोषे प्राप्ते प्रवाहरूपेण बीजाङ्कुरादिवत् अनादित्वेन तत्परिहारो वाच्यः। अविद्याया दोषविधया हेतुत्वे तु नानवस्थादोष इत्याशयेन तदेव सिद्धान्तिनोक्तम्। विकल्पावसरः—आत्माश्रयादिविकल्पावसरः, अविद्याया अनादित्वेन तत्रान्यदोषानपेक्षेति भावः। **स्वप्रकाशेति**। स्वप्रकाशस्य सत्यत्वात् तदप्रकाशरूपाविद्या मिथ्यैव, तथा च वक्ष्यमाणदोषापत्तेस्तदनुपपत्तिरिति भावः। **आत्माश्रयादीति**। अविद्यारूपदोषस्य उत्पत्तौ तस्यैव हेतुत्वे आत्माश्रयः, तत्कार्यस्य हेतुत्वेऽन्योन्याश्रयः, अविद्यान्तरस्य हेतुत्वे तत्रापि अविद्यान्तरस्येत्यादिस्वीकारे त्वनवस्थादिकम्। अकार्यत्वन्तु नाविद्यारूपाध्यासस्य सम्भवति प्रातीतिकाध्यासे तददर्शनादिति भावः। सर्वस्य—व्यावहारिकप्रातीतिकरूपस्य, अध्यासमूलत्वे—भ्रममात्रविषयत्वे। भ्रमप्रमादिव्यवस्था—'इदं रजतमि'त्यादिधीर्भ्रमः, 'इयं शुक्तिरि'त्यादिधीः प्रमा, आद्या बाध्या, द्वितीया बाधिकेत्यादिव्यवहारः। **एकस्येत्यादि**। चित एव प्रमाणत्वादिकं सिद्धान्ते स्वीक्रियते, तद्विरुद्धमित्यर्थः।

ननु अध्यासोपाधिभेदेन एकस्यापि प्रमाणादिरूपत्वं न विरुद्धम्, तत्राह—**अविरोधेत्यादि**। **सौगतेति**। अध्यस्ताकारभेदेन ज्ञानमेव प्रमात्रादिरूपमिति सौगतमतादविशेषापत्तिरित्यर्थः। "ननु अध्यासोऽपी"त्यादिना सौगतमतापत्तिरित्यन्ते उक्तान् सर्वपूर्वपक्षान् समाधातुं प्रतिजानीते—**अत्रोच्यते इति**। **न स्मृतिरिति**। यद्यपि नाबाधितार्थकस्मृतिरित्येव वक्तुमुचितम्, भ्रमत्वमात्रस्यैव प्रकृते वाच्यत्वात्, तथापि ग्रहणस्मरणोभयरूपत्वेन यो भ्रमत्वनिषेधः सांख्यादिसम्मतः तन्निराकरणाय स्मृतित्वनिषेधः। अपरोक्षावभासत्वात्—प्रत्यक्षरूपतया प्रतीयमानत्वात्। ननु अहमित्यंशे प्रत्यक्षम्, मनुष्य इत्यंशे तु स्मृतिः, तयोस्तद्विषययोश्च धियोः भेदाग्रहादेकत्वव्यवहारः, अथवा 'अहं मनुष्य' इत्यत्र मनुष्यदेहस्वामी आत्मा विषयः, एवम् 'अहं कर्ते'त्यत्र कर्तृमनस्स्वामी, 'अहं भोक्ते'त्यत्र सुखाद्याश्रयमनस्स्वामी तथा च स्वामित्वतत्संसर्गयोस्स्मृतिरूपमपि विशेष्ये प्रत्यक्षमेकं सम्भवति तत्राह—**भेदाग्रहपूर्वकत्वादिति**। भेदाग्रहजन्यविशिष्टबुद्धित्वादित्यर्थः। उपस्थितविशेष्यविशेषणयोर्भेदाग्रहत्वेन विशिष्टविषयकप्रवृत्त्यादिहेतुत्वे गौरवात्, विशेष्यविशेषणविशिष्टविषयकधीत्वेनैव तदुचितमिति भ्रमत्वं बाधितवैशिष्ट्यज्ञानत्वरूपं न तूपस्थितयोर्भेदाग्रहत्वम्, आत्मनि शरीरमनसोर्भेदाग्रहजन्यं च अहं मनुष्य इत्यादिज्ञानं नात्मनि शरीरादिस्वामित्वविषयकम्, तस्यात्मनि शरीरादेर्भेदग्रहपूर्वकत्वनियमादिति भावः।

**श्रुतय इति**। ब्रह्मस्वरूपतां दर्शयन्तीत्यग्रे अन्वयः। विज्ञानमयः—'विज्ञानं यज्ञं तनुते कर्माणि

**पुरुषः, अयमात्मा ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, य आत्मा अपहतपाप्मा, यत्साक्षादपरोक्षात् ब्रह्म, य आत्मा सर्वान्तरः, योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति, स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति, असङ्गो ह्ययं पुरुष' इत्याद्याः अकर्तृभोक्तृपरमानन्दब्रह्मरूपतामात्मनो दर्शयन्ति। युक्तयश्च—विकारिणः परिच्छिन्नत्वेन**

---

तनुतेऽपि च' इति श्रुत्युक्तकर्तृरूपविज्ञानशब्दितबुद्धयभिमानी 'स्त्रीमयोऽयं जाल्म' इतिवत्तदभिमानित्वोक्त्या तद्भेदलाभः, एवं प्राणेषु प्राणाभिमानी, हृदि मनस्यभिमानसम्बन्धेन विद्यमानम्, अन्तर्जन्यज्ञानरूपबहिर्ज्योतिर्भिन्नम्, ज्योतिः—स्वप्रकाशचैतन्यम्, पुरुषः पूर्षु दृश्येषु अनुस्यूत इत्यनेनापि सर्वदृश्यभिन्नचिद्रूपलाभात् अकर्तृभोक्तृत्वलाभः। अत एव 'ध्यायतीव लेलायतीवे'त्याद्युत्तरवाक्येन परमार्थतो ध्यानादिशून्यत्वमुक्तम्। विज्ञानं—स्वप्रकाशचित्स्वरूपम्, आनन्दम्—आनन्दस्वरूपम्, न तु मत्वर्थप्रत्ययलोपात् आनन्दयुक्तम्, 'आनन्दो ब्रह्म, एष एव परमः आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'यादिश्रुतिभ्यः। अन्यानि—औपाधिकभेदेन एतस्मात् भिन्नानि, भूतानि—जीवाः, मात्रां—विषयसुखरूपमंशम्, उपजीवन्ति—भुञ्जते, अनन्तम्—अभावाप्रतियोगि, ब्रह्म शुद्धत्वाद्यतिशयवत्। अपहतो निर्गतः पाप्मा कर्माशयो यस्मात् सोऽपहतपाप्मा। साक्षादपरोक्षात्—अपरोक्षचिद्रूपम्, न तत्तादात्म्येन घटादिवदपरोक्षः। सर्वान्तरः—सर्वदृश्याधिष्ठानम्। अशनायापिपासे प्राणस्य, शोकमोहौ मनसः, जरामृत्यू देहस्य—धर्मौ। अत्येति—तेषामनाधारः।

स यत्तत्रेत्यादिवाक्यं जाग्रदाद्यवस्थाबोधकवाक्यानामेकैकोत्तरमस्ति, तथा च जागरिततद्वाक्योत्तरवाक्यस्थस्य तत्रेत्यस्य जाग्रदवस्थायामित्यर्थः। एवं स्वप्नसुषुप्तिवाक्योत्तरस्थस्य स्वप्ने सुषुप्तावित्यर्थः। स–जीवो, यदिति ज्ञेये ज्ञानक्रियायाञ्च विशेषणम्, पश्यति–जानाति, अनन्वागतः–असंसृष्टः, तेन–ज्ञेयेन ज्ञानेन च, परोक्षविषयस्यापि सर्वानुस्यूतसद्रूपचिदात्मके जीवे तादात्म्यप्राप्त्या निषेधो न व्यर्थः। असङ्गः—सम्बन्धसामान्यशून्यः, हिशब्दोऽसङ्ग(स्य)त्वहेतुतां[1] द्योतयति। अयं–दृग्रूपः, पुरुषः–सर्वदृश्येषु अधिष्ठानत्वेनानुस्यूतः, तथा च दृग्दृश्ययोस्सम्बन्धानुपपत्तेः सर्वदृश्यानां दृशि कल्पितत्वात्, असङ्गत्वहेतुर्नासिद्ध इति भावः। इत्यादिपदेन 'सलिल एको द्रष्टाऽद्वैतो भवती'त्यादिश्रुतिसंग्रहः। ब्रह्मरूपताम्–अद्वितीयेशरूपताम्। श्रुतिबाधितत्वं प्रदर्श्य युक्तिबाधित्वं प्रदर्शयति–**युक्तयश्चेति**। इत्याद्याः इत्यग्रेऽन्वयः। युक्तयोऽनुमानं तदनुकूलतर्काश्च तत्र निर्धर्मकनित्यस्वप्रकाशसुखात्मक एक एवात्मेत्यनेन वक्ष्यमाणवाक्येन 'आत्मा निर्धर्मकः नित्यत्वात्; नित्यः स्वप्रकाशसुखरूपत्वाद्, इत्यनुमानद्वयं विवक्षितम्। विकारिण इत्यादिना च तर्का विवक्षिताः, तत्र निधर्मकत्वं—परमार्थत्वरूपेण धर्माभावः। **तेन** धर्माभावरूपधर्मस्य साध्यस्य व्यावहारिकत्वे स्वव्याघातः, प्रातीतिकत्वे अनुमानस्याभासत्वम्, पारिमार्थिकत्वे अद्वैतश्रुतिविरोधः, धर्माभावस्वरूपत्वे साध्ये सधर्मकत्वाप्रतिक्षेपापत्तिरित्यादि **परास्तम्**। वस्तुतो व्यावहारिको धर्माभावो न स्वव्याघातकः, धर्मतदभावयोर्व्यावहारिकयोः स्वाप्नयोर्गजतदभावयोरिवाविरोधात्। अत्र गज इति स्वाप्नज्ञानोत्तरं कदापि नात्र गजोऽस्तीति

---

१. तस्य सहेतुकतां।

**अनात्मत्वापत्तेः, स्वेनैव स्वस्य ग्रहणे कर्तृकर्मविरोधात्, दृग्दृश्यसम्बन्धानुपपत्तेर्भेदेनाभेदेन वा धर्मधर्मिभावानुपपत्तेश्च, ज्ञानानित्यत्वपक्षे तत्तद्व्यक्तिभेदध्वंसप्रागभावसमवायज्ञानत्वजात्याद्यभ्युपगमे गौरवात्, एकत्वाभ्युपगमे चातिलाघवात्, घटज्ञानं पटज्ञान-**

---

स्वाप्नज्ञानस्येव इहात्मनि धर्मोऽस्तीति ज्ञानोत्तरमात्मा निर्धर्मक इत्यनुमितेः प्रतियोगिसमसत्ताकाभावविषयकत्वसम्भवात्। विस्तृतश्चैतच्चन्द्रिकायाम्।

ननु यदि निर्धर्मको न स्यात् तदा नित्यो न स्यात् धर्मधर्मिणोस्तादात्म्येन धर्मोत्पत्तिनाशाभ्यां धर्मिण उत्पत्तिनाशरूपविकारापत्तिरिति तर्को वाच्यः, तत्र इष्टापत्तिरेवेत्यत आह—**विकारिण इत्यादि।** आत्मनो विकारस्वीकारे अभावप्रतियोगित्वरूपपरिच्छेदापत्त्या परिच्छेदाभावव्याप्यस्यात्मत्वस्याभावापत्तिरित्यर्थः। आत्मा यदि कर्तृत्वादिमान् स्यात्तदा अहं कर्तेति द्रष्टा न स्यात् मनसोऽपि द्रष्टृत्वायोगात्। कर्तृकर्मविरोधेन स्वेनैव स्वस्य ग्रहणायोगाच्चेति तर्कान्तरमाह—**स्वेनेत्यादि।** स्वेन—आत्मना, स्वस्य कर्तृत्वादिमदात्मनो, ग्रहणे—विषयीकरणे, कर्ता साक्षी विषयी व्यवहर्तृत्वात्, स एव कर्म—विषयः व्यवहार्यत्वात् तत्र विरोधः—एकत्वे सम्बन्धासम्भवेन विषयिविषयभावसम्पादकतादात्म्यसम्बन्धानुपपत्तिरित्यर्थः। कर्तृत्वं ज्ञानं चिद्रूपं प्रत्यपि सम्भवति, जन्यविषयावच्छिन्नरूपेण तस्य ज्ञेयत्वं नित्यविषयावच्छिन्नं ज्ञानमपि क्षेमसाधारणजन्यतावदिति वा, तथा च कर्तृकर्मत्वयोर्व्यवहारक्रियानपेक्षत्वेऽपि न क्षतिः।

ननु तादात्म्यं प्रत्यनुयोगित्वं विषयत्वं प्रतियोगित्वं विषयित्वम्, तत्राद्यं कर्तृत्वादिविशिष्टरूपेण द्वितीयं शुद्धरूपेणैकस्यात्मनस्सम्भवत्येव तत्राह—**दृग्दृश्येत्यादि।** दृग्दृश्ययोस्सम्बन्धनिर्वचनस्य पूर्वोक्तरीत्या असम्भवात्, दृगात्मनि विषयिणि विषयरूपं सर्वं मिथ्येति निर्धर्मकत्वमात्मन इति भावः। आत्मा यदि पारमार्थिकधर्मवान् स्यात्तदा निरूपणार्हधर्मसम्बन्धवान् स्यादिति तर्कमाह—**भेदेनेति।** तादात्म्यान्यसम्बन्धनेत्यर्थः, अभेदेन तादात्म्यसम्बन्धेनानुपपन्नेनेति शेषः। **अनुपपत्तेरिति।** तादात्म्येन तदन्येन वा सम्बन्धेन सम्बद्धयोर्धर्मधर्मिता वाच्या, तादात्म्यादिसम्बन्ध एव तु न सम्भवति सम्बन्धान्तरेणासम्बद्धस्य तस्य सम्बन्धस्य सम्बन्धत्वासम्भवेन सम्बन्धान्तरं वाच्यम्, एवं तस्यापि सम्बन्धान्तरमिति अनवस्थापत्तेः। न च सम्बन्धस्य सम्बन्धान्तरेण न सम्बद्धता किन्तु स्वेनैव सम्बन्धेनेति वाच्यम्। स्वस्य स्वप्रतियोगिकसम्बन्धत्वासम्भवात्, स्वं न स्वीयमित्यनुभवात्, अन्यवा धर्मधर्मिणोरपि स्वेन सम्बद्धतापत्त्या सम्बन्धमात्रलोपापत्तेः। अथ तयोस्सम्बन्धान्तरं प्रतीयते, तस्य तु न प्रतीयत इति चेत्, सत्यम्, प्रतीयमानमप्यनुपपन्नं मिथ्यैवेति भावः। 'आत्मा यदि कर्तृत्वादिधर्मकस्स्यात् तदा कर्तृत्वादिधर्मविशिष्टस्य तस्य ज्ञानरूपत्वन्न स्यादि'ति तर्के 'आत्मा ज्ञानरूपो न भवत्येव तस्य नित्यत्वेनोत्पत्तिनाशवत्त्वेनानुभूयमानज्ञानरूपत्वासम्भवात्' इतीष्टापत्ति निरस्यति—**ज्ञानेत्यादि।** अनित्यत्वपक्षे—अनित्यत्ववादितार्किकादिमते। **तत्तद्व्यक्तीत्यादि। तत्तज्ज्ञानव्यक्तयस्तासां** भेदध्वंसप्रागभावाः, समवायः, ज्ञानत्वजातिः, आदिपदेन तज्ज्ञानतद्ध्वंसेषु अनन्तकारणानीत्येतेषामनन्तानां स्वीकारे **गौरवादित्यर्थः।** एकत्वाभ्युपगमे—एकैव ज्ञानव्यक्तिः सर्वज्ञेयविषयिकेति स्वीकारे, अतिलाघवात्—आत्मन एव ज्ञानस्वरूपत्वसम्भवेन ज्ञानस्वरूपस्याप्यकल्पनीयत्वेनातिलाघवात्।

ननु घटज्ञानं न पटज्ञानमिति भेदप्रतीतेः कथमेकं ज्ञानं सर्वस्येत्यत आह—**घटज्ञानमित्यादि।**

**मित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः, स्वतस्तु ज्ञानं ज्ञानमित्येकस्वरूपावगमात्, तदुत्पत्तिविनाशप्रतीत्योश्चावश्यकल्प्यविषयसम्बन्धविषयतयाऽप्युपपत्तेः, उपाधिपरामर्श–**

---

**इत्युपाधिभेदपुरस्कारेणेति** । धर्मिप्रतियोगिरूपोपाध्योरित्थंभूतौ घटविषयकत्वपटविषयकत्वरूपौ यौ भेदौ विशेषौ तत्पुरस्कारेण तदुल्लेखेनेत्यर्थः । एवकारार्थं स्फुटयति—**स्वत इति** । उपाधिपुरस्कारं विनेत्यर्थः । ज्ञानं ज्ञानमित्येकरूपावगमात् ज्ञानमित्याकारकसर्वप्रत्ययैरेकस्यैव ज्ञानस्वरूपस्य विषयीकरणात्, तुशब्देन तज्ज्ञानव्यक्तिरेतज्ज्ञानव्यक्तिभिन्नेत्युपाध्यपुरस्कृतप्रत्ययो नास्तीत्युक्तम् । ननु ज्ञानस्य उत्पत्तिनाशप्रत्ययात् कथमात्मरूपता तत्राह—**तदुत्पत्तीत्यादि** । **विषयसम्बन्धेति** । विषयज्ञानोभयसम्बन्धेत्यर्थः । विषयज्ञानयोस्सम्बन्धमविषयीकृत्य 'ज्ञानमुत्पन्नं नष्टमि'ति प्रत्ययस्यानुदयात् ज्ञानोत्पत्त्यादिप्रत्यये ज्ञानविषयसम्बन्धविषयकत्वमवश्यं कल्प्यम्, तथा च 'घटज्ञानमुत्पन्नन्नष्टमि'ति धीरुपपद्यते, 'अयमिदानीं शिखी जातः, अयं शिखी नष्ट' इति धीवत् विशेषणोत्पत्तिनाशविषयकत्वात्। तथा हि—प्रत्यक्षज्ञानस्थले यावन्मनोऽवच्छिन्नचिता घटादेस्सम्बन्धस्तिष्ठति तावदेव 'घटमहं साक्षात्करोमी'ति व्यवहारात्, तादृशसम्बन्धोत्पत्तिनाशावेव 'घटप्रत्यक्षमुत्पन्नन्नष्टमि'ति धीविषयौ । स च सम्बन्धो वृत्तेः चिदुपरागार्थत्वपक्षे मनोऽवच्छिन्नचिति घटादेः स्वावच्छिन्नवृत्तिप्रतिबिम्बितत्वम् । आवरणनाशार्थत्वपक्षे स्वनिष्ठस्याज्ञानाविषयत्वस्य प्रयोजकं यत् स्वावच्छिन्नवृत्त्यादिकं तद्विशिष्टत्वम्।

## प्रत्यक्षस्वरूपविवेचनम्

अथ विवेचनम्—'जानामी'तिधीस्थले घटादिविषयकस्यासत्त्वापादकाज्ञानस्य आश्रयत्वाभावः यावन्मनोऽवच्छिन्नचिति तावदेव घटादि जानामीति व्यवहारात् तादृशाभावरूपस्य घटादिसम्बन्धस्य उत्पत्तिनाशावेवोक्तधीविषयौ । असत्त्वापादकाज्ञानाश्रयत्वाभावविशिष्टचितः स्वाकारवृत्तिप्रतिबिम्बितस्तादृशाज्ञानाविषयत्वप्रयोजकविशिष्टचितो वा जानात्यर्थत्वेनोक्तव्यवहारे उक्ताभावस्य विशेषणत्वाभावात् । ननूक्ताभावोऽत्यन्ताभाव एव, अज्ञाननाशो हि न ज्ञानेन जन्यते, किन्तु ज्ञानम् अज्ञानतत्कार्यविरोधीत्युक्तम् । तथा च कथं तस्योत्पत्तिविनाशाविति चेत्, सत्यम् । तथापि तत्तत्कालस्योत्पत्तिविनाशसम्भवेन तत्तत्कालविशिष्टाधिकरणात्मकविशेषणतासम्बन्धविशिष्टरूपेण उक्ताभावस्य उत्पत्तिनाशसम्भवात् । तदतिरिक्तनित्यविशेषणतादेरभावीयसम्बन्धत्वपक्षे तत्तत्कालावच्छिन्नरूपेण तस्य तत्सम्भवात् । स हि सम्बन्धो नित्योऽपि प्रतियोगिमति देशे प्रतियोगिसम्बन्धानवच्छेदककालावच्छिन्न एव, तथा च घटाद्याकारमनोवृत्तिकाल एव घटाद्यज्ञानाभावसम्बन्धस्य प्रमातरि स्वीकारात्, तत्कालावच्छिन्नरूपेण तदुत्पत्त्यादिसम्भवः । सुखादेरपि विद्यमानत्वदशायामेव प्रमातर्यज्ञानाभावस्वीकारात् तत्कालावच्छिन्नस्य तदभावस्य उत्पत्त्यादिसम्भवः । घटादिकार्यं प्रति जीवस्योपादानत्वपक्षे घटादौ विद्यमाने जीवतादात्म्यस्य तदा सदा सत्त्वात् 'सदैव घटादिकं जानामी'ति प्रत्ययापत्तिः, विद्यमानसुखादाविव भासकतानियामकतादात्म्यरूपस्य जीवोपरागस्य सत्त्वात्, अतोऽसत्त्वापादकाज्ञानं तादृशप्रत्ययविरोधि घटाद्यवच्छेदेन स्वीक्रियते। तथा चोक्ताज्ञानाविषयत्वघटित एव जानात्यर्थः, न तु घटादितादात्म्यापन्नजीवचित् अतो नोक्तानुपपत्तिः । यदा तु ब्रह्मैव घटाद्युपादानं तदा उक्ततादात्म्यास्वीकारात् असत्त्वापादकाज्ञाने मानाभावात् तदविषयत्वघटितो जानात्यर्थो न सम्भवतीति

**मन्तरेण स्वत एव घटात् घटान्तरस्य भेदप्रतीतेः, तत्प्रतिबन्दिग्रहासम्भवात्, आकाशकालदिशामपि नानात्वापत्तेश्च, कर्तृत्वादेर्वास्तवत्वेऽनिर्मोक्षप्रसङ्गात्, स्वप्रकाशानभ्युपगमे**

---

घटाद्याकारवृत्तिप्रतिबिम्बितञ्चैतन्यं घटादिज्ञानम्, सुखादिप्रतिबिम्बितं सुखादिज्ञानम्। न च जीवस्य जगदुपादानत्वपक्षेऽप्युक्ताज्ञाने मानाभावः, घटाद्याकारवृत्तिप्रतिबिम्बिता चित् घटादिज्ञानमित्यादेवक्तुं शक्यत्वात् इति वाच्यम् जीवोपादानत्वस्य वाचस्पतिसम्मतत्वेन **सिद्धान्तबिन्दा**वुक्तत्वात्। **वाचस्पति**मते च वृत्त्यादौ चित्प्रतिबिम्बास्वीकारात् आवरणभङ्गार्थमेव वृत्तेस्स्वीक्रियते, न तु प्रतिबिम्बघटितोपरागार्थत्वम्। यदि च वाचस्पतिमतेऽपि चिदुपरागो वृत्तेः प्रयोजनम् अन्यथा तन्मते पल्लवाज्ञानस्वीकारे त्वावरणभङ्गस्य प्रयोजनत्वसम्भवेऽपि तदस्वीकारपक्षे प्रयोजनाभावात्, तदा विषयावच्छिन्नचितिजीवचितोर्भेदनाश एव प्रयोजनम् वृत्तेरिति वाच्यम्, सोऽयं वृत्तेरभेदाभिव्यक्त्यर्थत्वपक्षः। असत्त्वापादकाज्ञानास्वीकारपक्षे जीवचैतन्यस्य घटादिना तादात्म्यास्वीकारपक्षे च घटाद्याकारवृत्तिप्रतिबिम्बित(त्व)रूपेण सुखादिप्रतिबिम्बितरूपेण च चित उत्पत्त्यादिसम्भवात्। चित्प्रतिबिम्बानङ्गीकर्तृवाचस्पतिमते तु वृत्तिविशिष्टरूपेण सुखादिविशिष्टरूपेण च चित उत्पत्त्यादिव्यवहार इति भावः।

ननूपाधिविशिष्टरूपेण भेदमादाय भेदबुद्धिमुपपाद्यैकत्वसमर्थने घटादावप्येकत्वं स्यात्तत्राह—**उपाधीति**। तत्तद्देशकालविशिष्टत्वरूपोपाधीत्यर्थः। परामर्शमुल्लेखमन्तरेण विना। स्वतः–तत्तद्घटव्यक्तित्वाभ्याम्, तत्प्रतिबन्दिग्रहासम्भवात्–घटादेरप्येकत्वमस्तु भेदधीस्त्वौपाधिकभेदेन उपपादनीयेति प्रतिद्वन्द्विन उपादानासम्भवात्। ननु तथापि पुरुषभेदेन ज्ञाननानात्वं वाच्यम् चैत्रीयं ज्ञानं न मैत्रेऽस्तीत्यादिप्रत्ययात्तत्राह—**आकाशेत्यादि**। 'घटाकाशं पटे नास्ति, तद्घटकाल एतद्घटकालो न, प्राची न प्रतीची' इत्यादिप्रत्ययैराकाशादिस्वरूपभेदो विषयीक्रियताम्। अथ तत्र घटकालोपाधिदिगुपाधिविशेषविशिष्टरूपेण भेदो विषयस्तर्हि प्रकृतेऽपि चैत्रीयत्वादिविशिष्टरूपेणाभावो विषय इति न ज्ञानं नानेति भावः। ननु 'न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वादि'त्यादिश्रुत्या घ्राणजमनोवृत्त्यादिसामर्थ्यरूपघ्रात्यादेरविनाशोक्तेः आत्मनः कृत्यादिजननशक्तिरूपकर्तृत्वादेर्ज्ञानानुच्छेद्यतया सत्यत्वेन कथमात्मनः पारमार्थिकत्वेन धर्माभाववत्त्वम् तत्राह—**कर्तृत्वादेरित्यादि**। **अनिर्मोक्षेति**। 'विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुत्या सर्वनामरूपोच्छेदस्य ज्ञानाधीनतया बोधितस्य त्यागेत्यर्थः। तथा च न हीत्यादिश्रुतिर्घ्राणेन्द्रियाद्यभिव्यक्तचित्स्वरूपानाशबोधिका, अत एव 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रे'दित्याद्युत्तरवाक्येन चिदन्यविषयतदाकारवृत्तितत्साधनेन्द्रियाभावेन घ्राणजप्रत्यक्षाभावो न तु चिदभावादित्युक्तमिति भावः। अथवा कर्तृत्वादिधर्मोत्पत्तिनाशाभ्यामात्मन उत्पत्त्याद्यावश्यकत्वे कथं नित्यज्ञानरूपता तत्राह—**कर्तृत्वादेरिति**। तथा च मिथ्याधर्मोत्पत्त्यादिना नात्मन उत्पत्त्यादीति भावः।

ननु स्वप्रकाशसुखरूपत्वेन नित्यत्वं साधनीयं तत्र 'स्वप्रकाशसुखरूप आत्मा यदि नित्यो न स्यात् तदा मोक्षरूपपरमपुरुषार्थो न स्यादि'ति तर्कोऽनुकूलो वाच्यः, स्वप्रकाशत्वे तु किं साधनम्? तत्राह—**स्वप्रकाशेत्यादि**। चकारस्तुशब्दार्थे। सुखरूपस्यात्मनो यदि स्वप्रकाशत्वं न स्वीक्रियते,

**च जगदान्ध्यप्रसङ्गात्, परमप्रेमास्पदत्वेन च तस्यानन्दरूपत्वात्, निर्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मा—इत्याद्याः। तस्मात् परिशेषात् भ्रान्तिरियमिति स्थिते तत्कारणमपि योग्यं किञ्चित्कल्पनीयम्। कल्प्यमानं च तदद्वितीयात्मनि अध्यस्ततयैव धर्मिग्राहकमानेन सिद्धयतीति 'न जानामी'ति साक्षिप्रतीतिसिद्धमनिर्वाच्यमज्ञानमेव तत्। न चेदमभावरूपम्। ज्ञानस्य नित्यत्वेन तदभावानुपपत्तेरित्युक्तत्वात्।**

---

तदा जगतः श्रवणाधिकारिमात्रस्य मोक्षरूपपरमपुरुषार्थदर्शनरूपान्ध्यप्रसङ्गः द्वितीयाभावेन मोक्षरूपात्मसुखस्य परप्रकाश्यत्वासम्भवात्। अप्रकाशमानसुखस्यापुरुषार्थत्वात्। अथवाऽऽत्मनः स्वप्रकाशत्वास्वीकारे जगतस्तु सर्वदृश्येष्वान्ध्यस्याप्रकाशनस्य प्रसङ्गः। अप्रकाशेनात्मचैतन्येन दृश्यप्रकाशनासम्भवात्, प्रकाशान्तराणां कल्पने अनवस्थानादित्यर्थः। आस्तां स्वप्रकाशत्वं सुखरूपत्वे को हेतु? तत्राह–**परमप्रेमास्पदत्वेनेति**। चकारस्तुशब्दार्थे, मा भूवमिति न, किन्तु भूयासं सदेतीच्छा प्रेमा, सा परमा अन्येच्छानधीना, तद्विषयत्वेनात्मनः सुखरूपतासिद्धेः। असुखे हीच्छा सुखरूपफलेच्छाधीनैव न तदनधीना। यद्यपि सुखरूप आत्मा सिद्धः,[1] [2]तथाप्युत्तरकालसम्बन्धविशिष्टरूपेण तस्य भावित्वेनैवेच्छाविषयत्वम्। ननु सुख इव दुःखाभावेऽपि परमप्रेमदर्शनात् दुःखाभाव एव आत्मा किं न स्यादिति चेन्न। सुखत्वेन ज्ञातत्वमेवोक्तप्रेम्णः प्रयोजकम्, न तु दुःखाभावत्वेन ज्ञातत्वम्, गौरवात्। तथा च सुखाभिव्यक्तिसाधनत्वज्ञानेनैव दुःखाभावे प्रेमेति सुखाभिव्यक्तीच्छाधीनोऽयं न परमप्रेमविषय इति परमप्रेमविषयत्वेन दुःखाभावरूपत्वानुमानासम्भवः इति भावः।

अत्रेदं पर्यवसितम्। धर्मधर्मिभावानुपपत्तेश्चेत्यन्तं निर्धर्मकेत्यत्र तर्काणां हेतुत्वबोधकम्, नानात्वापत्तेश्चेत्यन्तं तु नित्येत्यत्र, अनिर्मोक्षप्रसङ्गादित्यन्तं तदुभयत्र, परिशिष्टं स्वप्रकाशसुखरूपत्वे हेतुपरम्।

तस्मात्–आत्मनः निर्धर्मकत्वेनात्मनि प्रतीयमानस्य मनुष्यादितादात्म्यकर्तृत्वादेर्मिथ्यात्वात्। इयम्–अहं मनुष्यः कर्त्ता भोक्तेत्यादिधीः, तत्कारणं–सविषयभ्रमस्य परिणामिकारणम्, योग्यं—परिणामितायोग्यम्। ननु तस्य कल्पनारूपमानविषयत्वेन सत्यत्वादद्वैतश्रुतिविरोधः तत्राह—**कल्प्येत्यादि**। यतः अद्वितीयत्वेन श्रुत्यनुमानसिद्ध आत्मनि कल्प्यमानम् अतःस्वरूपात्मकधर्मिग्राहकमानेन[3] कल्पनारूपेण तदध्यस्तं मिथ्याभूतमेव कल्प्यं भवतीत्यर्थः। **इति न जानामीत्यादि**। यतः कल्पनया मिथ्यात्वेन सिद्धयति, अतोऽनिर्वाच्यं तद्वस्तु अहमात्मानं न जानामीत्याकारसाक्षिसिद्धाज्ञानाभिन्नमेवेत्यर्थः। तस्य साक्षिसिद्धाज्ञानैक्योक्तेः फलमाह–**न चेत्यादि**। इदम्—उक्तसाक्षिसिद्धम् अज्ञानम्—अभावरूपम्–आत्मज्ञानाभावरूपम्। ज्ञानस्य–आत्मव्यवहारप्रयोजकसाक्षिरूपस्य। **तदभावेति**। आत्मव्यवहारप्रयोजकज्ञानाभावेत्यर्थः। नन्वात्मविषयकज्ञानाभावरूपं तत्, साक्षि-

---

१. तथा च सिद्धे नेच्छासम्भव इति भावः।

२. विशिष्टरूपेण सिद्धत्वमाह।

३. अज्ञानस्वरूपेत्यर्थः।

**धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां च व्याघातापत्तेः। नापि भ्रमसंशयतत्संस्कारपरम्परारूपम्। अपरोक्षत्वात्, अतीतानागतभ्रमसंशयतत्संस्काराणाञ्चापरोक्षत्वेन ज्ञातुमशक्यत्वात्। आवरणात्मकत्वात् भ्रमाद्युपादानत्वाच्च। आत्मनो निर्विकारत्वात्। अन्तःकरणादेश्च तज्जन्यत्वात्। 'देवात्मशक्तिं स्वगुणैर्निगूढामि'ति।**

---

ज्ञानन्तु न तथा तत्राह—**धर्मीत्यादि**। 'आत्मानमहं न जानामीति'प्रत्यये आत्मज्ञानाभावस्याहमर्थे धर्मिणि विषयीकरणे अभावबुद्धौ धर्मिप्रतियोगिज्ञानयोर्हेतुत्वात् पूर्वं तयोस्सत्त्वे अहमर्थे आत्मज्ञानाभावस्यासत्त्वादुक्तप्रत्ययस्याप्रमात्वापत्तिः। पूर्वं तयोरसत्त्वे कारणाभावादुक्तप्रत्यय एव नोत्पद्यते। अथ तयोर्नाशोत्पत्तिक्षणे उक्तप्रत्ययोत्पत्तौ नोक्तदोष इति चेन्न। तादृशज्ञानयोस्स्वरूपसतोरेवाभाववत्त्वधीप्रतिबन्धकत्वेन उक्तक्षणेऽपि तदनुपपत्तेः। तदुक्तं—'न हि जानन्नेव न जानामीति प्रत्येती'ति। उक्तप्रत्ययस्य धर्मिप्रतियोगिविषयकत्वतदभावाभ्यां व्याघातस्यापरिहाराच्च। यथा ह्युक्तप्रत्ययस्य उत्पत्तिक्षणे पूर्वोत्पन्नयोस्तयोस्सत्त्वे तयोरात्मविषयकत्वेन व्याघातः, तथोक्तप्रत्ययस्यैव धर्मिप्रतियोगिनोरात्मघटितत्वेनात्मविषयत्वात् वर्तमानमात्मज्ञानाभावं गृह्णतः उक्तप्रत्ययस्यानुपपत्तिरिति भावः। ननु निर्विकल्पकात्मज्ञानाभावरूपत्वे नोक्तदोष इति चेन्न। तादृशस्य आपातात्मज्ञानस्य सत्त्वेप्यात्माज्ञानप्रत्ययोदयात्। न च मुक्त्युपधायकज्ञानाभावरूपत्वे न दोष इति वाच्यम्। मुक्त्युपधायकत्वमविषयीकुर्वतोऽपि तादृशप्रत्ययस्योत्पत्तेः। **नापीति**। इदमित्यनुषज्यते। भ्रममात्रं नाज्ञानम्, दिनद्वयादिवर्तिन एकाज्ञानस्य प्रत्यभिज्ञानात्, अतो भ्रमादिपरम्परारूपं वाच्यं, तथा च नापरोक्षत्वसम्भव इत्याशयेनाह—**अतीतेत्यादि**। ननु सति भात्यपि आत्मनि 'नास्ति न भाती'त्यादिव्यवहारोत्पादकत्व'मस्ति भाती'तिव्यवहाराभावप्रयोजकत्वञ्चावरणात्मकत्वम्, तच्च भ्रमादेरपि सम्भवति, अपरोक्षत्वं तु अतीतानागतांशे न स्वीक्रियते किन्तु वर्तमानभ्रमाद्यंशे अत आह—**भ्रमाद्युपादानत्वादिति**। नन्वात्मैवोपादानमास्ताम् तत्राह—**आत्मन इति**। निर्विकारत्वादपरिणामित्वात्। तथा च परिणामिकारणमनात्मैवेति भावः।

**तज्जन्यत्वादिति**। तथा च प्राथमिककार्यादिसर्वकार्येषु एकमेव परिणामिकारणं कल्प्यते, ईश्वररूपैककर्तृवत्। न च प्रतिसर्गं प्राथमिककार्येषु निमित्तकारणतया क्लृप्तानां संस्काराणामेव परिणामित्वसम्भवादतिरिक्तैककारणकल्पने गौरवमिति वाच्यम्। वीक्षणरूपाद्यकार्ये वीक्षणसंस्कारो वा परिणामिकारणम् ईश्वरप्रसादरूपमदृष्टं वेत्यत्र विनिगमकाभावात्। ननु वीक्षणत्वावच्छिन्नं प्रति निमित्ततया नादृष्टं क्लृप्तम्, किन्तु ईक्षणाकाशादिसाधारणरूपावच्छिन्नं प्रति, तथा च तादृशरूपविशिष्टे अदृष्टस्य परिणामित्वमस्तु, वीक्षणत्वावच्छिन्नं प्रति निमित्ततया नियतपूर्ववृत्तित्वेन क्लृप्तस्य ईक्षणसंस्कारस्यैव परिणामितयाऽन्यथासिद्धत्वं लाघवात् कल्पयितुं युक्तमिति चेन्न। गुणत्रयात्मकमज्ञानं सृष्टिकाले वीक्षणरूपेणाकाशादिरूपेण विषयीभूतगुणत्रयात्मकेन परिणतं प्रलयकाले समीभूतगुणत्रयात्मकेन ईक्षणाकाशादिसूक्ष्मावस्थारूपेण परिणमते। तथा चावस्थाभेदेऽप्यवस्थावतोऽनुगतरूपस्य न भेदोऽस्ति। पूर्वं तादृशमिदानीमीदृशं जातमिति प्रत्यभिज्ञानात्, 'तद्धेदं तर्ह्यव्याकृतमासीत्' 'भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते' इति श्रुतिस्मृतिभ्याञ्च। ततश्च नानासर्गीयेक्षणेषु तदनुगतं सत्त्वगुणस्वरूपं, तस्यैव तेषु सात्त्विककार्यान्तरेषूपादानत्वं युक्तम्। तज्जातीयकार्यं प्रति अनुगतत्व-

**गुणवत्त्वश्रुतेश्च। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, इन्द्रो मायाभिः पुरुरूप ईयते, अनृतेन हि प्रत्यूढाः नीहारेण प्रावृताः, भूयश्चान्ते**

---

स्यैव तदुपादानत्वव्यवस्थापकत्वात्। एवं राजसतामसकार्येषु रजस्तमोरूपयोरुपादानत्वं युक्तम्। **अत एव** गुणत्रयस्वीकारे गौरवात् एकगुणोऽस्तूपादानमित्यपास्तम्। एकगुणस्य सर्वकार्येषु दृक्स्वरूपेण एकेनानुगत्यभावेन विलक्षणगुणत्रयविशिष्टेषु तादृशगुणानामुपादानत्वावश्यकत्वात्। यत्तु प्रतिसर्गीयवीक्षणादिषु अननुगतं वीक्षणादिसंस्काररूपं तस्य वीक्षणसंस्कारत्वाद्यनुगतरूपेण निमित्तत्वमेव, तस्मात् गुणत्रयरूपमज्ञानमेव सर्वकार्योपादानमिति भावः।

उक्तन्यायानुग्राह्यां श्रुतिमाह—**देवात्मशक्तिमिति**। देवस्य—सृष्ट्यादिक्रीडावतो ब्रह्मणः, स्वाश्रयां—स्वविषयात्मिकाम्, शक्ति—कार्यजननसामर्थ्यरूपां मायाम्, स्वगुणैः—स्वात्मसत्त्वादिगुणैः, निगूढां—घटिताम्। अथवा स्वधर्मैर्वीक्षणाकाशादिसंस्कारैर्विशिष्टाम्। गुणवत्त्वश्रुतेः—गुणत्रयरूपत्वश्रुतेः। अथवेत्यादिव्याख्याने संस्कारवत्त्वश्रुतेः अत्रोक्तश्रुतेः पूर्वं 'किं कारणमि'त्यादिप्रश्नमुपन्यस्य 'ते ध्यानयोगानुगता अपश्यन्नि'त्यादिवाक्यस्योक्तत्वात्। कार्यजननोद्यतस्य ब्रह्मणः सामर्थ्यरूपा माया सर्वकार्येषु कारणम्, सा च त्रिगुणीरूपेत्युक्तम्। अथवेत्यादिव्याख्याने संस्काराश्रयत्वोक्त्या संस्काराणां नोपादानत्वमित्यपि ज्ञापितम्। प्रकृतिं—सङ्कोचकाभावात् सर्वकार्योपादानम्। इन्द्रः—अपरिच्छन्नत्वेन सर्वोपाधिसम्बन्धात् नानारूपप्राप्तौ प्रभुरात्मा, मायाभिः—अविद्याभिर्हेतुभिः, पुरुरूपः—नानारूप इत्यर्थः, ईयते—ज्ञायते। एकाविद्यापक्षे अदृष्टादिसहकारिकारणानां नानात्वात् तद्घटितरूपेणाविद्याया नानात्वं बोध्यम्।

'प्रजा अहरहर्ब्रह्म गच्छन्त्यो न विन्दन्ति अनृतेन हि प्रत्यूढा' इत्यत्र अहरहस्सुषुप्तौ गच्छन्त्योऽपि स्थूलसूक्ष्मोपाधिलयेन तदभिमानकृतब्रह्मभेदशून्या अपि ब्रह्म न जानन्ति, हि—यस्मात्, अनृतेन—मिथ्याभूताज्ञानेन, प्रत्यूढाः—आच्छादितस्वरूपका इति व्याख्यातम्। 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता' इत्यत्र तमात्मानं न यूयं विदाथ, य आत्मा इमाः प्रजाः जनयामास, कुतो न विद्मः तत्राह—अन्यदित्यादि। अन्यत्—आत्मनो विलक्षणमसद्रूपम्, अन्तरम्—आवारकं व्यवधायकम्—आत्मनि भात्यपि स न भातीति व्यवहारजनकं स भातीति व्यवहारप्रतिबन्धकञ्च, बभूव—अनादिकालं व्याप्यास्ति। ननु तस्यानादित्वमिवाविनाशित्वमपि स्यात् तथा च अस्मान् प्रति तदुपदेशो व्यर्थस्तत्राह—**नीहारेणेति**। तस्माद्यूयं नीहारसदृशेन तेनान्तरेणाच्छादिताः, तथा च नीहारवदेव तस्य विनाशित्वमावारकत्वादिति व्याख्या। 'तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यत्र तस्य—आत्मनः अभिध्यानात्—तत्त्वमस्यादिवाक्यतात्पर्यविषयत्वेन तदनुकूलतर्केण च चिन्तनात् श्रवणमननाभ्यामिति यावत्, योजनात्—योगात् निदिध्यासनादिति यावत्, तत्त्वभावात्—साक्षात्काररूपतत्त्वप्राप्तेश्च, विश्वमायायाः—असत्त्वापादकाभानापादकरूपानेकाज्ञानस्य निवृत्तिः, अन्ते—प्रारब्धभोगान्ते, भूयः—पुनः, देहादिकार्यरूपविश्वमायानिवृत्तिरिति व्याख्या। आदिपदेन 'अमूढो मूढ इव व्यवहरन् आस्ते माययैव, अविद्यायामन्तरे वर्तमाना' इत्यादिश्रुतिसंग्रहः।

**विश्वमायानिवृत्तिः' इत्यादिश्रुतिभ्यश्च मायाऽविद्या अनिर्वाच्यमनृतं तत्त्वज्ञाननिवर्त्यञ्च अज्ञानमेव स्वपराध्यासे कारणम्। न चात्माश्रयादिदोषप्रसङ्गः। अनादित्वेन तन्निरासात्, अनादित्वेनोत्पत्त्यभावात्, स्वप्रकाशात्मन एव तज्ज्ञप्तिरूपत्वात्। तेनाज्ञानाध्यासविशिष्टचैतन्येऽहङ्काराध्यासः। तद्विशिष्टे कामसङ्कल्पादीनामहङ्कारधर्माणामिन्द्रियधर्माणाञ्च काणत्वबधिरत्वक्लीबत्वादीनामध्यासः। इन्द्रियाणां तु परोक्षत्वान्नापरोक्षधर्म्यध्यास इति सिद्धान्तः। तद्विशिष्टे स्थूलदेहाध्यासो धर्मपुरस्कारेणै-**

---

**मायाविद्येत्यादि।** मायादिरूपमेवाज्ञानं स्वपराध्यासकारणम्। श्रुतिभ्यश्चेति चकारात् पूर्वोक्तकल्पनाया लाघवज्ञानसाक्षिप्रत्यक्षसनाथायाः समुच्चयः। तत्र मायाशब्देन सदसद्विलक्षणत्वरूपानिर्वाच्यत्वस्य निरूपणानर्हविचित्रकार्यजनकत्वस्य लाभः, प्रावृतादिशब्देनाच्छादकत्वरूपाविद्यात्वस्येति भावः। **अनादित्वेनेति**। आवरणविक्षेपरूपकार्ययोः प्रवाहरूपेणानादित्वात् तत्कारणस्याकार्यत्वरूपमनादित्वं युक्तमिति भावः। ननु तथाप्यज्ञानस्य ज्ञानरूपाध्यासे दोषादिकारणापेक्षणात् आत्माश्रयादिः स्यादेव तत्राह—**स्वप्रकाशात्मन इत्यादिना**। उत्पत्तौ ज्ञप्तौ वा आत्माश्रयादिकं सम्भाव्यते, तत्र ज्ञप्तेरनादित्वेन नाद्यम्। ज्ञप्तेरनादित्वेऽपि यदि स्वप्रकाशत्वं न स्यात् तदा तस्यैव तज्ज्ञप्तिरूपत्वे आत्माश्रयः, तयोः परस्परज्ञप्तिरूपत्वे अन्योन्याश्रयः, ज्ञानान्तरापेक्षायामनवस्था स्यात्; स्वप्रकाशत्वे तु न तदिति भावः। एवञ्च स्वपराध्यासे कारणमित्यस्य स्वपराध्यासे स्वान्यपरिणामिकारणानपेक्षमित्यर्थ इति ध्येयम्।

चित्प्रतिबिम्बाध्यासद्वारा मनसः प्रमातृत्वमिति यदुक्तं तत्र 'ननु अध्यासोऽपि नोपपद्यत' इत्यादिनोद्भावितदोषाणां निरसनं कृत्वा इदानीं तदेव प्रमातृत्वं विस्तरेणोपसंहरति—**तेनाज्ञानेत्यादि।** तेन—अध्यासस्य निर्दोषत्वसमर्थनेन, अज्ञानाध्यासविशिष्टे—अज्ञानप्रतिबिम्बितत्वविशिष्टे, अहङ्काराध्यास—मनोऽध्यासः। तद्विशिष्टे—मनोविशिष्टे। **इन्द्रियधर्माणामिति।** चक्षुषः काणत्वं रूपाद्यग्राहकत्वम्, श्रोत्रस्य बधिरत्वं शब्दाद्यग्राहकत्वम्, उपस्थस्य क्लीबत्वं रत्यसामर्थ्यम्। आदिपदात् दूरग्राहकपाटवादिसंग्रहः। न च काणत्वादिकमदृष्टविशेष इति वाच्यम्। मनः काणमित्यादिव्यवहारापत्तेः। ननु इन्द्रियाध्यासमनुक्त्वा तद्धर्माध्यासः कथमुक्तः तत्राह—**इन्द्रियाणामित्यादि**। धर्म्यध्यासः—धर्मिणि तादात्म्येन अध्यासः। ननु परोक्षतयैव इन्द्रियमपरोक्षधर्मिणि मनोविशिष्टचैतन्ये अध्यस्यताम् तत्राह—**इति सिद्धान्त इति**। सयुक्तिका मूलोक्तिरित्थमित्यर्थः।

### मनोविशिष्टचैतन्ये नेन्द्रियाध्यास इत्यत्र युक्तिः

तत्र युक्तिरुच्यते—अज्ञोऽहमिति प्रतीतिबलात् अज्ञानविशिष्टे मनोऽध्यासः स्वीक्रियते। अज्ञश्चक्षुः इत्यस्य अहं चक्षुरित्यस्य वा परोक्षाया अपरोक्षाया अपि प्रतीतेरभावात् अज्ञानादिविशिष्टे चक्षुरादेः तादात्म्येन नाध्यासः। अहं चक्षुष्मानित्यादिधीस्तु शरीरस्य इन्द्रियसंयुक्तत्वात् नानुपपन्ना। अत एव 'अयं गुरुत्वविशिष्टः, अहमदृष्टवानि'त्यादिपरोक्षप्रतीतिबलात् अपरोक्षेपि धर्मिणि परोक्षस्याध्यासः स्वीक्रियते, अत एव 'देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्ते'-

**वाहं मनुष्य इत्याद्याकारः न तु स्वरूपतः अहं देह इत्यध्यासः। तथा प्रतीत्यभावात्। तद्विशिष्टे च स्थौल्यादीनां देहधर्माणामध्यासः। तद्विशिष्टे च बाह्यानां पुत्रभार्यादीनां**

---

रित्यत्र भाष्ये इन्द्रियेषु ममाभिमान एव **पञ्चपादिकायामुक्तः**। ननु धर्म्यध्यासं विना कथं धर्माध्यासः? न च स्फटिकादौ जपापुष्पस्यानध्यासेऽपि तद्धर्मलौहित्याध्यासदर्शनात् न दोष इति वाच्यम्। अप्रतिबिम्बरूपेण धर्माध्यासस्य धर्म्यध्यासव्याप्यत्वादिति चेन्न। धर्माध्यासाधिष्ठाने अवश्यं धर्म्यध्यासः, न तु धर्माध्यासाधारे, तथा सति कामादिधर्मस्य अध्यासाधारे मनोविशिष्टचैतन्ये मनसोऽध्यासाभावेन व्यभिचारापत्तेः। तथा च अविद्यामनोविशिष्टचैतन्यस्य काणत्वादीन् प्रति अध्यासाधारत्वात्, तदध्यासाधिष्ठानस्य च ब्रह्मचैतन्यस्य इन्द्रियाध्यासेऽप्यधिष्ठानत्वात् धर्माध्यासाधिष्ठाने धर्म्यध्यासाधिष्ठानत्वमवश्यमिति नियमो न व्याहतः। अथ धर्म्यध्यासविशिष्टस्यैवाप्रतिबिम्बरूपधर्माध्यासाधारत्वमिति नियम इति चेन्न। अप्रतिबिम्बरूपत्वस्येव नित्यपरोक्षधर्म्यवृत्तित्वस्यापि धर्मविशेषणत्वमादायैवोक्तनियमस्वीकारात्। मनोवच्छिन्नचिति काणत्वादिविशिष्टरूपेणैव चक्षुरादेस्तादात्म्येनाध्यासः न तु चक्षुष्ट्वादिधर्मरूपेणेति स्वीकार एव यथाश्रुतोक्तनियमेऽपि क्षत्यभावाच्च। धर्मपुरस्कारेण—मनुष्यत्वादिगौरत्वाद्यवान्तरधर्मविशिष्टरूपेण, स्वरूपतः—देहत्वादिसामान्यधर्मविशिष्टरूपेण।

**प्रतीत्यभावादिति**। अहं मनुष्य इत्यादिपूर्वपूर्वधीजन्यसंस्कारस्याहं मनुष्य इत्याद्यध्यासहेतुत्वकल्पनात् तादृशाध्यास उत्पद्यते। अहं देह इत्यादेस्तु प्रत्ययस्यैवाप्रसिद्ध्या तज्जन्यसंस्कारस्याप्रसिद्धेः न तस्य तादृशाध्यासहेतुत्वमिति भावः। **भार्यादीनामिति**। स्वामित्वाद्यध्यासपूर्वकमिति शेषः। साकल्यं विनयादिगुणभूषणादिमत्त्वरूपं पूर्णत्वम्, तदभावो वैकल्यम्। तथा च स्थौल्यादिविशिष्टे पुत्रादिस्वामित्वमध्यस्य पुत्रादिगतसाकल्यवैकल्ये अध्यस्येते। ननु 'स्थूलोऽहं सकल' इत्यत्र सकलस्वामित्वमेव प्रतीयत इति चेन्न। पुत्रादौ पूजिते पूजितोऽहमित्यभिमानात्।

### अज्ञानविशिष्टे मनोऽध्यास इति पक्षः

अत्रेदं बोध्यम्। '[1]तन्वभावे सन्ध्यवदुपपत्तेः' '[2]भावे जाग्रद्वदि'ति सूत्रयोः तन्वभावे इन्द्रियस्थूलदेहाभावेऽपि सन्ध्यवत् स्वप्नवत् ब्रह्मलोके सगुणब्रह्मोपासकस्य भोग उक्तः, देहस्य भावे तु जाग्रद्वत् जाग्रत्कालीनभोगवदित्यर्थकयोः सेन्द्रियस्थूलशरीरानभिमानेऽपि मनोविशिष्टजीवे स्वप्नब्रह्मलोकयोः भोगोक्त्याज्ञानविशिष्ट एव मनोऽध्यासः न स्थूलविशिष्टे। नापीन्द्रियधर्मविशिष्टे। अदृष्टादिविशिष्टमनोविशिष्टेनैव जीवेन काणत्वादिविशिष्टस्थूलदेहग्रहणात् तत्रैव तदध्यासः। स्थूलदेहविशिष्टस्यैव पुत्रादिस्वामित्वप्रतीतेः तत्रैव तदध्यासः। पुत्रस्वामित्वादिविशिष्टजीवेन तादृशे स्वस्मिन् उपयोगितया वित्तादिस्वीकारात् तत्रैव तदध्यासः। अत एव पुत्राद्यपेक्षया प्रियस्य देवतादेराराधनाद्यर्थतया प्रियस्य वित्तादेर्ग्रहणम्, न तु पुत्राद्यर्थम् तत्स्वामित्वस्य स्थूलदेहविशिष्टेऽध्यासः, न तु पुत्रादिस्वामिनि। अत एव तद्वित्तापेक्षया देवतादिरेव प्रियः, तत्प्रयोजनत्वात्। तदेवं 'अज्ञोऽहम्, अहं कामी, कामी काणः, काणो मनुष्यः मनुष्यः सकल' इत्यादिप्रतीतिबलात् अज्ञानादिविशिष्टे मन आदिकमध्यस्यते। अज्ञानादिविशिष्टचिदवच्छेदेन शुद्धचिति मन आदेरुत्पत्त्या तादात्म्यस्वीकारेण उक्तप्रतीतिनिर्वाह

---

१. ब्र० ४-४-१३। २. ब्र० ४-४-१४।

**साकल्यवैकल्यादिधर्माध्यासः । एवं चैतन्यस्याप्यहङ्कारादिषु देहपर्यन्तेष्वध्यासः संसर्गतः । अध्यासव्यवधानतारतम्याच्च प्रेमतारतम्यम् । तदुक्तं वार्तिकामृते—**

**वित्तात्पुत्रः प्रियः पुत्रात् पिण्डः पिण्डात्तथेन्द्रियम् ।**
**इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रियः ॥ इति ।**

**पिण्डः स्थूलशरीरम् । प्राणः अन्तःकरणम् । देहापेक्षया चेन्द्रियाणां प्रियत्वं**

---

इति यावत् । उक्तचितोऽवच्छेदकत्वे हि उक्तचितः शुद्धचिन्निष्ठसम्बन्धोऽप्यवच्छेदकः, स च विशेष्यतारूपः, अवच्छेदकीभूतस्य ज्ञानज्ञेयसम्बन्धस्यैव विशेष्यतात्वात् । 'इदं रजत'मित्याकारकभ्रमे इदंचित्सम्बन्धस्य विशेष्यतात्वेन क्लृप्तत्वात् । एवमवच्छेद्यो ज्ञेयसम्बन्ध एव प्रकारता, तादृशभ्रमे रजतचित्सम्बन्धस्य तथा क्लृप्तत्वात् । एवं च विशेष्यतात्वादिकमतिरिक्तं न कल्प्यते, गौरवात् । तथा चाज्ञानविशिष्टविशेष्यतावच्छिन्नमनःप्रकारताकप्रत्ययस्य निर्वाह इत्युक्तम् ।

इदानीमुक्तप्रत्ययवत 'अहमज्ञः, काम्यहम् मनुष्यः कामी, सकलो मनुष्य' इत्यादिप्रत्ययस्यापि सत्त्वात्, मन आद्यवच्छेदेन शुद्धचिति अज्ञानादिविशिष्टचितोऽन्तर्गतत्वरूपप्रतिबिम्बितत्वरूपसंसर्गोऽध्यस्तो जायते, तथा च उक्तप्रत्ययस्यापि निर्वाहः तन्नान्तरीयकतया मनसः प्रतिबिम्बाध्यासाधीनप्रमातृत्वस्यापि पूर्वोक्तस्य सिद्धिरित्याशयेनाह—**एवञ्चैतन्यस्येत्यादि** । चैतन्यस्य–अज्ञानादिविशिष्टचैतन्यस्य अहङ्काराद्याधारस्य, अहङ्कारादिषु–मनआद्यवच्छेदेन; देहपर्यन्तेषु–साकल्यादिविशिष्टदेहपर्यन्तेषु, संसर्गतः–प्रतिबिम्बत्वरूपेण । 'स एष इह प्रविष्ट आनखाग्रेभ्य' इति श्रुतेः । जलयुक्तपाषाणादेरिव मनोयुक्तदेहादेरपि प्रतिबिम्बाधारत्वसम्भवात् प्रतिबिम्बाधारत्वयोग्यतारूपस्वच्छत्वं बोध्यम् । ननु मनआदीनां सर्वेषामानन्दरूपात्मनि तादात्म्याध्यासेन तेषु जायमानस्य प्रेम्णः उत्कटानुत्कटत्वरूपं वैषम्यं कुतस्तत्राह–**अध्यासव्यवधानेत्यादि** । अध्यासैरानन्दस्य व्यवधानाधिक्ये प्रेम्णोऽनुत्कटत्वं तन्न्यूनत्वे प्रेम्ण उत्कटत्वम्, सुषुप्तौ कार्यप्रपञ्चलयेनानन्दाभिव्यक्तिदर्शनेन स्वप्नजाग्रतोश्च तदपेक्षयाऽऽनन्दाल्पत्वदर्शनेनाध्यासाधिक्यस्य आनन्दापकर्षप्रयोजकत्वेन क्लृप्तत्वादिति भावः । **वित्तादिति** । अनेन पुत्रादिस्वामित्वविशिष्टचिति वित्तादिस्वामित्वाध्यास इति अनुक्तमपि सूचितम् । 'पिण्डात्तथेन्द्रियम् । इन्द्रियेभ्यः प्रियः प्राण' इत्यनेन पटुत्वकाणत्वादिविशिष्टरूपेण चक्षुरादीनां मनोविशिष्टचिति अध्यास इति सूचितम्, अन्यथा ब्रह्मणि तादात्म्येनाध्यस्तत्वमात्रेण मनोपेक्षया अनुत्कटप्रेम्णः चक्षुरादावसम्भवात् । न च पुत्रादाविव ममताध्यासेनापि चक्षुरादावुक्तप्रेमसम्भव इति वाच्यम् । काणत्वादिरूपेण तादात्म्याध्यासः ममताध्यासो वेत्यत्र विनिगमकाभावात् । अन्यथा मनुष्यत्वगौरत्वादिधर्मविशिष्टेऽपि ममताध्यास एव कल्प्येत । अथ धर्मितादात्म्याध्यासस्य धर्मसंसर्गाध्यासव्यापकत्वात् सोऽप्यावश्यक इति इति चेत्, तर्हि इन्द्रियतादात्म्याध्यासोऽपि तथा । **आत्मा**—अज्ञानविशिष्टचित् तदपेक्षया शुद्धात्मा उत्कटप्रेमविषय इति बोध्यम् । 'प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे'ति श्रुतेः ।

**शस्त्रवृष्ट्यादिधारापाते चक्षुरादीनां मीलनदर्शनात् अनुभवसिद्धम्। तेनान्योन्याध्यासात् चिदचिद्ग्रन्थिरूपोऽध्यासः एकतरस्याध्यासाङ्गीकारेऽन्यतरस्याभानप्रसङ्गात् अध्यस्तस्यैव भ्रमे भाननियमात् 'इमे रङ्गरजते' इति समूहालम्बनवदवश्यमितरेतराध्यासः।**

---

**अनुभवसिद्धमिति।** पूर्णानन्दांशस्यावृतत्वेऽपि अविद्याद्यवच्छिन्नानन्दांशानामनावृतत्वम्, 'अज्ञोऽहं सदा भूयासमि'ति प्रेम्णोऽन्यथानुपपत्तेः, तथा च उत्कर्षापकर्षवत्तयापि तदनुभवसम्भव इति भावः। 'अज्ञोऽहमि'त्यादिवत् 'सन्नाकाशस्सन् वायुरि'त्यादावपि परस्पराध्यासः, 'आकाशः सन् वायुस्सन्नि'त्यादिप्रतीतिसत्त्वादित्याह—**तेनेति**। 'अज्ञोऽहमि'त्यादिस्थले परस्पराध्यासस्वीकारेणेत्यर्थः। अन्योन्याध्यासात्—परस्पराध्यासप्रत्ययात्, अध्यासः—अध्यासमात्रम्, चिदचिद्ग्रन्थिरूपः—शुद्धचिद्रूपेऽधिष्ठानेऽचितोरधिष्ठानभिन्नयोः ग्रन्थी परस्परावच्छेदेन परस्परसम्बन्धौ रूपे यस्य तादृशः।

## अन्योऽन्याध्यासनिरूपणम्

'इदं रजतमि'त्यादौ सर्वत्र भ्रमे द्वयाकारतादर्शनादिदमादिसम्बन्धावच्छेदेन रजतादिसम्बन्धस्य तदवच्छेदेन इदमादिसम्बन्धस्य च प्रत्ययेन तदुभयमध्यस्तम्, तत्र रजतादेस्सम्बन्ध इव स्वरूपमप्यध्यस्तम्, 'इदं रजतं ने'त्यादिप्रत्ययेन विनिगमकाभावात्। द्वयोरपि बाध्यमानत्वात्। इदमादेस्तु सम्बन्ध एवाध्यस्तः न स्वरूपम्, 'रजतमिदं ने'त्यादिबाधेन संसर्गस्यैव बाध्यमानत्वात् तादृशबाधोत्तरमपि हि 'एतत्संसृष्टतया रजतं ज्ञातमि'ति अङ्गुल्या निर्दिश्यमानत्वात्। कि'ञ्चेदं रजतमिति यज्ज्ञानं तन्मिथ्ये'ति प्रत्ययेनाकारद्वयसहितधीमिथ्यात्वावगमात् आकारद्वयघटकसम्बन्धद्वयमवश्यं मिथ्येति वाच्यम्। इदमादेरपि संसृष्टरूपेण भ्रमविषयत्वात् मिथ्यात्वसम्भवाच्च मिथ्यात्वम्। एवं 'सदाकाशमि'त्यादावपि सतः संसृष्टरूपेणाकाशादेस्स्वरूपेण संसृष्टरूपेण च मिथ्यात्वम्। 'सदाकाशमिति यज्ज्ञानं तन्मिथ्येति प्रत्ययात्, 'सदाकाशं न', 'आकाशस्सन्ने'ति द्विविधबाधकसत्त्वाच्च। तस्मात्सविकल्पकप्रत्ययमात्रे विशेष्यविशेषणसंसर्गाणां त्रयाणां युगपदुत्पत्तिः। प्रातीतिकस्थले आगन्तुकदोषघटिता व्यावहारिकस्थले त्वविद्याघटिता कारणसामग्री, तदेतदाह—**एकतरस्येति**। विशेषणस्य विशेष्यसंसर्गस्य वा, अन्यतरस्य—विशेष्यसंसर्गस्य विशेषणस्य वा, अभानप्रसङ्गात्—भ्रमाविषयतापत्तेः। **अध्यस्तस्यैवेति**। उक्तबाधकप्रत्ययबाध्यत्वेनेति शेषः। **भ्रमे भानेति**। भ्रमविषयत्वेत्यर्थः।

न'न्विदं रजतमि'त्यादौ एक एवाकार उल्लिख्यते अथ कथं द्वयाकारत्वनियमः तत्राह—**इमे इति**। रजतरङ्गे इत्यर्थः। अवश्यमित्यनेन परस्पराध्यासस्य भाष्याद्युक्तत्वं सूचितम्। तदुक्तं भाष्ये—'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये'ति। ननु रजतादाविदन्त्वादेरिदमादौ रजतत्वादेश्च संसृष्टतयाऽध्यासोऽन्योन्यधर्माध्यासः, तत्र च मानाभावः, प्रतीत्योरन्योन्यतादात्म्याध्यासाभ्यामुपपत्तेरिति चेन्न। द्वयाकारप्रतीत्योर्धर्मयोस्संसर्गाध्यासाभ्यां धर्मिणोस्तादात्म्याध्यासाभ्यां वोपपत्तेरित्यत्र विनिगमकाभावात्। **सङ्क्षेपशारीरकेप्युक्तम्**—

इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमि।
रजतभ्रमेऽस्य च परिस्फुरणात् न यदि स्फुरेन्न खलु शुक्तिरिव॥

इति। अस्य—इदमर्थस्य 'न यदीदमर्थः कल्पितः तदा भ्रमे न स्फुरेत्, शुक्तिरिव शुक्तित्वविशिष्टवत्। शुक्तित्वविशिष्टस्येव संसर्गोपहितेदमादेरकल्पितत्वे उक्तबाधकाबाध्यत्वेन भ्रमाविषयत्वापत्तिरिति भावः। **पञ्चपाद्यामुक्तं** 'यदि युष्मदर्थस्यैव प्रत्यगात्मनि अध्यासः स्यात् प्रत्यगात्मा न प्रकाशेत। न हि शुक्तौ रजताध्यासे शुक्तिः प्रकाशते। प्रकाशते च इह चैतन्यमहङ्कारादा'विति। युष्मदर्थस्यानात्मनः। किञ्च अवश्यमित्यनेन सर्वभ्रमाणां द्व्याकारता तार्किकादेरपि सम्मतेति सूचितम्। तथा हि—सविकल्पकधीमात्रे भ्रमत्वेनास्मत्सम्मते विशेष्यतावच्छिन्नं प्रकारत्वं प्रकारतावच्छिन्नं विशेष्यत्वं वेत्याकारद्वयं सप्रकारकधीमात्रनिष्ठमस्ति अनुव्यवसायादिना तद्ग्रहणात् इति तार्किकादिभिस्स्वीक्रियते, तादृशाकारद्वयं च 'रजततादात्म्येनेदं साक्षात्करोमि, इदन्तादात्म्येन रजतं साक्षात्करोमि, इदं रजतं साक्षात्करोमि रजतमिदं साक्षात्करोमी'ति सार्वलौकिकधीभिः गृह्यते। रजतप्रकारत्वमिदंविशेष्यत्वञ्च परस्परानवच्छिन्नमित्यादितान्त्रिकवाक्यरचनामात्रेण अर्थासिद्धेः। तथा चेदंविषयतायां रजतविषयतावच्छेदकत्वञ्च रजतविषयतायां इदंविषयतावच्छेदकत्वञ्च उक्तधीषु भाति। 'मूलविशिष्टः संयोगीत्यादौ संयोगित्वरूपे विधेये उद्देश्यतावच्छेदकीभूतमूलवैशिष्ट्यस्यावच्छेदकत्वभानवत् 'रजतमिदमि'त्यादौ रजतविषयकसाक्षात्कारे इदंतादात्म्यविषयकत्वस्य विधेयत्वेन इदंतादात्म्यविषयकत्वस्य रजतविषयतावच्छिन्नत्वलाभात्। 'रजततादात्म्येन इदमि'त्यादौ त्विदंविषयकसाक्षात्कारे रजततादात्म्यविषयकत्वस्य विधेयत्वेन तत्र इदंविषयतावच्छिन्नत्वलाभात्। एकविषयतावच्छेदकापरविषयतात्वस्यैव विशेष्यतात्वरूपस्य वक्ष्यमाणत्वात्। उक्तलौकिकधीभिः उभयोः परस्परविशेष्यविशेषणताकत्वघटिताकारयोः सिद्धिरिति नास्माकमेव तत्स्वीकारेण गौरवाद्यापत्तिः। मन्मते तु विशेष्यतात्वादेरतिरिक्तस्याखण्डधर्मरूपस्यास्वीकारात् महदेव लाघवम्।

तथा हि—चिच्चेत्यसम्बन्धो विषयता विषयतात्वमखण्डधर्मस्तस्यां स्वीक्रियते। एकविषयताविशिष्टापरविषयतायामवच्छेदकविषयता विशेष्यता, तादृशविशेष्यतात्वविशिष्टायां तस्यामवच्छेदकविषयता विशेष्यतावच्छेदिकापि विशेष्यतावच्छेदकताशब्देनापि व्यवह्रियते तदाश्रयस्येदंत्वादेरपि विशेष्यतावच्छेदकत्वात्। एवं च यस्या विषयताया अवच्छेदकत्वं विशेष्यतानिष्ठं सा तत्रावच्छेकत्वेनिरूपिका तादात्म्यादिविषयता सांसर्गिकविषयता। तन्निष्ठनिरूपकताया अवच्छेदिकापि विषयता सांसर्गिकविषयतावच्छेदकताशब्देनोच्यते। तदाश्रयतादात्म्यत्वादेरपि निरूपकतावच्छेदकत्वात्। सांसर्गिकविषयता यया विषयतया विशिष्टा सती तादृशावच्छेदकताया निरूपिका सा प्रकारता।

तथा च तादृशावच्छेदकताया निरूपिका सती निरूपकतावच्छेदिका विषयता प्रकारता। निरूपकविशेषणत्वेन तस्या अपि निरूपकत्वात्।

तादृशप्रकारतात्वेऽवच्छेदिका या विषयता सा प्रकारतात्वविशिष्टविषयतावच्छेदिकापि प्रकारतावच्छेदकताशब्देनोच्यते। तदाश्रयस्य रजतत्वादेरपि तादृशप्रकारतात्वावच्छेदकत्वसत्त्वात्। तदिदं विशेष्यतादौ प्रकारतासांसर्गिकविषयतावच्छेदकत्वादिकं तार्किकादिभिरपि स्वीक्रियते।

'रजतत्वेनेदं जानामि, रजतत्वसमवायेन इदं जानामि, रजततादात्म्येनेदं जानामी'त्यनुभवेन प्रकारतासंसर्गविषयतावच्छेदकत्वेन विशेष्यत्वावगाहनात्। तथा च तेनैवाखिलव्यवहारनिर्वाहे विशेष्यतात्वप्रकारतात्वसांसर्गिकविषयतात्वविशेष्यताप्रकारतावच्छेदकतात्वानामखण्डधर्माणां स्वीकारः

न तेषां युक्तः। इदंविषयतावच्छिन्ना या रजतविषयताविशिष्टा तादात्म्यविषयता तच्छालिप्रत्यक्षत्वेन 'इदं रजतमि'त्याकारकप्रत्यक्षस्य प्रवृत्तिहेतुत्वसम्भवात्।

तदयं निष्कर्षः—इदंविषयता रजतविषयताविशिष्टायां तादात्म्यविषयतायामवच्छेदिका मूलादिकमिव विहगादिविशिष्टे संयोगादौ। तादृशावच्छेदकत्वे इदंत्वविषयता अवच्छेदिका मूलादिनिष्ठाच्छेदकत्वे मूलत्वादिकमिव। एवं इदंविषयतानिष्ठावच्छेदकत्वे निरूपकत्वं यत् तादात्म्यादिविषयतानिष्ठं तदवच्छेदकत्वं तादात्म्यत्वादिविषयतासु स्वीक्रियते। संयोगत्वादाविव मूलादिनिष्ठावच्छेदकतानिरूपकतावच्छेदकत्वम्। इयांस्तु विशेषः—यत् मूलत्वादेः समवायेन मूलादिसम्बद्धत्वात् उक्तावच्छेदकत्वम्। इदन्त्वादिविषयतानां तु चिद्घटितेन सामानाधिकरण्येव इदमादिविषयतासु सम्बद्धत्वादुक्तावच्छेदकत्वम्। इदन्त्वादिसम्बन्धविषयतावच्छेदकत्वं इदमादिविषयतानिष्ठमनवच्छिन्नमेव। तादृशावच्छेदकतानिरूपकत्वं तु इदन्त्वादिविषयतावच्छिन्नमिति बोध्यम्।

तस्मात् सांसर्गिकविषयात्वस्यैव अवच्छिन्नत्वनियमः, न तु विशेष्यतात्वस्य प्रकारतात्वस्य वा। ननु 'घटस्सन् पटस्सन्नि'त्यादौ सत्तादात्म्यस्य एकस्यैव भानसम्भवात् विशेषणविशेष्यसंसर्गाणां युगपदुत्पत्तिरिति पूर्वमुक्तमयुक्तमिति चेन्न। घटपटाद्यवच्छिन्नतादात्म्यानामैक्यानुपपत्तेः, अवच्छेदकभेदेन परमते विषयतादीनामिव तादात्म्यानां भेदस्यावश्यकत्वात्।

### विशेष्यतादीनामखण्डानामभ्युपगमनिरासः

ननु वृत्तिज्ञानीयसम्बन्धानां विषयनिष्ठानां विशेष्यतादिरूपत्वस्य अवश्यं वाच्यतया तैरेव विषयताव्यवहारनिर्वाहे चिच्चेत्यसम्बन्धानां विषयतात्वकल्पने मानाभाव इति चेन्न। 'अहं सुखी'त्यादौ वृत्तिज्ञानीयसम्बन्धेन सुखादौ विषयताव्यवहारासम्भवात्, सुखादौ साक्षिमात्रभास्यत्वेन वृत्त्यस्वीकारात्, तत्र सुखादिचित्सम्बन्धस्यैव सुखादिविषयतात्वेन क्लृप्तत्वेन चित्सम्बन्धस्यैव सर्वत्र विषयतात्वस्वीकारात्, ज्ञानज्ञेयसम्बन्धस्यैव विषयताव्यवहारविषयत्वात्, वृत्तेः ज्ञानव्यञ्जकत्वेऽपि ज्ञानत्वाभावात्, ज्ञानव्यञ्जकत्वानुरोधेनैव वृत्तेः ज्ञानावरणरूपाज्ञानसमानविषयकत्वात् चिन्मात्रविषयकत्वम्, अज्ञानस्येव वृत्तेः विषयतायां विशेष्यविशेणयोः संसर्गः व्यक्तिमात्रं वाऽवच्छेदकम्, नास्त्येव वाऽवच्छेदकम्, यथा पर्वतवह्न्योः संसर्गावच्छिन्नचिद्विषयकानुमितिरूपवृत्तेः, सोऽयमित्यादिवाक्यजन्यवृत्तेर्वा, तत्त्वमस्यादिवाक्यजन्यवृत्तेर्वा, तथा चावच्छिन्नानवच्छिन्नरूपेण चिदेव वृत्तेर्विषयः, न घटादयः तादृशविषयतावन्तः; तेषु तु वक्ष्यमाणरीत्या सांसर्गिकविषयतावच्छेदकत्वरूपं विषयत्वम्। अवच्छेदकीभूतसंसर्गस्य प्रतियोगित्वानुयोगित्वरूपे विशेषणविशेष्यत्वे वा न मुख्ये, तथा चैतन्यनिष्ठमपि वृत्त्यज्ञानयोर्विषयत्वं न मुख्यविषयत्वं ज्ञानीयत्वाभावात्, किन्त्वाकाराख्यस्सम्बन्धविशेषः। **उदयनाचार्या**दिरपि **बौद्धाधिकारा**दौ 'प्रकाशस्य सतस्तदीयतामात्रनिबन्धः स्वभावविशेषः विषयते'त्यादिना प्रकाशशब्दितज्ञानीयसम्बन्धस्यैव विषयतात्वमुक्तम्। उक्तञ्च तट्टीकासु **वर्धमानाद्यैः** 'इच्छादीनां विषयता तज्जनकज्ञानीया **याचितमण्डनन्यायेन**' न तु स्वाभाविकी' इति। न च प्रतियोगित्वानुयागित्वमात्रस्य तादृशविशेषणत्वादिरूपत्वे अनुमित्यादिवृत्तेः 'विशेष्ये विशेषणमि'त्यादिरूपाया विशिष्टस्य विशिष्ट्यमित्यादिरूपायाश्च विषयताया भेदः कुतस्त्य इति वाच्यम्। प्रतियोगितानुयोगितयोरेव नानाविधानु-

**सर्वबाधावधिभूतचैतन्यपरिशेषेण च न शून्यवादापत्तिः । सत्यानृतसम्भेदावभासत्वाद-**

भूयमानविशेषाणां स्वीकारात्, वह्न्यादिप्रकारकानुमितिस्थले वह्नित्वाद्यवच्छिन्नप्रतियोगिकसंयोगतादात्म्यविशिष्टचैतन्यनिष्ठसांसर्गिकविषयतास्वीकारात्, विशेषणीभूतसंयोगतत्प्रतियोगित्वयोरपि मिथो निरूप्यनिरूपकभावापन्नाः सांसर्गिकविषयताः सिद्धान्तेऽपि स्वीक्रियन्ते। सर्वो हि विषयः सद्रूपचित्तादात्म्यविशिष्टतयैव विशिष्टज्ञानमात्रे भासते, तथा च विशेषणविशेष्ययोरिव संयोगादिसंसर्गस्यापि चित्तादात्म्यविशिष्टतया भानात् तत्तादात्म्यविशिष्टतया चितोऽपि भानम्। संयोगनिष्ठोक्तविषयतानिरूपिता या प्रतियोगित्वनिष्ठविषयता सापि सांसर्गिकविषयतैव, तादृशविषयतावती प्रतियोगितैव प्रकारतेत्युच्यते, तदन्यप्रकारत्वे मानाभावात्।

एवं संयोगादिविषयतानिरूपितविषयतावदनुयोगितैव विशेष्यता। अत एव भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वे प्रकारताविशेष्यते इति **तार्किकादयो** वदन्ति। भासमानवैशिष्ट्यस्य भासमाने प्रतियोगित्वानुयोगित्वे इति तदर्थः, वैशिष्ट्यविषयतानिरूपितप्रकारतात्वं वह्नित्वावच्छिन्नप्रतियोगिताया एव स्वीक्रियते लाघवात्। एवं पर्वतत्वाद्यवच्छिन्नानुयोगिताया एव तादृशविशेष्यतात्वम्। एवं च पूर्वकल्पे वह्नित्वाद्यवच्छिन्नप्रतियोगितात्वेन प्रतियोगितायाः विषयता यत्र तत्र वह्नित्वविशिष्टनिरूपितवैशिष्ट्यधीः, पर्वतत्वाद्यवच्छिन्नानुयोगितात्वेनानुयोगिताभाने पर्वतत्वशिष्टाधिकरणकवैशिष्ट्यधीः, यत्र तु प्रतियोगितानुयोगितयोः न तथा भानं किन्तु वह्नित्वाद्युपहितनिष्ठतया तत्र विशेष्ये विशेषणमित्यादिधीः। द्वितीयकल्पे तु वह्नित्वादेः प्रकारतावच्छेदकत्वादिरूपे प्रकारत्वे विशिष्टवैशिष्ट्यम्, केवलप्रकारत्वे विशेष्ये विशेषणमित्यादिरूपत्वम्। आद्य एव तु कल्पो युक्तः, विषयवैलक्षण्यं विना विषयतामात्रभेदेन ज्ञानानां वैलक्षण्यापादने साकारवादापत्तेः। ननु 'इदं रजतमि'त्याकारकज्ञाने इदंचित्सम्बन्ध एवावच्छेदकतया भाति, न तु रजतचित्सम्बन्ध इत्यत्र किं व्यवस्थापकम्? इति चेत् अनुभव एव। अन्यथा 'मूलविशिष्टः कदम्बः कृष्णसंयोगी'त्यत्र प्रत्यक्षे मूलस्यैवावच्छेदकतया भानं न तु कृष्णसंयोगस्येत्यत्राप्यनुभवादन्यव्यवस्थापकान्वेषणापत्तेः। तथा चानुभवेनैव अवच्छेदकत्वे व्यवस्थापिते तन्निर्वाहाय मूलादेर्मूलाद्यवच्छिन्नसंयोगादिहेतुत्ववदज्ञानादेरिदमाद्यवच्छिन्नरजतादिहेतुत्वं कल्प्यते। स्वविषयतावच्छेदकविषयतावत्त्वादिसम्बन्धेन रजतादिकं प्रति स्वाश्रयतावच्छेदकत्वसम्बन्धेनाज्ञानादेर्हेतुत्वम्। विवेचितञ्चैतत् **चन्द्रिकायाम**स्माभिः। तस्माद् द्व्याकारानुभवात् 'इदमादिकं यदि भ्रमकालेऽध्यस्तं न स्यात् तदा भ्रमविषयो न स्यात्, शुक्तित्वविशिष्टवदि'ति तर्कात्, 'इदमादिकं भ्रमकालेऽध्यस्तं भ्रमविषयत्वात् रजतादिवदि'त्यनुमितेश्च परस्पराध्यास आवश्यकः। तदुक्तं **संक्षेपशारीरके**—

अनुभूतियुक्त्यनुमितित्रितयादितरेतराध्यसनसिद्धिरतः। इति।

ननु 'सदिदंरजतमि'त्यादिभ्रमे सद्रूपचितोऽपि विषयत्वात् साप्यध्यस्ता स्यात् तत्राह—**सर्वबाधेत्यादि।** साक्षिरूपत्वेन चितो बाधासम्भवात् चैतन्यं सर्वबाधकज्ञानानामविषयरूपोऽवधिः, अतः तस्य परिशेषात् मिथ्यात्वास्वीकारात् न शून्यवादस्य—सर्वमिथ्यात्ववादस्य आपत्तिरिति भावः। तथा च संसृष्टरूपेणैव सद्रूपस्य भ्रमविषयत्वं मिथ्यात्वञ्च, न तु शुद्धरूपेणेति भावः। सत्यानृतसम्भेदावभासत्वात्–वस्तुगत्या सत्यनिष्ठो योऽनृतसम्बन्धः तद्विषयकत्वात्। सत्यविषयकत्वं विना-

**ध्यासस्य । तस्मात्पूर्वपूर्वाध्यासमूल एवायमुत्तरोत्तरोऽहङ्काराध्यासः बीजाङ्कुरवदनादिः । अविद्याध्यासश्च एक एवानादिः । नन्वध्यासस्यानादित्वे 'स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास' इति वदता भाष्यकारेण स्मृतिरूपत्वेन संस्कारजन्यत्वमुक्तं विरुध्येतेति चेन्न। कार्याध्यासाभिप्रायत्वात्तस्य । 'परत्र परावभास' इत्येतावन्मात्रस्यैव उभयानुगतस्य लक्षणत्वात् । यद्वा 'सत्यानृते मिथुनीकृत्ये'ति भाष्यवचनात् सत्यमिथ्यावस्तुसम्भेदावभासोऽध्यास इत्येव सिद्धान्तलक्षणम् । तेन कारणाध्यासेऽपि न लक्षणाव्याप्तिः । कार्याध्यासस्य च प्रवाहरूपेण बीजाङ्कुरवदनादित्वाभिधानान्न कोऽपि दोषः । एवमध्यासे सिद्धे एकस्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्मव्यवस्था चोपपद्यते ।**

---

धिष्ठानज्ञानस्य बाधकत्वासम्भवेन आरोपितस्य अनृतत्वासिद्धेरधिष्ठानं सत्यमेवेति भावः । ननु मनुष्यत्वादिविशिष्टरूपेणैव देहादेरध्यासः न तु देहत्वादिविशिष्टरूपेण, एवमज्ञानादिविशिष्ट एव चैतन्ये अहङ्काराद्यध्यासः न तु आकाशादिविशिष्ट इत्यत्र किं मानम् ? तत्राह—**तस्मादिति** । प्रतीतिरूपकार्यानुसारेण तत्कारणकल्पनमित्यस्य धर्मपुरस्कारेणेत्यादिनोक्तत्वादित्यर्थः । अध्यासमूलः—अध्यासजन्यसंस्कारजन्यः, अहङ्काराध्यासः—अहङ्कारादिरूपः तद्धीरूपश्चाध्यासः । अर्थाध्यासे अर्थस्य ज्ञानाध्यासे ज्ञानस्य सूक्ष्मावस्थारूपः संस्कारो हेतुरिति भावः । संस्कारजन्यत्वेऽपि भाष्योक्तमनादित्वं समर्थयते—**बीजाङ्कुरादिवदनादिरिति** । एकजातीयस्य स्वसृष्ट्यवधिप्रलयपर्यन्तसर्वकाले सत्त्वमनादित्वमिति भावः ।

ननु अज्ञानाध्यासस्य उत्पत्त्यभावः 'न चात्माश्रयादी'त्यादिनोक्तः, स च न युक्तः, अहङ्कारस्य कार्यत्वेन तदवच्छेदेन संसृष्टतया घटाद्यवच्छेदेन कपालादाविव कारणस्य अज्ञानस्याप्युत्पत्तिसम्भवात् तत्राह—**अविद्येत्यादि** । एक एव–अहङ्कारानवच्छिन्न एव, अविद्याध्यासः–चिन्निष्ठाविद्यासम्बन्धः, अनादिः–अनुत्पन्नः । अहङ्काराध्यासकाले अहङ्कारावच्छेदेन अविद्यासंसर्गाध्यासेऽपि अविद्याविशिष्टचैतन्यस्य तत्पूर्वकाले सत्त्वमवश्यं वाच्यम्, अन्यथा चिदसम्बद्धेन अज्ञानेन चित्सम्बद्धाहङ्कारजननासम्भवादित्यहङ्काराद्यनवच्छिन्नस्याप्यनुत्पन्नस्य अज्ञानचित्सम्बन्धस्य आवश्यकत्वात् तद्विशिष्टरूपेण अनुत्पन्नत्वम् अज्ञानाध्यासस्याविरुद्धमिति भावः । **वस्तुतस्तु** अहङ्कारोत्पत्तेः पूर्वमपि नानुत्पन्नोऽविद्यासम्बन्धः किन्तु उत्पन्नः, पूर्वोत्पन्नस्य अहङ्कारावच्छिन्नस्य अज्ञानचितोः तादात्म्यस्य संस्कारः, पूर्वोत्पन्नाहङ्कारसंस्कारेणावच्छिन्नस्तेन सम्बन्धेन चिति सम्बद्धस्याज्ञानस्याहङ्कारजनकत्वम्, तस्यावश्यकत्वेन तदन्यसम्बन्धे मानाभावादिति ध्येयम् । **अध्यासस्य**—अज्ञानाध्यासस्य, अनादित्वे–अनुत्पन्नत्वे, स्मृतिरूपः—स्मृतिसदृशः । स्मृतिरूपत्वेन—स्मृतिरूपत्वोक्त्या । **परत्र परावभास इति** । अवमतो भासो ज्ञानं ज्ञेयं वाऽवभासः । तथा चावमतत्वं ज्ञानार्थाध्यासयोर्लक्षणम् । तच्च येन रूपेण येन सम्बन्धेन च यदवच्छेदेन यत्र यत्प्रतीयते तदवच्छेदेन तत्र वर्तमानाभावस्य तद्रूपसम्बन्धाभ्यामवच्छिन्नप्रतियोगित्वं तन्निष्ठमित्यर्थाध्यासस्य, तादृशप्रतियोगित्वाश्रयविषयकज्ञानत्वं ज्ञानाध्यासस्येति भावः । अत्र यथाश्रुतवाक्यस्य लक्षणाबोधकत्वादाह—**यद्वेत्यादि** । अनृतत्वमेव लक्षणम् । तदाश्रयस्य सदसद्व्यावृत्तिज्ञापनाय सत्यसम्भेदेत्युक्तम्, सत्यतादात्म्येत्यर्थः । सत्यं हि न सत्यसम्भिन्नं सत्ययोरभावात् । नाप्यलीकं तथा, सदसतोस्सम्बन्धाभावादिति भावः । अथवा सत्यसम्भिन्नत्वं लक्षणान्तरमथवा सत्यस्य चैतन्यज्ञानरूपत्वेन सम्बन्धोक्त्याऽनृतज्ञानत्वं

**तथाहि—अज्ञानोपहित आत्मा अज्ञानतादात्म्यापन्नः स्वचिदाभासाविवेकादन्तर्यामी साक्षी ईश्वरः जगत्कारणमिति च कथ्यते, बुद्ध्युपहितश्च तत्तादात्म्यापन्नः स्वचिदाभासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च कथ्यते—इति वार्तिककारपादाः। प्रतिदेहं बुद्धीनां च भिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्य तु सर्वत्राभिन्नत्वात्तद्गतचिदाभासभेदाभावात् तदविविक्तसाक्षिचैतन्यस्य न कदाचिदपि भेदभानमिति। अस्मिंश्च पक्षे तत्त्वमादिपदे जहल्लक्षणैव। साभासस्योपाधेर्वाच्यार्थस्य हानात्। आभासस्यापि जडाजडविलक्षणत्वेनानिर्वचनीयत्वात्। तदुक्तं संक्षेपशारीरके—**

**साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तदाहं-**
**शब्दोऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे। इति।**

**न चाभासस्यैव बद्धत्वात् केवलचैतन्यस्य मुक्तत्वात् बन्धमोक्षयोर्वैयधिकरण्यं**

---

ज्ञानाध्यासलक्षणमुक्तम्। अध्यासे—अज्ञानाहङ्काराध्यासे। **उपपद्यत इति**। तथा च तदुपपादनार्थ एव प्रथमोत्पन्नमप्याकाशाध्यासमनुक्त्वाऽहङ्काराध्यास उक्त इति भावः। **अज्ञानोपहितेत्यादि**। अज्ञानोपाधौ प्रतिबिम्बभावापन्नत्वात् अन्तर्गततादात्म्यापन्नो यः अज्ञानोपहितात्मन आभासः प्रतिबिम्बः सोऽज्ञानोपहितः, आत्मा—विविक्तः बिम्बप्रतिबिम्बयोरभेदस्य यावदुपाधिसत्त्वं भानात् सोऽन्तर्यामिरूपः। तस्य च स्वरूपतो मिथ्यात्वेऽप्यात्माविवेकाच्चेतनत्वसाक्षित्वादीति ज्ञापयितुं आत्मा विशेष्यत्वेनोक्तः न तु तथा विवक्षितमत्र, अथवेत्यादिना तादृशपक्षस्य वक्ष्यमाणत्वात्। अन्तर्यामी—सर्वेषां प्रेरकः, साक्षी—सर्वव्यवहारहेतुज्ञानस्वरूपः, तेनैव ज्ञानेन सर्वेषां जीवानां व्यवहार इति भावः। **जगत्कारणमिति**। न च जगत्कारणत्वरूपेणेशस्य जीवान् प्रति आवृतत्वात् साक्षिरूपेणाप्यावृतत्वापत्त्या साक्षित्वानुपपत्तिरिति वाच्यम्। अज्ञानप्रतिबिम्बत्वरूपसाक्षित्वविशिष्टेऽहङ्काराध्यासस्य **विवरणादिमत** इव **वार्तिक**मतेऽपि स्वीकारात् जीवान्प्रति साक्षिणोऽनावृतत्वात्। तत्र प्रमाणवृत्त्यभावकालेऽप्यहमज्ञ इति प्रत्ययात् अहङ्कारविशिष्टस्यैव सुखदुःखादिसंसारोपलम्भेनाज्ञानसाक्षिणीश्वरत्वस्वीकारादिति भावः।

**बुद्ध्युपहित इति**। अहङ्कारोपहित इत्यर्थः। पूर्ववदहङ्कारोपहितात्मन आभासः तदविविक्ताहङ्कारोपाध्यन्तर्गतप्रतिबिम्बरूपः जीवादिरूपः सुषुप्तावपि संस्काररूपेणाहङ्कारसत्त्वाज्जीवसत्त्वम्। बुद्धीनाम्—अहङ्काराणाम्। सर्वत्र—सर्वकालेषु। **साक्षिचैतन्यस्येति**। 'कर्माध्यक्षः सर्वभूताधिवासः। साक्षी'त्यादिश्रुतिः ईशस्य सर्वसाक्षित्वे मानम्। ननु उपाधितादात्म्यापन्नाभासोऽपि विनिगमनाभावात्तत्त्वमादिपदवाच्यः। आभासश्च उपाध्यन्तर्गतत्वरूपारोपितधर्मविशिष्टचिदेव। तथा च जहदजहल्लक्षणैव तत्राह—**आभासस्येति**। सोपाध्याभासस्येत्यर्थः। वाच्यार्थस्येत्यनुषज्यते। अनिर्वचनीयत्वात्—**वार्तिकमते** मिथ्यास्वरूपत्वस्वीकारात्। साभासाज्ञानवाची, साज्ञानाभासवाची—साभासाहङ्कारस्य—साहङ्काराभासस्य वाचकः। बद्धत्वात्—कर्तृत्वादिसंसारवत्त्वात्, मुक्तत्वात्—तत्त्वज्ञानाभिव्यक्तपूर्णानन्दस्वरूपत्वात्। नः—अधिष्ठानीभूतचिन्मात्रस्वरूपकाणाम्, आभासानामित्यर्थः।

स्वनाशार्थं प्रवृत्त्यनुपपत्तिश्चेति वाच्यम् । केवलचैतन्यस्यैवाभासद्वारा बद्धत्वाभ्युपगमात् । तदुक्तं वार्त्तिककारपादैः—

अयमेव हि नोऽनर्थो यत्संसार्यात्मदर्शनम् ।। इति ।

तेन शुद्धचैतन्यस्याभास एव बन्धः । तन्निवृत्तिश्च मोक्ष इति न किञ्चिदसमञ्जसम् । अथवाऽऽभासाविविक्तचैतन्यमपि तत्त्वमसिपदवाच्यम् । तेन वाच्यैकदेशस्यात्यागादस्मिन्पक्षे जहदजहल्लक्षणैवेति न कोऽपि दोषः । अयमेव पक्षः आभासवाद इति गीयते । अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीवः इति विवरणकाराः । अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितं चैतन्यं

---

दर्शनं—भासकत्वयोग्यत्वं शुद्धचिन्निष्ठं आभासतादात्म्यमिति यावत् । **तन्निवृत्तिरिति** । तथा च स्वीयवास्तवमुख्यस्वरूपप्राप्तये स्वस्य बद्धस्य नाशार्थमपि प्रवृत्तिः न दोषाय । सर्वमतेष्वपि मुक्तस्य स्वीयरूपस्य प्राप्त्यर्थं बद्धस्वरूपस्य नाशार्थं बद्धे प्रवृत्तिस्वीकारात् । मनोदेहादिविशिष्टरूपं हि बद्धम् तन्नाशद्वारा तदुपलक्षितमुक्तरूपप्राप्त्यर्थं तत्र प्रवृत्तेः स्वीकारात् । अत्र अज्ञानमेव शुद्धचिन्निष्ठं बन्धः तन्नाशो मोक्ष इति युक्तम् ।

'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः ।

इति **वार्तिकोक्तेः** । आभासस्याप्यज्ञानजन्यत्वात् । तथाप्याभासस्य सुखदुःखाद्याश्रयत्वेन स्फुटबन्धत्वेन प्रत्ययात् स एव बन्ध उक्तः । अत एव संसार्यात्मदर्शनमित्यनेनाभासस्य दुःखादिसंसारवत्त्वमुक्तम् । **नन्वेवं** यत्र बन्धस्तदेव जीवस्य स्वरूपं स्यात्तत्राह—**अथवेत्यादि** । **चैतन्यमपीति** । यदा चिदविविक्ताभासो वाच्यः, तदा विनिगमकाभावात् आभासाविविक्तं चैतन्यमपि वाच्यम् । वाच्यार्थस्य चिद्रूपतया भानस्य उभयथापि निर्वाहादिति भावः । **एकदेशस्येति** । यद्यपि चिदविविक्ताभासस्य वाच्यत्वेऽपि चितो वाच्यविशेषणत्वेन वाच्यत्वमस्ति, तथापि चित्स्वरूपलक्षणा न जहदजहल्लक्षणोच्यते, शक्तिमुख्यविशेष्यलक्षणाया एव तथात्वात् । शक्तिस्वाभाव्येन विशेषणतयैव भानं चितः स्यात् । जहदजहल्लक्षणा हि शक्यैकदेशशक्तिरेव । यथा बलवदनिष्टाजनकत्वविशिष्टेष्टसाधनत्वज्ञानशक्तविधिप्रत्यये 'श्येनेनाभिचरन् यजेत' इत्यादौ केवलेष्टसाधनत्वबोधोपधायिका तादृशशक्तिरित्युक्तं **शब्दमणौ** । तथा च विशेषणतया शक्यस्याविशेषणतया च शाब्दधीर्यदि शक्त्या स्यात्, तदा 'गौर्नित्या, पशुरपशुरि'त्यादावपि स्यात् । किञ्च विशेषणस्यावाच्यतापक्षे चिदविविक्तस्य वाच्यत्वेऽपि चितो वाच्यत्वाभावेन वाच्यैकदेशत्वाभावे बोधो लक्षणयैवेति भावः । **आभासवाद इति** । स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति वादः **आभासवादः** । स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बमिति वादस्य **विवरणोक्तस्य** वक्ष्यमाणस्य **प्रतिबिम्बवादत्वमिति** भावः ।

बिम्बचैतन्यम्—अज्ञानोपाध्यनन्तर्गतचैतन्यम् । शुद्धाद्व्यावर्तयति—**अज्ञानोपहितमिति** । **अन्तःकरणेत्यादि** । अन्तःकरणं स्थूलावस्थं मनः, तत्संस्कारः सूक्ष्मावस्थं मनः, तयोरन्यतरविशिष्टं

**जीवः। अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति सङ्क्षेपशारीरककाराः। अनयोः पक्षयोः बुद्धिभेदाज्जीवनानात्वम्। प्रतिबिम्बस्य पारमार्थिकत्वात् जहदजहल्लक्षणैव तत्त्वमादिपदेषु। इममेव च प्रतिबिम्बवादमाचक्षते। अज्ञानविषयीकृतं चैतन्यमीश्वरः। अज्ञानाश्रयीभूतं च जीव इति वाचस्पतिमिश्राः। अस्मिंश्च पक्षे अज्ञाननानात्वात् जीवनानात्वम्। प्रतिजीवं च प्रपञ्चभेदः। जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वात्। प्रत्यभिज्ञा चापि सादृश्यात्।**

---

यदज्ञानं तत्प्रतिबिम्बितमिति, उक्तान्यतररूपे अज्ञाने च प्रतिबिम्बितमिति यावत्। मनस्त्वेन निवेशे मनस्संस्कारस्य असंग्रहः, तत्र मनस्त्वसत्त्वे मानाभावात्। न हि घटसंस्कारे घटत्वमस्ति, अतस्संस्कारोऽपि पृथगुक्तः। उपाधेः प्रतिबिम्बपक्षपातित्वेन 'पूर्णानन्दो नास्ति न भाती'ति व्यवहाररूपकार्यमविद्या प्रतिबिम्ब एव जनयति, न तु बिम्बे; दर्पणादेः स्वगतमालिन्यादिसंसर्गस्य प्रतिबिम्बीभूतमुखादौ जनकत्वदर्शनात्। अतो जीवस्यैव प्रतिबिम्बत्वमुक्तं नेशस्येति बोध्यम्। शुद्धं–जीवेशानुस्यूतं साक्षिरूपम्। **नानात्वमिति**। मनोवच्छिन्नस्यैव संसाराश्रयत्वप्रतीत्या मनस उपाधित्वमावश्यकम्, तथा च जीवनानात्वमिति भावः। प्रतिबिम्बस्य–प्रतिबिम्बस्वरूपचितः। प्रतिबिम्बत्वविशिष्टरूपेण कल्पितत्वेऽपि प्रतिबिम्बस्य स्वरूपचैतन्यमकल्पितमिति भावः। 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय' इत्यादिश्रुतयोऽनेकमनोरूपे प्रतिबिम्बितानां जीवत्वे मानानि। ईशस्य प्रतिबिम्बितत्वेऽपि तत्र अविद्या 'पूर्णानन्दो नास्ती'त्यादिव्यवहारं न जनयति, सार्वज्ञ्यश्रुतेः।

### भामतीकारमतम्

**अज्ञानविषयीत्यादि**। 'ब्रह्म नास्ती'त्यादिव्यवहारो यदाश्रितः अज्ञानमपि तदाश्रितम्। कार्यकारणयोः एकाश्रितत्वस्य युक्तत्वात्। स च जीवाश्रित इत्यज्ञानमपि तदाश्रितम्। न च अज्ञानाश्रयस्यैव जीवस्वरूपत्वात् आत्माश्रय इति वाच्यम्। अज्ञानोपहितस्यैव जीवत्वेन जीवाश्रितस्याज्ञानस्य स्वाश्रितत्वाभावात्। न हि दण्डत्वोपहितस्य घटकारणत्वे दण्डत्वस्यापि तत्। एवं च 'अज्ञानाश्रयो नास्ति न भाती'तिव्यवहाराभावात् अज्ञानानाश्रयीभूतस्यैव अज्ञानविषयत्वात् तदुपहितचिदेव ईश ईति भावः। **अज्ञाननानात्वादिति**। कस्मिंश्चिज्जीवन्मुक्तेऽपि कस्यचित् बन्धोपलब्धेः जीवभेदप्रयोजकं जीवोपाध्यज्ञाननानात्वं कल्प्यते। प्रपञ्चभेदः–ईशाकाशादिप्रपञ्चनानात्वम्। एकाज्ञाननाशेऽपि अन्याज्ञानतद्विषयेशतत्कार्याकाशादीनां सत्त्वात् नानात्वमिति भावः। ननु सृष्ट्यारम्भकाले सर्वैरज्ञानैः एक एव प्रपञ्चो जन्यताम्, अज्ञानभेदेन प्रपञ्चभेदकल्पने गौरवात्। एकाज्ञानस्य उच्छेदक्षणे प्रपञ्चस्य उच्छेदेन द्वितीयक्षणे विद्यमानाज्ञानानां परिणामः प्रपञ्चान्तरं जायते। एवञ्च एकस्मिन् प्रपञ्चोच्छेदक्षणे केनापि प्रपञ्चो नोपलभ्यते इति स्वीक्रियते उक्तलाघवानुरोधात्। न च भवन्मतेऽपि तत्तदज्ञानव्यक्तिभिः क्रमेण नानाप्रपञ्चोत्पत्तिस्वीकारेण न लाघवमिति वाच्यम्। शतादिसंख्यपुरुषाणां युगपत् मुक्तिस्थले शताद्यज्ञानव्यक्तीनां युगपन्नाशेन तावदज्ञानभेदेऽपि प्रपञ्चभेदाभावात्। युगपन्नानाप्रपञ्चस्वीकारे युगपदुत्पन्ननानाकाशादिषु नानापुरुषैः युगपदनुभूयमानानन्तसंयोगादिव्यक्तिकल्पने गौरवाच्चेति चेन्न। सृष्टिप्रलयवाक्यैस्तावत् परिमितप्रलयकालोत्तरमाकाशादीनां क्रमेण सृष्टिबोधनात् युगपदेवाकाशादिसर्वप्रपञ्चोत्पत्तौ मानाभावात्। तत्तदसाधारणकारणसमवधानं विना उक्तद्वितीयक्षणे

उपलभ्यमानसर्वकार्योत्पत्त्यसम्भवात् । तत्तदसाधारणकारणानां हेतुहेतुमद्भावापन्नानामनपेक्षणे चानेकक्षणेषु तत्तत्कार्योपलम्भापलापापत्तेः । न हि क्रियोत्पत्तिद्वितीयक्षणे प्रपञ्चोच्छेदे विभागाद्युत्पत्तिस्सम्भवति । किञ्च जीवस्य जगदुपादानत्वबोधिका—

पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम् ।

इत्यादिश्रुतिः, अज्ञानस्य तद्बोधिका 'मायां तु प्रकृतिं विद्यात्' ( सृष्ट्वा प्रविश्य ) 'अमूढो मूढ इव व्यवहरन्नास्ते माययै'वेति श्रुतिश्च । एकवचनान्तानां जीवमायामूढपदानां स्वारस्यात् एकैकजीवस्याज्ञानस्य च जीवाज्ञानान्तरनिरपेक्षोपादानत्वं बोधयति । त्वत्पक्षे तु तद्बाधस्स्यात् । तथा च साधूक्तं–'प्रतिजीवं प्रपञ्चभेद' इति । पुरत्रये–विराट्हिरण्यगर्भाव्याकृतरूपे । नन्वेवं 'यो घटो मया दृष्टः स एव त्वये'ति प्रत्यभिज्ञा न स्यात् तत्राह—**प्रत्यभिज्ञेति । सादृश्यादिति ।** दृष्टत्वरूपासाधारणधर्मविषयकात् त्वद्दृष्टो मद्दृष्ट इत्याकारकेत्यर्थः । त्वद्दृष्टव्यक्त्यभेदस्य मद्दृष्टव्यक्तावभावेऽपि मदीयप्रपञ्चान्तर्गतस्य मया कल्पितस्य व्यावहारिकस्य मद्दृष्टव्यक्तिनिष्ठस्य त्वद्दृष्टत्वस्य उक्तप्रत्यभिज्ञाविषयता । यद्यपि मद्दृष्टत्वं तादृशं मद्दृष्टव्यक्तावेव वर्तते, न तु त्वद्दृष्टे, तथापि त्वद्दृष्टतात्वस्य त्वद्दृष्टत्वे त्वत्कल्पिते सत्त्वात् एकजातीयस्य त्वद्दृष्टत्वस्य सादृश्यत्वसम्भवः । न हि घटादिरिव घटत्वादिरपि जीवभेदेन भिन्नम्, येन त्वद्दृष्टतात्वमपि तथा स्यात् । सादृश्यप्रत्ययबलेन हि जातिमात्रं सर्वजीवज्ञेयमेकमेव स्वीक्रियते । तथा च त्वद्दृष्टतायाः त्वद्दृष्टवृत्तिरूपादिस्वरूपत्वेन तद्वृत्तिजातिविशेषस्यैव त्वद्दृष्टतात्वरूपत्वेन तदघटितं सादृश्यम् । न च तथापि 'त्वदीयत्वद्दृष्टवृत्तिरूपादिजातीयरूपवान् मद्दृष्ट' इति ज्ञानासम्भवः, अन्यदृष्टस्य अन्येन ज्ञातुमशक्यत्वादिति वाच्यम् । तथाऽपि वस्तुगत्या त्वद्दृष्टरूपवृत्तिजातिविषयाकारस्य ज्ञानस्य सम्भवेन तस्यैव प्रकृते प्रत्यभिज्ञापदार्थत्वात् । एवञ्च तत्त्वज्ञानं स्वाश्रयजीवमात्रदृश्यस्यैवोच्छेदकं न तु जातेः ।

अथवा—

येयं गङ्गा नरैस्सेव्या सेव्यते सा सुरादिभिः ।
सर्वेषां पावनी सैका प्रयच्छति परं पदम् ॥

इत्यादिपुराणादिवाक्यमूलार्षप्रत्यभिज्ञैवात्र प्रत्यभिज्ञापदार्थः । आर्षज्ञानस्य देवनरादिदृष्टगङ्गादिरूपसजातीयरूपवतीयं गङ्गेत्याकारस्य सर्वजीवीयप्रपञ्चग्राहकत्वात् । **वस्तुतस्तु** सर्वजीवाज्ञानजन्यनानागङ्गादीनां सर्वजीवग्राह्यत्वेऽपि न क्षतिः । एकस्य तत्त्वज्ञानेनापरस्य प्रपञ्चानुच्छेद इत्येतदर्थमेव प्रपञ्चभेदस्वीकारात् । तथा च त्वद्दृष्टस्यापि मम ग्रहणात् ऐक्यप्रत्यभिज्ञा सम्भवत्येव प्रत्यभिज्ञा चेत्यादिमूलं तु 'पूर्वदिने मुक्तो यः पुरुषः तद्दृष्टो घट इदानीं मया दृष्ट' इत्यादिधियः सादृश्यविषयकत्वपरम् । तत्र तद्दृष्टस्य इदानीमभावेन मद्दृष्टे तदैक्यविषयत्वासम्भवात् । यद्यपि जीवनिष्ठाज्ञानविषयब्रह्मोपादानकं जगत्, अविद्या तु प्रमातृदोषविधया जगतो निमित्तकारणम्, न तूपादानम्, ब्रह्मनिष्ठजगतो व्यधिकरणत्वात्, न हि शरावादिनिष्ठदुग्धादेः घटादिनिष्ठदध्यादिरूपपरिणामः सम्भवतीति **कल्पतर्वादौ वाचस्पत्याशयो** वर्णितः तथापि मायोपादानत्वज्ञापिकायाः 'त्रयमप्येतत् सुषुप्तं स्वप्नं मायामात्रम्, मायां तु प्रकृतिमि'त्यादिश्रुतेः स्वारस्यात्, जीवोपादानत्वपरतयापि **वाचस्पति**-

**ईश्वरस्य च सप्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारादिति । अयमेव चावच्छेदवादः ।**

**अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बचैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानोपहितं जीव इति वा मुख्यो वेदान्तसिद्धान्तः एकजीववादाख्यः । इममेव दृष्टिसृष्टिवादमाचक्षते । अस्मिंश्च पक्षे जीव एव स्वाज्ञानवशात्**

---

वाक्यानां नेतु शक्यत्वात् जीवोपादानत्वश्रुतेश्च जीवोपादानत्वमुक्तम् । एवञ्चाज्ञानाविषयस्यापि जीवस्य परिणामिकारणाज्ञानाश्रयत्वादेव उपादानत्वं न विरुद्धम् । ब्रह्मणश्चानुपादानत्वेऽपि तज्ज्ञानमेवाज्ञाननिवर्तकम्, समानविषययोरेव ज्ञानाज्ञानयोः नाश्यनाशकभावस्य क्लृप्तत्वात् । 'इदं रजतमि'-त्यादिभ्रमस्थलेऽपि पल्लवाविद्यापरिणामरजताद्युपादानत्वमुक्ताविद्याश्रयत्वात् जीव एव । तस्यैव शुक्त्याद्युपादानत्वात् शुक्त्याद्यवच्छेदेन जीवगतरजतादिप्रतीतिः उक्ताविद्यायाः शुक्त्याद्यवच्छिन्नचिद्विषयकत्वात् तादृशज्ञाननाश्यत्वम् । **ईश्वरस्येत्यादि ।** जीवो न जगदुपादानम् किन्तु ईश्वर इत्यादिशास्त्रीयवाक्येषु उपादानपदमुपादानभूतजीवनिष्ठाविद्याविषयपरमित्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिस्तु ब्रह्मणः जगत्कारणत्वं बोधयन्ती जीवब्रह्माभेदपरा इति बोध्यम् । **अवच्छेदवाद इति ।**

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥

इत्यादिश्रुतयो जीवस्यावच्छिन्नरूपत्वबोधिकाः ।

### मुख्यवेदान्तसिद्धान्तः

**अज्ञानोपहितमित्यादि ।** जीवोपाधौ मनो न निवेश्यते, हस्तपादाद्यवच्छिन्नानामिव मनोवच्छिन्नानां भेदेऽपि जीवभेदास्वीकारात् । परन्तु अज्ञानमेवोपाधिः । तस्य चैकत्वमेव, लाघवात् । 'मायान्तु प्रकृतिम'जामेकामि'त्यादिश्रुतिसिद्धैकवचनादिति भावः । **अज्ञानानुपहितमिति ।** अज्ञानोपहितात् भिन्नमित्यर्थः । नन्वीश्वरस्याज्ञानानुपहितत्वे प्रपञ्चमध्ये अवस्थानं न स्यात्, तथा च 'यः पृथिव्यां तिष्ठन्नि'तिश्रुतिविरोधस्स्यादिति बिम्बप्रतिबिम्बरूपेश्वरजीववादिभिः **विवरणकारै**रवच्छेदवादे दूषणमुक्तम्, तत्राह—**शुद्धमिति ।** तथा चोपहिते जीवचैतन्ये अधिष्ठानतया केवलचैतन्यस्य तादात्म्यमवश्यं वाच्यमिति प्रपञ्चमध्ये तदवस्थाने न कोपि दोष इति भावः । ईश्वरस्य जगदुपादानत्वे स्रष्टव्यालोचनं कल्प्यमवश्यमधिष्ठानाद्यभिज्ञकर्तृककार्यं प्रति कर्तव्यत्वेन तदालोचनस्य हेतुत्वात्, मायाविकर्तृकेन्द्रजालादौ तथा दृष्टत्वात् । जीवस्य जगदुपादानत्वे तु तन्न कल्प्यम्, स्वापादिरूपकार्यं प्रति तदहेतुत्वस्य दृष्टत्वात्, तथा च लाघवात् जीवस्यैव जगदुपादानत्वमित्याशयेनाह—**अस्मिंश्चेत्यादि ।** स्वाज्ञानवशात्–स्वं प्रति आवारकं यदज्ञानं तद्वशात । जीव एव उपादानं निमित्तं कर्ता च, नेशः; उक्तरीत्या कार्यालोचनकल्पने गौरवादिति भावः । दृश्यमज्ञानतत्प्रयुक्तं

जगदुपादानं निमित्तं च। दृश्यं सर्वं प्रातीतिकम्। देहभेदाच्च जीवभेदभ्रान्तिः। एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः। शुकादीनां च मोक्षश्रवणं त्वर्थवादः। महावाक्ये च तत्पदमनन्तसत्यादिपदवदज्ञानानुपहितचैतन्यस्य लक्षणयोपस्थापकमित्याद्या अवान्तरभेदाः स्वयमूहनीयाः।

ननु वस्तुनि विकल्पासम्भवात् कथं परस्परविरुद्धमतप्रामाण्यम्, तस्मात् किमत्र हेयं किमुपादेयमिति चेन्न। क एवमाह? वस्तुनि विकल्पो न सम्भवतीति। स्थाणुर्वा पुरुषो वा राक्षसो वेत्यादिविकल्पस्य वस्तुन्यपि दर्शनात्। अतात्त्विकी सा कल्पना पुरुषबुद्धिप्रभवा इयं तु शास्त्रीया जीवेश्वरविभागादिव्यवस्थेति चेत्। नूनमतिमेधावी भवान्। अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य। जीवेश्वरविभागादिकल्पनास्तु पुरुषबुद्धिप्रभवा अपि शास्त्रेणानूद्यन्ते, तत्त्वज्ञानोपयोगित्वात्, 'फलवत्सन्निधावफलं तदङ्गमिति न्यायात्, भ्रमसिद्धस्यापि श्रुत्याऽनुवादसम्भवात्। एतेन

---

प्रातीतिकं यदा यदा विद्यते, तदाऽवश्यं ज्ञायते। साक्षिस्वरूपेण जीवेन स्वनिष्ठं सर्वं विद्यमानतादशायां प्रकाश्यते, न तु तत्रावरणं तद्भङ्गकमनोवृत्तिर्वा कल्प्यते, गौरवादिति भावः। **देहभेदादित्यादि।** देहावच्छिन्नानां भेदेऽपि अविद्यावच्छिन्नरूपेण जीवैक्यं न विरुद्धमिति भावः। अर्थवादः–श्रवणादेर्विधेयस्य स्तुतिः। ननु 'तत्त्वमसी'ति वाक्ये तत्पदं न प्रक्रान्तेशपरम्, 'तत्तेजोऽसृजते'यादिपूर्ववाक्येन जगत्कारणजीवस्यैव प्रक्रान्तत्वेनासङ्गतेः, तथा च श्रुतिविरुद्धोऽयं पक्षः तत्राह—**सत्यादिपदवदिति।** यथा सत्यादिपदं जगत्कारणत्वादिप्रक्रान्तरूपमनुपस्थाप्य लक्षणया शुद्धोपस्थापकं तथा तत्पदमपि। द्वारम् तु सत्यादिपदेषु सत्यत्वादिविशिष्टोपस्थितिः, तत्पदे तु युगपत्सर्वज्ञरूपप्रसिद्धार्थोपस्थितिरिति भावः। ननु 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपस्तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायत' इति श्रुत्या जगत्कारणे जीवे सर्वज्ञत्वबोधानुपपत्तिः। तत्राह—**इत्यादीति।** उक्तश्रुतौ सर्वविषयकज्ञानवत्त्वमात्रं विवक्षितम्, न तु युगपत् सर्वज्ञानवत्त्वम्, तथा च जीवस्यापि क्रमेण तत्सम्भवान्न दोषः। अथवा युगपत्सर्वज्ञाभेदो जीवे उक्तश्रुत्या बोध्यते,, 'यतो वे'त्यादिश्रुतिवदिति भावः।

वस्तुनि—पुरुषप्रयत्नानिष्पाद्ये, विकल्पासम्भवात्—विरुद्धपक्षद्वयबोधकवाक्ययोः प्रामाण्यासम्भवात्। प्रयत्नसाध्ये विरुद्धनानापक्षबोधकयोरनुष्ठानपरत्वसम्भवेन कालभेदेन तद्बोधनात् प्रामाण्यसम्भवः न तथाभूतवाक्ययोरिति भावः। अतथाभूतवाक्ययोः प्रामाण्यासम्भवेऽपि विचित्ररुचिनानापुरुषीयनानाविधकल्पनानुवादकत्वमिति सिद्धान्तयितुं दृष्टान्तमाह—**क एवमाहेत्यादि।** शास्त्रीया—तत्त्वावेदकशास्त्रतात्पर्याधीना। प्रधानम्—इतरप्रतिपादनोपकार्यप्रतिपत्तिकम्। तदङ्गं—तदुपकारकम्। भ्रमसिद्धस्य—स्वाप्नप्रपञ्चस्य। श्रुत्या—स्वप्नबोधकश्रुत्या। **एतेन।** अद्वैतज्ञानस्य परमपुरुषार्थसाधनत्वाज्ञातविषयकत्वादिरूपबलवत्त्वसम्भवेन। ननु प्रत्यक्षादिप्रमाणानां सन्मात्रांश इव

**द्वैतज्ञानेनाद्वैतज्ञानस्य बाधो निरस्तः। घटादिद्वैतज्ञानस्यापि अद्वैतसन्मात्रांशे अज्ञाते प्रामाण्याभ्युपगमाच्च ज्ञानाज्ञानयोस्समानाश्रयविषयत्वनियमात्।**

**जडे च प्रमाणप्रयोजनाभावेनाज्ञानानभ्युपगमात् तदवच्छिन्नचैतन्याज्ञानादेव**

---

घटाद्यंशेऽपि प्रामाण्यं स्यात्, तथा च कथमद्वैतज्ञानं बलवत्तत्राह—**घटादीत्यादि**। सन्मात्रांशे न तु घटाद्यंशे। ननु घटादेरज्ञातत्वाभावेऽपि घटं पश्यामीत्यादिप्रतीत्या चाक्षुषादिविषयत्वसम्भवात्तदंशे प्रामाण्यं सम्भवति तत्राह—**ज्ञानेत्यादि**। तथा च चाक्षुषादिवृत्तेः समानविषयकाज्ञाननिवर्तकत्वानुरोधेनाज्ञातचिद्विषयत्वेऽपि घटादिविषयकत्वे मानाभावः। घटं पश्यामीति साक्षिधीस्तु घटावच्छिन्नचिद्विषयकचाक्षुषादि विषयीकुर्वन्ती चाक्षुषादिवृत्तेः विषयतावच्छेदकत्वेन घटादिकं भासयतीति भावः।

ननु 'घटं न जानामी'ति साक्षिधिया घटादेरप्यज्ञानविषयत्वावगाहनात् चाक्षुषादिवृत्तिविषयत्वेनैव घटादिकं गृह्यते साक्षिणा, न त्ववच्छेदकत्वेन तत्राह—**जडे चेत्यादि**। **अज्ञानेति**। अज्ञानविषयत्वेत्यर्थः। घटाद्यवच्छेदेन चितस्स्फुरणवारणाय घटाद्यवच्छेदेन चित्यज्ञानविषयताऽवश्यङ्कल्प्या, अतस्तदवच्छेदकत्वेनैव घटादीनामस्फुरणोपपत्तौ तेष्वज्ञानविषयतान्तरकल्पने गौरवम्। न च घटाद्युपहितचैतन्यानि केवलचितो भिन्नानि न वा? आद्ये तेष्वज्ञानविषयत्वानि घटादिषु तदवच्छेदकत्वानि कल्पनीयानीति तदपेक्षया घटादिष्वज्ञानविषयत्वानां कल्पनैव लघीयसी, द्वितीये घटाद्यवच्छेदेन स्फुरणं घटादिविशेषितचिद्रूपे संशयाद्यभावः, तद्वारणं च तस्मिन्नज्ञानविषयत्वास्वीकारेऽपि घटादावज्ञानविषयत्वानां स्वीकारेण निर्वहतीति वाच्यम्। आद्ये घटादाववच्छेदकत्वानामकल्पनादज्ञातचित्तादात्म्यादेव तत्राज्ञातत्वव्यवहारात्। न च विनिगमकाभावः घटादावज्ञातत्वस्वीकारेऽपि अज्ञातघटादितादात्म्येन तदुपहितचित्यज्ञातत्वव्यवहारसम्भवादिति वाच्यम्। चित्यज्ञातत्वस्वीकारे हि अज्ञातत्वशून्यचिद्रूपमपरोक्षत्वं वाच्यम्, घटादौ तत्स्वीकारे तु नापरोक्षत्वं तथा घटाद्याकारवृत्त्यभावकालेऽपि घटादेरपरोक्षत्वापत्तेः; किन्तु अज्ञातत्वशून्योपहितत्वविशिष्टचिद्रूपम्, तथा च गौरवम्। न चाज्ञातत्वशून्यत्वमेव तदिति वाच्यम्। अलीकस्यापि तदापत्तेः। न चाभानापादकाज्ञातत्वम् अलीके सदाऽस्त्येवेति वाच्यम्। साक्ष्यसम्बन्धादेव तत्राभानोपपत्तौ अज्ञातत्वास्वीकारात्। न च अज्ञातत्वशून्यं यत् घटादि तत्तत्स्वरूपमेव तदिति वाच्यम्। 'घटोऽपरोक्षः पटोऽपरोक्ष' इति प्रतीतेः एकापरोक्षतात्वव्यक्तिविषयत्वात्। अज्ञातत्वशून्यचित्त्वस्यैव तादृशव्यक्तित्वात्, घटाद्युपादानकप्रवृत्त्यादौ घटाद्यपरोक्षतानां तेन रूपेणैककारणत्वस्य मन्मते सम्भवाच्च। एवं पूर्वोक्तयुक्तेः द्वितीयपक्षेऽपि न घटादावज्ञानविषयत्वम्। नन्वज्ञातत्वशून्य- चैतन्यं द्वितीयपक्षे ब्रह्मज्ञानोत्तरमपि अप्रसिद्धम्, तदापि घटं न जानामीति प्रत्ययेन चितः अज्ञातत्वशून्यत्वाभावात्, तथा च तदापि घटाद्याकारवृत्तिकाले घटं साक्षात्करोमीति व्यवहारो न स्यादिति चेन्न। द्वितीयपक्षे 'घटं साक्षात्करोमी'त्यादौ 'घटाद्यवच्छिन्नेनाज्ञानविषयत्वेन शून्यं चैतन्यं साक्षात्करोमी'ति व्यवह्रियते। तथा च घटाद्याकारवृत्तिकाले घटाद्यवच्छिन्नस्याज्ञानविषयत्वस्यापसरणात् 'घटं साक्षात्करोमी'ति व्यवहारः एवं च आद्यपक्षे अज्ञातत्वशून्यचिति तादात्म्यस्य द्वितीयार्थस्यान्वयः, द्वितीयपक्षे तु अज्ञातत्वे अवच्छिन्नत्वस्य द्वितीयार्थस्येति विवेकः। आख्यातस्य तदनुकूलव्यापारोऽर्थः।

ननु द्वितीयपक्षो नोपपद्यते, अज्ञातत्वसामान्याभाववच्चितः साक्षात्करोत्यर्थत्वेन घटाद्यवच्छिन्नाज्ञातत्वाभाववच्चितस्साक्षात्करोतिना बोधासम्भवात् । एवम् 'इदं सुखं साक्षात्करोमी'ति धीर्न स्यात्, एतत्सुखावच्छिन्नस्याज्ञानविषयत्वस्याप्रसिद्ध्या तदभाववच्चितोऽप्यप्रसिद्धेः । न च घटाद्यवच्छिन्नविषयत्वीयविशेषणतासम्बन्धेनाज्ञानविषयत्वस्याभावो बुध्यते, यदर्थबोधकपदोत्तरं द्वितीयासमभिव्याहृतः साक्षात्करोतिस्तदवच्छिन्नविषयत्वीयविशेषणतासम्बन्धभानस्य व्युत्पत्तिसिद्धत्वादिति वाच्यम् । पदार्थयोस्संसर्गविधया भान एव समभिव्याहारस्य नियामकत्वेन पदार्थबोधे तस्यानियामकत्वादिति चेत् ।

अत्रोच्यते । द्वितीयपक्षे अज्ञातत्वे अभावे चिति च साक्षात्करोतेश्शक्तित्रयस्वीकारात्, अज्ञातत्वे च घटाद्यवच्छिन्नत्वस्यान्वयेन घटाद्यवच्छिन्नाज्ञातत्वस्यैवाभावेऽन्वयेन तादृशाभावस्य च चित्यन्वयेन विशिष्टचिद्बोधसम्भवः । चितस्तु तद्वयक्तित्वेनैव शक्यता शाब्दधीयविशेष्यता च, तेन शाब्दधीविशेष्यतायाः किञ्चिदवच्छिन्नत्वनियमेऽपि न दोषः । अथवा चिन्निष्ठविशेषणतासम्बन्धेनाभाववदेव द्वितीयं शक्यम् । तृतीयं तु नाभ्युपेयते । अभावस्य तु पदार्थैकदेशत्वेऽपि ससम्बन्धिकत्वात् तत्राज्ञातत्वान्वयेऽपि न दोषः । 'एतत्सुखं साक्षात्करोमी'त्यादौ तु नाप्रसिद्धिः । सुखमात्रे नित्यत्वादिभ्रमहेतुत्वज्ञानविषयत्वस्य सर्वसुखावच्छिन्नस्य प्रसिद्धत्वात् । 'ब्रह्म साक्षात्करोमि' इत्यादौ तु न ब्रह्मावच्छिन्नत्वस्याज्ञानविषयतायां भानम्, अप्रसिद्धत्वात् । नाप्याधेयत्वस्य द्वितीयार्थतया ब्रह्मवृत्त्यज्ञातत्वशून्यचितो भानम् । ब्रह्मज्ञानोत्तरमपि घटाद्यवच्छिन्नस्याज्ञातत्वस्य ब्रह्मचिति सत्त्वेन तादृशचितोऽप्रसिद्धेः । किन्तु ब्रह्मवृत्त्यज्ञातत्वस्यानवच्छिन्नविषयत्वीयविशेषणतासम्बन्धेन योऽभावस्तद्भानम् । आधेयत्वं तु द्वितीयया लभ्यते । ब्रह्मपदसमभिव्याहारस्य च तत्सम्बन्धभाननियामकत्वात् । 'घटं साक्षात्करोमि'इत्यादौ तु नोक्तसम्बन्धेनाभावभानम् । दृश्यवाचकपदसमभिव्याहृतद्वितीयाया एवावच्छिन्नत्वार्थकतया न 'ब्रह्म साक्षात्करोमी'त्यादौ द्वितीययाऽवच्छिन्नत्वबोधः ।

वस्तुतस्तु साक्षात्करोतेस्सकर्मकत्वात् प्रयोजकेऽपि शक्तिः । तथा च 'घटं साक्षात्करोमी'त्यादौ घटाद्यवच्छिन्नाऽज्ञातत्वस्य योऽभावः, तत्प्रयोजकविशिष्टचिद्बोधः । अवच्छिन्नत्वं च अवच्छेदकतासम्बन्धेनाधेयत्वम्, 'ग्रामं गच्छती'यादौ द्वितीययाऽऽधेयत्वबोधात् । अथवा अज्ञातत्वाभावप्रयोजकविशिष्टचित्येकैव शक्तिः । न चैवं ब्रह्मसाक्षात्कारपूर्वमपि 'ब्रह्म साक्षात्करोमि' इति धीस्स्यात्, घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेन ब्रह्मवृत्तेरज्ञातत्वाभावस्यानुभवात् । एकशक्तिपक्षे हि नानवच्छिन्नविषयत्वीयविशेषणतासम्बन्धेनाज्ञानविषयत्वस्याभावो बुध्यते, येन तस्य व्याप्यवृत्तितया घटाद्यवच्छिन्नता न स्यादिति वाच्यम् । अनवच्छिन्नस्याज्ञानविषयत्वस्य ब्रह्मणि व्याप्यवृत्तितया तत्सत्त्वे तादृशाभावस्यासम्भवात् । न चैवं 'घटं साक्षात्करोमी'त्यादौ अज्ञातत्वाभावस्य ब्रह्मज्ञानपूर्वं घटाद्यवच्छिन्नतया धीर्न स्यादिति वाच्यम् । तादृशबुद्धेरेतत्कल्पेऽनुपपन्नत्वेऽपि 'घटं साक्षात्करोमी'त्यादौ अज्ञानविषयतावच्छेदकत्वाभावप्रयोजकविशिष्टचिति शक्त्यन्तरस्वीकारेण तद्धीसम्भवात् । 'ब्रह्म साक्षात्करोमी'त्यादावेव विषयतामात्रसम्बन्धेनाभावघटितशक्यार्थसम्भवात् । न च ब्रह्मज्ञानपूर्वं घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेनाज्ञानविषयत्वाभावस्य ब्रह्मणि सत्त्वात् 'ब्रह्म साक्षात्करोमी'ति धीस्स्यादिति वाच्यम् । अनवच्छिन्नस्याज्ञातत्वस्य ब्रह्मणि सत्त्वे घटाद्यवच्छेदेनाज्ञातत्वसामान्याभावो नास्तीत्यस्य पूर्वमेवावेदितत्वात् ।

**तत्राप्यज्ञानव्यवहारोपपत्तेः । सर्वप्रमाणानां चाज्ञातज्ञापकत्वेनैव प्रामाण्यात् । अन्यथा**

अवच्छिन्नचितां [1]केवलचिदनन्यत्वपक्षे त्वज्ञातताभावश्चिद्वृत्तिर्निवेश्यः, चिति तादात्म्येन ब्रह्मघटादेरन्वयः, घटाद्यवच्छिन्नचिति घटादेरिव वृत्तिविषयत्वोपहितब्रह्मचिति ब्रह्मणस्तादात्म्यसत्त्वात् । अत एव फलवत्त्वेन बुध्यमाना चिदेव ज्ञानकर्म तत्तादात्म्यात् घटादिकं तथा व्यवह्रियते, जानात्यर्थे तु असत्त्वापादकमेवाज्ञानं निवेश्यम्, अधिकं त्वग्रे वक्ष्यते । तस्मात् घटावच्छिन्नचितां केवलचिदनन्यत्वेऽपि न काप्यनुपपत्तिः । अज्ञानस्य पूर्णानन्दनिष्ठविषयतान्या या विषयता तदवच्छेदकत्वानां घटादौ स्वीकारे तेषामेव घटाद्याकारवृत्तिनाश्यत्वम् । तथा च वृत्तिकाले घटादीनामज्ञानविषयतानवच्छेदकत्वात् उक्तरीत्या 'घटं साक्षात्करोमी'ति धीसम्भवः । यदि तु सम्बन्धिनाशे सम्बन्धस्य सत्त्वासम्भवात् ब्रह्मज्ञानोत्तरं ब्रह्मनिष्ठस्याज्ञानस्य तद्विषयत्वस्य च नाशे तदवच्छेदकत्वानामपि नाशात् घटादौ वृत्त्यभावकाले साक्षात्करोमीत्यादिव्यवहारापत्तेः, उक्तावच्छेदकत्वानामावरणरूपत्वासम्भवादिति चिन्त्यते, तदाप्यज्ञानस्य पूर्णानन्दनिष्ठानवच्छिन्नविषयत्वमेव ब्रह्मज्ञाननाश्यम् । अज्ञानं तु चरमेणैव ब्रह्मज्ञानेन नाश्यम्, न तु प्रारब्धभोगकालीनेनेति स्वीक्रियते । अथवा अज्ञाननानात्वपक्षमवलम्ब्याज्ञानानामेव वृत्तिनाश्यता स्वीक्रियते । तस्मादेकाज्ञानपक्षे घटाद्यवच्छिन्नचितां केवलचिदन्यत्वे तासु पूर्णानन्दे च अनवच्छिन्नान्येवाज्ञानविषयत्वानि । तासां तदनन्यत्वे तु एकस्यैवाज्ञानस्य एकविषयता पूर्णानन्दनिष्ठा स्वीक्रियते, अन्यासां तु विषयतानां घटादाववच्छेदकत्वानि । नानाज्ञानपक्षे पल्लवाज्ञानानां विषयतावच्छेदकत्वानि घटादिषु स्वीक्रियन्ते, न तु विषयत्वम्, प्रामाणाभावात् । चिन्निष्ठेनैवाज्ञानविषयत्वेन तेषु न भातीति व्यवहारसम्भवेन प्रयोजनाभावाच्चेति भावः । नन्वास्तां चित एवाज्ञातत्वम्, प्रमेयत्वं तु घटादेरेव, घटादिविषयिकयैव प्रमया घटाद्यवच्छिन्नचिद्विषयकाज्ञाननाशस्य सम्भवात् तत्राह—**सर्वेति**। स्मृतिप्रामाण्यवारणायाज्ञातविषयकत्वघटितं प्रामाण्यमिति भावः ।

### प्रमालक्षणनिष्कर्षः

ननु कथमज्ञातज्ञापकत्वेन स्मृतेर्वारणम्, तज्जनकसंस्कारस्यानुद्बोधकाले स्मृतिपूर्वं तद्विषयेऽपि अज्ञातत्वसम्भवात्, अज्ञातत्वाभावे तत्र भ्रमस्यानुभवसिद्धस्यानुपपत्तेरिति चेन्न; स्वकरणस्य यो व्यापारः तदुत्पत्त्यव्यवहितपूर्वक्षणे स्वकरणाधिकरणक्षणे वा यदज्ञातं व्यवहारकाले चाबाधितं तद्विषयकज्ञानत्वस्यैव प्रमात्वरूपत्वात्, स्मृतौ तदभावात्, समानविषयकनिश्चयरूपस्य तत्करणस्याधिकरणक्षणे तद्व्यापाररूपसंस्कारस्य उत्पत्त्यव्यवहितपूर्वक्षणे वा तद्विषयस्याज्ञातत्वासम्भवात् । अथ ज्ञानान्तरेण योऽर्थो यस्मिन् क्षणे गृहीतः, तदव्यवहितोत्तरक्षणोत्पन्नस्य तदर्थज्ञानस्य तदर्थव्यवस्थापकत्वं न स्यात् । तदर्थविपरीतबुद्ध्यनुत्पादप्रयोजकत्वरूपस्य तदर्थव्यवस्थापकत्वस्य तदर्थविपरीतबुद्ध्युत्पादकाज्ञाननिवर्तकज्ञानेष्वेव सत्त्वात्, ज्ञानान्तरगृहीते चाज्ञानाभावेन तद्विषयकोक्तज्ञानस्याज्ञानानिवर्तकत्वात् । तथा चोक्तज्ञानस्य प्रमात्ववारणाय स्वोत्पत्त्यव्यवहितपूर्वक्षणे यदज्ञातं तद्घटितमेव प्रमात्वम्, न तु स्वकरणादिघटितमिति चेन्न । स्मृतौ प्रमात्वस्यावश्यवारणीयत्वेन स्वकरणादिघटितत्वस्यापि आवश्यकत्वात् । स्मृतिर्हि सर्वाऽप्यविद्यावृत्तित्वेन भ्रम इति

---

१. अवच्छिन्नस्यान्यत्वपक्षे तत्र अज्ञातत्वसामान्याभावसम्भवात् घटज्ञानकाले ब्रह्म साक्षात्करोमीति प्रत्ययापत्तिः । चिदन्यत्वपक्षे इति—पाठान्तरम् ।

वेदान्तसिद्धान्तः। ननु कथमेतदुपपद्यते ?, उच्यते। 'गृहीतग्रहणस्वभावा स्मृतिरि'त्यध्यासलक्षणे **वाचस्प**त्युक्तेः स्मृतिमात्रस्य ज्ञातत्वविशिष्टविषयकत्वात् ज्ञातत्वस्य प्रकृते पूर्वगृहीतप्रमाविषयत्वभ्रमविषयत्वान्यतररूपस्य स्वविषयस्मृत्या ग्रहणात्, भ्रमविषयत्वेन मिथ्यात्वपर्यवसितेन स्वविषयग्राहिण्याः स्मृतेर्भ्रमत्वावश्यकत्वात्। न च प्रमाविषयत्वेन स्वविषयग्राहिण्याः स्मृतेर्भ्रमत्वे मानाभावेन न स्मृतिसामान्यस्य भ्रमत्वं युक्तम्, युक्तत्वेऽनुमित्यादावपि क्वचित् भ्रमविषयत्वेन स्वविषयग्राहकत्वसम्भवेनानुमित्यादिसामान्यस्य भ्रमत्वं स्यादिति वाच्यम्। अनुमित्यादिसामान्यस्य भ्रमत्वे लाघवात् परामर्शादेरेव तत्र दोषविधया हेतुत्वापत्त्या दोषजन्यत्वनिश्चयेन न तत्प्रामाण्यं साक्षिणा लिङ्गादिना वा गृह्यते, न हि दोषजन्यत्वेन निश्चिते भ्रमादौ तद्ग्रह इति वक्ष्यते। तथा च प्रवृत्त्यादेस्ततो जायमानस्यापलापापत्तिः। स्मृतिसामान्यस्य भ्रमत्वे तु संस्कारत्वेन स्मृतिरूपभ्रमहेतुदोषत्वसिद्ध्या संस्काररूपदोषजन्यत्वस्य निश्चयेऽपि प्रमितविषयकत्वेन लिङ्गेन प्रमात्वानुमानसम्भवः। न च दोषजन्यस्य प्रमात्वं तद्विषयदोषस्य च प्रमितत्वं न सम्भवतीति वाच्यम्। अविद्यावृत्तित्वेन दोषजन्यत्वेऽपि तद्विषये मिथ्यात्वानिश्चयेन वक्ष्यमाणस्य प्रवृत्त्युपयुक्तप्रमात्वस्य दोषजन्याविद्यावृत्तौ बाधानवतारदशायां सम्भवात्। न च प्रवृत्त्युपधायकानुमित्यादौ प्रमितविषयकत्वं नियमेन गृह्यते, स्मृतौ तु साक्षिणैव तद्गृह्यते। स्मृतिजनकज्ञानं हि पूर्वं प्रमात्वेन साक्षिणा भ्रमत्वेन लिङ्गादिना च गृह्यते। तथा च तद्विषयस्य प्रमितत्वेन मिथ्यात्वेन वा निश्चितत्वात् स्मृतेरपि तादृशविशिष्टविषयकत्वात् तद्ग्राहकेण तथैव तद्ग्रहणम्। ज्ञानस्यावश्यवेद्यत्वमते स्मृतेर्गृहीतग्रहणत्वं सुतरामुपपद्यते। तस्मात् स्मृतिसामान्यस्य गृहीतग्रहणस्वभावत्वेन उक्तरीत्या भ्रमत्वजातिविशिष्टरूपाविद्यावृत्तित्वात् मनोवृत्तिमात्रनिष्ठस्य प्रमात्वस्य न तत्र सम्भवः।

## स्वतोग्राह्यप्रमात्वनिर्वचनम्

ननूक्तरूपं प्रमात्वं न युक्तम् दोषाभावे सति ज्ञानग्राहकमात्रग्राह्यत्वरूपस्य ज्ञप्तौ स्वतस्त्वस्य तत्राभावात्। न हि उक्तक्षणस्याबाधितत्वस्य च ज्ञानग्राहकसाक्षिणा प्रमाणनिरपेक्षेण ग्रहणसम्भव इति चेन्न। इदं हि प्रमात्वं न स्वतो ग्राह्यम्, किन्तु सर्वप्रमानुगतत्वात् अप्रमाव्यावृत्तत्वाच्च प्रमालक्षणम्। यत्तु प्रमात्वं प्रवृत्तिप्रयोजकं बाधानवतारकालीनभ्रमे स्मृतौ चानुवर्तते तत् स्वतोग्राह्यम्। आवश्यकं च तस्य स्वतोग्राह्यत्वम्, तद्वत्तया गृहीतस्य स्वोत्पत्तिद्वितीयक्षण एव प्रवृत्त्युपधायकत्वात्। तच्च मिथ्यात्वरूपेण यदज्ञातं तद्विषयकत्वम्, भ्रमस्यापि बाधाभावकाले मिथ्याविषयकत्वेनानिश्चयात्, मिथ्यात्वविशिष्टविषयकाज्ञानस्य साक्षिणा ग्रहणसम्भवाच्च भ्रमात् प्रवृत्त्युपपत्तिः। न च ज्ञानाज्ञानादेः स्वनिष्ठस्यावरणशून्यस्य साक्षिणा मानानपेक्षेण ग्रहणसम्भवेऽपि मिथ्यात्वविशिष्टस्य कथं तद्ग्राह्यतेति वाच्यम्। 'ज्ञाततयाऽज्ञाततया वा सर्वं साक्षिभास्यमि'ति **विवरणकारोक्तेः** स्वगृह्यमाणज्ञानाज्ञानयोर्विषये ग्राहकत्वस्य साक्षिणि सिद्धान्ते स्वीकारात्। न च घटादौ मिथ्यात्वाग्रहे मिथ्यात्वेनाज्ञातत्वस्य ग्रहीतुमशक्यतया घटादिज्ञानात् प्रवृत्त्यनुपपत्तिरिति वाच्यम्। विशेषणतावच्छेदकप्रकारकनिश्चयादेर्विशिष्टवैशिष्ट्यविषयताशालिजन्यधीहेतुत्वस्वीकारेऽपि साक्षिणस्तादृशस्य नित्यत्वेन तत्र तस्याहेतुत्वात्। 'मिथ्यात्वविशिष्टावच्छिन्नविषयताकाऽज्ञानाश्रयतावच्छेदकघटविषयकमिदं ज्ञानम्' इत्याकारकज्ञाने घटमिथ्यात्वस्याप्रकारत्वेन 'घटो मिथ्ये'ति ज्ञानस्य तत्रानुपयोगात्। 'इयं न शुक्तिरि'ति ज्ञानकालेऽपि 'इमां शुक्तिं न जानामी'त्यस्यैव घटो न मिथ्येति ज्ञानकालेऽपि घटं मिथ्याभूतं न

जानामीत्यस्य ज्ञानस्यानुभूयमानत्वाच्च। उक्तप्रमात्वस्येच्छादौ निश्चयेऽपि न ततः प्रवृत्त्यादिकम्, प्रमात्वेन निश्चीयमाननिश्चयत्वेनैव प्रवृत्त्यादिहेतुत्वात्। **अत एव** संशयादपि प्रवृत्तिस्स्यात्। 'अयं स्थाणुर्नवे'ति धीकालेऽपि 'मिथ्यात्वेनेदं न जानामी'त्यनुभवात् संशयस्यापि प्रमात्वेन निश्चयसम्भवादिति **परास्तम्।** ननु भ्रमस्मृत्योरपि प्रमात्वे प्रमापदमुख्यार्थत्वापत्तिरिति चेन्न। लक्षणात्मकपूर्वोक्तप्रमात्वविशिष्टस्यैव[1] प्रकृष्टज्ञानरूपस्य प्रमापदमुख्यार्थत्वात् सुखादिज्ञानस्य तदभावेऽपि न क्षतिः, प्रमाणाजन्यत्वात्।

## ज्ञानत्वनिर्वचनम्

ज्ञानत्वं त्वसत्त्वापादकत्वरूपजातिविशेषाश्रयाज्ञानविषयत्वाभावप्रयोजकविशिष्टचित्त्वम्। तादृशप्रयोजकं च घटादिज्ञानस्थले घटाद्याकारवृत्तिः, विद्यमानसुखादिज्ञानस्थले तु वृत्त्यस्वीकारपक्षे सुखादिजनकसामग्र्येव। सूक्ष्मावस्थाभावितादशायां सुखादौ तन्न जानामीत्यनुभवात् तदज्ञातं भ्रमविषयत्वादित्यनुमानाच्चाज्ञानसत्त्वात् तद्विषयत्वाभावस्य विद्यमानतादशायां तत्र सत्त्वात् तत्प्रयोजकेन चन्दनादिसंयोगेन विशिष्टायाश्चितस्तज्ज्ञानत्वसम्भवः। **वस्तुतस्तु** घटादिज्ञानस्थलेऽपि घटाद्याकारकवृत्त्युपधायकस्यैव अज्ञानविषयत्वाभावप्रयोजकत्वम्, अन्यथोक्तवृत्तेः स्वोत्पत्तिकालीने अज्ञातत्वाभावे प्रयोजकत्वासम्भवात् उक्तवृत्त्युत्पत्तिकाले अज्ञातत्वस्य स्वीकारे ज्ञातत्वेन सह तस्य विरोधापत्तेः उक्तवृत्त्युत्पत्तिकाले उक्ताज्ञानतद्विषयत्वाभावसत्त्वेऽपि उक्ताज्ञानकार्यसत्त्वं स्वीक्रियते। द्वितीयक्षण एव तदुच्छेदात्। ब्रह्माकारवृत्तिस्थले तथा दर्शनात्। प्रयोजकत्वं च अखण्डः कश्चिद्धर्मः। कार्योत्पत्त्यादिनिष्ठप्रयोज्यत्वादिवत् क्षेमसाधारणजनकत्वमेव वा। उक्तप्रयोजकवैशिष्ट्यं च उक्तप्रयोजकजन्यप्रतिबिम्बितत्वं ग्राह्यम्, तेन वृत्तिसुखादिकाले तदुपधायकरूपप्रयोजकस्यासत्त्वेऽपि न क्षतिः। तादृशप्रयोजकजन्ये वृत्तिज्ञाने सुखादौ वा प्रतिबिम्बितत्वस्य तत्काले चिति सत्त्वात्। अविद्यादिज्ञानस्थले तु अविद्यादिकमेव तादृशप्रयोजकम्। तत्सत्त्वेऽग्रिमक्षणे अविद्यादिनिष्ठस्योक्ताभावस्य तदभावे तत्क्षणे तादृशाभावाभावस्य च सत्त्वात्। तज्जन्यत्वमपि क्षेमसाधारणं, चित्प्रतिबिम्बोपहिताविद्यादावस्तीति तत्प्रतिबिम्बितत्वं चितो बोध्यम्। तादृशप्रयोजकजन्योपहितचिदेव जानात्यर्थः। प्रयोजकत्वजन्यत्वयोः तदवच्छेदकभेदात् भिन्नत्वेऽपि जानातेर्नानार्थकत्वात् घटमित्यादिपदप्रयोगस्य वृत्तिसामग्र्यादिनिष्ठप्रयोजकत्वादिबोधे नियामकत्वाच्च न दोषः। वस्तुतस्तु तादृशाभावप्रयोजकविशिष्टचिदेव जानात्यर्थः। प्रयोजकत्वं च समानकालीनत्वे सति कारणत्वम्। तेन वृत्त्यभावकाले तादृशाभावस्वरूपयोग्यचैतन्यमादाय घटादौ न ज्ञातत्वव्यवहारः। कारणत्वमधिष्ठानविधया जगदुपादानस्य चितोऽविद्याया वा ग्राह्यम्। तद्विशिष्टत्वं तत्तादात्म्यमेव। तच्च मन उपहितचित्यस्तीति तद्वत्त्वेन जीवो ज्ञाता। न च पुरुषान्तरीयाज्ञानमादायातिप्रसङ्गः। स्वनिरूपिताज्ञानस्य निवेशात् स्वं विशिष्टान्तबोध्यं मनोवच्छिन्नचैतन्यम्।

## ज्ञानस्य सकर्मकत्वोपपादनम्

एवं च उक्तज्ञानवाचकजानातेः सकर्मकत्वमुपपद्यते। फलावच्छिन्नव्यापारबोधकस्य स्वबोध्यव्यापारव्यधिकरणफलबोधकस्य वा सकर्मकत्वादुक्ताभावरूपफलप्रयोजकविशिष्टचिद्वाचकस्य तदु-

१. अनधिगताबाधितार्थविषयकस्येत्यर्थः।

पपत्तेः। यत्तु जानातेस्सकर्मकत्वं न युक्तम्, 'जानातेश्च सकर्मकत्वं फलापेक्षया न तु कर्मकारकापेक्षये'ति **विवरण**कारोक्तेरिति, **तन्न**। तदुक्तेरस्मदनुकूलत्वात्। तथा हि—भाविभूतस्य विषयस्य स्वरूपेण ज्ञानक्रियानिमित्तत्वरूपस्य कारकत्वस्याभावेपि ज्ञानक्रियाजनकसामग्र्युपहितसूक्ष्मावस्थारूपेण ज्ञानक्रियानिमित्तत्वादसत्त्वापादकाज्ञानविषयत्वाभावरूपफलवत्त्वाच्च कर्मत्वमित्यभिप्रायकविवरणोक्तिरस्मदर्थानुकूला। न च फलापेक्षयेत्यस्य वृत्तिगतं साक्षिचित्प्रतिबिम्बरूपफलमपेक्ष्येत्यर्थ इति वाच्यम्। तथासति वृत्तिं जानामीत्येव स्यात् न तु घटं जानामीति। **अथ** प्रतिबिम्बोपहितरूपेण वृत्तेरपि फलत्वाद्विषयतासम्बन्धेन तद्वतो घटादेः कर्मतासम्भव इति **चेन्न**। तथासति प्रत्यक्षधीस्थलेऽपि उक्तवृत्तेरेव फलत्वसम्भवेन आवरणभङ्गस्य तत्रैव फलत्वं न तु परोक्षधीस्थल इत्यत्र विनिगमकाभावात्। तस्मात् वृत्तेश्चिदुपरागार्थत्वपक्षे प्रतिबिम्बमेव फलम्। आवरणभङ्गार्थत्वपक्षे त्वज्ञानाविषयत्वमिति परोक्षापरोक्षसाधारणं वाच्यम्। तत्राद्यपक्षे घटादिज्ञानं घटाद्याकारवृत्तिप्रतिबिम्बिता चित्, सुखादिज्ञानं तु सुखादिप्रतिबिम्बिता चिदेव जानात्यर्थः।

प्रतिबिम्बितत्वं प्रतिबिम्बप्रयोजकप्रयोज्यविशिष्टत्वम्। तेन फलविशिष्टवाचकत्वेन जानातेस्सकर्मकत्वम्। तादृशप्रयोजकं च घटादिज्ञानस्थले वृत्तिसामग्री। सुखादिज्ञानस्थले तु सुखादिसामग्री। तादृशप्रयोज्यमपि वृत्तिसुखादिकम्। अविद्यादिज्ञानस्थले अविद्यादिनिष्ठप्रतिबिम्बस्यानादित्वेऽपि क्षेमसाधारणं तत्प्रयोजकत्वमविद्यादावस्त्येव। तादृशप्रतिबिम्बस्य स्वबिम्बत्वसम्बन्धेन स्वाश्रयोपहितत्वसम्बन्धेन वा वैशिष्ट्यं निवेश्यम्। **वस्तुतस्तु** प्रतिबिम्बप्रयोजकं मनोवच्छिन्नचैतन्यं जानात्यर्थः। मनोवच्छिन्नचितो घटाद्याकारवृत्तिसुखाविद्यादौ प्रतिबिम्बसम्भवात्तदादाय यथाक्रमं घटादिज्ञानं निर्वाह्यम्, चैत्रीयघटाद्याकारवृत्तिनिष्ठप्रतिबिम्बप्रयोजकशुद्धचितमादाय मैत्रीयज्ञानस्य व्यवहारापत्तेः **मनोऽवच्छिन्नेति**। उक्तवृत्तौ च चैत्रीयमनोवच्छिन्नचित एव प्रतिबिम्बोदयात् तस्याश्च चैत्रजीव एव सत्त्वान्नोक्तदोषः। न च चैत्रमनोवच्छिन्नचितः स्वकर्तृकालोकसंयोगाधीनमैत्रीयघटादिवृत्तिजननद्वारा तद्गतप्रतिबिम्बप्रयोजकत्वात् तादृशप्रतिबिम्बमादाय चैत्रे ज्ञानव्यवहारापत्तिः। बिम्बविधया प्रयोजकत्वस्योक्तत्वात्। 'सुखं जानाति घटं जानाती'त्यादौ स्वाश्रितत्वं स्वाकारवृत्तिनिष्ठत्वादिकं चेत्यन्यतमसम्बन्धेन जानात्यर्थैकदेशे प्रतिबिम्बरूपे फले सुखघटादेरन्वयः 'सुखत्वं जानामी'त्यादौ सुखत्वादौ वृत्तेः प्रतिबिम्बस्यास्वीकारेऽपि स्वाश्रयसुखादिनिष्ठत्वादिसम्बन्धेन सुखत्वादेरन्वयः।

## न जानामीत्यादौ बोधप्रकाराः

घटं न जानामीत्यादौ च तादृशज्ञानाद्यभावबोधः। घटाद्यवच्छिन्नचिति भावरूपाज्ञानास्वीकारेण तद्बोधासम्भवात्। मूलाज्ञानस्यैव परिणामः शुक्तिरूप्यादीति ब्रह्मज्ञानं विना न तस्य बाधः, किन्तु निवृत्तिमात्रम्। यदि तु 'घटं न जानामी'त्यादौ भावरूपाज्ञानं भातीत्याग्रहस्तदा वृत्तिविषयत्वाभावसमानाधिकरणमेव विषयत्वं तत्र द्वितीयार्थः। तथा च घटादिनिष्ठतादृशविषयताकस्य मूलाज्ञानस्यैव तत्र भानात् घटाद्याकारवृत्तिकाले न 'घटं न जानामी'ति धीः। सुखादौ वृत्तिस्वीकारे तु स्वाकारवृत्तिनिष्ठत्वसम्बन्धेनैव प्रतिबिम्बे सुखादेरन्वयः।

## साक्षात्करोमीत्यादौ बोधप्रकारः

साक्षात्कारस्तु विषयविशिष्टं यत्प्रतिबिम्बं तत्प्रयोजकप्रयोज्यविशिष्टचिदेव। स्वावच्छिन्न-वृत्तिनिष्ठत्वं स्वनिष्ठत्वं चेत्याद्यन्यतमसम्बन्धेन विषयविशिष्टत्वं बोध्यम्। **वस्तुतस्तु** वृत्त्युपरक्त-घटादावेव प्रतिबिम्बोत्पत्तेः प्रतिकर्मव्यवस्थायां वाच्यत्वात् सुखत्वादावपि तस्यास्सम्भवाच्च विषय-निष्ठप्रतिबिम्बमेव निवेश्यम्। सैव चित् साक्षात्करोत्यर्थः। न च जानात्यर्थ एव साक्षात्करोत्यर्थोऽस्तु किमुक्तान्यतमसम्बन्धेन, घटादेः प्रतिबिम्बे अन्वयात् परोक्षधीस्थले 'घटं साक्षात्करोमी'ति न व्यवहार इति वाच्यम्। 'जानामि साक्षात्करोमि' इत्येतयोर्भिन्नार्थत्वानुभवात्। 'घटं साक्षात्करोमी'त्यादौ तदेकदेशे विषये तादात्म्येन घटादेरन्वयः। 'घटं न साक्षात्करोमी'त्यादौ तादृशसाक्षात्काराभावबोधः पूर्ववत् वृत्तेरावरणभङ्गार्थत्वरूपे द्वितीयपक्षे अज्ञानाविषयत्वप्रयोजकविशिष्टचिदेव साक्षात्करोत्यर्थः। तस्मात् यथोक्तज्ञानत्वघटितप्रमात्वं नानुपपन्नम्।

## प्रमालक्षणपरिष्कारः

भ्रमवारणाय व्यवहारकालाबाधित्वं विशेषणम्। तच्च तत्प्रमातृनिरूपितमूलाज्ञानकाला-वच्छिन्नं मिथ्यात्वनिश्चयाविषयत्वम्। घटादौ चोक्तकाले मिथ्यात्वानिश्चयात् तज्ज्ञाने प्रमात्वमक्ष-तम्। विषयभेदेनेव प्रमातृभेदेनापि प्रमात्वभेदेऽपि न क्षतिः। न च भ्रमविषयस्य प्रातिभासिकत्वेन अज्ञातत्वाभावादेव न भ्रमे अतिव्याप्तिरिति वाच्यम्। तस्य विद्यमानकालेऽज्ञातत्वाऽभावेऽपि भावित्व-काले अज्ञातत्वसम्भवात्, शङ्खे कदाप्यनुत्पन्नपीतत्वभ्रमस्य पुंसः 'मम भावी यः शङ्खे पीतत्व-भ्रमस्तद्विषयं पीतत्वं न जानामी'ति प्रत्ययात् एतत् हरिद्रापीतत्वजातीयं स्वर्णपीतत्वजातीयं वेति संशयाच्च। तस्मात् स्वोत्पत्त्यव्यवहितपूर्वक्षणे स्वकरणक्षणे च यदज्ञातमुक्तकालावच्छेदेन अबाधितं च तद्विषयकज्ञानत्वं प्रमात्वमिति सिद्धम्।

किञ्च स्मृतौ प्रमात्वमुक्तरीत्या प्रमितविषयकत्वरूपलिङ्गेनैवानुमीयते इत्यनुभवानुरोधेन संस्कारजन्यत्वस्य प्रमात्वनिष्ठसाक्षिग्राह्यताविरोधिदोषताकल्पनात् स्वतःप्रमात्वग्रहणरूपां प्रमा-सामान्यमर्यादामतिक्रान्तस्य स्मृतिसामान्यस्य प्रमालक्षणसंग्रहो न युक्त इत्यतोऽपि तद्व्यावृत्तं प्रमा-लक्षणम्। ननूक्तलिङ्गेनैव स्मृतौ प्रमात्वमनुमीयते न तु साक्षिणा गृह्यते इति कथं निर्णीतम्? उच्यते। स्मृत्या नाव्यवहितोत्तरक्षणे प्रवृत्तिनियमः किन्तु द्वितीयक्षणे तत्प्रमात्वेऽनुमिते सत्येव प्रवृत्तिः। तत्समानविषयत्वेनानुमीयमानप्रमात्वकात् स्मृत्यन्तराद्वा सेति सर्वानुभाविकम्। अत एव या स्मृतिः स्वसमानविषयकभ्रममूलकत्वेन गृह्यते, तस्याः भ्रमत्वेनैव निश्चयात् न ततः प्रवृत्तिः। तथा च संस्कारजन्यत्वरूपदोषसहितत्वेन स्मृतिगतप्रमात्वस्यावृतत्वस्वीकारेणानावृतसाक्षितादात्म्य-रूपस्य साक्षिभास्यत्वस्य तत्राभावात् न स्मृत्युत्पत्तिद्वितीयक्षणादौ प्रवृत्तिः। उक्तलिङ्गकानुमितौ तादृशावृतत्वविरोधिन्यां सत्यां तत्क्षणे तादृशसाक्षिभास्यत्वविशिष्टप्रमात्वकया स्मृत्या स्वोत्पत्तितृतीय-क्षणे स्मृत्यन्तरोत्पत्तिद्वितीयक्षणे वा प्रवृत्तिरुत्पद्यते।

ननु जीवेश्वरादिबोधकवाक्ये पौरुषनानाविधकल्पनानुवादकत्वमास्ताम् 'यस्मिन् पञ्च पञ्चजना' इत्यादिब्रह्मबोधकवाक्ये **भाष्यकारैरेव शारीरकभाष्ये** प्राणचक्षुश्श्रोत्रान्नमनोरूपपञ्चकम्, उपनिषद्भाष्ये

**स्मृतेरपि तदापत्तिरिति। एवं वेदान्तेषु सर्वत्रैवंविधविरोधे अयमेव परिहारः। तदाहुर्वार्तिककारपादाः—**

**यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।**
**सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता॥ इति।**

**श्रुतितात्पर्यविषयीभूतार्थविरुद्धं च हेयमेवेति शतश उद्घोषितमस्माभिः। तस्मान्न किञ्चिदेतत्। तदेवं जीवस्योपाधिनाभिभूतत्वात्संसारोपलब्धिः। परमेश्वरस्य तूपाधिवशित्वात् सर्वज्ञत्वादिकमिति सम्यगुपपद्यते व्यवस्था। ननु भवत्वविद्यावशाज्जीवेश्वरविभागव्यवस्था। मानमेयादिप्रतिकर्मव्यवस्था तु कथमिति चेत्, उच्यते। दृश्यत्वाज्जडत्वाद्वि-**

---

तु ब्राह्मणक्षत्रियवैश्यशूद्रनिषादरूपजातिपञ्चकं पञ्चजनशब्दार्थत्वेनोक्तम्, तत्त्वमस्यादिवाक्येऽपि जहदजहल्लक्षणादिकं मतभेदेनोक्तम्, तत्कथम्। तत्राह—**एवं वेदान्तेष्विति**। एवंविधविरोधे—परमतात्पर्यविषयीभूतब्रह्मप्रतिपादनार्थमुच्यमानांशे विरोधे। अयमेव परिहारः अबाधिताज्ञातफलवदर्थ एव प्रामाण्यं नान्यत्रेति ! अस्माभिर्मादृशैराचार्यैः। जीवेशादिव्यवस्थामुक्तामुपसंहरति—**तदेवमिति**। उपाधिनाभिभूतत्वात्—यं प्रत्यज्ञानाद्युपाधिनिमित्तप्रयुक्तं स्वरूपावरणं तत्त्वात्। संसारोपलब्धिः—सत्यत्वेन प्रपञ्चोपलब्धिः। उपाधिवशित्वात्—श्रुत्यादिसिद्धेनोक्ताभिभूतत्वाभावेन विशिष्टत्वात्। वशीकृतमहामायत्वाद्वेति यावत्। सर्वज्ञत्वादिकमित्यादिपदेन मिथ्यात्वेन प्रपञ्चोपलम्भादिग्रहणम्।

ननु न प्रतिबिम्बस्य जीवत्वं युक्तम् सन्निहितस्यैव चैतन्यस्य उपाधौ प्रतिबिम्बितत्वेन सन्निहितरूपबिम्बभेदेन प्रतिबिम्बभेदापत्त्या इहलोकगतजीवात् कर्तुः परलोकगतजीवस्य भोक्तुर्भेदेन कृतहान्यकृताभ्यागमयोरापत्तेः। नाप्यवच्छिन्नस्य तद्युक्तम् प्रदेशभेदेनावच्छिन्नानामाकाशादीनामिव इहलोकपरलोकगतमनोवच्छिन्नचितामपि भेदेनोक्तदोषापत्तेरिति चेन्न। 'रूपं रूपं प्रतिरूपः, स एष इह प्रविष्ट' इत्यादिश्रुतिषु ब्रह्मचित एव प्रतिबिम्बभावोक्त्या उपाधिसन्निहितभागस्य बिम्बत्वे मानाभावात्। यथा च उपाधेर्मन आदेस्तत्तद्देशसम्बन्धरूपावस्थाभेदेऽपि स्वरूपैक्यम्, 'तद्धेदं तर्ह्यव्याकृत'मित्यादिश्रुतेः, 'तदापीतेः संसारव्यपदेशादि'ति न्यायाच्च, तथा तदवच्छिचितां तदवस्थाभेदेन भेदेऽपि तदवच्छिन्नचिद्रूपैक्यम्। अत एव एककनकपरिणामानां क्रमोत्पन्नानां कटककुण्डलादीनां कटकत्वकुण्डलत्वादिरूपैर्भेदेऽपि तत्कनकरूपेणैक्यम्।

किञ्च गृहप्राङ्गणादिभेदेऽपि एकघटावच्छिन्नमाकाशमेकमेव, देशभेदेन तस्य नाशकोत्पादककल्पने गौरवात्। उपाध्युत्पादकनाशकयोरेवोपहितोत्पादकनाशकत्वकल्पनात्। भेदप्रतीतेरुपाध्याश्रयोपाधिभेदप्रयुक्तत्वात्। अन्यथा घटादिव्यक्तिभेदेन घटत्वादेरपि स्वाभाविकभेदापत्तेः। तस्मात् मतिमान्द्यदेवेदृग्दूषणोद्भावकत्वम्। **मेयादीति**। मेयादिघटितेत्यर्थः। **प्रतिकर्मेत्यादि**। [1]कदाचिदेव केनचिदेव किञ्चिदेव प्रमीयत इति कालविशेषादिप्रतिनियतस्य ज्ञानकर्मणो व्यवस्था नियामकोक्ति-

---

१. प्रतिकर्मव्यवस्थेति। कर्म ज्ञानविषयः। कर्म कर्म प्रति वर्तते इति प्रतिकर्म ज्ञानादिसाधनं तस्य व्यवस्था ना०।

**नाशित्वाच्च परिच्छिन्नाप्यविद्या अनिर्वचनीयत्वेन विचारासहा आवरणविक्षेपशक्तिद्वयवती सर्वगतं चिदात्मानमावृणोति अङ्गुलिरिव नयनसन्निहिता सूर्यमण्डलम्। तत्र चक्षुष एवावरणे अङ्गुलेरप्यभानप्रसङ्गात् अधिष्ठानावरणमन्तरेण विक्षेपानुपपत्तेश्च। ततः सा पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती निखिलजगदाकारेण परिणमते। सा च स्वगतचिदाभासद्वारा चित्तादात्म्यापन्नेति तत्कार्यमपि सर्वमाभासद्वारा चिदनुस्यूतमेव। तथा च चैतन्यस्य दीपवत्स्वसम्बद्धसर्वभासकत्वात् जगदुपादानचैतन्यं प्रमाणापेक्षामन्तरेणैव सर्वदा सर्वं भासयत् सर्वज्ञं भवति। तेन तत्र न मानमेयादिव्यवस्था किन्तु जीवे। तस्य बुद्ध्यवच्छिन्नत्वेन परिच्छिन्नत्वाद्। तेन चिदभिव्यक्तियोग्येन येनान्तःकरणेन यदा यत्सम्बद्धं भवति, तदेव तदा तदवच्छिन्नो जीवोऽनुभवतीति न साङ्कर्यप्रसङ्गः। एवमत्र**

---

रित्यर्थः। परिच्छिन्ना—असर्वगता। जीवेशभेदाद्यनादिपदार्थेषु[1] चित्तादात्म्यवत्स्वपि तादात्म्येन असम्बद्धेति यावत्। **आवरणेत्यादि**। आवरणं नास्ति न भातीति व्यवहारः। विक्षेपश्चाकाशादिकार्यं तयोरनुकूलशक्तिद्वयवतीत्यर्थः। तथा च असर्वगतस्यापि सर्वगतावरणोत्पादकत्वं तदनुकूलशक्तिमत्त्वादिति भावः। नन्वावारकस्यावरणीयापेक्षया परिच्छिन्नत्वेऽङ्गुलिर्न दृष्टान्तः, तदावरणीयस्य चक्षुर्निर्गमद्वारस्य तदपेक्षया परिच्छिन्नत्वात् तत्राह—**चक्षुष इति**। चक्षुर्निर्गमद्वारस्येत्यर्थः।

**अभानेति**। गोलकादनिर्गतस्य चक्षुषो न ग्राहकत्वं ग्राह्यासम्बन्धादिति भावः। सर्वगतमावृणोतीत्यत्र हेत्वन्तरमाह—**अधिष्ठानेति**। अनुपपत्तेः—अनुपलब्धेः। **संस्कारेति**। सकलकार्यसूक्ष्मावस्थेत्यर्थः। प्रयुक्ता—सहकृता। **चिदाभासद्वारा चित्तादात्म्येति**। चित्तादात्म्यवदाभासतादात्म्यवतीत्यर्थः। **वार्तिक**मते पक्षद्वयम्। तत्र चिदाभासस्यैव जगदधिष्ठानत्वपक्षे तस्यैव साक्षित्वेनाविद्यादिभासकत्वम्। तच्च चिदाभासस्य मिथ्यात्वेऽपि चित्तादात्म्यादुपपद्यते। आभासाविविक्तचित एव जगदधिष्ठानत्वपक्षे तस्या एव सर्वभासकत्वेन अविद्यातादात्म्यस्य वाच्यत्वात्। चिदाभासद्वारेत्यादेः चिदाभासतादात्म्यवत्त्वात् चित्तादात्म्यवतीत्यर्थः। तत्कार्यं—कार्यरूपापन्ना सा। सर्वभासकत्वात्—सर्वस्मिन्नस्ति भातीति व्यवहारप्रयोजकत्वात्। भासयत् उक्तव्यवहारविषयतायोग्यं कुर्वत्। तथा च जीवस्य सुखादाविव ईश्वरस्य दृश्यमात्रे आभासरूपप्रतिबिम्बद्वारा साक्षात्कारः। अनादिष्वपि दृश्येषु सर्वेष्वाभासस्वीकारात्। **विवरणकार**मते तु विद्यमानेषु प्रत्यक्षरूपा, भाविषु अनुमितिरूपा, अतीतेषु स्मृतिरूपा मायावृत्तिः स्वीक्रियत इति ताभिरेव ईश्वरस्य सर्वज्ञत्वं सदेति तत्रोक्तम्। **वाचस्पति**मते तु प्रतिबिम्बमायावृत्त्योरीश्वरस्यास्वीकारेऽपि वक्ष्यमाणं वृत्तेरभेदाभिव्यक्त्यर्थत्वपक्षमनुसृत्य तदनुसारिसर्वज्ञत्वं सर्वदृश्यचिदभिन्नचिद्रूपत्वं बोध्यम्। सुखादौ जीवस्येव, सर्वदृश्येषु-ईशस्याज्ञानाविषयत्वघटितं वा तद्वाच्यम्।

ननु चिदभिव्यक्तियोग्यत्वादिकं कीदृशम्? तत्राह—**एवमित्यादि**। शरीरमध्यस्थसुखादिरूपेण परिणममानत्वात् शरीरमध्यस्थः युगपद्धस्तपादाद्यवच्छिन्नसुखदुःखादिरूपेण परिणममानत्वात् शरीरा-

---

१. तेषु आवरणमस्त्येवाविद्यया। परं तु तत्कार्येष्वेव तस्याः तादात्म्यं न त्वनादिषु।

**प्रक्रिया । शरीरमध्ये स्थितः सर्वशरीरव्यापकः सत्त्वप्राधान्येन सूक्ष्मपञ्चभूतारब्धः अन्तःकरणाख्यः अविद्याविवर्तो दर्पणादिवदतिस्वच्छः नेत्रादिद्वारा निर्गत्य योग्यान् घटादीन् विषयान् व्याप्य तत्तदाकारो भवति द्रुतताम्रादिवत् । तस्य च सौरालोकादिवद् झटित्येव**

---

वयवेषु सर्वेषु व्यापकः । सात्त्विकज्ञानसुखादिपरिणामवत्त्वादाह—**सत्त्वप्राधान्येनेति** । उत्क्रमणसमये गतिविघाताभावादाह—**सूक्ष्मेति** । पञ्चभूतगुणानां ग्राहकत्वादाह—**पञ्चभूतेति** । **आरब्धेति** । परिणामेत्यर्थः । सत्त्वांशाधिक्ययुक्तापञ्चीकृतपञ्चमहाभूतपरिणाम इति समुदायार्थः । विवर्तः—परिणामः । भूतानां विशेषपरिणामित्वेऽपि सामान्यपरिणामिन्यविद्येत्यर्थः । अतिस्वच्छः—स्वसम्बधिनः प्रतिबिम्बोत्पत्तियोग्यः ।

**नेत्रादीति** । नेत्रादिद्वारा बहिरिन्द्रियेण संयुक्तो भूत्वा तेनैव रूपेण घटादिभिस्संयुक्तो भूत्वा घटादिविषयकचाक्षुषादिरूपेण परिणमत इत्यर्थः । मनस्संयुक्तेन्द्रियविषयसन्निकर्षस्य चाक्षुषादिहेतुत्वज्ञापनाय व्याप्य तत्तदाकारो भवतीत्युक्तम् । मनस इन्द्रियमिश्रितत्वेन मनोव्याप्तिकथनेनैव इन्द्रियव्याप्तिलाभात् । तावता च चाक्षुषादिमनोवृत्तेः घटादिस्वविषयसंयुक्तत्वमावश्यकम् । मनसश्चक्षुरादीन्द्रियासंयोगकाले चाक्षुषानुत्पत्तावपि चक्षुरादिमनोयोगचक्षुरादिविषयसंयोगयोः न पार्थक्येन कारणत्वं किन्तु शक्तिविशेषरूपेण एकमेव कारणत्वम् । मनोऽसंयुक्तचक्षुर्विषयसंयोगे तादृशशक्तिविशेषास्वीकारेणातिप्रसङ्गभङ्गादित्यपि ज्ञापितम् । **द्रुतताम्रादिवदिति** । यथा द्रवीभूतताम्रादि मूषापात्रादौ क्षिप्तं पश्चाद्वाय्वाद्यपसारिततेजोभागं सत् कठिनीभवति, तथा मनो घटादिसन्निकृष्टेन्द्रियसंयुक्तं सदाकाराख्यविषयतासम्बन्धेन घटादिसम्बद्धं चाक्षुषादिरूपं भवतीत्यर्थः । ननु कथमतिशीघ्रमेव मनसस्सूर्यमण्डलादिसंयोगः तत्राह—**तस्येति** । ननु मनस इन्द्रियसंयुक्तत्वेऽपि घटादिसंयोगे मानाभावः, घटासंयुक्तभागावच्छेदेनैव इन्द्रिये तत्संयोगसम्भवात् । न च विषये मनस्संयोगं विना विषयचैतन्याभिन्नप्रमातृचैतन्यरूपस्य विषयसाक्षात्कारस्यानुपपत्तिरिति वाच्यम् । ( साक्षात्कारत्वजातिस्वीकारेणैव तदुपपत्तेः चाक्षुषत्वादिजात्यैव पश्यामीत्यादिप्रत्ययस्य त्वयाप्युपपादनीयत्वात् ) विषयाकाराया अनिर्गताया अपि इन्द्रियजन्याया मनोवृत्तेर्विषयसाक्षात्कारसम्भवात् आत्मसुखादौ मनःकरणकस्यैव साक्षात्कारस्य **वाचस्पति**मते स्वीकारात् ।

अथ विनिगमकाभावादिन्द्रियघटादिसंयुक्तभागावच्छेदेनापि मनस्संयुज्यते । सावयवत्वाच्च युगपत्पादहस्ताद्यवच्छिन्नसुखादिपरिणामवत् तत्सम्भवात् तस्य सावयवत्वात् । सावयवत्वं च युगपद्पादहस्ताद्यवच्छिन्नसुखादिपरिणामवत्त्वात् । किञ्च इन्द्रियसन्निकर्षं प्रति चाक्षुषादेः घटादिनिष्ठेन विषयतासम्बन्धेनेवावच्छेदकतासम्बन्धेनापि विनिगमकाभावेन कार्यतासम्भवात्, चाक्षुषादिमनोवृत्तेस्स्वविषयावच्छिन्नत्वसिद्ध्या बहिर्निर्गमस्यावश्यवाच्यत्वेन घटादिसंयोगस्यापि सम्भवः । न च चाक्षुषादेर्घटादिनिष्ठविषयताकत्वसिद्ध्यै विषयतासम्बन्धेनेन्द्रियसन्निकर्षकार्यत्वस्यावश्यकतया सैव तत्र विनिगमिकेति वाच्यम् । विशिष्टविषयकबुद्धित्वेन बाधाभावादिकार्यत्वस्यावश्यकतया तत एवोक्तसिद्धिसम्भवात् । उक्तकार्यस्यानावश्यकत्वात् । न च निर्विकल्पकप्रत्यक्षस्य उक्तसिद्ध्यै तादृशमिन्द्रियसन्निकर्षकार्यत्वमावश्यकमिति वाच्यम् । उक्तप्रत्यक्षे मानाभावात् । न च 'जातिमान् घट' इत्यादौ शुद्धघटत्वादिप्रकारताप्रयोजकत्वेन घटत्वादिनिर्विकल्पकसिद्धिरिति वाच्यम् । विजातीयसन्निकर्षत्वे-

**सङ्कोचविकासावुपपद्येते । स च सावयवत्वात् परिणममानो देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्येऽपि चक्षुर्वदविच्छिन्नोऽप्यवतिष्ठते । तत्र देहेऽन्तःकरणभागोऽहङ्काराख्यः कर्तेत्युच्यते । देहविषयमध्यवृत्तिदण्डायमानस्तद्भागः वृत्तिज्ञानाख्यः क्रियेत्युच्यते । विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसम्पादकमभिव्यक्तियोग्यत्वमित्युच्यते । तस्य च त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते । तस्य चाभिव्यक्तस्य चैतन्यस्य एकत्वेऽप्यभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति । कर्तृभागावच्छिन्नचिदंशः प्रमाता । क्रियाभागावच्छिन्नचिदंशः प्रमाणम् । विषयगतोऽभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशः प्रमितिरिति । प्रमेयं तु विषयगतं ब्रह्मचैतन्यमेव अज्ञातम् । तदेव च ज्ञातं सत् फलम् ।**

---

नैव उक्तविषयताकधीहेतुत्वसम्भवात् । अनन्तकोटिनिर्विकल्पककल्पने गौरवादिति चेन्न । तथापि घटादिसंस्पृष्टस्य मनसश्शरीरसंसर्गे मानाभावेन शरीरावच्छिन्नमनोभागावच्छिन्नचितश्चाक्षुषादिकालेऽपि प्रमातृत्वसिद्धान्तानुपपत्तेः तत्राह—**स चेत्यादि** । अन्तःकरणाख्योऽविद्यापरिणामः अविच्छिन्नः—शरीरघटादितदन्तरालदेशेषु युगपत्संयुक्तः । तत्र हेतुगर्भं विशेषणमाह—**चक्षुर्वदिति** । चक्षुरादीन्द्रियस्य यथा जीवनदशायां न शरीरत्यागः, जीवनादृष्टस्य तत्र प्रतिबन्धकत्वात् तथा मनसोऽपीत्यर्थः । **कर्तेति** । क्रियानुकूलेन्द्रियसंयोगादिव्यापारवत्त्वादिति शेषः । ज्ञानकर्मत्वसम्पादकम्—आवरणनिवृत्त्यादिरूपस्य ज्ञानक्रियाजन्यफलस्य सम्पादकम् । तत्र हेतुः—**अभिव्यक्तियोग्यत्वमिति** । आवरणनिवृत्त्यादिरूपाभिव्यक्तिं प्रति कारणीभूताया वृत्तिज्ञानरूपक्रियाया योग्यतारूपमित्यर्थः । विषयसंसृष्टस्वभागावच्छिन्नक्रिया विषयनिष्ठाभिव्यक्तिजननयोग्या भवतीति भावः । **प्रमातेति** । प्रमानुकूलव्यापारवत्त्वादिति शेषः । **प्रमाणमिति** । विषयसंसृष्टभागरूपप्रमासिद्धयर्थं प्रमातृव्यापाराविष्टत्वात् तादृशप्रमां प्रति अयोगव्यवच्छेदेन कारणत्वाच्चेति शेषः । प्रमात्रा व्यापृता हि वृत्तिर्विषयेण संसृज्यते, विषयसंसृष्टभागायोगशून्या चेति भावः ।

**प्रमितिरिति** । अज्ञातविषयकभागत्वादिति शेषः । तदव्यवधानेन अज्ञातविषयाभिव्यक्तिरूपफलदर्शनेन तस्यैवाज्ञातविषयकत्वमिति भावः । **ब्रह्मेति** । जीवचैतन्यस्य स्वत एवाभिव्यक्तत्वात् प्रमयाऽभिव्यज्यमानं ब्रह्मचैतन्यमेव प्रमेयमिति भावः । वस्तुतो ब्रह्म बृहत् जगदुपादानमिति यावत्, तथा च जीवस्य जगदुपादानत्वपक्षे विषयावच्छिन्नस्यैव प्रमेयत्वमिति ध्येयम् । ज्ञातम्—अभिव्यक्तम् । ननु चक्षुरादीनामपि प्रमाणत्वसम्भवात् दर्शनान्तरेषु उक्तत्वाच्च तदनुक्त्या न्यूनत्वमिति चेन्न । वृत्तिज्ञानस्य चक्षुरादिमिश्रितत्वेन तत्प्रमाणत्वोक्त्या चक्षुरादेरपि तल्लाभात्, प्रमासामान्यं प्रति करणस्य प्रकृते वाच्यत्वात्, मनसः प्रमासामान्यकरणत्वस्य दर्शनान्तरेष्वप्युक्तत्वाच्च, तदुक्तेरेव प्रकृते युक्तत्वाच्च ।

अत्र मनसोऽचेतनत्वेन स्वेतरसकलकारकप्रयोक्तृत्वरूपस्वातन्त्र्यात्मककर्तृत्वासम्भवात् मनोवच्छिन्नचितः प्रमातृत्वमुक्तम् । 'जानामि घटं जानामि पटमि'त्याद्यनुगताकारधीषु चिद्रूपस्यैक-

**अत्र च यस्मिन्पक्षे अन्तःकरणावच्छिन्नो जीवः यस्मिंश्च पक्षे सर्वगतोऽसङ्गोऽविद्याप्रतिबिम्बो जीवः, तत्रोभयत्रापि प्रमातृचैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था**

---

ज्ञानस्य विषयत्वात् सुखादौ वृत्त्यस्वीकारेण तदवच्छिन्नचित एव तज्ज्ञानत्वाच्च विषयसंसृष्टवृत्तिभागस्य ज्ञानत्वाभावेन प्रमितित्वस्याप्यसम्भवात् तदवच्छिन्नचितः तदुक्तम्। सा च वृत्त्यवच्छिन्नचितः विषयसंसृष्टात्मकं विशिष्टरूपमिति विशिष्टरूपे केवलरूपस्य हेतुत्वात्, वृत्त्यवच्छिन्नचिदेव प्रमाणमुक्तम्। तथा च विषयसंसृष्टवृत्त्यवच्छिन्नरूपेण प्रमात्वम्। प्रमाणत्वं तु विषयासंसृष्टवृत्त्यवच्छिन्नरूपेणेव शरीरासंसृष्टवृत्त्यवच्छिन्नरूपेणापि। शरीरसंसृष्टवृत्त्यवच्छिन्नचिद्रूपप्रमातुः प्रयत्नेन हि शरीरासंसृष्टवृत्त्यवच्छिन्नं व्याप्रियते प्रमानिष्पत्तये। अत एव शरीरसंसृष्टवृत्त्यच्छिन्नचिद्रूपस्यैव प्रमातृत्वमुक्तम्।

ननु केयं प्रमेयचितः प्रमाधीनाऽभिव्यक्तिः? न तावत् प्रमातृचिदभेदः। अविद्यावच्छिन्नचिद्रूपजीवस्य जगदुपादानत्वपक्षे घटाद्यवच्छिन्नायाः प्रमेयचितः अविद्यावच्छिन्नजीवचिद्रूपत्वेन जीवं प्रति घटादेः भानसम्भवेन घटादिचितः प्रमात्रभेदस्य व्यर्थत्वात्। न हि सुषुप्तौ प्रमात्रभावेऽपि अविद्यादिकं जीवं प्रति न भाति। न वा तेन भानेन जागरे न स्मर्यते। नाप्यावरणभङ्गः। मनोवच्छिन्नचितः जगदनुपादानस्य अविद्याप्रतिबिम्बितचैतन्यस्य वा जीवत्वपक्षे तत्तादात्म्याभावादेव घटादीनाम् अभानसिद्धौ घटाद्याकारवृत्त्यभावकाले घटाद्यवच्छिन्नचित्यावरणस्वीकारस्य व्यर्थत्वात्, तद्भङ्गस्य प्रमाफलत्वासम्भवात्, तत्राह—**अत्र चेत्यादि**। अत्र प्रमात्रादिषु त्रिषु मध्ये। अन्तःकरणवृत्तिः प्रमा उभयत्रापि प्रमातृचिदुपरागार्था आवरणभङ्गार्था चेति योजना। सर्वगतः—सर्वकार्यतादात्म्यवदविद्योपाधिकः। **असङ्ग इति**। घटादितादात्म्यशून्य इत्यर्थः।

जीवान्यचित एव जगदुपादानत्वात् जीवस्य तदभावेन घटादितादात्म्यशून्यो जीवः। शुद्धचित् अविद्याबिम्बत्वोपहिता चिद्वा जगदुपादानमिति **विवरणे** उक्तम्। अविद्यागताभासाविविक्तचिद्रूपईशस्तथेति **वार्तिक** उक्तम्। तत्र आद्याया अविद्याप्रतिबिम्बरूप**विवरणोक्त**जीवेशानुस्यूतत्वेन द्वितीयाया अविद्यामनःप्रतिबिम्बरूपसंक्षेपशारीरकोक्तेशजीवानुस्यूतत्वेन तृतीयायाः स्वस्मिन् स्वोपादेये मनोगतचिदाभासरूपे **वार्तिकोक्तजीवे** चानुस्यूतत्वे न सर्वदृश्येषु भासकत्वरूपसाक्षित्वसत्त्वात् तदधिष्ठानत्वप्रयोजकं तादात्म्यमावश्यकम्। अनादिदृश्येष्वपि तासामधिष्ठानत्वात्। जीवस्य तु न तेषु कथमपि तादात्म्यमिति भावः। **प्रमातृचैतन्येति**। जीवेत्यर्थः। स्वप्नेऽप्यविद्यावृत्तेः स्वाप्नविषयजीवयोरुपरागार्थत्वात्, स्वाप्नगजादेरस्वच्छत्वेन तत्र प्रतिबिम्बघटितोपरागस्य तत्साक्षात्कारार्थं शुक्तिरूप्यादाविव आवश्यकत्वात्, स्वप्ने प्रमात्रभावस्य प्रमाणवृत्त्यभावप्रयुक्तस्य मूल एवाग्रे 'सवृत्तिकान्तःकरणावच्छिन्नचैतन्यस्यैव प्रमातृत्वादि'त्यादिना वक्ष्यमाणत्वात्। 'अहं घटं साक्षात्करोमी'ति व्यवहारार्थं तु प्रमात्रुपरागोऽपेक्ष्यत एव। घटादिव्यावहारिकसाक्षात्कारस्य मनोवृत्तिघटितत्वेन तत्र प्रमात्रुपरागस्य आवश्यकत्वात्।

**उपरागेति**। प्रतिबिम्बाश्रयप्रमावच्छेदकत्वं घटादिनिष्ठं प्रत्यक्षस्थले सम्बन्धः। तेनैव 'घटं साक्षात्करोमी'ति व्यवहारसम्भवात्। प्रतिबिम्बाश्रयप्रमाविषयत्वं परोक्षस्थले। तेनैव 'घटमनु-

**चान्तःकरणवृत्तिः। यस्मिंश्च पक्षेऽविद्यावच्छिन्नः सर्वगतो जीवः आवृतः, तस्मिन्पक्षे जीवस्यैव**

मिनोमि घटं जानामी'त्यादिव्यवहारसम्भवात्। ननु सुखादिषु जीवस्य तादात्म्यसम्बन्ध एव साक्षात्कारव्यवहारे नियामकः, घटादिषु तूक्तरूप इति वैरूप्यमिति चेन्न। ब्रह्मण एव जगदुपादानत्वपक्षे जीवस्य मनःसुखादौ प्रतिबिम्बद्वारैव सम्बन्धस्य वाच्यत्वेन मनस्सुखाद्यवच्छिन्नचिद्रूपस्य मनओदिसाक्षात्कारस्यापि जीवप्रतिबिम्बाश्रयत्वेन जीवस्य प्रतिबिम्बाश्रयसाक्षात्कारावच्छेदकत्वरूपसम्बन्धस्यैव मनस्सुखादिसाक्षात्कारव्यवहारनियामकत्वेन वैरूप्यात्। न च मनोऽवच्छिन्नचितः जीवत्वे मनोऽवच्छिन्नरूपेणैकेन बिम्बत्वं प्रतिबिम्बाधारत्वं च अनुपपन्नमिति वाच्यम्। मनोविशिष्टरूपेण द्वितीयस्य मनउपहितरूपेण आद्यस्य स्वीकारात्। मनसोऽपि स्वच्छत्वेन प्रतिबिम्बाधारत्वे विशेषणत्वम्। भोक्तृत्वरूपजीवकोटौ निवेशासम्भवेन जीवोपाधित्वेन तन्निष्ठे बिम्बत्वे उपाधित्वमेव। न च मनोविशिष्टचिद्रूपप्रतिबिम्बाश्रयं प्रति मनसोऽच्छेदकत्वे मानाभाव इति वाच्यम्। चिति जायमानं प्रतिबिम्वं प्रति मनसोऽवच्छेदकत्वेन प्रतिबिम्बविशिष्टं प्रत्यवच्छेदकत्वात्। विशेषणं प्रत्यवच्छेदकस्य विशिष्टं प्रत्यवच्छेदकत्वनियमात्। एवं सुखादेरवच्छेदकत्वं बोध्यम्। तस्मात् स्वप्रतिबिम्बाश्रयसाक्षात्कारावच्छेदकत्वमेव सर्वत्र विषये जीवस्य सम्बन्धः।

वस्तुतस्तु स्वप्रतिबिम्बाश्रयावच्छेदकत्वं सर्वत्र सम्बन्धः। तत्र घटादौ प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वमिन्द्रियसन्निकर्षनियम्यम्। मनस्सुखादौ प्रतिबिम्बाश्रयमनस्सुखावच्छेदकत्वं प्रतिबिम्बोत्पादकसामग्रीनियम्यं मनस्सुखाद्युत्पादकसामग्रीनियम्यं वा। केवलमनस्सुखाद्यवच्छेदेन चिति प्रतिबिम्बविशिष्टमनस्सुखादेरध्यासादिति भावः।

ननु जीवोपरागार्था वृत्तिरिति न युक्तम्। साक्षिचैतन्यं हि विषयभासकम्। तस्य च पूर्वोक्तत्रिविधस्यापि जगदुपादानत्वात् विषयोपरागो वृत्तिं विनापीति चेन्न। साक्षिणि जीवस्य तादात्म्यादिसम्बन्धान्तरसत्त्वेऽपि वृत्तिं विना घटादेर्जीवं प्रत्यभानेन घटाद्यवच्छिन्नवृत्तिविशिष्टजीवात्मकत्वरूपस्य साक्षिणि जीवोपरागस्य चावश्यकत्वात्।

अत एवाद्वैतसिद्धावुक्तम्—'अधिष्ठानचिदेव प्रकाशमाना वृत्तिद्वारा जीवोपरक्ता जीवं प्रति विषयप्रकाशिके'ति। ननु ब्रह्मण्युक्तावच्छेदकत्वे मानाभावः, न हि सर्वव्यापकं वस्तु कस्यचिदवच्छेदकम्, न चावच्छेदकत्वे नियामकमिन्द्रियसन्निकर्षादिकं ब्रह्मण्यस्ति, तथा च 'ब्रह्म साक्षात्करोमी'ति व्यवहारानुपपत्तिः तत्राह—**विषयगतेत्यादि**। विषयसंसृष्टं यत् प्रमातृचैतन्यं प्रत्यावरणं तद्भङ्गार्थेत्यर्थः। तथा च ब्रह्मविषयकाज्ञानशून्यसाक्षिविषयकोक्तव्यवहारः। न चैवम् 'घटं साक्षात्करोमी'त्यादेरुक्तावच्छेदकत्वविषयकत्वेन वैरूप्यमिति वाच्यम्। वक्ष्यमाणपक्षेऽप्येतादृशवैरूप्यसत्त्वात्। तत्र हि 'घटं साक्षात्करोमी'त्यादौ घटादिनिष्ठो योऽज्ञानविषयतावच्छेदकत्वाभावस्तत्प्रयोजकविशिष्टचैतन्यरूपस्साक्षात्कारो विषय इति, 'ब्रह्म साक्षात्करोमी'त्यत्र ब्रह्मविषयकाज्ञानशून्यसाक्षात्कारो[1] विषय इत्येव वाच्यमिति भावः। सर्वगतः—तादात्म्येन सर्वदृश्यसम्बद्धः। **आवृत इति**। घटाद्यवच्छेदेनाज्ञानविषयतावान् घटं न ज्ञानामीत्यादिप्रतीतेरिति भावः। ननु सर्वगतत्वे आवृतत्वे वा मानाभावात् कथं तत्पक्षे आवरणभङ्गार्था वृत्तिः तत्राह—**जीवस्येत्यादि**।

१. ब्रह्मनिष्ठाज्ञानविषयत्वाभावो यः तत्प्रयोजकविशिष्टचैतन्यरूपः साक्षात्कारः।

**जगदुपादानत्वेन सर्वसम्बद्धत्वात् आवरणभङ्गार्था वृत्तिरिति विवेकः। ननु चिदुपरागार्था वृत्तिरिति पक्षे स्वतोऽन्तःकरणसम्बद्धानां धर्माधर्मादीनां ब्रह्मणश्च वृत्तिमन्तरेणैव सर्वदा भानं स्यात्। न स्यात्। चैतन्यस्य तत्तदाकारत्वाभावात्।**

---

**सर्वसम्बद्धत्वादिति।** आवृतत्वेनेति शेषः। घटाद्याकारवृत्तिं विनापि घटाद्याकारसाक्षात्कार-व्यवहारापत्त्या ब्रह्मणीव घटाद्यवच्छिन्नजीवचैतन्येप्यज्ञानविषयत्वं स्वीक्रियत इति भावः। **भङ्गेति।** भङ्गमात्रेत्यर्थः। घटादौ जीवरूपाया अविद्यावच्छिन्नचितस्तादात्म्यस्य स्वाभाविकत्वेन तस्यैव भासकतानियामकत्वसम्भवेन च न पूर्वोक्तोपरागार्थत्वं वृत्तेरिति भावः। ननु जीवस्य आवृतत्वं यदुक्तं तदयुक्तम्। सर्वदृश्यभासकं हि चैतन्यं साक्षी, **वाचस्पति**मते जीवेशानुस्यूतशुद्धचिदेव तथा वाच्यम्। तथा च तस्यैवावृतत्वं युक्तमिति चेन्न। यथा हि **वार्तिक**मते ईशस्य स्वं जीवं च प्रति सर्वदृश्य-भासकत्वम् सर्वदृश्याधिष्ठानत्वात्, तथा **वाचस्पति**मते जीवस्यैव तत एव स्वमीशञ्च प्रति तत्। जगत्कामनाकृत्योरपि जीवाधिष्ठानकत्वमेव जीवाश्रिताविद्यापरिणामत्वात्। 'सोऽकामयते'त्यादि-श्रुतिस्तु ब्रह्मणो जगदुपादानत्वश्रुतिवत् परिणाम्यविद्याविषयबोधिका। यथा च **वार्तिक**मते जीवः ईशतादात्म्यवान् तदुपादानकत्वात्, तथा **वाचस्पति**मते ईशविषयकाविद्यावान् द्रव्यतादात्म्यवान् घट इव ईशतादात्म्यवान्वेति तस्य तं प्रति भासकत्वसम्भवः। यथा च तन्मते[1] सुखादिभासकत्वे न ईशस्य वृत्त्यपेक्षा, तथा **वाचस्पति**मते जीवस्येशं प्रति सर्वभासकत्वे तं प्रति विषयाणामनावृतत्वात्। **स्वत इति।** वृत्तिं विनापीत्यर्थः।

अन्तःकरणसम्बद्धानां—जीवप्रतिबिम्बाश्रयमनोऽवच्छिन्नत्वादिसम्बन्धवताम्। ईशप्रसाद-कोपरूपधर्माधर्मयोरीशोपाधिमायापरिणामयोरपि तत्कारणयागादिक्रियावन्मनोऽवच्छिन्नत्वं स्वीक्रियते। तादृशमनोगतसुखादिजनकत्वादिति भावः। अधर्मादीनामित्यादिपदेन शुक्तिरूप्यादिसंग्रहः। **भानं स्यादिति।** तथा च प्रतिबिम्बाश्रयमनस्तादात्म्यादिसम्बन्धेन सुखादिसम्बद्धजीवस्य 'सुखं साक्षा-त्करोमी'त्यादौ विषयत्वात् वृत्तिं विनापि ब्रह्मणि इव धर्मादावपि तथासम्बद्धजीवेन तत्तत्साक्षात्कार-व्यवहारः स्यात्। शुक्तिरूप्यादावपि इदमाकारवृत्तिनिर्गमेन तादृशमनोऽवच्छिन्नचित्तादात्म्यमेव भासकतानियामकः सम्बन्धोऽस्तीति तत्राविद्यावृत्तिस्वीकारः सिद्धान्ते वृथेति भावः। [2]स्वप्रति-बिम्बाश्रयावच्छेदकत्वसम्बन्धेन सुखादिसम्बद्धो जीवः तत्साक्षात्कारः। धर्मादौ तु प्रतिबिम्बाभावेन न जीवस्य तत्सम्बन्धेन धर्मादिसम्बद्धतेत्याशयेनाह—**न स्यादित्यादि।** चैतन्यस्य–जीवस्य। तत्तदा-कारत्वाभावात्—स्वप्रतिबिम्बेत्यादिसम्बन्धेन धर्मादिसम्बद्धत्वाभावात्।

ननु घटाद्याकारायामिव ब्रह्माकारायामपि श्रवणमननादिपूर्वकालीनवृत्तौ जीवस्य प्रतिबिम्ब-सम्भवात् घटादाविव ब्रह्मण्युक्तरूपप्रतिबिम्बाश्रयावच्छेदकत्वसम्भवात् कथं ब्रह्माद्याकारत्वाभावः। एवमविद्यावृत्त्यभावेऽपि शुक्तिरूप्यादौ वृत्तिसामान्याभावेऽपि सुखादाविव धर्मादौ तत्प्रतिबिम्बसम्भ-

---

१. तन्मते वार्तिकमते।

२. स्वं जीवः तत्प्रतिबिम्बाश्रयो वृत्त्यवच्छिन्नं चैतन्यं तदवच्छेदकत्वं वृत्तौ तथा सुखेऽपि तदवच्छिन्नेऽपि च प्रतिबिम्बोदयात्।

**तदभावश्च स्वच्छेऽपि ब्रह्मचैतन्य आवरणात्। अनावृतेऽपि शुक्तिरजतादावस्वच्छत्वात्।**

वात् कथं तदाकारत्वाभावः तत्राह—**तदभावश्चेति**। सम्बन्धाभावश्चेत्यर्थः स्वच्छे—जीवप्रतिबिम्बयोग्यापातज्ञानरूपवृत्तिविषये। आवरणात्—आवरणयोग्यापरिच्छिन्नानन्दरूपत्वात्। तथा चापरिच्छिन्नत्वेन ब्रह्मणो न प्रतिबिम्बाश्रयवृत्तावच्छेदकत्वसम्भव इति भावः। यथाश्रुतं तु स्वच्छादिपदं न सङ्गच्छते, अनावृतेऽपि ब्रह्मणि प्रतिबिम्बाधारतावच्छेकत्वाभावेनावरणस्य तत्राप्रयोजकत्वात्।

### सर्वत्र प्रतिबिम्बवत्त्वस्य भासकताप्रयोजकत्वम्

अथवा स्वच्छावरणपदयोः यथाश्रुत एवास्तामर्थः। ब्रह्मणि स्वच्छेऽप्यावृतत्वात् न जीवप्रतिबिम्बवत्त्वम्। चरमवृत्तौ सत्यां त्वावरणनाशेन तद्वत्त्वसम्भवाद्ब्रह्माकारता। तथा च घटादौ भासकतया क्लृप्तस्य प्रतिबिम्बाश्रयावच्छेदकत्वस्याभावेऽपि ब्रह्ममनस्सुखादौ प्रतिबिम्बवत्त्वमेव भासकतानियामकस्सम्बन्धः। यथा च ब्रह्मण्यज्ञानविषयत्वमावरणम्, घटादौ तु तदवच्छेदकत्वमज्ञानविषयचित्तादात्म्यं वा तथा, ब्रह्ममनआदौ साक्षात्कारो जीवप्रतिबिम्बवत्त्वम्, घटादौ तु तदवच्छेदकत्वं तद्वृत्त्यच्छेदकत्वं वा। एवं च 'साक्षात्करोमी'त्याकारकसर्वप्रत्ययेषु प्रतिबिम्बघटितविषयकत्वेनैकरूप्यम्। **वस्तुतस्तु** प्रतिबिम्बवत्त्वमेव सर्वत्र सम्बन्धः। घटादावपि वृत्यवच्छेदकत्वकाले तत्सम्भवात्। अनुभूयते च जलाद्युपरक्ते मृदादिपात्रे सूर्यादिः प्रतिबिम्बम्। ननु प्रतिबिम्बितत्त्वसम्बन्धेन स्वावच्छिन्नमनोवृत्त्यादिप्रतिबिम्बितत्वसम्बन्धेन वा घटादिविशिष्टस्य जीवस्य 'घटं साक्षात्करोमी'त्यादिप्रत्यये विषयत्वं पूर्वोक्तमयुक्तम्। साक्षात्करोत्यर्थ एव हि तत्र विषयः। स च विषयविशिष्टप्रतिबिम्बस्य प्रयोजकं मनोऽवच्छिन्नं चैतन्यम्। अन्यथा फलघटितार्थावाचकत्वेन साक्षात्करोतेरकर्मकत्वं स्यादित्युक्तं जानातिसाक्षात्करोत्यर्थविषयविवेचनप्रस्तावे। घटादिविशेषितस्य तदर्थत्वे च तस्य नानार्थत्वापत्तिरिति चेन्न।

### साक्षात्करोत्यर्थविचारः

वस्तुगत्या घटादिविशिष्टं मनोऽवच्छिन्नं चैतन्यं तद्विषय इत्युक्तम्, न तु घटादिविशिष्टमनोऽवच्छिन्नचित्त्वेन चितो विषयत्वम्। तच्च विषयविशिष्टप्रतिबिम्बप्रयोजकमनोऽवच्छिन्नत्वेन घटादिविशिष्टचितेः विषयत्वेऽपि न क्षतम्। मनोवच्छिन्नचित्तादाम्यं च सुषुप्तजीवेऽप्यस्त्येव। मनस्त्वाश्रयस्य हि तादात्म्यं साक्षात्कारघटकम्, न तु तद्विशिष्टस्य। तथा च सौषुप्तमनोऽवस्थायां मनोजात्यभावेऽपि सकलमनोवस्थानुगतव्यक्तौ जागरस्वप्नकालयोः मनस्त्वसत्त्वेन तद्व्यक्तेरेव सौषुप्तमनोऽवस्थानुगतत्वात् सुषुप्तावपि मनस्त्वाश्रयोपहितचिदक्षता। ननु उक्तचिदपि न साक्षात्करोत्यर्थः। ज्ञानविशेषो हि सः। ज्ञानं च साक्ष्येव। तस्यैव सर्वदृश्यानुगतत्वेन ज्ञानत्वात्। न हि ज्ञानं सिद्धान्ते प्रतिज्ञेयं भिन्नम्। उक्तं हि मूल एव विषयविशेषोपरक्ततया ज्ञानं नाना स्वतस्तु ज्ञानं ज्ञानमित्येकं प्रतीयते इति चेन्न। अधिष्ठानीभूतसाक्षिण एव मनोऽवच्छिन्नत्वरूपेण ज्ञानत्वात्।

तदुक्त**मद्वैतसिद्धौ**—'यत्र दृश्याध्यासस्तत्र ज्ञानत्वम्, न तु ज्ञानत्वविशिष्टेऽध्यास' इति। अत एव **प्रतिकर्मव्यवस्थायामद्वैतसिद्धावुक्तम्**—'अविद्योपहितचिद्रूपस्य जीवस्य जगदुपादानत्वपक्षे घटाद्यवच्छेदेन आवृतत्वादावरणभङ्गार्था वृत्तिः। जगदनुपादानत्वपक्षे तु जीवस्य विषयेषु

सम्बन्धस्याभावात् तदर्था वृत्तिः। पक्षद्वयेऽपि जीवस्यैव विषयादभासकत्वम्। मनोऽवच्छिन्नचितेः जीवत्वे तु जीवस्य जगदुपादानब्रह्मचिदभेदाभिव्यक्त्यर्था वृत्तिः। ब्रह्मचिदेव विषयावभासिकेति चरमपक्षे अभेदाभिव्यक्त्यर्थत्वस्य जीवोपरागार्थत्वे पर्यवसानात् अत्र मूले तथोक्तमिति ध्येयम्। यदि च साक्षिरूपस्य ज्ञानत्वमित्याग्रहः, तदा तादृशमनोवच्छिन्नचित्तादात्म्यविशिष्टसाक्ष्येव साक्षात्करोत्यर्थोऽस्तु। नचोक्तप्रतिबिम्बप्रयोजकसाक्ष्येव सोऽस्त्विति वाच्यम्। चैत्रीयमनोवृत्तिमादाय मैत्रस्यापि 'घटं साक्षात्करोमी'ति व्यवहारापत्तेः। प्रयोजकत्वं हि बिम्बविधया प्रकृते निवेशितम्। तथा च घटावच्छिन्नचैत्रीयमनोवृत्तिप्रतिबिम्बितसाक्षिणो मैत्रीयमनोवच्छिन्नचिद्रूपे अहमर्थेऽपि सत्त्वादुक्तापत्तिः स्यादेव। मनोवच्छिन्नचितेः निवेशे तु तादृशवृत्तिनिष्ठप्रतिबिम्बप्रयोजकचैत्रमनोवच्छिन्नचितः मैत्रीयाहमर्थे तादात्म्याभावेन नोक्तापत्तिः। उक्तमनोऽवच्छिन्नचित्तो हि साक्षिणि विशेषणतया भानस्वीकारात् साक्षिरूपविशेष्येऽपि तादात्म्येन प्रकारत्वम्।

**यदि च** विषयसाक्षात्कारशरीरे भासमाने साक्षात्कारे विषयस्याध्यासिस्य तादात्म्यस्य भानमावश्यकम्। तस्य भासकतानियामकत्वात्, तदा 'घटं साक्षात्करोमी'त्यादौ साक्षात्कारैकदेशे विषय इव साक्षिण्यपि घटादेस्तादात्म्यं द्वितीयाविभक्त्युपस्थापितं विशेषणतया भातीति स्वीक्रियताम्। एवं जानात्यर्थोऽपि पूर्वोक्तरीत्या प्रतिबिम्बप्रयोजकमनोऽवच्छिन्नचित्तादात्म्यविशिष्टः साक्ष्येवोच्यताम्, उच्यतां च 'घटं जानामी'त्यादौ जानात्येकदेशे प्रतिबिम्बे स्वाकारवृत्तिनिष्ठत्वाद्यन्यतमसम्बन्धाद्यवच्छिन्नं घटादेराधेयत्वमिव साक्षिणि घटादेस्तादात्म्यमपि द्वितीयाविभक्त्युपस्थापितं विशेषणमिति। एवं वृत्तेरावरणभङ्गार्थत्वपक्षे अज्ञानाविषयत्वप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टसाक्षी साक्षात्करोतेरसत्त्वापादकाज्ञानाविषयत्वप्रयोजकमनोऽवच्छिन्नचिद्विशिष्टसाक्षी जानातेरर्थः।

**तदा**प्युक्तरीत्या घटादेरज्ञानाविषयत्वे आधेयत्वस्येव साक्षिणि तादाम्यस्य द्वितीयाविभक्त्यर्थस्य विशेषणत्वम्। मनोऽवच्छिन्नचिति तादृशप्रयोजकत्वं च स्वनिरूपितं यदज्ञानं तद्विषयत्वाभावस्य समानकालीनं कारणं या अविद्या तत्तादात्म्यम्। कारणत्वं क्षेमसाधारणं प्रयोजकत्वरूपोऽखण्डधर्मो वा तत्स्थाने वाच्य इत्यादि साक्षात्करोत्यर्थविवचने पूर्वोक्तं बोध्यम्। **यदि च** चिदुपरागार्थत्वपक्षात् वृत्तेर्जीवचितो विषयावच्छिन्नचिदभेदाभिव्यक्त्यर्थत्वपक्षो भिन्नो वाच्यः, **तदा** विषयत्वाभावान्तस्थले स्वप्रतियोगिकभेदस्य चिन्निष्ठो योऽभावः तस्यैव निवेशेन साक्षात्करोत्यर्थो वाच्यः। तदेकदेशे साक्षिणि घटाद्यन्वितस्य तादात्म्यस्य द्वितीयाविभक्त्यर्थस्यान्वयः। स्वपदार्थोऽत्र पूर्वत्र च मनोऽवच्छिन्नचिदेव। जानात्यर्थस्तु पूर्ववदेव।

वृत्तिसुखादौ प्रतिबिम्बास्वीकारादेवाभेदाभिव्यक्त्यर्थपक्ष इति स्वीकारे तु स्वतादात्म्यप्रयोजकत्वमेव मनोऽवच्छिन्नचिति विशेषणं वाच्यम्। तादात्म्ये च घटाद्याकारवृत्तिप्रतियोगिकत्वं 'घटं जानामी'त्यादौ, सुखादिनिष्ठत्वं 'सुखं जानामी'त्यादौ द्वितीयया बोध्यते। **यद्वा** स्वीयाकाराख्यविषयता स्वतादात्म्यं स्वतादात्म्याश्रयतादात्म्यं चेत्याद्यन्यतमप्रयोजकं यन्मनः तद्विशिष्टसाक्ष्येव तत्पक्षे जानात्यर्थः। इच्छाद्वेषादिपरिणामस्यापि मनस्त्वात्तदीयविषयत्वमपि मनोविषयत्वम्। द्वेषादिकमादाय घटादौ ज्ञानव्यवहार इष्ट एव।

इदं तु बोध्यम्। ज्ञाने साक्षात्कारे च पूर्वोक्ते सर्वत्र मनसो न मनस्त्वेन निवेशः 'ईशो जानाती'त्यादावीशस्य जगदनुपादानत्वपक्षे मनोविशिष्टतादात्म्यबाधात्। किन्त्वीशोपाधिमनोऽन्यतरत्वादिना निवेशः, ईशो मनोऽवच्छिन्नचिच्चेत्यन्यतरविशिष्टसाक्षिणो वेति। नन्वेवं वृत्तेश्चि-

**धर्माधर्मादौ तु अस्वच्छत्वादावृतत्वाद्वा। तेन स्वच्छेऽप्यावृते प्रमाणवृत्त्या तदाकारता। अनावृतेऽप्यस्वच्छे शुक्तिरजतादौ अविद्यावृत्त्या तदाकारता। अनावृते स्वच्छे तु सुखदुःखादौ स्वत इति नान्तःकरणसम्बन्धमात्रेण भानप्रसङ्गः।**

---

दुपरागार्थत्वपक्षेऽपि ब्रह्मणि चिदुपरागावरणभङ्गोभयार्थकत्वात् केवलचिदुपरागार्थकत्व**मद्वैतसिद्धयुक्त**मयुक्तमिति चेन्न। तस्य घटादिब्रह्मसाधारणं चिदुपरागमात्रं वृत्तेः प्रयोजनमित्यर्थकत्वात् मुख्यफलं चिदुपराग एवेत्यर्थकत्वाद्वा। यत्तु द्रव्ये प्रतिबिम्बवद्वृत्तिसंयोगः गुणादौ तु तस्यास्संयुक्तसमवायादिरिति, तदद्वै**तसिद्धयादा**वुक्तमपि अननुगतत्वादुपेक्षितम्।

अस्वच्छत्वात्—प्रतिबिम्बायोग्यत्वात्। नन्वीश्वरप्रसादकोपयोः सिद्धान्ते धर्माधर्मत्वस्वीकारात् जीवप्रसादकोपयोरिव तयोस्स्वच्छत्वमेव तत्राह—**आवृतत्वाद्वेति**। ईशं प्रति तयोरनावृतत्वेऽपि जीवं प्रत्यावृतत्वमिति भावः। तेन—स्वाभाविकेन ब्रह्माद्याकारत्वाभावेन, स्वच्छेऽप्यावृत इति पूर्ववदर्थः। ब्रह्मणीति शेषः। प्रमाणवृत्त्या—श्रवणाद्युत्तरं ब्रह्मास्मीति वृत्त्या। स्वच्छावृतब्रह्मविषयकतादृशवृत्त्येति समुदायार्थः। तदाकारता—साक्षिणो ब्रह्मविषयकाज्ञानशून्यता। **अथवे**त्यादिव्याख्यानपक्षे ब्रह्मप्रतिबिम्बिततेत्यर्थः। अनावृते—प्रातीतिकत्वात् अज्ञानविषयतानवच्छेदके, अविद्यावृत्त्या तदाकारता–शुक्तिरूप्याद्यवच्छिन्नाविद्यावृत्तिप्रतिबिम्बरूपसाक्षिणः शुक्तिरूप्याद्याकारता।

ननु यद्यपि **विवरणादौ** शुक्तिरूप्याद्याकाराविद्यावृत्तिरुक्ता, तथापि न युक्ता। प्रातीतिकरूप्यादेस्स्वच्छत्वसम्भवादिति चेन्न। व्यावहारिकरजतादेः चित्प्रतिबिम्बयोग्यत्वरूपस्वच्छत्वादर्शनेन तज्जातीयप्रातीतिकरूप्यादेः तदसम्भवात्। सत्त्वांशाधिकभूतपरिणामस्य मनआदेरेव स्वच्छत्वसम्भवेन तमोंऽशाधिकाविद्याया व्यावहारिकसाधारणरजतत्वविशिष्टहेतुतया क्लृप्तायाः परिणामस्य प्रातीतिकव्यावहारिकादेः स्वच्छत्वासम्भवाच्च। सत्त्वांशाधिकाविद्यापरिणामस्य तदाकारवृत्तिज्ञानस्य चिन्निष्ठतदाकारतासम्पादकत्वेनावश्यकत्वात्। तमोंऽशाधिकाविद्याकार्यतावच्छेदके प्रातीतिकान्यत्वनिवेशे तु गौरवम्। आवश्यकी च प्रातीतिकाविद्यावृत्तिः, तन्नाशस्यैव संस्कारत्वात्। अनुमित्यादिवृत्तिनाशस्य रजताद्याकारसंस्कारत्वेन स्मृतिहेतुतायाः क्लृप्तत्वात्। रजताद्यवच्छिन्नचैतन्यनाशस्य रजतादितादात्म्यसम्भवेऽपि रजतादिसम्बन्ध्याकाराख्यविषयत्वाभावात्।

विद्यमानसुखादौ त्वगत्या तदवच्छिन्नचैतन्यनाशस्यैव संस्कारत्वं कल्प्यते। अन्यथा मनःपरिणामे वृत्तिकल्पने वृत्तावपि तत्कल्पनापत्तेः। अतोऽनावृतस्य परिणामस्य स्मृतौ तदवच्छिन्नस्य चिन्नाशस्य तत्तादात्म्यापन्नचिन्नाशत्वेनैव हेतुत्वं कल्प्यते। अनावृतत्वं च स्वकाले बोध्यम्। तेन सुखादेः स्वनाशकाले आवृतत्वेऽपि न क्षतिः। अविद्यातत्सम्बन्धशुद्धचिज्जीवादेः स्मृतौ व्यभिचारात् मनःपरिणामत्वनिवेशः। अनावृते—साक्षिमात्रभास्यत्वात् अज्ञानविषयत्वानवच्छेदके। स्वच्छे—स्वच्छमनःपरिणामत्वेन स्वच्छे। **सम्बन्धमात्रेणेति**। मनसो ब्रह्मणि तादात्म्यं, शुक्तिरूप्यादौ सामानाधिकरण्यम्[1] ईशप्रसादधर्माधर्मादौ स्वावच्छिन्नत्वसम्बन्धः। यत्र हि मनसि यागादिप्रयत्नः, तदवच्छेदेन ईश्वरोपाधिः प्रसादरूपेण परिणमते। तथा च नानाविधानां मनस्सम्बन्धानां विषयसाक्षात्कारघटकत्वेनाननुगमोऽपीति भावः।

---

१. द्वयोरपि अविद्यापरिणामत्वात्।

**ननु ब्रह्मणः कथमावरणम् ? निरवद्यस्वप्रकाशत्वेन सर्वज्ञत्वात् । सत्यम् । स्वसम्बद्धसर्वभासकतया सर्वज्ञमपि अन्तःकरणावच्छिन्नजीवाज्ञानविषयतया आवृतमिति व्यपदेशात् । तस्मात् ब्रह्म जगदुपादानमिति पक्षे चिदुपरागार्था आवरणभङ्गार्था च वृत्तिः ।**

---

स्वं प्रत्यनावृतत्वेऽपि जीवं प्रत्यावृतं ब्रह्मेत्याशयेन समाधत्ते—**सत्यमिति** । अन्तःकरणावच्छिन्नेनेत्यनेन मनोऽवच्छिन्नचित् अविद्याप्रतिबिम्बो वा जीव इत्यादिसर्वपक्षेषु मनोवृत्तिसापेक्षं घटादिकिञ्चिज्ज्ञत्वमेव जीवस्येति सूचितम् । जीवाज्ञानविषयतया—जीवं प्रत्यावारकं यदज्ञानं तद्विषयतया । तस्मात्—ब्रह्मण्यावृतत्वसम्भवात् ।

ननु घटाद्यवच्छिन्नमनोवृत्तेरुत्पत्तिक्षणे तत्र प्रतिबिम्बोत्पत्तिः तदुत्तरक्षणे वा ? आद्ये प्रतिबिम्बघटितचिदुपरागस्य उक्तवृत्तिफलत्वासम्भवः[1] । ब्रह्माकारवृत्तौ तदुत्पत्तिक्षणद्वितीयक्षण एव ब्रह्मण्यावरणोच्छेदकत्वेन प्रतिबिम्बसम्पादकतया वैरूप्यापातश्च[2] । द्वितीये मनस्सुखादावपि तदुत्पत्तिक्षणे प्रतिबिम्बाभावस्य तुल्यत्वेन भानाभावापत्तिः । न चेष्टापत्तिः । साक्षिमात्रवेद्यस्याभासमानतया विद्यमानत्वास्वीकारात् । दर्पणाद्युपाधेः मुखादिसन्निधानस्य प्रतिबिम्बोत्पत्तिहेतुत्वेन तदुत्पत्तिद्वितीयक्षण एव तत्स्वीकारेऽपि सप्रतिबिम्बस्य मनसः परिणामे सुखादौ वृत्तिज्ञाने च सप्रतिबिम्बत्वस्य स्वाभाविकत्वेन तदुत्पत्तिक्षण एव सम्भवादिति चेत् । अत्रोच्यते । आद्यपक्ष एव युक्तः । 'अज्ञातं चैतन्यं प्रमेयं ज्ञातं फलमि'त्यनेन मूलेन हि चिदुपरागक्षणे फलत्वं तत्पूर्वं प्रमेयत्वं चोक्तम् । तत्र घटादौ वृत्तेरुपरागघटकत्वमेव उपरागफलकत्वम् । ब्रह्मणि तु आवरणभङ्गक्षणे प्रतिबिम्बोत्पादकत्वेन तद्घटितोपरागफलकत्वं मुख्यमेव । वृत्तेरावरणभङ्गार्थत्वं तु आवरणविरोधित्वं वृत्त्यधिकरणक्षणत्वम् आवरणकालपूर्वत्वाभावव्याप्यमिति यावत् ।

वस्तुतस्तु वृत्त्युत्पत्तिक्षणे एवावरणनाशस्य युक्तत्वात् आवरणकालपूर्वत्वानधिकरणक्षणाव्यवहितोत्तरत्वमेवावरणविरोधित्वम् । एवं च ब्रह्मण्यपि वृत्तेरुपरागफलकत्वं न मुख्यम् । एवं चोपरागसम्पादकसामग्रीविशिष्टमज्ञातशब्देनोच्यते । प्रमोत्पत्तियोग्यमेव प्रमेयशब्देनोच्यते । प्रमाविषयत्वं तु प्रमाकाल एव । यत्तु वृत्तेश्चिदुपरागार्थत्वपक्षेऽपि घटाद्यवच्छिन्ने ब्रह्मचैतन्ये अज्ञानविषयत्वं स्वीक्रियते । तद्विशिष्टमज्ञातशब्देनोच्यते । तथा च [3]प्रमानिवर्त्याज्ञानविषयत्वमेव प्रमेयत्वम् ।

अयमत्र निष्कर्षः । घटाद्यवच्छिनान्तःकरणवृत्तौ चैतन्यस्य प्रतिबिम्बात् प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन घटादौ सुखाद्यवच्छेदेन ब्रह्मचैतन्ये प्रतिबिम्बात्प्रतिबिम्बाश्रयब्रह्मचिदवच्छेदेन सुखादौ ब्रह्मचैतन्यावच्छेदेन ब्रह्माकारकवृत्तौ प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन ब्रह्मणि प्रातिभासिकरजताद्यवच्छेदेन रजताकारायामविद्यावृत्तौ प्रतिबिम्बात् प्रतिबिम्बाश्रयवृत्त्यवच्छेदकत्वेन सम्बन्धेन प्रातिभासिके सम्बन्धत्वाज्जीवस्य घटसुखब्रह्मरजतादिभानं न धर्मादेः । धर्माद्यवच्छेदेन धर्मानुस्यूतचैतन्ये प्रतिबिम्बाभावात् कल्पनाहेतोरभावात् फलानुसारित्वात्कल्पनाया इति दिक् ।—पा०

---

१. स्वोत्तरक्षणोत्पन्नस्यैव स्वजन्यत्वेन फलत्वात् ।

२. घटादिवृत्तेः उत्पत्तिक्षणे प्रतिबिम्बः ब्रह्मवृत्तेस्तु द्वितीयक्षण इति वैरूप्यम् ।

३. प्रमानिवर्त्याज्ञानविषयत्वमेव प्रमेयत्वमिति रम्यम् ।

**जीवोपादानत्वपक्षे तु आवरणभङ्गार्थैवेति। नन्वेकेनैव घटादिज्ञानेनावरणस्य भङ्गे सद्यो मोक्षप्रसङ्गः, अज्ञानस्यैकत्वात्। नानाज्ञानपक्षेऽप्येकस्य जीवस्यैकाज्ञानोपाधित्वात्। न। उत्तेजकेन मणेरिव वृत्त्या आवरणस्याभिभवाङ्गीकारात्। तथा च प्रमाणजन्यान्तःकरणवृत्त्यभावसहकृतमज्ञानं सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थमावरणमित्युच्यते। वृत्तौ जातायां तु अवच्छेदकाभावाद्विद्यमानमप्यविद्यमानसममेवेति न स्वकार्यसमर्थमज्ञानं तेनाभिभूतमित्युच्यते। नन्वेवं सति ब्रह्मज्ञानेनाप्यविद्याया**

---

एवं च घटाद्यवच्छिन्नचैतन्येऽपि आवरणोच्छेदक्षणे प्रतिबिम्बोत्पादिका वृत्तिः। अन्यथा ब्रह्मचैतन्येऽपि आवरणस्वीकारस्य वैयर्थ्यापत्तेः। अत एव स्वच्छेऽप्यावृते प्रमावृत्त्या तदाकारतेत्यत्र मूले ब्रह्मणीति विशेष्यवचनं नोक्तम्। तस्मात् सर्वस्याः प्रमाणवृत्तेरावरणोच्छेदक्षणे प्रतिबिम्बोत्पादकत्वमित्यापाततः प्रतिभाति।

तन्न रम्यम्। श्रवणादिपूर्वकालीनवृत्तिगतप्रतिबिम्बेन 'ब्रह्म साक्षात्करोमी'ति व्यवहाराभावेन ब्रह्मण्यावरणस्वीकारेऽपि घटाद्यवच्छिन्नब्रह्मचैतन्ये तत्स्वीकारे मानाभावात्। अथानभ्यासदशोत्पन्ने घटाद्याकारवृत्तिज्ञाने सप्रतिबिम्बे सत्यपि 'घटं साक्षात्करोमी'त्यादेरभावः तत्रापि तत्स्वीकारे मानमिति चेन्न। तावताप्यभ्यासदशोत्पन्नवृत्तेः पूर्वं तद्विषये आवरणे मानाभावेन सर्वस्या घटाकारवृत्तेर्घटाद्यवच्छिन्नचैतन्यनिष्ठावरणभङ्गार्थत्वे मानाभावात्। तस्माच्छुक्तिरूप्याकाराया इव घटाद्याकाराया अपि अनभ्यासदशानुत्पन्नवृत्तेः प्रतिबिम्बाश्रयत्वेनैव चिदुपरागार्थकत्वम्। न तु चैतन्यावरणनिवृत्त्यधीनचैतन्यनिष्ठप्रतिबिम्बोत्पादनद्वारा गौरवादिति ध्येयम्। वृत्तेरावरणभङ्गमात्रार्थत्वपक्षे तु प्रमोत्पत्तिक्षणे चैतन्यमनावरणविशिष्टम् आवरणोच्छेदविशिष्टं वा प्रमाविषयत्वादेव प्रमेयमित्युच्यते। तदुत्तरक्षणे तु फलीभूतस्य साक्षात्करोमीति व्यवहारस्य सम्भवात् फलमित्युच्यते इति दिक्।

आवरणस्याज्ञानस्य। नानाज्ञानपक्षे—जीवभेदेनाज्ञानभेदपक्षे। अभिभवं प्रकटयति—**तथा चेत्यादि**। सहकृतं—विशिष्टम्। **जननेति**। 'अस्ति भाती'तिव्यवहाराभावप्रयोजकमित्यपि बोध्यम्। अवच्छेदकाभावात्—जनकताप्रतिबन्धकतयोरवच्छेदकस्य वृत्त्यभावस्याभावात्। **स्वकार्येति**। 'अस्ती'त्यादिव्यवहाराभावस्य क्षेमसाधारणकार्यत्वाश्रयस्य 'नास्ती'त्यादिव्यवहाररूपकार्यस्य जननसमर्थमित्यर्थः। तथा चोत्तेजकीभूतमन्त्रविशेषाद्यभावविशिष्टमणित्वेन दाहाभावं प्रति कारणता यथा, तथा वृत्त्यभावविशिष्टाज्ञानत्वेन 'अस्ती'त्यादिव्यवहाराभावं 'नास्ति न भाती'ति व्यवहारं च प्रति कारणता। तत्रापि प्रमाविषयत्वाभावसमानाधिकरणमज्ञानविषयत्व'मस्ती'तिव्यवहाराभावे 'नास्ती'तिव्यवहारे च कारणम्। प्रमावच्छेदकत्वाभावसमानाधिकरणमज्ञानविषयत्वं 'भाती'ति व्यवहाराभावे 'न भाती'तिव्यवहारे च कारणम्। साक्षात्कारप्रमाया अवच्छेदकत्वस्य तद्विषये स्वीकारात् तस्या अवच्छेदकत्वस्य घटादौ पूर्वं सत्त्वे नोक्तकार्योत्पत्तिः। ब्रह्मणि तु विश्वव्यापकत्वेनावच्छेदकत्वस्य सर्वदाऽभावेऽपि श्रवणाद्युत्तरसाक्षात्कारस्य सत्त्वे अज्ञानविषयत्वाभावसत्त्वात् विशेष्याभावादेव तादृशाज्ञानविषयत्वाभावरूपस्य विशिष्टाभावस्य सत्त्वान्नोक्तकार्योत्पत्तिः।

वस्तुतस्तु 'विदेहकैवल्यपर्यन्तमज्ञानविषयत्वं न निवर्तत' इति वक्ष्यमाणपक्षे श्रवणाद्युत्तरस्यात्मसाक्षात्कारस्य सत्त्वेन 'भाती'ति व्यवहारसिद्धये लौकिकविषयत्वमेवावच्छेदकत्वस्थाने वाच्यम्।

**अनिवृत्तेरनिर्मोक्षप्रसङ्गः। न तत्त्वमस्यादिवाक्यार्थज्ञानादविद्यानिवृत्त्यभ्युपगमात्।**

लौकिकेन्द्रियसन्निकर्षादीनामिव विद्यमानसुखात्मादिविषयाणामपि तादात्म्येन प्रयोजकत्वात् तद्विषयकशाब्दधीवृत्तीनामपि तन्निष्ठलौकिकविषयताकत्वसिद्धिः। आस्तां वा वक्ष्यमाणाया अविद्यावृत्तेः विद्यमानसुखादिष्विव तत्रापि तत्काले 'भाती'त्यादिव्यवहारः। स्वीक्रियतां वा ब्रह्मणोऽपि शरीराद्यवच्छिन्नमवच्छेदकत्वम्। न हि शाखादेरवच्छेदकत्वमनवच्छिन्नम्, किन्तु अग्राद्यवयवावच्छिन्नम्। प्रयोजकं तु तत्र पूर्ववल्लौकिकसन्निकर्षादिकम्। घटादौ तूक्ताज्ञानविषयत्वाश्रयचित्तादात्म्यान्नोक्तकार्योत्पत्तिः। प्रमावच्छेदकेत्यत्र प्रमापदेनापरोक्षत्वेन प्रमात्वेन च निश्चीयमाना वृत्तिर्बोध्या। तेनानभ्यासदशापन्ने घटादिज्ञाने आपातब्रह्मज्ञाने च सत्यपि न तादृशकार्योत्पत्तिः। प्रमाविषयत्वादौ तु प्रमात्वेन निश्चीयमाना वृत्तिर्बोध्या। तेनातादृशे परोक्षज्ञाने सत्यपि उक्ताकारोत्पत्तिः।

अत्रेदं बोध्यम्। सुखादौ वृत्त्यस्वीकारे तस्मिन् विद्यमानेऽपि 'नास्ति न भाती'ति व्यवहारापत्तिः। अज्ञानविषयचित्तादात्म्यस्य तत्र सत्त्वात्। न च सुखाद्यवच्छिन्नचिद्भिन्नमनवच्छिन्नं घटाद्यवच्छिन्नं च चैतन्यमज्ञानविषय इति वाच्यम्। अज्ञानविषयत्वस्यावच्छिन्नानवच्छिन्ननिष्ठस्य एकत्वे, ब्रह्मणि साक्षात्कृते घटादौ 'नास्ती'त्यादिव्यवहारानुपपत्तेः। नानात्वेऽपि ब्रह्माज्ञाने नष्टे तद्विषयत्वसत्त्वानुपपत्त्या तद्दोषतादवस्थ्यात्। अनवच्छिन्नचिन्निष्ठविषयत्वं प्रथमेन तत्त्वज्ञानेन नश्यति, अज्ञानं तु चरमेणैवेति स्वीकारे जीवन्मुक्तस्याज्ञाननाशानुपपत्तिः। अथ 'ब्रह्माज्ञानं नष्टमि'त्यनुभवस्य [1]किमुक्तकल्पनागौरवेण। तस्मात् ब्रह्मसाक्षात्कारोत्तरं घटादौ 'नास्ती'व्यवहारानुपपत्तिवारणाय विदेहकैवल्यपर्यन्तमज्ञानविषयत्वं न निवर्तते एकाज्ञानपक्ष इत्येव वाच्यम्। तथा च घटाद्यवच्छिन्नचैतन्येऽप्यज्ञानविषयत्वस्वीकारे मानाभावात् शुद्धचिन्निष्ठेनैवाज्ञानविषयत्वेन 'घटादिकं नास्ती'त्यादिव्यवहारादिकम्। तथा च सुखादावपि तदापत्तिर्दुर्वारा।

तस्मात् घटाद्याकारवृत्तीनामिव मनस्त्वस्य मनोधर्मत्वस्य च उत्तेजकत्वं वा मनस्सुखादिषु विद्यमानेष्वेकैवा[2]विद्यावृत्तिर्वा स्वीक्रियते। सृष्ट्यारम्भकालोत्पन्नाविद्यावृत्तौ मनस्सुखादीनामवच्छिन्नत्वसम्बन्धेन विषयत्वसम्बन्धेन चोत्पत्तिः स्वीक्रियते। तथा च धीत्वजातिरूपेण वृत्तित्वेनोत्तेजकत्वस्वीकारान्नानुपपत्तिः। अत एव शुक्तिरूप्यादेरपि तद्वृत्तिविषयत्वमेव स्वीक्रियते, न तु वृत्त्यन्तरविषयत्वम्। प्रतिभासव्याप्यस्थितिकत्वरूपेण विषयतासम्बन्धेनोत्पत्तिं प्रति तद्वृत्तिव्यक्तेर्हेतुत्वस्वीकारात्। एवं च तद्वृत्तेः सृष्टिकाले नाशाभावेऽपि प्रतिभासव्याप्यसुखशुक्तिरूप्यादेः स्मृतौ तदवच्छिन्नचिन्नाशस्यैव संस्कारविधया हेतुत्वमिति दिक्। एवं सति—घटाद्याकारवृत्तेरज्ञानानुच्छेदकत्वे सति। **अनिवृत्तेरिति**। 'या या प्रमा सा सा स्वसमानविषयकाज्ञानतत्प्रयुक्तोच्छेदिके'ति व्याप्तिग्रहात् ब्रह्मप्रमाया अज्ञानोच्छेदकत्वं स्वीक्रियते। उक्तव्याप्तिश्च घटादिप्रमायां साध्यसाधनयोः सहचारदर्शनेन ग्राह्या। तच्च न सम्भवतीति भावः। अविद्यानिवृत्त्यभ्युपगमात्—नानाविद्योच्छेदाभ्युपगमात्। अयं च निवर्तकत्वादित्यत्र हेतुः। **स्वविषयविषयकप्रमात्वेनैवाविद्यानिवर्तकत्वादिति।**

१. नानुपपत्तिः, ब्रह्मनिष्ठविषयताया नष्टत्वेन तद्विशिष्टरूपेणाज्ञानस्य नष्टत्वादिति चेत्तर्हि वृत्त्यभावविशिष्टस्याज्ञानविषयत्वस्यात्यन्ताभव एव उक्तानुभवविषयोस्तु किमुक्तकल्पनागौरवेणेति।—पा०

२. एकैकाविद्ये ति।

**स्वविषयविषयकप्रमात्वेनैव अविद्यानिवर्तकत्वाभ्युगमात् । महावाक्यार्थज्ञानस्यैव अबाधितविषयतया प्रमात्वात् । प्रत्यक्षादीनां तु बाधितविषयतया भ्रमत्वेऽपि व्यवहारसामर्थ्येन प्रामाण्याभिमानात् । ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनश्चाकिञ्चित्करम्, स्वानुभवसिद्धत्वादन्यथानुपपत्तेश्च सर्वतो बलवत्त्वात् । तदुक्तम्—**

**अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।**
**पिनष्टयदृष्टिवैमत्यं सैव सर्वबलाधिका ॥ इति ।**

**अथवा मूलाज्ञानस्यैवावस्थाज्ञानानि घटादिविषयावरणानि । अज्ञानस्य ज्ञानप्रागभावस्थानीयत्वेन यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यभ्युपगमात् एकेन ज्ञानेन एकाज्ञानस्यैव नाशात् घटादिज्ञानेन आवरणनाशे न काचिदनुपपत्तिः ।**

---

'या अज्ञानविषयविषयिका प्रमा सा तदज्ञानतत्प्रयुक्तोच्छेदिके'ति व्याप्तेः पुरुषान्तरीयब्रह्मज्ञानेषु सहचारदर्शनेन ग्रहादज्ञानसमानविषयकप्रमात्वव्यापकमज्ञानतत्प्रयुक्तोच्छेदकत्वमित्यस्य नियमस्य सम्भवादित्यर्थः ।

प्रमात्वम् 'असम्भावनादिप्रयुक्ताप्रामाण्यबुद्ध्यविषयत्वे सत्यबाधितविषयकत्वम्' । तदनुक्तावापातब्रह्मज्ञाने घटादिज्ञाने च व्यभिचारः, अतो विशिष्टरूपेण व्याप्यता । प्रमात्वात्—उक्तविशिष्टप्रमात्वात् । तथा चाज्ञानसमानविषयकत्वं ब्रह्मज्ञानस्यैवेति तत्रैव सहचारस्य वाच्यतया घटादिज्ञाने तदभावेऽपि न क्षतिरिति भावः । ननु तर्हि घटादिज्ञानस्य प्रमात्वव्यवहारः कथम्? तत्राह—**प्रत्यक्षेत्यादि** । नन्वेकजीववादे कथमुक्तव्याप्तिग्रहः तत्राह—**ज्ञानादिति** । अन्यथानुपपत्तेः—विद्वान्नामरूपाद्विमुक्त' 'विश्वमायानिवृत्तिः' इत्यादिश्रुत्यन्यथानुपपत्तेः । अदृष्टिवैमत्यम्—अन्यत्रादर्शनेन विवादम् । विषयावरणानि—विषयावच्छिन्नचिदावरणानि । **एकाज्ञानस्येति** । [१]तज्ज्ञानाव्यवहितपूर्वतज्ज्ञानविषयावारकं यदज्ञानं तस्यैव तज्ज्ञानमुच्छेदकम् । सर्वश्चाज्ञानं न सर्वदा आवृणोतीति भावः । अनुमानादिभिः—अनुमित्यादिभिः । तन्निवृत्तौ—अधिष्ठानाज्ञाननिवृत्तौ, यौक्तिकज्ञानेन—**वाचस्पत्य**भ्युपगतेन 'अहं ब्रह्मास्मी'ति परोक्षज्ञानेन । एतेन **विवरणादिमते** श्रवणादिपूर्वज्ञानस्यापि अपरोक्षत्वादिदमयुक्तमित्यपास्तम् । अथवा **यौक्तिकेति** अपरोक्षत्वेनाज्ञायमानेत्यर्थः । आत्मविषयकशाब्दज्ञानस्य अपरोक्षस्यापि अपरोक्षत्वेनाज्ञायमानस्य नापरोक्षाध्यासमूलाज्ञानोच्छेदकत्वमिति भावः । वह्न्यादिव्यवहारः—'वह्निरस्ती'तिव्यवहारः । द्विविधं—परस्परासङ्कीर्णधर्मद्वयविशिष्टम् । असत्त्वापादकं—नास्तीति धीप्रयोजकतावच्छेदकाखण्डधर्मवत् । अन्तःकरणावच्छिन्नसाक्षिनिष्ठं—मनोवच्छिन्ना साक्षिनिष्ठाऽऽश्रयता यस्य तादृशम् । विषयावच्छिन्नब्रह्मचैतन्यनिष्ठं—घटाद्यवच्छिन्ना ब्रह्मनिष्ठाऽऽश्रयता यस्य तादृशम् । उभयावच्छेदानुभवात्—उभयोरेकैकावच्छिन्नाश्रयताकाज्ञानयोरुक्ताश्रयत्वानुभवात् ।

एकाज्ञानपक्षे अज्ञानस्य घटावच्छिन्ननानाविषयताकत्ववत् मनोघटाद्यवच्छिन्नाश्रयताकत्वं सम्भवत्येवेति तत्पक्षेऽपि 'घटं न जानामी'त्युभयावच्छेदेनानुभवोपपत्तिः । यदि च तत्पक्षे घटाद्य-

---

१. तज्ज्ञानाव्यवहितपूर्वतज्ज्ञानेत्यादिः ।

नन्वनुमानादिभिरावरणं निवर्तते न वा ? । आद्ये साक्षात्कारिभ्रमस्यापि शङ्खपीतत्वादेः दिङ्मोहादेश्च श्वेतत्वाद्यनुमानादिना निवृत्तिप्रसङ्गः । अधिष्ठानाज्ञानोपादानकत्वे भ्रमस्य तन्निवृत्तौ निवृत्तेः । यौक्तिकज्ञानेन च ब्रह्मणः अविद्यानिवृत्तेः साक्षात्कारार्थं श्रवणमननापेक्षा न स्यात् । द्वितीये च वह्न्यादिव्यवहारो न स्यात् प्रतिबन्धकस्य विद्यमानत्वात् । उच्यते । द्विविधमावरणम् । एकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिनिष्ठम् । अन्यदभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठम् । 'घटमहं न जानामी'त्युभयावच्छेदानुभवात् । तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रेण निवर्तते । अनुमितेऽपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात् । द्वितीयं तु साक्षात्कारेणैव निवर्तते । यदाश्रयं यदाकारं ज्ञानं तदाश्रयं तदाकारमज्ञानं नाशयतीति नियमात् । परोक्षज्ञानस्य इन्द्रियविषयसन्निकर्षाभावेन ज्ञानस्यान्तःकरणमात्राश्रयत्वात् । अपरोक्षज्ञानस्यैव विषयव्यापारजन्यत्वेन विषयान्तःकरणोभयजन्यत्वेन तदुभयनिष्ठत्वात् । तदुक्तम्—

परोक्षज्ञानतो नश्येदसत्त्वावृतिहेतुता ।
अपरोक्षधिया नश्येदभानावृतिहेतुता ॥ इति ।

---

वच्छिन्नान्यज्ञानविषयत्वानि न स्वीक्रियन्ते, 'घटज्ञानेन घटाज्ञानं नष्टमि'त्यादिप्रत्ययस्य उक्तविषयतानाशविषयकत्वानुरोधात् तत्स्वीकारः। तादृशप्रत्ययस्य नोक्तनाशो विषयः। अनन्तानामवच्छिन्नविषयतानां कल्पने गौरवात्, किन्तु वृत्त्यविषयत्वसमानाधिकरणं यत् घटाद्यात्मकचिद्वृत्त्यज्ञानविषयत्वं तदत्यन्ताभावो विषय इति तत्स्वीकारो व्यर्थ इति चिन्त्यते, तदा पल्लवाज्ञानानामेवोक्ताश्रयताकत्वम् । एकाज्ञानपक्षे 'घटं न जानामी'ति धीस्तु घटात्मकचिद्वृत्तिवृत्त्यविषयत्वसमानाधिकरणविषयताकाज्ञानवानहमित्याकारेति भावः। यदाकारं—यादृशविषयताकम्, तन्निष्ठं–तन्मात्रनिष्ठमेव । आलोकतमसोस्तथानियमस्य दृष्टत्वात् ज्ञानाज्ञानयोरपि स कल्प्यते। आलोकमनोवृत्त्यो'रस्ति भाती'तिव्यवहारप्रयोजकत्वरूपस्य प्रकाशत्वरूपस्य तमोऽज्ञानयो'र्नास्ति न भाती'ति व्यवहारप्रयोजकत्वस्य चाविशिष्टत्वात् । असत्त्वावृतिहेतुता–'नास्ती'ति व्यवहारप्रयोजिकाऽविद्या । अभानावृतिहेतुता–'न भाती'ति व्यवहारप्रयोजिकाविद्या । असत्त्वरूपायां सत्त्वविरोधिन्यां नास्तीति व्यवहाररूपायामावृतौ हेतुता यस्या इत्यादि व्युत्पत्तेः। व्यवहारः—'अस्ती'ति व्यवहारः।

अत्रेदं विभावनीयम् । असत्त्वापादकाज्ञानस्यापि विषयावच्छिन्नचिदाश्रयताकत्वम् । अन्यथा 'ह्रदो वह्निमानि'ति ज्ञानस्य ह्रदविशेष्यतावच्छिन्नवह्निप्रकारताकत्वं न स्यात् । ह्रदवह्निभ्यां ये चितस्तादात्म्ये तयोर्विशेष्यताप्रकारतारूपयोर्मिथोऽवच्छेद्यावच्छेदकभावस्य वाच्यत्वेन ह्रदचित्तादात्म्यावच्छेदेन चिति तादात्म्ये वह्न्युत्पत्तेरावश्यकत्वात् । न च 'तद्घटध्वंसवानयमि'त्यादौ भिन्नकालीनानां तद्घटध्वंसयोः चित्तादात्म्यानां 'तद्घटात्यन्ताभाववदिदमि'त्यादौ तद्घटतदत्यन्ताभावयोः चित्तादात्म्यानां भिन्नदेशावच्छिन्नानां चावच्छेद्यावच्छेदकभाववत् मनोवच्छिन्नवह्निचित्तादात्म्यस्य

**तेनानुमानादावसत्त्वावरणनाशात् तत्र तद्व्यवहारः। अभानावरणनिवृत्त्या च सोपाधिकसाक्षात्कारभ्रमनिवृत्तिरिति। तस्मान्निर्धर्मकस्याप्यात्मनोऽविद्ययान्तःकरणतादात्म्याध्यासात् तद्धर्मकर्तृत्वभोक्तृत्वाद्यध्यास उपपद्यते। ननु त्वन्मतेऽनिर्वचनीयख्यात्यभ्युपगमात् ये कर्तृत्वादयोऽन्तःकरणधर्मा आत्मन्यध्यस्यन्ते ते अनिर्वचनीयास्तत्रोत्पद्यन्त इति वाच्यम्; तथा च व्यावहारिकप्रातीतिकभेदेन कर्तृत्वभोक्तृत्वादीनां**

ह्रदचित्तादात्म्येन भिन्नदेशेनावच्छिन्नत्वमिति वाच्यम्। यद्यप्यनिर्वचनीयवादे प्रतीत्यनुरोधे क्वचित्किञ्चिदनुपपन्नं स्वीक्रियते, तार्किकादिमते भिन्नकालीनयोर्विषयविषयित्वादिवत्, घटाभावादौ तदाधारत्वादिवच्च, तथाऽपि तत्परिहारसम्भवे तत्स्वीकारस्यान्याय्यत्वात्। अत एव परोक्षभ्रमस्यान्यथाख्यातित्ववादिनो निरस्ताः। विशेष्यतावच्छिन्नप्रकारत्वासम्भवात्। तस्माद्द्विविधमप्यज्ञानमुभयावच्छिन्नाश्रयताकमेव वा। यथा हि—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।

इत्यनेन मूलाज्ञानाश्रयता अनवच्छिन्नत्वेनोक्ता तथापि 'ब्रह्म न जानामी'त्यत्र प्रमातृविशेषनिरूपितत्वेनाज्ञानं भाति, तथा प्रमातृविशेषानाश्रितमप्यज्ञानं प्रमातृविशेषनिरूपितत्वेन 'घटमहं न जानामी'त्यादौ भाति, तत्पुरुषीयब्रह्मप्रमया पुरुषान्तरीयब्रह्माज्ञानानिवृत्त्या प्रमातृनिरूपितत्वसम्बन्धस्य मूलाज्ञाने क्लृप्तत्वेन पल्लवाज्ञानेऽपि तस्यैव व्यवस्थापकतया कल्पनाया युक्तत्वात्। तथा चासत्त्वापादकाज्ञाननिवर्तकत्वं प्रमामात्रस्य तत्समानविषयत्वेनैव अभानापादकाज्ञाननिवर्तकत्वं तदवच्छेदकावच्छिन्नप्रमात्वेनेति। तादृशप्रमाया विषयावच्छिन्नत्वं विषयेन्द्रियसन्निकर्षाद्यधीनं स्वीक्रियते। तदवच्छेदकावच्छिन्नत्वं प्रमायां स्वानवच्छेदकानवच्छिन्नाज्ञानकत्वम्। तेन ब्रह्मज्ञाने स्वावच्छेदकाभावेऽपि न क्षतिः।

ननु 'अस्ति भाती'ति व्यवहारप्रतिबन्धकत्वस्य 'नास्ति न भाती'ति व्यवहारजनकत्वस्य तदाश्रयानन्ताज्ञानानां कल्पनामपेक्ष्य सुखादिसाधारण्येन प्रमामात्रापरोक्षप्रमयोरेवा'स्ति भाती'तिव्यवहारनियामकत्वम्। तद्विषयत्वयोरस्तित्वभानत्वरूपत्वादिति चेन्न। असत्त्वापादकाज्ञानशून्या चिदस्तित्वम्। अभानापादकाज्ञानशून्या चिद्भानम्। असत्त्वाभाने—तादृशाज्ञानाभ्यां विशिष्टचितौ, तथा च प्रमाकाले विषयसत्त्वात् 'अस्ति भाती'ति व्यवहारेऽपि तदन्यकाले विषयासत्त्वादेव तदभावः, विषयासत्त्वादेव च 'नास्ति न भाती'ति व्यवहार इति मन्मते नाज्ञानस्य प्रतिबन्धकत्वं जनकत्वं च स्वीक्रियते। व्यवहारविषयविधया व्यवहारे परं भानाभानसत्त्वासत्त्वानां प्रयोजकत्वम्। तच्च परैरपि वाच्यम्। अज्ञानाश्रयताया देशेनेव कालेनाप्यवच्छिन्नत्वात् 'इदमिदानीमिह नास्ती'त्यादिधीः[1]। 'इदमिदानीमिहास्ती'त्यत्राप्यस्तित्वघटके[2] अज्ञाने तदभावे वा कालाद्यवच्छिन्नाश्रयताकत्वधीः। अत्यन्ताभावस्येवाज्ञानस्याप्यनादेरप्याश्रयतायाः कालाद्यवच्छिन्नत्वमिति दिक्।

१. सा चावच्छेदकतापरम्परया इदमादिरूपशुक्त्यादिनिष्ठा या चिदवच्छेदकत्वाश्रयता तदवच्छेदकतेति यावत्।

२. घटके अज्ञाने तदभावे वा कालाद्यवच्छिन्नेत्यादिः।

द्वेधाऽवभासः स्यात् । न स्यात् । तादात्म्याभिमानेनाविवेकात् । सकलधर्मविशिष्टस्यैवान्तःकरणस्यात्मन्यध्यस्तत्वेन द्वयाभावाद्वा । तस्मादेकस्यात्मन उपाधिभेदेन प्रमात्रादिव्यवस्थोपपत्तेर्न सौगतमतापत्तिर्न वा विरोधः । अन्या अपि व्यवस्थाः स्पष्टतरमुपरिष्टादुपपादयिष्यन्ते । तस्मात् ज्ञानरूपस्यात्मनः सुषुप्तावव्यभिचारित्वाद्देहेन्द्रियादीनां च व्यभिचारित्वात् दृश्यत्वाच्च तत्र तत्रात्मबुद्धिस्तेषां तेषां वादिनां भ्रान्तिरित्यौपनिषदं मतं प्रामाणिकमिति सिद्धम् ॥ १ ॥

स्यादेतत्, आत्मनो निर्धर्मकत्वे प्रमात्रादिव्यवहारस्याध्यासमूलत्वेन 'ब्राह्मणो यजेते'त्येवमादीनां शास्त्राणामप्रामाण्यप्रसङ्गः अकर्तुरभोक्तुश्चात्मनः प्रवृत्त्यनुपपत्तेः । वेदाप्रामाण्ये च कुतो ब्रह्मसिद्धिरपि । तस्य तन्मात्रगम्यत्वात् शास्त्रयोनित्वादिति न्यायात् । तथा च वेदप्रामाण्यार्थं प्रमातृत्वादिव्यवहारस्य सत्यत्वमभ्युपेयमित्याशङ्क्य

---

तस्मात्—अध्यासे दोषासम्भवात् । **व्यावहारिकेत्यादि** । व्यावहारिककर्तृत्वादेः मनसि स्वाभाविकधर्मत्वात् मनोनिष्ठं तद्व्यावहारिकम् आत्मनि तस्यास्वाभाविकधर्मत्वात् गगननैल्यादिवत् प्रातीतिकमित्यर्थः । यद्यपि मनोनिष्ठस्यैव कर्तृत्वादेरात्मनि संसर्गमात्रमध्यस्यते न तु स्वरूपान्तरं तथाप्यात्ममनस्संसृष्टाभ्यामेकस्यापि कर्तृत्वादेर्भेदस्वीकार इति मते समाधत्ते—**न स्यादिति**। तादात्म्याभिमानेन—आत्ममनसोर्भेदाग्रहेण । अविवेकात्—आत्ममनोधर्मयोर्भेदाग्रहात् । उक्तरूपाभ्यामेकमेव कर्तृत्वादिकं भाति, न तु भिन्ने रूपे स्वीक्रियेते इति मतमाश्रित्य समाधत्ते—**सकलेत्यादि** । वस्तुतः प्रातीतिकस्यात्मनि कर्तृत्वादिसंसर्गस्योत्पत्त्यस्वीकारान्न तद्विशिष्टरूपेण भेदप्रसक्तिः ।

परन्तु यदेव मनसस्तादात्म्यम् (आत्मनि) स्वीक्रियते तदेव कर्तृत्वादेरप्यात्मनि धर्मितानियामकः सम्बन्धः । धर्मधर्मिणोरपि तादात्म्यस्यैकस्यैव स्वीकारात् । अथवा कर्तृत्वादेर्यदेव मनसि आधारत्वं तदेवात्मन्यपि, युगपदेवोभयत्र प्रतीयमानत्वात् उभयोरैक्यापन्नत्वाच्च । इदन्त्वादेराधारत्वं तु रजतप्रतीतेः पूर्वमपि इदमादौ प्रतीयत इति इदमादिरजतयोर्नैकं तद्वक्तुं शक्यते । तस्य च तादात्म्यस्याधारत्वस्य वा व्यावहारिकमात्रत्वादात्ममनोऽनुयोगिकविशिष्टरूपाभ्यां कर्तृत्वादेर्भेदस्वीकारेऽपि तादात्म्याभिमानेनेत्यादिरीत्या न तदवभासः । प्रातीतिकरूपान्तरं तु कर्तृत्वादेर्न सम्भाव्यत इत्याशयेनाह—**सकलेत्यादि। आत्मनीति।** [1]एकैकतादात्म्येनाधारत्वेन वेति शेषः। द्वयाभावात्—कर्तृत्वादेर्व्यावहारिकप्रातीतिकभेदेन रूपद्वयाभावात् । सुषुप्त्येकसिद्ध इति पदव्याख्यानोपसंहारपूर्वकं श्लोकव्याख्यामुपसंहरति—**तस्मादित्यादि** ॥ १ ॥

द्वितीयं पद्यमवतारयति—**स्यादेतदिति** । यदुक्तं तदास्तामित्यर्थः । प्रमात्रादीत्यादिपदेन ब्राह्मणादिसंग्रहः । तस्य—ब्रह्मणः, तन्मात्रगम्यत्वात्—वेदमात्रगम्यत्वात् । ननु कार्यत्वहेतुकसकर्तृकत्वानुमानेन ब्रह्मसिद्धिस्सम्भवतीत्यत आह—**शास्त्रेति** । ब्रह्म विचार्यमाणवेदान्तैकगम्यम् वेदान्य-

---

१. एकेन तादात्म्येत्यादिः ।

**किं तत्त्वज्ञानात्पूर्वमप्रामाण्यमापाद्यते ऊर्ध्वं वा ? तत्राद्ये सर्वेषां प्रमाणानामविद्यावद्विषयत्वेन तद्दशायां बाधाभावान्निष्प्रत्यूहं प्रामाण्यम् । द्वितीये त्विष्टापत्तिरेवेत्याह—**

**न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि ।**
**अनात्माश्रयाहंममाध्यासहानात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥**

**वर्णाः ब्राह्मणत्वादयः । आश्रमाः ब्रह्मचर्यादयः । आचाराः स्नानशौचादयः । धर्माः ब्रह्मचर्यगुरुसेवादयः । अत्र द्वन्द्वद्वयगर्भषष्ठीतत्पुरुषेण वर्णानामाचारधर्माश्च आश्रमाणामप्याचारधर्माश्च लभ्यन्ते । धारणा ब्रह्मणि बाह्यविषयत्यागेन मनसस्स्थैर्यम् । ध्यानं परमात्मचिन्तनम् । योगश्चित्तवृत्तिनिरोधः । आदिशब्देन श्रवणमननादयो गृह्यन्ते । सर्वेषां ज्ञानोत्तरकाले असत्त्वे हेतुमाह—अनात्माश्रयाहंममाध्यासहानादिति । अनात्मा आत्मविरोधिनी अविद्या तदाश्रयस्तदुपादानो योऽहङ्कारममकाराद्यध्यासस्तस्य मूलस्यापि तत्त्वज्ञानेन हानात् तत्प्रयुक्तवर्णाश्रमादिव्यवहारो नास्तीत्यर्थः ॥ २ ॥**

**वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमूलत्वेन मिथ्यात्वं द्रढयितुं तद्व्यतिरेके सुषुप्तौ तद्व्यतिरेकमाह—**

---

मानगम्यत्वाभावात्—सकर्तृकत्वानुमानस्याप्रयोजकत्वात् सत्यज्ञानानन्दशुद्धरूपेणानुमानाद्यगम्यत्वादिति सूत्रार्थः । अविद्यावद्विषयत्वेन[1]—अविद्याकालपरमार्थत्वेन गृह्यमाणप्रमेयकत्वेन, तद्दशायां—प्रमाविषयाणामबाध्यत्वग्रहदशायाम् । निष्प्रत्यूहमिति दशायामित्यनेनानुषक्तेनान्वितम् । प्रामाण्यम्—अबाध्यविषयकत्वम् । इष्टापत्तिरेवेत्यत्र पद्येनैव हेतुमाह—**न वर्णा इत्यादि** । योगादयोऽपीत्यपिशब्देन हेतुत्वमुच्यते । तथा च यतो मयि वर्णाद्यभावः, अतोऽद्वितीये इष्टापत्तिरित्यर्थः । वर्णाद्यभावे हानादित्यन्तं हेतुः । ननु वर्णाश्रमेत्यादौ वर्णाश्रमयोराचारधर्मनिषेधे आश्रमनिषेधो न लभ्यते तत्राह—**द्वन्द्वेत्यादि** । आश्रमाश्चाचाराश्च धर्माश्चेति द्वन्द्वोत्तरं षष्ठीतत्पुरुषेणेत्यर्थः । वर्णसम्बन्धिन आश्रमाचारादयो लभ्यन्ते तेषां मध्ये आश्रमपुरस्कारेण विहिता आचारधर्मा अपि लभ्यन्ते वर्णसम्बन्धित्वादित्याशयेनाह—**वर्णानामित्यादि** । आश्रमाणामपीत्यपिशब्दादाश्रमा अपि लभ्यन्ते इत्यर्थः । लभ्यन्ते निषेध्यत्वेन ज्ञायन्ते । द्वन्द्वद्वयेति[2] पाठे तु धर्मपदेनैवाश्रमा ग्राह्याः, तेषामपि वर्णधर्मत्वसम्भवात् । धारणाध्यानशब्दयोर्बाह्यविषयसाधारण्येन धारणादिबोधकत्वसम्भवेऽपि प्रकृतपद्यस्य तत्त्वनिष्ठपुरुषकर्तृकत्वेनात्मधारणाध्यानयोरेव उक्तपुरुषे प्रसक्तेः तत्परत्वमेवाह—**धारणेत्यादि** । आत्मविरोधिनीं—पूर्णानन्दोऽहमित्यादिव्यवहारविरोधिनी ॥ २ ॥

तृतीयपद्यमवतारयति—**वर्णेत्यादि** । व्यवहारस्याभिलापप्रवृत्त्यादेः । मिथ्याज्ञानमूलकत्वेन—'अहं ब्राह्मण' इत्यादिभ्रमनिमित्तकत्वेन । मिथ्यात्वं—मिथ्याविषयत्वम् । तद्व्यतिरेके—मिथ्याज्ञान-

---

१. अविद्याकाले प्रमात्वेन गृह्यमाणप्रमाजनकत्वेन ।

२. वर्णाश्च आश्रमाश्चेत्येको द्वन्द्वः आचाराश्च धर्माश्चेति द्वितीयः वर्णाश्रमाणां आचारधर्मा इति तत्पुरुषः ।

**न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।**
**सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥**

**माता जनकस्त्री । पिता जनकः पुमान् । देवा इन्द्रादयः आराध्याः । लोकास्तदाराधनफलानि स्वर्गादीनि । वेदाः अलौकिकहिताहितसाधनताप्रतिपादकानि ब्रह्मप्रतिपादकानि च प्रमाणवाक्यानि । यज्ञाः स्वर्गादिसाधनीभूता ज्योतिष्टोमादयः । तीर्थं यज्ञसाधनीभूतः कुरुक्षेत्रादिदेशः । एवं पापकर्मसाधनान्यप्युपलक्षणीयानि । सर्वेषां देहाभिमानमूलकत्वात् तदभावे स्वतस्सम्बन्धाभावादविद्यमानतेत्यर्थः । तथा च सुषुप्तिं प्रकृत्य श्रुतिः—'अत्र पिताऽपिता भवति माताऽमाता देवा अदेवा वेदा अवेदा यज्ञा अयज्ञास्स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसश्श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवती'त्याद्या अभिमानाभावे सर्वानर्थनिवृत्तिमनुवदन्ति । ननु सर्वव्यवहाराभावे शून्यतैव स्यात् । नेत्याह—निरस्तातिशून्यात्मकत्वादिति । निरस्तम् अतिशून्यात्मकत्वं यस्मात्तत्तथा । भावप्रधानो निर्देशः । तस्य सुषुप्तिसाधकत्वात्पुनरुत्थानानुपपत्तेश्च । 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति । यद्वै तन्न**

व्यतिरेके सति । तद्व्यतिरेकं—वर्णाश्रमादिव्यवहारव्यतिरेकम् । **न मातेत्यादि** । पूर्वपद्यात् मे इत्यस्यानुषङ्गात्, न मे मातेत्यादि सुषुप्तौ न ब्रुवन्ति तस्मादेकोऽहमित्यर्थः । ननु देहादिव्यवहारस्य कथं देहाभिमानमूलकत्वम् तत्राह—**सर्वेषामिति** । मत्सेव्यत्वादिरूपममत्वाध्यासविशिष्टानां सर्वेषामित्यर्थः । स्वतो—देहाभिमानं विना । सम्बन्धाभावात्—ममत्वाध्याससम्बन्धाभावात् । अविद्यमानता—ममत्वविशिष्टरूपेण व्यवहारसामान्यस्याभावो युक्त इति भावः । **वस्तुतस्तु वर्णाश्रमादिव्यवहारस्य मिथ्याज्ञानमूलकत्वेनेति** वर्णादिव्यवहारस्य सर्वस्य मनोऽवच्छिन्नचिन्निष्ठत्वेन 'अहमि'तिमिथ्याज्ञानमूलत्वेनेत्यर्थः । एवं च मे इत्यस्याननुषङ्गेऽपि न क्षतिः । **सर्वेषामित्यादि** । सर्वव्यवहाराणाम् अहङ्काराध्यासमूलकत्वादित्यर्थः । तदभावे—अहङ्काराध्यासाभावे, स्वतः अहङ्कारानवच्छिन्नचिति, सम्बन्धाभावात्—सर्वव्यवहारसम्बन्धाभावात् । अत्र—सुषुप्तौ । अपिता—ममत्वविशिष्टपितृत्वादिरूपेणाव्यवहार्यः । एवमग्रेऽपि । चाण्डालो—ब्राह्मण्यां शूद्रेणोत्पन्नः । पौल्कसः—क्षत्रियायां जातः । श्रमणः—परिव्राट् । पुण्यपापयोर्व्यवहारहेतूत्पादकत्वात् उपाधिप्रयुक्तभेदस्य मिथ्यात्वेन तच्छून्यत्वाद्व्यवहाराभाव इत्याह—**अनन्वागतं पुण्येनेति** । सुषुप्तौ पुण्येनानन्वागमः असम्बन्धो जीवेष्वित्यर्थः । अत्र हेतुमाह—**तीर्णो हीत्यादि** । तदा—सुषुप्तिकाले । शोकान्—व्यवहारतद्विषयतत्साधनीभूतार्थान् संस्कारान्यकार्यरूपार्थानिति यावत् । धर्मिणो हेतुत्वास्वीकारमते धर्मस्य हेतुत्वलाभायाह—**भावप्रधान इति** । निरस्तातिशून्यात्मकत्वादित्यर्थः । शून्यात्मकतानिरासे हेतुमाह—**सुषुप्तीत्यादि** । मात्राऽसंसर्गः—स्थूलकार्यासम्बन्धः । अस्य—सुषुप्तात्मनः । **यद्वा इत्यादि** । तत्

**पश्यति पश्यन्वै तन्न पश्यति, न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि'त्यादिश्रुतिभ्यश्चात्मचैतन्यस्य न सुषुप्तौ शून्यतेत्यर्थः। निराकृतमप्येतत्पुनरपि स्थूणानिखननन्यायेन निराक्रियते। यद्वा निरस्तमशनायाद्यतीतम्, अद्वितीयमतिशून्यं यद्ब्रह्म तदात्मकत्वात्। तथा च श्रुतिः—'यदा वै पुरुषः स्वपितिनाम सता सोम्य तदा सम्पन्नो भवति'। 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति। तेन जगत्कारणीभूतसर्वज्ञ-सर्वशक्तिपरिपूर्णानन्दबोधरूपेण ब्रह्मणा सहैकत्वादसंसार्येव जीव इति सिद्धम्॥ ३॥**

**एवं तावत् त्रिभिः श्लोकैः वादिविप्रतिपत्तिनिराकरणपूर्वकं त्वम्पदार्थो निर्धारितः। सम्प्रति तत्पदार्थस्तथैव निर्धारणीयः। तत्र निराकार्या वादिविप्रतिपत्तयः प्रदर्श्यन्ते। ननु न ब्रह्मणा सह जीवस्यैक्यमुपपद्यते। तथा हि सच्छब्दवाच्यं जगत्कारणं ब्रह्म 'सदेव सोम्येदमग्र आसीदि'त्यादिवाक्येन प्रतिपादितम्। जगत्कारणं च**

---

तदा सुषुप्तिकाले। **पश्यति नेति**। यद्वै प्रसिद्धं पश्यन् चाक्षुषवृत्त्युपलक्षितचिद्रूपेण प्रकाशमान एव[1] तादृशचाक्षुषवृत्त्यभाववान्। उक्तप्रकाशमानत्वे हेतुमाह **न हीत्यादि**। उक्ताभावहेतुत्वे मानमाह—**न तु तदित्यादि**। ततश्चिद्रूपात् विभक्तं स्थूलरूपापत्तिप्रयुक्तभेदविशिष्टं तत् तदा न त्वस्ति। यदित्यव्ययम् येनेत्यर्थः। उत्तरवाक्यस्थो यच्छब्दो न तच्छब्दापेक्षः। स्वपिति—सुषुप्तः, सता—ब्रह्मणा, सम्पन्नः—एकीभूतः, मनआद्यभिमानप्रयुक्तभेदशून्य इति यावत्। प्राज्ञेन—ब्रह्मणा, सम्परिष्वक्तः—उक्तभेदशून्यः। एकत्वादुपाधिप्रयुक्तभेदस्य मिथ्यात्वेन तच्छून्यत्वात्॥ ३॥

चतुर्थपद्यमवतारयति—**ननु न ब्रह्मणेत्यादि**। प्रधानं साम्यावस्थापन्नं सत्त्वादिगुणत्रयम्। पृथिव्यादिकार्यं सुखदुःखमोहात्मकम्, पुरुषविशेषान्प्रति तथा भासमानत्वात्। तथा च सुखादि-परिणामयोग्यं गुणत्रयं पृथिव्याद्युपादानं कल्प्यते न तु ब्रह्म, तस्यापरिणामित्वात्। एकस्वभावस्य

नारायणी[2]

वादिविप्रतिपत्तिमुत्थापयति—**नन्विति**। सद्भावस्यैव—सत्त्वस्यैव। कर्तृजन्यत्वव्याप्यः कार्यत्वहेतुर्न ब्रह्मणोऽनुमापकः सम्भवति, तत्र सकर्तृकत्वमात्रसाधनेऽदृष्टद्वारककृतिमादाय जीवेन सोपादानकत्वसाधने तु प्रधानेन सिद्धसाधनादर्थान्तराच्च, तस्मात् श्रुतिरेव ब्रह्मणि मानमिति वाच्यं तदपि नेत्याह—**तथाहीति**। 'सदेव सोम्येदमग्र आसीदि'त्यादिवाक्येन प्रतिपादितं सच्छब्दवाच्यं जगत्कारणं न ब्रह्मेत्यन्वयः। आदिना 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इत्यादिवाक्यपरिग्रहः। सच्छब्दवाच्यं सामान्यतः जगत्कारणं जगदुपादानं सदेवेति। अग्रे गुणत्रयसाम्यावस्थायाम् इदं नाम-

---

१. प्रकाशमान एव न पश्यति चाक्षुषवृत्त्यवच्छिन्नचिद्रूपाभावात् न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतिशेषः।

२. अत्र तत्त्वं पदार्थशोधनप्रकरणे मतान्तराणि नारायणीये विशदं निरूपितानि। पाठकानामुपयोगायात्र योजितानि।

**प्रधानमचेतनमिति साङ्ख्याः। पशुपतिरेव जगत्कारणम्। स च चेतनोऽपि जीवाद्भिन्नस्स**

नारायणी

रूपाभ्यां व्याकृतं सदेवासीत् परिणामिनित्यप्रधानात्मनाऽऽसीदित्यर्थः। अत एव नीलोत्पलमित्यादिवत् इदं सदेवासीदिति सामानाधिकरण्यमप्युपपद्यते, जडयोरेव कार्यकारणयोरभेदसम्भवादिति **संक्षेपः**। **प्रधानं** साम्यावस्थोपलक्षितं गुणत्रयम्, अचेतनं जडमिति **साङ्ख्यमत**निष्कर्षः। एतच्च न सम्यक् श्रुतियुक्तिविरोधात्। तथा हि जडस्य स्वतः प्रवृत्त्ययोगात्प्रवर्तकश्चेतनोऽसर्वज्ञजीवाद्भिन्न आवश्यकः, **स च** 'भूयः सृष्ट्वा पतयस्त्वथेशः सर्वाधिपत्यं कुरुते महात्मे'तिश्रुतेः पशुपतिरेवेति **पाशुपतमत**मवतारयति—**पशुपतिरेवेति**।

यदा तमस्तत्र दिवा न रात्रिर्न सन्न चासन् शिव एव केवलः।
तत्सवितुर्वरेण्यम्,
प्रज्ञा च तस्मात्प्रसृता पुराणी।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः।
इत्यादिश्रुतेरिति भावः।

चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः॥

इत्यादिवाक्येन वैष्णवसाधितं जीवकोटिप्रवेशं वारयति—**स चेति**। पशूनां जीवानां पतिश्चेत्यर्थः। **जीवाद्भिन्न इति**। माण्डूक्यादौ 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी'त्यादिना जीवकोटिप्रवेशनिरासादिति भावः। न च तदन्यपरमेवेति वाच्यम्। 'शिवमद्वैतं चतुर्थं मन्यन्त' इत्युपसंहारविरोधात्। तत्र तत्र शिवपदस्य शोधितत्वंपदार्थपरत्वमतनिरासायाह—**तदिति**। जीवोपास्य इत्यर्थः। 'शिव एको ध्येय' इत्यादिश्रुत्या ध्येयत्वमात्रोक्तेः ध्यातृजीवाद्भिन्न एव शिवपदार्थ इति भावः।

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति विश्वयोनिं समस्तसाक्षिं तमसः परस्तात्॥
इत्यादि**कैवल्य**श्रुतेः

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति॥

इति **श्वेताश्वर**श्रुतेश्च। श्रुतिसमन्वयोऽपि तत्रैव। शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य [ समाप्ताथर्वशिखेति ] श्रुतिसमाप्तौ शिवपरत्वेनोपसंहारात्। शिवपदप्रतिपाद्यस्तु हररुद्रेशानादिपदबोध्य एव, **आनुशासनिके** 'शिव एव भगवानीश' इत्युपक्रम्य—

सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवम्।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरम्॥
युगान्ते चैव सम्प्राप्ते रुद्रं प्रभुरथासृजत्।

इत्यादिना मूर्त्तित्रयजनकत्वोक्तेः। तथा च वैष्णवोक्तवाक्यविषयो मूर्त्तित्रयगतो रुद्र एवेति न कोऽपि विरोधः इति **शैवमतनिष्कर्षः**। न चैतदन्यपरं वक्तुं शक्यम्।

**उपास्य एवेति पाशुपताः। भगवान्वासुदेव ईश्वरो जगत्कारणम्। तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवः। तस्मान्मनः प्रद्युम्नः। ततोऽहङ्कारोऽनिरुद्धः। तेन कार्यत्वाज्जीवस्य**

---

त्रिविधस्वभावकार्यजनकत्वानुपपत्तेरिति भावः। जीवः—सर्वजीवाभिमानी। मनः—सर्वमनोऽभिमानी। अहङ्कारः—सर्वाहङ्काराभिमानी। तेन ब्रह्मणो जीवादिरूपजगत्कारणत्वेन नात्यन्ताभेद इति। भेदाभेदौ तु कालभेदेन स्तः। तदाहुः—

आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः॥ इति॥

नारायणी

तस्य साधारणी मूर्त्तिः साम्बा चन्द्रार्द्धशेखरा।
तमेव सततं विष्णुब्रह्माद्याश्च सुरेश्वराः॥
ध्यायन्ति बन्धनाशाय जनानां हितकाम्यया।

इत्यादिपुराणवाक्यैरुमापतेः पशुपतेरेव शिवादिपदैर्व्युत्पादनात्। अत एव **सौरपुराणे**—

ब्रह्माण्डमेतत्सकलं ब्रह्मणः क्षेत्रमुच्यते।
सहस्रकोटयः सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वगाः॥
ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः।
आज्ञया देवदेवस्य महादेवस्य शूलिनः॥
ब्रह्माण्डानामसङ्ख्यानां ब्रह्मविष्णुहरात्मना।
उद्भवे प्रलये हेतुर्महादेव इति श्रुतिः॥

इति **शैवमतनिष्कर्षः**। तदेतत्**पाञ्चरात्रित्वेन** प्रसिद्धा वैष्णवा न सहन्ते। तथा हि—संहारकातिरिक्तशिवे मानाभावात्। संहारकश्च नारायणात्मजः। 'नारायण एवाग्र आसीदि'त्युपक्रम्य पुनरेव 'नारायणः सोन्यत्कामो मनसा ध्यायते तस्य ध्यानान्तरस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपो वैराग्यं ज्ञानमैश्वर्यमि'ति **महोपनिषदि**,

ब्राह्मे रात्रिक्षये प्राप्ते विष्णोरमिततेजसः।
प्रसादात्प्रादुरासीत्तत् पद्मं पद्मनिभेक्षण॥
ततो ब्रह्मा समभवत् तस्यैव च प्रसादतः।
अह्नःक्षये ललाटाच्च सुतो देवस्य वै तथा॥
क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः।
एतौ च विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ॥
तदादेशितपन्थानौ सृष्टिसंहारकारकौ।
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ॥

इति **महाभारते मोक्षधर्मे**ऽपि नारायणात्मजत्वोक्तेः। यश्च यदा तम इत्यादिवाक्यबोधितः स च नारायण एव, सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुत्या,

**तेन सह ब्रह्मणो वासुदेवस्यात्यन्तभेद इति पाञ्चरात्रिकाः। परिणामिनित्यः सर्वज्ञो**

परिणामिनित्यः—अन्यथान्यथा च परिणममानोऽपि अनुच्छिन्नस्वभावो जगतः ब्रह्मपरिणामत्वादेव सत्यत्वम्। कारणसमानसत्ताकं कार्यं तात्त्विकोऽन्यथाभावो वा परिणाम इति लक्षणात्।

नारायणी

वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥

इत्यादि**महाभारतवाक्या**दिना सर्वोत्कर्षवत्प्रतिपादकानां शब्दानां विष्णुपरत्वसमर्थनात्। तस्माच्छ्रुतिस्मृतिप्रतिपाद्यं जगत्कारणं विष्णुरेव। स च ब्रह्मनारायणहरिवासुदेवादिशब्दैः प्रतिपाद्य इति **वैष्णवमत**मवतारयति **भगवानिति।**

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना॥

इत्युक्तषड्गुणपरिपूर्णः 'यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चे'त्यादिश्रुतिप्रतिपादितः। वासुदेवः वसन्ति सर्वाणि भूतानि यस्मिन्निति वासुः, स्वसृज्यपरिपाल्यसंहार्यसर्वाधिष्ठानम्, दीव्यतीति देवः स्वप्रकाशरूपः स चासौ देवश्चेति वासुदेवः 'सर्वतः पश्यति सर्वतः शृणोती'त्युपक्रम्य 'यमप्येति भुवनमि'त्यादि**नृसिंहतापिन्या**द्युक्तः ईश्वरः सर्वभूतनियन्ता।

भीषास्माद्वातः पवते भीषोदेति सूर्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥

इतिश्रुतिप्रतिपादितः। जगत्कारणं जगदुपादानं निमित्तं च यस्मात् स्वमहिम्ना 'सर्वान्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि विरामयत्यजः संसृजति वासयती'तिश्रुतिभ्य इति भावः। जीवः सर्वजीवाभिमानी, मनः सर्वमनोभिमानी, अहङ्कारः सर्वाहङ्काराभिमानी। तेन–ब्रह्मणो जगज्जीवादिकारणत्वेन। **अत्यन्ताभेद इति**। भेदाभेदौ कालभेदेन स्त इति भावः। यदाहुः—

आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च।
मुक्तस्य तु न भेदोस्ति भेदहेतोरभावतः॥

इति **वैष्णवमत**निष्कर्षः। एतदपि **जैना** न सहन्ते। तथाहि शिवविष्ण्वादिशब्दानां शुद्धबुद्धसच्चिदानन्दैकमात्रपरत्वात्। तत्र पदार्थो द्विविधः, आत्माऽनात्मा च। तत्रानात्मा देहेन्द्रियादिः स्फुट एव। आत्मा तु त्रिविधः, परमात्मा अन्तरात्मा बहिरात्मा चेति। तत्र परमात्मा सच्चिदानन्दघनः शुद्धो बुद्धोऽबाह्यो ब्रह्मविष्णुशिवादिपदव्यपदेश्यो निर्गुणः। अन्तरात्मा तु परमानन्दानुभविता सर्वोप्याधिकारिकवर्गः आस्तिकनास्तिकग्रन्थेषु प्रसिद्धो व्यासः जिनादिः। बहिरात्मा तु देहाभिमानी कर्मवशगः शरीरपरिणामः सावयव इति। सोयमात्मभेदो जगच्च प्रलये ब्रह्मानन्यत्वं प्राप्य सर्गकाले ब्रह्मण एव प्रादुर्भवतीति ब्रह्मैव सर्वस्य परिणामीति **जैनमत**मवतारयति–**परिणामीति**। एतावन्मात्रमादाय मूले जैनत्रिदण्डिनोरैकमत्येन निर्देशः। समुद्रस्य तरङ्गादिवद्ब्रह्मण एव सर्वपरिणाम इति

**भिन्नाभिन्न इति जैनाः त्रिदण्डिनश्च। नास्ति सर्वज्ञत्वाद्युपेतं ब्रह्म। आम्नायस्य क्रियार्थपरत्वेन तत्र तात्पर्याभावात्। किन्तु वाग्धेन्वादिवत्सर्वज्ञत्वादिदृष्ट्या जगत्कारणं परमाण्वादि जीवो वा उपास्य इति मीमांसकाः। अस्ति नित्यज्ञानादिमानीश्वरः सर्वज्ञः**

---

**भिन्नाभिन्न इति**। जीवेन जगता च सह तस्य भेदाभेदौ। तथा चाभेदमादाय 'तत्त्वमसि, इदं सर्व यदयमात्मा' इत्यादिश्रुतयः भेदमादाय 'यो विज्ञाने तिष्ठन्, यः पृथिव्यां तिष्ठन्' इत्यादिश्रुतयः प्रवर्तन्ते। तत्त्वज्ञानकर्मभ्यां भेदस्य लिङ्गशरीरस्य च निवृत्तिर्मोक्ष इति भावः। **सर्वज्ञत्वादीति**। सर्वज्ञत्वजगत्कारणत्वादीत्यर्थः। आम्नायस्य—यतो वेत्यादिश्रुतेः। क्रियार्थपरत्वेन—उपासनाविधिपरत्वेन। तत्र—सर्वज्ञत्वादिमति। तात्पर्याभावात्—अवान्तरतात्पर्यस्याभावात्। वाग्धेन्वादिवत्—धेन्वादिदृष्ट्या वागादेरिव। जगत्कारणं—सर्वकार्यप्रयोजकम्। **अथ** परमाण्वादौ ज्ञानं तत्र सर्वविषयत्वमित्यारोपद्वये गौरवादाह—**जीवो वेति**। जगत्कारणमित्यनुषज्यते। अदृष्टजननद्वारा जगत्प्रयोजक इत्यर्थः। **उपास्य इति**। तथा च 'यतो वे'त्यादिश्रुतेः यतः परमाण्वदृष्टादेर्जीवाद्वा जगदुत्पत्त्यादिकं तत् सर्वज्ञत्वादिदृष्ट्या उपासीतेत्यर्थ इति भावः। **अस्तीत्यादि**। 'आद्यकार्यं स्वोपा-

नारायणी

द्वाभ्यामपि प्रतिपादनादिति दिक्। परिणामिनित्यः जगज्जीवात्मना परिणममानोऽपि अनुच्छिन्नस्वरूपः, जगतो ब्रह्मपरिणामत्वादेव सत्यत्वं सदुपादानकस्य सत्यत्वनियमात् कारणसमसत्ताकोऽन्यथाभावः परिणाम इति लक्षणाच्चेति भावः। **भिन्नाभिन्न इति**। कार्यरूपेण भिन्नः कारणरूपेणाऽभिन्न इत्यर्थः। तदुक्तम्—

कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥

इति। तथा च जीवेन जगता च सह भेदाभेदयोः सत्त्वाद् भेदवार्तापि तत्र तत्र परस्परमविरोधेनैव प्रमाणमिति तेषामभिप्रायः। परन्तु **रामानुजेन** मकारार्थस्य जीवकोटौ प्रवेशाङ्गीकाराज्जीवपरमात्मनोः पितापुत्रन्यायेनैवाभेदाङ्गीकाराच्च जैनादप्यपकर्षो ज्ञातव्यः। 'मकारेण परब्रह्मान्विच्छेदि'ति **नृसिंहतापिन्या**दिश्रुतिविरोधात्। अत एव मूले पश्चादुक्तिः। एतदपि **जैमिनीया** न सहन्ते तथाहि—परमात्मनि मानाभावात्, अनुमानस्य साङ्ख्याद्युक्तरीत्या निरासात्, उपनिषदां चार्थवादत्वेन स्वार्थपरत्वाभावात् तत्राप्रमाणत्वात्, अतो जगदुपादानं प्रधानं वा परमाणवो वा, निमित्तं च कर्मद्वारा जीव एवेत्यभिप्रायकं **जैमिनिमत**मवतारयति—**नास्तीति**। आदिपदाज्जगत्कारणत्वादिधर्मपरिग्रहः। आम्नायस्य—वेदस्य क्रियापरत्वेन—फलवद्विधेयार्थतात्पर्यकत्वेन। तत्र सिद्धार्थे ब्रह्मणि सर्वज्ञत्वादिनाऽभिमते, तात्पर्याभावात्—तत्प्रमाशक्तत्वाभावात्। वाग्धेन्वादिवत्—धेन्वादिदृष्ट्या वागादिरिव। आदिपदा'न्मनो ब्रह्मे'त्यादिपरिग्रहः। जगत्कारणं—जगदुपादानं निमित्तं वा। परमाण्वादीत्यादिपदात्प्रधानादृष्टादिपरिग्रहः। तत्र ज्ञानं सर्वविषयकत्वं चेत्यारोपद्वये गौरवादाह—**जीवो वेति**। जगत्कारणमित्यनुषज्यते। **उपास्य इति**। तथाच 'यतो वे'त्यादिश्रुतेर्यतः प्रधानात्परमाणोरदृष्टाज्जीवाद्वा जगदुत्पत्तिस्तत् 'यः सर्वज्ञ' इति श्रुत्युक्तसर्वज्ञत्वदृष्ट्योपासीतेति तन्मता

**पृथिव्यादिकार्यलिङ्गानुमितिः स च जीवाद्भिन्न एवेति तार्किकाः। क्षणिकस्सर्वज्ञ इति**

दानादिविषयकापरोक्षज्ञानेच्छाकृतिमज्जन्यम् कार्यत्वात् 'घटवत्' इत्यनुमानात् ज्ञानादेर्नित्यत्वे ज्ञानादिमत एकत्वनित्यत्वयोश्च लाघवमिति धीसहकृतादीश्वरसिद्धिरित्यर्थः। **जीवाद्भिन्न इति**। जीवस्य परमाण्वादिप्रत्यक्षासम्भवेन तादृशज्ञानादिमतो न जीवत्वमिति भावः। **क्षणिक इत्यादि**।

नारायणी

भिमतश्रुत्यर्थ इति **संक्षेपः**। तदेतत्**तार्किका** न सहन्ते। 'चैत्र पुत्रस्ते जातो मृत'इत्यादौ कार्यार्थबोधकपदं विनापि सिद्धार्थबोधदर्शनात्, वाक्यमात्रस्य कार्यान्वितार्थबोधकत्वानियमात्, उपक्रमादिषड्विधलिङ्गोपेतत्वादुपनिषदां ब्रह्मपरत्वसमर्थनाच्च। ब्रह्म च 'यः सर्वज्ञ' इत्यादिश्रुतेर्नित्यज्ञानादिमत् 'ज्ञाज्ञौ द्वा'वितिश्रुतेर्जीवाद्भिन्नमिति **तार्किकमत**मवतारयति—**अस्तीति**। नित्यज्ञानादिमान्—नित्यज्ञानेच्छाकृत्याश्रयः, 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुत्या ज्ञानेच्छाकृतीनां नित्यत्वलाभादिति भावः। ईश्वरः—सृष्टिस्थित्यन्तकर्ता। तदुपपादकं विशेषणमाह—**सर्वज्ञ इति**। सर्वविषयकविशेषज्ञानवानित्यर्थः। स इत्याश्रयप्रत्ययेन ज्ञानाश्रयत्वलाभान्न ज्ञानस्वरूप इति भावः। न च नित्यं विज्ञानमानन्दं ब्रह्मे'तिश्रुतिविरोध इति वाच्यम्। तत्र विजानातीति विज्ञानमिति कर्तरि ल्युडङ्गीकारेण नित्यज्ञानवत्त्वलाभात्। न च तावतापि ज्ञाने कथं नित्यत्वलाभस्तत्र धर्मिण एव नित्यपदान्वयादिति वाच्यम्। विशिष्टान्वयिनोऽसति बाधके विशेषणेऽप्यन्वयात्।

उपनिषदां ब्रह्मपरत्वं व्यवस्थापयिष्यन् तर्कतस्तत्सिद्धिमाह—**क्षित्यादीति**। क्षितिः आदिर्यस्य कर्मधृत्यादेस्तत् क्षित्यादि, तदेव कार्यरूपं लिङ्गं तेनानुमितः तज्ज्ञानजन्यानुमितिविषयः। तथाहि—'क्षितिः सकर्तृका कार्यत्वाद्घटवत्' 'द्व्यणुकजनकमाद्यं परमाणुकर्म प्रयत्नवज्जन्यं कर्मत्वात् सम्मतवत्' 'ब्रह्माण्डादिधृतिः प्रयत्नवज्जन्या धृतित्वाद्वियतिविहङ्गमधृतिवदि'त्याद्यनुमानैर्नित्यत्वैकत्वलाघवानुगृहीतैर्नित्यैकप्रयत्नवदीश्वरसिद्धिः। जन्यता च यत्र समवायेन कार्यं तत्र विषयतया ज्ञानादिरित्येवं प्रत्यासत्तिनियता घटादौ दृष्टा ग्राह्या। तेन नोक्तरीत्या जीवेन सिद्धसाधनमर्थान्तरं वा, जीवज्ञानकृत्यादिजन्यताया उक्तप्रत्यासत्त्यनालिङ्गितत्वात् समवायेन द्व्यणुकाधिकरणे विषयतया जीवज्ञानादेरभावादित्यन्यत्र विस्तरः। स च परमात्मा शिवहररुद्रेशानब्रह्महरिनारायणविष्णुशब्दादिबोध्यो हरिरुद्रादिमूर्त्यादिभिः क्रीडन्नपि वस्तुतोऽभिन्न एव 'त्रीनेव विभक्तांस्त्रीनेवाविभक्तानि'त्यादिश्रुतेः इति भावः। तर्ह्येवं जीवादप्यभेदः स्यात्तत्राह—**स चेति**। स च परमात्मा जीवात् असर्वज्ञचेतनात् भिन्न एव कालत्रयाबाधितभेदवानित्यर्थः। एवेत्यनेन तत्त्वज्ञानादूर्ध्वमप्यभेदो नास्तीति ज्ञापितम्। चातुर्मास्यमध्यपर्वणो- 'र्द्वयोः प्रणयन्ती'ति वाक्येन चोदकप्राप्तप्रणयनविलक्षणाग्निप्रणयनस्येव 'द्वा सुपर्णे'त्युपक्रम्य मध्ये 'अनश्नन्नन्यः' 'अन्यमीशमि'त्याद्यस्य 'निरञ्जनः परमं साम्यमुपैती'त्युपसंहारवाक्यैनैव प्रत्यक्षादिप्रमाणप्राप्तव्यावहारिकभेदविलक्षणत्रिकालाबाध्यापूर्वभेदस्य प्राप्तेरिति **तार्किकमतनिष्कर्षः**। तदेतद् **बौद्धा** न सहन्ते। तथाहि—वित्तिवेद्ययोः सहोपलम्भात् विज्ञानव्यतिरेकेण वस्तुनोऽभावात् न परमात्मा विज्ञानाश्रयो न वा जगत्कर्ता किन्तु सत्त्वेन प्रतिक्षणविनाशिनिरुपप्लवालयविज्ञानप्रवाह एव सकलप्रवृत्तिविज्ञानविषयकः परमात्मेति **योगाचारमत**मवतारयति—**क्षणिक इति**। द्वितीयक्षणविनाशीत्यर्थः। अर्थक्रियाऽकारित्वात् चरमशब्दवदिति भावः। सर्वज्ञः प्रवृत्तिविज्ञानरूपयावदर्थविषयकनिरु-

**सौगताः। क्लेशकर्मविपाकाशयैरपरामृष्टो नित्यज्ञानरूपः प्रधानांशसत्त्वगुणप्रतिफलिततया सर्वज्ञः संसारिविलक्षण एवेति पातञ्जलाः। अद्वितीयपरमानन्द एव ब्रह्म। तच्च**

जगत्सर्वं क्षणिकं दुःखं मिथ्येत्याकारकं रागद्वेषाद्यनुपरक्तं सर्वविषयकं यत् क्षणिकं ज्ञानं तत्प्रवाहरूपमित्यर्थः। जीवात्मकज्ञानप्रवाहहेतुज्ञानं क्षणिकमपि न तादृशमिति भावः। **क्लेशेत्यादि**। अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या। दृग्दर्शनशक्त्योरेकात्मतेवास्मिता आत्मबुद्ध्योर्भेदाग्रहोऽस्मितेत्यर्थः। कर्म—पुण्यपापे। विपाकः—कर्मफलम् जन्मायुर्भोगाः। आशया वासनाः। अपरामृष्टः—अव्यवह्रियमाणः। जीवस्तु निर्लेपत्वेन तैश्शून्योऽपि तदाश्रयबुद्ध्या विवेकेनागृह्यमाणत्वात् तद्विशिष्टरूपेण व्यवह्रियमाणः। ज्ञानरूपः—नित्यचिद्रूपः। प्रधानांशसत्त्वगुणप्रतिफलिततया—प्रधाने तदंशेषु तत्कार्येषु त्रिगुणात्मकेषु सत्त्वांशे

नारायणी

पप्लवविज्ञानप्रवाहरूप इत्यर्थः। सर्वज्ञ इत्याश्रयतया निर्देशस्तु 'इह वने तिलका' इतिवत्सन्तानसन्तानिनोर्भेदविवक्षयेति बोध्यम्। तथा च जीवो जगत्सर्वं दुःखरूपमित्यजानन्सोपप्लवो भवति सर्वज्ञस्तु तथा जानन् रागद्वेषादिना रहितो निरुपप्लव इति नित्यमुक्त इति **तन्मतनिष्कर्षः**। तदेतत्**पातञ्जला** न सहन्ते। तथाहि—विज्ञाननित्यत्वकल्पने गौरवान्मानाभावाच्च। अप्रयोजकत्वेन सत्त्वहेतोः क्षणिकत्वासाधकत्वात् सर्वज्ञस्यैव विज्ञानात्मत्वे च 'चैत्रमैत्रावि'त्यादिसमूहालम्बने चैत्रमैत्रादीनामैक्यापत्तेः। विज्ञानव्यतिरेकेण बाह्यवस्तुनोऽपि आवश्यकत्वाच्च। तस्मात्साक्षित्वरूपोपष्टम्भकत्वमात्रेण जगतः कर्ता क्लेशादिभिरसंसृष्टो नित्यविज्ञानस्वरूप एव परमात्मा 'विज्ञानमानन्दं ब्रह्म'ेति श्रुतेरिति **पातञ्जलमत**मवतारयति—**क्लेशेति**। क्लेशाः अविद्यास्मितारागद्वेषाभिनिवेशाः कर्म धर्माधर्मौ विपाकः फलं सुखदुःखादि, आशया वासना एतैः अपरामृष्टः कालत्रयेप्यसंसृष्टः, पुरुषविशेषः नित्येश्वरः नित्यज्ञानस्वरूपः कालत्रयाबाधितज्ञानस्वरूपः। कथं तर्हि सर्वज्ञत्वं तत्राह—**प्रधानेति**। प्रधानं चांशश्च प्रधानांशौ तयोः सत्त्वगुणः प्रधानांशसत्त्वगुणः, सर्वस्य त्रिगुणात्मकत्वात् अवयवभूतस्तत्र प्रतिफलिततया—प्रतिबिम्बिततया। तथा च प्रतिबिम्बद्वारकसम्बन्धमादाय तस्य सर्वज्ञत्वं जीवस्य तु प्रमाणवृत्तिसापेक्षप्रतिबिम्बद्वारकः सम्बन्ध इति न सार्वज्ञ्यमिति भावः। अत एव तस्माद् भेदमाह—**संसारीति**। जीवाद्भिन्न इत्यर्थः। येऽपि केचन व्यासादयः सर्वज्ञास्तेप्युपासनाबलादीश्वरा अतो जीवा एवेति नेश्वरेऽन्तर्भूता इति **पातञ्जलमत**निष्कर्षः।

तदेतदुपनिषत्प्रतिपाद्याद्वितीयात्मतत्त्वविरोधान्नातिरमणीयम्। तथाहि—जीवपरमात्मनोर्भेदे मानाभावात्। 'न च नाहमीश्वर' इत्यादिप्रत्यक्षं तत्र मानम्। 'अहं गौर' इत्यादिवद् भ्रमत्वात्। नापि जीवो ब्रह्मणो भिन्न असर्वज्ञत्वादित्याद्यनुमानम्, व्यावहारिकभेदेन सिद्धसाधनात्। उपमानं त्वप्रसक्तमेव। नापि 'द्वा सुपर्णे'तिश्रुतिः अपूर्वार्थत्वाभावात्। न च निरुक्तरीत्या तथा। तत्त्वमस्यादिवाक्यविरोधेन विलक्षणभेदपरत्वायोगात्। न च किं विनिगमकमिति वाच्यम्। निरवकाशत्वस्यैव विनिगमकत्वात्। नाप्यर्थापत्तिः। वास्तवभेदं विनाऽनुपपत्तेरभावादित्यन्यत्र **विस्तरः**। तस्माच्छुद्धपरमात्मैव ब्रह्म, तच्च स्वशक्तितारतम्यात् जीवेशादिव्यपदेशभाग्भवति न तत्र भेदगन्धोऽपीति **सकलमतमूर्द्धन्यमद्वैतमत**मवतारयति—**अद्वितीयेति**। अद्वितीयः—सजातीयविजातीयस्वगतभेदशून्यः 'एकमेवाद्वितीयमि'ति

**जीवस्य वास्तवं स्वरूपं मायया च सर्वज्ञत्वादिविशिष्टं जगत उपादानं निमित्तं चेति औपनिषदाः। एवं वादिविप्रतिपत्तिभिः सन्दिग्धे तत्पदार्थे औपनिषदपक्षस्य परिशेषेण तन्निर्णयायाह** भगवान्—

**न साङ्ख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा।**
**विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ ४ ॥**

**आदिशब्देनानुक्तानां संग्रहः। न तावदचेतनं जगदुपादानम्। 'तदैक्षत बहु स्यां प्रजायेये'ति ईक्षणपूर्वकसृष्टिश्रवणात्, 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति च जीवात्मत्वव्यपदेशात्' 'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवती'ति चैक-**

---

प्रतिबिम्बिततया। **व्याकरवाणीति चेति**। ब्रह्मण इति शेषः। **यस्मिन्विज्ञात इत्यादि**। यस्मिन् ज्ञाते सर्वं ज्ञातं भवति, तद्ब्रह्मेत्येव प्रतिज्ञानादित्यर्थः। सर्वेषां दृश्यानां ब्रह्मैव स्वरूपम्। तस्यैव हि

नारायणी

श्रुतेः। परमानन्द एव—नित्यानन्द एव, नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतेः। न च 'विजानाती'ति व्युत्पत्त्या विज्ञानमस्येति व्युत्पत्त्या वा विज्ञानमिति कर्तरि ल्युडङ्गीकारेण नित्यज्ञानवत्त्वलाभः एवमानन्दोऽस्यास्तीति मत्वर्थीयाच्प्रत्ययेनानन्दवत्त्वलाभश्च, अन्यथा नपुंसकलिङ्गानापत्तेरिति वाच्यम्। लिङ्गव्यत्ययस्य छान्दसत्वेनाप्युपपत्तेः। गुणगुणिभावसम्पादकसमवायादिसम्बन्धस्य प्रथमश्लोकव्याख्याने विस्तरेण निराकृतत्वाच्च। 'आनन्दो ब्रह्मेति व्यजानात्' 'केवलो निर्गुणश्च' चिद्रूप एवाऽविकारो ह्युपलब्धा नित्यः शुद्धो बुद्धः परः प्रत्यगेकरस' इत्यादिश्रुतिविरोधापत्तेः। **वास्तवमिति**। उपाधिपरित्यागेन प्राप्यं रूपं 'ब्रह्मैव सन्ब्रह्माप्येती'त्यादिश्रुतेः। **माययेति**। मायाकृतसर्वज्ञत्वादिविशिष्टं 'तदेतत्स्वप्नं मायामात्रमि'ति श्रुतेः। जगदुपादानं रजताद्यात्मना शुक्त्यादिवज्जगदात्मना विवर्तमानं 'यतो वा इमानि भूतानी'ति श्रुतेः। निमित्तं च तदनुकूलेक्षणादिमत्त्वेन। निमित्तकारणं च 'एतद्धीदं सर्वं साधयती'ति श्रुतेः। **औपनिषदाः**—उपनिषत्प्रमाणमात्रप्रधाना **वेदान्तिनः**। सन्दिग्धे—जगत्कारणं प्रधानं ब्रह्म वा? ब्रह्म निर्गुणं सगुणं वा? निर्गुणमपि भिन्नमभिन्नं वा? इत्यादिविशेषतः **सन्दिग्धे**, परिशेषेण—इतरमतनिरासेनौपनिषदपक्षस्य निर्दुष्टत्वव्यवस्थापनेन, तन्निर्णयाय—तत्पदार्थनिश्चयाय, श्लोकतस्तन्निरासमाह—**न तावदिति**। अचेतनं जडं **साङ्ख्यपातञ्जलाभ्यां** परिकल्पितं स्वतन्त्रं साम्यावस्थोपलक्षितं गुणत्रयात्मकं जगदुपादानं जगत्परिणामिकारणम्, तत्र हेतुमाह—**तदैक्षतेति**। तद्ब्रह्म ऐक्षत ईक्षणं कृतवत् बहु स्यां प्रजायेय प्रजार्थं नानाविधः स्यामितीक्षणपूर्वकसृष्टिश्रवणात्, ईक्षणकर्तृकर्मकसृष्टिश्रुतेः ईक्षणं 'कूलं पिपतिषती'त्यादाविव प्रकृते 'तत्तेज ऐक्षत' इत्यादाविव च गौणं भविष्यतीत्यत आह—**अनेनेति**। अहमितिधीगोचरेण जीवेनात्मना कर्तृभोक्तृस्वरूपात्मना प्रविश्य तत्राविर्भूय। **नामेति**। इदं नामेदं रूपमिति व्यक्तीकरोमि। जीवात्मत्वेति—जीवाभेदकथनात् कारणस्येति शेषः। तथा च न गौणमीक्षणं तत्कर्तुश्चेतनस्य व्यक्तत्वादिति भावः। ननु जीवेनात्मनेति तृतीया सहार्थिका। अथवाऽऽत्मशब्दो 'ममात्मा भद्रसेन' इतिवत्, यद्वा चेतनाचेतनवाची भविष्यति ज्योतिःशब्दस्य क्रतुज्वलनवाचित्ववत्तत्राह—**यस्मिन्निति**। यस्मिन्पदार्थे विशेषेण ज्ञाते

**विज्ञानेन सर्वविज्ञानप्रतिज्ञानात् प्रधानज्ञानेन च तदप्रकृतिकानां पुरुषाणां ज्ञातुमशक्यत्वात्, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'ति च तदभेदस्य नवकृत्व उपदेशात्, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इति च श्रुत्यन्तरादचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः, प्रधानमहदादेरप्रामाणिकत्वाच्च, न साङ्ख्यमतं साधु ।**

---

अतात्विकोऽन्यथाभावः प्रपञ्चः । अतः तस्य ज्ञानं सर्वस्य स्वरूपज्ञानमिति भावः । ननु प्रधानस्य प्रपञ्चप्रकृतित्वेन प्रपञ्चाभिन्नत्वात् प्रधानज्ञानं प्रपञ्चाभिन्नस्वरूपज्ञानं तत्राह—**प्रधानज्ञानेनेति । अशक्यत्वादिति ।** तथा च सर्वपदसङ्कोचापत्त्या नोक्तरूपः श्रुत्यर्थ इति भावः । **विचित्रेति ।** यद्यत् विचित्रकार्यं तच्चेतनकर्तृकम् यथा घटरथादिकम् । विचित्रत्वं प्रकृते सावयवत्वम् । वायुक्रियादेश्चेतनाकर्तृकत्वेन निश्चयात् तद्विशेषणम् । प्रधानमहदादेः–ईश्वरानधिष्ठितस्य साङ्ख्याभिमतप्रधानादेः । पुराणभारतादावुक्तं प्रधानादिकं त्वीश्वराधिष्ठितं मिथ्याभूतं श्रुत्यादिसिद्धत्वात् प्रामाणिकमेव । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, तदैक्षत बहुस्यां प्रजायेयेति, सोऽकामयते'त्यादिश्रुत्युक्तमायेक्षणकामनानामीश्वरीयाणां प्रधानमहदहङ्कारशब्दैः पुराणादावुक्तत्वात्, अपञ्चीकृतभूतानामेव तन्मात्रत्वेनोक्तत्वाच्च । महदादेरित्यादिपदेन पृथिव्यादीनां सुखाद्यात्मकत्वेन हेतुना सुखादिपरिणामयोग्यस्य

नारायणी

**सर्वमिदं** परिदृश्यमानं तन्मात्रसत्ताकमिति विशेषतो ज्ञातं भवति तत्कारणमिति कारणविज्ञानेन सर्वविषयकज्ञानादित्यर्थः । स्यात्कारणविज्ञानेन कार्यस्य विज्ञानं प्रतिज्ञातं ब्रह्मसिद्धिस्तु कुतस्तत्राह–**प्रधानेति ।** तदप्रकृतिकानां—प्रधानाकारणकानां चेतनात्मकप्रतिबिम्बानामचेतनकार्यत्वायोगादिति भावः ।

**अशक्यत्वादिति ।** तथा च प्रधानकारणतापक्षे 'सर्वमिदं विज्ञातं भवती'ति श्रुतिविरोधप्रसङ्ग इति भावः । सर्वविज्ञानप्रतिज्ञाया ब्रह्मपरतां द्रढयिष्यन्नाह—**ऐतदात्म्यमिति ।** ऐतदात्म्यस्वरूपं कारणात्मकमिदं सर्वं तत्कारणं सत्यं त्रिकालाबाध्यं स कारणपदार्थ एव आत्मा जगत्फलभोक्ता । स एव यदि भोक्ता तर्हि जीवस्य का गतिस्तत्राह—**तत्त्वमसीति ।** त्वं जीवस्तद्ब्रह्म कारणात्मना प्रतिपादितमित्यर्थः । असिपदं त्वत्र सामानाधिकरण्यमर्यादया प्राप्तस्य दार्ढ्यायेति न व्यर्थमिति दिक् । न केवलं **छान्दोग्य**श्रुतावेव ब्रह्म जगत्कारणत्वेन प्रतिपाद्यते किन्तु **तैत्तिरीये**ऽपीत्याह—**तस्माद्वेति ।** **वै** निश्चयेन; तस्मात्परमात्मनः एतस्माज्जीवात् आत्मनः अनात्मनामधिष्ठानभूतात् जीवपरमात्मनोरभेदरूपाखण्डार्थात्सच्चिदानन्दादिति यावत्, आकाशः शब्दगुणः सम्भूतः उत्पन्नः, वायुः शब्दस्पर्शगुणः, तेजः शब्दस्पर्शरूपगुणम्, आपः शब्दस्पर्शरूपरसवत्त्यः पृथिवी शब्दस्पर्शरूपरसगन्धवती । श्रुतिविरोधं प्रदर्श्य तर्कविरोधमाह—**अचेतनस्येति ।** जडस्य प्रधानस्येत्यर्थः । **विचित्रेति ।** गिरिनदीसमुद्रादिसन्निवेशकरणस्यानुपपत्तेः अचेतनस्य चेतनाधिष्ठानं विना स्वतः प्रवृत्त्ययोगादिति भावः । मास्तु **निरीश्वरसाङ्ख्यं सेश्वरसाङ्ख्यं** तु स्यादेव प्रवर्तकचेतनाङ्गीकारादित्यत आह—**प्रधानेति ।** उभयसाङ्ख्योक्तप्रधानमहदादेरित्यर्थः । अप्रामाणिकत्वात्–प्रमाणागोचरत्वात् । न साङ्ख्यमतं साधु सर्वस्यापि कार्यस्य सुखदुःखात्मकतया प्रतीतेः, सुखादीनां च सत्त्वाद्यात्मकत्वात् सत्त्वादिगुणत्रयकार्यमेव

**एवं पाशुपतमतं पाञ्चरात्रिकं जैनं त्रैदण्डं च मतं श्रुतियुक्तिबाधितत्वादयुक्तम्। न च विधिशेषत्वाच्छ्रुतिर्न ब्रह्म प्रतिपादयतीति मीमांसकमतं युक्तम्। असिद्धत्वाद्विधिशेषत्वस्य। न चार्थवादाधिकरणन्यायाद्विधिशेषत्वम्। वैषम्यात्। स्वतःप्रयोजनवदर्थाप्रतिपादकानां 'वायुर्वै क्षेपिष्ठा देवते'त्येवमादीनां स्वाध्यायविधिग्रहणान्यथानुपपत्त्या प्रयोजनवदर्थपरत्वे**

---

त्रिगुणात्मककारणस्यानुमानमप्यप्रामाणिकम्, हेत्वसिद्धेः। आन्तरं हि सुखादिकं न पृथिव्यादिरूपम्। **एवमित्यादि**। पाशुपतमतं तत्त्वमस्यादिश्रुत्या औपाधिकभेदेन व्यवहारभेदसिद्धेः वास्तवभेदो व्यर्थ इत्यादियुक्त्या च बाधितम्। पाञ्चरात्रमतेऽपि जीवानां जन्मादिकं 'अजो नित्य' इत्यादिश्रुत्या कृतहानाकृताभ्यागमप्रसङ्गादियुक्त्या च बाधितम्। जैनत्रिदण्डिनोर्मतं 'कूटस्थमचलं' 'एतद्वै तदक्षर'-मित्यादिश्रुत्या परिणामित्वेन जन्मनाशाद्यापत्तियुक्त्या च बाधितमित्यर्थः। साङ्ख्यादिमतेषु श्रुत्यादिबाधितत्वोक्त्या मीमांसकमतेऽपि तदुक्तमेव, तथापि तत्राधिकांशमाशङ्क्य निषेधति—**न चेत्यादि**। तत्त्वमस्यादिश्रुतिः विहितक्रियाकर्तुस्स्तुतिपरत्वात् न ब्रह्मजीवैक्यपरेत्यर्थः। असिद्धत्वात्–तत्त्वमस्यादिश्रुत्यवृत्तित्वात्। विधिशेषत्वस्य–विहितक्रियाकर्तृस्तुतिपरत्वस्य। स्वतः–विधिवाक्यैकवाक्यतां विना। **प्रयोजनवदर्थेति**। पुरुषाभिलषितस्वर्गादिसंसृष्टार्थेत्यर्थः। **स्वाध्यायविधिग्रहणेति**।

नारायणी

सर्वमिति मतं न साधीयः। पृथिव्यादीनामान्तरसुखाद्यात्मकत्वाऽयोगात्कल्पनाबीजाभावादिति **भावः**। 'अजामेकामि'त्यादिश्रुतयस्तु परमात्माधिष्ठितानिर्वचनीयमायापरा इति न कोऽपि विरोध इति **दिक्**।

**एवमित्यादि**। **पाशुपतमतं** तत्त्वमस्यादिश्रुत्या औपाधिकभेदेनोपास्योपासकभावसिद्धेर्वास्तवभेदकल्पनं व्यर्थमिति युक्त्या च बाधितम्। **पञ्चरात्रमते**ऽपि जीवस्य जन्यत्वोक्तिः 'अजो नित्य' इत्यादिश्रुत्या कृतहान्यकृताभ्यागमप्रसङ्गयुक्त्या च बाधिता। **जैनत्रिदण्डिनोर्मत**मपि 'कूटस्थमचलं ध्रुवम्' 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमि'त्यादिश्रुत्या, परिणामित्वे कृत्स्नतदेकदेशविकल्पादिप्रसङ्गयुक्त्या च बाधितमतोऽसम्यगेवेत्यर्थः। **साङ्ख्यादिमतेषु** श्रुतियुक्तिबाधितत्वोक्त्या **मीमांसकमते**ऽपि तदुक्तमेव तथापि तत्रान्यदाशङ्क्य निषेधति—**न चेति**। विधिशेषत्वात्—विहितक्रियाकर्तृस्तुतिपरत्वात्, श्रुतिः—तत्त्वमस्यादिश्रुतिः, न ब्रह्म प्रतिपादयति—न ब्रह्मगोचरप्रमां जनयति। तत्र तात्पर्याभावादिति भावः। असिद्धत्वात्–तत्त्वमस्यादिव्यावृत्तत्वात्, विधिशेषत्वस्य–विहितक्रियाकर्तृस्तुतिपरत्वस्य। नन्वनुष्ठानोपयोग्यर्थावबोधभाव्यक 'स्वाध्यायोऽध्येतव्य' इति स्वाध्यायविधिविषयत्वान्यथानुपपत्त्या 'तत्त्वमसी'त्यादिवाक्यानां 'वायुर्वै क्षेपिष्ठे'त्याद्यर्थवादानामिव विध्यपेक्षितप्राशस्त्यपरत्वेनैव प्रामाण्यमित्यभिप्राय**कार्थवादाधिकरण**न्यायेन विधिशेषत्वमाशङ्क्य निषेधति—**न चेति**। अर्थवादाधिकरणन्यायात्–'यजेत स्वर्गकाम' इत्यादिविधिर्विहितार्थे पुरुषं प्रवर्तयितुं प्राशस्त्यज्ञानमपेक्षते प्राशस्त्यज्ञानं च सिद्धार्थबोधकार्थवादादिभ्य इति विधेयार्थवादसाकाङ्क्षा अर्थवादा अपि सिद्धमर्थं वदन्तः स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिसाकाङ्क्षा इति विध्यर्थवादयोर्विध्यैकवाक्यत्वमित्यर्थवादाधिकरणन्यायात्। वैषम्यमुपपादयति—**स्वत इति**। विध्येकवाक्यतां विना। **प्रयोजनेति**—पुरुषाभिलषितस्वर्गादिसंसृष्टार्थाप्रतिपादकानाम्। **स्वाध्याय इति**। स्वाध्यायोऽध्येतव्य इति प्रयोजनवदर्थज्ञानमुद्दिश्य स्वाध्यायाध्ययनस्य विधायकं यद्वाक्यं तद्विषयत्वस्य प्रयोजनवदर्थपरत्वं विनानुपपत्तेरित्यर्थः।

**कल्पनीये शब्दभावनेतिकर्तव्यतांशसाकाङ्क्षस्य विधेः सम्प्रदानभूतदेवतादिस्तुतिद्वारेण तदंशपूरकत्वान्नष्टाश्वदग्धरथन्यायेन तदुभयैकवाक्यतेत्यर्थवादाधिकरणे निर्णीतम् ।**

---

'स्वाध्यायोऽध्येतव्य' इति प्रयोजनवदर्थज्ञानमुद्दिश्य स्ववेदाध्ययनस्य विधायकं यद्वाक्यं तद्विषयत्वेत्यर्थः । **शब्दभावनेतिकर्तव्यतांशसाकाङ्क्षस्येति** । अंशत्रयविशिष्टार्थभावनारूपसाध्यस्य, विधिपदे शब्दभावनावाचकत्वधीरूपस्य साधनस्य च, लब्धत्वेन साध्यसाधननिराकाङ्क्षशब्दभावनाया इतिकर्तव्यतासाकाङ्क्षत्वात् तद्बोधकत्वेन तत्साकाङ्क्षस्येत्यर्थः । विधेः—विधिवाक्यस्य । विहितार्थे पुरुषं प्रवर्तयन्ती प्रवर्तनारूपा शब्दभावना विहितार्थे पुरुषस्य प्राशस्त्यधीरूपां स्वस्येतिकर्तव्यतां आकाङ्क्षत इति भावः । **सम्प्रदानभूतदेवतास्तुतिद्वारेणेति** । त्यागकालोच्चार्यमाणचतुर्थ्यन्तपदार्थस्य प्राशस्त्यधीजननद्वारेत्यर्थः । तदंशपूरकत्वात् शब्दभावनायामुक्तधीरूपेतिकर्तव्यताया अन्वयबोधकत्वात् । अर्थवादानां प्रयोजनवदर्थकत्वस्य आवश्यकत्वात् विधिवाक्यापेक्षितप्राशस्त्ये लक्षणास्वीकारात् प्रयोजनवद्देवताप्राशस्त्यादिबोधनद्वारा तत्र प्राशस्त्यादिबोधकत्वं प्रशस्तदेवताकत्वात् प्रशस्तं कर्मेति बोधोत्पत्त्या तादृशबोधस्य शाब्दभावनायामन्वयबोधकत्वमिति समुदितोऽर्थः ।

## शब्दभावनायामितिकर्तव्यतात्वेन प्राशस्त्यज्ञानान्वये विचारः

ननु शाब्दभावनायामितिकर्तव्यतात्वेन प्राशस्त्यज्ञानस्यान्वयबोध इति यदुक्तं तन्न युक्तम् । प्रवृत्तिभावनात्वेन रूपेणाख्यातादुपस्थापितशब्दभावना नेतिकर्तव्यतामाकाङ्क्षते । कर्तव्यत्वेनावगतस्य व्यापारस्यैव तथात्वात् । अत एव पचतीत्यादौ नार्थभावनापीतिकर्तव्यतापेक्षा । [1]शाब्दभावनानन्वितत्त्वेन तस्याः कर्तव्यत्वाज्ञानात् । अत एव अध्ययनविधिकल्प्ये लिङ्पुरुषं प्रवर्तयेदिति विधौ लिङ्निष्ठव्यापारस्य शाब्दभावनारूपस्य शाब्दभावनान्तरविषयत्वेन ज्ञेयत्वात् कर्तव्यत्वेन ज्ञानादितिकर्तव्यतात्वेन तत्र प्राशस्त्यज्ञानस्यान्वयः । तत्रापि न साधनत्वेन अर्थवादानां विनियोगः । किञ्च 'स्वर्गकामो यजेते'त्यादौ प्राशस्त्यज्ञानस्य, लिङादिपदशक्तिज्ञानस्य च पदानुपस्थितस्य कथं शाब्दभावनायामितिकर्तव्यतात्वेन करणत्वेन चान्वयः ? इति चेत् ।

**अत्रोच्यते** । प्रवृत्तिभावनात्वेनेत्यादिकं यदुक्तं तत्किं **वार्तिका**दिमूलग्रन्थमूलकं युक्तिमात्रमूलकं वा ? नान्त्यः भावनात्वेन रूपेणाख्यातोपस्थाप्यत्वस्य शाब्दभावनाद्वयेऽपि तुल्यत्वेनांशत्रयाकाङ्क्षाया युक्तिसिद्धत्वात् । न च प्रवर्तनात्वेनोपस्थितभावनायाः प्रवृत्तिभवनानुकूलव्यापारत्वरूपप्रवर्तनात्वस्य ज्ञातत्वेन न भाव्याकाङ्क्षेति वाच्यम् । प्रवृत्तिमात्रस्य भाव्यत्वेन निश्चितेपि पुरुषार्थविशेषरूपभाव्यादिविशेषितरूपेण प्रवृत्तेर्भाव्यतया आकाङ्क्षासम्भवात् किमर्थं प्रवर्तयतीति । तथा च भावनाया भवितरीव करणेऽप्याकाङ्क्षायाः स्वारसिकत्वात्, करणविशेषस्य उपकारकविशेषसाकाङ्क्षत्वात्, इतिकर्तव्यताकाङ्क्षयाः पचतीत्यादावपि आवश्यकत्वात्, तस्याः कर्तव्यत्वेन धीर्न प्रयोजिका । अत एव भावार्थाधिकरणे—

अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।

---

१. शाब्दभावनान्वितत्वेन तस्याः कर्तव्यत्वाज्ञानादिति पा० ।

इत्यादि**वार्तिक**ग्रन्थे 'घटो भविष्यतीत्यादावपि भावना प्रतीयते। यस्याश्चांशत्रयं भवनेनैव प्रपूर्यते। घटस्य भवनं भाव्यम्, कपालस्य [1]तत्करणत्वम्, कपालावयवस्य तदितिकर्तव्यतात्व'-मित्युक्तम्। **न्यायसुधायां** च 'अंशत्रयं विना भावनाया नैराकाङ्क्षयाभावात् भवनेनैव तत्पूर्यत' इत्युक्तम्। नाद्यः। **अर्थवादाधिकरणीयवार्तिकादौ** भवत्प्रतिकूलस्यैवोक्तत्वात्। तथा हि—'तेन सर्वेषां मन्त्रादीनां भावनान्तर्गतिरुपपन्ना। **यत्तु** अर्थवादानां भावनांशत्रयानन्तःपातित्वात् अग्रहण-मित्युक्तम्। **अत्रोच्यते**। सत्यमनन्तर्गतं न गृह्यते। अस्ति त्वन्तर्गतिः। कथम्? लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते। तत्रार्थात्मिकयार्थवादा न गृह्यन्ते, शब्दात्मिकया तु ग्रहीष्यन्ते। सा ह्येवं प्रवर्तते 'लिङ् पुरुषं प्रवर्तयेदि'ति। केनेत्यपेक्षायां प्रेरणाज्ञानेन, प्रेरणायां लिङ्पदशक्तिज्ञानेन वा। कथ-मिति? प्राशस्त्यज्ञानोपकृतेन तेनैव। प्राशस्त्यज्ञाने साधनापेक्षायां अर्थवादेनेतिधीः। कुत एतत्? बुद्धिपूर्वकारिणो हि यावत् प्रशस्तोऽयमिति नावबुध्यन्ते, तावत् न प्रवर्तन्त इति'। **न्यायसुधानु-सारिणो** तत्र व्याख्या। भावनान्तर्गतिः—भावनापेक्षितांशत्रयसमर्पकत्वम्। अनन्तःपातित्वात्—अनन्तःपातिप्राशस्त्यबोधकत्वात्। अग्रहणं—विधिवाक्यैकवाक्यत्वाभावः। अनन्तर्गतं–भावनांश-त्रयानन्तर्गतबोधकम्। न गृह्यते–न विधिवाक्यैकवाक्यतापन्नम्। अन्तर्गतिः–अर्थवादानां भावनांश-त्रयान्तर्गतबोधकत्वम्। लिङादीति–लिङ्लोडादीत्यर्थः।

तत्र–लिङादियुक्तसर्ववाक्यप्रतीयमानभावनयोर्मध्ये। अर्थात्मिकया–पुरुषनिष्ठभावनासामान्येन। शब्दात्मिकया लिङादिनिष्ठभावनासामान्येन। ग्रहीष्यन्ते–स्वांशबोधकतया अपेक्षिष्यते। अर्थयते कामयते फलमित्यर्थः पुरुषः, तदात्मिका भावना। **भट्टमते** धर्मधर्मिणोः समवायास्वीकारेण तादात्म्य-स्वीकारात्। एवं शब्दात्मिका लिङ्शब्दधर्मत्वात्। अर्थवादानां तादृशापेक्षणीयत्वे [2]अध्ययनविधि-कल्प्यविधिना शब्दभावनांशप्राशस्त्यज्ञाने साधनतया विनियुक्तत्वे हेतुमाह—**सा हीत्यादि**। सा–शब्दभावनामात्रम्। हि—यस्मादेवं प्रवर्तते—वक्ष्यमाणरीत्या अर्थवादसाधितप्राशस्त्यज्ञानरूपेति-कर्तव्यताविशिष्टरूपेण प्रेरणाविषयत्वेन कर्तव्यतया अध्ययनविधिकल्प्यविधिना ज्ञायते। **कुत एतदिति**। शब्दभावनायामितिकर्तव्यताकाङ्क्षा तद्विषयत्वेन। करणेतिकर्तव्यताविशिष्टार्थभावनयैव भावनाज्ञानादेव प्रवृत्तसिद्धेः। अथ भावनान्तरदृष्टान्तेन तस्या अपि सा तथापि प्रेरणाज्ञानं करणं प्रेरणाशक्तिज्ञानमितिकर्तव्यताऽस्त्विति। **तावत् न प्रवर्तन्त इति**। तथाचोक्तविधिना कर्तव्यत्वेन ज्ञायमानासु करणेतिकर्तव्यताविशिष्टसर्वशब्दभावनासु करणांशे साधनाकाङ्क्षायां लिङादिपदस्य, इति-कर्तव्यतांशे साधनाकाङ्क्षायामर्थवादमात्रस्य विनियोगात् सर्वेषु विधिवाक्येषु सर्वशब्दभावनान्वित-प्राशस्त्यज्ञानम् अर्थवादेन कर्तव्यमिति भावः। एवं च फलस्याविधेयत्वेन साधनेतिकर्तव्यता-विशिष्टार्थभावनायामेव विध्यन्वयात्, अनुष्ठेयत्वेन प्राशस्त्यज्ञानापेक्षणात् तस्यामेव अर्थवादेन प्रथमं प्राशस्त्यान्वयधीः ततः पदानुपस्थितायास्तस्या वाक्यार्थबोधे भानासम्भवादर्थवादस्यैव ज्ञाने लक्षणास्वीकारात् प्राशस्त्यान्वितायाः तादृशभावनाया अर्थवादार्थज्ञाने विषयितासम्बन्धेनान्वयात्

---

१. कपालस्य तत्–कपालस्य भवनं करणत्वम्। घटो भविष्यतीत्यत्र भावनायाः साध्यसाधनेतिकर्तव्यता-रूपमंशत्रयं घटादिभवनेन प्रपूर्यते। घटभवनेन साध्यम्, कपालभवनेन साधनम्, कपालिकाभवनेनेति-कर्तव्यता च प्रपूर्यत इति भावः।

२. अध्ययनविधिगृहीतत्वात् अर्थवादानां तेषु प्रयोजनवदर्थज्ञानसाधनत्वेन विधेयत्वमावश्यकम्।

तादृशभावनाविशेष्यकप्राशस्त्यप्रकारकज्ञानस्य लाभः। 'नीलस्य वस्त्रविशिष्टचैत्रस्य ज्ञानमि'त्यादौ वस्त्रविशिष्टचैत्रविशेष्यकनीलप्रकारकज्ञानलाभवत्ततस्तस्य ज्ञानस्येतिकर्तव्यतात्वेन प्रेरणायामन्वयः। एवमर्थवादस्य लिङादेर्वा लाक्षणिकार्थज्ञाने लिङर्थप्रेरणाया अन्वयात् प्रेरणाज्ञानस्य करणत्वेन तस्यामन्वयः। प्रेरणाशक्तत्वज्ञानस्य करणत्वपक्षे तु प्रेरणायास्स्वशक्तिविषयकत्वसम्बन्धेन ज्ञानेऽन्वयः। अन्यथा शक्त्यंशे लक्षणापत्तेः। **गीताटिप्पण्यां** तु पदानुपस्थितस्यापि ज्ञानादेर्वाक्यार्थस्य भानमध्ययनविधिगृहीततात्पर्यानुरोधात्। उक्तं हि **वार्तिके उद्भिदधिकरणे**—'पदानुपस्थितस्यापि नामधेयस्यान्वयधीरनुपस्थितविशेषणा विशिष्टधीः न जायते नत्वनभिहितविशेषणेति'।

ननु प्राशस्त्यज्ञानस्य नेतिकर्तव्यतात्वेन यजेतेत्यादौ प्रेरणास्वन्वयः किन्तु जनकत्वेन, अर्थभावनायां तस्य जनकत्वेन तद्विशिष्टप्रेरणायां जनकत्वसम्भवात्। गुणवादस्त्विति **सूत्रस्थवार्तिके** 'आलभेत प्रशस्तत्वादि'त्यन्वयधीप्रकारस्य दर्शितत्वादिति चेन्न। तत्र हि **वार्तिके** पञ्चम्या न जनकत्वमर्थः। 'सत्यमनन्तर्गतं न गृह्यते, अस्ति त्वन्तर्गति'रित्याद्युक्त**वार्तिके** भावनांशप्रतिपादकत्वेनैवार्थवादानां प्रामाण्योक्तेः विध्युत्खातवाददूषणवार्तिकादौ प्रशस्तत्वादित्यस्य शब्दभावनेतिकर्तव्यतापरत्वस्य दर्शितत्वात्। कुत एतदित्युक्तवार्तिकव्याख्याने, **हेत्वधिकरणीये** 'याप्यर्थवादाकाङ्क्षे'-त्यादिवार्तिकव्याख्याने च **न्यायसुधाया**मितिकर्तव्यता[1]त्वेनान्वयस्य स्पष्टमुक्तत्वाच्च। किन्तु प्राशस्त्यज्ञानज्ञाप्यत्वमेव प्रेरणानिष्ठम्। तथा च प्रेरणाज्ञानस्य प्राशस्त्यज्ञानोपकार्यत्वलाभात् प्रेरणां प्रति करणोपकारकत्वरूपमितिकर्तव्यतात्वं लब्धमिति सिद्धं नः समीहितम्। न च व्याप्यतया ज्ञापकत्वमेव पञ्चम्यर्थः, प्राशस्त्यं च व्याप्यतया न ज्ञापकम्, न वा तथा ज्ञापकतया बोधेन समीहितसिद्धिरिति वाच्यम्। प्रेरणाज्ञानं प्रत्युपकारकत्वरूपं प्रेरणेतिकर्तव्यतात्वं बोद्धव्यमिति प्रकृते समीहितम्। तदुपकारकत्वं च तत्फलप्रवृत्त्युत्पादकत्वम्। तथा चैकस्मिन् प्रवृत्तिरूपे फले प्रेरणाज्ञानप्राशस्त्यज्ञानयोः हेतुत्वात्, स्वज्ञानजन्यत्वरूपस्वप्रयोज्यत्वसम्बन्धेन प्रवृत्तौ तयोस्सत्त्वात्, प्रवृत्तिनिष्ठेन तादृशसम्बन्धेन व्याप्यव्यापकभावस्य प्राशस्त्यप्रेरणयोस्सम्भवात् प्रेरणां प्रति तादृशव्याप्यतया ज्ञापकत्वस्येतिकर्तव्यतात्वपर्यवसितत्वात्, तत्प्रतिपादनमस्मत्समीहितम्।

किञ्च 'अस्माच्छब्दादयमर्थो न तु मानान्तरादि'त्यादिप्रयोगे प्रमाणविधया ज्ञापकत्वस्यापि पञ्चम्या बोधनात् व्याप्यविधयैव ज्ञापकत्वं तदर्थ इति न नियमः। तथा प्रेरणां प्रति तज्ज्ञानसहकारिज्ञानविषयत्वरूपज्ञापकत्वमपि प्राशस्त्यनिष्ठं पञ्चम्यर्थः। तस्माद्विधिवाक्यमात्रे प्राशस्त्यज्ञानस्य प्रेरणायामितिकर्तव्यतात्वेनान्वय इति **वार्तिका**दिमूलसिद्धं भवत्येव। **भवदेवोपाध्याया**दिप्राचीनग्रन्थेषु **कौस्तुभादि**नवीनग्रन्थेषु चार्थवादाधिकरणे तथैवोक्तम्।

**भावनामुख्यविशेष्यकबोधविचारः**

ननु शब्दभावना मुख्यविशेष्यतया विधिवाक्यार्थबोधे भाति, अर्थभावना वा ? आद्ये—

---

१. कर्तव्यतात्वेन प्राशस्त्यज्ञानान्वयस्य।

'भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता ॥

इति **तद्भूताधिकरणीयवार्तिक**विरोधः। तत्र हि आख्यातसामान्यार्थभूताया नानागुणजात्यादिकारकविशिष्टाया वाक्यजन्यधीमुख्यविशेष्यत्वरूपवाक्यार्थत्वमुक्तम्। न तु शब्दभावना आख्यातसामान्यार्थः। न वा जात्यादिकारकविशिष्टा। नान्त्यः। अर्थभावनादिकारकेषु शब्दभावनाया विशेष्यत्वस्यैवोचितत्वादिति चेत्।

**अत्रोच्यते**। आद्य एव पक्षो युज्यते। न चोक्तवार्तिकविरोधः। अर्थभावनायाः शब्दभावनां प्रति कर्मत्वेन विशेषणत्वेऽपि स्वकारकाणि प्रति विशेष्यत्वस्य वार्तिकोक्तस्यानपायात्। अत एव 'प्रधानभावनायामङ्गभावनानामितिकर्तव्यतात्वेनान्वय' इति **तन्त्ररत्ने** एकादशे उक्तम्। अत एव 'पश्य मृगो धावती'त्यादौ मृगो धावतीति वाक्यार्थस्य दर्शनकर्मतया विशेषणत्वमिति **महाभाष्ये** उक्तम्। **तार्किकादिभिरपि** तादृशविशेषणत्वं स्वीक्रियत एव। एतावांस्तु विशेषः। **यद्वैयाकरण**मते धावनादिधात्वर्थ एव मृगादिविशेषित उक्तवाक्यार्थः। **तार्किकादि**मते धावनभावनाविशिष्टप्रथमान्तनामार्थो मृगादिरेव। **मीमांसकमते** तु धावनकरणकत्वादिविशिष्टभावनैव, दर्शनकरणकभावनायामेव तस्यां कर्मत्वेन विशेषणत्वमिति। **यत्तु** प्रेरणायां करणेतिकर्तव्यताधीनं सर्वानुभवसिद्धेति, **तन्न**। प्रवर्तकंज्ञानं विधिवाक्यजन्यमिति हि सर्ववादिसिद्धम्। तच्च ज्ञानं मीमांसकमते यागादेः आप्तप्रेरणाविषयत्वम् इष्टसाधनतां विना अनुपपन्नमित्येवंरीत्या इष्टसाधनताक्षेपद्वारा प्रवर्तकं प्रेरणाविषयकम्। लोके राजगुर्वाज्ञादिप्रेरणाज्ञानस्य तादृशप्रवर्तकतया क्लृप्तत्वात्। इष्टसाधनतैव विध्यर्थः न तु प्रेरणेतिवादिनां तत्र सम्मतिस्तु नोपयुज्यते। न हि सर्ववादिसम्मतो विध्यर्थोऽस्त्येकः। तथा च प्रवृत्तिभावनारूपप्रेरणायाः भावनास्वाभाव्येन अंशत्रयान्वयित्वं तन्मते अनुभवारूढमेव। भावनात्वेनोपस्थिते अंशत्रयान्वयित्वमिति हि वार्तिकादौ प्रदर्शितम्। तस्मात्साधूक्तं शब्दभावना इतिकर्तव्यतांशसाकाङ्क्षेति।

## प्राशस्त्यस्वरूपनिरूपणम्

ननु किमिदं प्राशस्त्यम्? सगुणत्वं चेत्, तस्य एकरूपस्य दुर्वचत्वेन अर्थवादानां नानार्थत्वापत्तेः, तज्ज्ञानस्य प्रवृत्तावनुपयोगाच्चेति चेन्न। बलवदनिष्टाजनकत्वस्यैव प्राशस्त्यरूपत्वात्। **ननु** अनुष्ठानश्रमरूपानिष्टजनकत्वात् यागादौ तद्बोधनासम्भवः। पापरूपानिष्टजनकत्वाभावस्य तद्रूपत्वे तद्बोधनस्य अप्रसक्तप्रतिषेधापत्तेः। न हि यागादेः पापजनकत्वं प्रसक्तम्। 'नैव सर्पं स्पृशेदि'ति लौकिकनिषेधस्य मृत्युरयमित्यादिनिन्दार्थवादविशेषस्य अप्रामाण्यापत्तेः, तेन पापजनकत्वबोधस्यावाच्यत्वादिति **चेन्न**। यत्र प्राशस्त्यं बोध्यं तज्जन्येष्टादधिकं यदनिष्टं तदजनकत्वस्य प्राशस्त्यरूपत्वात्। न **चैवमपि** अप्रसक्तप्रतिषेधापत्तिः। श्रमादिरूपानिष्टजनके यागादौ उक्ताजनकत्वरूपस्य श्रमादिनिष्ठे उक्ताधिकत्वाभावे पर्यवसानात्। घटवति' नीलघटो नास्ती'त्यभावस्य घटनिष्ठनैल्याभावे पर्यवसानवत्। उक्ताधिकत्वं च यागादिजन्येष्टापेक्षया बहुत्वं बहुकालव्यापकत्वं तादृशेष्टसाक्षात्कारविरोधिजातिविशेषवत्त्वादिरूपं च। तदाश्रयजनकत्वज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वात् तदभावकूटमर्थवादेन बोध्यत इति दिक्। अर्थवादेभ्यः 'तत्त्वमसी'त्यादिश्रुतेः वैषम्यमाह—**वेदान्तेति**। विधयः-दर्शादिविधायक-

इति निराकाङ्क्षत्वान्नान्यशेषत्वसम्भावना, प्रत्युत विधय एव अन्तःकरणशुद्धिद्वारा तच्छेषतां भजन्त इति। तस्मात्प्रयोजनवदबाधिताज्ञातज्ञापकत्वेन वेदान्तानां स्वत एव प्रामाण्यादस्त्येव ब्रह्मेति न मीमांसकमतसिद्धिः। तार्किकादीनां च मतं 'तत्त्वमस्यहं ब्रह्मास्मि अयमात्मा ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिबाधितम्। एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चने' इत्यादिश्रुतिबाधितं च। भिन्नाभिन्नत्वं क्षणिकत्वं च 'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुतिबाधितम्। अत्र सर्वेषां मतस्यासत्त्वे प्रतिज्ञाते विशुद्धात्मकत्वादिति हेतुः। निर्विकल्पाद्वितीयचैतन्यरूपत्वादित्यर्थः। अत्र हेतुः—विशिष्टानुभूत्येति। विशिष्टा सविकल्पकानुभूतिभ्यो व्यावृत्ता या तत्त्वमस्यादिवाक्यजन्याखण्डानुभूतिस्तयेत्यर्थः। तेन सर्वव्यापकमद्वितीयं परमानन्दबोधरूपं च ब्रह्मेति सिद्धम्॥ ४॥

ननु 'स य एषोऽणिमा', 'अणोरणीयानि'ति ब्रह्मणोऽणुत्वश्रुतेः 'अङ्गुष्ठमात्रः पुरुषः', 'आराग्रमात्रो ह्यवरोऽपि दृष्ट' इत्यादिश्रुतिप्रतिपादिताणुत्वविशिष्टजीवाभिन्नत्वाच्च न ब्रह्मणः सर्वव्यापकत्वमित्याशङ्क्य 'ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्, तदेतद्ब्रह्मापूर्वमन-

---

वाक्यानि। शुद्धिद्वारा—'विविदिषन्ति यज्ञेने'त्यादिश्रुत्या तत्त्वज्ञानप्रतिबन्धकपापनाशनद्वारा तत्त्वज्ञानसाधनत्वेन विहितानां कर्मणामुत्पत्तिप्रयोगविधानद्वारा। तच्छेषतां—वेदान्तवाक्योपकारकताम्। स्वत एव—अन्यशेषतां विना। ब्रह्म—जीवाभिन्नं ब्रह्म। अथवा मास्तु 'तत्त्वमस्यादिश्रुतेः कर्तृस्तुतिपरत्वं ब्रह्माभिन्नत्वेन जीवोपासनापरत्वं तु स्यात् तत्राह—**तस्मादिति**। यथाश्रुतवाक्यार्थज्ञानादेव परमपुरुषार्थलाभादित्यर्थः। **स्वत एवेति**। इत्युपास्वेति पदयोः कल्पनां विनैव। **प्रामाण्यात्**—प्रामाण्यसम्भवात्। श्रुतहान्यश्रुतकल्पनापत्तेः दृष्टद्वारकपुरुषार्थसाधनधीपरत्वसम्भवे अदृष्टद्वारा तादृशधीपरत्वकल्पने गौरवाच्च नोपासनापरत्वमिति भावः। इत्यादिश्रुतीत्यादिना प्रपञ्चमिथ्यात्वबोधकश्रुतिसंग्रहः। भिन्नाभिन्नत्वं प्रपञ्चब्रह्मणोः सत्यभेदाभेदौ। क्षणिकत्वं क्षणमात्रस्थायिज्ञानरूपत्वम्, ब्रह्मण इति शेषः। 'ऐतदात्म्यमिदं सर्व'मिति श्रुतौ एतत्सद्रूपं ब्रह्मैव आत्मा स्वरूपं यस्य, तादृशम्। स्वार्थे ष्यङ्प्रत्ययः। तथा च ब्रह्मैव प्रपञ्चस्य स्वरूपं तदन्यन्मिथ्यैवेति बोधनात् कुत उक्तभेदाभेदाविति। मतस्य—सम्मतत्वस्य। असत्त्वे—ब्रह्मनिष्ठाभावे। ब्रह्मणि पक्षे सर्वसम्मतरूपत्वाभावे साध्ये इति यावत्। तत्त्वमस्यादीत्यादिपदेन 'एकमेवाद्वितीय'मित्यादिवाक्यस्य द्वितीयाभावादिविशिष्टे ब्रह्मण्यवान्तरतात्पर्यस्वीकारादद्वितीयेत्यादिसिद्धेरिति भावः॥ ४॥

**अङ्गुष्ठेत्यादि**। 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्ये'ति श्रुत्याऽङ्गुष्ठमात्रशब्दितजीवस्य सर्वेश्वरत्वम्, 'आराग्रमात्रो ह्यवरोऽपि दृष्ट' इति श्रुतौ नास्ति परो महान् यस्मात्तादृशत्वमाराग्रपरिमितस्य जीवस्योक्तम्। आरा—लोहशलाका, अपूर्वं—कारणभूतादिशून्यम्, अनपरं—कार्यभूताकाशादिशून्यम्। अनन्तरमबाह्यम्—अन्तरबाह्यशून्यम्, अपरिच्छिन्नमिति यावत्। **न चोर्ध्वमित्यादि**। मयि ऊर्ध्वादिकं येन सम्बन्धेन प्रसक्तं तेन सम्बन्धेन नास्ति। वियद्व्याप-

**परमनन्तरमबाह्य'मित्याद्याः श्रुतयो निर्विशेषमेव ब्रह्म प्रतिपादयन्तीति पूर्वोक्तमेव द्रढयन्नाह—**

**न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वापरा दिक् ।**
**वियद्व्यापकत्वादखण्डैकरूपस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ ५ ॥**

**वियद्व्यापकत्वात्, आकाशवत्सर्वगतश्च नित्य' इति श्रुतेः। वियतो व्यापकत्वादिति वा, 'ज्यायानाकाशान्महतो महीयानि'त्यादिश्रुतेः। जीवस्यापि सकलदेहव्यापिचैतन्योपलब्ध्या महत्त्वेऽपि उपाधिधर्माध्यासेनाराग्रमात्रत्वाभिधानात्, 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट' इति श्रुतेः। ब्रह्मणश्च सूक्ष्मत्वाभिप्रायेण अणुत्वव्यपदेशात्। शेषमतिरोहितार्थम् ॥ ५ ॥**

**ननु ब्रह्मणो जगदुपादानत्वादुपादानोपादेययोश्चाभेदाद्विचित्रजगदभिन्नत्वेन ब्रह्मणः दुःखरूपत्वात् न तदभिन्नत्वेन जीवस्य परमपुरुषार्थप्राप्तिरित्याशङ्क्य ब्रह्मणः स्वप्रकाशपरमानन्दरूपत्वान्निखिलजगद्भ्रमाधिष्ठानत्वेन कारणत्वव्यपदेशादध्यस्तेन च समं सम्बन्धाभावान्न तत्रानर्थलेशोऽप्यस्तीत्याह—**

**न शुक्लं न कृष्णं न रक्तं न पीतं न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।**
**अरूपं तथा ज्योतिराकारकत्वात्तदेकोऽवशिष्टश्शिवः केवलोऽहम् ॥ ६ ॥**

**कुब्जम्—अणु। पीनं-महत्। तेनाणु महत् ह्रस्वं दीर्घमितिचतुर्विधपरिमाणनिषेधात्**

---

कत्वात्–येन केनापि सम्बन्धेन वियद्यथा सर्वत्र व्यापकं तथा तादात्म्येनात्मा। चकाराः विजातीयान्तरस्य सजातीयधर्मस्य च निषेधसमुच्चायकाः। तस्मादेकोऽहमित्यर्थः। येन केनापि सम्बन्धेन व्यापकत्वमादाय दृष्टान्तत्वे पृथिव्यादेरपि दृष्टान्तत्वसम्भवात् असामञ्जस्यम्। संयोगेन वियद्यथा सर्वव्यापकं तथा तादात्म्येनात्मापीत्युक्तेऽपि दृष्टान्तासङ्गतिः, सर्वप्रपञ्चनिषेधरूपस्य साध्यस्य वियति परेणास्वीकारात्, ऊर्ध्वादिनिषेधमात्रे साध्ये तदेकः केवलोऽहमिति उपसंहारानुपपत्तिः अत आह—**वियतो व्यापकत्वादिति**। अपरिच्छिन्नत्वादित्यर्थः। तथा च भेदादिरूपसर्वपरिच्छेदाभावस्य सर्वभेदाद्यभावं प्रति हेतुत्वं युक्तमेवेति भावः। **सकलदेहव्यापिचैतन्येति**। हस्तपादाद्यवच्छेदेन युगपज्ज्ञायमाननानासुखदुःखादिव्यक्तितादात्म्यापन्नचैतन्येत्यर्थः। **उपाधिधर्मेति**। मनोनिष्ठाराग्रमात्रत्वेत्यर्थः। मनसस्सङ्कोचविकासशालित्वेन कदाचित्तदस्तीत्यर्थः। **बुद्धेरित्यादि**। आत्मगुणेन अवरः अपरिच्छिन्नोऽपि बुद्धिगुणेनाराग्रमात्र इत्यर्थः। **सूक्ष्मत्वेति**। दुर्विज्ञेयत्वेत्यर्थः ॥ ५ ॥

महदादिवाचकशब्दपूर्ववृत्तित्वेन कुब्जशब्दस्याणुपरिमाणवाचकत्वमित्याशयेनाह—**कुब्जमण्विति**। रूपतादात्म्यस्य रूपाधारत्वस्य च न शुक्लमित्यादिनैव निषेधसम्भवादाकाङ्क्षिता-

द्रव्यत्वप्रतिषेधः। रूप्यत इति रूपं प्रमेयम्। न प्रमेयमरूपम्। सर्वेषामेव द्रव्यगुणकर्मादिपदार्थानां तत्तद्वाद्यभ्युपगतानां निषेधः। तथा च श्रुतयः—'अस्थूलमनण्वह्रस्वमदीर्घमलोहितमि'त्याद्या 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्' इत्याद्याश्च सर्वानर्थशून्यं परमात्मस्वरूपं प्रतिपादयन्ति। श्रौतस्याप्यर्थस्य न्यायेन निर्णयाय हेतुमाह—ज्योतिराकारकत्वादिति। स्वप्रकाशज्ञानरूपत्वेनाप्रमेयत्वात्प्रमेयत्वे घटादिवज्जडत्वापत्तेः। 'एतदप्रमयं ध्रुवमि'त्यादिश्रुतेरित्यर्थः॥ ६॥

ननु कस्य ब्रह्मभाव उपदिश्यते। ब्रह्मणः अब्रह्मणो वा? नान्त्यः। तस्य जडत्वादसत्त्वाच्च। न प्रथमः। उपदेशानर्थक्यात् ब्रह्मभावस्य स्वत एव सिद्धत्वात्। जीवस्य स्वतो ब्रह्मभावेऽप्यविद्याव्यवधानं ज्ञानेन निवर्त्यत इति चेन्न। अविद्यानिवृत्तेरनात्मरूपत्वे द्वैतापत्तेर्ब्रह्मणोऽसिद्धिप्रसङ्गात्। तदुक्तं वार्तिके—

अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते।
ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनि॥ इति।

अभिन्नत्वे चोपदेशानर्थक्यमित्युक्तम्। अत्र किं परमार्थतः फलाभावमभिप्रैषि किं वा प्रतीतितोऽपि? तत्राद्यमिष्टापत्त्या परिहरति—

न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपञ्चः।
स्वरूपावबोधो विकल्पासहिष्णुस्तदेकोवशिष्टश्शिवः केवलोऽहम्॥ ७॥

---

द्वितीयत्वप्रतिपादनस्य युक्तत्वाच्चाह—**रूप्यत इत्यादि**। रूप्यते-चिता भास्यते। प्रमेयं-चिद्भास्यम्। द्रव्यादेरिव तद्विशिष्टस्यापि प्रमेयत्वात् प्रमेयभेदोक्त्या द्रव्यादिवैशिष्ट्यात्यन्ताभावोऽपि लभ्यत इत्याशयेनाह—**तेनेत्यादि**। निषेधः-भेदात्यन्ताभावयोर्लाभः। अस्थूलमित्यादौ स्थूलादेर्भेद इवात्यन्ताभावोऽपि बोध्यत इति वक्तुं शक्यते। अस्नेहमित्यादिवाक्यशेषस्य भेदबोधपरत्वे तत्पुरुषत्वेन नपुंसकत्वानुपपत्तेर्बहुव्रीह्यावश्यकत्वेन तत्समभिव्याहारात् अत्यन्ताभावमात्रबोधकत्वम्। अशब्दमित्यादौ तु नपुंसकत्वात् बहुव्रीहित्वनिर्णयेनात्यन्ताभावबोधकत्वमेवेत्याशयेनाह—**अशब्दमित्यादि**। अप्रमेयत्वात्-चिदभास्यत्वात्॥ ६॥

अविद्याव्यवधानम्-अविद्यारूपं व्यवधायकम्। द्वैतापत्तेः-सत्यात्मभिन्नस्यापत्तेः। अव्यावृत्तम्-अननुगतम्, अनुगतधर्मशून्यम् अनुगतधर्मशून्यं च। द्वितीये-ब्रह्मभिन्ने। सति-सत्ये। परमार्थतः फलाभावं—पारमार्थिकत्वरूपेण फलस्याभावम्। प्रतीतितः-प्रातीतिकत्वेन रूपेण। फलाभावमित्यनुषज्यते। अत्र च फलाभावमित्यस्य फलरूपमलीकमित्यर्थः। तथा च ज्ञायमानं फलमलीकमिति भावः। एतेन प्रातीतिकफलस्य प्रातीतिकत्वरूपेणाभावस्य सिद्धान्तेऽपि स्वीकारात् पश्चात्तद्दूषणानुपपत्तिरित्यपास्तम्। **परमार्थतो नास्तीति**। तथा च शास्त्रादिसर्वप्रपञ्चस्य निषेधात्

शास्ता उपदेशकर्ता गुरुः । शास्त्रमुपदेशकरणम् । शिष्य उपदेशकर्म । शिक्षा उपदेशक्रिया । त्वं श्रोता, अहं वक्ता, अयं सर्वप्रमाणसन्निधापितः प्रपञ्चो देहेन्द्रियादिरर्थः परमार्थतो नास्तीत्यर्थः । द्वितीयं निराकरोति—स्वरूपावबोधो विकल्पासहिष्णुरिति । अयमर्थः—यद्यप्यविद्यानिवृत्तिरात्माऽनात्मा वेत्यादिविकल्पने किमपि फलं निरूपयितुं न शक्यते, तथापि स्वरूपावबोधो विज्ञानफलमनुभूयते । न चैतत्कथमिति विकल्पनीयम् । सर्वद्वैतोपमर्देन विकल्पासहिष्णुत्वात् । न हि दृष्टेऽनुपपन्नं नाम । तथा च श्रुतिः—

न निरोधो न चोत्पत्तिर्न बुद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदि'-

---

परमार्थत्वरूपेण ज्ञानफलस्यापि निषेधलाभ इति भावः । द्वितीये—प्रातीतिकत्वविशिष्टं फलमलीकमित्यभिप्रायम् । स्वरूपावबोधः—प्रकाशमानपूर्णानन्दरूपः । विज्ञानफलं चरममनोवृत्तिफलत्वेन प्रातीतिकेन विशिष्टम् । तथा च प्रातीतिकमज्ञाननिवृत्तित्वं पूर्णानन्दे प्रकाशमाने जीवन्मुक्तेन कल्पितम् । तद्विशिष्टस्य जन्यतारूपं फलत्वमपि प्रातीतिकम् । तदुक्तं वार्तिके—

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।

इति भावः । **न चैतत्कथमिति** । वियदादिसर्वद्वैतोपमर्दरूपे कैवल्ये कल्पितस्य निवृत्तित्वस्यासम्भवात्सत्यमेव तद्वाच्यम्, अन्यथा ह्यविद्यैव स्यादिति भावः । विकल्पासहिष्णुत्वात्—आत्मनो विकल्पविषयवैशिष्ट्यस्यासहत्वात् । तथाचोक्तं "निवृत्तित्वं जीवन्मुक्तिकाल एवास्ति न तु विदेहकैवल्य" इति नोक्तदोष इति भावः । ननु तत्रापि किं मानम् ? तत्राह—**न हीत्यादि** । 'या या प्रमा सा सा समानविषयकाज्ञानतत्प्रयुक्तवत्कालपूर्वत्वशून्यक्षणवृत्तिर्भवति, यथा शुक्त्यादिप्रमे'ति नियमे दृष्टे प्रत्यक्षादिसिद्धे हि यस्माद्वैशिष्ट्यासहत्वमात्मनो बोधयन्ती सती नानुपपन्ना । ननु नानाज्ञानपक्षे दृष्टान्तसम्भवात्तादृशनियमः प्रत्यक्षादिसिद्धः । एकाज्ञानपक्षे तु का गतिः ? तत्राह—**तथा च श्रुतिरिति** । तथा विकल्पासहत्वमात्मनो बोधयन्ती सती ज्ञानात् ब्रह्मभावं दर्शयति द्वैतजातं च वारयतीत्यग्रेऽन्वयः । निरोधः नाशः, उत्पत्तिः जन्म, प्रपञ्चस्येति शेषः । बुद्धस्तत्त्वदर्शी । साधकः श्रवणादिमान् । मुक्तः अज्ञाननिवृत्तिमान् । परमार्थतेति भावार्थोऽविवक्षितः । निरोधादिशून्यं परमार्थ इत्युक्ते तच्छून्यत्वे विकल्पासहत्वं न लभ्येत, ततस्तथाऽनुक्त्वा इत्येषा परमार्थतेत्युक्तम् । इतिशब्देन तु सर्ववैशिष्ट्यासहं शुद्धं चिद्रूपमुक्तम् ।

**तत् सर्वमभवदिति** । सर्वं दृश्यजातं ब्रह्माभवदित्यर्थः । सर्वदृश्यानां ज्ञातब्रह्मभवनं [1]स्वकालपूर्वकालवृत्तिभिन्नतया ज्ञातं यत् ब्रह्म तत्तादात्म्यम् । शुक्तौ ज्ञातायां सत्यामारोपितं रजतादिकं साऽभवदित्यादौ तादृशरजतादावुक्तभिन्नाया ज्ञातशुक्तेस्तादात्म्यं बुध्यते । अत एव 'यत्र त्वस्य

---

१. स्वं दृश्यं ।

**त्याद्या । पूर्वमपि ब्रह्मस्वरूपस्यैव सतो जीवस्य ज्ञानाद्ब्रह्मभावं दर्शयति । सर्वं च द्वैतं वारयति ॥ ७ ॥**

---

सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेदि'त्यादौ सर्वदृश्यानामात्मभवनमुक्त्वा अर्थात् प्राप्तं तत्त्वज्ञात्मनि स्वकालपूर्ववृत्तितासम्बन्धेन दृश्यादेरत्यन्ताभावमाक्षेपार्थककिंशब्देन श्रुतिरनुवदति । अस्येति पदस्य तत्त्वसाक्षात्कारवदर्थकस्यानुषङ्गात्, कमित्यस्यापि विभक्तिव्यत्ययेन लिङ्गव्यत्ययेन चानुषङ्गात्, को ज्ञाता, किं यथा स्यात् तथा पश्येदित्यर्थलाभेन तत्त्वसाक्षात्कारवदात्मस्वरूपे द्रष्टृदृश्यदर्शनतत्साधनानामुक्तसम्बन्धेनात्यन्ताभावबोधः । एवं तत् केन कं जिघ्रेदित्यादावपि । किञ्च 'यत् फलं श्याममासीत्, तदिदानीं रक्तमेवाभवत्, न तु स्वनिष्ठश्यामतया समकालम्, नापि पूर्वकालम्' इत्यादौ न त्वित्यादिना तदिदानीमित्यादेरर्थानुवादात् तयोस्तुल्यार्थकत्वम् । रक्तादिपदस्य रक्तसमकालादिभिन्ने लक्षणास्वीकारेण तदन्ययोगव्यवच्छेदार्थकस्यैवकारस्य तादृशसमकालादितादात्म्यव्यवच्छेदबोधकत्वेन च तत्सम्भवः ।

तथा 'तत् केने'त्याद्यनुवादतुल्यार्थकत्वात् 'यत्र त्वस्ये'त्यादेरुक्तार्थकत्वं स्वीक्रियते । लक्षणया आत्मपदोपस्थापितस्यापि तस्य दृश्यकालपूर्ववृत्तिभिन्नस्यात्मनो भिन्नस्यास्य दृश्यकालपूर्ववृत्तितादात्म्यव्यवच्छेदरूपस्य अन्ययोगव्यवच्छेदस्य एवकारेण बोधसम्भवात् । विशेषणगतैवकारस्यापि **शिरोमण्यादिभि**रप्यन्ययोगव्यवच्छेदबोधकत्वस्वीकारात् । तस्य अयोगव्यवच्छेदबोधकत्वस्वीकारेऽपि दृश्यकालपूर्ववृत्तिभिन्नतादात्म्यायोगव्यवच्छेदबोधकत्वसम्भवात् । यत्रेत्यनेनोक्ते तत्त्वसाक्षात्कारकाले दृश्येषु तादृशव्यवच्छेदयोस्सत्त्वात् । यदि त्वात्मैव विशेष्योऽत्र स्वीक्रियते, अत एव 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानत' इत्यत्राभूदित्येकवचनान्तमित्यालोच्यते, तदा तादृशभिन्ने भूतपदमेव लाक्षणिकम् । तत्सर्वमभवदित्यत्रानुवादाभावेऽप्युक्तवाक्यसमानार्थत्वाय तादृशार्थकत्वम् । 'सविशेषणे ही'ति न्यायात् ब्रह्मज्ञाने तादृशपूर्वकालावृत्तित्वलाभः । एवं 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनुपश्यत' इत्यादौ क इत्यादिना एवकारार्थानुवादबलात् ब्रह्मज्ञाने मोहादिपूर्वकालावृत्तित्वं एवकारेण बोध्यत इति निर्णीयते । हेत्वर्थकशतृप्रत्ययेन पूर्वकालवृत्तिताघटितहेतुत्वोपस्थापनात् पूर्वकालवृत्तितासम्बन्धेन मोहाद्यभावधीसम्भवेन मोहादिकारणद्वैतसत्त्वे मोहादेरुक्ताभावानुपपत्त्या द्वैतवत्कालपूर्वकालावृत्तित्वस्य ब्रह्मज्ञाने धीसम्भवः । यथाश्रुते साक्षात्सम्बन्धेन मोहादेरभावस्यात्मनि बोधे जीवन्मुक्ते बाधात् । विवक्षितार्थे तु चरमज्ञाने पूर्वज्ञानहेतुकस्य उक्तकालावृत्तित्वस्य धीसम्भव इति ध्येयम् । इत्याद्येत्याद्यपदेन ब्रह्मवेद ब्रह्मैव भवती'त्यादिश्रुतिसङ्ग्रहः । **ज्ञानादित्यादि** । ज्ञानात् ब्रह्मभावो नाम ज्ञायमानजीवस्वरूपस्य ब्रह्मज्ञानकालपूर्वत्वशून्यक्षणवृत्तित्वम् । वारयतीत्यत्रापि ज्ञानादित्यनुषज्यते । तथा च ज्ञानस्वरूपं द्वैतवत्कालपूर्वत्वशून्यक्षणवृत्तितया बोधयतीत्यर्थः ।

अथवा ननु प्रातीतिकफलत्वविशिष्टोद्देशेन मुमुक्षूणां सर्वत्यागपूर्वकं श्रवणादौ प्रवृत्त्यनुपपत्तिः । प्रवृत्तिकाल एव 'आत्मसुखमनादि तस्य फलत्वं प्रातीतिकमि'ति ज्ञानसम्भवेन सिद्धत्वेन ज्ञाते आत्मसुखे इच्छानुदयात्, तत्राह—**न हीत्यादि** । दृष्टे अज्ञानतत्प्रयुक्तविरोधिमनोवृत्तिविषयत्वविशिष्टात्मसुखे परमपुरुषार्थ उद्देश्ये सम्भवति सति श्रवणादौ प्रवृत्त्यादिकं न ह्यनुपपन्नमित्यर्थः । आत्मभिन्नस्य सर्वस्यापरमार्थत्वेन तद्विरोधित्वमात्माकारवृत्तेर्युक्तमित्याशयेन 'न निरोध' इत्याद्युक्तम् ।

**नन्वात्मनः स्वप्रकाशचैतन्यरूपत्वे सर्वदा भासमानत्वेन जाग्रत्स्वप्नसुषुप्त्यादिव्यवस्था कथम्? न च भ्रान्त्यैव व्यवस्थेति वाच्यम्। तथा सति सर्वस्यैव स्वाप्नत्वापत्तिरिति चेन्न। लक्षणतस्त्रयाणामपि स्वप्नत्वेऽपि प्रतिभासतोऽविद्याकृतविशेषसम्भवात् असद्विलक्षणत्वेन च सविशेषत्वाद्व्यवस्थोपपत्तेः। परमार्थतस्तु न कापि व्यवस्थेत्याह—**

**न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा।**
**अविद्यात्मकत्वात्त्रयाणां तुरीयस्तदेकोऽवशिष्टश्शिवः केवलोऽहम्॥ ८॥**

**अत्र लयक्रमेण पौर्वापर्यव्यपदेशः। तथा हि—अस्मिन्मते पदार्थो द्विविधः, दृक् दृश्यं च। अन्येषां वादिपरिकल्पितानां पदार्थानामत्रैवान्तर्भावात्। तत्र दृक्पदार्थः आत्मा पारमार्थिक एकः सर्वदैकरूपोऽप्यौपाधिकभेदेन त्रिविधः, ईश्वरो जीवस्साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः। प्रपञ्चितं चैतदधस्तात्। अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्यं साक्षी, बिम्बेश्वरपक्षे तु बिम्बप्रतिबिम्बमुखानुगतमुखस्वरूपवज्जीवेश्वरानुगतसर्वानुसन्धातृचैतन्यं साक्षीत्युच्यते। वार्तिककारमते त्वीश्वर एव साक्षीति द्वैविध्यमेव जीवेश्वरभेदेन दृशः। तत्रेश्वरोऽपि त्रिविधः। स्वोपाधिभूताविद्यागुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। कारणी-**

---

तस्यामुक्तविरोधित्वबोधकं 'ब्रह्म वा' इत्यादिकमित्याशयेन तदुक्तम्। तदेतत् अस्माभिरेतद्ग्रन्थादावेवोक्तम्॥ ७॥

**भ्रान्त्यैवेति**। यथा स्वप्नमध्ये जाग्रदादिकं भिन्नतया भ्रान्त्या कल्पितं तथेत्यर्थः। लक्षणतः—आविद्यकत्वादिरूपेण। **त्रयाणामपीति**। 'त्रयमप्येतत् स्वप्नं सुषुप्तं मायामात्रं' 'त्रयस्स्वप्ना' इत्यादिश्रुतिभिरपि तथोक्तम्। त्रयं जाग्रत्स्वप्नसुषुप्तिरूपम्। एवं त्रय इत्यपि। प्रतिभासतः व्यवहारतः। ननु मिथ्याभूतस्य सदन्यत्वेऽपि सविशेषत्वस्वीकारे तच्छब्दस्यापि (शून्यस्यापि) स स्यात् तत्राह—**असदित्यादि**। **लयक्रमेणेति**। जाग्रद्विश्वयोः स्वप्नतैजसयोः तयोस्सुषुप्तिप्राज्ञयोर्लय इति क्रमसदृशक्रमेणेत्यर्थः। **बिम्बेश्वरेत्यादि**। यथा बिम्बत्वप्रतिबिम्बत्वोपहितरूपाभ्यां मुखं द्वेधा भिद्यते। दर्पणाद्युपाध्यन्तर्गतत्वे सत्यौपाधिकपरिच्छेदशून्यत्वे च सति बहिःस्थितस्वरूपकत्वं प्रतिबिम्बत्वम्। बिम्बस्य वारणायाद्यम्। घटाकाशादिवारणाय द्वितीयम्। दर्पणाद्यन्तर्गततदवयववारणाय तृतीयम्। उपाध्यनन्तर्गतत्वे सति उपाध्यन्तर्गतरूपाभिन्नबहिःस्थितत्वं बिम्बत्वमिति विवेकात्। तथोक्तोपहितमुखद्वयात् शुद्धरूपं मुखं भिद्यते। शुद्धस्योपहितकल्पनाधिष्ठानत्वेन ततो भेदस्यावश्यकत्वात्। तथा च बिम्बत्वप्रतिबिम्बत्वोपहितजीवेश्वराभ्यां शुद्धचिदन्या। विशिष्टकेवलयोर्भेदाभेदस्वीकारेण तस्यां तदुभयस्यापि भेदस्वीकारात् तदुभयानुस्यूतापि सेति भावः। जीवस्यापि कार्यभूतमनोगतसत्त्वादिगुणावच्छिन्नत्वेन तत्रातिव्याप्तिवारणायाह—**कारणीभूतेति**। अकार्यभूतेत्यर्थः।

**भूतरजउपहितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणत्वाभावात् न ब्रह्म, तथापि स्थूलभूतस्रष्टृत्वात् क्वचिद्ब्रह्मेत्युपचर्यते। कारणीभूततमउपहितो रुद्रः संहर्ता। एवं चैकस्यैव चतुर्भुजचतुर्मुखपञ्चमुखाद्याः पुमाकाराः श्रीभारतीभवान्याद्याश्च स्त्र्याकारा**

---

**क्वचिदिति।**

स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत।
तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते।

इत्यादिश्रुतौ,

ब्रह्म तत्त्वं तपो वेदाः ब्रह्मा विप्रः प्रजापतिः।

इत्यादिकोशे चेत्यर्थः। **एवं चेति।** चतुर्भुजादिशरीरकार्यपरिपालनादेर्विष्ण्वादिकर्तृकत्वं चेत्यर्थः। **एकस्यैवेति।** ननु चतुर्भुजाकारो विष्णोरवतारः, चतुर्मुखाकारो ब्रह्मणः पञ्चमुखाकारो रुद्रस्य लक्ष्म्याकारो विष्णोः भारत्याकारो ब्रह्मणः भवान्याकारो रुद्रस्येति विशिष्य वक्तव्यम्, किमित्येकस्येत्युक्तम्? उच्यते। चतुर्भुजशरीरस्य पालनमेव कार्यमिति वक्तुमशक्यम्, दैत्यसंहारादिकार्यस्य दर्शनात्। तस्य देवरक्षणफलकत्वेऽपि तमःकार्यत्वेन रुद्रकार्यत्वात्। एवं पञ्चमुखशरीरे त्रिपुरसंहारादितमःकार्यस्य जगत्पालनफलकत्वेन विष्णुकार्यदर्शनात् न रुद्रकार्यत्वनिर्णयसम्भवः। एवं भवान्यादेः दैत्यादिसंहर्त्रीत्वेऽपि पालनरूपविष्णुकार्यदर्शनात् हरिवंशादौ विष्ण्वादिरूपत्वस्य स्पष्टमुक्तत्वाच्च न रुद्रादिरूपत्वनिर्णयः। अत एव सरस्वत्यादेरपि पालनादिकार्यं पुराणादौ तत्र तत्रोक्तमिति न ब्रह्मादिरूपत्वनिर्णयः। तस्मात् चतुर्भुजादिशरीरं रुद्रादेरपि। एतदभिप्रायेणैव—

हरिरूपी महादेवो लिङ्गरूपी जनार्दनः।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत्॥

इत्यादि **बृहन्नारदीयस्थानि,**

नामानि तव गोविन्द यानि लोके महान्ति च।

तान्येव मम' इत्यादिसहस्रनामभाष्योदाहृतानि च वचनानि समञ्जसानि। अन्यथा गुणभेदेन भेदसत्त्वात् विष्णुशिवादिपदानां शिवविष्ण्वादिनामत्त्वासम्भवाच्चासङ्गतेः। उक्ताभिप्रायादरे तु सत्त्वगुणावच्छिन्नचित इव चतुर्भुजशरीरवृत्तिजातिविशेषविशिष्टस्यापि हरिशब्दार्थत्वात्। अन्यथा श्रुतिपुराणादौ तत्तच्छब्देन तन्मात्रव्यवहारानुपपत्तेः। महादेवशब्दितस्य तमोऽवच्छिन्नचैतन्यस्य चतुर्भुजशरीराभिमानित्वात् महादेवाभिमानविषयस्य लिङ्गस्य पालनरूपसत्त्वगुणकार्याय जनार्दनशब्दितसत्त्वावच्छिन्नचिद्रूपविष्ण्वभिमानविषयत्वाच्च हरीत्यादेराञ्जस्यम्। चतुर्भुजशरीरस्यैव तदभिमानिनोस्सत्त्वतमोऽवच्छिन्नचिद्रूपहरिहरयोरपि हरिनारायणादिशब्दार्थत्वान्नामानीत्यादेरप्याञ्जस्यम्। कारणीभूतसत्त्वाद्यवच्छिन्नचितां विष्ण्वादिरूपत्वं **मैत्रायणीयशाखायां** श्रूयते—'अथ यो ह खलु वा वास्य तामसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं रुद्रोऽथ यो ह खलु वा वास्य राजसोंऽशोऽसौ स ब्रह्मचारिणो योऽयं ब्रह्माऽथ यो ह खलु वा वास्य सात्त्विकोंऽशोऽसौ स ब्रह्मचारिणो यो यं विष्णुस्स वा एष पुरुषः एकस्त्रिधाभूत' इत्यादि। तत्र दीपिकाव्याख्या। तामसः तमः प्रधानोंशः तमउपाधिको विशेषः, हे ब्रह्मचारिणः। एवमग्रेऽपीति।

तथा भवान्यादीनामपीश्वरत्वमाश्वलायनैराम्नायते 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् अहं रुद्राय धनुरातनोमिब्रह्मद्विषे शरवे हन्त वा उ। अहं जनाय समदं कृणोम्यहं' द्यावापृथिवी आविवेश। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तस्समुद्रे। ततोऽवतिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि। अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूवे'ति भवान्याः। अहमित्यादि। अंभृणस्य ऋषेः दुहिता वाक् 'सैव भवान्या अवतारो वैदिकेषु प्रसिद्धेः। सा जगत्कारणतया आत्मानमुक्तवती—अहमेवेदं वदामि किं देवैर्मानुषैश्च सेवितं ब्रह्म यं पुरुषमनुकम्पितं कामये इच्छामि तमुग्रं सर्वोत्कृष्टं कृणोमि करोमि, ब्रह्माणं स्रष्टारम् ऋषिमतीन्द्रियार्थदर्शिनं सुमेधां सुप्रज्ञं रुद्राय रुद्रस्य धनुः आतनोमि ज्यायुक्तं करोमि ब्रह्मद्विषे ब्राह्मणद्वेष्टारं शरवे शरुं हिंसकं हन्त वा उ हन्त वै हन्तुम्, उः पादपूरणार्थः, समदं संग्रामं कृणोमि करोमि, किमर्थं जनाय मदीयस्तवादियुक्तजनाय तच्छरीरमाविश्य तदीयजयाय करोमि—यथा कुरुपाण्डवयुद्धे श्रीकृष्णप्रेरितेनार्जुनेन स्तुता तदीयजयार्थं संग्रामं कृतवती। द्यावापृथिवी दृश्यमात्रम् आविवेश अन्तर्यामिरूपेण प्रविष्टा, पितरं द्युलोकं सुवे प्रसुवे जनयामि, 'द्यौः पिते'तिश्रुतेः, अस्य भूलोकस्य मूर्धन् मूर्ध्नि समुद्रे ब्रह्मणि अप्सु भूतेषु अन्तर्यामिकारणरूपा मम योनिः यस्यामीक्षणरूपं गर्भं करोमि।

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।

इति गीतोक्तेः, ततः हेतोः विश्वानि भुवनानि अनुतिष्ठे अनुप्रविश्य विविधं तिष्ठामि, उत अपि च वर्ष्मणा मायाशरीरेण वात इव अन्याप्रेरिता सती प्रवामि वर्ते, विश्वानि भुवनानि जनयन्ती दिवा द्युलोकस्य एनाः पृथिव्याः अस्याः भूमेः परः परस्तात् अहं सम्बभूवेति।

एवं श्रुत्यन्तरमपि 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति। तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिती'त्यादि 'अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति। तथेति तदभ्यद्रवत् तस्मात्तिरोदधे। स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं' तां होवाच किमेतद्यक्षमिति। सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार' इति।

तत्रायमर्थः—देवासुरयुद्धे देवेभ्यः देवानां रक्षणाय देवशरीरेषु प्रविश्यासुरान्विजिग्ये ब्रह्माजयत्। ततो देवाः तेन जयेन अमहीयन्त तं महिमानं प्राप्तवन्तः अस्माकं अस्मत्कर्तृक एवायं जयः तत्प्रयुक्तमहिमा चेति ऐक्षन्त मिथ्याभिमानं कृतवन्तः। तदीक्षणं ब्रह्म विजज्ञौ ज्ञातवत्। तेभ्यः तेषां मिथ्याभिमाननाशायाद्भुतरूपेण ब्रह्म प्रादुर्बभूव। तद्रूपं देवास्सर्वे न व्यजानन्त किमिदं यक्षं पूज्यं वस्तु किमिति। ततो देवा अज्ञात्वा इदम्मघवन्विजानीहि किमेतद्यक्षमिति। ततः तथेति स्वीकृत्य इन्द्रः तदभ्यद्रवत् तदन्तिके गतः। तस्य स्वस्मिन् मनः प्रणिधानाय तद्यक्षमन्तर्धानं गलवत्। ततस्सर्वदेवानां परमाप्तेन जगन्मातृरूपेण निजरूपान्तरेण अन्तर्धानस्य तस्मिन् आकाशे अवकाशे यत्र ब्रह्म प्रादुर्भूतं तां स्त्रियमुमानामिकां हिमवतो दुहितरमिन्द्र आजगाम, किमेतद्यक्षमिति पृष्टवान्। ततः सा देवानां हितैषिणी तमुवाच ब्रह्मेति। ब्रह्मणो जगदीश्वरस्यैव एतत्, तत्कृत एव असुरविजयः न तु युष्मत्कर्तृकः, तत्रैव यूयम्महीयध्वम्। ब्रह्मणः युष्मासु पक्षपातः न त्वसुरेष्विति स्वीयं महिमानं

**स्वीकुरुत जयाभिमानं तु न कुरुतेति । अत्र उमादेव्या ईश्वरत्वं स्पष्टम् । अन्यथा देवानामनीश्वराणां सर्वेषां यक्षाज्ञानस्य पूर्वमुक्तत्वात्** ब्रह्मविद्याधिष्ठातृत्वेन ईश्वरसहवासशीलसत्त्वेऽपि अनीश्वरत्वात् **यक्षतत्त्वोपदेशकर्तृत्वासम्भवात् ।**

एवम्—

'ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' इत्यादि लक्ष्म्याः ।
तस्यास्समुद्रा अधिविक्षरन्ति । तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद्विश्वमुपजीवति ।
प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ।
इत्यादि सरस्वत्याः ।

तस्याः वाचः सकाशात् समुद्राः मेघाः नद्यश्च = सम्यक् द्रवति जलमस्मादिति व्युत्पत्तेः = अधि अधिकं **प्रभूतम्** उदकं विक्षरन्ति वाग्देवतारूपेशप्रेरिता मेघनद्यादयः जलक्षरणादि कुर्वन्तीत्यर्थः । **'एतस्य वा अक्षरस्य प्रशासने गार्गि** प्राच्योऽन्या नद्यस्स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः, प्रतोच्याऽन्या' **इति श्रुत्यन्तरात् ।** ततः पश्चात् तदक्षरप्रेरितमेघादिसम्बन्धि जलं क्षरते । सरस्वती देवी वाजिनी **अन्नादिस्वामिनी** वाजेभिः अन्नैः नः अस्मान् अवति रक्षति प्रावतु । एवं धीनां मनोवृत्तीनां अवित्री **असद्विषयेभ्यो** वारयन्ती सद्विषय एव प्रावतु प्रेरयतु । तत्प्रेरकत्वेनान्तर्यामितया ईश्वरत्वम् । एवं **भारतवचनानि** उक्तार्थान्यनन्तानि सन्ति, विस्तरभयात् न लिख्यन्ते ।

ननु—

नवकोटयस्तु चामुण्डाः भेदभिन्ना व्यवस्थिताः ।
या रौद्री तामसी शक्तिः चामुण्डा सा प्रकीर्तिता ।
अष्टादश तथा कोटयः वैष्णव्या भेद उच्यते ।
या सा तु राजसी शक्तिः पालनी सैव वैष्णवी ।
या ब्रह्मशक्तिस्सत्त्वस्था साऽनन्ता वै प्रकीर्तिता ॥

इत्यादि**वाराहपुराण**वचनैर्भवान्यादीनां शक्तिरूपता उक्ता । अत्र मूले तु चतुर्भुजाद्याः **पुमाकारा** श्रीभारतीभवान्याद्याः स्त्र्याकारा इति क्रमस्वारस्यात् विष्णुब्रह्मरुद्रभेदादित्यादिक्रम-**स्वारस्याच्च** विष्णुब्रह्मशिवरूपत्वं श्रीभारतीभवानीनामुक्तम् । तदिदं मिथोविरुद्धमिति चेन्न । **'सेयम्माया चैतन्यदीप्ता ब्रह्मविष्णुशिवरूपिणी'**त्यादिश्रुतेः 'साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्द' **इत्यादिसंक्षेपशारीरकोक्तेः ।**

प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी ।
व्यक्तस्सर्वमयो विष्णुः स्त्रीसंज्ञालोकभावनः ॥

इति **हरिवंशा**द्युक्तेः । चिदाभासयुक्ताज्ञानस्यैव **वार्तिक**मते ईश्वरत्वस्वीकाराच्च विष्णुब्रह्म-शिवानामपि साभाससत्त्वरजस्तमोरूपत्वेन शक्तिरूपत्वाविरोधात् सत्त्वादिगुणत्रयगताभासातिरिक्त-चितोऽपि **वार्तिक**मते ईश्वरत्वस्वीकाराच्च करणीभूतसत्त्वगुणावच्छिन्नचैतन्यं विष्णुरित्यादिमूलस्यापि सङ्गतेः । ननु तथापि राजसशक्तिः वैष्णवी कथम् । सात्त्विक्या एव शक्तेः वैष्णवीत्वौचित्या-दिति चेन्न ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।।

इत्यनेन विष्णोरतिशयितप्रवृत्तिमत्त्वेन तच्छक्तेरेव प्रवृत्त्यतिशयप्रधानत्वेन राजसीत्वौचित्यात् । ब्रह्मणस्तु महाभूतमात्रस्रष्टृत्वेन न तथात्वम् । अत एव 'कमण्डलुजलाक्षेपहतवीर्यानित्यादिब्रह्मशक्तिकर्मोक्तम्, न तु युद्धादिप्रवृत्तिरिति ध्येयम् ।

भक्तेनापि न कात्स्न्येंन ज्ञेया भक्तिर्जगद्गुरोः ।
किन्तु तेनैव तद्भक्तिः परिपाकजुषापि च ।।

उक्तं हि यमेन स्वभटान् प्रति—

स्वयंभूर्नारदश्शम्भुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ।।
द्वादशैते विजानन्ति धर्मान् भागवतान् भटाः । इति ।
तथापि तद्गुणाः केचित् श्रुता वाचालयन्ति माम् ।
अयोग्योऽपि ततः स्वस्य शुद्धयै तान् कथयाम्यहम् ।।

तत्र भक्तिर्भजनं कायेन मनसा वाचा वा निष्पाद्यो भजनीयस्य तुष्टिहेतुर्व्यापारः भजमानपुरुषनिष्ठः । तत्र विभागो भागवतादावुक्तः—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ।।

भगवति सर्वात्मके परमप्रेमास्पदे अर्पिता पूर्वमपि विद्यमाना भक्तिः यदि शास्त्रेणाधीतेन तत्कालं नवलक्षणा क्रियते, तदा तदधीतमुत्तमं मन्ये । तच्छब्दस्य उत्तरवाक्यस्थत्वात् न यच्छब्दापेक्षा । अयं भावः । विष्णोस्सर्वजीवात्मभूतत्वादात्मनि सर्वेषां जीवानां सदा भूयासमिति प्रेमसत्त्वात् स्वाभाविकतया अनुरागविशेषनियता भक्तिः विष्णावस्त्येव सार्वदिकी । सा तु शास्त्रेणाधीतेन नवविधा क्रियते श्रवणादिस्वरूपज्ञानस्य श्रोतव्यकीर्तनीयादिगुणग्रामज्ञानस्य श्रवणादीतिकर्तव्यताज्ञानस्य च शास्त्राधीनत्वात् । किञ्च पूर्वमपि स्वस्य वा पुत्रभार्यादिर्वा श्रवणादि कृतं तद्विष्णोरेव कृतम्, शास्त्रे अधीते तु श्रद्धा साक्षादेव विष्णौ क्रियते । 'सर्वं विष्णुरि'ति ज्ञानात् विष्णोरेव श्रवणादि सदा करोमीति ज्ञायते । 'सर्वं विष्णुरि'ति ज्ञानाभावेऽपि पुत्रादेः श्रवणादिकं नादरेण करोति किन्तु विष्णोरेव निखिलमङ्गलगुणवत्त्वेन ज्ञानात् साक्षात् श्रवणादि क्रियत इति । उत्तममिति; श्रवणादेरुक्तज्ञानजननद्वारा श्रवणाद्यनुष्ठानमधीतशास्त्रस्य फलम्, तत्प्राप्तौ सत्यामधीतमुत्तमं मन्ये, तदप्राप्तौ गुणमात्ररूपमपि तन्नोत्तमम् । मुक्तावपर्यवसानादित्यर्थः ।

## श्रवणादिस्वरूपविचारः

अथ श्रवणादेः किं स्वरूपम् ? उच्यते। विष्णोस्सगुणस्य वा निर्गुणस्य वा शब्देन ज्ञानं तादृशविष्णुप्रतिपादकशब्दस्य श्रोत्रेण ग्रहणं च श्रवणम्। तच्च सर्वं सगुणस्य प्रीतिकरम्। साधारणोऽपि हि जनः तादृशे स्वीयश्रवणे प्रीणाति, उक्तं हि गीतायाम्—

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। इति।

तादृशज्ञानरूपस्य श्रवणस्य कीर्तनहेतुत्वात्तदाह—कीर्तनमिति। सगुणस्य वा निर्गुणस्य वा बोधकस्य शब्दस्योच्चारणम्। तत्राद्यस्य तत्प्रीतिकरत्वं स्पष्टम्। द्वितीयमपि तथा। प्रणवाद्युच्चारणस्यातिप्रीतिकरत्वेन भाष्यादावुक्तत्वात्—

अशक्नुवत् भावयितुं वाक्यमेव समभ्यसेत्।

इत्याचार्योक्तेश्च [1]तदुत्तरं च तादृशशब्दस्य तादृशविष्णोश्चानुभूतत्वात् स्मरणं जायते। अतस्तदुत्तरं स्मरणमुक्तम्। तच्च तादृशविष्णोः शब्दान्यकरणेन ज्ञानं। शब्दजन्यतज्ज्ञानस्य श्रवणत्वात्। तत्प्रतिपादकशब्दस्य श्रोत्रान्यकरणेन ज्ञानं श्रवणत्वात् तस्य प्रीतिकरत्वं स्पष्टम्। पादसेवनं परिचर्या विष्णुप्रतिमापादसम्मर्दनगृहलेपनादिरूपा।

अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनूः।

इति भगवदुक्तेः ब्राह्मणरूपस्य भगवद्देहस्य भगवद्भक्तस्य वा पादसंवाहनादिरूपा च। अर्चनं श्रवणादिभिन्नो विष्णुप्रीतिहेतुव्यापारः। वन्दनं पूजाबहिर्भूतनमस्कारः प्रतिमादौ। दास्यं दासभावः सेवा[2] विष्णुप्रीतिफलकं सर्वकर्मानुष्ठानम्। 'यत्करोषि यदश्नासी'त्यादिना लौकिकवैदिकसकलक्रियासमर्पणस्य भगवति कर्तव्यत्वेनोक्तत्वात्। क्रियाया भगवत्प्रीतिफलकतापर्यवसानमेव हि भगवति समर्पणं विष्णुप्रीतिमुद्दिश्य तदनुष्ठानमिति यावत्। तच्च त्रिविधम्। पापक्षयमुद्दिश्य भगवत्प्रीतिमुद्दिश्य किमप्यनुद्दिश्य वा।

यदुक्तं भागवतादौ—

कर्मनिर्हारमुद्दिश्य परस्मै वा तदर्पणम्।
यजेद्यष्टव्यमिति वा पृथग्भावस्स सात्विकः॥ इति।

कर्मनिर्हारः पापनाशः। परस्मै विष्णवे। तदर्पणं यागादिकर्मार्पणम्। विष्णुप्रीतिमुद्दिश्य तदनुष्ठानमिति यावत्। यष्टव्यमिति यजेत्—भगवदाज्ञारूपेण वेदेन कर्तव्यतया बोधितमिति मत्त्वैव यजेत्, न तु किञ्चिदुद्दिश्येत्यर्थः। एवं त्रिविधभावयुक्तः स सात्त्विकः। उक्तक्रमेणापकृष्टमध्यमोत्तमसात्त्विका इत्यर्थः। ननु पापक्षयरूपस्वगतफलकामेन क्रियमाणस्य कर्मणः दास्यरूपत्वे स्वर्गादिकामेन क्रियमाणमपि तथा स्यादिति चेत्। न। पापस्य ईश्वरं प्रत्यपराधजन्यत्वेन तत्क्षयकामेन क्रियमाण-

१. तदुत्तरं च तादृशशब्दस्य तादृशविष्णोरिति पा०।

२. सेवा दासस्येव विष्णुप्रीतीत्यादि।

स्यापि दास्यत्वौचित्यात् । अपराधिनो हि प्रभुं प्रति दास्यमाचरन्तोऽपराधान्मुच्यन्त इति लोके दृष्टम् । ननु प्रभोः कोपहेतुव्यापारः अपराध इति लोके व्यवहारः, पापजनकस्यापराधत्वे तथात्वं स्यादिति चेत्, स्यादेव । 'फलमत उपपत्ते'रित्यधिकरणे महर्षिणा **बादरायणेन** विहितनिषिद्धयोरीश्वर-प्रसादकोपजनकत्वोक्तेः । न च तथापि पापनाशफलकक्रियायाः कथं विष्णुप्रीतिफलकत्वमपीति वाच्यम् । विहितक्रियामात्रस्येश्वरप्रसादजनकत्वात् ईश्वरप्रसादस्यैव पुण्यरूपत्वस्य बादरायणसम्मतत्वात् ।

अथैवं स्वर्गादिफलकक्रियापि दास्यं स्यादिति चेन्न । कर्तृसुखाजनकेश्वरप्रीतिफलकक्रियाया एव दास्यभक्तित्वात् । अत एव—

यस्त आशिष आशास्ते न स भृत्यस्स वै वणिक् ।

इत्युक्तं **भागवते** । आशिषः स्वर्गादिसुखानि आशास्ते इच्छति भृत्यः दासः ते तव । एवं च कर्तृनिष्ठसुखफलकक्रियायाः राजसतामसभक्तित्वेन भागवतादावुक्ताया अर्चनमध्ये निवेशो बोध्यः । अत एव 'स्वकर्मणा तमभ्यर्च्ये'ति गीता । न चैवं पापनाशाद्युद्देशेन कृतश्रवणादिकमपि भगवद्दास्यं स्यादिति वाच्यम् । दास्यलक्षणे श्रवणाद्यन्यत्वस्यापि निवेशात् । मातापित्रादीनां विष्णुबुद्ध्या दासवत् शुश्रूषणमपि दास्यमिति बोध्यम् ।

**सख्यं** प्रेमविशेषादिरूपम् । यथा सख्यौ तथा विष्णौ । यथा च उपादेयं भक्ष्यादिकं प्राप्तं सख्ये निवेद्यते प्रेमविशेषपूर्वकं तथा विष्णवे । यथा सख्युः दूषणादिकं परेण क्रियमाणं सोढुं न शक्यते, तथा विष्णोस्तन्न सोढव्यम् । यथा तदीयकर्म स्वकीयकर्मवत् क्रियते, तथा विष्णुकर्म कार्यम् । यथा अयम्मदिष्टं साधयिष्यत्येवेति विश्वासेन सख्युरनुवृत्तिः क्रियते, तथा विष्णोरित्यादि । आत्मनिवेदनं स्वस्य निवेदनम् । यथा विक्रीतस्य गवादेः योगक्षेमचिन्तायामनभिनिवेशः, तथा स्वकीयायां योगक्षेमचिन्तायाम् ।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

इति भगवदुक्तं प्रतिसन्धाय सदा विष्णुरेव चिन्त्य इत्यर्थः । विष्णुस्वरूपे सत्यज्ञानानन्दात्मके असङ्गसाक्षिरूपे स्वाभेदज्ञानमपि आत्मनिवेदनं बोध्यम् । एतस्याः भक्तेः उक्तविश्वासादिरूपसख्या-धीनत्वेन तदुत्तरमुक्तिः । दास्यस्यापि 'विष्णुः सर्वोत्कृष्टः अहं तदपेक्षयाऽपकृष्ट' इति ज्ञानाधीनत्वात् तादृशज्ञानपूर्वककरशिरस्संयोगरूपवन्दनसापेक्षत्वात् वन्दनोत्तरमुक्तिः । पञ्चोपचारादिसाधनके अर्चने चिरमभिनिविशमानः भक्तः आलोचयति 'किमस्य सर्वलोकनाथस्य परमसात्त्विकगणैरर्च्यमानस्य मादृशेन वराकेणार्चनमिति ततश्च अर्चनाभिनिवेशात्[1] वन्दनादिष्वेव कायिकादिष्वभिनिविशते । अतोऽर्चनोत्तरं वन्दनमुक्तम् गृहलेपनादिरूपपादसेवने कृते पाद्यादिसमर्पणरूपमर्चनमभिलषतीति पादसेवनोत्तरमर्चनमुक्तम् । पादसेवनमर्चनादिकं गुणग्रामस्मरणाधीनम् अतः स्मरणोत्तरं पाद-सेवनादिकमुक्तम् । स्मरणस्यापि श्रवणकीर्तनाधीनत्वात् कीर्तनस्यापि श्रवणाधीनत्वात् तयोरुत्तरयोः उक्तिः । उक्तश्रवणादिलक्षणानां क्वचिदेकत्र मेलनेऽपि न दोषः । एकस्यानेकविधभक्तित्वसम्भवात् ।

---

१. अर्चनाभिनिवेशं त्यक्त्वा वन्दनेति पाठः, युक्तश्च ।

**अत्रेदं विवेचनीयम्।** श्रवणादीनां सगुणनिर्गुणविषयतया सङ्कीर्णानां साधनभक्तित्वमेव। **सख्यस्य तु साधनसाध्योभयविधभक्तित्वम्।** प्रेममात्रस्य साधनत्वेऽपि परमकाष्ठापन्नप्रेम्णः सगुणविषयश्रवणादिसाध्यत्वात्। तदुक्तं **विष्णुपुराणे** प्रह्लादविष्णुसंवादे—

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतस्सा मे हृदयान्मापसर्पतु ॥

अनपायिनी अव्यभिचारिणी। त्वामनुस्मरतः त्वदीयश्रवणादि कुर्वतः। सा तादृशी। तादृशस्य सगुणविषयकप्रेम्णः निर्गुणश्रवणादिसहितस्य चरमाऽऽत्मनिवेदनरूपा ब्रह्मात्मैक्यसाक्षात्काररूपज्ञानलक्षणा भक्तिः फलम्।

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
इति श्रुतेः।

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥

इति **गीतोक्त्या** तादृशप्रेमरूपस्य चरमभक्तेर्ज्ञानसाधनत्वोक्तेः। चकारात् पूर्वोक्तामानित्वमदम्भित्वमित्यादिसाधनसमूहस्य समुच्चयः। **भागवतेऽपि** उक्तम्—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहेतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥

श्रुतिमात्रेणोपस्थितिमात्रेण कारणेन तत्कार्यस्योक्तप्रेम्णः ग्रहणम्, तस्यैव निर्गुणभक्तिचरमसाधनत्वात्। सर्वगुहाशये सर्वदृश्याधिष्ठानभूते। अविच्छिन्ना क्वचिदपि विषयेऽनवच्छिन्ना सर्वं विष्णुरेवेत्याकारेति यावत्। मनोगतिः मनोवृत्तिः। यथा गङ्गा पूर्वपश्चिमादिसमुद्रभागेषु धाराचतुष्टयेन गच्छन्ती समुद्रभागेषु सर्वेषु सम्बध्यते, तथा मनोवृत्तिरपि सकलदृश्यावच्छिन्नेषु मद्भानेषु सम्बध्यते। ब्रह्माण्डस्यान्तर्बहिश्च सर्वं विष्णुरेवेति सर्वानुस्यूततया सर्वदृश्यानां अधिष्ठानतया ज्ञायत इति यावत्। स्वरूपमुक्त्वा लक्षणमाह—**लक्षणमित्यादि**। अहेतुकी फलानुसन्धानशून्या। न हि ज्ञानस्य फलमस्ति। तस्य सकलदृश्यविरोधितया मोक्षं प्रति व्यञ्जकत्वमात्रस्वीकारात्। अव्यवहिता अहमेव विष्णुरिति स्वाभेदेन क्रियमाणा। अत एव **बृहन्नारदीयाद**दावुक्तम्—

अहमेव परो विष्णुः मत्तस्सर्वमिदं जगत्।
इति यस्सततं पश्येत्तं विद्यादुत्तमोत्तमम् ॥ इति।

सा च ब्रह्मसाक्षात्कारहेतुपरमप्रेमा त्रिधा—

तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा।
भगवच्छरणत्वं स्यात्साधनाभ्याससपाकतः ॥ इति।

**अन्ये च मत्स्यकूर्मादयोऽनन्तावतारा लीलयैवाविर्भवन्ति भक्तानुग्रहार्थमित्यवधेयम् ।**

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।**
**उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥**

---

स एवाहमिति फलावस्थापि साधनस्य समकक्षतया उक्तप्रेम्ण एव साध्यरूपापत्त्या। गीतादौ–

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।

इति सर्वेषु धर्मेषु शरणताबुद्धिं त्यक्त्वा मय्येव तां कुरु तादृशबुद्धिहेतुं उक्तप्रेमाणं कुर्विति यावत् । **वस्तुतस्तु** प्रेमरूपसख्यभक्तेः फलमात्मनिवेदनम् । अत्र त्रिविधत्वेन उक्ते, आद्यं–तस्यैव-पाल्योहमित्याद्याकारत्वात् स्वीयपालनादित्यागेन विष्णुचिन्तारूपम् । द्वितीयं तु—प्रेमातिशयेनेतर-जीवादिद्वैततिरोधानात् ममैवासौ सेव्य इत्याद्याकारम्, तृतीयं तु सेव्यसेवकभावादिभेदस्यापि तिरोधानात् सच्चिदानन्दविष्णुप्रेमरूपमिति विवेकः । तस्य च परमप्रेम्णः साधनरूपश्रवणादिभक्तिः तत्साध्यात्मनिवेदनपर्यन्तापि उत्तमसात्त्विकोत्तमराजसोत्तमतामसमध्यमसात्त्विकादित्रयाधमसात्त्विकादित्रयभेदेन एकाशीतिभेदा । तत्र सात्त्विकत्रयं कर्मनिर्हारित्यादिना उक्तम् ।

विषयानभिसन्धाय ज्ञानमैश्वर्यमेव वा ।
अर्चादावर्चयेद्यो मां पृथग्भावस्स राजसः ॥

नारायणी

आधिकारिकावतारत्वाऽविद्यावद्विषयकर्मकर्तृत्वादिरूपजीवलिङ्गदर्शनात् महाभूतादिसर्जनाश्रवणाच्च जीवत्वमेवावताराणामिति मन्दमतीनां भ्रमं निराकुर्वन्नाह—**अन्य इति** । लीलयैव–स्वेच्छयैव, आविर्भवन्ति–प्रकटीभवन्ति न तु जायन्ते, सच्चिदानन्दात्मकानामुत्पत्त्ययोगात् । सच्चिदानन्दरूपता च तेषां 'सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनभूरुहजलासीन'मित्यादिश्रुतिसिद्धा । **महाभारते** द्रोणपर्वणि भगदत्तवधे—

चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥
एका मूर्तिस्तपश्चर्यां कुरुते भुवि मे स्थिता ।
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ॥
अपरा पश्यति जगत्कुर्वाणा साध्वसाधुनी ।
शेते चतुर्थी त्वपरा वरार्हेभ्यो वरार्थदा ॥

इत्यादि वदता भगवता आधिकारिकावताराणामेव लोकानुग्रहार्थमविद्यावद्विषयकर्मकर्तृत्वोक्तेरनावृतत्वेनेश्वरत्वमेव न जीवत्वमिति भावः । अत्रायं निष्कर्षः । गुणावताराणां ब्रह्मविष्ण्वादीनामखिलशक्त्याविर्भावकत्वाद्गुणावतारत्वव्यपदेशः, मत्स्याद्यवताराणां त्वल्पशक्त्याविर्भावकत्वादंशावतारत्वव्यपदेशः, गुणावतारांशावताराभ्यां भगवत एवानन्तशक्त्याविर्भावः सर्वदेति विवेकः । स च महाविष्णुरेवेति वैष्णवाः । परमशिव इति शैवाः । परदेवतेति शाक्ताः । परमेश्वर एवेति शुद्धस्मार्ता इति संक्षेपः ।

नारायणी

साधनभक्तिस्तु भज्यते सेव्यते भगवताकारमन्तःकरणं क्रियतेऽनयेति व्युत्पत्त्या—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥

इति नवधा । तत्र श्रवणं भगवद्विषयकशब्दस्य श्रोत्रेण ग्रहणं तदर्थबोधश्च, कीर्तनं भगवद्बोधकशब्दोच्चारणम्, स्मरणं भगवत्स्वरूपगुणस्मृतिः, पादसेवनं पित्राचार्यगुर्वादेः, अर्चनं चलाचलप्रतिमापूजनम्, वन्दनं पूजाबहिर्भूतनमस्कारो भगवद्भक्तप्रतिमादेः, दास्यं दासस्येव स्वामिप्रीतिकरकर्मानुष्ठानम्, सख्यं विश्वासो मित्रवृत्तिश्च, विश्वासस्तदुक्तेऽवश्यंभावधीः, मित्रवृत्तिः बन्धुसमवयस्कादिव्यवहाराख्या सेवा, आत्मनिवेदनम् आत्मनः शरीरस्य स्वीयत्वाभिमानत्यागपूर्वकं स्वामिस्वत्वफलकः सङ्कल्पः, तदभेदेनाखण्डैकरसानन्दात्मस्वरूपज्ञानं च । सेयं भक्तिस्त्रेधा कर्ममिश्रा कर्मज्ञानमिश्रा ज्ञानमिश्रा च तत्र कर्ममिश्रा तामसी राजसी सात्विकी च । तामस्यपि हिंसार्था दम्भार्था मात्सर्यार्था चेति त्रिधा ।

अभिसन्धाय यद्धिंसां दम्भं मात्सर्यमेव च ।
संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥

इति स्मृतेः । एवं राजस्यपि विषयार्था यशोर्था ऐश्वर्यार्था चेति त्रिधा ।

विषयानभिसन्धाय यश ऐश्वर्यमेव वा ।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥

इति स्मृतेः । एवं सात्त्विक्यपि पापनाशार्था भगवत्प्रीत्यर्था विधिसिध्यर्था चेति त्रिधा ।

कर्मनिर्हारमुद्दिश्य परस्मै वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥

इति स्मृतेः । एवं कर्मज्ञानमिश्रापि त्रेधा । उत्तमा मध्यमाऽपकृष्टा च सत्त्वतारतम्यात् ।

तत्रोत्तमा—

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः । इति ।

मध्यमा—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ इति ।

अपकृष्टा—

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ इति ।

**जीवोऽपि त्रिविधः। स्वोपाध्यवान्तरभेदेन विश्वतैजसप्राज्ञभेदात्। तत्र**

---

इति राजसत्रयम्।

अभिसन्धाय चेद्धिंसां दम्भं मात्सर्यमेव वा।
स्मरन्विभिन्नदृग्भावं मयि कुर्यात्स तामसः॥

इति तामसत्रयम्। संरम्भी क्रोधी। **इति भक्तिविवेचम्॥ तत्राविद्येत्यादि**। 'जागरितस्थानो वैश्वानरः, स्वप्नस्थानस्तैजसः, सुषुप्तस्थानः प्राज्ञ' इत्यादिमाण्डूक्यादिश्रुतिभिर्जागराद्यभिमानिनां विश्वादिसंज्ञा उक्ताः। अभिमानित्वं च उपाधित्रयद्वयैकावच्छिन्नानां क्रमेण योग्यत्वादि-

नारायणी

ज्ञानमिश्रा—

मद्गुणस्मृतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोम्बुधौ॥ इति।

अविहिता चतुर्धा। कामजा १ द्वेषजा २ भयजा ३ स्नेहजा ४।

कामाद् द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः।
सम्बन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो॥

इत्यत्र सम्बन्धात्स्नेहाद्वृष्णयो यूयं चेत्येवं भक्त्या विहितया वयमिति विभागः। तत्र कर्ममिश्रा नवधा गृहस्थानां कर्मज्ञानमिश्रास्तिस्रो वनस्थानां ज्ञानमिश्रैका भिक्षूणां शुद्धैका सर्वेषां निर्विण्णानां ज्ञानयोगोऽसन्यासिनाम्। इह कर्मसु—

तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम्॥
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥

इत्यादिस्मृतेः। अत्रानिर्विण्णानां सन्यासिनां कर्मसु सत्सु ज्ञानयोगः कर्मज्ञानयोग इत्यर्थः। तत्राविहिताश्चतस्रो गोप्यादितुल्यानाम्।

तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्।
इति स्मृतेः। भक्तिभूमयस्तु—
प्रथमं महतां सेवा तद्दयापात्रता ततः।
श्रद्धा च तेषां धर्मेषु ततो हरिगुणश्रुतिः॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः।
प्रेमवृद्धिः परानन्दे तस्याप्यस्फुरणं ततः॥
भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता।
पेम्णोथ परमा काष्ठेत्युदिता भक्तिभूमयः॥ इति संक्षेपः।

**अविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः। स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नाभिमानी तैजसः। शरीरान्तःकरणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितः सुषुप्त्यभिमानी प्राज्ञः। एतेषां च स्वतन्त्रोपाधिभेदाभावेन स्वतन्त्रभेदाभावेऽप्यवान्तरोपाधिभेदादेकत्वेऽप्यवान्तरभेदो व्यवह्रियते। साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीयाख्य एकविध एव। तत्रोपाधिभेदेनापि न क्वचिद्भेदः। तदुपाधेरेकरूपत्वात्।**

**अविद्यातद्व्याप्यतत्कार्यात्मकः प्रपञ्चो दृश्यपदार्थः। तस्यापारमार्थिकत्वेऽपि व्यावहारिकसत्त्वाभ्युपगमात् न स्वाप्निकपदार्थवन्निरूपणं व्यर्थम्। उपासनादावुपयोगादिति। सोपि त्रिविधः। अव्याकृतमूर्तामूर्तभेदात्। तत्र साभासाविद्या मूर्तामूर्तप्रपञ्चबीजशक्तिरूपा। तदजन्यत्वेऽपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैः चैतन्यतत्सम्बन्धजीवेश्वरविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यते। अयं चाव्याकृत-**

---

त्याशयः। **स्थूलशरीराभिमानेति**। व्यावहारिकस्थूलशरीराभिमानेत्यर्थः। **स्वतन्त्रोपाधीति**। निरपेक्षत्रयोपाधीत्यर्थः। **स्वतन्त्रभेदेति**। अत्यन्तभेदेत्यर्थः। **अवान्तरोपाधीति**। अवान्तरभेदः व्याप्यव्यापकभावनिबन्धनो भेदः संस्कारावच्छिन्नत्वादिरूपोपाधिविशेषणेत्यर्थः। एकत्वेऽपि—तादात्म्येऽपि। यथा घटपटयोरमिलितत्वेन निरपेक्षयोस्स्वोपहिताकाशभेदकत्वमत्यन्तभेदप्रयोजकत्वरूपम्। यथा वा बिम्बत्वप्रतिबिम्बत्वयोस्तादृशयोस्तथात्वं तथा संस्कारावच्छिन्नाविद्यादीनां प्राज्ञादिषु विश्वादितो नात्यन्तभेदकत्वम्। विश्वाद्युपाधिमध्येऽविद्यादीनां निवेशात्, य एव सुषुप्तावविद्योपाधिकः स्थितः, स एव जागरे इदानीमुपाधित्रयोपहित इति प्रत्ययाच्च, न हि मलिनतद्वस्त्रवतश्चैत्रस्य निर्मलतद्वस्त्रविशिष्टचैत्रादत्यन्तभेदो व्यवह्रियते। प्रत्युत य एव मलिनतद्वस्त्रः स्थितः, स एवेदानीं निर्मलतद्वस्त्र इति अभेद एव प्रतीयते। **वस्तुतस्तु** दृष्टान्ते मालिन्योपलक्षिततद्वस्त्रोपहितस्यैव निर्मलवस्त्रोपहिततादात्म्यं प्रतीयते, न तु मालिन्योपहिततद्वस्त्रोपहितस्येति दार्ष्टान्तिकेऽपि संस्कारोपहिताविद्यादिमद्भेदस्य विश्वादिष्वस्वीकारे तात्पर्यमिति बोध्यम्। **भेदेनापीति**। बिम्बत्वोपहितस्य साक्षित्वपक्ष इति शेषः। **तद्व्याप्येति**। अविद्याचितोस्सम्बन्धादीत्यर्थः।

**साभासेत्यादि**। साभासा अविद्या तद्व्याप्यैश्चैतन्यसम्बन्धादिभिः सहिता अव्याकृतमित्युच्यते इति योजना। **बीजशक्तिरूपेति**। प्रयोजकशक्तितादात्म्यापन्नेत्यर्थः। शक्तिश्च त्रिधा। अदृष्टप्रपञ्चसंस्काररूपा सूक्ष्मावस्था अज्ञाननिष्ठावरणविक्षेपशक्ती च। एवं चादृष्टादीनां व्याकृतमध्ये निवेशाभावेऽपि न क्षतिः। अत एव वक्ष्यति 'पूर्वपूर्वसंस्करजीवकर्मप्रयुक्ते'ति। ननु चैतन्याविद्यासम्बन्धादेरविद्याकार्यत्वाभावात् कथं तद्व्याप्यता? तत्राह—**तदजन्यत्वेऽपीति, तन्निवृत्तौ निवर्तमानत्वेनेति**। यद्यपि तन्नाविद्याकार्यं तथापि यदा यदा चैतन्यतत्सम्बन्धादि तदा तदाऽविद्येति कालिकव्याप्तिरस्त्येव। अविद्योच्छेदक्षण एवाविद्याचित्सम्बन्धादेरप्युच्छेदात्। शुक्त्याद्यवच्छिन्नचिदविद्यासम्बन्धादौ तथादर्शनात्। **चैतन्यतत्सम्बन्धेति**। चिदविद्यासम्बन्धेत्यर्थः। **जीवेश्वरविभागेति**। जीवेशभेदेत्यर्थः। जीवेशयोस्तु दृश्यन्तर्भावः, नाव्याकृते दृश्ये। **चिदाभासेति**। चित्तादात्म्यापन्नाभासेत्यर्थः साभासेत्यने-

पदार्थ ईश्वरोपाधिः। सा च स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकान्याकाशवायुतेजोजलपृथिव्याख्यानि पञ्चमहाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया अविद्याया उत्तरोत्तरं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशः। एवमविद्यात एवान्धकारोऽपि भावरूप एवावरणात्मा चाक्षुषज्ञानविरोधी आलोकनाश्यश्च झटिति महाविद्युदादिवदाविर्भवति तिरोभवति चेति सिद्धान्तः। संसारहेतुदेहोपादानत्वाभावाच्च न श्रुतिषु सृष्टिप्रक्रियायामाम्नात इत्यविरोधः। दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ। आकाशस्यैव दिग्व्यवहारजनकत्वसम्भवात् 'दिशः श्रोत्रमि'ति श्रुतेश्च। कालस्त्वविद्यैव। तस्या एव सर्वाधारत्वादिति।

---

नैवाभासस्य लब्धत्वेऽपि तस्य तद्गतचित्तादात्म्यस्य चाविद्याव्याप्यतालाभाय चिदाभासेत्युक्तम्। तथा च अनादिपञ्चकमेव शक्तिद्वयसंस्कारादृष्टसहितमव्याकृतमित्युच्यते। व्याक्रियमाणाकाशादिकार्यान्यत्वादिति भावः। 'तद्धेदन्तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इत्यादिश्रुतिभिस्तु अव्याकृतपदार्थैकदेशस्यैवाज्ञानस्य उपादानत्वादिकमुच्यते। शक्तिद्वयोपहिताज्ञानस्य परिणामित्वात्तद्गतचिदाभासस्य **वार्तिक**मते उपादानत्वात्कर्तृत्वाच्च अज्ञानस्येव तुल्यन्यायेन अज्ञानसम्बन्धादेः कालविधया निमित्तत्वात् अदृष्टादेर्निमित्तत्वाच्चेत्याशयेनाह—**सा चेति**। चिदाभासेनोज्ज्वलिता—चिदाभासरूपेणेश्वरेणाधिष्ठिता। प्रयुक्ता—सहकृता। **गन्धात्मकानीति**। गुणगुणिनोस्तादात्म्यस्वीकारात्।

युक्तमेतत्। अत एव श्रुतौ गुणानां पृथक्सृष्टिर्नोक्ता। **भूतभावापन्नाया इति**। भूतविशिष्टाया इत्यर्थः। तथा च पूर्वपूर्वभूतानामप्युत्तरोत्तरभूतेषूपादानत्वम्। अत एवाकाशादीनां वाय्वाद्यपेक्षया महत्त्वं पुराणाद्युक्तं युज्यते। न ह्याकाशादीनां कार्त्स्न्येन वाय्वादिरूपेण परिणामः, तथासति उत्तरोत्तरोत्पत्तिकाले पूर्वपूर्वोच्छेदप्रसङ्गः, किन्त्वेकदेशेन; तथा च सुतरां पूर्वपूर्वस्य महत्त्वम्। नन्वेवं 'प्रमा स्वनाश्यत्वादिविशिष्टवस्तुपूर्विका प्रकाशत्वादालोकवदि'त्यनुमानादालोकस्य स्वनाश्यतमःपूर्वकत्वं स्वीकृत्य विवरणादिग्रन्थोक्तेः कथं सङ्गतिः? आलोकनाश्यभावरूपत्वे श्रुतिषु तत्सृष्ट्युक्त्यापत्तेः आलोकरूपतेजोऽभावरूपत्वात्तत्राह—**एवमित्यादि**। आवरणात्मकत्वं प्रकटयति—**चाक्षुषज्ञानविरोधीति**। चाक्षुषधीप्रतिबन्धक इत्यर्थः। नन्वन्वयव्यतिरेकाभ्यामालोकस्य चाक्षुषहेतुत्वात् तमसस्तत्प्रतिबन्धकत्वे मानाभावस्तत्राह—**आलोकनाश्य इति**। आलोकस्य संयोगसम्बन्धेन चाक्षुषहेतुत्वे आलोके तदभावेन चाक्षुषं नोत्पद्येत, तस्माद्विषयतासम्बन्धेन चाक्षुषं प्रति अवच्छेदकतासम्बन्धेन तमः प्रतिबन्धकम्, आलोकासम्बद्धद्रव्यावच्छिन्नचैतन्ये तमउत्पत्त्या तत्र न चाक्षुषोत्पत्तिः, आलोकावच्छिन्नचैतन्ये तमोऽनुत्पत्त्या तत्र चाक्षुषोत्पत्तिः। आलोकस्य तमोनाशकत्वेन चाक्षुषोपयोगितया तदन्वयव्यतिरेकावुपक्षीणाविति भावः। ननु तर्हि तमसः सृष्टिः कथं न श्रूयते? तत्राह—**संसारेति**। देहमध्ये तमस्सत्त्वे मानाभावेन तमसो न देहोपादानत्वम्, आकाशं त्ववकाशदानाय देहान्तरस्त्येवेति भावः। **दिक्कालाविति**। क्लृप्तपदार्थान्याविति शेषः। श्रुतिषु सृष्टिप्रक्रियायामित्यनुषज्यते। **आकाशस्यैवेति**। पराभिमतदिश इव आकाशस्य सर्वगतत्वात् दिक्कृतविशेषणतासम्बन्धेन सर्वाधारत्वसम्भवात् उदयाचलसन्निकृष्टमूर्तविशेषोपहितत्वादिरूपेण प्राचीत्वादिसम्भवादिति भावः। ननु आकाशः अविद्यादिकं वा दिगित्यत्र विनिगमकाभावात् अतिरिक्ता दिगास्ताम् तत्राह—दिश

**तानि च सूक्ष्माण्यपञ्चीकृतानि पञ्च महाभूतान्यमूर्ताख्यानि कारणैक्यात्सत्त्वरजस्तमोगुणात्मकानि सत्त्वांशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्ररूपमिव मिलित्वा जनयन्ति । तस्य च ज्ञानशक्तिप्रधानांशोऽन्तःकरणम् । तच्च बुद्धिर्मन इति द्विधोच्यते । क्रियाशक्तिप्रधानांशः प्राणः । स च पञ्चधा-प्राणोऽपानो व्यान उदानस्समान इति । एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकमिन्द्रियद्वयं जायते । आकाशाच्छ्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुष्पादौ, अद्भ्यो रसनपायू, पृथिव्याः घ्राणोपस्थौ । अत्र 'तेजोमयी वागि'ति श्रुतेस्तैजसी वाक् । पादस्तु नाभस इति केचित् । शब्दव्यञ्जकेन्द्रियत्वेन श्रोत्रवद्वाचो नाभसत्वम् । पादचिकित्सया च चक्षुषः स्वास्थ्यदर्शनाच्चक्षुर्वत्पादस्यापि**

---

**इति ।** दिग्जन्यमित्यर्थः । तथा च श्रुतिरेव आकाशस्य दिक्त्वे मानम्, नाभसत्वेन प्रमितस्य श्रोत्रस्य दिग्जन्यताबोधकत्वादिति भावः । **अविद्यैवेति ।** ननु नेदं युक्तम्, प्रतिबिम्बत्वोपहितं जीवं प्रत्यविद्याया आधारत्वेऽपि ईशं प्रति तत्सत्त्वे मानाभावः, शुद्धं प्रति तु सुतराम्, तस्यैव सर्वाधारत्वात्; तत्राह—**तस्या एवेति ।** सर्वाधारत्वात् कालिकसम्बन्धेन स्वेतरसर्वाधारत्वात् । ईशादिकमपि तत्सम्बन्धेन तद्वृत्ति, शुद्धचितस्तु तत्तद्वृत्तित्वाभावेऽपि न क्षतिः । 'ज्ञः कालकालो गुणी सर्वविद्य' इत्यादिश्रुतिषु सर्वदृश्याधारकालाधारत्वात्, 'चक्षुषश्चक्षुरि'त्यादिश्रुतिषु दृश्यभासकचक्षुरादिभासकत्ववत् । वस्तुतस्तु महाकाले मानाभावः, इदानीमिदमित्यादिबुद्धेर्जन्यमात्ररूपखण्डकालमात्रविषयकत्वमेव । अयं साभासाविद्यारूपः, अविद्यागताभासाविविक्तचित एव ईश्वरत्वस्योक्तत्वात् । साभासाविद्यायां ईश्वरोपाधित्वमिति भावः । स्वच्छत्वसम्पादनायाह—**सत्त्वांशप्राधान्येनेति ।** ज्ञानक्रियाशक्त्यात्मकं ज्ञानक्रिययोर्जननानुकूले ये शक्ती, तद्विशिष्टम् । धर्मधर्मिणोस्तादात्म्यात् तदात्मकत्वोक्तिः । प्रधानः—उपहितः । **बुद्धिर्मन इति द्विधेति ।** बुद्धेरप्यहमित्याकारकनिश्चयतदन्यनिश्चयरूपवृत्तिभेदेनाहङ्कारोऽनहङ्कारश्चेति द्वैविध्यम् । मनोऽपि द्विविधं संशयवृत्त्या चित्तम्, सङ्कल्पादिवृत्तिभिरचित्तम् । 'कामस्सङ्कल्पो विचिकित्से'त्यादि 'एतत्सर्वं मन एवे'त्यादिश्रुतेः । **प्राण इत्यादि ।**

'हृदि प्राणो गुदेऽपानस्समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानस्सर्वशरीरगः ॥

इति हृदयाद्यवच्छिन्नक्रियाजनकत्वमेव प्राणत्वादिकमिति भावः । **शक्तिभेदादिति ।** द्वयं द्वयमिति योजना । तथा चैकैकभूतेभ्यो ज्ञानशक्तिमदेकैकं क्रियाशक्तिमदेकैकं चेत्यर्थः । **शब्दव्यञ्जकेत्यादि ।** वागिन्द्रियस्य शब्दोत्पादनद्वारा शब्दव्यञ्जकत्वम् । **पादचिकित्सयेत्यादि ।** तथा च संस्कृतस्य पादस्य चक्षुस्स्वास्थ्योत्पादनद्वारा रूपव्यञ्जकत्वात्तैजसत्वमिति भावः । एवं त्वचस्स्पर्शव्यञ्जकत्वेन पाणेः क्रियाशक्त्याधिक्येन वायवीयत्वम् । स्पर्शो हि वायावेव प्रथममभिव्यक्तत्वाद्वायोरेव गुणः । वायूपादानकत्वात् भूतान्तरेऽनुगच्छति । एवं वायोरेव क्रियाशक्तिः, चलस्वभावत्वात् । तत्सम्बन्धादन्यत्रापि । अत एव शब्दस्याकाशमात्रगुणत्वात्तद्व्यञ्जकयोश्श्रोत्रवाचोर्नाभसत्वम् । रसनेन्द्रियस्य रसव्यञ्जकत्वेन जलीयत्वम्, पायोस्तु जलवन्मलशोधकत्वेन तत् । घ्राणस्य गन्धव्यञ्जकत्वेन पार्थिवत्वम्, उपस्थस्य तु दुर्गन्धातिशयव्यञ्जक-

**तैजसत्वमिति तु युक्तमुत्पश्यामः। तेजोमयत्वश्रुतिस्तु मनसः पञ्चभूतकार्यस्यापि अन्नमयत्वश्रुतिरिव तदुपकार्यतया व्याख्येया। मनसश्च पञ्चभूतगुणग्राहकत्वेन तद्वत्त्वनिश्चयात्पञ्चभूतात्मकत्वमित्यन्यदेतत्।**

---

त्वात् तत्। श्रुतिपुराणवाक्यादीनि सर्वत्र साधकानि सन्त्येव। **तदुपकार्यतयेति**। तैजससुवर्णादिभक्षणोपकार्यतयेत्यर्थः। ननु मनसः पाञ्चभौतिकत्वे किं मानम्? तत्राह—**मनसश्चेति**। तद्वत्त्वनिश्चयात्—पञ्चभूतगुणवत्त्वनिश्चयात्। **अन्यदेतदिति**। यथा 'चक्षुस्तेजोमात्रोपादानकम्, रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् प्रभादिवदि'त्याद्यनुमानैः चक्षुरादीनां तेजोमात्रोपादानकत्वादिकं सिध्यति तथा 'मनः पञ्चभूतोपादानकम्, पञ्चभूतगुणानां ग्राहकत्वादि' त्यनुमानेन मनसः पाञ्चभौतिकत्वं सिध्यति। तार्किकादिमते तु तस्याणुत्वात् पञ्चभूतानारभ्यत्वेन न तथानुमानमिति भावः।

**पाठान्तरम्**

अत्रायमधिको भिन्नश्च पाठः। तत्र दृष्टान्तमाह—मनस इति। अन्तःकरणाख्यलिङ्गशरीरभागस्य। पञ्चभूतकार्यस्यापीति—उक्तश्रुतिभिरपञ्चीकृतपञ्चभूतकार्यस्यापि। अन्नमयत्वश्रुतिवत्—'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषम्भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन' इत्याद्युपक्रम्य 'अन्नमयं हि सोम्य मन' इति त्रिवृदन्नकार्यत्वबोधकश्रुतिवदित्यर्थः। वायुभुजामपि मोददर्शनाल्लोकान्तरगतिसमर्थस्य स्थूलभूतकार्यत्वायोगात्पञ्चभूतगुणग्राहकस्य पृथिवीमात्रकार्यत्वायोगाच्च श्रुतिर्न यथाश्रुतार्थपरा किन्तु मनःस्थूलान्नोपकार्यमित्यर्थपरा। उपकार्यता च तत्कृतोपचयवत्त्वेन तत्कृतबलवत्त्वेन वेति अन्यदेतत्। एवमापोमयः प्राण इति श्रुतिः प्राणाख्यलिङ्गशरीरभागस्य न जलकार्यत्वबोधिका तस्यापि अपञ्चीकृतभूतकार्यत्वात्। तैः सर्वैः सहितैः प्राणो वृत्तिभेदात् पञ्चधा। इत्यादिवाक्यैः सिद्धान्ते तथा प्रतिपादनात्। समानयुक्तित्वाच्च। तस्मात् 'अन्नमयं हि सोम्य मनः आपोमयः प्राण' इति श्रुतेः यथाश्रुतार्थबाधवत् 'तेजोमयी वाग्' इति श्रुतेः यथाश्रुतार्थबाध इष्ट इति भावः। ननु कथं तर्हि मनसो भौतिकत्वसिद्धिः? तत्राह—मनसश्चेति। अन्तःकरणाख्यलिङ्गशरीरभागस्य तु इत्यर्थः। पञ्चभूतगुणग्राहकत्वेन पञ्चभूतानां पृथिव्यप्तेजोवायुगगनानामसाधारणगुणाः पञ्चभूतगुणाः गन्धरसरूपस्पर्शशब्दास्तेषां ग्राहकं पञ्चभूतगुणग्राहकं पञ्चभूतगुणानामपरोक्षप्रत्यक्षस्य जनकं तस्य भावः तत्त्वं तेन पञ्चभूतासाधारणगुणप्रत्यक्षजनकत्वेनेति यावत्। अत्र कालादृष्टादौ व्यभिचारवारणाय हेतौ इन्द्रियत्वं देयम्। तथा चायं प्रयोगः 'मनः पञ्चभूतगुणवत्पञ्चभूतारब्धं पञ्चभूतासाधारणगुणप्रत्यक्षजनकेन्द्रियत्वात् यदिन्द्रियं यद्भूतासाधारणगुणग्राहकं भवति तत्तद्भूतासाधारणगुणवत्तद्भूतोपादानकं भवति, यथा घ्राणादिकं पृथिव्यसाधारणगुणं गन्धादिग्राहकं गन्धादिमत् पार्थिवमिति। न च घ्राणादीनां गुणप्रत्यक्षं प्रति असाधारणकारणत्वात् मनसश्च ज्ञानसामान्यं प्रति कारणस्य गुणप्रत्यक्षं प्रति साधारणकारणत्वात् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति वाच्यम्। विषयसाधारणरूपचाक्षुषं प्रति चक्षुष इव विषयसाधारणगुणप्रत्यक्षं प्रति विषयमनोयोगस्याहेतुत्वे मनसोपि असाधारणत्वाद् वैषम्याभावात्। एतत्सर्वमभिप्रेत्योक्तं **वार्तिककारपादैः**—

स्वग्राह्यार्थसजातीयमिन्द्रियं स्यात्प्रदीपवत्। रूपस्यैवावभासित्वान्न चेत्स्याच्चित्ररूपवत्॥
न चेदर्थसजातीयं सर्वार्थग्रहणं भवेत्। एकैकस्येन्द्रियस्येह मनोबुद्ध्योर्यथा तथा॥
सर्वभूतात्मकत्वात्तु सर्वार्थग्रहणं तयोः।

इत्यादि। न चाहङ्कारिकत्वादिबोधककपिलादिस्मृतिविरोधात्तर्कोऽप्रमाणं तत्राह—अन्यदिति।

**एतेषामधिष्ठातारो देवा अपि ज्ञानक्रियाशक्तिप्रधानाः—दिगग्नी, वातेन्द्रौ, आदित्यविष्णू, वरुणमित्रौ, अश्विप्रजापती। तत्र ज्ञानशक्तिसमष्टिरन्तःकरणम्। क्रियाशक्तिसमष्टिः प्राणः। शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि। त्वक्चक्षुषी स्वग्राह्यगुणाश्रयं द्रव्यमपि गृह्णीतः। श्रोत्रमपि चक्षुर्वत् गत्वा शब्दग्राहकम् दूरे शब्द इति प्रत्ययात्। वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि। एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गं ज्ञानशक्तिप्राधान्येन हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन सूत्रमिति चोच्यते। अयममूर्तपदार्थः कार्यत्वाद्व्यष्टौ समष्टौ च जीवोपाधिरेव। तानि च तथाभूतानि**

---

एतेषां—ज्ञानक्रियेन्द्रियाणाम्। ज्ञानक्रियाशक्तिप्रधानाः—ज्ञानक्रिययोर्जननानुकूलशक्तिमन्तः। ज्ञानशक्तिसमष्टिः—ज्ञानेन्द्रियाणां सहकारि, क्रियाशक्तिसमष्टिः क्रियेन्द्रियाणां सहकारी। ननु देवानामधिष्ठातृत्वे किं मानमिति चेत्, उच्यते। अचेतनस्य रथादेः चेतनाधिष्ठानेनैव क्रियादर्शनात् जीवस्यापरोक्षज्ञानरूपाधिष्ठानविषयत्वस्येन्द्रियादिष्वसम्भवात् इन्द्रियापरोक्षज्ञानवन्तो देवा एव अधिष्ठातारो न जीवः। **अथ** कर्मेन्द्रियेषु किं मानमिति चेत्तदुच्यते। 'श्रोत्रं च श्रोतव्यं च वाक्च वक्तव्यं चे'ति श्रुतौ श्रोत्रादीनामिव वागादीनामपि सविषयकत्वेनोक्तिरेव। **शब्देत्यादि।** शब्दादिनामिव तद्वृत्तिजातीनामपि ग्राहकाणि बोध्यानि। **गृह्णीत इति।** द्रव्याविषययोः चाक्षुषस्पार्शनयोरनुपलम्भादिति शेषः। ननु श्रोत्रस्य केन सन्निकर्षेण शब्दग्राहकत्वम्? स्वाश्रयाकाशसमवेतत्वेनेति चेत्, तर्हि श्रोत्रस्य श्रावणप्रत्यक्षहेतुत्वे मानाभावः। शब्दे विद्यमाने श्रोत्रसन्निकर्षस्य सदा सत्त्वेन तद्व्यतिरेकेण कार्यव्यतिरेकानुपलम्भात्। **अथ** स्पर्शादिषु श्रावणादिप्रत्यक्षवारणाय विषयतया श्रावणं प्रति शब्दत्वादिना हेतुत्वस्य वाच्यतया तद्बलात्सर्वेषु शब्देषु सर्वेषां पुरुषाणां प्रत्यक्षं कुतो न स्यादिति चेन्न।

शब्दनिष्ठविषयतासम्बन्धेन तत्पुरुषीयश्रावणं प्रति तत्पुरुषीयकर्णगोलकस्यावच्छेदकतासम्बन्धेन हेतुत्वात्, तस्माच्छ्रोत्रस्येन्द्रियत्वे मानाभावः तत्राह—**श्रोत्रमपीति।** गत्वा—शब्दावच्छेदकदेशेन संयुज्य। ग्राहकं—शब्दस्य प्रत्यक्षजनकम्। 'दूरे शब्द' इति प्रत्ययात्—'अयं श्रुतः शब्दः दूरस्थः विलक्षणध्वनिविशिष्टत्वा' दित्यनुमितेः। तथा च स्वसंयुक्तावच्छिन्नत्वसम्बन्धेन श्रोत्रं शब्दस्य ग्राहकमिति तादृशसम्बन्धाभावकाले तत्पुरुषीयशब्दप्रत्यक्षानुपपत्त्या श्रोत्रस्य शब्दग्राहकत्वमावश्यकम्। शब्दस्य नाकाशसमवेतत्वं किन्तु भेर्यादिसमवेतत्वमिति स्वीकारे तु स्वसंयुक्तसमवेतत्वमेव सम्बन्धः समवेतत्वं तादात्म्यम्। एवं च तत्पुरुषीयकर्णस्यावच्छेदकतासम्बन्धेन न हेतुत्वम्। तत्पुरुषीयकर्णावच्छेदेनानुत्पद्यमानस्यापि दूरस्थस्य शब्दस्य तत्पुरुषीयश्रोत्रेण ग्रहणात्। तार्किकादिमते तु गगनरूपत्वेन श्रोत्रस्य देशान्तरे गत्यसम्भवादुक्तरीत्या शब्दाग्राहकत्वमिति भावः। सप्तदशकं 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वित' मिति सप्तदशसङ्ख्याकं लिङ्गं यावत्संसारकालमनपायितया आत्मोपाधित्वेनात्माभिव्यञ्जकम्। **ज्ञानशक्तीति।** ज्ञानशक्तिसमष्टीत्यर्थः। **हिरण्यगर्भ इति।** हिरण्यमिव प्रकाशजनको ज्ञानशक्तिरूपो गर्भो यस्येति व्युत्पत्तिः। **क्रियाशक्तीति।** क्रियाशक्तिसमष्टीत्यर्थः। सूत्रं सर्वशरीरावच्छिन्नहस्तादिक्रियाजनकत्वेन सूत्रवदनु-

भूतानि भोगायतनं शरीरं भोग्यं च विषयमन्तरेण भोगं जनयितुमशक्नुवन्ति जीवकर्मप्रयुक्तत्वात्स्थौल्याय पञ्चीकृतानि भवन्ति। तत्र च प्रत्येकं पञ्च भूतानि द्विधा विभज्यन्ते। तत्रैकैको भागश्चतुर्धा विभज्यते। तद्भागचतुष्टयं च स्वभागं विहायेतरभूतचतुष्टयार्धभागेषु प्रविशतीति स्वस्यार्धभागेनेतरेषामष्टमभागेन च पञ्चीकरणान्मेलनेऽप्याधिक्यादाकाशादिशब्दप्रयोगः।

अत्र च 'त्रिवृतं त्रिवृतमेकैकां करवाणी'ति श्रुतेः 'त्रिवृत्कुर्वत उपदेशादि'ति सूत्राच्च त्रयाणामेव मेलनप्रतीतेश्च त्रिवृत्करणमेव केचिन्मन्यन्ते। ते वियदधिकरणन्यायेनैव निराकृताः। तथा हि तैत्तरीयके 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः आकाशाद्वायुरि'त्यादिश्रुतेः छान्दोग्ये च त्रयाणां तेजोऽबन्नानां सृष्टिश्रवणेऽपि द्वयोरुपसंहारः। तेजः प्राथम्यपदार्थधर्मापेक्षया आकाशवायुपदार्थयोर्बलीयस्त्वात्। छान्दोग्ये चैकविज्ञानेन

---

स्यूतम्। **कार्यत्वादिति।** सोपाधिकेश्वरस्य सर्वकार्यजनकत्वात् कार्यं नेशोपाधिरिति भावः। अशक्नुवन्तीति शतृप्रत्ययान्तम्। स्थौल्याय–शरीरादिनिष्ठस्थौल्यप्रयोजकं स्थौल्यं लब्धुम्। पञ्चीकरणस्वरूपमाह—**तत्रेत्यादि।** तत्र द्विधाकृतभागयोः। स्वभागं—द्विधाकृतभागयोश्चतुर्धात्वमनापन्नमवशिष्टमेकम्। **इतरेषामष्टमभागेन चेति।** आकाशादीमर्धभागं प्रविष्टः इतरेषामेकैको भागः सोऽष्टमः। आकाशादेर्भागचतुष्टयात्मकोऽर्धभागः इतरेषां भागचतुष्टयं चेत्यष्टभागात्मकमेकैकं भूतं जातमिति भावः। आधिक्यात्—आकाशादिभागचतुष्टयस्याकाशादिशब्दवाच्ये प्रविष्टवाय्वादिभागापेक्षयाऽऽधिक्यात्। तथा च यत्राकाशस्यार्धं तत्रैवाकाशत्वजातिः, एवं यत्र वाय्वादेरर्धं तत्र वायुत्वादिजातिरिति स्वीकारात् तद्वाचकाकाशादिपदस्य प्रयोग इति भावः।

त्रिवृतं—त्रिभागम्। पूर्ववत् त्रयाणां भूतानां द्विधा द्विधा विभागं कृत्वा स्वीयमर्धमितरार्धीयभागद्वयस्यैकैकेन संयोज्य तेज आदिभूतं तदीयार्धेन इतरीयार्धयोर्भागद्वयेन च त्रिभागं करवाणीत्यर्थः। केचित्—**वाचस्पतिमिश्रकल्पतरुकारादयः।** **तदुक्तं कल्पतरौ—**

सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।
तथापि युक्तिदृष्टत्वाद्वाचस्पतिमतं शुभम्॥

मतं त्रिवृत्करणमिति शेषः। इत्यादिश्रुतेरित्यादिपदेन छान्दोग्यीयसप्तमाध्यायस्थस्य 'आत्मत आकाशः आत्मतो वायु'रित्यादिवाक्यस्य सङ्ग्रहः। छान्दोग्ये 'तत्तेजोऽसृजते'त्यादिषष्ठाध्यायस्थवाक्ये। द्वयोः—आकाशवाय्वोः। **तेजः प्राथम्येत्यादि।** यथा वेदवेदिकरणयोर्मध्ये क्षुते जाते 'वेदं कृत्वा वेदिं करोती'ति श्रुतिबोधितस्यापि क्रमस्य बाधेन 'क्षुत आचामे'दिति शास्त्रबोधितमाचमनमनुष्ठीयते। पदार्थधर्मक्रमापेक्षया पदार्थस्य बलवत्त्वात्, तथा प्रथमोक्तत्वेन लब्धस्य तेजसि प्राथम्यस्य बाधेनाकाशवाय्वोस्सृष्टिबोधकवाक्ये उपसंहारः कल्प्यते इति भावः। उपसंहारे हेत्वन्तरमाह—**छान्दोग्ये-**

**सर्वविज्ञानप्रतिज्ञानादाकाशवाय्वोरचेतनयोर्ब्रह्मकार्यत्वस्यावश्यवाच्यत्वात् । तत्र पञ्चानामेव मेलनेऽप्यवयुत्यानुवादेन त्रिवृत्करणोपपत्तिः । त्रिवृतमेवेति मतकल्पनायां वाक्यभेदप्रसङ्गः । 'त्रिवृत्कुर्वत उपदेशादि'ति सूत्रं त्वनुवादकत्वान्न पञ्चीकरणं न्यायसिद्धं बाधितुमुत्सहते । मेलनप्रतीतिश्च शरीरादौ पञ्चानामविशिष्टैव । 'पञ्चीकृतपञ्चमहाभूतानी'ति च भाष्यकारवचनम् । तस्मादलमनेनानात्मचिन्तनेनेति दिक् । तानि च पञ्चीकृतानि पञ्च महाभूतानि मूर्ताख्यानि मिलित्वैकं कार्यमिन्द्रियाणामधिष्ठानं भोगायतनमुत्पादयन्ति ।**

---

**चैकेत्यादि । ब्रह्मकार्यत्वस्येति ।** अचेतनत्वेन ब्रह्मस्वरूपत्वासम्भवेन ब्रह्मकार्यत्वेनाकाशवाय्वोः ब्रह्मतादात्म्यं स्वीकृत्यैव ब्रह्मज्ञानेनाकाशवायुज्ञानमुपपाद्यमिति भावः ।

**नन्वविद्यादेरनादित्वेऽपि** ब्रह्मणि तादात्म्येन कल्पितत्वात्तादृशप्रतिज्ञोपपादनं कर्तव्यम् । तथाचाकाशवाय्वोरनादित्वमपि कुतो नोच्यते ? न चाविद्यादेरावरणत्वाद्युपपादनाय ब्रह्मणि तादात्म्येन कल्पितत्वं युक्तम्, तादात्म्यस्य क्वचित् स्वीकृतत्वेन तदन्यसम्बन्धकल्पने गौरवात्, अनुपपन्नत्वेन चाविद्यादेः कल्पितत्वात् नाद्वैतविरोधित्वम्, वाय्वाकाशयोस्तु ब्रह्मतादात्म्ये न मानमिति वाच्यम् । दृश्यत्वाद्यन्यथानुपपत्त्या तयोरपि तथात्वस्यौचित्यात् । **अत्रोच्यते**—उक्तरीत्या तयोर्मिथ्यात्वे सिद्धे तैत्तिरीयश्रुत्यबाधाय उत्पत्तिकल्पनं युक्तमेव । ब्रह्मणि कल्पितयोर्ब्रह्मज्ञाननाश्यत्वस्यावश्यकत्वेन तार्किकादिस्वीकृताविनाशित्वादेस्त्याज्यत्वादिति भावः । अवयुत्यानुवादेन—पञ्चीकरणस्य न्यायसिद्धस्यैकदेशोक्तित्वेन, उपपत्तिः—कथनोपपत्तिः । ननु 'अब्भक्षो वायुभक्ष' इत्यादिवत् सावधारणेयमुक्तिः, तथा च त्रिवृतमेव, न पञ्चीकृतमित्यर्थः तत्राह—**त्रिवृतमेवेति ।** वाक्यभेदः 'त्रिवृतं करवाणि, पञ्चीकृतं न करवाणो'त्यर्थद्वयभेदेन तद्बोधकवाक्यभेदः स्यादित्यर्थः । न्यायमेवाह—**मेलनप्रतीतिरिति ।** मेलनविषयिका धीः पृथिव्यादौ प्रत्यक्षरूपा यथास्ति, तथा वायोरपि शीतस्पर्शयुक्तजलविशिष्टतया उष्णस्पर्शविशिष्टतेजोविशिष्टतया सुरभिपार्थिवादिभागविशिष्टतया च धीरस्ति । तथाऽऽकाशस्यापि तेजःपार्थिवादिभागविशिष्टतया चाक्षुषादिरूपा साक्षिरूपा वा धीरस्ति । तथा च वाय्वाकाशयोरितरभूतसंसृष्टत्वस्यावर्जनीयतया पञ्चीकरणमेव भूतानां व्यवहार्यत्वे प्रयोजकम्, नार्धजरतीयं त्रिवृत्करणम् । किञ्च 'यदग्ने रोहितं रूपमि'त्यादिनाऽग्न्यादेस्तेजआदिभूतत्रयरूपत्वमुक्त्वा 'यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास' इति श्रुत्या भूतमात्रस्यैव तेजआदिभूतत्रयरूपत्वमुक्तम् । यद्भूतत्रयवत्त्वेन पूर्वोक्तेन नोपलभ्यते वाय्वादिकं तदेतासां तेजआदिस्वरूपाणां देवतानां समासस्समुदाय एवेति तच्छ्रुतेरर्थः । तथा च यद्योगप्राथम्येन यद्यत् रूपत्रयवत्त्वेनाप्रत्यक्षं तत्सर्वं तेजआदित्रयसमुदाय एवेत्यर्थलाभात् श्रुत्यैवाकाशादेस्तेजआदिभागघटितत्वोक्तेः कथं पञ्चीकरणे विवादः । न चैवकारेण तेजआदित्रयमात्रात्मकत्वं बोध्यत इति वाच्यम् । वाय्वाकाशादेरप्यविज्ञातपदार्थत्वेन कार्त्स्न्यबोधकयद्योगप्राथम्येन तत्रापि त्रयमात्रात्मकत्वस्य बोध्यत्वेन बाधादेवकारस्यायोगव्यवच्छेदकत्वनिर्णयात् । **वचनमिति ।** पञ्चीकरणनामकग्रन्थस्थमिति शेषः । अधिष्ठानं संयोगसम्बन्धेनाश्रयः ।

तदेव शरीरमित्युच्यते। तत्र सत्त्वप्रधानं देवशरीरम्। रजःप्रधानं मनुष्यशरीरम्, तमःप्रधानं तिर्यगादिस्थावरान्तं शरीरम्। तस्य च शरीरस्य पाञ्चभौतिकस्यापि चित्ररूपस्येव क्वचित् न्यूनाधिकभावो भूतानां न विरुध्यते। एवं विषया अपि पञ्चीकृतैकैकभूतजन्याश्चतुर्दशभुवनाख्या ऊर्ध्वमध्याधोभावेन सत्त्वरजस्तमोंशप्रधानाः। एतत्सर्वं ब्रह्माण्डाख्यं विराडिति मूर्तमिति चोच्यते। अयमौपनिषदः सृष्टिक्रमः।

तद्विपरीतो लयक्रमः। पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं विराडाख्यं पृथिव्याद्येकैकभूतलयेनामूर्ते अपञ्चीकृतपञ्चमहाभूतात्मके हिरण्यगर्भाख्ये स्वकारणे लीयते। स एव दैनन्दिनः प्रलयः। अमूर्तं चाव्याकृते परमेश्वरोपाधौ। अव्याकृतस्य त्वनादित्वेन कारणाभावान्न लयः। स्वकारणे सूक्ष्मरूपेणावस्थानं लय इति तल्लक्षणात्। अयमेव

---

**तदेव शरीरमिति।** 'त्वगिन्द्रियस्य साक्षादाश्रयश्शरीरमि'ति **विवरणोक्त**लक्षणात्। तिर्यगादि– पश्वादि। **चित्रेत्यादि।** यथा नीलपीतादिनानारूपसमुदायरूपस्य चित्ररूपस्य मध्ये कस्यचिद्रूपस्य रूपान्तरावच्छेदकावयवपरिमाणापेक्षयाधिकपरिमाणावयवावच्छिन्नत्वरूपमाधिक्यं तथा मनुष्यादिशरीरे भूतान्तरापेक्षया पार्थिवभागस्याधिक्यम्, देवादिशरीरे तेजोभागाधिक्यम्, वरुणादिलोकस्थशरीरे जलीयादिभागाधिक्यमित्यर्थः। पृथिव्यादेः सचराचरपृथिव्यादिहेतुत्वमित्याह—**एकैकभूतेति।** **चतुर्दशभुवनेत्यादि।** घनोदकाख्यमहाजलराशिमध्ये ऊर्ध्वाधोभावापन्नं संयुक्तं महाकटाहद्वयं तिष्ठति, तन्मध्येऽपि जलराशिः, तदुपरि महानौरिव पञ्चाशत्कोटियोजनविस्तीर्णा महापृथिवी सप्ततिसहस्रयोजनोन्नता, तस्या दशदशयोजनसहस्रपरिमितभागेभ्योऽधस्तात् एकैकं पातालम्। इत्थं सप्त पातालानि स्वर्लोकादपि रम्याणि। तानि सप्त भुवनानि। तस्या उपरि पादगम्यः सर्वो लोकः भूर्लोकः, तदुपरि भुवः स्वः महः जनः तपस्सत्यमिति षड् भुवनानि। तान्येतानि चतुर्दशभुवनानि संयुक्तकटाहद्वयमध्यस्थानि। कटाहद्वयस्योर्ध्वमपि घनोदकाख्यं महाजलमस्ति। तदेव त्रिविक्रमाख्यविष्णुचरणसरोजाङ्गुष्ठतलनिर्भेदाधीनछिद्रद्वारा कटाहान्तःप्रविष्टं शिशुमारचक्रसुमेर्वादिपतनद्वारा हिमालयमवतीर्णं गङ्गारूपेण त्रिलोकीं पावयतीति भावः। **ऊर्ध्वेत्यादि।**

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।

इत्यादिस्मृत्या ऊर्ध्वलोकानां सात्त्विकादिपुरुषप्राप्यत्वोक्तेः सत्त्वादिप्रधानतेति भावः।

**तद्विपरीत इति।** 'विपर्ययेण तु क्रमोऽत उपपद्यते चे'ति न्यायात्। **पृथिव्यादीत्यादि।** पृथिव्या जले, तस्य तेजसि, तस्य वायौ, तस्याकाशे, तस्यापञ्चीकृतभूतेषु लयेनेत्यर्थः। **दैनन्दिनेति।** सङ्कर्षणमुखानलेन भूर्भुवस्स्वारूपलोकत्रयदाहे सति तत्तापक्लान्त्या महर्लोकस्थेषु जनलोकं गतेषु हिरण्यगर्भस्य सत्यलोकस्थस्य रात्रिर्भवतीति दैनन्दिनप्रलयः। तत्र महर्लोकस्थस्य तापितत्वेन निर्जनत्वेऽप्यनाशात् जनलोकादौ च तापितत्वस्याभावात् न विराजस्सम्पूर्णस्य लयो दैनन्दिनप्रलये, किन्तु चतुर्दशभुवनैकदेशावच्छिन्नस्येति बोध्यम्। उपाधावित्यत्र लीयत इत्यनुषज्यते। **तल्लक्षणादिति।** तथा च प्रलय-

**प्राकृतः प्रलयः। ब्रह्मज्ञानादात्यन्तिक उच्छेदस्त्वात्यन्तिकः प्रलयः। स च कारणक्रमेणैव। कारणोच्छेदादेव कार्योच्छेदात्। सर्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवदपारमार्थिकमपि वासनादाढर्याद्व्यवहारक्षममिति न मायिकत्वेऽपि तुच्छत्वप्रसङ्गः। यथा चैतत्तथा व्यक्तमाकरे।**

**एवं स्थिते जागरणादिव्यवस्थोच्यते। इन्द्रियवृत्तिकालीनार्थोपलम्भो जागरणम्।**

---

बोधकश्रुतिस्मृतीनां स्वपरिणामिकारणे संस्काररूपेण कार्याणामवस्थानरूपस्य प्रलयस्य बोधकत्वादव्याकृतस्य तदसम्भवात् तत्प्रलये मानाभावः। अत एव—

"अव्याकृतं परे तत्त्वे लीयते सकलाश्रये।"
"अव्यक्तं परमात्मनि"॥"

इत्यादिवाक्यानां परिणामशून्यतयाऽवस्थानरूपभाक्तलयबोधकत्वम्। मुख्यलयबोधकत्वे 'तद्धेदं तर्ह्यव्याकृतमासीत्' नासदासीन्नोसदासीत्तम आसी'दित्यादिश्रुतिभिरव्याकृतरूपेण जगतः प्रलयकाले सत्त्वाभिधानानुपपत्तेः। **प्राकृत इति**। दैनन्दिनस्तु न प्राकृतः। प्रकृतौ संस्काररूपेणावस्थानस्यैव प्राकृतशब्दार्थत्वात्। दैनन्दिनस्तु न संस्काररूपेण पृथिव्यादेरवस्थानम्। शतवर्षीयानावृष्ट्यादिना पृथिव्यादेः शुष्कगोमयपिण्डाकारत्वादेः पुराणादिषूक्तत्वात्। किन्तूक्तपिण्डादिरूपेणैव हिरण्यगर्भेऽवस्थानम्। अत एव दैनन्दिनप्रलयसाधारणवाक्ये सूक्ष्मरूपेणेति मूले उक्तम्, न तु संस्काररूपेण। परमसूक्ष्मरूपं हि संस्कारः, न तु सूक्ष्मरूपमात्रमिति भावः।

**कारणक्रमेणेवेति**। आदौ कारणस्योच्छेदः। पश्चात् कार्यस्येत्यर्थः। **वस्तुतस्तु** कार्योच्छेदस्य पूर्वभावित्वनिरासे तात्पर्यम्। तथा च कार्यं प्रथमतो नोच्छिद्यते, किन्तु युगपदेवाज्ञानतत्प्रयुक्तोच्छेद इत्यर्थः। उच्छेदादेवेति पञ्चमी ज्ञापकहेतौ 'धूमादग्निमानि'तिवत्। न च कार्योच्छेदं प्रति कारणोच्छेदस्य हेतुत्वात् कथमेवमिति वाच्यम्। उच्छेदस्य सिद्धान्ते जन्यत्वास्वीकारादेरुक्तत्वात्। 'या या प्रमा सा सा स्वसमानविषयकाज्ञानतत्प्रयुक्तविशिष्टकालपूर्वत्वशून्यकालवृत्ति'रिति नियमेन युगपदुच्छेदस्य युक्तत्वात्, अज्ञानसम्बन्धाद्यनादिदृश्योच्छेदस्य अज्ञानोच्छेदसमकालत्वावश्यकत्वेनाज्ञानप्रयुक्तमात्रोच्छेदस्यैवाज्ञानोच्छेदसमकालताया युक्तत्वाच्च ज्ञानस्याज्ञानानाशकत्वेऽपि न क्षतिः। अज्ञानोच्छेदस्य सर्वदृश्योच्छेदव्याप्यत्वेऽपि अज्ञाननाशस्य सर्वदृश्यनाशाव्याप्यत्वात्। **वासनेति**। सत्यत्ववासनेत्यर्थः। व्यवहारक्षममिति–मिथ्यात्वज्ञानात्पूर्वमूर्ध्वं वा तत्त्वसाक्षात्कारात्पूर्वं निष्कम्पप्रवृत्त्यादिक्षमम्, तत्त्वे साक्षात्कृते तु नैव प्रवृत्त्यादिकम्, बलवत्तरकर्मवशात् सकम्पम्। तदुक्तम्—

'शास्त्रेण नश्येत्परमार्थबुद्धिः कार्यक्षमं नश्यति चापरोक्षात्। इति। **व्यक्तमाकर इति**। उक्तं हि भाष्यादौ—'ननु भवन्मते जगतोऽसत्त्वेन तुच्छत्वमिति चेत्, क एदमाह—जगत्तुच्छमिति। आविद्यकत्वात् सदसद्विलक्षणमित्यस्मद्दर्शनम्। अथ पुनर्विद्योदये तुच्छमुच्यतें काममुच्यताम्, न त्वेतावता तत्पूर्वव्यवहारस्यानुपपत्ति'रिति।

**इन्द्रियवृत्तीति**। स्वसमानाधिकरणा या इन्द्रियजन्यवृत्तयः, तत्कालीनोऽर्थोपलम्भ इत्यर्थः। स्वपदमर्थोपलम्भपरम्। यदि च जागरे सर्वदा इन्द्रियवृत्तौ न प्रमाणम्, कदाचिदनुमित्यादेरेव

**तत्र च मूर्तं विराडाख्यं भोग्यं प्रत्यक्षादिप्रमाणषट्केन व्यवह्रियमाणत्वाद्व्यावहारिकं विश्वाख्येन जीवेनोपभुज्यते। स च देहेन्द्रियादिषु प्रवेशात् व्यापनाद्वा विश्व इत्युच्यते। विश प्रवेशने विष्लृ व्याप्ताविति च स्मरणात्। अत्र यद्यपि विश्वेनामूर्तमव्याकृतं चानुमानादिनाऽनुभूयते, तथापि व्यावहारिकं सर्वं विश्वेनैव ज्ञायत इति नियमात् स्थूलशरीरोपाध्यभिमानित्वाच्च न तस्यावस्थान्तरव्यापकत्वम्। शुक्तिरजतादिज्ञानानामप्रामाणिकत्वात्तद्विषयस्याव्यावहारिकत्वेऽपि इन्द्रियव्यापारकालीनत्वाज्जागरणत्वोपपत्तिः। ज्ञानोत्पत्त्यादिप्रक्रिया चाधस्तादुक्तैव। एवं जाग्रद्भोगजनककर्मक्षये स्वाप्नभोगजनककर्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमाने दूरीकृते सर्वेन्द्रियेषु देवतानुग्रहाभावान्निर्व्यापारतया लीनेषु विश्वोऽपि लीन इत्युच्यते। तदा च स्वप्नावस्था।**

---

सम्भवात्, तदेन्द्रियवृत्तिपदं प्रमापरं बोध्यम्। प्रमाणषट्केन—अज्ञाताबाधितविषयकधीरूपप्रमित्यादिषट्केन। प्रत्यक्षानुमानशब्दानामिवोपमानार्थापत्त्यनुपलब्धीनामपि पृथगेव प्रमाणत्वम्। गोसादृश्यविशिष्टगवयादिप्रत्यक्षोत्तरं 'स गौरेतद्गवयसदृश' इति ज्ञानस्य मानान्तरानवतारकालीनस्योपमानमात्राधीनत्वात्, व्यतिरेकव्याप्तिज्ञानजन्यज्ञानस्यानुमितित्वे मानाभावात्, अर्थापत्तित्वस्यैवान्वयव्याप्तिज्ञानजन्यज्ञाने स्वीकारेणानुमितित्वलोपापत्तेश्च अर्थापत्तिप्रमाणस्यान्यस्यावश्यकत्वात्, प्रतियोग्यनुपलब्धिजन्याया अभावप्रमाया इन्द्रियसन्निकर्षादिजन्यत्वे मानाभावेनानुपलब्धित्वजात्याश्रयतादृशप्रमाकरणत्वस्यानुपलब्धावेवोचितत्वात्। **व्यावहारिकमिति।** अज्ञातविषयकधीविषयत्वेनाज्ञातत्वात् ब्रह्मज्ञानात् पूर्वमबाध्यत्वाच्चप्रातीतिकान्यदृश्यत्वेन व्यावहारिकमिति भावः।

अमूर्तं—स्वाप्नं वस्तु। अव्याकृतं–सौषुप्तम्। व्यावहारिकं—व्यावहारिकप्रमाणग्राह्यम्। अवस्थान्तरव्यापकत्वम्–अवस्थान्तरभोक्तृतैजसादिवाचिपदवाच्यत्वम्। तथा च जाग्रदवस्था येनैवानुभूयते तस्यैव विश्वशब्दवाच्यतेति भावः। स्वप्नो येनैवानुभूयते स एव तैजस इत्यादेर्वक्तुमशक्यत्वेन वैरूप्यापत्तेराह—**स्थूलशरीरोपाध्यभिमानित्वाच्चेति।** स्थूलशरीरघटितोपाध्यभिमानिवाचकपदवाच्यत्वाच्चेत्यर्थः। तथा चोपाधित्रयाभिमानी विश्वशब्दस्य, द्वयमात्राभिमानी तैजसशब्दस्य, एकमात्राभिमानी प्राज्ञशब्दस्य वाच्य इति भावः। अप्रामाणिकत्वात्–अज्ञाताविषयत्वात्। **इन्द्रियव्यापारेति।** व्यावहारिकविषयकबहिरिन्द्रियजन्यमनोवृत्तीत्यर्थः। **कालीनत्वादिति।** ज्ञानानां कालीनत्वाज्जागरणत्वोपपत्तिरिति योजना। तथा च शुक्तिरूप्यादिज्ञानाव्याप्तेः इन्द्रियजन्यवृत्तित्वमात्रं न जागरणलक्षणमिति भावः। कर्मोदये–कर्मरूपसहकारिसमवधाने। **तामस्येति।** तमोगुणविषयिकयेत्यर्थः। **दूरीकृत इति।** 'अभावप्रत्ययालम्बना वृत्तिर्निद्रे'ति **पातञ्जल**सूत्रेण व्यावहारिकविषयकवृत्त्युपरमोपहिततमोगुणविषयकवृत्तेर्निद्रात्वोक्त्या देहाभिमानरूपवृत्तेर्निद्रया दूरीकरणम्। व्यावहारिकाकारवृत्त्यभावस्य प्रत्ययः = प्रयोजकः उद्रिक्ततमोगुणः तद्विषयिका वृत्तिर्निद्रेति सूत्रार्थः। **इन्द्रियेष्विति।** जाग्रद्भोगप्रदकर्माभावप्रयुक्तादिति शेषः।

**तत्र चान्तःकरणगतवासनानिमित्त इन्द्रियवृत्त्यभावकालीनोऽर्थोपलम्भः स्वप्नः। तत्र मन एव गजतुरगाद्यर्थाकारेण विवर्तते, अविद्यावृत्त्या च ज्ञायत इति केचित्। अविद्यैव शुक्तिरजतादिवत् स्वाप्नार्थाध्यासाकारेण परिणमते ज्ञायते चाविद्यावृत्त्येत्यन्ये। कः पक्षः श्रेयान्? उत्तरः। अविद्याया एव सर्वत्रार्थाध्यासज्ञानाध्यासोपादानत्वेन क्लृप्तत्वान्मनोगतवासनानिमित्तत्वेन च क्वचिन्मनः परिणामत्वव्यपदेशात्। ननु तदा मनसो दृश्याकारपरिणामानभ्युपगमे द्रष्टृत्वसम्भवेनात्मनः स्वयंज्योतिष्ट्वासिद्धिरिति चेन्न। बहिरिन्द्रियजन्यवृत्त्यभावेन तदानीं मनसोऽग्राहकत्वात्, तत्सहकारेणैव तस्य ग्राहकत्वनियमात्, सवृत्तिकान्तःकरणावच्छिन्नस्यैव चैतन्यस्य प्रमातृत्वनियमात् तदाऽन्तःकरणसत्त्वेऽपि प्रमात्रभावः। किमधिष्ठानं स्वप्नाध्यासस्य? मनोवच्छिन्नं जीवचैतन्यमित्येके। मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमित्यपरे। किं श्रेयः? मतभेदेनोभयमपि। तथा हि— जाग्रद्बोधेन स्वप्नभ्रमनिवृत्त्यभ्युपगमादधिष्ठानज्ञानादेव च भ्रमनिवृत्तेर्ब्रह्मचैतन्यस्य चाधिष्ठानत्वे संसारदशायां तज्ज्ञानाभावात्, ज्ञाने वा सर्वद्वैतनिवृत्तेर्न जाग्रद्बोधात्स्वप्न-**

---

**इन्द्रियेति**। बाह्येन्द्रियजन्येत्यर्थः। विवर्तते—परिणमते। सर्वत्र—प्रातिभासिकाध्यासस्थले सर्वत्र। क्वचित्—'सधीः स्वप्नो भूत्वे'त्यादिश्रुतौ। **नन्वित्यादि**। मनसः परिणामानभ्युपगमे मनसो द्रष्टृत्वसम्भवेनेति योजना। दृष्टृत्वं—ग्राहकत्वम्। **स्वयंज्योतिष्ट्वेति**। 'अत्रायं पुरुषस्स्वयंज्योतिर्भवती'त्यादिश्रुत्युक्तस्वयंज्योतिष्ट्वेत्यर्थः। अत्र—स्वप्ने। स्वयंज्योतिरिरिति। आदित्यादिमनोवृत्तिपर्यन्तानां ज्योतिषामभावेन स्वयमेवात्मा स्वीयव्यवहारसाधनरूपं ज्योतिरित्यर्थः। **बहिरिन्द्रियजन्येति**। प्रत्यक्षादिप्रमाणजन्येत्यर्थः। **तत्सहेत्यादि**। प्रत्यक्षादिप्रमाणजन्यमनोवृत्तावेव मनसः परिणामित्वमिति नियमादित्यर्थः। तथा चाहमित्याकारकवृत्तिरविद्यापरिणाम एवेति भावः। ननु तथापि स्वप्ने मनसस्सत्त्वे मनोविशिष्टचिद्रूपप्रमातृसत्त्वापत्तिः तत्राह—**सवृत्तिकेत्यादि**। प्रमानुकूलव्यापारवत्त्वं प्रमातृत्वं वृत्त्यसत्त्वे न सम्भवतीत्यर्थः। **मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमिति**। मूलाज्ञानावृतं ब्रह्माधिष्ठानमित्यर्थः। यथाश्रुते अज्ञानावच्छिन्नब्रह्मणः सर्वद्वैतानधिष्ठानत्वेनाग्रे[1] तज्ज्ञानात्तन्निवृत्त्युक्त्यसङ्गतेः। निवृत्त्यभ्युपगमात्—बाधाभ्युपगमात्। **ब्रह्मचैतन्यस्येत्यादि**। ब्रह्मचैतन्यस्य चाधिष्ठानत्वे जाग्रद्बोधात् स्वप्ननिवृत्तिर्न स्यादिति योजना। कर्तेति चेति चकारेण पूर्वोक्तस्य निवृत्तिर्न स्यादित्यस्य हेतुतया समुच्चयः। **कर्तृत्वेति**। तथा च सिद्धान्ते [2]'यस्मिन् कार्ये यः कर्ता स एवोपादानम्। घटादावपि कपालाकारनिर्गतमनोवृत्त्या कुलालादेः कपालाद्यवच्छिन्नचिद्रूपत्वसम्पत्त्या उपादानत्वमस्त्येवेति स्वप्ने ब्रह्मण उपादानत्वे जीवस्य कर्तृत्वं न स्यादिति भावः। 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान्रथयोगान् पथस्सृजते स हि कर्ते'ति श्रुतौ, तत्र—

---

१. सर्वद्वैताधिष्ठानत्वे जाग्रद्बोधात्तन्निवृत्त्युक्त्यसङ्गतेरिति भावः।

२. विवर्तोपादानस्य कर्तृत्वनियमात् स हि कर्तेत्यत्र जीवस्यैव स्वप्नकर्तृत्वावधारणाच्च स्वप्ने ब्रह्मण उपादानत्वे जीवस्य कर्तृत्वं न स्यादिति भावः।

**निवृत्तिः स्यात् । 'स हि कर्ते'ति च जीवकर्तृत्वश्रुतेः आकाशादिप्रपञ्चवत् सर्वसाधारण्यापत्तेश्च न मूलाज्ञानावच्छिन्नं ब्रह्मचैतन्यमधिष्ठानम् ।**

**ननु जीवचैतन्यस्यानावृतत्वेन सर्वदा भासमानत्वात् कथमधिष्ठानत्वम् ? सत्यम् । तत्रापि स्वप्नाध्यासानुकूलव्यावहारिकसंघातभानविरोध्यवस्थाज्ञानाभ्युपगमात्, स्वप्नदशायां चाहं मनुष्य इत्यादिप्रातीतिकसंघातान्तरभानाभ्युपगमात् । 'शय्यायां स्वपिमी'ति शय्यान्तरभानवत् । भानसामग्र्यभावश्च तुल्य एव । नन्वहं मनुष्य इत्यादिव्यावहारिकसंघातज्ञानस्य प्रमाणाजन्यत्वात्कथमज्ञाननिवर्तकता ?**

---

स्वप्ने, स हि–जीवो हि । अत्र जीवस्य स्वप्नानुकूलव्यापारालोचनादिमत्त्वरूपस्य स्वप्नकर्तृत्वस्यासम्भवात् अदृष्टद्वारा कर्तृत्वमेव श्रुत्योक्तम्, तच्चाकाशादाविव स्वप्नेऽपि ब्रह्मोपादानके सम्भवतोति नेदं दूषणं युक्तम् । **प्रपञ्चवदिति** । स्वप्नस्येति शेषः । **सर्वसाधारण्येति** । सर्वान् जीवान् प्रत्यापरोक्ष्येत्यर्थः ।

**भानविरोधीति** । मनोऽवच्छिन्नचिद्विषयकं यदज्ञानं तदेव व्यावहारिकशरीराद्यवच्छिन्नचिद्विषयकमपि स्वीक्रियते, अन्यथा शरीरादेस्साक्षिणा भानं स्यात्; घटाद्यवच्छिन्नचितस्तु न स्वप्नकालीनाज्ञानविषयत्वे मानमस्ति, प्रमातृरूपसाक्षिचिदुपरागाभावादेव तदभानसम्भवात् । जीवस्य जगदुपादानत्वपक्षे घटादौ साक्षिसम्बन्धस्य सदा सत्त्वेऽपि जागरणकालिकाज्ञानेनैव तदावरणादिति ध्येयम् । शय्यान्तरभानवदित्यत्र व्यावहारिकान्यशय्याभानाभ्युपगमवत् । उक्तं हि **मणिकारादिभिः** "संशयस्वप्नौ न प्रमे, अत एव 'शय्यायां स्वपिमी'त्यादौ सुषुप्तपुरुषासंसृष्टशय्या भाती"त्यादि । **भानसामग्रीति** । व्यावहारिकविषयकप्रमाकरणेन्द्रियसन्निकर्षादीत्यर्थः । **तुल्य इति** । यथा व्यावहारिके शय्यादौ प्रत्यक्षादिसामग्र्यभावः । तथा मनुष्यशरीरादावित्यर्थः । ज्ञानस्य–जाग्रद्दशागतप्रथम-

नारायणी

ननु तत्र ज्ञानलक्षणसन्निकर्षस्य भासकस्य सम्भवात्कथं सामग्र्यभावः अन्यथा 'सुरभिचन्दनम्, घटो नास्ति, घटं पश्यामि, वह्निमनुमिनोमि'इत्यादौ घटसौरभादेर्भानं न स्यात् लौकिकसन्निकर्षबाधात्, अलौकिकस्य चानङ्गीकारादिति चेन्न । सौरभाद्यंशे स्मृतित्वादेरङ्गीकारात्, ज्ञानलक्षणायाःप्रत्यासत्तित्वे मानाभावात् । न च तर्हि कथमपूर्वार्थककाव्यरचना ? अप्रसिद्धसंसर्गकस्य स्मृत्यसम्भवादिति वाच्यम् । तत्रावश्यकतत्तत्पदार्थस्मृत्या विशिष्टप्रत्यक्षमप्रकल्प्यैव तत्तत्पदस्मृतेरेव कल्पनात् । शाब्दस्यायोग्यताज्ञानेनाप्रतिबध्यतायाः कलहस्थले क्लृप्तत्वात् । उक्तपदस्मृतिजन्यशाब्दबोधादेव काव्यरचनोपपत्तेः, अक्लृप्तसन्निकर्षकल्पनमपेक्ष्य पदतदर्थोभयस्य स्मरणवृत्तिकल्पनस्यैव युक्तत्वात् । तस्मादलौकिकप्रत्यक्षान्यथानुपपत्त्या ज्ञानलक्षणप्रत्यासत्तेरसिद्धेर्न सन्निकर्षेण देशान्तरस्थरजतादे'रिदं रजतमि'ति भ्रमे भानं किन्त्वधिष्ठाने ज्ञायमानानिर्वचनीयरजतादेरेव, निर्विषयज्ञानानभ्युपगमात् । आध्यासिकतादात्म्यस्य उत्पत्तेरावश्यकत्वे विनिगमकाभावेन रजतोत्पत्तेरपि युक्तत्वाच्चेत्यन्यत्र विस्तरः । अनिर्वाच्यत्वं च सद्विलक्षणत्वे सत्यद्विलक्षणत्वम् । एतच्चार्थापत्तिप्रमाणकम् । तथाहि—सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत, विरोधाच्च न सदसदात्मकम्, अतः सदसद्भिन्नमिति । तस्मात्सिद्धा-

**अवस्थान्तरान्यथानुपपत्त्या तत्कल्पने सुषुप्तावपि स्वप्नबाधकज्ञानमास्थीयेत। तच्चानिष्टम्, जाग्रत्त्वापत्तेरिति चेत्, साध्ववोचः। स्वप्नावस्थाज्ञानस्यैवान्तःकरणलयसहितस्य सुषुप्तिरूपत्वान्न तत्र तद्बाधः। जागरणे तु मिथ्यैव स्वप्नोऽभादित्यनुभवादहमिति ज्ञानस्य प्रमाणाजन्यत्वेऽपि यथार्थत्वाच्छरीरादिज्ञानस्य च प्रमाणजन्यत्वादवस्थाज्ञानविरोधित्वमनुभवसिद्धम्। विशेषाज्ञानं तु न प्रमाणजन्यवृत्तिमन्तरेण निवर्तते।**

---

ज्ञानस्य। **अज्ञानेति**। स्वप्नप्रयोजकाज्ञानेत्यर्थः। अवस्थान्तरान्यथानुपपत्त्या। पूर्वावस्थाया बाधाभावे अवस्थान्तरोत्पत्त्यन्यथानुपपत्त्या। तत्कल्पने—प्रमाणाजन्यज्ञानस्यापि बाधकत्वकल्पने। **सुषुप्तावपीत्यादि**। सुषुप्तावविद्यावृत्तिरूपमहमित्याकारकज्ञानं स्वप्नबाधकमङ्गीक्रियेत इत्यर्थः। **जाग्रत्त्वेति**। स्वप्नसुषुप्तिशून्यत्वेत्यर्थः। स्वप्नावस्थाज्ञानस्य—स्वप्नावस्थाविषयकाज्ञानस्य, सुषुप्तौ यद्यत्भासते अज्ञानादि तदन्यस्वाप्नार्थविषयकाज्ञानस्येति यावत्। अथवा स्वप्नावस्थाज्ञानस्य—स्वप्नावस्थाधिष्ठानविषयकाज्ञानस्य, तस्यैव जीवेशादिभेदविषयकत्वस्वीकारात्। एवं च सुषुप्तौ साक्षिमात्रभास्यजीवेशतद्भेदादेरभानमुपपद्यते। तत्र—सुषुप्तौ। तद्बाधः—स्वप्नावस्थाबाधः। यथार्थत्वात्—अज्ञाताबाधितमनोऽवच्छिन्नचिद्विषयकत्वात्। **प्रमाणजन्यत्वादिति**। मनुष्यत्वादिविशिष्टरूपेण साक्षिमात्रेण कदाचित् भास्यत्वेऽपि चक्षुरादिप्रमाणभास्यत्वस्यापि कदाचित्तेन रूपेण शरीरादौ सत्त्वात् 'मनुष्यं मामहं पश्यामी'ति प्रतीतेरिति भावः। **अनुभवसिद्धमिति**। तथा च प्रमाणजन्यज्ञानत्वेन नाज्ञानविरोधिता किन्त्वज्ञाताबाधितविषयकनिश्चयत्वेन, तत्समनियतजातिविशेषरूपप्रमात्वेन वेति भावः।

नन्वविद्यावृत्तिरूपेणाहमित्याकारकज्ञानेन यदि मनोऽवच्छिन्नचिद्विषयकं व्यावहारिकशरीराद्यनेकावच्छिन्नचिद्विषयकत्वेन सामान्याज्ञानशब्दवाच्यमज्ञानं निवर्तते तदा 'घटं न जानामी'त्याकारेणाज्ञातत्वविशिष्टघटविषयकेणाविद्यावृत्तिरूपज्ञानेनापि घटाद्यवच्छिन्नचिद्विषयकमज्ञानं निवर्त्तेत, तस्याप्यज्ञाताबाधितघटविषयकत्वस्वीकारात्। अज्ञानतत्कार्याविषयकमेव ज्ञानमज्ञाननिवर्तकमिति स्वीकारेऽपि आत्ममात्रविषयकसौषुप्ताविद्यावृत्त्या मूलाज्ञानं निवर्तेत, प्रमाणजन्यत्वत्यागे श्रवणादिजन्यत्वस्यापि त्यागौचित्यात् श्रवणादीनां प्रमाणाश्रितत्वात् तत्राह—**विशेषाज्ञानं त्विति**। घटाद्येकैकमात्रविषयकाज्ञानं त्वित्यर्थः। **अन्तरेणेति**। 'घटं न जानामी'त्याकाराविद्यावृत्तौ घटाद्यंशे

नारायणी

निर्वचनीयख्यातिः। एतेन भ्रमेऽसदेव रजतम् भाति वासनाविशेषादिति माध्यमिकस्य, 'सदेवान्तःकरणपरिणामात्मकम् भाती'ति साङ्ख्यादेः 'क्षणिकविज्ञानात्मनो विशेषपरिणामो रजतादिरिदन्त्वादिना भाती'त्यात्मख्यातिवादिनो योगाचारादेः, 'इदमिति पुरोवर्तिनो ग्रहणम्, रजतमिति रजतस्य स्मरणं तयोश्च स्वरूपतो विषयतश्च भेदाग्रहाद्विशिष्टव्यवहारोऽतः प्रवृत्तिश्चेत्यख्यातिवादिनो मीमांसकस्य च मतम् परास्तम्। आद्यद्वितीययोः ख्यातिबाधानुपत्तेरेव, तृतीये रजतत्वेनेदंत्वस्य इदन्त्वेन रजतत्वस्य चारोप इत्यत्र विनिगमकाभावात् उभयारोपे सदसदादिविकल्पेनोक्तदोषात्, चतुर्थे रजतप्रकारकपुरोवर्तिविशेष्यकज्ञानत्वेन हेतुतायाः सत्यरजतादिस्थले क्लृप्ताया इह बाधेन हेत्वन्तरकल्पने गौरवात्। परिशेषात् अनिर्वचनीयख्यातिसिद्धिरित्यन्यत्र विस्तरः।

साक्षिणश्चाविद्यानिवर्तकत्वाभाव अज्ञानसाधकत्वेनैव धर्मिग्राहकमानसिद्ध इति न किञ्चिदवद्यम् । यावन्ति ज्ञानानि तावन्त्यज्ञानानीति चाभ्युपगमात् शुक्तिज्ञानेनेव व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि कदाचिद्रजतभ्रमवन्न स्वप्नाध्यासानुपपत्तिरिति जीवचैतन्यमेवाधिष्ठानमिति पक्षे न कोऽपि दोषः। यदा तु पुनर्ब्रह्मज्ञानादेवाज्ञाननिवृत्त्यभ्युपगमः, तदा रज्ज्वां दण्डभ्रमेण सर्वभ्रमतिरोधानवदधिष्ठानज्ञानाभावेऽपि जाग्रद्भ्रमेण स्वप्नभ्रमतिरोभावोपपत्तेः ब्रह्मचैतन्यमेव स्वप्नाध्यासाधिष्ठानमिति पक्षेऽपि न कश्चिद्दोषः। प्रतिजीवं स्वप्नाध्यासासाधारण्यं तु मनोगतवासनानामसाधारण्यादेव। मनोऽवच्छिन्नं ब्रह्मचैतन्यमेवाधिष्ठानम्। एतस्मिन्नपि पक्षेऽवस्थाज्ञानस्यावारकत्वाङ्गीकारान्न काप्यनुपपत्तिः। अत एव शास्त्रेषु क्वचित्क्वचित्तथा व्यपदेशः।

ननु मनोऽवच्छिन्नचैतन्यस्याधिष्ठानत्वे 'अहं गज' इत्याद्यहङ्कारसामानाधिकरण्येन गजप्रतीतिः स्यात् 'इदं रजतमि'ति शुक्तिसामानाधिकरण्येन रजतप्रतीतिवत्, न

---

निश्चयत्वाभावात् प्रमात्वजात्यभावाद्वा नाज्ञाननिवर्तकता। अत एव स्वप्नेऽपि कदाचिन्मनो न जानामीत्याकारकाविद्यावृत्त्युदयेऽपि न सामान्याज्ञाननिवृत्तिरिति भावः। ननु प्रमाणाजन्यज्ञानस्याविद्यानिवर्तकत्वे साक्षिणोऽपि तत् स्यात्, अज्ञानसाक्षिणोऽज्ञातविषयांशे न निश्चयत्वमिति चेत्तर्हि तत्र ज्ञापकं वाच्यं तत्राह—**साक्षिणश्चेति**।

**निवर्तकत्वेति**। निवृत्तिजनकतावच्छेदकनिश्चयत्वेत्यर्थः। **अज्ञानसाधकत्वेति**। अज्ञानविषयकत्वेत्यर्थः। ननु तत्साधकमपि पश्चात्तन्निवर्तकं भवतु तत्राह–**धर्मीति**। अविद्यासाधकं साक्षीति येन मानेन सिद्धं तेनैव तस्य तदनिवर्तकत्वं सिध्यति। निवर्तकत्वसत्त्वे साधकत्वक्षण एव तदापत्तिरिति भावः। **यावन्तीत्यादि**। व्यावहारिकसंघातज्ञानेनाज्ञाननिवृत्तावपि पुनरपि स्वाप्नाध्यासस्याज्ञानान्तरेणोत्पत्तेर्नानुपपत्तिः, यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यस्याभ्युपगमात्। शुक्तिज्ञानेनाज्ञाननिवृत्तावपि पुनरप्यज्ञानान्तरेण रजतभ्रमोत्पत्तिवदित्यर्थः। एकाज्ञानपक्षे शुक्तिरूप्यादेरिव स्वाप्नस्यापि ब्रह्मज्ञानात् पूर्वं न बाधः, किन्तु निवृत्तिः। अतो ब्रह्मैवाध्यासमात्रेऽधिष्ठानमित्याशयेनाह–**यदेत्यादि**। **पक्षेऽपीति**। न दोष इत्यनुषज्यते। **प्रतिजीवमित्यादि**। एकेन जीवेनोपलभ्यमानः स्वप्नो नान्येन उपलभ्यत इति यत् स्वप्ने असाधारण्यं ब्रह्मणः स्वप्नोपादानत्वे तदनुपपन्नमिति यत् पूर्वमुक्तं तन्न। ब्रह्मोपादानकस्यापि स्वप्नस्य तत्तज्जीवीयवासनाजन्यत्वेनोक्तासाधारण्यसम्भवादित्यर्थः। पक्षान्तरमाह—**मनोऽवच्छिन्नं ब्रह्मेत्यादि**। अविद्याप्रतिबिम्बितचिद्रूपजीवान्यत् ब्रह्मचैतन्यं नियन्तृरूपं मनोऽवच्छिन्नमधिष्ठानमित्यर्थः। प्रथमकल्पेऽपि अविद्याप्रतिबिम्बितचैतन्यस्य न तद्रूपतया अधिष्ठानत्वम्, 'अज्ञोऽहं घटं जानामी'त्येवं ज्ञातृतया स्वप्ने भानात्, किन्तु मनोऽवच्छिन्नत्वेनेति।

ननु मनोऽवच्छिन्नचित्त्वेन रूपेण जागरणे ब्रह्मणोऽपि भासमानत्वात् कथमधिष्ठानता ? तत्राह–**एतस्मिन्नित्यादि**। अधिष्ठानावच्छेदकत्वात्—भ्रमप्रयोजकाज्ञानविषयतावच्छेदकत्वात्। भ्रमाविरोधिनः–भ्रमविरोधिधीविषयशुक्तित्वाद्यविशेषितस्य। तत्र–भ्रमे। कल्पित एव न तु बाह्यः।

**'त्वयं गज' इति। ब्रह्मचैतन्यस्याधिष्ठानत्वपक्षेऽपि 'गज' इत्याकारैव प्रतीतिः स्यान्न 'त्वयं गज इति। तत्रापीदङ्कारास्पदीभूतबाह्यार्थाभावस्य समानत्वादिति चेन्न। आद्ये पक्षे अहङ्कारस्य शुक्तिवदधिष्ठानावच्छेदकत्वात् 'शुक्तौ रजतमि'तिव'दहं गज' इति न भ्रमाकारप्रसङ्गः। 'अहमि'ति ज्ञानस्येव 'शुक्तिरि'ति ज्ञानस्यैव भ्रमविरोधित्वात्, इदमंशस्य च भ्रमाविरोधिन एव तत्र भानाभ्युपगमात्। स्वप्ने तु गज इत्याकारवदयमित्याकारोऽपि कल्पित एव। उभयाकारबाधेऽप्यधिष्ठानीभूतचैतन्याबाधान्न शून्यवादप्रसङ्गः। जाग्रद्दशायामपि शुक्तीदङ्कारविलक्षणस्य प्रातीतिकस्यैव रजतेदङ्कारस्य भानाभ्युपगमाच्च। 'अध्यस्तमेव हि परिस्फुरति भ्रमेष्वि'ति न्यायात्। शुक्तीदमंशभानपक्षेऽपि नेदमंशसत्यत्वमध्यासे प्रयोजकम्। किन्त्वधिष्ठानसत्यत्वम्। अधिष्ठानं च तत्राज्ञातं शुक्तिचैतन्यमिवात्रापि साक्षिचैतन्यं विद्यते एवेत्युपपादितम्। तस्मान्न पक्षद्वयेऽपि काप्यनुपपत्तिः। अत्र च स्वाप्निकपदार्थभोक्ता तैजस इत्युच्यते। पित्ताख्यतेजःप्रधानकत्वात्। आदित्यादिज्योतिरन्तरेणापि भासकत्वादिति वा। एवं जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्मक्षये ज्ञानशक्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणात्मनाऽवस्थाने सति विश्रामस्थानं सुषुप्त्यवस्था। 'न किञ्चिदवेदिषमि'ति कारणमात्रोपलम्भः सुषुप्तिः। तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेऽपि साक्ष्याकारं**

---

जाग्रद्दशायां—जाग्रद्दशागतभ्रमे। शुक्तीदङ्कारविलक्षणस्य—रजतसंसृष्टत्वानापन्नादिदमंशात् विलक्षणस्य रजतेदङ्कारस्य। रजतसंसृष्टेदमंशस्य प्रातीतिकेन रजततादात्म्येन विशिष्टतया प्रातीतिकमेवेदन्त्वविशिष्टं भ्रमे भाति, नाताहृशं व्यावहारिकमित्यत्र **संक्षेपशारीर**कोक्ति प्रमाणयति—**अध्यस्तमेवेत्यादि**। नन्विदं रजतमिति भ्रमे शुक्तीदमंशस्य भानपक्षे भ्रमे विशेष्यस्याप्रातीतिकत्वनियमात् 'अयं गज' इति स्वप्नानुपपत्तिस्तत्राह—**शुक्तीति**। सत्यत्वं—प्रातीतिकान्यत्वम्। प्रयोजकं—व्यापकम्। तत्रापि—स्वप्नेऽपि। **कारणेति**। तदानीमुपधायकेत्यर्थः। क्रियाशक्त्यवच्छिन्नमात्रस्य प्राणस्य सुषुप्तौ लयाभावादाह—**ज्ञानशक्त्यवच्छिन्नस्येत्यादि**। कारणात्मा—कारणीभूताज्ञानगतसंस्काररूपेण। कारणमात्रोपलम्भः—स्थूलसूक्ष्मरूपदेहानुपलम्भविशिष्टः कारणोपलम्भविशेष इत्यर्थः। यथाश्रुतेऽविद्यावृत्तिरूपकार्योपलम्भस्य साक्षिणस्सत्त्वादसङ्गतिः। मूर्छाप्रलयादिवारणाय विशेष्यदलम्। अवस्थाज्ञानाकारं संस्कारतापन्नजाग्रत्स्वप्नाधिष्ठानविषयकमनादिजीवेशभेदादिविषयकं च यदवस्थारूपमज्ञानं तद्विषयकम्। संस्कारादीनां साक्षिसम्बन्धेन प्रकाशप्रसक्तेस्तत्राज्ञानमावश्यकम्। त्रयमिति—आकारत्रयोपहितरूपभेदसम्भवादित्यभिप्रायम्, समूहालम्बनैकवृत्त्या निर्वाहे वृत्तित्रयकल्पने गौरवात्।

ननु मूलाज्ञानाकारवृत्त्यापि नावेदिषमिति स्मरणोपपत्तेः अवस्थाज्ञानविषयकवृत्तिः किमित्युक्ता? उच्यते—'न किञ्चिदवेदिषमि'त्यनेकपदार्थविषयकज्ञानस्मृतेर्मूलाज्ञानेनानुपपत्तेः तस्य चिन्मात्रविषयकत्वात्। अत एव 'आत्मानमीशान्यं मनुष्यं वा नावेदिषम्, आकाशादिकं नावेदिषम्' इति स्मृतेरुपपत्तिः। इदं तु बोध्यम्। मूलाज्ञानाकाराप्यविद्यावृत्तिस्सुषुप्तावश्यं

**सुखाकारमवस्थाज्ञानाकारं चाविद्याया वृत्तित्रयमभ्युपेयते। अहङ्काराभावाच्च नैका विशिष्टवृत्तिः, सुषुप्त्यभावप्रसङ्गाच्च। अत एव वृत्तिरूपस्योपलम्भस्याभावान्न प्रलयेऽतिव्याप्तिः। तत्र तत्कल्पनाबीजाभावात्। इह च 'सुखमहस्वाप्सं न किञ्चिदवेदिषमि'ति सुप्तोत्थितस्य परामर्शात्। अननुभवे च परामर्शानुपपत्तेः। अन्तःकरणोपराग-**

---

वाच्या। प्रलयान्यकाले सर्वदैव तत्स्वीकारात्। 'एतावत्कालं मूढोऽहमास'मिति नानाविषयाविशेषितरूपेणाप्यज्ञानस्य जागराद्यकाले तत्त्वज्ञानकाले च स्मरणात्। एवञ्च मनोऽवच्छिन्नचितः स्वप्नाधिष्ठानत्वपक्षेऽप्युक्तस्मरणोपपत्तिरिति। नन्वज्ञानविशिष्टसाक्षिविषयिका सुखाभिन्नसाक्षिविषयिका च वृत्तिः कुतो नोक्ता? तत्राह—**नैकेति**। विशिष्टवृत्तिः—अज्ञानादिविशिष्टसाक्षात्कारवृत्तिः। **अहङ्काराभावादिति**। तथा च संसर्गविषयकवृत्तौ अहङ्कारत्वेन हेतुता। सा च हेतुता निमित्ततया कार्यसहभावेनैवेति नाहङ्कारलयोत्पत्तिकालेऽपि विशिष्टविषयकवृत्त्युत्पत्तिः। अहङ्कारत्वं च स्थूलावस्थमनस्त्वम्, **अहमाकाराविद्यावृत्तित्वं**[1] वा। **तार्किकादिमते** तु निर्विकल्पकस्यापि सुषुप्तावस्वीकारात् जन्यज्ञानमात्रे त्वङ्मनोयोगस्य हेतुत्वम्। नन्ववस्थाज्ञानस्यैवाज्ञानसाक्षिणोस्संसर्गविषयकत्वं स्वीकृत्य तादृशसंसर्गभानमुपपाद्यताम्, किमहङ्कारहेतुतयेति चेन्न। तावतापि संसर्गाकारवृत्तेर्वारयितुमशक्यत्वात्, सुषुप्तिपूर्वक्षणे लिङ्गपरामर्शादिसत्त्वे सुषुप्त्युत्पत्तिक्षणे संसर्गानुमित्यादेर्दुर्वारत्वाच्च। अत एवाह—**सुषुप्त्यभावप्रसङ्गादिति**। सुषुप्तौ संसर्गाकारवृत्तिस्वीकारे सुषुप्त्यभावप्रसङ्गात्तादृशवृत्तावहङ्कारहेतुताकल्पनात् तादृशहेत्वभावात्तादृशवृत्त्यभाव इति समुदायार्थः।

न च निर्विकल्पकाविद्यावृत्तेस्संस्कारतापन्नमन आदाविवाज्ञानसंसर्गादावप्यविद्यावृत्त्युत्पत्तिवारणमिति वाच्यम्। जागरस्वप्नयोरज्ञानादिसंसर्गविषयिकाया 'न जानामि' इत्यादिवृत्तेरुत्पत्त्या तत्सामग्र्याश्चाज्ञानादिरूपायाः सुषुप्तावपि तदापत्तेः। संस्कारतापन्नमनआदौ तु संसर्गविषयकानुमित्यादिकमहङ्कारहेतुकमेव जाग्रदादिवृत्तेरुत्पत्तिकाले जायते, नाविद्यावृत्तिरिति वैषम्यम्। **वृत्तीत्यादि**। तथा च वृत्तिरूपः कारणोपलम्भो लक्षणे निवेश्य इति भावः। इह—सुषुप्तौ। परामर्शात्—स्मरणात्। अननुभवे—वृत्त्यनुत्पादे। ज्ञानसूक्ष्मावस्थारूपसंस्काराभावादिति शेषः। **अन्तःकरणेति**। अहङ्कारेत्यर्थः। जन्यत्वाभावात्तत्तोल्लेखाभावः। तस्मिन् सत्यपि न स्मरणत्वानुपपत्तिरित्यर्थः। अहङ्काराभावेन कालदेशविशिष्टरूपेणाज्ञानादेरननुभवात्तेन रूपेण न स्मरणम्, किन्तु केवलाज्ञानत्वादिविशिष्टरूपेणेति भावः।

ननु सौषुप्तानुभवे यद्यज्ञानांशे देशादिवैशिष्ट्यं न भाति अहङ्काररूपकारणाभावात्तर्हि सविषयकत्वाज्ञानत्वयोरपि वैशिष्ट्यं तत्र न भायात्, इष्टापत्तौ च न किञ्चिदवेदिषमिति स्मृतौ तदुल्लेखानुपपत्तिः, उक्तवैशिष्ट्यांशे न स्मृतित्वं किन्त्वनुभवत्वमित्यस्या**द्वैतसिध्युक्तस्य** स्वीकारेऽपि अवस्थाज्ञानाकारा वृत्तिरिति मूलासङ्गतिः, स्मृतिकाले स्मर्यमाणस्यावस्थाज्ञानस्योच्छिन्नत्वेन तत्रोक्तवैशिष्ट्यस्य साक्षिणो भानासम्भवादिति चेन्न। यथाऽभावस्य प्रतियोग्यनुयोगिविशिष्टत्वाभावत्वारूपाभ्यामेव ज्ञानस्य सविषयकत्वज्ञानत्वाभ्यामेव च प्रत्यक्षे भानं तथैवाज्ञानस्य सविषयकत्वज्ञानत्वाभ्यामेव प्रत्यक्षे भानं न तु शुद्धाज्ञानस्य, तयोरिव तस्यापि निर्विकल्पकावेद्यत्वात्। किञ्च

---

१. लाघवादाह—अहमाकारेति। सुषुप्तौ तदभावान्नाहङ्कारः।

**कालीनानुभवजन्यत्वाभावाच्च न तत्तोल्लेखाभावेऽपि स्मरणत्वानुपपत्तिः। स्मरणे तत्तोल्लेखनियमाभावाच्च जाग्रद्दशायामस्वाप्समित्यनुभवानुपपत्तेः लिङ्गाभावेनाश्रयासिद्ध्या चानुमानस्यासम्भवात्। अहङ्कारस्तूत्थानसमय एवानुभूयते। सुषुप्तौ लीनत्वेन तस्याननुभूतत्वात् स्मरणानुपपत्तेः सुखप्रतिबिम्बाश्रये दर्पणे जपाकुसुमलौहित्याध्यासेन 'रक्तं मुखमि'ति प्रतीतिवदहङ्काराश्रयतया साक्षिचैतन्यस्य स्मरणाश्रयत्वादहमस्वाप्समिति सामानाधिकरण्यप्रतीतिः न पुन'रहं सुखी'तिवदाश्रयतया। स्मृतिसंशयविपर्ययाणां साक्षिचैतन्याश्रयत्वनियमादहङ्कारस्य च प्रमाणजन्यज्ञानाश्रयत्वनियमात्,**

---

तदुभयरूपविशिष्टत्वेनाज्ञानस्मृतिः तादृशीमेव स्वकारणीभूतामविद्यावृत्तिं कल्पयति। एवं चाज्ञानत्वादिसंसर्गान्यसंसर्गविषयकवृत्तावेवाहङ्कारस्य हेतुत्वं कल्प्यम्। ननु ज्ञानस्य प्रत्यक्षे सविषयकत्वसप्रकारकत्वनियमो युक्तः, विषयस्य पूर्वमुपस्थितत्वात्। ज्ञानत्वप्रकारकत्वनियमस्त्वयुक्तः तस्य पूर्वमनुपस्थितत्वात् अत एव सविषयकत्वांशे सविकल्पकं ज्ञानत्वांशे निर्विकल्पकं नृसिंहाकारं ज्ञानस्य प्रत्यक्षं **नव्यतार्किकै**रुच्यते इति चेन्न। ज्ञानस्योत्पत्त्युत्तरं प्रत्यक्षतामते हि तादृशयुक्तत्वायुक्तत्वविचारः न तु तस्य साक्षिवेद्यत्वमते स्ववेद्यत्वमते वा पूर्वानुपस्थितस्यापि ज्ञानत्वादेरपि भानस्वीकारादिति ध्येयम्।

[1]**स्मरण इति।** यस्य कालादिविशिष्टरूपेणानुभवस्तस्यैव तद्रूपेण स्मृतिरिति भावः। ननु सुषुप्तौ तादृशवृत्त्यभावेऽपि जाग्रत्काल एव 'सुखमहमस्वाप्समि'त्यनुभवः कल्प्यताम्, तत्राह–**जाग्रदित्यादि।** ननु जागरे सुषुप्तेः प्रत्यक्षं मास्तु, अवस्थाज्ञानं मनोलयश्चेति द्वयं हि सुषुप्तिः, तत्राद्यं जागरकालीनधिया नष्टत्वात्, द्वितीयं चायोग्यत्वात् नष्टत्वाच्च न प्रत्यक्षम्, अनुमितिस्तु स्यात्तत्राह–**लिङ्गेत्यादि।** 'स्वप्नजागरणयोर्मध्यकालस्सुषुप्तिमान् ज्ञानसामान्याभावात्, जन्यज्ञानसामान्याभावाद्वे'त्यनुमानं न सम्भवति। आद्यो हि न हेतुः असिद्धत्वात्, पक्षे ज्ञातुमशक्यत्वाच्च। अत एव न द्वितीयः। न च तत्कालविशिष्टरूपेण कस्याप्यस्मृतेः तत्काले जन्यज्ञानसामान्याभावोऽनुमेयः; यदा ह्यनुभवो जायते तदा तत्कालविशिष्टं स्वविषयं स गृह्णाति, ततश्च तद्रूपेण स्मृतेरुत्पत्तिस्स्यात्, तदभावाच्च तादृशज्ञानाभाव इत्यनुमानसम्भव इति वाच्यम्। ज्ञानस्य स्मृतिजनकत्वानियमात्। तस्माल्लिङ्गासम्भवः, आश्रयासिद्धिश्च। तत्कालस्यानुपस्थितत्वात्।

ननु स्मृतिरपि न सम्भवति। 'अहमस्वाप्समि'ति स्मर्यमाणाहङ्कारस्य पूर्वमननुभवात् तत्राह–**अहङ्कार इत्यादि।** अनुभूयते–साक्षिणा विषयीक्रियते। ननु तथाप्यज्ञानादिस्मृत्याश्रयतयाऽहङ्कारस्य साक्षिभास्यत्वानुपपत्तिः अज्ञानाद्यनुभवानाश्रयत्वात् तत्राह—**मुखेत्यादि।** रक्तं मुखमिति प्रतीतिवत्–'अत्र रक्तं मुखमि'ति प्रतीतावेकत्र दर्पणे रक्तरूपमुखयोर्भानवत्। यत्र मुखं दर्पणस्थं पूर्वमदृष्ट्वा रक्तरूपस्य दर्पणे आरोपः, तत्र मुखे न रक्तत्वारोपसम्भवः अधिष्ठानीभूतमुखस्य पूर्वं ज्ञानाभावात्तादृशस्थलं दृष्टान्त इति भावः। **आश्रयतयेति।** अहङ्कारस्य स्मरणाश्रयतयेत्यर्थः। प्रतीतिरित्युनुषज्यते। साक्षिचैतन्याश्रयत्वात्–अविद्योपहितचिदाश्रयत्वात्। ननु प्रमायामिव स्मृत्यादावप्यहङ्कार आश्रयस्स्यात् तत्राह—**अहङ्कारस्येत्यादि।** ज्ञानाश्रयत्वात्–ज्ञानमात्राश्रयत्वात्। तत्र हेतुः—

---

१. अत एव स्मरणे तत्तोल्लेखानियम इत्याह—स्मरणेति।

**प्रमात्वेनैव तत्कार्यतावच्छेदात्, अप्रमात्वावच्छेदेन च अविद्याया एव कारणत्वात् ।**

**अत एवानाप्तवाक्यादिजन्यपरोक्षविभ्रमोऽप्यविद्यावृत्तिरेवेत्यभ्युपगमो वेदान्तविदाम् । तत्रान्तःकरणवृत्तिजनकसामग्रीसम्भवेऽपि प्रमात्वाभावापराधेनान्तःकरणस्यासामर्थ्यात् । नामादिषु ब्रह्माध्यासस्तु इच्छाधीनतया भ्रमप्रमाविलक्षणा मनोवृत्तिरेव कामादिवत्, तदुक्तम्—'अत एव चोदनाजन्यत्वान्मानसी क्रियैव सा । न ज्ञानमि'ति । एतेन तर्कस्यापि मनोवृत्तित्वं व्याख्यातम् । व्याप्यारोपेण व्यापकप्रसञ्जनात्मकस्य तर्कस्येच्छाधीनतया भ्रमप्रमाविलक्षणत्वादिति । अत एव मनननिदिध्यासनसहिते श्रवणाख्ये वेदान्तवाक्यविचारे 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिविधिरप्युप-**

---

**प्रमात्वेनेत्यादि । तत्कार्यतेति ।** अहङ्काररूपपरिणामिकार्यतेत्यर्थः । **अप्रमात्वेति ।** स्मृतिसंशयविपर्ययसाधारणाप्रमात्वेत्यर्थः । कारणत्वात्–परिणामित्वात् । प्रमां प्रत्यप्यविद्यायाः परिणामित्वम्, कार्यमात्रं प्रति तत्स्वीकारात्; अप्रमायां त्वविद्याया एव, नाहङ्कारस्येति ज्ञापनार्थमेवकार उक्तः । स्मृतेरज्ञाताविषयकत्वात् संशयविपर्यययोर्बाधितार्थकत्वादप्रमात्वम् ।

**तत्रान्तःकरणेति ।** शब्दज्ञानमर्थोपस्थितिरित्यादिसामग्र्या यथा मनोवृत्तिश्शाब्दप्रमारूपा जायते, तथा शाब्दभ्रमरूपापि सम्भवति, परन्तु भ्रमं प्रत्यविद्याया एव परिणामित्वात् न मनसः परिणामित्वमिति भावः । ननु नामादौ ब्रह्मैक्योपासना न प्रमा, बाधितविषयकत्वात्; नापि भ्रमः, नामादौ ब्रह्मभेदस्य ज्ञातत्वेऽपि तदुत्पत्तेः; तथा च तत्राविद्याया इव मनसोऽपि परिणामित्वसम्भव इत्यत आह—**नामादीति ।** ब्रह्माध्यासः–ब्रह्मतादात्म्याकारवृत्तिः । कामादिवत्—इच्छाद्वेषादिवत् । चोदनाजन्यत्वात्—'नाम ब्रह्मेत्युपासीते'त्यादिविधिवाक्यार्थस्य इष्टसाधनत्वस्य ज्ञानाधीनेच्छाजन्यप्रयत्नसाध्यत्वात् । **न ज्ञानमिति ।** ज्ञानस्योक्तप्रयत्नं विनापि दुर्गन्धादिविषयकस्योत्पत्तेः प्रमाणव्यापाराभावे उक्तप्रयत्नसत्त्वेऽप्यनुत्पादान्नोक्तप्रयत्नजन्यता । [1]अत एव 'पत्न्याज्यमवेक्षेत' इत्यादौ ज्ञानानुकूलव्यापारे विधिरिति भावः । **व्याप्येत्यादि ।** 'वह्निव्याप्यधूमवान् ह्रद' इत्याद्यारोपजन्यस्य 'ह्रदो वह्निमान् स्यादि'त्याकारकपरिणामस्य इच्छाधीनत्वेन न[2]भ्रमत्वप्रमात्वे इत्यर्थः । **निदिध्यासनसहितेति ।** निदिध्यासनरूपफलोपकार्यङ्गसहितेत्यर्थः ।

साक्षात्कारमुद्दिश्य मननादिसहितं श्रवणं विधीयते । तत्र श्रवणं नाम 'तत्त्वमस्यादिवाक्यं यदि ब्रह्मात्मैक्यपरं न स्यात्, तदोपक्रमोपसंहारादिभिरपि अद्वैतब्रह्मबोधकं न स्यादि'त्यादितर्करूपम् । तस्य च प्रमाणीभूतवाक्यतात्पर्यविषयकत्वेन प्राधान्यम् । ब्रह्मात्मैक्यसिद्ध्यनुकूलतर्कादयोऽपि श्रवणेऽन्तर्भवन्ति । मननं तु वाक्यजन्यज्ञानस्य परोक्षनिश्चयभावसम्पादकस्तर्कः । निदिध्यासनमपरोक्षनिश्चयत्वसम्पादकस्तर्कः । 'तत्त्वमस्यादिवाक्यजं ज्ञानं यदि परोक्षं स्यात्, तर्हि अपरोक्षात्मविषयकं न स्यादि'त्यादिरूपः तयोस्तत्सम्पादनरूपफलोपकारकारित्वेन श्रवणाङ्गत्वम् । तदसम्पादने हि

---

१. अत एव ३-२-९ अधिकरणे सम्यग्जरणादीनां प्रयत्नासाध्यत्वेपि तदनुकूलव्यापारस्य तथात्वमुक्तं—पू० मी० ।

२. भ्रमत्वप्रमात्वशून्यत्वादित्यर्थ इति पा० ।

**पद्यते। तस्य चतुर्विधान्वयव्यतिरेकादितर्करूपत्वात्। दृग्दृश्यान्वयव्यतिरेकः साक्षिसाक्ष्यान्वयव्यतिरेकः, आगमापायितदवध्यन्वयव्यतिरेकः, दुःखिपरमप्रेमास्पदान्वयव्यतिरेक इति समन्वयाध्यायाविरोधाध्यायसाधनाध्यायफलाध्यायाः। अनुवृत्तव्यावृत्तान्वयव्यतिरेकः पञ्चमः। एतच्च सर्वेषां वेदान्तानुकूलतर्काणां चतुर्लक्षणीमीमांसाप्रति-**

---

श्रवणफलीभूतं वाक्यजज्ञानं नापरोक्षभ्रमहेत्वज्ञानस्य निवर्तकम्। अथवा ब्रह्मात्मैक्यसिद्ध्यनुकूलस्तर्को मननम्। निदिध्यासनं तु श्रवणमननयोरैकाग्र्यं पौनःपुन्यरूपम्। तयोश्चोक्तैक्यविषयकासम्भावनाविपरीतभावनाबुद्धिनिरासद्वारा साक्षात्काररूपफलाप्रामाण्यधीनिरासकत्वेन उपकारित्वात् श्रवणाङ्गत्वम्। आद्यकल्पो **विवरणे**, द्वितीयकल्पः **संक्षेपशारीरकादा**वुक्तः।

**दृग्दृश्यान्वयव्यतिरेक इत्यादि**। दृशि दृश्यानां तादात्म्यमन्वयः। तस्य च निरूपणासम्भवात् दृशि दृश्यानि कल्पितानीति दृशि दृश्यानामन्वयेनैव व्यतिरेकस्सिध्यतीत्यर्थः। 'स्वप्रकाशदृशस्तादात्म्येन सिद्धं जडं यदि सत्यं स्यात्, तदा जडत्वादिना स्वप्रकाशादत्यन्तविलक्षणं न स्यादि'ति तर्को बोध्यः। एवमग्रेऽपि 'निर्विकारसाक्षितादात्म्येन सिद्धं जडं यदि सत्यं स्यात्, तदा विकारवत् न स्यात्'। 'एवमागमापायशून्यात्मतादात्म्येन सिद्धं दृश्यं यदि सत्यं स्यात्, तदा आगमापायित्वरूपकादाचित्कत्ववन्न स्यात्, 'परमप्रेमास्पदात्मतादात्म्येन प्रतीयमानं यदि सत्यं स्यात्, तदा दुःखसाधनं न स्यात्' 'सद्वस्तुतादात्म्येन प्रतीयमानं पटादिकं यदि सत्यं स्यात् तदा मिथोव्यावृत्तं मिथ्याभूतं न स्यादि'ति बोध्यम्। एवं साक्षिणो निर्विकारत्वात् साक्ष्याणां च विकारित्वात् साक्षिणि साक्ष्यस्यान्वयेन व्यतिरेकः सिध्यतीत्यर्थः। एवमागमापायितया उत्पत्तिविनाशवत्त्वरूपया कादाचित्कत्वेन मिथ्यात्वात् सर्वकादाचित्कानामधिष्ठानमात्मा। स हि तेषामवधिः, आगमापायशून्यत्वात्। यथा वृष्टिमतां देशानां वृष्टिशून्या गङ्गाऽवधिरुच्यते, तथा च तेषां तत्र तादात्म्येनानुपपन्नेन व्यतिरेकः। एवं दुःखित्वेनोपलभ्यमानस्याहङ्कारादेः परमप्रेमास्पदात्मभिन्नत्वात् तयोस्तादात्म्यरूपान्वयेनानुपपद्यमानेनात्मन्यहङ्कारादि कल्पितम्। एवं सर्वेषु दृश्येषु मिथो व्यावृत्तेषु भिन्नेषु सद्रूपेणानुवृत्त आत्मा, तस्मात्तत्र तेषामन्वयेन तादात्म्यरूपेण व्यतिरेकस्सिध्यति। तत् येषु व्यावृत्तेषु तादात्म्येनान्वितं तत्र तानि कल्पितानि। यथा रज्जौ मालासर्पादि यथा वा जातौ व्यक्तय इति भावः।

**अनुकूलेति**। अनुग्राहकेत्यर्थः। **तर्काणामिति**। कार्यकारणानन्यत्वादितर्काणामित्यर्थः। **चतुर्लक्षणीति**। चतुरध्यायीत्यर्थः। **प्रतिपादितानामिति**। 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिसूत्रेषु प्रपञ्चमिथ्यात्वजीवब्रह्मैक्यबोधकवेदान्तानुग्राहकतर्काः प्रतिपादिताः। तथाहि—तदनन्यत्वं तस्य ब्रह्मणः अनन्यत्वं ब्रह्मान्यशून्यत्वम्, वाचारम्भणश्रुतेः। आदिपदोदितश्रुतियुक्तिभ्यः। **वाचेत्यादिश्रुतेरयमर्थः**। आरम्भणम् आरभ्यमाणं कार्यमात्रं वाचा वाङ्मात्रं मिथ्येति यावत्। अकार्यमप्यविद्यादिकं नाममात्रम्। उभयत्र हेतुगर्भं विशेषणं विकार इति। यतो नाशोत्पत्त्यादिविकृतिमत्, अतो मिथ्येत्यर्थः। कार्यनष्टयोर्हि कदाचिदसत्त्वं वाच्यम्, सर्वदा सत्त्वासम्भवात्। तथा च तदनधिकरणकालस्य तद्गतसत्त्वावच्छेदकत्वासम्भवात् असत्त्वं दुर्वारमिति। अधिष्ठानरूपकारणानन्यत्वं दृश्यमात्रस्य मिथ्यात्वमिति यावत्। तथा च दृश्यमात्रं यदि सत्यं स्यात्, तदा किञ्चित्कालावच्छिन्नेनासत्त्वेन निरूपणानर्हं न स्यादित्यादितर्का बोध्याः।

**पादितानामुपलक्षणमित्यभियुक्ताः। विस्तरस्तु वेदान्तकल्पलतिकायामनुसन्धेयः। तदेवं सुषुप्त्यवस्थायामस्त्यानन्दभोगस्तद्भोक्ता च सुषुप्त्यभिमानी प्राज्ञ इत्युच्यते। प्रकर्षेणाज्ञत्वात्तदानीं विशेषावच्छेदाभावेन प्रकृष्टज्ञत्वाद्वा। तदा चान्तःकरणस्य लयेऽपि तत्संस्कारेणावच्छेदान्न जीवाभावप्रसङ्गः, न वा सार्वज्ञ्यापत्तिः। ईशाभेदप्रतिपादनं च शरीरेन्द्रियाद्यभिमानरहितत्वेनोपचारात् तत्संस्कारस्य च निमित्तकारणत्वेन साक्ष्याश्रितकार्योपादानकोटावप्रवेशान्न तद्भेदेऽपि साक्षिभेदः। जाग्रणे त्वन्तःकरणस्य प्रमात्राश्रितकार्योपादानकोटौ प्रवेशात्तद्भेदेन प्रमातृभेद एव। साक्षिण एव चाधिकोपाधिविशिष्टस्य प्रमातृत्वान्न प्रतिसन्धानानुपपत्तिरिति।**

---

**कल्पलतिकेति**। श्रवणादिस्वरूपनिरूपणमुक्तरीत्या तत्र कृतम्। आनन्दभोगः सुखाकारवृत्तिः। भोक्ता आश्रयः। अभिमानी आश्रयः। **प्रकर्षेणेति**। मूलाज्ञानं सर्वदाऽस्ति। अवस्थाज्ञानमपि सुषुप्ताविति प्रकर्षः। विशेषावच्छेदाभावेन—वृत्तित्रयविषयान्यविषयविशेषविषयकत्वाभावेन। सौषुप्तसाक्षिण इति शेषः। विशेषविषयकत्वस्य दुःखप्रयोजकत्वेन तदभावो ज्ञानस्य प्रकर्षः। प्रज्ञ एव प्राज्ञः। 'प्रज्ञादिभ्यश्चे'त्यनेन स्वार्थेऽणिति भावः। **अवच्छेदादिति**। मनोऽवच्छिन्नचैतन्यमेव जीव इति पक्षे इति शेषः। अविद्योपहितचैतन्यस्य जीवत्वपक्षे नोक्तप्रसङ्गः। मनोऽवच्छिन्नस्य जीवत्वे तु मनउच्छेदेन जीवत्वाभावस्स्यात्, ईशाभेदसम्पत्त्या सार्वज्ञ्यापत्तिश्च स्यात्। जीवस्याभावेन तं प्रत्यविद्याऽऽवृणोतीत्यस्य वक्तुमशक्यत्वादिति भावः।

**ईशाभेदेति**। 'प्रजा अहरहर्ब्रह्म गच्छन्त्योऽपि न विन्दन्ती'त्यादिश्रुतेरित्यादिः। गच्छन्त्यः ऐक्येन समाश्रिताः। ननु तदा वृत्तिरूपेण परिणतमनसः संस्कारसत्त्वे तज्जन्यस्मृतिरूपकार्याणां साक्ष्याश्रितत्वात् तादृशसंस्काराणामुक्तस्मृतिहेत्वविद्यायामिव साक्षिकोटौ निवेशेन तद्भेदेन साक्षिभेदः स्यात्। **वार्तिक**मते हि साक्षिमात्राश्रितं स्मरणादिकम्, न साक्ष्यनन्तर्गतवस्त्वाश्रितम्। तस्य संस्काराश्रितत्वे तु संस्कारोऽपि साक्ष्यन्तर्गतो वाच्यस्स्यात्, तथा च वक्ष्यमाण**वार्तिक**विरोधः तत्राह—**संस्कारस्येति**। **निमित्तेति**। स्मृतिनिमित्तेत्यर्थः। **कार्येति**। स्मृत्यादिकार्येत्यर्थः। स्मृत्यादेरविद्यामात्रपरिणामत्वस्योक्तत्वात् न मनसस्तत्र उपादानत्वं नतरां तत्संस्कारस्येति भावः।

अत्रेदं बोध्यम्। मूले साक्षिमात्राश्रितत्वरूपं साक्ष्याश्रितत्वं स्मरणादेर्यदुक्तं तदविद्यागतचिदाभासः साक्षीति **वार्तिक**मतमवलम्ब्यैव। अत एव मनोगतचिदाभासस्य जीवत्वेन तन्मतेऽविद्यायाः जीवानुपाधित्वेन भेदास्वीकारात् साक्षिणः सर्वजीवेष्वैक्यमेव। बिम्बप्रतिबिम्बानुगतशुद्धचित् साक्षी'तिमते तु स्मृत्यादिकार्यं न साक्षिमात्राश्रितम्, किन्त्वविद्याविशिष्टचिदाभासाश्रितमपि। ननु पूर्वदिनस्थप्रमात्राऽनुभूतमद्यदिनस्थप्रमात्रा न स्मर्येत, तयोर्भेदात् तत्राह—**साक्षिण इत्यादि**। **अधिकोपाधीति**। सवृत्तिकमन इत्यर्थः। प्रमातृत्वात्—सवृत्तिकमनोऽवच्छिन्नचिद्रूपस्य च प्रमातुस्स्वरूपत्वात्। **न प्रतिसन्धानेति**। [1]तथा च साक्षिणि प्रमास्मृत्योः सामानाधिकरण्यसम्भवेन कार्यकारणभावसम्भवः।

१. स्मरणेत्यर्थः। तथा च मनसोऽवस्थाव्यक्तिभेदेपि सर्वावस्थानुस्यूतमनस्त्वोपलक्षितस्वरूपैक्यात् तद्विशिष्टसाक्षिण एकत्वेन नानुभवस्मृत्योर्वैयधिकरण्यमिति भावः।

**मातृमानप्रभेदेऽपि प्रतिदेहं न भिद्यते ।**
**साक्षी बाह्यार्थवद्यस्मात्स आत्मेत्युच्यते ततः ॥**
**व्यभिचारो मिथो यद्वत्प्रमात्रादेः स्वसाक्षिकः ।**
**सर्वमात्राद्यभावार्थसाक्षित्वान्न तथात्मनः ॥ इति ।**

**वार्तिककारपादैर्व्यवहारदशायामपि साक्षिभेदनिराकरणात् सुषुप्तौ तद्भेदकल्पनं केषाञ्चिद्व्यामोह एवेत्यवधेयम् ।**

**ननु 'दुःखमहमस्वाप्समि'ति कस्यचित्कदाचित्परामर्शात् सुषुप्तौ दुःखानुभवोऽप्यस्तु । न । तदानीं दुःखसामग्रीविरहेण तदभावात् । सुखस्य चात्मस्वरूपत्वेन**

---

न चैकमनोगतस्य मनोऽन्तरावच्छिन्नसाक्षिण्यपि स्मृत्यापत्तिरिति वाच्यम् । तन्मनोगतप्रमाजन्यसंस्कारस्य मनोऽन्तरावच्छिन्ने विरहात् तत्तच्छरीरावच्छिन्ने स्मृत्यादौ तत्तच्छरीराणामपि हेतुत्वाच्च ।

मनस्तत्संस्कारान्यतरावच्छिन्नं चैतन्यं साक्षीति केचित् । तदुक्तन्यायेन **वार्तिकोक्त**युक्त्या च विरुद्धमिति ज्ञापयितुमाह—**मातृमानेत्यादि ।** स तव आत्मेत्युच्यते 'एष त आत्मान्तर्याम्यमृत' इति श्रुताविति शेषः । व्यभिचारः—मिथः परस्पराभावकालीनत्वम् । स्वसाक्षिकः–आत्मसाक्षिकः । **सर्वमात्राद्यभावार्थेति ।** सर्वे ये मात्रादिरूपाः तदभावरूपाश्चार्था इत्यर्थः । **व्यवहारेति ।** जागरेत्यर्थः । **साक्षिभेदेति**—प्रतिदेहं साक्षिभेदेत्यर्थः । **तद्भेदेति ।** एकस्मिन्नपि देहे मनोऽवच्छिन्नसाक्षितो मनस्संस्कारावच्छिन्नसाक्षिणो भेदेत्यर्थः । यथा मनोभेदेन साक्षिभेदः, तथा तत्संस्कारभेदेनेति तेषां भावः । व्यामोह एव न तु न्यायानुसरणम् । ननु साक्षिण एकत्वे एकस्य प्रमातुः प्रमात्रन्तरीयसुखाद्यनुभवापत्तिरिति चेन्न । अहमन्यमनोगतसुखविशिष्ट इत्यनुभवस्यापादनासम्भवात् एकमनोऽवच्छेदेनापरमनोगतसुखादिवैशिष्ट्यस्य उक्तानुभवविषयस्याप्रसिद्धेः ।

ननु तथापि तत्पुरुषीयसुखादिभासकचितस्तन्मनोऽवच्छिन्नचित्त्वेन रूपेण साक्षितास्तु, सुषुप्तावपि तन्मनोव्यक्तिरस्त्येव, अवस्थाभेदेऽपि स्वरूपाभेदात्; किञ्चाविद्यावच्छिन्नचितस्साक्षित्वपक्षे मनोऽवच्छिन्नचितमादाय विनिगमकाभाव इति चेन्न । शुद्धचितोऽन्तर्यामिणो वा चैतन्यस्य साक्षित्वपक्षे मनोभेदेन साक्षिभेदे[1] मानाभावात्, किञ्च अविद्यावच्छिन्नस्य साक्षित्वपक्षेऽपि मनोऽवच्छिन्नस्य न साक्षितासम्भवः । अविद्यातद्वृत्त्यादीनां मनोदेशापेक्षया अधिकदेशव्यापकानां कार्त्स्न्येन मनोऽवच्छिन्नचित्सम्बन्धाभावात् । अत एव मनोवृत्त्यनिर्गमकालेऽविद्यावच्छिन्नचिता घटाद्युपादानभूतया घटादेर्भानवारणाय घटाद्यवच्छेदेनावरणं कल्प्यत इति मूल एव पूर्वमुक्तम् । तदस्वीकारे च वृत्तेरावरण-

---

१. अत्रायमधिकः पाठः । साक्षिभेदे गौरवान्मानाभावाच्च । अन्यथा तत्तत्सुखदुःखादिदृश्यावच्छिन्नचितो वा भासकत्वेन सुखादिदृश्यभेदेन क्षणभेदेन वा साक्ष्यभेदापत्तेः । तस्मात् आध्यासिकस्य तादात्म्यस्य भासकतानियामकत्वमिति सिद्धान्तादधिष्ठानमेव साक्षीति युक्तम् ।

**नित्यत्वात् शय्यादेरसमीचीनत्वेन च दुःखमित्युपचारात् 'दुःखमहमस्वाप्समि'ति प्रत्ययोपपत्तिः। अथवा अवस्थात्रयस्यापि त्रैविध्याङ्गीकारात् सुषुप्तावपि दुःखमुपपद्यते। तथा हि—प्रमाज्ञानं जाग्रज्जाग्रत्, शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः। एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत्, 'स्वप्नेऽपि स्वप्नो मया दृष्ट' इति बुद्धिः स्वप्नस्वप्नः, जाग्रद्दशायां कथयितुं न शक्यते, स्वप्नावस्थायां च यत्किञ्चिदनुभूयते, तत्स्वप्नसुषुप्तिः। एवं सुषुप्त्यवस्थायामपि सात्त्विकी या सुखाकारा वृत्तिः, सा सुषुप्तिजाग्रत्, तदनन्तरं 'सुखमहमस्वाप्स'मिति परामर्शः। तत्रैव या राजसी वृत्तिः, सा सुषुप्तिस्वप्नः, तदनन्तरमेव दुःखमहमस्वाप्समिति परामर्शोपपत्तिः। तत्रैव या तामसी वृत्तिः, सा सुषुप्तिसुषुप्तिः, तदनन्तरं 'गाढं मूढोऽहमस्वाप्स'मिति परामर्शः।**

---

भङ्गार्थत्वपक्षस्योच्छेदस्स्यात्। उपचारात्—जाग्रत्कालीनाच्छय्यादौ दुःखसाधनत्वज्ञानात्। **दुःखमित्यादि**। दुःखसाधनशय्याधिकरणकं शयनं कृतवानहमित्यर्थः।

जागरे त्रैविध्यमाह—**प्रमेत्यादि**। स्तब्धीभावः—अहमाकारवृत्त्यन्यवृत्तिसामान्याभावः। सात्त्विकी—सत्त्वगुणपरिणामरूपा सुखाकाराऽऽत्मसुखविषयिका। राजसी—रजोगुणविषयिका। रजोगुणस्य दुःखादिपरिणामयोग्यत्वेन दुःखत्वोपचार इति भावः। तामसी—तमोगुणविषयिका। तिस्रोऽपि वृत्तयः सत्त्वगुणस्यैव परिणामाः, ज्ञानत्वात्। अथवा सुखरूपेण परिणतसत्त्वगुणविषयिका सात्त्विकी, दुःखरूपेण परिणतरजोगुणविषयिका राजसी, मोहरूपेण परिणततमोगुणविषयिका तामसी। न च सत्त्वादिगुणपरिणामरूपा वृत्तिस्सात्त्विक्यादिरूपा आत्मसुखविषयिका[1], एवं सुखाकारेत्यस्य सर्वत्रानुषङ्गादिति वाच्यम्। दुःखविषयकज्ञानेन विना दुःखविषयकस्मृत्यसम्भवात् ज्ञानरूपाया वृत्तेः सत्त्वान्यगुणपरिणामत्वासम्भवात्। 'सत्त्वात्सञ्जायते ज्ञान'मिति स्मृतेः। सुखादिरूपेण परिणामे तु धातुसाम्यादिकमेव निमित्तम्। अथ राजसी वृत्तिर्दुःखम्, तामसी वृत्तिः तमःपरिणामो मोहरूपः, तत्संस्कारश्च तदवच्छिन्नचैतन्यनाश एवेति न तदर्थं तद्गोचरवृत्त्यपेक्षेति चेन्न। दुःखमोहयोः वृत्तिपदेनाव्यवहारात् सविषयके ज्ञानेच्छादावेव वृत्तिपदप्रयोगादिति भावः। **एवमध्यात्ममित्यादि**। एवमभिहितानामेतेषामैक्योपासनया हिरण्यगर्भलोकप्राप्तिः अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्चेति योजना।

एतेषां विश्वादिसमूहानां प्रथमं समूहमाह-रजोगुण इत्यन्तेन। अध्यात्मं-शरीरमधिकृत्य स्थितः। अधिभूतं-स्थूलभूतमधिकृत्य स्थितः। अधिदैवं-शरीरस्थूलसमष्टिभिन्नसोपाधिरजोगुणरूपमधिकृत्य स्थितः। **अध्यात्मं जाग्रदिति**। अध्यात्मेन विश्वेनानुभूयमाना जाग्रदवस्थेत्यर्थः। अधिदैवं-ब्रह्मकारणिका सृष्टिः। अधिभूतं सर्वभूतान्यधिकृत्य स्थितः। रजोगुणो-ब्रह्मोपाधिः। एष प्रथमस्समूहः। एवमध्यात्मं-लिङ्गशरीरमधिकृत्य स्थितः। अधिभूतं—सूक्ष्मभूतसमष्टिमधिकृत्य स्थितः। अधिदैवं-तदुभयान्यसत्त्वगुणोपाधिकः। अध्यात्मम्-अज्ञानमधिकृत्य स्थितः। अधिभूतम्-

---

१. विषयिका एव सुखाकारेति पा०।

यथा चैतत्, तथा [1]वासिष्ठवार्तिकामृतादौ स्पष्टम् । एवमध्यात्मं विश्वः, अधिभूतं विराट्, अधिदैवं विष्णुः । अध्यात्मं जाग्रत्, अधिदैवम्, पालनं, अभिभूतं सत्त्वगुणः । एवमध्यात्मं तैजसः, अधिभूतं हिरण्यगर्भः अधिदैवं ब्रह्मा, अध्यात्मं स्वप्नः, अधिदैवं सृष्टिः, अधिभूतं रजोगुणः । एवमध्यात्मं प्राज्ञः, अधिभूतमव्याकृतम्, अधिदैवं रुद्रः, अध्यात्मं सुषुप्तिः, अधिदैवं प्रलयः, अधिभूतं तमोगुणः । एवमध्यात्माधिभूताधिदैवानामेकत्वात् प्रणवावयवत्रयसहितानामुपहितानामैक्योपसनया हिरण्यगर्भलोकप्राप्तिः, अन्तःकरणशुद्धिद्वारा क्रममुक्तिश्च । एतत्सर्वोपाधिनिराकरणेन साक्षिचैतन्यमात्रज्ञानेन तु साक्षादेव मोक्ष इति । तदेवं त्रयाणामप्यवस्थात्रयसहितानां विश्वतैजसप्राज्ञानामविद्यात्मकत्वात् दृश्यत्वेन च मिथ्यात्वादनुपहितः केवलः साक्षी तुरीयाख्योऽहमस्मीत्यर्थः । एवं व्यवहारतः सर्वव्यवस्थोपपत्तेः परमार्थतः कस्या अपि व्यवस्थाया अभावान्न काप्यनुपपत्तिः । विस्तरेण चैतत्प्रपञ्चितमस्माभिर्वेदान्तकल्पलतिकायामित्युपरम्यते ॥८॥

ननु जाग्रत्स्वप्नसुषुप्त्यवस्थासहितानां त्रयाणामपि तदभिमानिनां मिथ्यत्वात्तत्साक्षिणोऽपि मिथ्यात्वं स्यादविशेषादित्याशङ्क्य विशेषाभिधानेन साक्षिणः सत्यत्वमाह–

अपि व्यापकत्वाद्धितत्वप्रयोगात्स्वतस्सिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्यत्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥

---

अव्याकृतचिदाभासादियुक्तमधिकृत्य स्थितः । अव्याकृतम्–ईश्वरः । अधिदैवम्–अज्ञानाव्याकृतान्यतमोगुणोपाधिकः ।

**एवमध्यात्मेत्यादि ।** प्रणवावयवरूपवाचकसहितानामुक्तसमूहानामेकत्वादेकत्वं विचिन्त्य उपहितस्वरूपाणामुक्तसमूहानामैक्योपासनया सत्यलोकप्राप्तिपूर्वकं कैवल्यमित्यर्थः । प्रथमावयवो वाचकः, प्रथमसमूहश्च वाच्यः, तयोरेकत्वं विचिन्त्यम् । एवं द्वितीयौ तृतीयौ चावयवसमूहावेकत्वेन विचिन्त्यौ । प्रथमसमूहस्य कारणेन द्वितीयेनैकत्वं द्वियीयस्यापि तृतीयेन कारणैकत्वं चिन्तयित्वा सत्यलोकं प्राप्य हिरण्यगर्भेण तत्र विद्यमानेन सह मुच्यते । नृसिंहतापिन्यथर्वशिखामाण्डूक्यादिश्रुतिः तद्भाष्यं चात्र प्रमाणं बोध्यम् । अत्र प्रथमसमूहे सत्त्वगुणपालनविष्णूनां द्वितीयसमूहे रजोगुणसृष्टिब्रह्मणां च पाठः प्रामादिकः । विपरीतपाठस्य युक्तत्वात्, **अथर्व**शिखातापनीयादौ तथैवोक्तत्वात्, 'त्रयीं तिस्रो वृत्ती'रित्यादि**महिम्नस्तोत्री**यव्याख्याने आचार्यैरेवोक्तत्वात् । अत्र ब्रह्मनिर्देशेन तदुपाधिरजोगुणादिलाभेऽपि तेषामपि स्वातन्त्र्येणाकारादिवाच्यत्वात् पृथगुक्तिः । अत एव गार्हपत्याद्यग्नीनां पृथिव्यन्तरिक्षद्युलोकानाम् ऋगादिवेदानां च विराडन्तःपातित्वेऽपि **अथर्वशिखादौ** प्रथमादिसमूहे पृथगुक्तिस्सङ्गच्छते । स्वातन्त्र्येण वाच्यता तु त्रयीमित्यादिपद्यादौ स्पष्टा । पदार्थमुपसंहरति–**तदेवमिति** ॥ ८ ॥

---

१. वासिष्ठे निर्वा० १६५ सर्गे द्रष्टव्यम् । वार्तिके ४-३—१०५४ ।

'न दृष्टेर्द्रष्टारं पश्ये'रिति साक्षिणं प्रकृत्य 'अतोऽन्यदार्तमि'ति श्रुतेः साक्षिणोऽन्यत्साक्ष्यं सर्वं जगत्तुच्छं न तु साक्षी। बाधावधित्वात् भ्रमाधिष्ठानतया ज्ञातत्वाच्च। तद्बाधग्राहकाभावाच्चेत्याद्यनुक्तसमुच्चयार्थोऽपिशब्दः। 'अथ यदल्पं तन्मर्त्यमि'ति श्रुतेः परिच्छिन्नत्वतुच्छत्वयोः समव्याप्तत्वात्परिच्छिन्नत्वतुच्छत्वनिवृत्ती इत्याह—व्यापकत्वादिति। 'सर्वं खल्विदं ब्रह्मे'ति सर्वात्मत्वोपदेशेन देशकालापरिच्छिन्नत्वादाकाशादीनां च देशकालपरिच्छिन्नत्वेऽप्यापेक्षिकमहत्त्वेन व्यापकत्वोपचारात्। ननु सर्वव्यापकत्वेन नित्यत्वाद्भावरूपत्वाच्चात्मा न दुःखनिवृत्तिरूपः। नापि सुखरूपः। सुखस्यानित्यत्वेन नित्यात्मस्वरूपत्वानुपपत्तेः। तथा चात्मस्वरूपो मोक्षोऽपुरुषार्थ एवेत्याशङ्क्य नेत्याह—हितत्वप्रयोगादिति। हितत्वं पुरुषार्थत्वम्। 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मे'ति 'यो वै भूमा तत्सुखम्, 'एष परम आनन्दः', ( एष ह्येवानन्दयाति ) विज्ञानमानन्दं ब्रह्म'इत्यादिभिः श्रुतिभिः तस्य परमानन्दरूपत्वोपदेशात्। तस्य च नित्यत्वेऽपि लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्ति-

---

**जगत्तुच्छमिति**। जगन्मिथ्येत्यर्थः। आर्तशब्देन विनाशित्वोक्तावर्थान्मिथ्यात्वलाभः। आर्तं बाधेन पीडितमित्यर्थे मिथ्यात्वं शाब्दमेवेति भावः। **बाधावधित्वादिति**। यद्विषयकप्रमा बाधिका, तत्त्वादित्यर्थः। तथा च साक्षिणो मिथ्यात्वे बाधिकप्रमैव दुर्लभेति कुतो मिथ्यात्ववार्तेति भावः। **भ्रमेत्यादि**। अतत्त्वारोपरूपभ्रमस्य तत्त्वाज्ञानपूर्वकत्वनियमेनाज्ञानविषयत्वरूपादधिष्ठानत्वात् साक्षिणस्तात्त्विकत्वमित्यर्थः। ननु माध्यमिकस्य शून्यवादिनो मते न तत्त्वप्रमा बाधिका, सर्वस्यैव विचारासहत्वेन युक्तिबाध्यत्वात्। अत एव भ्रमो न तत्त्वाज्ञानप्रयुक्तः। तथा च पूर्वपूर्वभ्रमवासनामात्रादुत्तरोत्तरभ्रमः, न किञ्चित्स्थिरमुपादानं निमित्तं वास्ति, 'यत् सत् तत् क्षणिक'मिति नियमाभ्युपगमात्। तथा च साक्षिण एव क्षणिकविज्ञानरूपस्य घटपटादिरूपत्वस्वीकारात् साक्षिणो घटाद्याकारस्येव घटादिरूपाकारेण साक्षिणोऽपि बाधः सम्भवति तत्राह—**तद्बाधग्राहकेत्यादि**।

घटाद्याकारे साक्षिसामान्याभावज्ञानं बाधकं तत्तेनैव गृह्यते अन्येन वा ज्ञानेन? नाद्यः। बाध्यमानेन तेन तद्ग्रहणेऽपि तत्सिद्ध्यसम्भवात्। नान्त्यः। तस्यापि घटवद्बाध्यमानत्वेन घटविषयकत्वासिद्ध्या घटज्ञानाभावविषयकबाधासाधकत्वात्, ज्ञानान्तरस्य ज्ञानान्तररूपप्रत्यक्षतायास्त्वयाऽनङ्गीकारात्, ज्ञानस्य स्वात्मकप्रत्यक्षविषयत्वस्यैव त्वया स्वीकारादिति भावः। अल्पं–परिच्छिन्नम्, मर्त्यं–विनाशि बाधरूपमृत्युग्रस्तं वा। अपरिच्छिन्नत्वात्–देशकालनिष्ठाभावाप्रतियोगित्वात्। व्यापकत्वोपचारात्–'आकाशवत्सर्वगतः, वायुस्सर्वत्रगो महा'नित्यादिश्रुतिस्मृत्यादिव्यवहारात्। सर्वव्यापकत्वेन–कालतः सर्वव्यापकत्वेन सर्वदा सत्त्वेनेति यावत्। प्रेयः–प्रियतरम्। अन्यस्मात्—आत्मभिन्नात्। अन्तरतरम्–आरोपितत्वेन बाह्यात् सर्वस्मात् दृश्यात् सत्यानन्दरूपत्वेन अधिष्ठानत्वात् यतोऽन्तरम् अतस्सर्वस्मात् स्वतादात्म्याध्यासेन प्रियादपि प्रियतममेतदित्यर्थः। यत्—यः। भूमा–अपरिच्छिन्नः। आनन्दयाति–सर्वानानन्दयति। महाकाशस्य घटाकाशादाविव महानन्दस्य परिच्छिन्नानन्दे हेतुत्वमिति भावः। **तत्तदन्तःकरणवृत्तीति**। चन्दनादियोगजन्यमनोवृत्तीत्यर्थः। लोके

**विनाशोपचारः। अज्ञानव्यवहितस्य च तस्य प्राप्तस्यैव ज्ञानमात्रादविद्यानिवृत्त्या प्राप्तिरिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्त्युपपत्तिः। अध्यस्तस्य प्रपञ्चस्य दुःखरूपस्याधिष्ठानत्वात् स एवाभाव इति दुःखाभावरूपत्वेनापि तस्य पुरुषार्थता। ननु मोक्षे सुखं संवेद्यते, न वा? नाद्यः। तदानीं देहेन्द्रियाद्यभावेन तद्व्यञ्जकाभावात्, व्यञ्जकाभावेऽपि तत्सम्वेदनाभ्युपगमे संसारदशायामपि तथा प्रसङ्गात्। न द्वितीयः। अपुरुषार्थतापत्तेः। ज्ञायमानस्यैव तस्य पुरुषार्थत्वात्। अत एव शर्करातद्भोजिनोरिवेति वैष्णवंमन्यानामुद्गार इति चेन्नेत्याह—स्वतस्सिद्धभावादिति। स्वप्रकाशज्ञानरूपत्वादित्यर्थः। यद्यपि संसारदशायामविद्यावृतस्वरूपत्वादात्मा परमानन्दरूपतया न प्रथते, तथापि तत्त्वविद्ययाऽविद्यानिवृत्तौ स्वप्रकाशतया स्वयमेव परमानन्दतया प्रकाशत इति न व्यञ्जकापेक्षा। ननु सुखस्य स्वप्रकाशज्ञानरूपत्वेऽपि नात्मरूपता। ज्ञानस्य धात्वर्थरूपतया क्रियात्वेन साश्रयत्वात्, जानामीति प्रतीतेर्ज्ञानमहस्मीत्यप्रतीतेश्च;**

---

इत्यनेनेदं सूचितम्–'सुखस्य स्वरूपेणाजन्यत्वेऽपि स्वावरकाज्ञानविरोधिविशिष्टरूपेण लोके काम्यत्वात् मुमुक्षोरपि पूर्णानन्दस्वरूपमोक्षस्यावारकमूलाज्ञानविरोधिविशिष्टतया काम्यते'ति। तदिदमुक्तं—**तदुद्देशेन मुमुक्षुप्रवृत्तीति**। इति—इत्थमज्ञानविरोधिज्ञानविशिष्टरूपेण तदुद्दिश्य प्रवृत्तीत्यर्थः। स एव—परमानन्दात्मैव। पुरुषार्थता—काम्यता। **ज्ञायमानस्येति**। अनावृतसुखमेव काम्यते अत एव तवावृतसुखं मया सम्पाद्यमिति केनचित्प्रतारितः पुरुषो वदति मास्तु मे तत्सुखमिति। **शर्करेति**। यथा शर्करा स्वरूपेण न सुखप्रकाशः, तत्प्रयोजकस्य शर्करासंवेदनस्याभावात्; किन्तु तद्भोजिनस्तत्संवेदनवतः। एवं विष्णुभावापन्नस्य सुखरूपत्वेऽपि न सुखप्रकाशः, तत्संवेदनाभावात्; किन्तु तद्भेदेनावस्थितस्य 'अयं विष्णुस्सकलकल्याणगुणो मत्सेव्य' इति संवेदनवतः। तस्मात् विष्णुभावो न मोक्षः, किन्तु तत्सन्निधिस्थितस्य तत्संवेदनमिति। तदेतन्मतमाश्रिता **माध्वाः** वैष्णवंमन्या एव न तु वैष्णवाः।

एवमेकमिदं ब्रह्म न भेदि सकलं जगत्।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥
तदेतदुपदिष्टं ते संक्षेपेण महामुने।
परमार्थं सारभूतं यत्तदद्वैतमशेषतः॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मना।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥

इति **विष्णुपुराणाद्युक्तेः**। 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतेश्चेति भावः। प्रथते—भाति। प्रकाशते—संशयाद्यविषयत्ववान्। स्वयमेवेत्यस्य संशयाद्यविषयत्वेऽन्वयः। तथा च पूर्णानन्दस्य संसारकाले संशयादिविषयत्वमावरणप्रयुक्तम्। आवरणनिवर्तकवृत्तिनाशोत्पत्तिक्षणपर्यन्तक्षणत्रये संशयाद्यविषयत्वं तु तादृशवृत्तिप्रयुक्तम्। तदुत्तरकाले तु वृत्त्यभावेऽप्यावरणाभावादेव तदिति भावः।

तथा च कथमद्वैतवाद इत्याशङ्क्य नेत्याह—अनन्याश्रयत्वादिति। 'यत्साक्षादपरोक्षाद् ब्रह्म, य आत्मा सर्वान्तरः, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे'ति श्रुतेः स्वप्रकाशज्ञानानन्दरूप एवात्मा। अन्तःकरणाद्युपाधितादात्म्याध्यासेन च तद्वृत्तौ ज्ञानाध्यासाज्जानामीति तदाश्रयत्वप्रतीतिः। धात्वर्थत्वमुत्पत्तिविनाशवत्त्वं चान्तःकरणवृत्तेरेवेति ज्ञप्तिरूपमुख्यज्ञानस्य सर्वाधिष्ठानत्वेनान्याश्रयत्वाभावान्न द्वैतापत्तिः। तेन ज्ञानसुखात्मक आत्मा सत्यः, तद्भिन्नं च सर्वं जगदसत्यमिति सिद्धम् ॥ ९ ॥

ननु सर्वस्य जगतस्तुच्छत्वे तन्निषेधेनात्मतत्त्वप्रतिपत्तिर्न स्यात्। न हि शशविषाणं निषिध्यते। 'क्वचित्प्रमितं क्वचिन्निषिध्यत' इति न्यायात्। तथा च निषेधानुपपत्त्यैव न जगतस्तुच्छमिति, नेत्याह—

न चैकं तदन्यद् द्वितीयं कुतस्स्यान्न वा केवलत्वं न चाकेवलत्वम्।
न शून्यं न चाशून्यमद्वैतकत्वात्कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

एकत्वसङ्ख्यायोगि एकम्। तदपेक्षाबुद्धिजन्यद्वित्वसङ्ख्यायोगि द्वितीयम्। तत एकाभावे द्वितीयं कुतः स्यात्? द्वितीयं च तृतीयादीनामप्युपलक्षणम्। ननु 'एकमेवाद्वितीयमि'ति श्रुत्या एकत्वं प्रतिपाद्यते। नेत्याह—न वा केवलत्वमिति। केवलत्वम् एकत्वम्। तस्याविद्यकत्वात्। यद्यात्मन एकत्वं श्रुत्या न प्रतिपाद्यते, तर्हि प्रत्यक्षादिप्रमाणवशादनेकत्वमेव स्यादिति चेन्नेत्याह—न चाकेवलत्वमिति। अकेवलत्वम् अनेकत्वम्। 'नेह नानास्ति किञ्चन, एकमेवाद्वितीयं ब्रह्म, अथात आदेशो नेति नेतीत्यादिश्रुतिभ्यः।

---

साश्रयत्वात्—स्वसमानसत्ताकाश्रयकत्वात्। अद्वैतेति। अद्वैतज्ञानेत्यर्थः। अन्तःकरणेति। आत्मनि मनस्तादात्म्याध्यासेनेत्यर्थः। तद्वृत्तौ—तत्परिणामरूपायां वृत्तौ। ज्ञानाध्यासात्—स्वधर्मत्वेन कल्पितस्यात्मस्वरूपस्य ज्ञानस्य तादात्म्याध्यासात्। धात्वर्थत्वेत्यादि। धात्वर्थत्वं जानातीत्यादिधातुवाच्यत्वम्। वृत्तेः—वृत्त्यवच्छिन्नचितः। सुखादिज्ञानमपि सुखादिरूपवृत्त्यवच्छिन्नचिदेव। वस्तुतस्तु वृत्तेर्वर्तमानरूपसम्बन्धस्य असत्त्वापादकाज्ञानशून्यत्वविशिष्टचित इति यावत्। एतेन यस्य विषयस्य ज्ञानं तदाकारवृत्त्यवच्छिन्नचित् तस्य ज्ञानमिति वाच्यम्। तथा च सुखादिस्थले तथा न सम्भवतीत्यपास्तम्। ज्ञप्तीति। चिदित्यर्थः। सर्वाधिष्ठानत्वेन—स्वान्यसर्वाधारत्वेन। अन्याश्रयत्वेति। अन्याश्रितत्वेत्यर्थः। ज्ञानसुखस्वरूपात्मकः ज्ञप्तिसुखस्वरूपात्मकः ॥ ९ ॥

क्वचित् प्रमितमित्यादि। प्रतीयमानं सर्वं सत्यमेव परन्तु एकत्र प्रमितमन्यत्र निषिध्यत इत्यन्यथाख्यातिविशेषवादिनां मतम्। तदपेक्षाबुद्धीति। नानैकत्वसापेक्षबुद्धीत्यर्थः। 'अयमेकोऽयमेक' इत्येकत्वद्वयविषयकज्ञानेति यावत्। आविद्यकत्वात्—'अतोऽन्यदार्तमि'ति श्रुतिबाधितत्वात्। अनेकत्वं—द्वित्वसम्बन्धित्वम्। इह ब्रह्मणि नाना तद्भिन्नं किञ्चन नेत्यर्थः। 'विनञ्भ्यां नानाञौ न सह'

**तर्हि सर्वप्रतिषेधाच्छून्यमेव स्यादिति नेत्याह—न शून्यमिति। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरि'ति, सत्यं ज्ञानमनन्तं ब्रह्म। 'सदेव सोम्येदमग्र आसी'दित्युपक्रम्य ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी'त्यादिश्रुतिभिः सत्यत्वप्रतिपादनात्, सर्वभ्रमाधिष्ठानत्वात्सर्वबाधावधित्वाच्च। तर्हि सत्यत्वज्ञानत्वादिधर्मवदपि स्यात्! नेत्याह—न चाशून्यमिति। एकमद्वितीयमिति पदद्वयेन सर्वभेदप्रतिषेधेऽप्येवकारेण धर्मधर्मिभावादिभेदप्रतिषेधात्। सर्वत्र हेतुमाह—अद्वैतकत्वादिति। द्विधा इतं द्वीतं तस्य भावो द्वैतम्। तदुक्तं वार्तिके—**

**द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते। इति।**

**न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमित्यक्षरार्थः। 'सलिल एको द्रष्टाद्वैत' इति श्रुतेः। प्रतियोगिज्ञानस्यैव लाघवेनाभावबुद्धौ कारणत्वात्, द्वैतस्यानिर्वचनीयत्वाङ्गीकारेण प्रत्यक्षादिवेद्यत्वान्निषेधोपपत्तिरित्यर्थः। ततहर्योदश आत्माङ्गुलिनिर्देशेन प्रति-**

---

इत्यनेन सूत्रेण नसहशब्दार्थे भेदादौ वर्तमानाभ्यां विनञ्शब्दाभ्यां नानाञ्प्रत्ययौ भवत इत्यर्थकेन नञ्छब्दात् स्वार्थिकनाञ्प्रत्ययान्तात् नानापदनिष्पत्तेस्तस्य भेदार्थकत्वात्। ऐतदात्म्यम्—एतदात्मकम्, अशून्यं—सत्यत्वादियुक्तम्। **सर्वभेदेति**। सजातीयविजातीयप्रतियोगिकभेदेत्यर्थः। **धर्मधर्मिभावादीति**। धर्मधर्मिभावादिप्रयोजकौ यौ भेदाभेदौ, तत्प्रतिषेधादित्यर्थः। भेदमात्रे स्वीकृते सामानाधिकरण्यप्रत्ययानुपपत्तेः। अभेदमात्रे स्वीकृते धर्मधर्मिभावानुपपत्तेः भेदाभेदौ स्वीक्रियेते। तत्र भेदस्य धर्मिप्रतियोगिभावादिसापेक्षत्वेन संसृष्टत्वेन च मिथ्यात्वादभेदस्यापि भेदाभावरूपत्वादिरूपेण तादृशत्वादेवकारेण निषेधः। तदुक्तं **खण्डने**—एकमद्वितीयमित्युक्त्वा यदेवकारमादत्ते श्रुतिस्तदात्यन्तिकाद्वैतं प्रतिपादयितुमिति। द्विधाभावः—प्रकाशद्वयसत्ता। सद्रूपाधिष्ठानसंसर्गस्य घटादिरूपारोप्यस्य च 'सन् घट' इत्यादिभ्रमसिद्धस्य च सत्ता यत्र शुद्धे ब्रह्मणि न विद्यते, तदद्वैतम्। तत्त्वादिति हेत्वर्थः। **सलिल इति**। आचारार्थक्विबन्तत्वात् सलिलमिवाचरतीत्यर्थः, निर्मल इति यावत्। अत एव नपुंसकस्यापि सलिलपदस्य पुंस्त्वोपपत्तिः। प्रमितमेव निषिध्यते इति यद्दूषणमुक्तं तत् समाधत्ते—**प्रतियोगीति**। ज्ञानस्य—ज्ञानत्वेन। लाघवेन—प्रमात्वानिवेशलाघवेन।

न च विशेषणतावच्छेदकप्रकारकधीविधया प्रतियोगिज्ञानस्य कारणत्वं वाच्यम्, तत्राप्रमात्वनिश्चये अभावज्ञानानुदयात् अनावृतेन प्रतियोगिप्रमात्वेन हेतुत्वोक्तेरावश्यकत्वमिति वाच्यम्। तत्राप्रमात्वनिश्चये सत्यप्यभावज्ञानोदयेनानावृतप्रमात्वेन हेतुत्वास्वीकारात्, अनावृतप्रमात्वीयप्रातीतिकसंसर्गस्य भ्रमेऽपि सत्त्वेनाप्रमात्वनिश्चयाभावकाले भ्रमादप्यभावबुद्धिसम्भवेन च भ्रमसाधारणकारणतासम्भवेनास्मदिष्टाविघाताच्च। ज्ञानस्यैव कारणत्वात् द्वैतस्य प्रत्यक्षादिवेद्यत्वाच्च निषेधोपपत्तिरिति योजना। ननु प्रत्यक्षादिप्रमाणवेद्यस्य कथं निषेधस्तत्राह—**अनिर्वचनीयत्वाङ्गीकारेणेति**। मिथ्यात्वस्वीकारेणेत्यर्थः। तथा च प्रत्यक्षादीनां न तात्त्विकं प्रामाण्यं येन निषेधविरोधः, किन्तु व्यावहारिकमिति भावः। अङ्गुलिनिर्देशेन—प्रमाणफलविषयतया।

पाद्यतामिति, नेत्याह—कथं ब्रवीमीति। किमाक्षेपे। अद्वैतकत्वेन वागविषयत्वात्। 'अवचनेनैव प्रोवाच' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'। 'न विज्ञातेर्विज्ञातारं विजानीया' इत्यादिश्रुतिभ्यः। वागविषयत्वे वेदान्तानां कथं तत्र प्रामाण्यमिति चेन्न। अविषयेऽप्यात्मनि तदाकारवृत्तिमात्रेण तदविद्यानिवर्तकत्वादित्याह—सर्ववेदान्तसिद्धमिति। तथा च श्रुतिः—

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम्॥
यन्मनसा न मनुते येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥

इत्यादिरविषयत्वमात्मनो दर्शयति। तदेवं वेदान्तवाक्यजन्याखण्डाकारवृत्त्या अविद्यानिवृत्तौ तत्कल्पितसकलानर्थनिवृत्तौ परमानन्दरूपस्सन् कृतकृत्यो भवतीति सिद्धम्॥

---

**अद्वैतकत्वेन वागविषयत्वादिति**। अद्वैतकत्वात् स्वसमानसत्ताकद्वैतविशिष्टदृश्यभिन्नत्वे वागादिप्रमाणफलाविषयत्वमित्यर्थः। अवचनेन—वचनं विनैव। प्रोवाच—ज्ञापितवान्। वचनस्य मुख्यवृत्तेर्ब्रह्मण्यसम्भवात् तत्र तत्फलाविषयत्वाच्च लक्षणावृत्त्या बोधनप्रकारस्य दुर्बोधत्वाच्च गुरुणा शिष्यपृष्टेन वचनं नोक्तम्। तादृशं च गुरोरभिप्रायमजानन् शिष्यः पृष्टवान्। ततो गुरुराह—'ब्रूमः खलु उपशान्तस्वभावो ह्ययमात्मे'ति। तस्यायमर्थः—ब्रूमो वचनमनुक्त्वैव त्वां ज्ञापयामः, अयमात्मा वचनमुख्यवृत्त्यविषयत्वात् प्रमाणफलाविषयत्वाच्चोपशान्तस्वभावः स्वाभाविकेन द्वैतसम्बन्धेन विशिष्टात् दृश्याद्विलक्षण इति। निवर्तन्ते—फलविषयतया बोधनासमर्थाः। अप्राप्य—फलविषयत्वद्वारकसम्बन्धेनासम्बध्य। विज्ञातेः—मनोवृत्तिरूपज्ञानस्य। विज्ञातारं—स्वप्रकाशसाक्षिणम्। अविषये—फलाविषये। **तदाकारेति**। शुद्धात्माकारेत्यर्थः। तथा च तत्र प्रामाण्यं तदाकारप्रमाकरणत्वम्, न तु तद्विषयकफलकरणत्वमिति भावः। तदुक्तम्—

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते॥ इति।

वेदान्तसिद्धं—वेदान्तवाक्यजन्यवृत्तिप्रयुक्तज्ञानतत्प्रयुक्तोच्छेदवत्। अमतं—परोक्षप्रमाणफलाविषयत्वेन ज्ञातम्। मतम्—उक्तफलविषयत्वेन ज्ञातम्। विजानतां—प्रत्यक्षप्रमाणफलविषयत्वेनजानतां पुरुषाणाम्। अविज्ञातं—चैतन्याविषयत्वरूपस्वप्रकाशत्वेनाज्ञातम्, अविजानताम्—उक्तफलविषयत्वेनाजानताम्। विज्ञातम्—उक्तस्वप्रकाशत्वेन ज्ञातुं शक्यम्। मनुते—फलंविषयीकरोति। तदेव—फलाविषयीभूतम्। उपासते श्रुत्यादिप्रमाणेन तत्तद्गुणवत्तया फलविषयरूपेण जानन्ति। **अविषयत्वमिति**। चिद्रूपस्यैव मुख्यज्ञानरूपत्वेन तदीयसम्बन्धस्यैव मुख्यविषयतारूपत्वेन तत्सामान्या-

न स्तौमि तं व्यासमशेषमर्थं समग्रसूत्रैरपि यो बबन्ध ।
विनापि तैस्सङ्ग्रथिताखिलार्थं तं शङ्करं नौमि सुरेश्वरं च ॥ १ ॥
लघुरपि बह्वर्थवहश्चिन्तामणिरिव निबन्धोऽयम् ।
मधुसूदनेन मुनिना विहितो गुणिनां विनोदाय ॥ २ ॥
यदत्र सौष्ठवं किञ्चित्तद् गुरोरेव मे न हि ।
यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्न हि ॥ ३ ॥
बहुयाचनया मयाऽयमल्पो बलभद्रस्य कृते कृतो निबन्धः ।
यद्दुष्टमिहास्ति यच्च दुष्टं तदुदारास्सुधियो विवेचयन्तु ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वती-
भगवत्पूज्यशिष्यश्रीमधुसूदनसरस्वतीविरचितः
सिद्धान्तबिन्दुनामको ग्रन्थः समाप्तः ।

---

भावं फलविषयत्वनिराकरणद्वारा दर्शयति । वृत्तेराकाराख्यसम्बन्धस्तु न मुख्यविषयतेति तस्य ब्रह्मणि स्वीकारेऽपि न विरोध इति भावः । विनापि तैरिति । सूत्रशब्दस्य तन्तौ सङ्ग्रहवाक्ये च प्रयोगात् श्लेषमूलको व्यतिरेकालङ्कारोऽयम् । सूत्रैरपि व्यासस्सर्वार्थान् न बबन्ध न सङ्गृहीतवान्, शङ्कराद्याचार्यास्तु सूत्राण्यनाश्रित्यापि सर्वार्थान् सङ्ग्रहीतवन्तः सूत्रानुक्तार्थानामपि वक्तृत्वादित्यर्थः । लघुः—अतिस्वल्पः । बह्वर्थवहः—( बह्वर्थ )·प्रापकः । निबन्धः—ग्रन्थः । अत्र—ग्रन्थे । सौष्ठवं—गुणवत्वम् । बलभद्रस्य—आचार्याणां सेवकब्रह्मचारिणः ॥

श्रीनारायणतीर्थानां गुरूणां चरणाम्बुजम् ।
नमामि वाङ्मनःकायैरनन्यशरणैस्सदा ॥
भजे श्रीपरमानन्दसरस्वत्याः पदाम्बुजम् ।
यदेवालम्ब्य संसारसागरो गोष्पदीकृतः ॥

इति श्री गौडब्रह्मानन्दसरस्वतीविरचिता सिद्धान्तबिन्दुटीका
न्यायरत्नावली समाप्ता ।

ॐ

## श्रीशङ्करभगवत्पादाचार्यविरचिता

# शतश्लोकी

## श्रीमदानन्दज्ञानाचार्यविरचितटीकोपेता

**दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः,**
**स्पर्शश्चेत्तत्र कल्प्यः, स नयति यदहो स्वर्णतामश्मसारम्।**
**न स्पर्शत्वं तथापि, श्रितचरणयुगे सद्गुरुः[1] स्वीयशिष्ये**
**स्वीयं साम्यं विधत्ते, भवति निरुपमस्तेन चालौकिकोऽपि।।१।।**

**यद्वच्छ्रीखण्डवृक्षप्रसृतपरिमलेनाभितोऽन्येऽपि वृक्षाः**
**शश्वत्सौगन्ध्यभाजोऽप्यतनुतनुभृतां तापमुन्मूलयन्ति।**
**आचार्याल्लब्धबोधा अपि विधिवशतः सन्निधौ संस्थितानां**
**त्रेधा तापं च पापं सकरुणहृदयाः स्वोक्तिभिः क्षालयन्ति।।२।।**

---

**दृष्टान्त इति**। ज्ञानदातुः सद्गुरोस्त्रिभुवनजठरे दृष्टान्तो नैव दृष्टः। क्षुद्रविद्योपदेष्टृणां गुरूणां दृष्टान्तः कथञ्चिदुपलभ्यते। परन्तु "न हि ज्ञानेन सदृशं पवित्रमिह विद्यत" इत्युक्तत्वात्, ज्ञानदातुः श्रीगुरोर्दृष्टान्तः त्रिभुवनजठरान्तर्वर्तिषु देवादिषु[2] लौकिकेषु नानाविचित्रवस्तुषु नैव दृष्टः। अथ मनाक्साम्यदर्शनेन स्पर्शपाषाणो दृष्टान्तत्वेन कल्प्यः कल्पनीयश्चेत्, तथापि न घटत इत्याह—**स नयतीति**। स स्पर्शाश्मा अश्मसारं लोहं यद्यपि स्वर्णतां नयति प्रापयति, तथापि स्पर्शत्वं न प्रापयति, स्वसदृशं न करोति। सद्गुरुस्तु श्रितचरणयुगे स्वीयशिष्ये स्वीयं साम्यं विधत्ते। तेन कारणेन स्पर्शादेर्दृष्टान्तानर्हत्वाद् गुरुर्निरुपमो दृष्टान्तशून्यः तथाऽलौकिकोऽपि प्रपञ्चातीतोऽपि (न दृष्टः।) आत्माकारत्वात् "ज्ञानी त्वात्मैव मे मत" मिति भगवद्वाक्यात्।।१।।

अथ श्रीगुरोः सन्निधानमात्रेणैव शिष्यः कृतार्थतामेति, किं पुनरुपदेशादित्याह—**यद्वदिति**। श्रीखण्डवृक्षो मुख्यश्चन्दनवृक्षस्तस्मात्प्रसृतो यः परिमलस्तेनाभितः समन्ततः अन्ये वृक्षा अपि शश्वत् निरन्तरं सौगन्ध्यभाजो

---

१. सद्गुरुः = सद् ब्रह्म, तस्योपदेष्टा स्वाभेदमेव शिष्यस्य प्रापयति, ब्रह्मात्मैक्योपदेशात्। लौकिकगुरुस्तु स्वसदृशत्वं शिष्ये आपादयेत्, न त्वभेदम्। अत एव सद्गुरुः अलौकिकः। साम्यं ब्रह्मत्वम्। 'पण्डिताः समदर्शिनः' 'निर्दोषं हि समं ब्रह्म' इति ब्रह्मणि समशब्दप्रयोगात्।

२. देवादिलोकेषु पा.।

**आत्मानात्मप्रतीतिः प्रथममभिहिता सत्यमिथ्यात्वयोगाद्[1]**
**द्वेधा ब्रह्मप्रतीतिर्निगमनिगदिता स्वानुभूत्योपपत्त्या।**
**आद्या देहानुबन्धाद्भवति तदपरा सा च सर्वात्मकत्वा-**
**दादौ ब्रह्माहमस्मीत्यनुभव उदिते खल्विदं ब्रह्म पश्चात्।।३।।**

**आत्मा चिद्वित्सुखात्माऽनुभवपरिचितः सर्वदेहादियन्ता**
**सत्येवं मूढबुद्धिर्भजति ननु जनोऽनित्यदेहात्मबुद्धिम्।**
**बाह्यास्थिस्नायुमज्जापलरुधिरवसाचर्ममेदोयुगन्त-**
**र्विण्मूत्रश्लेष्मपूर्णं स्वपरवपुरहो संविदित्वाऽपि भूयः।।४।।**

---

भवन्ति। अथ न केवलं सौगन्ध्यभाजः, किन्तु, अतनुतनुभृतां बहूनां सर्वजातीयानां लोकानां तापमुन्मूलयन्ति। बहूनामिति तारतम्यवर्जम्। तद्वदाचार्याद् विधिवशाद् भाग्यवशाल्लब्धबोधाः सन्तः यदृच्छया सन्निधौ संस्थितानां सर्वजनानां सकरुणहृदयाः यथाधिकारं कर्मोपासनाज्ञानकाण्डनिरूपिकाभिः स्वोक्तिभिः स्वैरकथाभिः[2] त्रेधा आध्यात्मिकाधिदैविकाधिभौतिकभेदेन त्रिविधं तापं च, कायिकवाचिकमानसिकभेदेन त्रिविधं पापं च क्षालयन्त उन्मूलयन्ति। विधिवशादिति पदेन बोधलब्धेः दुर्लभत्वं सूचितम्।।२।।

अथात्मानात्मप्रतीतिप्रकारमाह—**आत्मेति**। प्रथमं मूलतस्तत्त्वविचारे क्रियमाणे सत्यं मिथ्या चेति कोटिद्वयमासीत्। तथा च सत्यमिथ्यात्वयोगादात्मानात्मप्रतीतिश्च। 'सत्यं ज्ञानमनन्तं ब्रह्म'तिश्रुतेः सत्यं ज्ञानं, मिथ्या तद्विपरीतमज्ञानम्। एवं सत्यस्य ब्रह्मणः प्रतीतिर्द्वेधा निगमनिगदिता वेदोक्ता। अथ तामेवाह—**स्वेति**। स्वानुभूत्या उपपत्त्या चैवं द्वेधा प्रतीतिः। तत्राद्या स्वानुभूत्या या प्रतीतिः सा देहानुबन्धात् शरीरावच्छेदेन भवति। तथोपपत्त्या या प्रतीतिः सा सर्वात्मकत्वात् समष्टिरूपात्। अथात्र हेतुमाह—**आदाविति**। आदौ देहावच्छेदेन ब्रह्माहमस्मीत्यनुभवे उदिते सति पश्चात्तदनन्तरं सर्वं खल्विदं ब्रह्मेति उपपत्त्याऽऽत्मप्रतीतिर्भवति।।३।।

एवमुद्देशमात्रेणात्मप्रतीतिमभिधायेदानीं विशेषतो निरूपयति—**आत्मा चिदिति**। आत्मा चिद्वित्सुखात्मा वर्तते। चिच्चैतन्यं, विद् ज्ञानं, सुखं परमानन्दः। तदेतत्त्रयमप्यात्मा स्वरूपं यस्य स तथा। अथ न केवलमेवंविधमात्मस्वरूपं उपनिषद्वाक्यैरेव ज्ञातव्यमित्याह—**अनुभवेति**। किंभूत आत्मा? अनुभवपरिचितः = अनुभवेन परिचितः, निरन्तराभ्यासेन ज्ञातः। अथ तमेवानुभवमाह—**सर्वदेहादियन्तेति**। सर्वे च ते देहादयश्च इन्द्रियप्राणास्तेषां यन्ता नियन्ता चालकत्वेन देहनियन्ता चिद्रूपः। इन्द्रियनियन्तृत्वेन संविद्रूपः। सुषुप्तावानन्दरूपः इत्यवस्थात्रयेऽप्यनुभूयत इत्यर्थः। अहो इत्याश्चर्ये। एवं सत्यपि मूढबुद्धिर्जनः अनित्यदेहादौ आत्मबुद्धिं भजति। अनित्यश्चासौ देहश्च तत्रात्मबुद्धिं, देह एवात्मेति मनुते। अथ देहोऽप्यात्मत्वकल्पनार्हो भविष्यतीति चेन्नेत्याह—**बाह्येति**। बाह्यं अस्थीनि च स्नायवश्च सूक्ष्मशिराः, मज्जा, पलं मांसं, रुधिरं रक्तं, वसा, चर्ममेदोयुक् अन्तर्विण्मूत्रश्लेष्मपूर्णम्। एवंविधं जुगुप्सास्पदं स्वपरवपुः स्वकीयं परकीयं वा शरीरं विदित्वाऽपि भूयो देहात्मबुद्धिं भजत इति महदाश्चर्यमित्यर्थः।।४।।

---

१. सत्यत्वेन आत्मनः, मिथ्यात्वेनानात्मनश्च प्रतीतिः नित्यानित्यवस्तुविवेकरूपा 'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रे अथशब्देनाभिहिता। उक्तं च—'ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः। सोऽयं नित्यानित्यवस्तुविवेकः परिकीर्तितः' इति।

२. इदं पदं नास्ति पुस्तकान्तरे।

**देहस्त्रीपुत्रमित्रानुचरहयवृषास्तोषहेतुर्ममेत्थं**
**सर्वे स्वायुर्नयन्ति प्रथितमलममी मांसमीमांसयेह।**
**एते जीवन्ति येन व्यवहृतिपटवो येन सौभाग्यभाज-**
**स्तं प्राणाधीशमन्तर्गतममृतममुं नैव मीमांसयन्ति।।५।।**

**कश्चित्कीटः कथञ्चित्पटुमतिरभितः कण्टकानां कुटीरं**
**कुर्वंस्तेनैव साकं व्यवहृतिविधये चेष्टते यावदायुः।**
**तद्वज्जीवोऽपि नानाचरितसमुदितैः कर्मभिः स्थूलदेहं**
**निर्मायात्रैव तिष्ठन्ननुदिनममुना साकमभ्येति भूमौ।।६।।**

**स्वीकुर्वन् व्याघ्रवेषं स्वजठरभृतये भीषयन् यश्च मुग्धान्**
**मत्वा व्याघ्रोऽहमित्थं स नरपशुमुखान् बाधते किं नु सत्त्वान्।**

---

अथ पुनराश्चर्यमेव दर्शयन्नाह—**देहेति**।

अमी सर्वे लोका इहास्मिन् जगति इत्थं मांसमीमांसया मांसविचारेणालं पूर्णं स्वायुर्नयन्ति, स्वकीयमायुः परिकलयन्ति। किंभूतमायुः? प्रथितं वंशविज्ञानादिगुणैःख्यातमपीत्यर्थः। इत्थं कथमित्याह—**देहेत्यादि**। देहः स्वदेहः, स्त्री [illegible], मित्रं, अनुचरः, सेवकः, हयोऽश्वः, वृषो बलीवर्दः, एते मम तोषहेतवो भवन्तीत्यभिमानेन। तथा एते पुष्टाः कृशा वेति भरणपोषणरक्षणादिभिर्दृढप्रेमानुबन्धेन स्वायुर्नयन्ति। देहभृतामिदमेव प्रयोजनमिति मत्वा व्यर्थं व्ययीकुर्वन्ति। अथ गूढमात्मतत्त्वं तैः परमप्रयोजनत्वेन कथं ज्ञेयं? न तत्र तेषामपराधः, किं तु तद्गतमौढ्यस्य। अथ तदेवाह—**एत इति**। एते देहस्त्रीपुत्रादयः येन कृत्वा जीवन्ति। तथा येन व्यवहृतिपटवः स्वव्यवहारक्षमा भवन्ति। तथा येन सौभाग्यं सौन्दर्यं भजन्ति। मृतशरीरे तथात्वादर्शनादित्यर्थः। तमन्तर्गतं अन्तर्यामित्वेन स्थितं प्राणाधीशं प्राणेशं प्राणमुख्यं अमृतं म्रियमाणेषु देहेष्वमरणशीलं अमुमनुभवैकवेद्यं नैव मीमांसयन्ति न विचारयन्तीति महदाश्चर्यमित्यर्थः।।५।।

अथ देहात्मसाहचर्यं दृष्टान्तेन दर्शयति[1]—**कश्चिदिति**। तथा कश्चित्पटुमतिः कीटः कथञ्चिन्निज-कफोद्भूतसूत्रयन्त्रैः कण्टकानां कुटीरं कुर्वन् व्यवहृतिविधये व्यवहारसिद्धये यावदायुश्चेष्टते इतस्ततः पर्यटति। तद्वत् जीवोऽपि नानाचरितसमुदितैः अनेकविधानि चरितानि क्रियमाणसञ्चितानि तेभ्यः समुदितैः प्रारब्धकर्मभिः स्थूलदेहं शरीरं निर्माय विरचय्य ततोऽत्रैव देहे तिष्ठन् अमुना देहेन साकं सहैवानुदिनं भूमावभ्येति पर्यटति। अयमर्थः—कण्टककुटीरवदचेतनो देहः स्वतो न चलति, मृतशरीरे चलनादर्शनात्। अतस्तस्य कश्चिच्चालको वक्तव्यः। स एव जीवः। तथा च रथाश्वन्यायवत् चालकव्यतिरेकेण देहो न चलति, तथा देहव्यतिरेकेण तस्य चालकत्वं न युज्यत इत्युभयोः साहचर्यम्।।६।।

अथ प्राप्तोऽपि देहः पारमार्थिको न भवति, किन्त्वविद्याकल्पितत्वात्कृत्रिमोऽस्तीति तदनुरूपं न कार्यमिति दृष्टान्तेन द्रढयति—**स्वीकुर्वन्निति**। यः कश्चित् पुरुषः स्वजठरभृतये भिक्षया स्वोदरपूरणाय कृत्रिमं व्याघ्रवेषं

---

१. द्रढयति पा.।

**मत्वा स्त्रीवेषधारी स्त्र्यहमिति कुरुते किं नटो भर्तुरिच्छां**
**तद्वच्छारीर आत्मा पृथगनुभवतो देहतो यः स साक्षी।।७।।**

**स्वं बालं [1]रोदमानं चिरतरसमयं शान्तिमानेतुमग्रे**
**द्राक्षं खार्जूरमाम्रं सुकदलमथवा योजयत्यम्बिकाऽस्य।**
**तद्वच्चेतोऽतिमूढं बहुजननभवान्मौढ्यसंस्कारयोगाद्**
**बोधोपायैरनेकैरवशमुपनिषद् बोधयामास सम्यक्।।८।।**

**यत्प्रीत्या प्रीतिपात्रं तनुयुवतितनूजार्थमुख्यं स तस्मात्**
**प्रेयानात्माऽथ शोकास्पदमितरदतः प्रेय एतत् कथं स्यात्।**
**भार्याद्यं जीवितार्थे[2] वितरति च वपुः स्वात्मनः श्रेय इच्छन्**
**तस्मादात्मानमेव प्रियमधिकमुपासीत विद्वान्न चान्यत्।।९।।**

---

स्वीकुर्वन् तेन मुग्धान् बालिशांश्च भीषयन् त्रासयन्नास्ते। सः अहं व्याघ्र इत्थं मत्वा नरपशुमुखान् सत्त्वान् प्राणिनः बाधते किं नु? व्याघ्रवेषं कृत्रिमं जानन् तूष्णीमास्ते। न तु व्याघ्रवेषानुरूपं कर्म करोतीत्यर्थः। अथैतदेव पुनर्दृष्टान्तेन द्रढयति[3]—**मत्वेति**। स्त्रीवेषधारी नटः 'अहं स्त्री'ति मत्वा भर्तुरिच्छां कुरुते किम्? स्त्रीवेषानुरूपैर्हावभावैरन्यान् पुरुषान् प्रलोभयति, परं तु स्वयं स्त्र्यहमिति मत्वा रमणयोगे इच्छां न कुरुते। तद्वच्छारीरः शरीरावच्छिन्न आत्मा देहतः देहानुभवे पृथगस्ति। यतः स साक्षी तटस्थः, तेन देहानुरूपा चेष्टा न कार्या। स्वरूपानुरूपमेव स्थातव्यमित्यर्थः।।७।।

अथ बहुप्रकारैरात्मप्रतीतिं दर्शयन्त्याः श्रुतेः कौशलमाह—**स्वं बालमिति**। अम्बिका माता चिरतरसमयं रोदमानं स्वं बालं शान्तिमानेतुं तूष्णींभावं प्रापयितुं अस्य बालकस्याग्रे द्राक्षं खार्जूरं आम्रं सुकदलं वा योजयति। येन केनाऽप्यभीष्टफलेनायं रोदनादुपशमं प्राप्नोत्वित्यर्थः। तद्वद् बहुजननभवान्मौढ्यसंस्कारयोगादवशं चञ्चलं सदतिमूढं अज्ञानोपहतं चेतः उपनिषत् सम्यग् यथाऽधिकारं अनेकैर्बोधोपायैः आत्मज्ञानोपायैर्बोधयामास। आत्मप्रतिपत्तौ बहुषु उपायेषु प्रोक्तेषु सत्स्वेकोऽपि प्रतिफलिष्यतीत्यर्थः।।८।।

अथात्मनः सर्वापेक्षया प्रियत्वमाह—**यत्प्रीत्येति**। यस्माद्वक्ष्यमाणाद्विषयजातात् सकाशात् स प्रसिद्ध आत्मा **प्रेयान्** परमप्रेमास्पदं भवति। स कः? तनुयुवतितनूजार्थमुख्यं यद् विषयजातं तद् यत्प्रीत्या प्रीतिपात्रम्। अत्रायमर्थः—सुख-दुःखान्यतरसाक्षात्कारो भोगः, स तु आत्मन एव युज्यते। अतो विषयभोगार्थं प्रवृत्तस्य प्रथममात्मप्रीतिरुद्दिष्टा। तया मूलभूतया उक्तविषयजातं प्रीतिपात्रं भवति। तत्रापि प्रथमं तनुः शरीरं भोगसाधनत्वात्, ततो भोग्येष्वन्तरङ्गा युवतिः, तत उभयप्रीतिजन्यस्तनूजः पुत्रः, ततस्तन्निर्वाहकोऽर्थः द्रव्यं, ततोऽप्यर्थसाध्य-

---

१. रुद्धातुः परस्मैपदी। अतः रोदे रोदने मानः आग्रहः यस्येति विग्रहः—इत्याहुः।

२. 'जीवितार्थी' इति पाठान्तरम्। एवं व्याख्यायामपि।

३. प्रकटयति पा.।

**यस्माद्यावत् सुखं[1] स्यादिह हि विषयतस्तावदस्मिन्प्रियत्वं**
**यावद् दुःखं च यस्माद्भवति खलु ततस्तावदेवाप्रियत्वम्।**
**नैकस्मिन्सर्वकालेऽस्त्युभयमपि कदाप्यप्रियोऽपि प्रियःस्यात्**
**प्रेयानप्यप्रियो वा सततमपि ततः प्रेय आत्माख्यवस्तु।।१०।।**

---

मन्यदन्नपानवस्त्रताम्बूलादिकं प्रीतिपात्रं भवति। तथा च मुख्या प्रीतिः आत्मनः, तदधीना गौणी प्रीतिरन्येषामिति प्रत्यक्षमेवास्ति।[2] एवं यस्य मुख्या प्रीतिः स एवात्मा प्रेयानित्यर्थः। भवत्वात्मा प्रेयांस्तथापि विषयजातमपि प्रीतिपात्रत्वादुपास्यमेवेत्यागतमित्याङ्क्य विषयेषु प्रीतिपात्रत्वं प्रातिभासिकं, तत्र पारमार्थिकं दुःखपात्रत्वमेवास्तीत्याह— **इतरदिति**। इतरद् विषयजातं शोकास्पदमित्यनुभवसिद्धम्, आदिमध्यावसानेषु यद् दुखरूपं तद् दुःखास्पदमेव। उक्तं च—"अर्जने रक्षणे नाशे क्लेशदो विषयो भवेत्। सुखाय[3] सज्जते तत्र मूढधीरिति विस्मयः" इति। एवमन्वयव्यतिरेकाभ्यां दुःखास्पदमेतद्विषयजातं प्रेयः कथं स्यात्? न स्यादेवेत्यर्थः। तस्मात्कारणाद् विद्वान् पण्डितः अधिकं यथा भवति तथा प्रियं प्रियतमं आत्मानमेवोपासीत न चान्यच्छरीराद्यम्। अथात्मनः सर्वेभ्योऽधिकप्रियत्वं प्रकटयति—**भार्याद्यमिति**। स्वस्य जीवितार्थे पुमान् भार्याद्यं वितरति। पुत्रवित्ताद्यमपि दत्वा स्वात्मानं रक्षति। 'आत्मानं सततं रक्षेद् दारैरपि धनैरपि' इत्युक्तत्वात्। अथ शरीरेऽप्यात्मत्वनिषेधार्थमाह— **वपुरिति**। आत्मनो जीवस्य श्रेयः सुकृतातिशयमिच्छन् वपुर्वितरति। भृगुपतनेन गङ्गाप्रवेशेन क्षात्रधर्मेण वा शरीरमर्पयति। एवमात्यन्तिकं प्रियत्वमात्मन एव, शरीरादीनामापेक्षिकमित्यर्थः।।९।।

अथापेक्षिकं प्रियत्वं विविच्याह—**यस्मादिति**। इह विषयभोगे यस्माद् भार्यादिविषयतः सकाशात् यावत् सुखं भवति तावदेवास्मिन् विषये प्रियत्वम्। तथा यस्माद् वैर्यादिविषयतः यावद् दुःखं तावदेवास्मिन्नप्रियत्वम्। एवमुभयमपि प्रियत्वमप्रियत्वं वा एकस्मिन्विषये सर्वदा नास्ति। यतः कदापि कदाचित् अप्रियोऽपि कार्यवशात् प्रियः स्यात्। तथा कदापि कदाचित् प्रेयानपि भार्यादिविषयो निमित्तवशेन कालवशेन वा अप्रियः स्यात्। ततः आत्माख्यवस्तु सततमपि प्रेयः। अत्र मूलं **श्रुतिः**—"न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति"। तथा "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियँ रोत्स्यतीति ईश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति।" **भाष्यम्**। याज्ञवल्क्यो मैत्रेयीं प्रति वदति। अरे मैत्रेयि! पुत्राणां कामाय पुत्राः प्रियाः न भवन्ति। किन्त्वात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। प्रथमतः स्वीय आत्मा प्रियः स्यात् तर्हि तदर्थं पुत्राः मृग्यन्ते। यथा पुत्राय कदलीफलेन भाव्यमिति रथ्यां गतस्य मुख्या पुत्रप्रीतिरेवोद्दिष्टा, तदर्थं फलादेः। तद्वन्मुख्याऽऽत्मप्रीतिस्तदर्थं पुत्रादिप्रीतिः। एवमात्मप्रीतिशेषत्वेनैव सर्वेषां प्रीतिः। **अथ तदेतदिति**। तत्र पुत्रवित्तयोरेषणाऽतिप्रियत्वेन दुस्त्यजा। अथ तदेतदात्माख्यं वस्तु पुत्रात्प्रेयः, स्वभावतः पुत्रः प्रेयान्, तदपेक्षयाऽप्येतत्प्रियमित्यर्थः। तथैव वित्तादपि प्रेयः। अथ किं प्रत्येकं वक्तव्यम्। अन्यस्मादपि सर्वस्मात्प्रेयः। न हि केवलं वाङ्मात्रेणास्य प्रियत्वम्, अतो युक्तिमाह—**अन्तरतरमिति**। यद् यस्मात्कारणात् स योऽयमात्मा अन्तरतरं भवति। **अन्तरतरमिति**। (अन्तरतरमित्यान्तरतरं) आन्तरं पुत्रादि ततोऽप्यान्तरम्। युक्त्यन्तरमाह-

---

१. 'प्रियं' इति पा.

२. प्रत्यक्षसिद्धमस्ति पा.।

३. सुखार्थं पा.

**श्रेयः प्रेयश्च लोके द्विविधमभिहितं काम्यमात्यन्तिकं च**
**काम्यं दुःखैकबीजं क्षणलवविरसं तच्चिकीर्षन्ति मन्दाः।**
**ब्रह्मैवात्यन्तिकं यन्निरतिशयसुखस्यास्पदं संश्रयन्ते**
**तत्त्वज्ञास्तच्च काठोपनिषदभिहितं षड्विधायां च वल्ल्याम्।।११।।**

**आत्माम्भोधेस्तरङ्गोऽस्म्यहमिति गमने भावयन्नासनस्थः**
**संवित्सूत्रानुविद्धो मणिरहमिति वाऽस्मीन्द्रियार्थप्रतीतौ।**
**[5]हृष्टोऽस्म्यात्मावलोकादिति शयनविधौ मग्न आनन्दसिन्धौ**
**अन्तर्निष्ठो मुमुक्षुः स खलु तनुभृतां यो नयत्येवमायुः।।१२।।**

---

**अन्यमिति**। अथात्मनः सकाशात् [1]अन्यं प्रियमिति ब्रुवाणं पुरुषं प्रति इति ब्रूयात्। इतीति किं? तवाभिमतं यत्पुत्रवित्तादि प्रियं तद् रोत्स्यति शोकास्पदं भवति। उत्पत्तिस्थिति- विनाशादिकालत्रयेऽपि दुःखहेतुत्वात्। एवं यस्माद् दुःखं भवति तत्कथं प्रियत्वेन गण्यते। तदुक्तं भगवता—"ये हि संस्पर्शजा भोगा दुःखयोनय एव ते। आद्यन्तवन्तः कौन्तेय न तेषु रमते बुध" इति। तथा यथा विषया दुःखहेतवः। ह इति किमर्थं[2], ईश्वरः किं तथैव स्यान्नैवेत्यर्थः। तस्मादात्मानमेव प्रियमुपासीत, न पुत्रादि। एवं य आत्मानमेवोपास्ते अस्य ह इति निश्चयेन प्रियं पुत्रवित्तादिकं प्रमायुकं प्रमाविषयो[3] न भवति प्रियत्वेन न स्फुरति। घृतास्वादे तैलभक्षणवदित्यर्थः। तदुक्तं भगवता— "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत" इति।।१०।।

अथात्र कठशाखोपनिषदं संवादयति—**श्रेय इति**। लोके श्रेयः प्रेयश्च द्विविधमभिहितं प्रोक्तम्। श्रेयः सुकृतसाधनम्, प्रेयः प्रेमास्पदम्। तद् द्वेधा—काम्यमात्यन्तिकं च। काम्यं श्रेयः फलोद्देशेन क्रियमाणम्, उपवासादिकं[4] च; आत्यन्तिकं मोक्षसाधनम्। तथा प्रेयोऽपि काम्यं जायापुत्रादि, आत्यन्तिकमात्माख्यम्। तत्र श्रेयः प्रेयो वा यत्काम्यं तद् दुःखैकबीजं दुःखनिदानम्। तर्हि तत्र लोकानां प्रवृत्तिः कथं दृश्यत इत्यत आह— **क्षणलवविरसम्**। शुक्तिकारजतवन्निमिषमात्रदृष्टिरम्यं तन्मन्दा मूर्खाश्चिकीर्षन्ति वाञ्छन्ति। तथा आत्यन्तिकं श्रेयः प्रेयो वा ब्रह्मैव, यतो निरतिशयसुखस्यास्पदम्। तच्च तत्त्वज्ञाः संश्रयन्ते। इत्येतत्प्रमेयं कठवल्ल्युपनिषदि अभिहितम्। अथ कठोपनिषदो बहुधा पठिताः सन्ति। प्रकृते एतत्प्रमेयं कुत्र स्थले निरूपितमस्तीत्यत्राह— **षड्विधायां च वल्ल्याम्**।।११।।

अथ ब्रह्मैकत्वभावनया निष्पन्नस्यान्तर्निष्ठस्य स्वरूपं श्लोकद्वयेनाह—**आत्मेति**। एवं निरूपितप्रकारेण यो मुमुक्षुरायुर्नयति परिकलयति सः अन्तर्निष्ठ इत्युच्यते। अथ किं कुर्वन्नायुः परिकलयतीत्याह—**आत्मेति**। गमने अहमात्माम्भोधेस्तरङ्ग इति भावयन्; स्थानान्तरचलने सति यथा तरङ्गो बाह्याभ्यन्तरतो जलमय एव सन्नितस्ततश्चलति, एवमहं जीवोऽप्यगाधस्यात्मसमुद्रस्य तरङ्ग इवास्मीति भावयन् गच्छतीत्यर्थः। "क्रीडन्नूर्मिरपामिवे" ति श्रुतेः। अथासनस्थः यदा स्थितो मुमुक्षुः संवित्सूत्रानुविद्धो मणिरहमस्मीति भावयन्।

---

१. 'अन्यत्' २. किमर्थं = किंशब्दार्थे।

३. प्रियं आत्मस्वरूपं न प्रमायुकं न मरणशीलं—शां. भा.।

४. 'उपयाचितादिकं च' पा.

५. 'दृष्टः' 'द्रष्टा' इति पा.

**वैराजव्यष्टिरूपं जगदखिलमिदं नामरूपात्मकं स्यात्**
**अन्तस्थप्राणमुख्यात् प्रचलति च पुनर्वेत्ति सर्वान् पदार्थान्।**
**नायं कर्ता न भोक्ता सवितृवदिति यो ज्ञानविज्ञानपूर्णः**
**साक्षादित्थं विजानन् व्यवहरति परात्मानुसन्धानपूर्वम्।।१३।।**

**नैर्वेद्यं ज्ञानगर्भं द्विविधमभिहितं तत्र वैराग्यमाद्यं**
**प्रायो दुःखावलोकाद्भवति गृहसुहृत्पुत्रवित्तैषणादेः।**
**अन्यज्ज्ञानोपदेशाद् यदुदितविषये वान्तवद्धेयता स्यात्**
**प्रव्रज्यापि द्विधा स्यात् नियमितमनसो[1] गेहतो देहतश्च।।१४।।**

---

संविद्रूपं यत्सूत्रं तेनानुविद्धः प्रोतः अहं जीवलक्षणो मणिरस्मीति भावयन् आस्ते। "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे" ति भगवद्वचनात्। एवं देहव्यापारे अन्तर्निष्ठत्वं दर्शयन् इदानीं इन्द्रियव्यापारे निरूपयति—**हृष्ट इति**। इन्द्रियार्थप्रतीतौ सत्यां आत्मावलोकादात्मदर्शनान्ममेदानीमात्मदर्शनं वृत्तमिति मत्वा हृष्टोऽस्मीति भावयन्। अथेन्द्रियोपरमेऽप्याह—**शयनविधाविति**। शयनविधौ सुषुप्तिकालान्ते अहमानन्दसिन्धौ एतावन्तं कालं मग्नः अभूवमिति भावयन्।।१२।।

अथ द्वितीयं श्लोकमाह—**वैराजेति**। ज्ञानं शास्त्रोत्थं, विज्ञानमनुभवस्ताभ्यां पूर्णो यः पुमान् भवति स साक्षादित्थमिति विजानन् आत्मानुसन्धानपूर्वं व्यवहरति। इतीति किमित्याशङ्क्याह—**वैराजेति**। अत्रैतदुक्तं भवति। आत्माकारान्तःकरणवृत्तिः पुमान् यदा बाह्यदृष्टिर्भवति तदा नामरूपात्मकमखिलं समग्रं विचित्रं जगत् स्थूलसमष्टिरूपस्य विराजो ब्रह्मणो व्यष्टिरूपमिति पश्यन् कुत्सानिन्दाऽसूयाव्यतिरिक्तः व्यवहरति। तथा व्यष्टिरूपं जगदन्तस्थप्राणमुख्याच्चिद्रूपात्प्रचलति व्यापारं करोति, तथा तस्मादेव संविद्रूपात् पदार्थान् वेत्तीति जानन् तदनुसन्धानपूर्वमेव व्यवहरति। तथाऽयमात्मा सवितृवत् सूर्यवन्न कर्ता, चालकत्वेऽपि कर्तृत्वाभिमानशून्यः। तथा न भोक्ता, पदार्थग्राहकत्वेऽपि भोक्तृत्वाभिमानशून्यः। तद्वद् व्यवहरतीति तात्पर्यम्।।१३।।

अथ द्विप्रकारं वैराग्यमाह—**नैर्वेद्यमिति**। तत्रे विज्ञानोपाये[2] वैराग्यं द्विविधमभिहितं प्रोक्तम्। अथ तस्य द्वैविध्यमाह—एकं नैर्वेद्यमपरं ज्ञानगर्भञ्च। निर्वेदाद् दुःखादुत्पन्नं नैर्वेद्यम्, तदेवाह—आद्यं नैर्वेद्यं गृहसहृत्पुत्रवित्तैषणादेः प्रायो दुःखावलोकाद्भवति। यदधुना दुःखजनकं तदग्रेऽपि दुःखजनकं भविष्यतीति वृश्चिकस्पर्शवद् दुःखदर्शनान्नाद्रियते, आदृतमपि त्यज्यते। अथ ज्ञानगर्भं वैराग्यमाह—**अन्यदिति**। अन्यद् द्वितीयं ज्ञानोपदेशाद्भवति। प्रथमं दुःखदर्शनादित्युक्तमनन्तरमात्मातिरिक्तं सर्वं दुःखरूपमित्याद्युपदेशादुदितविषये उक्तविषये सुहृत्पुत्रकलत्रादिके वान्तवद्धेयता स्यात्। यथा जुगुप्सया वान्ते जाते सति पुनस्तद्ग्रहणेच्छा नोदेति तद्वद्विषयवैरस्यज्ञानात्पुनर्विवेकिनस्तद्ग्रहणेच्छा नोत्पद्यते। तदुक्तं वासिष्ठे—

"बुद्ध्वाऽप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः।
बध्नाति वासनां भूयो नरो नासौ स गर्दभः"।।इति।

---

१. मनसां पा.

२. पायं पा.

**यः कश्चित् सौख्यहेतोस्त्रिजगति यतते नैव दुःखस्य हेतोः**
**देहेऽहन्ता तदुत्था स्वविषयममता चेति दुःखास्पदे द्वे।**
**जानन् रोगाभिघाताद्यनुभवति यतोऽनित्यदेहात्मबुद्धिः**
**भार्यापुत्रार्थनाशे विपदमथ परामेति नारातिनाशे।।१५।।**

**तिष्ठन् गेहे गृहेशोऽप्यतिथिरिव निजं धाम गन्तुं चिकीर्षुः**
**देहस्थं दुःखसौख्यं न भजति सहसा निर्ममत्वाभिमानः।**
**आयात्रायास्यतीदं जलदपटलवद् यातृ यास्यत्यवश्यं**
**देहाद्यं सर्वमेव प्रविदितविषयो यश्च[1] तिष्ठत्ययत्नः।।१६।।**

**शक्त्या निर्मोकतः स्वाद् बहिरहिरिव यः प्रव्रजन् स्वीयगेहात्**
**छायां मार्गद्रुमोत्थां पथिक इव मनाक् संश्रयेद्देहसंस्थाम्।**

---

अथ प्रव्रज्यापि द्विधा भवति। प्रथमा गेहतो गृहात्प्रव्रज्या, अपरा देहतश्च। देहेऽभिमानशून्यत्वमेव देहतः प्रव्रज्येत्यर्थः।।१४।।

अथ द्विप्रकारं वैराग्यं पूर्वमभिहितम्। तदेव विज्ञानोपायवैराग्यमुपदेशप्रकारेणाह—**यः कश्चिदिति**।

त्रिजगति लोकत्रयेऽपि यः कश्चित्पुरुषः सौख्यहेतोः सुखं मे भूयात् इति यतते प्रयत्नं करोति, परं तु दुःखस्य हेतोर्नैव यतते। एवं सति या देहे अहंता तथा तदुत्था देहहितार्थमुत्पन्ना स्वविषयममता चेति द्वे दुःखास्पदे दुःखस्थाने भवतः। एवं जानन्नपि अनित्यदेहात्मबुद्धिः पुरुषः रोगाभिघातादि अनुभवति। रोगो ज्वरादिः, अभिघातस्ताडनादिः, एवं [2]देहोऽहमिति बुद्ध्या रोगाभिघातादिदुःखमनुभवति। तथा भार्यापुत्रादिषु ममताऽभिनिवेशे तन्नाशेन परामुत्कृष्टां विपदं एति प्राप्नोति। किन्त्वहंताममताशून्यो दुःखी न भवति। यथा अरातेर्वैरिणो नाशे सति ममताशून्यत्वाद् दुःखी न भवति। तथा च यत्राहंता ममता वा तत्रैव दुःखसाहचर्यमिति धूमवह्निसाहचर्यवन्निश्चितमित्यर्थः।।१५।।

अथ गृहाद् बहिः प्रव्रजितुमशक्तस्य विवेकिनोऽपि पुरुषस्य मोक्षोपायमाह—**तिष्ठन्निति**। गृहेशो गृहस्थो गेहे तिष्ठन्नपि देहस्थं दुःखसौख्यं न भजति न स्पृशति। क इव? गेहे तिष्ठन् अतिथिरिव मार्गस्थ इव। किंभूतोऽतिथिः? निजं धाम गन्तुं चिकीर्षुः स्वं ग्रामं गन्तुमिच्छुः। [3]क्षणमधिवासस्थलं प्राप्तस्य अस्मात् श्वः गन्तव्यमस्तीति कृतनिश्चयस्य यथा निःस्पृहत्वं तथैव प्रकृतेऽपीत्यर्थः। किंभूतो गृहस्थः? निर्ममत्वाभिमानो ममताभिमानशून्यः[4]। तर्हि स्थितेषु गतेषु वा विषयेषु कथमुदासीन इत्याह—**आयातृ**। अवश्यम् आगमिष्यत् देहादि पदार्थजातमवश्यमायास्यत्येव। तथा **यातृ** अवश्यं गमिष्यद्वस्तु यास्यत्येव। किंवत्? जलदपटलवत्, जलदपटलं स्वप्रयत्नेन नायाति। विधिवशादायातमपि स्वप्रयत्नेन न निर्गच्छति। एवमित्थं प्रविदितविषयः प्रविदितोऽन्वयव्यतिरेकेण ज्ञातो विषयो येन स तथाभूतः पुरुषः अयत्नः सन् गृहे तिष्ठति।।१६।।

अथ प्रागुक्तां द्विविधप्रव्रज्यां पृथगनुवदति—**शक्त्येति**। यः पुरुषः शक्त्या वैराग्यबलेन स्वीयगेहात्सकाशात् सर्पो यथा बलेन निर्गच्छति कञ्चुकं त्यक्त्वा बहिर्याति तथा पुत्रकलत्राद्यनादिस्नेहानुबन्धेन दुस्त्यजादपि

---

१. यच्च। २. देहे इति स्यात्। ३. क्षणमपि पा.।
४. अहंममाभिमान एव दुःखबीजं तत्त्यागे निरतिशयानन्दः सुखप्राप्य इत्यर्थः।

**क्षुत्पर्याप्तं तरुभ्यः पतितफलमयं प्रार्थयेद्भैक्ष[1]मन्नं**
**स्वात्मारामं प्रवेष्टुं स खलु सुखमयं प्रव्रजेद्देहतोऽपि।।१७।।**

**कामो बुद्धावुदेति प्रथममिह मनस्युद्दिशत्यर्थजातं**
**तद् गृहणातीन्द्रियास्यैस्तदनधिगमतः क्रोध आविर्भवेच्च।**
**प्राप्तावर्थस्य संरक्षणमतिरुदितो लोभ एतत्त्रयं स्यात्**
**सर्वेषां पातहेतुस्तदिह मतिमता त्याज्यमध्यात्मयोगात्।।१८।।**

**दानं ब्रह्मार्पणं यत्क्रियत इह नृभिः स्यात् क्षमाऽक्रोधसंज्ञा**
**श्रद्धाऽऽस्तिक्यं च सत्यं सदिति परमतः सेतुसंज्ञं चतुष्कम्।**

---

स्वगृहाद् बलेन प्रव्रजति। तथा यो देहसंस्थां जीवनोपायं मनाक् संश्रयेत् अनुष्ठानसिद्धिप्रयोजनमात्रमिति कृत्वा आहारादिकसंस्थां श्रयेत्। क इव? मार्गद्रुमोत्थां छायां पथिक इव। अग्रे गन्तव्यमस्तीति द्रुमच्छायायां क्षणं विश्राम्यति[2]; न तु तत्रास्थां करोति। अथ देहधारणार्थं निर्वाहमाह—**तरुभ्य इति**। तरुभ्यः सकाशात् क्षुत्पर्याप्तं भैक्षमन्नं प्रार्थयेत्, न सङ्ग्रहबुद्ध्या। किंभूतमन्नं पतितफलमयं वातादिना पतितानि यानि फलानि तन्मयं न तु फलच्छेदेन। अथ देहाभिमानमपि त्यजेदित्याह। **स पुरुषः** सुखमयं सुखस्वरूपं स्वात्मारामं प्रवेष्टुं देहतोऽपि प्रव्रजेत्। देहाभिमानशून्यत्वमेव देहतः प्रव्रज्येत्यर्थः।।१७।।

इदानीं कामक्रोधलोभाः सर्वेषां पातहेतवो भवन्तीत्याह—**काम इति**। मूलभूतः कामोऽभिलाषः प्रथमं बुद्धावुदेति। ततो मनसि अर्थजातं पदार्थजातं रूपरसादि तन्मध्ये अमुकेन भवितव्यमिति उद्दिशति सङ्कल्पविषयं करोति। ततस्तत्पदार्थजातमिन्द्रियास्यैश्चक्षुरादीन्द्रियमुखैर्गृहणाति ग्रहीतुं यतते। एवं कृतेऽपि यत्ने तदनधिगमतस्तेषामनधिगमः अनेकान्तरायैरप्राप्तिस्तदा क्रोध आविर्भवति। "कामात्क्रोधोऽभिजायत" इति भगवद्वचनात्। अथ दैववशादर्थस्य प्राप्तौ नानोपायैस्तद्रक्षणार्थं या मतिः स्वीयत्वाभिमानः स एव लोभ उदितः। एवमेतत्त्रयं कामक्रोधलोभरूपं सर्वेषां जीवानां पातहेतुः सकलदुःखस्वरू[3]पसंसारकारणमित्यर्थः। तस्मादेतन्मतिमता पुरुषेण त्याज्यम्। कुतः? **अध्यात्मयोगात्**। बुद्धेः परतो वर्तमानमध्यात्मं प्रत्यगात्मरूपं तस्य योगात् निरन्तरानुसन्धानरूपादभ्यासयोगादित्यर्थः।।१८।।

एवं कामक्रोधादिदैत्यनिबर्हणेन देवत्वप्राप्तिरित्येतस्मिन्नर्थे सामवेदोक्तं **कल्माषसाम**[4] संवादयन्नाह—**दानमिति**। नृभिर्मनुष्यैर्यद् ब्रह्मार्पणं क्रियते व्ययीक्रियते तद्दानमिति प्रोक्तम्। तथा या अक्रोधसंज्ञा सा क्षमा प्रोक्ता। तथा आस्तिक्यं अस्त्येवानेन प्रयोजनमिति विश्वासरूपिणी बुद्धिः श्रद्धेत्युच्यते। तथा सत्यं सदिति ब्रह्मेति चतुष्टयं मुक्तेः साधनम्। अत एभ्यः परमन्यद्विरुद्धस्वरूपं चतुष्कं सेतुसंज्ञं भवति। अदानं, क्रोधः, अश्रद्धाऽसत्यमिति यत्सेतुचतुष्टयं तज्जन्तोः प्राणिनो बन्धाय भवति। इति तस्मात् कारणात् इमान् पूर्वोक्तान् चतुरः सेतून् दानपूर्वैश्चतुर्भिस्तीर्त्वा उल्लङ्घ्य नरः पुरुषार्थी श्रेयोऽमृतं स्वर्गतिं ज्योतिराप्तिं च श्रयते प्राप्नोति। श्रेयः सुकृतातिशयम्, अमृतं देवत्वं, स्वर्गतिमूर्ध्वगतिं, ज्योतिराप्तिं च प्राप्नोतीत्यर्थः' **अत्र श्रुतिः**। "हाउ ३ सेतूंस्तर ३ दुस्तरान् ३ दानेनादानं ३ हाउ ३ अहमस्मि प्रथमजा ऋतास्या ३ हाउ ३

---

१. भैक्ष्य पा.। २. विश्रमते पा.। ३. 'स्व' नास्ति। ४. सेतुषाम इत्येव वैदिकप्रसिद्धिः।

**तत्स्याद् बन्धाय जन्तोरिति चतुर इमान् दानपूर्वैश्चतुर्भिः**
**तीर्त्वा श्रेयोऽमृतं च श्रयत इह नरः स्वर्गतिं ज्योतिराप्तिम्।।१९।।**

**अन्नं देवातिथिभ्योऽर्पितममृतमिदं चान्यथा मोघमन्नं**
**यश्चात्मार्थं विधत्ते तदिह निगदितं मृत्युरूपं हि तस्य।**
**लोकेऽसौ केवलाघो भवति तनुभृतां केवलादी च यःस्यात्**
**त्यक्त्वा प्राणाग्निहोत्रं विधिवदनुदिनं योऽश्नुते सोऽपि मर्त्यः।।२०।।**

---

सेतूंस्तर ३ दुस्तरान् ३ अक्रोधेन क्रोधं, हाउ ३ पूर्वं देवेभ्यो अमृतस्य [1]नाभायि हाउ ३ सेतूंस्तर ३ दुस्तरान् ३ श्रद्धया अश्रद्धां हाउ ३ यो मा ददाति स इदेवमावा[2] हाउ ३ सेतूंस्तर ३ दुस्तरान् ३ सत्येनानृतं हाउ ३ अहमन्नमन्नमदन्तमाद्मि हाउ ३ वा एषा गतिः। ३ एतदमृतं ३ स्वर्गच्छ ३ ज्योतिर्गच्छ ३ सेतूंस्तीर्त्वा चतुराः"। **भाष्यम्**—तत्र विकल्पे हाउ गद्यते। अदीर्घे दीर्घवत्कुर्यादित्यादि **सामशिक्षोक्त**मनुस्मरणीयम्। तत्र चतुरः सेतून् तरेत्यन्वयः। सेतुर्यथा जलप्रवाहभेदको भवति तथा अखण्डैकरसभेदकाश्चत्वारः सेतवो भवन्ति। तान् तर उल्लङ्घयेत्युपदिशति। किंभूतान् सेतून्? दुस्तरान् उपायान्तरेण दुःखेन तर्तुमशक्यान्। अथ सेतून् तथा तल्लङ्घनोपायांश्च कथयति—**दानेनेति**। तत्र ब्रह्मार्पणत्वेन यद्दीयते तत् (तत्र) दानं (शब्दो, नार्थव्ययः।) तदन्यद्देहभार्यापुत्राद्यर्थं यद् व्ययीक्रियते तत् अदानम्। एवं दानेनादानमुल्लङ्घ्य, देहाद्यर्थं व्ययीकृतमपि ब्रह्मार्पणमिति ज्ञात्वैव कुर्वित्यर्थः। तदुक्तं भगवता—"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण" मिति। अथ ज्ञानप्रकारमाह—**अहमस्मीति**। अहं ऋतस्य सत्यस्य ब्रह्मणः प्रथमजोऽस्मि। प्रथमं सर्वस्मात् प्राक् जात इति प्रथमजः शबलत्वेनोपस्थितः भार्यापुत्रकलत्रादिष्वन्तर्गतो हिरण्यगर्भोऽहमस्मीति ज्ञात्वा ब्रह्मार्पणमेव सर्वमिति भावयेदित्यर्थः। तथा हाउ इत्यथवा; अक्रोधेन क्षमारूपेण क्रोधं द्वितीयसेतुं तर। तत्रोपायमाह—**पूर्वमिति**। देवेभ्यो मनश्चक्षुरादिभ्यः सकाशात् पूर्वममृतस्य ब्रह्मणो नाभिः बुद्धिरूपेण तारकोऽहमस्मि। बुद्धिपर्यन्तमेव क्रोधः, ततोऽग्रे ब्रह्मैवास्मीति भावय। "यो बुद्धेः परतस्तु स" इति भगवदुक्तेः। तथा श्रद्धया कृत्वा अश्रद्धां तृतीयसेतुं तर, अस्त्येव परमात्मना परमप्रयोजनमिति भावयन्। तत्रोपायमाह—**य इति**। यः पुरुषो मा इति मह्यं, ददाति सर्वं निवेदयति स इ स एव देवं आवाः प्राप्तवानित्यास्तिक्यविश्वासादश्रद्धां तृतीयसेतुं तरेत्यर्थः। अथ सत्येन ब्रह्मणा अनृतं प्रातिभासिकं विश्वाकारं तर। तत्रोपायमाह—**अहमिति**। अहं जीवरूपेणान्नमद्मि तथा प्रलये अन्नमदन्तं भक्षयन्तमग्न्याद्युपाधिभूतं सर्वमद्मि आहुतिप्रक्षेपवज्जुहोमि। योऽवशिष्येत सोऽस्म्यहमिति भावयेदित्यर्थः। एवमेषा उक्तप्रकारा गतिरुद्धारप्रकारः। एतदुक्तप्रकारममृतं मोक्षः। अनेनोपदेशेन स्वर्गच्छ, तथा ज्योतिरमृतं गच्छेत्युपदेशः।।१९।।

**अन्नमिति**। देवातिथिभ्योऽर्पितमन्नममृतं भवति। देवेभ्यो वैश्वदेवकर्मणि अतिथिभ्यश्च वैश्वदेवान्ते समागतेभ्योऽर्पितं यदन्नं तदमृतं भवतीत्यर्थः। अन्यथा एतदकरणे देवातिथिवञ्चने मोघं निष्फलमन्नं भवति। यश्चात्मार्थं पिण्डपोषणार्थमन्नं विधत्ते तत्तस्य मृत्युरूपं परिणामे विषोपमं भवति, असाक्षिकत्वात्। एवं यः पुमान् केवलमत्तीति केवलादी। स च केवलादी केवलाघो भवति केवलमघरूपो भवतीत्यर्थः। **अत्र श्रुतिः**। "मोघमन्नं विन्दते अप्रचेताः, सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं, केवलाघो भवति केवलादी"।।२०।।

---

१. 'नाम' इति सामवेदे पाठः। २. 'आवात्' इति पाठः।

**लोके भोजः स एवार्पयति गृहगतायार्थिनेऽन्नं कृशाय**
**यस्तस्मै पूर्णमन्नं भवति मखविधौ जायतेऽजातशत्रुः।**
**सख्ये नान्नार्थिने योऽर्पयति न स सखा सेवमानाय नित्यं**
**संसक्तायान्नमस्माद् विमुख इव परावृत्तिमिच्छेत् कदर्यात्।।२१।।**

**स्वाज्ञानज्ञानहेतू जगदुदयलयौ सर्वसाधारणौ स्तः**
**जीवेष्वास्वर्णगर्भं श्रुतय इति जगुर्हूयते स्वप्रबोधे।**
**विश्वं ब्रह्मण्यबोधे जगति पुनरिदं हूयते ब्रह्म यद्वत्**
**शुक्तौ रौप्यं च रौप्येऽधिकरणमथवा हूयतेऽन्योन्यमोहात्।।२२।।**

---

**लोक इति**। लोके स एव भोजो दाता यो गृहमागतायार्थिने अन्नमर्पयति। किंभूताय? कृशाय दरिद्रत्वपीडिताय। अथ तस्य फलमाह-**तस्मै** दात्रे मखविधौ लौकिकेऽलौकिके वा यज्ञे पूर्णमन्नं भवति। तथा अन्नदाता[१] अजातशत्रुर्भवति। यस्मात् तस्यान्नदानेन सर्वभूतान्तरस्थाः सर्वे देवाः सन्तृप्ताः भवन्ति अतो वैरिणोऽपि मित्राणि भवन्तीत्यर्थः। अथ व्यतिरेकमप्याह--**सख्य इति**। यः पुरुषः अन्नार्थिने सख्ये सखिभूताय स्वर्गप्रापकाय नार्पयति स सखा न भवति, किन्तु पिशुन एवेत्यर्थः। किंभूताय? नित्यं सेवमानाय आश्रिताय तथा संसक्ताय अनन्यशरणाय। अनेन सर्वभूतेष्वप्यन्नदानं न करोतीत्युक्तं भवति। अथ याचकोऽपि अस्मात्कदर्यात् कृपणाद्विमुखः पराङ्मुख इव परावृत्तिं इच्छेत्, पुनस्तं न याचयेत्, अन्यं दातारं गच्छेदित्यर्थः। **श्रुतिरपि**--"स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय। अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम्। न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः। अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत्"। **भाष्यम्**--अन्वयमुखेन प्रशंसति--स इत् स एव भोजो दाता यः गृहवे प्रतिग्रहीत्रे तत्राप्यन्नकामाय चरते गृहमागताय दारिद्र्येण कृशाय तादृशायातिथयेऽन्नं ददाति यामहूतौ यामाः गन्तारो देवा आहूयन्ते अत्रेति यामहूतिर्यज्ञस्तस्मिन्नस्मै दात्रे फलं अरं अलं पर्याप्तं भवति कामप्रदं भवतीत्यर्थः। उतापि च आपरीषु अन्यासु शात्रवीसेनासु सखायं कृणुते। तस्य सर्वे सखाय एव, न शत्रव इत्यर्थः। अथ व्यतिरेकान्वयाभ्यामाह--स पुरुषः सखा न भवति यः सचाभुवे सर्वदा सहभवनशीलाय तथा सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये जनाय पित्वः पितूनन्नानि न ददाति न प्रयच्छति स सुहृन्न भवतीत्यर्थः। अस्माददातुः सख्युः सः अपप्रेयात् अपगच्छेत्। यद्येनं परित्यज्य गच्छेत्तदोकः सद्म नास्ति न भवति, अरण्यतुल्यम्। स पुरुषः अन्यं पृणन्तं अन्नदातारं अरणं शरणं गच्छेत् कामयेत।।२१।।

**स्वाज्ञानेति**। जगदुदयलयौ स्वाज्ञानज्ञानहेतू स्तः। जगतो नामरूपात्मकस्य चराचरस्योदयः प्रादुर्भावो लयश्च प्रलयः, एतौ स्वस्याज्ञानं च ज्ञानं च स्वाज्ञानज्ञाने ते एव हेतू कारणं ययोस्तौ। स्वशब्देनात्मा। तथा चात्माज्ञानाज्जगत्प्रादुर्भावः, तथाऽऽत्मज्ञानाज्जगत्प्रलय इत्यर्थः। एतौ आस्वर्णगर्भं हिरण्यगर्भं मर्यादीकृत्य सर्वजीवेषु साधारणौ। हिरण्यगर्भोऽपि स्वस्वरूपं विस्मृत्याहमीश्वरो नियन्तेत्यभिमानं वहति। तदा प्रादुर्भूतं विश्वाभासं पश्यति। अथ यदा ब्रह्माहमस्मीति स्वरूपे लीनो भवति तदा विश्वाभासविलय इति श्रुतयो जगुः। एवमेव जीवेष्वपीति प्रकटयन्नाह--**हूयत इति**। स्वप्रबोधे ब्रह्माकारान्तःकरणवृत्तौ जातायां विश्वं ब्रह्मणि हूयते।

---

१. अयं दाता पा.।

**तुच्छत्वान्नासदासीद् गगनकुसुमवद्भेदकं नो सदासीत्**
**किन्त्वाभ्यामन्यदासीद् व्यवहृतिगतिसन्नास लोकस्तदानीम्**
**किन्त्वर्वागेव शुक्तौ रजतवदपरो नो विराड् व्योमपूर्वः**
**शर्मण्यात्मन्यथैतत् कुहकसलिलवत् किं भवेदावरीवः।।२३।।**

**बन्धो जन्मात्ययात्मा यदि न पुनरभूत् तर्हि मोक्षोऽपि नासीत्**
**यद्वद्रात्रिर्दिनं वा न भवति तरणौ किन्तु दृग्दोष एषः।**
**अप्राणं शुद्धमेकं समभवदथ तन्मायया कर्तृसंज्ञं**
**तस्मादन्यच्च नासीत् परिवृतमजया जीवभूतं तदेव।।२४।।**

---

अग्नावाहुतिप्रक्षेपवद्भस्मसात्क्रियते। तदा देहाभिमानित्वाभावात्। अबोधे देहाभिमानित्वात् अहमाकारा इदमाकारा वाऽन्तःकरणवृत्तिः, तदा इदं ब्रह्म जगति हूयते नास्त्येवेति क्रियते। अत्र दृष्टान्तमाह--**यद्वदिति**। भ्रमनिवृत्तिकाले शुक्तौ रौप्यं हूयते, तथा प्रतिभासकाले तु अधिकरणं शुक्तिः रौप्ये हूयते। कस्मात्? अन्योन्यमोहात् शुक्त्यज्ञाने रजतोदयः, रजताज्ञाने च शुक्तिरित्यर्थः[१]।।२२।।

ननु नामरूपात्मकस्य दृश्यमानस्य जगतः (कर्ता) उपादानकारणं किं स्यादिति विचार्यमाणे न तावच्छुद्धस्यानीहस्य ब्रह्मणस्तथात्वमुपपद्यते। तथा तदतिरिक्तस्य तथात्वकल्पने किमसत्सद्वा कल्पनीयम्? तत्राद्यं निषेधति—**तुच्छत्वादिति**। तत्र तावज्जगदुपादानकारणं असन्नासीत्। कुतः? तस्य असतो गगनकुसुमवत्तुच्छत्वात् अत्यन्तासत्त्वेनोपादानकारणत्वानर्हत्वात्। अथ नापि भेदकं सद्वाच्यं परमार्थसतो ब्रह्मणः सकाशादन्यस्य भेदजनकस्यासम्भवात्। अतः परिशेषात् सदसद्विलक्षणमासीदित्याह—**किंत्विति**। आभ्यां सदसद्भ्यामन्यद् विलक्षणमासीदित्युक्तं भवति। ननु तर्हि ब्रह्मातिरिक्तं परमार्थसन्मास्तु, तथापि व्यवहारसदासीदेवेति चेत्, तदपि निषेधति—**व्यवहृतीति**। तदानीं व्यवहारस्याप्यभावादित्यर्थः। तदानीमिति पदेनं सृष्टेः प्राङ् नासीत्। किंतु परिशेषान्मध्य एवोत्पन्नमित्युक्तं भवति। ननु तदानीमाकारवन्नास्ति तथापि व्योमासीत् तथा महाभूतारब्धो विराडप्यासीदिति चेत्, तदपि निषेधति--**नो विराड्व्योमपूर्व इति**। व्योम पूर्वं कारणीभूतं यस्य स तथा। अथास्तां मध्य एवोत्पन्नं; तस्य पृथग्भूतत्वेन ब्रह्मण आवरकत्वं भवेत्, तदपि दृष्टान्तेन निषेधति--**शर्मणीति**। शर्मणि शुद्धे ब्रह्मणि तत्किमावरीवः? आवृणोतीत्यावरीवः। आवरकं न भवेदित्यर्थः। किंवत्? कुहकसलिलवत्। मायया स्थले जलभ्रममुत्पादयतः कुहकस्य ऐन्द्रजालिकस्य क्षणमुत्पन्नं सलिलं भ्रमनिवृत्तौ सत्यां किं स्थलस्यावरकं भवेत्? नैव। तद्वत्प्रकृतेऽपीत्यर्थः। अत्र **श्रुतिः**—"नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद् गहनं गभीरम्"।।२३।।

अथ वस्तुतो ब्रह्मरूपाणामेव जीवानां बन्धमोक्षावप्यज्ञानकृतावित्याह--**बन्ध इति**। पुनर्जन्मात्ययात्मा जन्ममृत्युरूपो यदि बन्धो नाभूत् तर्हि मोक्षोऽपि नासीत्। तदुक्तम्--"बद्धो मुक्त इति व्याख्या गुणतो [२]न स्वभावतः। तथा द्वितीयस्याभावात् को बद्धः कश्च मुच्यत" इति। अत्र दृष्टान्तमाह--**यद्वदिति**। तरणौ सूर्ये रात्रिर्दिनं वा न भवति न युज्यते। कथं तर्हि रात्रिदिनव्यवहारो भवतीत्यत आह--**एष दृग्दोष इति**। जगच्चक्षुषां सूर्यादर्शनदर्शनमेव रात्रिदिनव्यवहारनिमित्तमापेक्षिकमित्यर्थः। अथ जीवत्वोपाधिनिमित्तमाह--**अप्राणमिति**। 'अप्राणो

---

१. 'शुक्तिः अधिष्ठानं अवभासते'। २. 'गुणतो मे न वस्तुतः'।

**प्रागासीद्भावरूपं तम इति तमसा गूढमस्मादतर्क्यं**
**क्षीरान्तर्यद्वदम्भो जनिरिह जगतो नामरूपात्मकस्य।**

---

ह्यमना: शुभ्र' इति शुभ्रस्य[१] ब्रह्मण: प्राणसम्बन्धाभावात् अप्राणमेकमद्वितीयं तन्मायया कर्तृसंज्ञं हिरण्यगर्भाख्यमभवत्। तस्मादन्यन्नासीत्। तदेवाजया मायया परिवृतं सज्जीवभूतं जीवत्वं प्राप्तं न पृथक्कश्चिज्जीवोऽस्तीत्यर्थ:।।२४।।

अथ पूर्वमुक्तं तदानीं जगन्नासीदिति; तर्हि पुन: कथमुत्पन्नमित्याशङ्क्याह--**प्रागिति**। जगदुपादानभूतं भावरूपं तम इति अज्ञानमासीत्। तेन तमसा जगद् गूढमाच्छादितम्। अस्मात् कारणादतर्क्यमज्ञायमानम्। किंवत्? यद्वत् क्षीरान्तर्गतमम्भ: उदकं क्षीरान्तर्वर्तमानमपि न ज्ञायते तद्वत्। तत इहास्मिन्नज्ञाने अस्य नामरूपात्मकस्य जगतो जनिरुत्पत्ति:। ननु यद्यपि बीजान्तर्गतो वृक्षस्तिष्ठति तथापि कारणसामग्रीव्यतिरेकेण नोत्पद्यते। अत आह--**कामादिति**। सिसृक्षो: स्रष्टुमिच्छतो धातु: परमेश्वरस्य कामादिच्छात:। सापि कुत इत्यत आह--किंभूताद्धातु: कामात्? अनुगतजगत: कर्मभि: संप्रवृत्तात्। अनुगतमनादित्वेन वर्तमानं यज्जगत्तस्य कर्मभि: प्रेरितात्। अथ तान्यपि कुत इत्यत आह--रेतोरूपै: बीजभूतै: मनोभि: प्रथममनादिप्रवाहेणानुगतै: सद्भि: सन्ततै: कार्यमाणै: निष्पादितै: कर्मभिरित्यर्थ:।

**एतदर्थे श्रुतिरपि**। "तम आसीत्तमसा गूह्ळमग्रे प्रकेतं सलिलं सर्वमा इदं। तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्।।१।। कामस्तदग्रे समवर्तताधि मनसो रेत: प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा"।।२।।

**भाष्यम्**। ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत्, कथं तर्हि तस्य जन्म? जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात्, कारकं च कारणावान्तरविशेष: इति कारकस्य सत:कार्यनियतपूर्वक्षणवर्तित्वस्यावश्यम्भावात्। अथैतद्दोषपरिजिहीर्षया जनिक्रियाया: प्रागपि तद्विद्यत इत्युच्यते, कथं तस्य जन्म, अत आह--**तमसा गूह्ळमग्र इति**। अग्रे सृष्टे: प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा गूढं यथा नैशं तम: सर्वं पदार्थजातमावृणोति तद्वत्, आत्मतत्त्वस्यावरकत्वात् मायापरपर्यायं भावरूपाज्ञानमत्र तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति। आच्छादकात् तस्मात् तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते।

ननु कारणभूते तमसि तज्जगदात्मकं कार्यं विद्यते चेत्तर्हि कथन्नासीद्रज इत्यादिना तन्निषेधस्तत्राह--**तम आसीदिति**। तमो भावरूपाज्ञानं मूलकारणम्। तद्रूपतां तदात्मतां यत: सर्वं जगत् प्राप्तमासीदतो निषिध्यत इत्यर्थ:। नन्वावरकत्वादावरणं तम:कर्तृ, आवार्यं जगत् कर्म, कथं कर्तृकर्मणोस्तादात्म्यं तत्राह--**अप्रकेतमिति**। अप्रकेतमप्रज्ञायमानम्। अयमर्थ:--यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते, तथापि व्यवहारदशायामिव, तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम्। अत एव मनुना स्मर्यते-"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वत:" इति। कुतो वा न प्रज्ञायत इत्यत आह--**सलिलमिति**। लुप्तोपमा, सलिलमिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसा अविभागापन्नं जगत्। ननु विविधविचित्रभूयस: प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभव:? तथा तमोऽपि क्षीरवद् बलवदित्येवोच्यते तर्हि दुर्बलस्य जगत: सर्गसमये नोत्पत्तिसंभव: इत्यत आह--**तुच्छेनेति।** आ समन्ताद् भवतीत्याभु इदं सर्वं तुच्छेन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं [२]आच्छादितमासीत्। एकम् एकीभूतं कारणेन तमसाऽविभागतां प्राप्तमपि तत् कार्यजातं अजायत।। तपस: पर्यालोचनरूपत्वं चान्यत्राम्नायते-"य: सर्वज्ञ: सर्वविद् यस्य ज्ञानमयं तप:" इति। अथ कामस्तदग्र इति। ननु उक्तरीत्या यदीश्वरस्य पर्यालोचनं जगत: पुन: पुनरुत्पत्तौ कारणं तदेव वा किन्निबन्धनम्? इत्यत आह--**कामस्तदग्र**

---

१. शुद्धस्य। २. आ सर्वत: आच्छादितं पा.।

**कामाद्धातुस्सिसृक्षोरनुगतजगतः कर्मभिः संप्रवृत्तात्**
**रेतोरूपैर्मनोभिः प्रथममनुगतैः सन्ततैः कार्यमाणैः।।२५।।**

**[१]चत्वारोऽस्याः कपर्दा युवतिरथ भवेन्नूतना नित्यमेषा**
**माया वा पेशला स्यादघटितघटनापाटवं[२] याति यस्मात्।**
**स्यादारम्भे घृतास्या श्रुतिभववयुनान्येवमाच्छादयन्ती**
**तस्यामेतौ सुपर्णाविव परपुरुषौ तिष्ठतोऽर्थप्रतीत्या।।२६।।**

**एकस्तत्रास्त्यसङ्गस्तदनु तदपरोऽज्ञानसिन्धुं प्रविष्टो**
**विस्मृत्यात्मस्वरूपं स विविधजगदाकारमाभासमैक्षत्।**

---

**इति**। अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत सिसृक्षाऽजायतेति भावः। ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह--**मनस इति**। मनसः अन्तःकरणस्य सम्बन्धि वासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम्। सामान्यापेक्षमेकवचनम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशं रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमं अतीते कल्पे प्राणिभिः कृतं पुण्यापुण्यात्मकं कर्म यत् यतः कारणात्सृष्टिसमये आसीदभवत्। भूष्णु वर्धिष्णु अजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः। तत् ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः। तस्यां च जातायां स्रष्टव्यं पर्यालोच्यते। ततः सर्वं जगत्सृजति। तथा चाम्नायते ''सोऽकामयत बहुस्यां प्रजायेयेति। स तपोऽतप्यत स तपस्तप्त्वा। इदं सर्वमसृजत यदिदं किञ्चे''ति। अथो विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति--**सत इति**। सतः सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतो बन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शिनो योगिनः हृदि हृदये निरुद्धया मनीषया बुद्ध्या प्रतीष्य विचार्य असति सद्विलक्षणे अव्याकृते कारणे निरविन्दन् निष्कृष्यालभन्त विविच्याजानन्नित्यर्थः।।२५।।

मायाया उत्कर्षं वर्णयति--**चत्वार इति**। अस्याः पूर्वोक्तमायायाः चत्वारः कपर्दाः उत्कर्षाः सन्ति। अथ तानेवाह--**युवतिरिति**। एषा माया नित्यं नूतना कदापि स्थविरा न भवति। अतो युवतिर्भवेत्। देहादिवार्द्धक्येऽपि सा तरुण्येवास्ति। अयं च एक उत्कर्षः। तथा इयं पेशला स्यात्। किं नाम पेशलत्वमत आह--**पेशला** कुशलेत्यर्थः। तदेवाह--**यस्मादिति**। यस्मात्कारणादियमघटितघटनापाटवं विक्षेपे कौशलं याति, अयं द्वितीयः उत्कर्षः। तथेयमारम्भे उपक्रमे घृतास्या घृतवद् मिष्टं आस्यं मुखं यस्याः सा तथा। यस्य कस्याप्यारम्भे मिष्टं दर्शयति, परिणामे विषोपमा। अयं तृतीय उत्कर्षः। अथेयं श्रुतिभववयुनानि श्रुतिभिः उपनिषद्भागैः प्रतिपादितानि आत्मज्ञानानि आवरणशक्त्याऽऽच्छादयति। अयं चतुर्थः उत्कर्षः। तस्यां चतुरुत्कर्षवत्यां मायायां एतौ परपुरुषौ परः परमात्मा, पुरुषो जीवः एतौ सुपर्णौ पक्षिणाविव तिष्ठतः। केन प्रकारेण ज्ञातावित्याह--**अर्थेति**। अर्थप्रतीत्या पदार्थभासकत्वेन। माया तु तिरोधानकर्त्री। सकलभासकत्वं परमात्मन एवेत्यर्थः।।२६।।

इदानीं जीवपरमात्मनोः परमार्थतः एकत्वमाह--**एक इति**। **तत्र** तयोः सुपर्णयोर्मध्ये **एकः** परमात्मा **असङ्गोऽस्ति तदनु तदपरो** जीवः **अज्ञानसिन्धुं प्रविष्टः स आत्मस्वरूपं विस्मृत्य विविधजगदाकारं**

---

१. चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते। तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्। एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे। २. अघटनघटना पा.।

**बुद्ध्याऽन्तर्यावदैक्षद्विसृजति तमजा सोऽपि तामेवमेक-**
**स्तावद्विप्रास्तमेकं कथमपि बहुधा कल्पयन्ति स्ववाग्भिः।।२७।।**

**नायाति प्रत्यगात्मा प्रजननसमये नैव यात्यन्तकाले**
**यत्सोऽखण्डोऽस्ति लैङ्गं मन इह विशति प्रव्रजत्यूर्ध्वमर्वाक्।**
**तत्कार्श्यं स्थूलतां वा न भजति वपुषः किन्तु संस्कारजातं**
**तेजोमात्रा गृहीत्वा व्रजति पुनरिहायाति तैस्तैस्सहैव।।२८।।**

**आसीत्पूर्वं सुबन्धुर्भृशमवनिसुरो यः[1] पुरोधाः सनातेः**
**ब्राहम्यात्कूटाभिचारात्स खलु मृतिमितस्तन्मनोऽगात्कृतान्तम्।**

---

**आभासं** प्रातिभासिकं **ऐक्षत्** दृष्टवान्। ततः **बुद्ध्या** निश्चयात्मिकया **अन्तः यावदैक्षत्** तावत् **अजा** माया **तं** जीवं **विसृजति। तथा सोऽपि जीवः** तां मायां विसृजति अन्तर्दृष्ट्या विचार्यमाणे उभयोरसंस्पर्शे अखण्डत्वमेवानुभूयते। तर्हि सुपर्णद्वयकल्पना कुत इत्याह--**विप्रा इति**। तमेकमेवात्मानं **विप्रा** श्रुतिज्ञाः कवयः शिष्यबोधादिव्यवहृतिविधये **वाग्भिर्**वचोभिरनेकधा **कल्पयन्ति**। न त्वनुभवत इत्यर्थः। एतदर्थे श्रुतिः। **चतुष्कपर्दा इति**[2]।।२७।।

अथ जन्ममरणाननुबन्धेनास्य स्वरूपं निरूपयति--**नायातीति**। **प्रजननसमये** गर्भाविर्भावे सति **प्रत्यगात्मा नायाति** गर्भे न प्रविशति। तथा **अन्तकाले** देहावसानसमये **न याति** न गच्छति। **यत्** यतः **स** आत्मा **अखण्डः** अपरिच्छिन्नोऽस्ति। यतः प्रवेशनिर्गमौ हि परिच्छिन्नस्यैव सम्भवतः। तर्हि लोके जन्ममरणादिव्यवहारः कस्येत्याह--**लैङ्गमिति**। लैङ्गं पञ्चदशकलोपेतं मनः। इह लोके ऊर्ध्वं देवलोकेऽ**र्वाङ्**मनुष्यलोके वा गर्भे विशति। तथा प्रव्रजति च न प्रत्यगात्मा। अथ तल्लिङ्गदेहोपेतं मनः वपुषः स्थूलदेहस्य कार्श्यं कृशतां स्थूलतां पुष्टत्वं वा **न भजति**। रोगाद्युपहतौ कृशता **तथा** पाटवे पुष्टत्वं वा न भजति। एवं तन्मनः उत्क्रान्तौ[3] पूर्वसंस्कारजातं तथा **तेजोमात्राः** प्रत्यङ्गप्राणान्[4] गृहीत्वा **व्रजति** गच्छति। तथा **पुन**रुत्पत्तिसमये **तैस्तैः संस्कारजातैः** सह **इह** गर्भे **आयाति**।।२८।।

अथ प्रवेशनिर्गमौ मनस एव सम्भवतो नात्मन इत्यत्र ऋक्शाखीयां श्रुतिमाख्यायिकापूर्विकां संवादयति--**आसीदिति**। सुबन्धुनामा अवनिसुरो ब्राह्मणः पूर्वं **भृशं** अत्यर्थं सर्वोत्कर्षेणासीत्, किंभूतः? **सनातेः** पृथ्वीभुजः **पुरोधाः** पुरोहितः। अथ खल्विति श्रूयते। **स ब्राहम्याद्** ब्राह्मणकृतात् कूटाभिचारात् कापट्यरचितादभिचारादस्त्रप्रयोगात् **मृतिमितः** मरणं प्राप्तः। **तन्मनः** कृतान्तं यमलोकमगात्। **अथ तस्य** सुबन्धोर्भ्राता **श्रौतमन्त्रैः** कृत्वा तद्गतं मनः पुनरनयत् आनीतवानिति सूक्तेन वेदः प्राह। तस्मात्कारणादात्माभियुक्तमात्मप्रतिबिम्बाभियुक्तं सत् **मन** एव **व्रजति** परं **त्वन्तरात्मा** न व्रजति। एतन्मूलभूता **श्रुतिरपि** अष्टमाष्टके- ''यत्ते यमं वैवस्वतं मनो जगाम दूरकं। तत आवर्तयामसीह क्षयाय जीवसे। **भाष्यम्**। अत्रेयमाख्यायिका। पूर्वं सनातिसंज्ञस्य राज्ञो गृहे बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुरिति चत्वारो भ्रातरः पुरोहिता आसन्। ते द्विषन्त्।शाय राज्ञाऽऽदिष्टमाभिचारिकं न कुर्वन्तीति राज्ञा बहिष्कृताः। ततोऽन्यन्मायाविपुरोहितद्वयं कृतम्। तेन बन्ध्वादयश्चत्वारः

---

१. 'योऽसनातेः पुरोधाः'। २. समग्रो मन्त्रो दृश्यते पु.। ३. 'वपुषः उत्क्रान्तौ'। ४. 'प्रत्यक् प्राणान्'।

**तद्भ्राता श्रौतमन्त्रैः पुनरनयदिति प्राह सूक्तेन वेदः**
**तस्मादात्माभियुक्तं व्रजति ननु मनः कर्हिचिन्नान्तरात्मा।।२९।।**

**एको निष्कम्प आत्मा प्रचलति मनसा धावमानेन तस्मिन्**
**तिष्ठन्नग्रेऽथ पश्चान्न हि तमनुगतं जानते चक्षुराद्याः।**
**यद्वत्पाथस्तरङ्गैः प्रचलति परितो धावमानैस्तदन्तः**
**प्राक्पश्चादस्ति तेषां पवनसमुदितैस्तैः प्रशान्तैर्यथावत्।।३०।।**

**एकाक्यासीत् स पूर्वं मृगयति विषयानानुपूर्व्याऽन्तरात्मा**
**जाया मे स्यात्प्रजा वा धनमुपकरणं कर्म कुर्वंस्तदर्थम्।**

---

क्षुब्धाः सन्तो राज्ञ आभिचारिकं कर्तुं प्रवृत्ताः। तच्छ्रुत्वा मायाविनौ **पुरोहितौ** चाभिचारिककर्मणा सुबन्धुं जघ्नतुः। ततः सुबन्धोर्भ्रातरः तं पुनर्जीवयितुं वक्ष्यमाणैः **श्रौतमन्त्रै**रुपायं चक्रुः। **यत्ते यममिति। भाष्यम्।** भो सुबन्धो! यत्ते मनो **वैवस्वतं** विवस्वतः सूर्यस्य पुत्रं यमं प्रति दूरं जगाम। तत्ते मनः आवर्तयामसि ततो निर्वतयामः। किमर्थम्? इह लोके क्षयाय निवासाय जीवसे जीवनायेति **प्रथमा। अथ द्वितीया** "यत्ते दिवं यत्पृथिवीं मनो जगाम दूरकं। तत्त आवर्तयामसीह क्षयाय जीवसे"।। तथा--"यमादहं वैवस्वतात्सुबन्धोर्मन आभरम्। जीवातवे न मृत्यवेऽथो अरिष्टतातये"।।२९।।

इदानीं चलनादिधर्मा मनस एव नात्मन इति दर्शयति—**एक इति। एकोऽ**द्वितीयो **निष्कम्पः** कर्मशून्योऽपि **आत्मा धावमानेन मनसा** सह **प्रचलति**। तथा **तस्मि**न्मनस्यपि **तिष्ठन्** सन् **अग्रे** पुरतः **पश्चाच्च** वर्तते। तमेवंविधमात्मान**मनुगत**मन्तर्गतमपि **चक्षुराद्याः न जानते** न जानन्ति। इन्द्रियागोचरत्वात्। तत्र दृष्टान्तमाह--**यद्वदिति। यद्वत् पाथः** उदकं **परितो धावमानैस्तरङ्गैः प्रचलति**, तथा तेषां तरङ्गाणां अन्तःप्राक् पश्चाच्च पाथोऽस्ति। किंभूतैस्तरङ्गैः? पवनसमुदितैर्वायुनोत्पन्नैः। एवं मायामयैरिन्द्रियैरप्यात्मा प्रचलति। अथ तैः प्रशान्तैः सद्भिर्यथावत्प्रकृतिस्थं पाथ एवास्ति, तद्वदात्माऽपि।।३०।।

इदानीं जीवस्य बाह्यप्रपञ्चानुवृत्तिं निरूपयति--**एकाकीति**। सोऽन्तरात्मा[1] **पूर्वमेकाकी आसीत्**। अतः परम् **आनुपूर्व्या** अनुक्रमेण **विषयान्मृगयति** गवेषयति। अथानुपूर्वीमाह--प्रथमं **जाया मे** स्यात्ततः **प्रजा** मे स्यात्ततस्तन्निर्वाहार्थं **धनं** वित्तं मे स्यात्। अथ **तदर्थं** वित्तप्राप्त्यर्थं **प्राणावशेषैः** क्लेशैः **कर्म** कुर्वन्। एवं धनादिविषयप्राप्तौ **अस्माद्विषयादन्यद्** महदपि **गरीयः श्रेष्ठं न मनुते**। एवं बहुविषयोद्देशे **एक**विषया**लाभे** सति **अकृत्स्नो** भूत्वा मृत इव **विरमति** विरामं प्राप्नोति। तथा **एकहान्या** प्राप्तस्य नाशेन अ**कृतार्थो** भवति। अत्र **मूलश्रुतिः**--आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेत्स च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता। **भाष्यं**। अग्रे पूर्वमिदमयमेक एव केवलमात्मैवासीत्। स जाया मे स्यादिति अकामयत ऐच्छत्। ततोऽस्यां जायायां प्रजायेय पुत्रत्वेन जन्म प्राप्नुयामित्यकामयत। "अस्यां जायते पुनः" इति श्रुतेः। तथा आत्मैव

---

१. अत्र आत्मा अकृतविवाहो वर्णीति—शां. भा.।

**क्लेशैः प्राणावशेषैर्महदपि मनुते नान्यदस्माद् गरीय-**
**स्त्वेकालाभेऽप्यकृत्स्नो मृत इव विरमत्येकहान्याऽकृतार्थः।।३१।।**

**नासीत्पूर्वं न पश्चादतनुदिनकराच्छादको वारिवाहः**
**दृश्यः किन्त्वन्तराऽसौ स्थगयति स दृशं पश्यतो नार्कबिम्बम्।**
**नो चेदेवं विनाऽर्कं जलधरपटलं भासते तर्हि कस्मात्**
**तद्वद्विश्वं पिधत्ते दृशमथ न परं भासकं चालकं स्वम्।।३२।।**

**भुञ्जानः स्वाप्नराज्यं ससकलविभवो जागरं प्राप्य भूयः**
**राज्यभ्रष्टोऽहमित्थं न भजति विषमं तन्मृषा मन्यमानः।**

---

जायायां पुत्रत्वेन परिणमते तथा यत्कर्म करोति तदप्यात्मार्थमेवेति पुनः श्रुत्या निरूप्यते। एवं जायापुत्रप्राप्तौ तद्भरणार्थं वित्तं मे स्यादिति वित्तं कामयते। अथ वित्तप्राप्त्यर्थं कर्म कुर्वीयेति। एतावान् वै कामः। अथ नेदिति निपातो निषेधार्थे। [1]नेत्स च न सम्भवतीत्यर्थः। अतः जायापुत्रादिविषयादन्यद् भूयो बहुतरं न विन्देत न विन्दति। एवं यावज्जीवं, पुनरुत्पत्तिमासाद्य तथैवेति पुनरुक्तम्। एवं स जीवो यावदेतेषां जायादीनां मध्ये एकैकं न प्राप्नोति तावदकृत्स्नः असम्पूर्णोऽहमिति मन्यते इत्येवं तस्य अकृत्स्नता अपूर्णता।।३१।।

अविद्याया आवरणशक्तिमेव विविच्य प्रपञ्चयति--**नासीदिति**। वारि वहतीति वारिवाहो मेघः **अतनुदिनकराच्छादको** भवति। न तनुरतनुर्महाँल्लोकत्रयप्रकाशको यो दिनकरो दिवसे प्रसृतकरः सूर्य**स्तदाच्छादको भवति**। अथ तस्याच्छादकत्वमान्तरालिकं, न प्रवाहपरम्परागतमित्याह--**नासीदिति**। मेघः प्रावृट्कालात्पूर्वं ग्रीष्मे नासीत्। अथ पश्चाच्छरत्कालान्तेऽपि [2]नासीदेवं एवंविधो मेघः सूर्यं पश्यतो जनस्य दृशमेव स्थगयति आवृणोति, नार्कबिम्बं, तस्य मेघादप्यभितः करप्रसारशालित्वादित्यर्थः। एवं सत्यपि लोके सूर्यो निष्प्रभ इति प्रतीतिः प्रातिभासिकीत्याह--**नो चेदिति**। एवमुक्तप्रमेयं नोचेत्सूर्य एवाच्छादित इति चेत्तर्हि अर्कं विना जलधरपटलं सूर्यावरकीभूतं मेघपटलं कस्माद्भासते? सूर्यस्य घनपटलेन तिरोहितत्वात् घनपटलं कस्मात् प्रकाशान्तरात् ज्ञायते, सूर्यस्याऽऽच्छन्नत्वेन प्रकाशकत्वानर्हत्वादित्यर्थः। तथा च सूर्यं पश्यतो जनस्य घनपटलेन दृष्टिरेवावृता, न सूर्यः। एतद्दृष्टान्तावष्टम्भेन भूमण्डलस्यापि सूर्यावरकत्वं तद्वदेवेत्यर्थः। अथ यदर्थमेतदुपक्रान्तं तदाह--**तद्वदिति**। तद्वदन्तरोत्पन्नं विश्वमपि पश्यतो दृशं दृष्टिमेव पिधत्ते, न परं, परब्रह्मस्वरूपं नाच्छादयति, तर्हि कथं न दृश्यत इत्याशङ्क्य दृश्यत एवेत्याह। किंभूतं परं ब्रह्म स्वभासकं चालकं च। स्वशब्देन विश्वं तस्य भासकं तथा चालकञ्च। येन विचित्ररूपं विश्वमाभाति तथा येन चलति सर्वव्यवहारं करोति तत्परं ब्रह्म कथमाच्छादयितुं शक्यते? ब्रह्मव्यतिरेकेण तस्य भासकचालकान्तराभावात्। तथा च जगदाकारादिमध्यावसानेषु वर्तमानं ब्रह्मैव सत्यम्। तदज्ञानादुदितो जगदाकारः शुक्तिरजतवत्प्रातिभासिक इत्यर्थः।।३२।।

एवं स्वप्नदृष्टान्तेन प्रपञ्चस्य मिथ्यात्वं निरूपयति--**भुञ्जान इति**। ससकलविभवःसेनाकोशाद्युपस्कारयुक्तः सन् स्वाप्नराज्यं भुञ्जानः पुरुषो भूयो जागरं प्राप्य प्राक्तनं दरिद्रं रङ्कदेहं निरीक्ष्याहं राज्यभ्रष्ट इति **विषमं** शोकं न भजति। कुतः? तत्स्वाप्नं राज्यं मृषा मन्यमानः। अथेममेवार्थं दृष्टान्तेन द्रढयति--**स्वप्न इति**। स्वप्ने अगम्यागमनमुखं सुरापानब्रह्मवधादि अघं पातकं कुर्वन् ततः प्रबोधं प्राप्तः सन् तेन पातकेन प्रत्यवायी

---

१. माध्यन्दिनपाठः। २. नासीदेवेति स्यात्।

**स्वप्ने कुर्वन्नगम्यागमनमुखमघं तेन न प्रत्यवायी**
**तद्वज्जाग्रद्दशायां व्यवहृतिमखिलां स्वप्नवद्विस्मरेच्चेत्।।३३।।**

**स्वप्नावस्थानुभूतं शुभमथ विषमं तन्मृषा जागरे स्यात्**
**जागृत्यां स्थूहदेहव्यवहृतिविषयं तन्मृषा स्वापकाले।**
**इत्थं मिथ्यात्वसिद्धावनिशमुभयथा सज्जते तत्र मूढः**
**सत्ये तद्भासकेऽस्मिन्निह हि[१] कुत इदं तन्न विद्मो वयं हि।।३४।।**

**जीवन्तं जाग्रतीह स्वजनमथ मृतं स्वाप्नकाले निरीक्ष्य**
**निर्वेदं यात्यकस्मान्मृतममृतममुं वीक्ष्य हर्षं प्रयाति।**
**स्मृत्वाऽप्येतस्य जन्तोर्निधनमसुयुतिं भाषते तेन साकं**
**सत्येवं भाति भूयोऽल्पकसमयवशात् सत्यता वा मृषात्वम्।।३५।।**

---

प्रायश्चित्ती न भवति। यथापूर्वं लोके व्यवहार्य एव दृश्यते। मनसाऽप्यनुतापं न प्राप्नोति। कुतः?तन्मृषा मन्यमान इति पूर्ववत्। तथा जाग्रद्दशायामेव पापकर्ता प्रायश्चित्तार्हो भवति। अथ जाग्रद्दशायामपि अखिलां पुण्यपापव्यवहृतिं चेत् स्वप्नवद्विस्मरेत्तदापि तद्वत्प्रायश्चित्तार्हो न भवति, यतस्तन्मृषा मन्यमान इति प्रागुक्तमेव। तदुक्तं भगवता-''ब्रह्मण्याधाय कर्माणि'' इत्यादिना।।३३।।

अथ जाग्रत्स्वप्नावस्थयोरपि भ्रमजनकत्वमस्तीत्याह--**स्वप्नेति**। **स्वप्नावस्थायामनुभूतं शुभं** राज्यभोगेष्टप्राप्त्यादि, तथा **विषमं** व्याघ्रभक्षणादि **तत्सर्वं जागरे मृषा** भवति। अथ **जाग्रद्दशायां स्थूलदेहव्यवहृतिविषयं** शुभं मिष्टाशनादिसकलभोगसुखं तथा विषमं आधिव्याधियातनाजनितं[२] दुःखं यत्तत्स्वापकाले सर्वं मृषा भवति। इत्थममुना प्रकारेणो**भयथापि अनिशं** निरन्तरं मिथ्यात्वसिद्धौ सत्यां तत्र **मूढः** यः **सज्जते**ऽभिनिवेशं करोति तत्कस्मात्कारणादिति **वयं न विद्मः**।।३४।।

अथ एतदेव सोदाहरणं निरूपयति--**जीवन्तमिति**। इह लोके **जाग्रत्य**वस्थायां **जीवन्तं** स्वजनं अथेदानीं **स्वप्नकाले मृतं निरीक्ष्य अकस्मान्निर्वेदं** दुःखं **याति** प्राप्नोति। अथवा **जाग्रत्यां** मृतं विपन्नं स्वजनं **स्वप्नकालेऽमृतं** जीवन्तं **वीक्ष्य हर्षं प्रयाति**। अनेन जाग्रत्यनुभूतं स्वप्नकाले मृषा भवतीति दर्शितम्। अथ **तत्र** तदस्मरणेनान्यथा प्रतीयत इति चेत्तत्राह--**स्मृत्वेति**। (अनेन जाग्रत्यनुभूतं) एतस्य जागृत्यां मृतस्य जन्तोर्निधनं **स्मृत्वाऽपि** अथवा जीवतःअसुयुतिं जीवनं स्मृत्वापि तेन सह भाषते वार्ताः कथयति। तथा मृतेन सह दीनालापं करोति। तथा च स्वप्नकालेऽपि स्मरणवतोऽपि मृषात्वप्रतीतिर्भवतीति सूचितम्। एवं सति उभयथा मिथ्यानुभूतौ सत्यामपि **स्वप्ने** मृषात्वप्रतीतिर्जाग्रत्याञ्च सत्यत्वप्रतीतिर्लोकानां कथमुत्पद्यत इत्यत आह--**भूयोऽल्पकेति**। **भूयोऽल्पकसमयवशात् सत्यता मृषात्वं** वा **भाति** भासते न तात्त्विकम्। भूयांश्चाल्पकश्च तौ समयौ च तद्वशात्, जागृतिः चिलकालमस्ति, तत्र दृढानुसन्धानात्सत्यत्वं भासते। स्वप्नस्त्वल्पसमयदृश्योऽस्त्यतस्तत्र मृषात्वं भासते। विचार्यमाणे तावदुभयोरपि असत्यत्वमित्यर्थः।।३५।।

---

१. 'तद्भासकेऽस्मिन्नहह'　२. 'जनितयातनादुःखं'।

**स्वाप्नस्त्रीसङ्गसौख्यादपि भृशमसतो या च रेतश्च्युतिःस्यात्**
**सा[1] दृश्या तद्वदेतत्स्फुरति जगदसत्कारणं सत्यकल्पम्।**
**स्वप्ने सत्यः पुमान्स्याद्युवतिरिह मृषैवानयोः संयुतिश्च**
**प्रातः शुक्रेण वस्त्रोपहतिरिति यतः कल्पनामूलमेतत्।।३६।।**

**पश्यन्त्याराममस्य[2] प्रतिदिवसममी जन्तवः स्वापकाले**
**पश्यत्येनं न कश्चित्करणगणमृते मायया क्रीडमानम्।**
**जाग्रत्यर्थव्रजानामथ च तनुभृतां भासकं चालकं वा**
**नो जानीते सुषुप्तौ परमसुखमयं कश्चिदाश्चर्यमेतत्।।३७।।**

**स्वप्ने मन्त्रोपदेशः श्रवणपरिचितः सत्य एष प्रबोधे**
**स्वाप्नादेव प्रसादादभिलषितफलं सत्यतां प्रातरेति।**
**सत्यप्राप्तिस्त्वसत्यादपि भवति तथा किं च तत्स्वप्रकाशं**
**येनेदं भाति सर्वं चरमचरमथोच्चावचं दृश्यजातम्।।३८।।**

---

इदानीमसदुपादानकं विश्वमपि सदिति सदृष्टान्तमाह--**स्वाप्नेति**। असतोऽविद्यमानादपि स्वाप्नस्त्रीसङ्गसौख्याद्रेतश्च्युतिः शुक्रद्रवो[3] भवति। सा दृश्या व्यावहारिकसत्या। तद्वदसत्कारणं जगत् सत्यकल्पं स्फुरति। नामैकदेशे नामग्रहणमितिवत् असत् सदसद्विलक्षणमविद्याख्यं कारणं यस्य तदसत्कारणम्, एवंविधं जगत्सत्यकल्पं स्फुरति न तु सत्यम्, सुषुप्तावस्तमितत्वात्। अथ दृष्टान्तेन दार्ष्टान्तिकसिद्धिमाह--**स्वप्न इति**। स्वप्ने पुमान् सत्यः, युवती स्त्री मृषा च, परमनयोः स्त्रीपुरुषयोः संयुतिः सुरतमपि मृषा। तथा प्रातर्जाग्रदवस्थायां शुक्रेण रेतसा वस्त्रोपहतिः प्रत्यक्षसिद्धा। एवमात्मा सत्यः, स्त्री माया असत्या, तयोर्युतिः सम्बन्ध आध्यासिकः अत एव मृषा। तस्माज्जातं जगद् व्यवहारसत्यं, यतः सर्वं कल्पनामूलं काल्पनिकमित्यर्थः।।३६।।

अथावस्थात्रयेऽपि अनुभूयमानमात्मानं केऽपि न विचिन्वन्तीत्याश्चर्यमाह--**पश्यन्तीति। अमी जन्तवो** जीवाः **प्रतिदिवसं स्वापकाले अस्य** परमात्मनः **आरामं** क्रीडां **पश्यन्ति**, परं त्वेनमात्मानं कश्चिन्न **पश्यति**। किंभूतमात्मानम्? **करणगणं ऋते** बाह्येन्द्रियव्यतिरेकेणापि **मायया** स्वाप्नदेहेन्द्रियादिरूपया **क्रीडमानम्**। अथास्तां तावन्मौढ्यदशा स्वप्नावस्थायां, जागृत्यामपि तनुभृतां **चालकं** तथाऽर्थव्रजानां **भासकं** प्रकाशकं निरन्तरं न पश्यति। तथा **सुषुप्तौ** परमसुखमयम्, **एवंविधं** परमात्मानं केऽपि **न जानन्तीत्येतन्महदाश्चर्यमित्यर्थः**।।३७।।

ननु जाग्रदवस्थाया[4] अपि स्वप्नदृष्टान्तेन मृषात्वे प्रोच्यमाने तस्यां गुरुमुखादुपनिषद्विचारादिना यो ब्रह्मबोधः सोऽपि मृषा भवति, ततो ब्रह्मापि वन्ध्यापुत्रवदसद्रूपं स्यादित्याशङ्क्याह--**स्वप्न इति**।।३८।।

---

१. 'सादृश्यात्'।

२. अत्र श्रुतिः—"आराममस्य पश्यन्ति न तं पश्यति कश्चन" इति। ३. 'द्रावः'। ४. स्थायाम् पा.।

**मध्यप्राणं सुषुप्तौ स्वजनिमनुविशन्त्यग्निसूर्यादयोऽमी**
**वागाद्याः प्राणवायुं तदिह निगदिता ग्लानिरेषां न वायोः।**
**तेभ्यो दृश्यावभासो भ्रम इति विदितःशुक्तिकारौप्यकल्पः**
**प्राणायामव्रतं तच्छ्रुतिशिरसि मतं स्वात्मलब्धौ न चान्यत्।।३९।।**
**[1]नोऽकस्मादार्द्रमेधः स्पृशति च दहनः किन्तु शुष्कं निदाघा-**
**दार्द्रं चेतोऽनुबन्धैः कृतसुकृतमपि स्वोक्तकर्मप्रजार्थैः।**
**तद्वज्ज्ञानाग्निरेतत्स्पृशति न सहसा किन्तु वैराग्यशुष्कं**
**तस्माच्छुद्धो विरागः प्रथममभिहितस्तेन विज्ञानसिद्धिः।।४०।।**

---

एवं स्वप्ननिदर्शनेन जगन्मिथ्यात्वं निरूप्येदानीं जगत्सत्यत्वाभिव्यञ्जिकायां जागृत्यामपि तन्मिथ्यात्वं निरूपयति--**मध्येति**। अमी अग्निसूर्यादयो वागादीन्द्रियाधिदेवताः सुषुप्तौ तृतीयावस्थायां मध्यमं प्राणं विराजमनुविशन्ति प्रविशन्ति। किंभूतं विराजं? स्वजनिं स्वस्य जनिः यस्मिन् स तथा स्वोत्पादकम्। "मुखादिन्द्रश्चाग्निश्चे" ति तथा "चक्षोः सूर्यो अजायते" ति श्रुतेः। कार्यजातस्य कारणे प्रवेशो युक्त एवेत्यर्थः। तथा वागाद्या इन्द्रियगणाः सुषुप्तौ प्राणवायुमिन्द्रसंज्ञमनुविशन्ति, तत् तस्मात्कारणादेषां साधिदेवतानामिन्द्रियाणां ग्लानिरस्तमयः निगदिता उपनिषत्प्रतिपादिता। परन्तु स्थूलसूक्ष्मप्रपञ्चलयरूपायां सुषुप्तावपि प्राणवायोरस्तमयो नास्ति। यतः सुषुप्तौ श्वासरूपेण प्रत्यक्षत उपलभ्यमानत्वात्। अथ जाग्रत्यामपि चक्षुरादिभ्यो यो दृश्याभासो दृश्यानां रूपरसादीनां प्रतिभासः सः भ्रमो न तात्त्विक इति विदितः। उत्तरकाले बाधितत्वात्। अथ भ्रमे दृष्टान्तमाह--**शुक्तिकारौप्यकल्प इति**। यथा शुक्त्यवच्छिन्नेऽधिकरणे रौप्यं प्रातिभासिकं प्रतीयते, तद्वद् ब्रह्मण्यधिकरणे नामरूपात्मकं विश्वं प्रातिभासिकम्। तस्मात्कारणादवस्थात्रयेऽपि अनस्तमितप्राणायामव्रतं स्वात्मलब्धौ श्रुतिशिरसि मतं, नान्यच्चक्षुरादिव्रतं, तस्यावस्थात्रयेऽपि आत्मलब्ध्यावशक्तत्वात्[2]।।३९।।

अथ शुद्धवैराग्ययोगेनैव ज्ञानसिद्धिरित्यनुवदति--**नोऽकस्मादिति**। **आर्द्रं** जलाक्तं एधः काष्ठं **दहनो**ऽग्निरकस्मान्न स्पृशति। किन्तु **निदाघाच्छुष्कमेव** स्पृशति। **तद्वदनुबन्धै**र्भार्यादिविषयैरार्द्रं चेतः स्वोक्तकर्मप्रजार्थैः कृतसुकृतमपि ज्ञानाग्निर्न स्पृशति। स्वोक्तकर्म स्वाश्रमवर्णोचितम्। प्रजा पुत्रः "पुत्रेणैव अयं लोको जय्यो नान्येन कर्मणे"ति। तथा-"नापुत्रस्य लोकोऽस्ती" ति श्रुतिः। तथा **आर्थैः** अर्थसाध्यैः यज्ञदानादिभिः कृतसुकृतमपीत्यर्थः। किंतु वैराग्यशुष्कमेव चेतः ज्ञानाग्निः स्पृशति। तस्मात् कारणात् शुद्धो विरागः वान्तत्यक्तान्नवत् विषयवितृष्णता प्रथमं आवश्यकत्वेन अभिहितः प्रोक्तः[3]। **अत्र श्रुतिः**[4]। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति।" **भाष्यम्**। एकेन त्यागेन वैराग्येण

---

१. नो इत्यव्ययम्। सन्धिरार्षः। 'नाकस्मात्' पा.।

२. बृहदारण्यके प्रथमाध्यायपञ्चमब्राह्मणे इदमुक्तम् तस्मादनस्तमिता देवता यद्वायुः इत्याधिदैविके। मृत्युः इममेव नाप्नोद्योऽयं मध्यमः प्राणः यतः आध्यात्मिकेऽनस्तमितः प्राण एवेति। तस्मात्तयोरेवोपास्यत्वमिति निर्णीतम्।

३. अनेन कृत्वा विज्ञानसिद्धिर्भवति। अ. पा.।

४. ना. उ. १२.३

**यत् किञ्चिन्नामरूपात्मकमिदमसदेवोदितं भाति भूमौ**
**येनानेकप्रकारैर्व्यवहरति जगद् येन तेनेश्वरेण।**
**तद्वत्प्रच्छादनीयं निभृतरशनया यद्वदेष द्विजिह्व-**
**स्तेन त्यक्तेन भोज्यं सुखमनतिशयं मा गृधोऽन्यद्धनाद्यम्।।४१।।**

**जीवन्मुक्तिर्मुमुक्षोः प्रथममथ ततो मुक्तिरात्यन्तिकी च**
**तेऽभ्यासज्ञानयोगाद्गुरुचरणकृपाऽपाङ्गसङ्गेन लब्धात्।**
**अभ्यासोऽपि द्विधा स्यादधिकरणवशाद्दैहिको मानसश्च**
**शारीरस्त्वासनाद्यो ह्युपरतिरपरो ज्ञानयोगः पुरोक्तः।।४२।।**

---

यतयः अमृतत्वं आनशुः प्राप्ताः। परन्तु न कर्मणा फलापेक्षेण, न प्रजया पुत्रेण, न धनेन दानादिना। अथामृतत्वं निरूपयति--**परेणेति**। परेण परब्रह्मणा नाकं स्वांशीभूतं गुहायां हृद्याकाशे यन्निहितं निधिवद् गोपितं वस्तु। यच्चान्तः[१] प्रकाशत्वेन भ्राजते स्फुरति तदमृतं यतयो विशन्ति। वैराग्यं ज्ञानगर्भमिति यः कश्चित् पठति।।४०।।

अथ प्रागुक्तोपदेशक्रमे ईशावास्योपनिषदुक्तां श्रुतिं संवादयन्नाह--**यत्किञ्चिदिति**। यत्किंचिदसदेवोदितं नामरूपात्मकं इदं शुक्तिकारजतवत् इदन्त्वेन भूमौ येन आभासते, तथा गच्छतीति जगत् येन कृत्वा अनेकप्रकारैर्व्यवहरति, तेनेश्वरेणेदं तद्वत् प्रच्छादनीयम् आच्छादनीयम्। तद्वत्किंवत्? यद्वन्निभृतरशनया निश्चयेन ज्ञातया रज्ज्वा एष प्रातिभासिकत्वेन ज्ञातो द्विजिह्वः सर्प आच्छाद्यते। तद्वज्जगद्भासकत्वेन चालकत्वेन च संविद्रूपत्वेन निश्चितेन परमात्मना जगदाच्छादनीयम्। तेन जगदाभासेन त्यक्तेन दूरतोऽपास्तेन केवलीभावे प्राप्ते अनतिशयमत्युत्कृष्टमात्यन्तिकं सुखं भोज्यम्। परन्तु अन्यत्तद्विलक्षणं धनादिकं विषयसुखं मा गृधः माऽभिकांक्षयेत्युपदेशत्रयम्। **श्रुतिश्च** "ईशावास्य" मिति। **भाष्यम्**। इदं पुरोभासमानं यत्किंचिन्नामरूपात्मकं सर्वमाब्रह्मस्तम्बपर्यंतं गच्छतीति जगत् व्यवहारवत् जगत्यां पृथिव्यां यद्भाति तत्, ईष्टे इति ईट् तेन ईशा सर्वोत्कृष्टेन परमात्मना कृत्वा वास्यं, वस आच्छादने आच्छादनीयम्। जगद्भासकत्वेन चालकत्वेन च ज्ञातेन परब्रह्मणा प्रातिभासिकं जगदाच्छाद्यम् तुच्छत्वेन ज्ञेयम्। एवं तेन जगदाभासेन त्यक्तेन दूरतोऽपास्तेनावशिष्ट-मात्मस्वरूपमानन्दात्मकं भुञ्जीथाः, परन्तु धनं विषयसुखं मा गृधः। गृधु अभिकांक्षायाम्, इदं कस्यस्वित् किमुपादानमिति ज्ञात्वा मा अभिकांक्षय (सर्वात्मना तिष्ठन् गेहे गृहेश इति (१६) शक्त्या निर्मोकत इति (१७) पठनीयम्)।।४१।।

अथ द्विधा मोक्ष[२]प्रकारमाह--**जीवन्मुक्तिरिति**। उपरतिः सर्वात्मना प्रपञ्चोपरमः। शेषं स्पष्टम्।।४२।।

---

१. यच्चार्थ ।

२. मोक्षोपायमाह पा.।

**सर्वानुन्मूल्य कामान् हृदि कृतनिलयान् क्षिप्तशङ्कूनिवोच्चैः**
**दीर्यद्देहाभिमानस्त्यजति चपलतामात्मदत्तावधानः।**
**यात्यूर्ध्वस्थानमुच्चैः कृतसुकृतभरो नाडिकाभिर्विचित्रं**
**नीलश्वेतारुणाभिः स्रवदमृतभरं गृह्यमाणात्मसौख्यः।।४३।।**

---

अथ प्रथमोद्दिष्टां जीवन्मुक्तिमाह--**सर्वानिति**। हृदि कृतनिलयान् अनेककल्पपर्यन्तं संस्काररूपेण हृदि स्थितान् सर्वान् कामान् मनोरथान् उन्मूल्य समूलमुत्खातान् कृत्वा दीर्यद्देहाभिमानः सन् चपलतां त्यजति अहंममताभिमानमुत्सृज्य मनोवेगं त्यजति। किंभूतः? आत्मदत्तावधानः आत्मनि दत्तं अवधानं अविरतानुसन्धानं येन स तथा। एवं तथाभूतः सन् उच्चैः ऊर्ध्वस्थानं सर्वोत्कृष्टं ब्रह्मरन्ध्रं सुषुम्नाविवरेण याति। किंभूतं स्थानं? नीलश्वेतारुणाभिर्नाडिकाभिः विचित्रं सहस्रदलं चक्रम्। पुनः किंभूतं? स्रवदमृतभरं कुण्डलिनीमुखनिर्भेदेनामृतं स्रवतीत्यर्थः। किंभूतो जीवन्मुक्तः? कृतसुकृतभरः कृतानेकपुण्यपुञ्जः। पुनः किंभूतः? **गृह्यमाणात्मसौख्यः**। ब्रह्मानन्दवानस्मीति किञ्चिदुर्वरिताहङ्कारशेष इत्यर्थः। **अत्र श्रुतिः**--कण्डिकाचतुष्टयम्-यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति।।१।। तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवेममेवेदं शरीरं शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्यः।।२।। तदप्येते श्लोकाः अणुः पन्था वितरो माँ स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः।।३।। तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च। एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित् तैजसः पुण्यकृच्च।।४।। **भाष्यम्**। अस्य मुमुक्षोः पुरुषस्य हृदि स्थिताः सर्वे कामाः सङ्कल्पाः यदा प्रमुच्यन्ते शान्ता भवन्ति। अथेति अनन्तरं, तदानीमित्यर्थः। मर्त्यो मरणधर्मात्मकोऽपि अमृतो मुक्तो भवति, किं पुनर्देवादिः। अथामृतत्त्वमाह--**अत्रेति**। अत्रास्मिन् देहे वर्तमान एव ब्रह्म समश्नुते परमानन्दमनुभवति। अथ शरीरे वर्तमानः सन् तदभिमानशून्य इति सदृष्टान्तमाह-- **तद्यथेति**। अहेः सर्पस्य निर्ल्वयनी निर्मोकः कञ्चुकं मृता निर्जीवा वल्मीके सर्पस्थाने प्रत्यस्ता प्रक्षिप्ता सती शयीत निश्चेष्टतया स्थिता सा दूरात् सर्प इव दृश्यते परन्तु सर्पकृत्यं न करोति एवं तद्वदिदं अयं पुरुषः शरीरमेवाधिष्ठाय शेते निश्चेष्टतयाऽवतिष्ठते। अथेत्यनन्तरं अयं प्राज्ञः आत्मा जीवः अनस्थिकः अस्थिरूपः स्थूलदेहः तदभिमानशून्यः तथा अशरीरः शरीरं सूक्ष्मशरीरं तदभिमानशून्यश्च। भोः सम्राडिति सम्बुध्य याज्ञवल्क्यो जनकं प्रत्युवाच। **तदप्येते श्लोका इति**। तत्रार्थे श्लोका प्रसिद्धमन्त्राः सन्ति। तानेव याज्ञवल्क्य आह— **अणुरिति**। अणुः सूक्ष्मो मार्गः सुषुम्नाविवरोपलक्षितः। वितरो[1] विशिष्टतरः श्रेष्ठतम एवंविधो मार्गः मां स्पृष्टः मम गुरुमुखात् कर्णच्छिद्रतो ज्ञातः, अनन्तरं मयैव अनुवित्तः अनुष्ठितः। तेन मार्गेण धीराः ब्रह्मविदः पुरुषा अपि इतः प्रपञ्चाद्विमुक्ताः सन्तः सुवर्गलोकं ब्रह्मरन्ध्राख्यं स्थानं यन्ति प्राप्नुवन्ति। तस्मिन् विचित्रवर्णा नाड्यः सन्तीत्याह--**शुक्लमित्यादि**। एवमध्यात्मरीत्या व्याख्यातम्। केऽपि आधिदैविकस्थित्या विष्ण्वादिलोकप्राप्तिं व्याकुर्वन्ति। एवमेष पन्था मार्गः ब्रह्मणा मत्तः पूर्वं अनुवित्तोऽनुष्ठितः। तेनैव मार्गेण [2]ब्रह्म विद्वांसः वैराजत्वं प्राप्ताः। पुण्यकृदिति नान्य इत्यर्थः।।४३।।

---

१. 'विततः' एवं मूलेऽपि। २. 'ब्रह्मवित् तैजसः वैराजत्वं प्राप्तः सुकृदेति नान्य इत्यर्थः' पा.।

**प्रापश्यद्विश्वमात्मेत्ययमिह पुरुषः शोकमोहाद्यतीतः**
**शुक्रं ब्रह्माध्यगच्छत्स खलु सकलवित्सर्वसिद्ध्यास्पदं हि।**
**विस्मृत्य स्थूलसूक्ष्मप्रभृतिवपुरसौ सर्वसङ्कल्पशून्यो**
**जीवन्मुक्तस्तुरीयं पदमधिगतवान्पुण्यपापैर्विहीनः।।४४।।**
**यः सत्त्वाकारवृत्तौ प्रतिफलति युवा देहमात्रावृतोऽपि**
**तद्धर्मैर्बाल्यवार्द्धयादिभिरनुपहतः प्राण आविर्बभूव।**
**श्रेयान् साध्यस्तमेतं[1] सुनिपुणमतयः सत्यसङ्कल्पभाजो**
**[2]ह्यभ्यासाद्देवयन्तः परिणतमनसा साकमूर्ध्वं नयन्ति।।४५।।**

---

अस्मिन्नर्थे ईशावास्योपनिषदुक्तां श्रुतिं संवादयति--**प्रापश्यदिति**। **अयं** पुरुष **इहास्मिन्** देहे वर्तमानः सन् **विश्वं** आत्मेति **प्रापश्यत्** पश्यति स्म। विश्वं विश्वाकारेण नापश्यत्। किंत्वात्माकारेणैव। किंभूतः? शोकमोहाद्यतीतः। एवंविधः सन् शुक्रं शबलं ब्रह्म हिरण्यगर्भाख्यं अध्यगच्छत् अधिगतवान्। एवं हिरण्यगर्भत्वं प्राप्तः सकलवित्सर्वज्ञो जातः। तथा सर्वसिद्धीनामणिमाद्यष्टानामास्पदं स्थानं च जातः। तथा असौ पुरुषः स्थूलसूक्ष्मप्रभृतिवपुर्विस्मृत्य सर्वसङ्कल्पशून्यः सन् तुरीयं पदं अधिगतवान् आत्मसुखमनुभवति स्म। ततः पुण्यपापैर्विहीनः सकलकर्मातीतः। **अत्र श्रुतिः सार्धकण्डिका**। यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः।।१।। स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। **भाष्यम्**। यस्मिन् काले विजानतो विज्ञानवतः पुरुषस्य सर्वभूतानि आत्मैवाभूत् सकलं ब्रह्मैवाभूत्। तत्र तस्मिन् काले को मोहः किमज्ञानम्? तथा तन्मूलः शोकः कः? न कोऽपीत्यर्थः। किंभूतस्य विजानतः? एकत्वम् अभेदं अनुपश्यतः सर्वत्र एकत्वभावनयैव विज्ञातस्वरूप इत्यर्थः। एवं स जीवन्मुक्तः शुक्रं शबलं हिरण्यगर्भस्वरूपं पर्यगात् प्राप्तवान्। किंभूतं शुक्रं? अपापविद्धं पापमहंकारस्तेनास्पृष्टं अत एव शुद्धमपि प्राप्तवानित्यर्थः। पुनः किंभूतम्? अस्नाविरं स्नायवः शिराः तत्स्वरूपं स्थूलदेहं तस्मादतीतम् अस्नाविरं। तथा अव्रणं व्रणं चिह्नं सूक्ष्मभूतेन्द्रियप्राणावस्थात्मकं लिङ्गदेहं तस्मादप्यतीतं। एवं चतुर्थे महाकारणे देहे वर्तमानमित्यर्थः।।४४।।

अथ जीवन्मुक्तस्य मनः प्राणश्च ऊर्ध्वं गच्छत इत्येतस्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयति-**यःसत्त्वेति**। यः आत्मा सत्त्वाकारवृत्तौ प्रतिफलति स युवा प्राण आविर्बभूव। सत्त्वगुणोपपन्नो जीव इत्यर्थः। स देहमात्रावृतोऽपि बाल्यवार्ध्यादिभिः तद्धर्मैर्देहधर्मैरनुपहतः सन् श्रेयान् कल्याणरूपस्तथा साध्यः साधयितुं उत्तमां गतिं प्रापयितुं योग्यः। तं एतं प्राणं सुनिपुणमतयः कुशलबुद्धयः सत्ये परे ब्रह्मणि संकल्पो मनोगतिर्येषां ते तथाविधाः पूर्वोक्तादभ्यासात् देवत्वं प्राप्तुमिच्छन्तः परिणतमनसा विविक्तेन मनसा सह ऊर्ध्वं नयन्ति। **अत्र श्रुतिः** तृतीयाष्टके--"युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो ३ मनसा देवयन्तः।" **भाष्यम्**। बाल्यवार्द्धक्याद्यैर्देहविकारैर्विरहितो युवा मुख्यप्राणः सुष्ठु वासः प्रावरणं यस्य सत्त्वाकारान्तःकरणप्रतिबिम्बितः परिवीतः शरीरावृतः सन् अगात् जीवद्दशां प्राप्तः। उ इति निश्चयेन। स जायमानः प्रादुर्भूतमात्रः सन् श्रेयान् स्वकर्मनिरतो भवति। स स्वाध्यः सुखेनाराध्यः। तमेव धीरं

---

१. 'स्वाध्यस्तमेतं'। २. ऽपि।

**प्रायोऽकामोऽस्तकामो निरतिशयसुखायात्मकामस्तदाऽसौ**
**तत्प्राप्तावाप्तकामः स्थितचरमदशस्तस्य देहावसाने।**
**प्राणा नैवोत्क्रमन्ति क्रमविरतिमिताः स्वस्वहेतौ तदानीं**
**क्वायं जीवो विलीनो लवणमिव जलेऽखण्ड आत्मैव पश्चात्।।४६।।**
**पिण्डीभूतं यदन्तर्जलनिधिसलिलं याति तत्सैन्धवाख्यां**
**भूयः प्रक्षिप्तमस्मिन् विलयमुपगतं नामरूपे जहाति।**

---

धीरासः दृढव्रताः कवयः क्रान्तदर्शिनो ज्ञानिनो देवयन्तो देवत्वं प्राप्तुमिच्छन्तः मनसा सह उन्नयन्ति सुषुम्नामार्गेण ऊर्ध्वं नयन्ति ब्रह्मरन्ध्रं प्रापयन्ति।।४५।।

अथ निर्वाणमुक्तिमाह--**प्राय इति**। प्राङ्निरूपितो जीवन्मुक्तः पुरुषः प्रायो बाहुल्येन अकाम एव तिष्ठति। यतोऽस्तकाम आत्माकारस्य मनसो विक्षेपाभावात्। परन्तु निरतिशयसुखं परमानन्दस्तदर्थमात्मकाम आत्माकारः कामो यस्य स तथा। अथ तत्प्राप्तौ आप्तकामः परमानन्दे [१]सर्वानन्दानामन्तर्भूतत्वात्। तदुक्तं भगवता। ''यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत'' इति। किंभूतः? स्थितचरमदशः स्थिता चरमा [२]प्राप्ता दशा यस्य। अथ दशातीतत्वमाह— **तस्येति**। तस्य पुरुषस्य देहावसाने प्राप्ते सति प्राणा नैव उत्क्रमन्ति उत्क्रमणं हि पुनर्देहारम्भाय कल्पते। प्रकृते तु तथा न भवति। किन्तु स्वस्वहेतौ स्वकारणे क्रमविरतिं क्रमेण नाशं इताः प्राप्ताः, तदानीं क्वायं जीवदशापन्नः? क्वास्ति? न क्वापीत्यर्थः। यतो जले लवणमिव विलीनो लयं प्राप्तः तदा पश्चादखण्ड आत्मैव तिष्ठति। अवच्छेदकाभावात्। 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतेः। जीवः प्रथमं ब्रह्मैवासीत् 'मध्ये जीवदशां प्राप्तः' पुनर्ब्रह्मत्वमेव प्राप्नोतीत्यर्थः।।४६।।

अथ लवणमिव जले इत्येतद्दृष्टान्तं विशदयन्नाह--**पिण्डीभूतमिति**। स्पष्टोऽर्थः।

**अत्र श्रुतिः**[३]। ''स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्याद् यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद् भूतं अनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमि इति होवाच याज्ञवल्क्यः।'' **भाष्यं**। मैत्रेयीं ज्येष्ठपत्नीं प्रति याज्ञवल्क्य उवाच। अरे मैत्रेयि सैन्धवखिल्यः सैन्धवपिण्डः उदके प्रास्तः प्रक्षिप्तः सन् अनुविलीयेत विलीनः सन् उदकत्वमेव प्राप्नोति। न प्रकारान्तरम्। ह इति निश्चये[४] न पुनरस्य सैन्धवस्य उद्ग्रहणाय नैव स्यात्। यत्सैन्धवं जले प्रक्षिप्तं तस्य उत् ऊर्ध्वं ग्रहणं बहिर्निष्कासनं तदुह[५] नैव स्यात्। पुनस्तस्य नैव प्राप्तिः इत्यर्थः। अथ तदेवाह। तु पुनः लवणं क्षारोदकमेव लभ्यते[६]। एवममुना प्रकारेण इदं महद् भूतं अनन्तं अक्षोभ्यं अपारं अमर्यादं वैराजरूपं विज्ञानघने परमात्मस्वरूपे एव एतेभ्यो भूतेभ्यः स्वकारणेभ्यः समुत्थाय उदयं प्राप्य तान्येव भूतानि विनाशोन्मुखानि अनुलक्ष्यीकृत्य विनश्यति। तस्य न प्रेत्य संज्ञाऽस्तीति प्रेत्य नाशं प्राप्य तस्य संज्ञा नास्तीति।

स्वकारणे लीयन्त इत्यत्र आर्तभागयाज्ञवल्क्ययोः संवादश्रुतिमुक्तवान्। **तथा च श्रुतिः**। ''याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर

---

१. 'क्षुद्रानन्दानां'। २. 'प्रान्त्या'।
३. बृ. २.७.१२। ४. 'निश्चयेन'। ५. 'तदर्थं'। ६. 'लक्ष्यते'।

**प्राज्ञस्तद्वत्परात्मन्यथ भजति लयं तस्य चेतो हिमांशौ**
**वागग्नौ चक्षुरर्के पयसि पुनरसृग्रेतसी दिक्षु कर्णौ।।४७।।**
**क्षीरान्तर्यद्वदाज्यं मधुरिमविदितं तत्पृथग्भूतमस्मात्**
**भूतेषु ब्रह्म तद्वद् व्यवहृतिविदितं श्रान्तविश्रान्तिबीजम्**
**[1]यं लब्ध्वा लाभमन्यं तृणमिव मनुते यत्र नोदेति भीतिः**
**सान्द्रानन्दं यदन्तः स्फुरति तदमृतं विद्ध्यतो ह्यन्यदार्तम्।।४८।।**
**ओतः प्रोतश्च तन्तुष्विह विततपटश्चित्रवर्णेषु चित्रः**
**तस्मिञ्जिज्ञास्यमाने ननु भवति पटः सूत्रमात्रावशेषः।**

---

सौम्य हस्तं''-**भाष्यं**। जारत्कारव आर्तभागो याज्ञवल्क्यं प्रति वदति--भो याज्ञवल्क्य,! अस्य जीवन्मुक्तस्य पुरुषस्य मृतस्य त्यक्तदेहस्य वाक् अग्निं स्वाधिदैवतं अप्येति प्रविशति। चक्षुः आदित्यं प्रविशति। मनश्चन्द्रं। दिशः श्रोत्रं प्रविशति इत्यधिदैवतं प्रवेश उक्तः। अथ शरीरं पृथिवीं स्वकारणभूतां प्रविशति। आत्मा हृदयाकाशः आकाशे प्रविशति। लोमानि कण्ठादधस्तनानि औषधीः प्रविशन्ति। केशा मूर्धन्याश्च वनस्पतीन् वृक्षान् प्रविशन्ति। रेतः शुक्रं लोहितं (अशुद्धं) च अप्सु प्रविशति। तदा क्वायं पुरुषो भवतीति। प्राप्तसङ्केतो याज्ञवल्क्यो वदति--**आहरेति**। भोः सौम्य, आर्तभाग हस्तं आहरेति हस्तं देहीत्यर्थः।।४७।।

अथ सर्वं विश्वं आत्मसम्बन्धेनैव चलतीत्याह--**क्षीरान्तरिति**। यद्वत् क्षीरान्तः दुग्धमध्ये यदाज्यं घृतमस्तीति मधुरिमविदितं मधुरिम्णा माधुर्येण विदितं ज्ञातं, अथ तद् घृतं अस्मात् क्षीरात् पृथग्भूतं भिन्नं मथनाज्ज्ञातं, यतः पुनर्घृतं क्षीरान्तर्निक्षिप्तं सत् दुग्धत्वं न प्राप्नोति, तद्वद् भूतेषु ब्रह्मास्तीति व्यवहृतिर्व्यवहारस्तेन विदितम्। तच्च भूतापेक्षया भिन्नम्। यतः श्रान्तविश्रान्तिबीजं जाग्रत्या श्रान्तस्य पुरुषस्य सुषुप्तौ या विश्रान्तिः यो विश्रामस्तस्य बीजं कारणम्। यतः यल्लब्ध्वा प्राणी अन्यलाभं तृणमिव मनुते। तथा यत्र यस्मिन् ब्रह्मणि भीतिर्नोदेति अद्वैतत्वात्। ''द्वितीयाद्वै भयं भवती'' ति श्रुतेः। यतः सुषुप्तौ स्थूलसूक्ष्मप्रपञ्चलये मनः केवलात्माकारं भवति। एवं सान्द्रानन्दं वस्तु यदन्तः स्फुरति तदमृतं विद्धि जानीहि। अतोऽन्यत् पदार्थजातं आर्तं बाधितं शुक्तिकारजतवदुत्तरक्षणे बाधदर्शनात्। **अयमर्थः**। केवलमुदकरूपे दुग्धे उदकाद्विलक्षणं यन्माधुर्यं तदन्तर्गतस्य आज्यस्यैव संभवति। एवं भूतरूपे[2] देहे चलनादिव्यापारस्तथेन्द्रियेष्वर्थप्रकाशः एतदात्मकृतमेव, न शरीरकृतम्। यतो मृतशरीरे तथात्वं न दृश्यते। अनेन ''तेजोमयोऽमृतमयः'' तथा ''अन्तर्याम्यमृतः'' इत्यादिश्रुतीनां विषयो दर्शितः।।४८।।

अथेदं विश्वं परम्परया ब्रह्मण्येव ओतप्रोतमिति दर्शयति--**ओतः प्रोतश्चेति**। इह लोके विततो विस्तृतः पटः तन्तुषु ओतप्रोतो दृश्यते। किंभूतेषु तन्तुषु? विचित्रवर्णेषु। किंभूतः पटः? विचित्रवर्णः। तस्मिन् पटे जिज्ञास्यमाने सम्यग्विचार्यमाणे ननु निश्चयेन पटः सूत्रमात्रावशेषो भवति। ऊर्ध्वतन्तुषु ओतः तिर्यक्तन्तुषु प्रोतः। एवंविधो यः पदार्थः स पटसंज्ञां प्राप्तः। परन्तु तत्र सूत्रव्यतिरेकेणान्यः कोऽपि पदार्थो नानुभूयते। तद्वन्नगनगरनरग्रामपश्वादिरूपं गुणकर्मविभागेन विचित्रं विश्वं वैराजरूपे ब्रह्माण्डविग्रहे प्रोतं, स च वैराजः वियति आकाशे प्रोतः, तदपि वियद् ब्रह्मणि प्रोतम्। अनेनाक्षरं ब्रह्म प्रतिपाद्यते। **अत्र श्रुतिः**। ''स

---

१. 'यत्'। २. 'असद्रूपे'।

**तद्वद् विश्वं विचित्रं नगनगरनरग्रामपश्वादिरूपं**
**प्रोतं वैराजरूपे स वियति तदपि ब्रह्मणि प्रोतमोतम्।।४९।।**
**रूपं रूपं प्रतीदं प्रतिफलनवशात् प्रातिरूप्यं प्रपेदे**
**ह्येको द्रष्टाऽद्वितीयो भवति च सलिले सर्वतोऽनन्तरूपः।**

---

होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति।।१।। स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमस्पर्शमगन्धमरसम-चक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमनामागोत्रमजरममरमभयममृतमरजमशब्दमविवृतमसंवृतमपूर्वमनपर-मनन्तरमबाह्यं न तदश्नोति कंचन न तदश्नोति कश्चन।'' **भाष्यं**। जनकसभायां याज्ञवल्क्येन सह विवदमानेषु ब्राह्मणेषु गर्गकन्या वाचक्नवी, तया पृष्टो याज्ञवल्क्यस्तस्याः प्रश्नं अनुवदति स्म। **स होवाचेति**। स याज्ञवल्क्यः ह इति निश्चित्य गार्गीं प्रत्युवाच। भो गार्गि त्वयैतत् पृष्टं। तत्किं? दिवो यदूर्ध्वं स्वर्गादप्युच्चं तथा पृथिव्याः सकाशात् यत् अर्वाक् अधो वर्तते। तथा यदन्तरा यन्मध्ये इमे दृश्यमाने द्यावापृथिवी तथा यद्भूतमतिक्रान्तं भवद्वर्त्तमानं भविष्यदागामि पदार्थ इत्याचक्षते। तत् कस्मिन्नोतं प्रोतं चेति त्वया पृष्टे सति मयोत्तरितं तदाकाश एव ओतं च प्रोतं चेति। पुनस्त्वया पृष्टं कस्मिन् वा आकाशः ओतश्च प्रोतश्चेति। तत्रोत्तरं श्रूयतामित्याह- **स होवाचेति**। भो गार्गि त्वया एतद्वै पृष्टं तर्हि ब्राह्मणाः ब्रह्मज्ञाः पुरुषाः एतदक्षरं अविनाशि ब्रह्म अभिवदन्ति। तस्मिन्नक्षरे ब्रह्मणि आकाश ओतश्च प्रोतश्चेति शेषः। तत्र किंभूतं अक्षरमिति यदि पृच्छसि तर्हि श्रूयतामित्याह- **अस्थूलमिति**। स्थूलादिचतुर्विधपरिमाणातीतं जात्यभिप्रायेणैकत्वनिर्देशः। अन्लोहितमिति। लोहितादिवर्णातीतं तथा अस्नेहं स्नेहश्चिक्कणतागुणस्तद्रहितं। अच्छायं अमूर्त्तं। अतमः तमो भावरूपाज्ञानं मायाख्यं ततोऽप्यतीतम्। अवायु, अनाकाशं ताभ्यामतीतम् असङ्गम् असंमिलितं। अस्पर्शं संस्पर्शरहितं। तथा अचक्षुष्कमित्यादितः इन्द्रियरहितं। अथ तद्गतं अधिदैवतरूपं तेजो न भवतीत्यतेजस्कं। तर्हीन्द्रियचालकः प्राणो भविष्यतीति चेत्तदपि निषेधति- **अप्राणमिति**। अमुखं मुखरहितं, नामगोत्ररहितं च। अजरं जरातीतं च। अमरणस्वभावं, द्वितीयाभावात् अभयं अमृतं नित्यमुक्तस्वभावं अरजं गुणातीतं लोकातीतं वा। अशब्दं शब्दागोचरं। अविवृतं विवर्तवर्जितं। असंवृतम् अवच्छेदरहितं, अपूर्वं न विद्यते किंचित् पूर्वं यस्मात्, अनपरं न विद्यते अपरं यस्मात्, अनन्तरं न विद्यते अन्तरमभ्यन्तरं यस्य। अबाह्यं न विद्यते बाह्यमावरणं यस्य एवंविधं यत्तत्किंचन कमपि न अश्नोति नाङ्गीकुरुते। असङ्गोदासीनत्वात्। तथा कश्चन तत्राश्नोति व्याप्नोति अग्राह्यत्वात्।।४९।।

अथात्मनो बिम्बप्रतिबिम्बन्यायेन सर्वात्मकत्वमाह- **रूपं रूपमिति**। अत्र प्रतिबिम्बविषये श्रुतित्रयमुपन्यस्तवान्। इदं ब्रह्म प्रतिफलनवशात् रूपं रूपं प्रति प्रातिरूप्यं प्रपेदे। प्रतिरूपस्य भावः प्रातिरूप्यं। **अत्र श्रुतिः**। दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। रूपं रूपं प्रतिरूपो बभूवेति। **अत्रेयमाख्यायिका**। पूर्वमश्विनौ देवभिषजावात्मज्ञानोपदेशार्थं दधीचिं प्रति गत्वा आवाभ्यां आत्मविद्योपदेष्टव्येत्यूचतुः। तेनोत्तरितं क्षणान्तरे उपदेक्ष्यामीति। दधीचिवाक्यं श्रुत्वा स्वगृहं गतौ। तदन्तरे इन्द्रः समागत्य दधीचिं प्रत्युक्तवान्— त्वयैतौ मदीयभिषजौ नोपदेष्टव्यौ। अथ यदि मदीयवचनं न शृणोषि तर्हि तव शिरः [१]पातयिष्यामीत्युक्त्वा निर्गतः। पुनरश्विभ्यामागतम्। ततस्तौ दधीचिमुखाद्विदितवृत्तान्तावूचतुः। भो दधीचे क्षणान्तरे उपदेक्ष्यामीति तव

---

१. 'पोथयिष्यामि'।

**इन्द्रो मायाभिरास्ते श्रुतिरिति वदति व्यापकं ब्रह्म तस्मात्**
**जीवत्वं यात्यकस्मादतिविमलतरे बिम्बितं बुद्ध्युपाधौ।।५०।।**

**तज्ज्ञाः पश्यन्ति बुद्ध्या परमबलवतो माययाऽक्तं पतङ्गं**
**बुद्धावन्तः समुद्रे प्रतिफलितमरीच्यास्पदं वेधसस्तम्।**
**यादृग्यावानुपाधिः प्रतिफलति तथा ब्रह्म तस्मिन् यथाऽऽस्यं**
**प्राप्तादर्शानुरूपं प्रतिफलति यथाऽवस्थितं तत् सदैव।।५१।।**

---

प्रतिज्ञा मिथ्या भवितुं नार्हतीति। इदानीं तव शिरः स्थानान्तरे निधायाश्वशिरस्त्वयि संयोज्यते। तेन शिरसाऽऽत्मविद्यामुपदिश। तत इन्द्र आगत्याश्वशिरश्छित्वा गमिष्यति। पुनस्तव स्वाभाविकं शिरः संयोजयिष्याव इति। नासत्यवचसा तथाविधायां सत्यां अश्वशिरसा मधुकाण्डमुपदिष्टवान् इति पूर्ववृत्तान्तः। अथ दध्यङ्ङाथर्वणः, अथर्वणस्यापत्यं आथर्वणः, एवंविधो दधीचिः अश्विभ्यां यदुवाच तदेतदृषिर्वेदः पश्यन् अवोचत्। तत्किं? रूपं रूपं प्रतिरूपो बभूवेति, प्रतिबिम्बितं रूपं यस्येति प्रतिरूप इत्यर्थः। अथ द्वितीयां श्रुतिमाह— **एक इति**। **च** परं एको द्रष्टा सलिले द्वितीयो भवति। पश्यतीति द्रष्टा। **अत्र श्रुतिः**। सलिल एको द्रष्टाऽद्वैतो भवतीति। अथ तृतीयां श्रुतिं दर्शयति- **इन्द्र इति**। इन्द्रो मायाभिः सर्वतोऽनन्तरूप आस्ते। इन्द्रः परमात्मा मायाभिः कृत्वा सर्वतः अनन्तरूप आस्ते। **अत्र श्रुतिः**। इन्द्रो मायाभिः पुरुरूप ईयते। पुरुरूपो बहुरूपः ईयते ज्ञायते इत्यमुना प्रकारेण श्रुतिर्व्यापकं ब्रह्म वदति। तदकस्माद् बुद्ध्युपाधौ प्रतिबिम्बितं सज्जीवत्वं याति। किंभूते उपाधौ? विमलतरे स्वच्छतरे।।५०।।

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह— **तज्ज्ञाः इति**। पतनशीलः पतङ्गो **जीवः**, तं पूर्वप्रतिपादितं जानन्ति ते तज्ज्ञाः शास्त्रविदो, बुद्ध्या निश्चितान्तःकरणवृत्त्या पश्यन्ति। अथ किंरूपेण[1] पश्यन्तीत्याह— **बुद्धाविति**। बुद्धौ बुद्धिलक्षणे समुद्रे अन्तः वेधसः परमात्मनः प्रतिफलितमरीच्यास्पदम् प्रतिफलिताः प्रतिबिम्बिता ये मरीचयः किरणास्तदेवास्पदं स्वरूपं यस्य स तथा। अथ तस्य पतनशीलत्वं प्रकटयन्नाह— **परमेति**। परमबलवतो दुर्जयमायस्य वेधसो हिरण्यगर्भस्य मायया अक्तं व्याप्तं मुह्यमानम्। **अत्र श्रुतिः**। "पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः। समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः"। **भाष्यं**। असुरस्य बलवतो दुरन्तमायस्य परमात्मनो माययाऽक्तं व्याप्तं। अत एव पतङ्गं पतनशीलं जीवं विपश्चितः ज्ञानिनो मनसः संकल्पात्मकस्य हृदा बुद्धिरूपेण बुद्ध्येत्यर्थः। अन्तः पश्यन्ति। समुदनाद् व्यापनात्समुद्रः। स एव बुद्धिलक्षणः, तस्मिन् प्रतिफलिनानां वेधसः ईश्वरस्य चित्स्वरूपाणां मरीचीनां पदं स्थानमिति कवयः क्रान्तदर्शिनः विचक्षते वदन्ति परम् इच्छन्ति च उपासते च।

अथ श्लोकोत्तरार्द्धेन प्रतिबिम्बप्रकारं विशदयन्नाह— **यादृगिति**। यद्रूपो यादृक् यत्प्रमाणो यावान् एवंविधो य उपाधिर्बुद्धिलक्षणः तस्मिन् तथा ब्रह्म प्रतिफलति। **यादृगिति** सत्वरजस्तमोमयः। यावानिति स्थूलः सूक्ष्मो दीर्घो वर्त्तुलो वा, यथोपाधिरस्ति तत्र तत्र तथैव स्वयं सदैव यथाऽवस्थितं सत् प्रतिफलति। स्वमर्यादां न जहाति। अत्र दृष्टान्तमाह- **यथेति**। यथा आस्यं मुखं प्राप्तादर्शानुरूपं प्रतिफलति। वर्तुलो दीर्घः स्थूलो, लघुर्मलिनः शुद्धो वा यथा प्राप्तो य आदर्शो दर्पणः तदनुरूपेण प्रतिफलति। परन्तु स्वयं यथावस्थितमेवेति[2] तद्वद् ब्रह्मापि।।५१।।

---

१. 'किंरूपत्वेन'। २. मेव तिष्ठति पा.।

**एको भानुस्तटस्थः प्रतिफलनवशाद्यस्त्वनेकोदकान्त-**
**र्नानात्वं यात्युपाधिस्थितिगतिसमतां चापि तद्वत्परात्मा।**
**भूतेषूच्चावचेषु प्रतिफलित इवाभाति तावत्स्वभावा-**
**वच्छिन्नो यः परं तु स्फुटमनुपहतो भाति तावत्स्वभावैः।।५२।।**

**यद्वत्पीयूषरश्मौ दिनकरकिरणैर्बिम्बितैरेति सान्द्रं**
**नाशं नैशं तमिस्रं गृहगतमथवा मूर्च्छितैः कांस्यपात्रे।**
**तद्वद्बुद्धौ परात्मद्युतिभिरनुपदं बिम्बिताभिः समन्ता-**
**द्भासन्ते हीन्द्रियास्यप्रसृतिभिरनिशं रूपमुख्याः पदार्थाः।।५३।।**

**पूर्णात्मानात्मभेदात् त्रिविधमिह परं बुद्ध्यवच्छिन्नमन्यत्**
**तत्रैवाभासमात्रं गगनमिव जले त्रिप्रकारं विभाति।**
**अम्भोऽवच्छिन्नमस्मिन्प्रतिफलितमतः पाथसोऽन्तर्बहिश्च**
**पूर्णावच्छिन्नयोगे व्रजति लयमविद्या स्वकार्यैः सहैव।।५४।।**

---

अथैतदेव दृष्टान्तान्तरेण द्रढयन्नाह- **एको भानुरिति।**

स्पष्टार्थमिदं पद्यम्।।५२।।

ननु जलादिष्वर्कप्रतिबिम्बं स्वकीयं रूपमेव प्रकटयति, न पदार्थान्तरं; एवमात्मप्रतिबिम्बो जीवश्चेत्तर्हि कथं पदार्थान्तरज्ञापको भवतीत्याशङ्क्य सदृष्टान्तमाह—**यद्वदिति**। यद्वत्पीयूषरश्मौ जलमयचन्द्रे दिनकरकिरणैर्बिम्बितैस्सद्भिः सान्द्रं निबिडं नैशं रात्रिभवं तमिस्रं अन्धकारो नाशं एति प्राप्नोति। "आदित्येन चन्द्रमा भाती"ति श्रुतेः। दृष्टान्तान्तरमाह— अथवा कांस्यपात्रे दिनकरकिरणैः मूर्च्छितैः सद्भिः गृहगतं गृहान्तवर्त्ति तमिस्रं नाशमेतीति प्रसिद्धम्। तद्वद्बुद्धौ बिम्बिताभिः परमात्मद्युतिभिः समन्ताद् रूपमुख्याः पदार्था भासन्ते। तर्हि निमीलितनेत्रस्यापि पदार्थभानमस्त्विति, तत्राह—किंभूताभिः? अनुपदं तत्काल इन्द्रियास्यप्रसृतिभिः इन्द्रियास्यैरिन्द्रियमुखैः प्रसृतिः प्रसारो यासां ताभिः।।५३।।

अथोपाधावेव त्रेधा ब्रह्मप्रतीतिरस्तीत्याह- **पूर्णात्मेति**। इहोपाधौ पूर्णं च आत्मा च अनात्मा चेति त्रिविधं ब्रह्म भासते। तत्रैकं परं पूर्णं उपाधेर्बाह्याभ्यन्तरतो वर्तमानम्। तथा द्वितीयं बुद्ध्यवच्छिन्नं बुद्ध्यावृतम्।[1] तथाऽन्यत् तृतीयं तत्रैव बुद्धौ आभासमात्रं प्रतिबिम्बस्वरूपम्। किमिव? जले त्रिप्रकारं गगनमिव विभाति। अथ प्रकारत्रयमाह। **एकं** अम्भोऽवच्छिन्नं उदकावृतम्। **अपरं** अस्मिन्नुदके प्रतिफलितं। तृतीयं अतोऽस्मात् पाथसः उदकात् सकाशात् अन्तर्बहिश्च तिष्ठति । एवं पूर्णावच्छिन्नयोगे सति उपाधिभूता अविद्या स्वकार्यैः प्रतिबिम्बादिभिः सह लयं नाशं याति। अधिष्ठानसाक्षात्कारे आभासो नश्यतीत्यर्थः।।५४।।

---

१. 'बुद्ध्या युतम्'।

**दृश्यन्ते दारुनार्यो युगपदगणिताः स्तम्भसूत्रप्रयुक्ताः**
**सङ्गीतं दर्शयन्त्यो व्यवहृतिमपरां लोकसिद्धां च सर्वाम्।**
**सर्वत्रानुप्रविष्टादभिनवविभवाद् यावदर्थानुबन्धात्**
**तद्वत्सूत्रात्मसंज्ञाद् व्यवहरति जगद्भूर्भुवःस्वर्महान्तम्।।५५।।**

**तत्सत्यं यत् त्रिकालेष्वनुपहतमदः प्राणदिग्व्योममुख्यं**
**यस्मिन् विश्रान्तमास्ते तदिह निगदितं ब्रह्म सत्यस्य सत्यम्।**
**नास्त्यन्यत्किञ्च यद्वत्परमधिकमतो नाम सत्यस्य सत्यं**
**सच्च त्यच्चेति मूर्ताद्युपहितमवरं सत्यमस्यापि सत्यम्।।५६।।**

---

अथ सूत्ररूपं सर्वात्मकं ब्रह्माऽऽह— **दृश्यन्त इति**। युगपदेकसमयावच्छेदेन अगणिता अनेका दारुनार्यः काष्ठरचिता अचेतना अपि नार्यो नर्तक्यः सङ्गीतं वाद्यनृत्यात्मकं दर्शयन्त्यो दृश्यन्ते। न ह्यचेतनेषु तथात्वं युक्तमित्याशङ्क्याह— किंभूता नार्यः? स्तम्भसूत्रप्रयुक्ताः। शिल्पकेन रचितं यत् स्तम्भान्तः सूत्रं तेन प्रयुक्ताः तालादिनियमेन चेष्टां प्रापिताः। अथ न केवलं सङ्गीतं दर्शयन्त्यः, किन्तु लोकसिद्धां सर्वां व्यवहृतिं च लोकप्रसिद्धा सर्वा व्यवहृतिर्व्यवहारः मल्लयुद्धशस्त्रसाधनमृगयादिः, तमपि दर्शयन्त्यः। तद्वत् सर्वत्रानुप्रविष्टात् सूत्रात्मसंज्ञादात्मनः प्रेरकाद्भूर्भुवः स्वर्महान्तं जगद् व्यवहरति। किंभूतात्? अभिनवविभवात् अतर्क्यसामर्थ्यात्। पुनः किंभूतात्? यावदर्थानुबन्धात् यावानर्थः प्रयोजनं तावानेव सम्बन्धो यस्मात्। [1]व्यवहारे यावत्प्रयोजनं तावदेवानुबध्नाति नियतत्वेन सम्बन्धं प्रापयति न त्वनियतत्वेन। **अत्र श्रुतिः**। "वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ती"ति। **अथैतदर्थे ऋक्शाखीया श्रुतिश्च**। "स्त्रियः सतीस्ता उ मे पुंस आहुः पश्यदक्षण्वान्नविचेतदन्धः। कविर्यः पुत्रः स इमा चिकेत यस्ता विजानात्स पितुः पिता सत्"। **भाष्यं**। याः इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ताः आहुर्लौकिकाः ताः उ ता एव मे मह्यं पुंसः पुरुषानाहुः प्रतिपादयन्ति तत्त्वज्ञाः। कथमन्यस्यान्यभाव उच्यते? एकस्यैव निरस्तसमस्तोपाधिकस्य आत्मनस्तत्तद्देहावस्थानमात्रेण तद्व्यपदेशोपपत्तेः। **श्रूयते हि**- "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी" इत्यादि। स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति। अन्या श्रुतिस्तदभावं बोधयति- "नैव स्त्री न पुमानेष नैव चायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन तथोच्यते"। अमुमर्थमत्यन्तं निगूढं अक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चित् पश्यत् पश्येत् जानाति। तथा अन्धः अतथारूपः स्थूलदृष्टिर्न विचेतत्। न विचेतति न जानाति। किंतु पुत्रः वयसा अल्पोऽपि यः कविः क्रान्तप्रज्ञः ज्ञानी स्यात् स ईं[2] इममर्थं आचिकेत जानाति। एवमुक्तलक्षणस्य परमात्मनः जातानि स्त्रीत्वपुरुषत्वादीनि विजानात् औपाधिकानि विजानीयात्। स पितुः स पुत्रः कविः स्वोत्पादकस्यापि ज्ञानरहितस्य पिता सत्। पितृवत्पूज्यो भवति।।५५।।

अथ सत्यशब्दव्यपदेश्यं परब्रह्माह- **तत्सत्यमिति**। यत् त्रिकालेषु भूतभविष्यद्वर्तमानेषु अनुपहतं अबाधितं अदः अमूर्त्तं प्राणदिग्व्योममुख्यं। प्राणाः मुख्यप्राणादयः दिशो व्योम मुख्यशब्दात् कालादि तदेव सत्यं। यद्वा प्रकारान्तरमाह[3]- अतोऽस्माद् ब्रह्मणः सकाशादन्यत्परमुत्कृष्टं अधिकं महत् किञ्चिदपि सत्यस्य

---

१. 'यस्मिन् व्यवहारे'।

२. 'ईं' नास्ति। ३. 'प्रकारान्तरेणाह'।

**यत्किञ्चिद्भात्यसत्यं व्यवहृतिविषये रौप्यसर्पाम्बुमुख्यं**
**तद्वै सत्याश्रयेणेत्ययमिह नियमः सावधिर्लोकसिद्धः।**
**तद्वत्सत्यस्य सत्ये जगदखिलमिदं ब्रह्मणि प्राविरासीत्**
**मिथ्याभूतं प्रतीतं भवति खलु यतस्तच्च सत्यं वदन्ति।।५७।।**

**यत्राकाशावकाशः कलयति च कलामात्रतां यत्र कालो**
**यत्रैवाशावसानं बृहदिह हि विराट् पूर्वमर्वागिवास्ते।**
**सूत्रं यत्राविरासीन्महदपि महतस्तद्धि पूर्णाच्च पूर्णं**
**सम्पूर्णादर्णवादेरपि भवति यथा पूर्णमेकार्णवाम्भः।।५८।।**

---

नाम नास्ति। यद्यस्ति तर्हि वेदेषु कथं न प्रसिद्धम्। अतः ब्रह्मैव सत्यं सत्यव्यपदेश्यम्। अथ सत्यशब्दव्युत्पत्तिमाह— सच्च त्यच्चेति। सच्चेति यन्मूर्तं पृथिव्यप्तेजोरूपं त्यच्चेति यदमूर्तं वाय्वाकाशौ ताभ्यां उपहितं आश्रितं यत् अवरं शबलं ब्रह्म तस्यापि सत्यं ब्रह्म।।५६।।

अथ सत्यस्य सत्यमिति दृढीकुर्वन् सदृष्टान्तमाह- **यत्किञ्चिदिति**। लोके व्यवहारविषये दृश्यजाते यत्किञ्चिद्रौप्यसर्पाम्बुमुख्यमसत्यं भाति। शुक्तिकायां रजतं, रज्ज्वां सर्पः, मरीचिष्वम्बु एवमेतत्प्रमुखमसत्यं यद्भासते तत्सत्याश्रयेणैव भासते। शुक्तिकाद्यधिकरणं हि व्यावहारिकसत्यं, तदाश्रयेणैव रौप्यसर्पाम्बुमुख्यमसत्यं भाति तद्व्यतिरेकेण प्रतिभासासम्भवात्। इह लोके अयं नियमः सावधिर्लोकसिद्धो दृष्टः सत्याश्रयेणैवासत्यं भातीति नियमो लोकसिद्धोऽस्ति। किंभूतो नियमः? सावधिः अवधिना सह वर्तमानः; नेदं रजतमित्युत्तरकाले बाधदर्शनात्। एवं यावद्बाधादर्शनं तावदेव रजतादि भासते। अत एवास्यासत्यत्वं। तद्वत्सत्यस्य सत्ये ब्रह्मणि इदं अखिलं जगत् प्राविरासीत् प्रादुर्भूतं, तदपि सावधि प्रातिभासिकमित्यर्थः। प्रकारान्तरेण सत्यं दृढीकरोति— **मिथ्येति**। मिथ्याभूतं रजतादि येन प्रतीतं प्रतीतिविषयो भवति। तत्खल्विति निश्चयेन सत्यं वदन्ति।।५७।।

अथ पूर्णं ब्रह्म दर्शयति- **यत्राकाशावकाशः इति**। अहो इत्याश्चर्ये। बृहन्महदपि स्थूलमपि विराट् पूर्वं ब्रह्म विराडिति पूर्वमुपलक्षणं यस्य एवंविधं विश्वरूपाख्यं अर्वागेवास्ते। तत्किं? यत्र यस्मिन्नाकाशावकाशः आकाशस्यापि अवस्थानम्। तथा यत्र कालः कलामात्रतां लेशमात्रतां कलयति प्राप्नोति। तथा यत्राशावसानं दिक्पर्यवसानं भवति। एवंविधमपि अर्वागेवास्ति। तथा तत्र सूत्रं आविरासीत्। किंभूतं? महतोऽपि विराजोऽपि महत् हिरण्यगर्भाख्यमित्यर्थः। एवंविधं यत् हीति निश्चयेन तदेव पूर्णात् पूर्णं ब्रह्म। अत्र दृष्टान्तमाह- **यथेति**। यथा स्वरूपेणैव पूर्णादर्णवादेः समुद्रादिपदार्थात् एकार्णवाम्भः एकीभूतसप्तसमुद्रोदकं पूर्णात्पूर्णं तद्वत् प्रकृतेऽपीत्यर्थः। **अत्र श्रुतिः**। "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"। **भाष्यम्**। एकं सावधिपूर्णं तदापेक्षिकं यथा नदीह्रदात् तडागः पूर्णस्तडागात्समुद्रः तथा इदं मूर्तं पूर्णम्, तदपेक्षया अदः अमूर्तं पूर्णं तस्मादपि पूर्णमुदच्यते उत्कर्षं प्राप्नोति। तत्पूर्णस्य पूर्णं पूर्णत्वमादाय अङ्गीकृत्य सम्मेलनेन एकीभावमापाद्य[१] पूर्णमेवावशिष्यते। तदेव पूर्णात्पूर्णं अनतिशयं पूर्णमित्यर्थः[२]।।५८।।

---

१. 'प्राप्य'। २. अस्य मन्त्रस्य भगवत्पादीयव्याख्या बृहदारण्यके पञ्चमाध्यायादौ दृश्यते—अदः (परोक्षं) ब्रह्म पूर्णं। इदं सोपाधिकं नामरूपस्थं व्यवहारापन्नं तदेव ब्रह्म पूर्णं स्वेन रूपेण न तु सोपाधिकेन रूपेणा तदिदं कार्यात्मकं ब्रह्म पूर्णात् कारणात्मनः उदच्यते उद्रिच्यते उद्गच्छति। स्वीयपूर्णत्वं न जहाति। पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णत्वमादाय आत्मस्वरूपैरसत्वमापाद्य, अविद्याकृतं औपाधिकमन्यत्वावभासं विद्यया तिरस्कृत्य, पूर्णं एकरसं ब्रह्मैवाविशिष्यते।

**अन्तः सर्वौषधीनां पृथगमितरसैर्गन्धवीर्यैर्विपाकै-**
**रेकं पाथोदपाथः परिणमति यथा तद्वदेवान्तरात्मा।**
**नानाभूतस्वभावैर्वहति वसुमती येन विश्वं पयोदो**
**वर्षत्युच्चैर्हुताशः पचति दहति वा येन सर्वान्तरोऽसौ।।५९।।**

**भूतेष्वात्मानमात्मन्यनुगतमखिलं भूतजातं प्रपश्येत्**
**प्रायः पाथस्तरङ्गान्वयवदथ चिरं सर्वमात्मैव पश्येत्।**
**एकं ब्रह्माद्वितीयं श्रुतिशिरसि मतं नेह नानाऽस्ति किञ्चित्**
**मृत्योराप्नोति मृत्युं स इह जगदिदं यस्तु नानेव पश्येत्।।६०।।**

**प्राक्पश्चादस्ति कुम्भाद् गगनमिदमिति प्रत्यये सत्यपीदं**
**कुम्भोत्पत्तावुदेति प्रलयमुपगते नश्यतीत्यन्यदेशम्।**
**नीते कुम्भेन साकं व्रजति भजति वा तत्प्रमाणानुकारौ**
**इत्थं मिथ्याप्रतीतिः स्फुरति तनुभृतां विश्वतस्तद्वदात्मा।।६१।।**

---

अथ सर्वान्तरं ब्रह्माह- **अन्तः सर्वौषधीनामिति**।[1] स्पष्टार्थमिदं पद्यम्। श्रुतिरपि। यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेदेत्यादि।।५९।।

अथ ब्रह्मण एकत्वे मूलश्रुतिसहकारिणीमीशावास्योपनिषच्छ्रुतिं संवादयन् आह- **भूतेषु इति**। भूतेषु वहुषु आत्मानं एकं पश्येत्। तथा एकस्मिन्नात्मनि अखिलं समग्रं भूतजातं प्रायः बाहुल्येन चिरकालं प्रपश्येत्[2]। किमिव? पाथस्तरङ्गान्वयवत् पाथश्च तरङ्गाश्च तेषां अन्वयः सम्बन्धस्तद्वत्। [3]अथैकस्मिन्नुदके सहस्रशस्तरङ्गाः दृश्यन्ते तथा सर्वेषु तरङ्गेषु एकं जलमेव दृश्यते। नान्यत् किञ्चित् पदार्थान्तरमनुभूयत इत्यर्थः। एवमेतैरुक्तप्रकारैः एकमद्वितीयं ब्रह्मैव श्रुतिभिरभिहितं निरूपितम्। परन्तु इह किञ्चिन्नाना न विद्यते, वस्तुतस्तु नाना न भवति। परन्तु यः नानेव पश्येत्। स मृत्योर्देहादावहङ्काराभिनिवेशात् पुनर्मृत्युमेवाप्नोति। **श्रुतिरपि**—"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विचिकित्सति"। न विचिकित्सति उत्तमाधमभावेन तारतम्यं न करोति। तथा "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"।।६०।।

अथोक्तं प्रमेयं दृष्टान्तेन दृढीकुर्वन्नाह- **प्राक्पश्चादिति**। इदं गगनमाकाशः कुम्भात्सकाशात् प्राक्पश्चादस्तीति प्रत्यये सत्यपि तनुभृतामित्थमितिप्रकारैर्मिथ्याप्रतीतिः स्फुरति। अथ तदेवाह। इदं घटावच्छिन्नं गगनं घटोत्पत्तौ सत्याम् उदेति उत्पद्यते। तथैव घटे प्रलयं नाशमुपगते घटाकाशो नश्यति। तथा कुम्भे अन्यदेशं प्रदेशान्तरं

---

१. यथा शुद्धं जलं मेघेन वृष्टं तत्तदुपाधिभेदात् नानारसं भवति एवमन्तरात्मा तत्तदन्तःकरणाद्युपाधिभेदात् भेदं प्राप्नोति। अयं भेदः कृतकः न तु सत्यः।

२. आत्मन्येव कल्पितं आत्मनि अधिष्ठितं पश्येत् सन् घटः सन् पट इति सर्वत्रात्मतादात्म्येन पदार्थोपलब्धेः।

३. 'यथा'।

**[1]यावत्पिण्डो गुडस्य स्फुरति मधुरिमैवास्ति सर्वोऽपि तावान्**
**यावान्कर्पूरपिण्डः परिणमति सदामोद एवात्र तावान्।**
**विश्वं यावद्विभाति द्रुमनगनगरारामचैत्याभिरामं**
**तावच्चैतन्यमेकं प्रविकसति यतोऽन्ते तदात्मावशेषम्।।६२।।**

**वाद्यान्नादानुभूतिर्यदपि तदपि सा नूनमाघातगम्या**
**वाद्याघातध्वनीनां न पृथगनुभवः किन्तु तत्साहचर्यात्।**
**मायोपादानमेतत्सहचरितमिव ब्रह्मणाऽऽभाति तद्वत्**
**तस्मिन्प्रत्यक्प्रतीते न किमपि विषयीभावमाप्नोति यस्मात्।।६३।।**

**दृष्टः साक्षादिदानीमिह खलु जगतामीश्वरः संविदात्मा**
**विज्ञातः स्थाणुरेको गगनवदभितः सर्वभूतान्तरात्मा।**
**दृष्टं ब्रह्मातिरिक्तं सकलमिदमसद्रूपमाभासमात्रं**
**शुद्धं ब्रह्माहमस्मीत्यविरतमधुनाऽत्रैव तिष्ठेदनीहः।।६४।।**

---

नीते सति गगनमपि कुम्भेन साकं व्रजति तत्प्रमाणानुकारौ भजति लघीयसि महति च घटे तत्प्रमाणं भवति तथा दीर्घे निम्ने वक्रे वा घटे तत्तदाकारं भजति। तद्वद्विश्वतश्चराचरात् प्राक् पश्चादात्मा वर्तते इति ज्ञात्वापि पूर्ववत्तत्रावस्थाकल्पनं भ्रान्तमेवेत्यर्थः।।६१।।

अथ प्रकारान्तरेण ब्रह्मणः सर्वात्मकत्वमाह—**यावदिति**। स्पष्टार्थम्[2]।।६२।।

अथ पुनरपि ब्रह्मणः सर्वात्मकत्वमाह- **वाद्यादिति**। यद्यपि वाद्यात्सकाशात् नादानुभूतिर्भवति **तदपि** तथापि सा नादानुभूतिः आघातगम्या आघातव्यतिरेकेण नोत्पद्यते। आघात इत्युपलक्षणम्। क्वचिदाघातेन क्वचिद्वादनेन क्वचिद् वायोरास्यपूरणेन नादानुभूतिर्भवति। किंतु साहचर्यादेकसमयावच्छेदेन भवतीति प्रत्यक्षसिद्धम्। तद्वदेतन्मायोपादानं विश्वं ब्रह्मणा साकं सहचरितमेवाभाति यस्मात्कारणात्तस्मिन् ब्रह्मणि प्रत्यक् विपरीतरीत्या प्रतीते[3] अनुभूते सति किमपि प्रातिभासिकं विषयभावं न प्राप्नोति। **अत्र श्रुतिः**- "यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः"। **भाष्यम्**। यथा हन्यमानस्य दुन्दुभेर्बाह्यान् पृथक् स्थितान् शब्दान् ग्रहणाय ग्रहीतुं न शक्नुयात्। किंतु दुन्दुभेर्ग्रहणेन ज्ञानेन सह दुन्दुभ्याघातस्य साहचर्येण शब्दो गृहीतः।।६३।।

अथ निरूपितप्रमेयस्य पर्यवसितमर्थमाह- **दृष्टः**[4] **इति**।एतत्पद्यं स्पष्टार्थमिति न व्याख्यातम्।।६४।।

।।विज्ञानमयकोशप्रकरणं समाप्तम्।।

---

१. 'यावान् पिण्डो'।

२. गुडपिण्डः मधुररसमयः कर्पूरपिण्डः आमोदभरितः तन्मयः। गुडदृष्टान्तः आत्मनः आनन्दरूपत्वे बोध्यः कर्पूरदृष्टान्तः यथा तत्परिणामो धूमः सुगन्धमयः तथा ब्रह्मकार्यं जगत् ब्रह्मैव—सन् घट इत्येव प्रतीतेः चैतन्यमेव द्रुमनगराद्याकारेण भासत इत्यर्थः। अन्ते च सर्वबाधनिश्चये आत्मा परिशिष्यते। बाधस्य आत्मावशेषत्वात्।

३. दारुविकारे दन्तिनि दारुरूपेण गृहीते दन्तिबुद्धिरेव न भवति यथा तथा ब्रह्मरूपेण प्रपञ्चग्रहे प्रपञ्चदृष्टिः लीयते।

४. सर्वप्रपञ्चाधिष्ठानब्रह्मरूपेण जगति विज्ञाते प्रपञ्चभ्रमो नश्यतीत्यर्थः। द्रष्टा च ब्रह्मरूपेणैव तिष्ठतीत्यर्थः।

**इन्द्रेन्द्राण्योः प्रकामं सुरतसुखजुषोः स्याद्रतान्तः सुषुप्ति-**
**स्तस्यामानन्दसान्द्रं पदमतिगहनं यत् स आनन्दकोशः।**
**तस्मिन्नो वेद किञ्चिन्निरतिशयसुखाभ्यन्तरे लीयमानो**
**दुःखी स्याद् बोधितः सन्निति कुशलमतिर्बोधयेन्नैव सुप्तम्।।६५।।**

---

## अथानन्दमयकोशो व्याख्यायते।

तत्रानन्दस्वरूपस्य ब्रह्मणोऽभिव्यक्तिः सुषुप्तौ भवति इति सुषुप्तिस्वरूपमाह- **इन्द्रेन्द्राण्योरिति**। इन्द्रश्चेन्द्राणी च तयोः प्रकामं स्वेच्छया सुरतसुखमभिलषतोः यो रतान्तः सुरतसमाप्तिः सा सुषुप्तिः। यथा लोके शुक्रस्रावोपलक्षिते सुरतान्ते सुखाविर्भावो भवति तथैवेन्द्रेन्द्राण्योः सुषुप्तौ सुखाविर्भावो भवति। तत्रेन्द्रो नाम दक्षिणेऽक्षन्पुरुषः। तथा वामनेत्रस्थं अर्थप्रकाशकं ज्योतिः सेन्द्राणी, तयोर्जाग्रत्यां भ्रूमध्येऽवस्थानं, स्वापकाले तु तस्मादवरुह्य हृद्याकाशे पुरीतति स्थाने तिष्ठतः। तयोः सुरतप्रसङ्गः स्वप्नावस्था, सुरतान्तः सुषुप्तिः, तस्यां यदानन्दसान्द्रं पदं स्थानं स एवानन्दकोशः। तस्मिन्सुषुप्त्युपलक्षित आनन्दकोशे जीवः किञ्चिन्न वेद न जानाति। कुत इत्याशङ्क्याह- निरतिशयसुखाभ्यन्तरे लीयमानः, न विद्यते अतिशयो यस्मात् तत् निरतिशयं सुखं परमानन्दस्तत्र लीयमानो लुप्ताहङ्कारत्वात्। अथ तस्य सुखस्य निरतिशयत्वं प्रकटयन्नाह— **दुःखी स्यादिति**। यतो बोधितः बलात्कारेण जाग्रद्दशां प्रापितः सन् दुःखी भवति दुःखं प्राप्नोति। भोजनादिविषयसुखभोगार्थमपि बोधितो दुःखं प्राप्नोति। तस्माद्विषयसुखापेक्षया आत्मसुखमेव निरतिशयमित्यर्थः। यस्मादेवं तस्मात्कारणात् कुशलमतिर्ज्ञाता पुरुषः सुप्तं सुषुप्त्यवस्थं पुरुषं नैव बोधयेत्। निद्राभङ्गं न कुर्यात्। श्रुत्युक्तप्रत्यवायश्रवणात्। एवमिन्द्रेन्द्राणीसुरतविषये जगन्मिथ्यात्वप्रकरणे **बह्व्यः शातपथ्यः** श्रुतयः [1]**सभाष्याः** सम्यगुदाहृताः सन्ति। **अथ स्वप्नसुषुप्तिविषय**[2]**श्रुतिः**। "अथ हैतत्पुरुषः स्वपिति नाम गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः स यत्रैतत् स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेव एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते"। **भाष्यम्**। **अथ हेति**- यदा एतदयं पुरुषः स्वपिति निद्रां करोति तदा प्राणः क्षुत्पिपासाप्रवर्तकः गृहीत आकर्षित एव भवति। वाक् चक्षुः श्रोत्रमपि गृहीतं भवति स्वस्वविषयग्रहणाशक्तत्वात्। तथा सङ्कल्पविकल्पात्मकं मनोऽपि गृहीतं भवति अथेत्यनन्तरं एतदयं जीवः स्वप्न्यया स्वप्नावस्थाया चरति ह इति निश्चयेन अस्य ते लोकाः क्रीडास्थानानि तदुतेव स तत्क्षण एव महाराजो भवति तथा तदुतेव तत्क्षणादेव महाब्राह्मणः श्रोत्रियो भवति उतेवोच्चावचं उत्कृष्टा[3]पकृष्टादियोनिं गच्छति। अत्र दृष्टान्तमाह- यथा महाराजः जानपदान् स्वप्रजाः गृहीत्वा आक्रम्य स्वे जनपदे [4]प्राज्यसाम्राज्ये यथाकामं यथेच्छं परिवर्तते व्यापारं करोति एवमेव एष जीवः प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते। **तथा** "अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते"। **भाष्यम्**। अथ स्वप्नावस्थातिक्रमानन्तरं यदा सुषुप्त्यवस्थां प्राप्तो भवति। अथ तदुपलक्षणमाह— **यदेति**। यदा न कस्यचन वेद कस्यापि किञ्चिदपि

---

१. 'संभाष्या नाम'। २. 'विषयिणी'।
३. 'उच्चापकृष्टयोनिं'। ४. 'प्राप्त'।

**सर्वे नन्दन्ति जीवा अधिगतयशसा गृह्णता चक्षुरादीन्**
**अन्तः सर्वोपकर्त्रा बहिरपि च सुषुप्तौ यथा तुल्यसंस्थाः।**
**एतेषां किल्बिषस्पृग्जठरभृतिकृते यो बहिर्वृत्तिरास्ते**
**त्वक्चक्षुःश्रोत्रनासारसनवशमितो याति शोकं च मोहम्।।६६।।**

---

न जानाति, तदा हिताः सुखकारिण्यो द्वासप्ततिः सहस्राणि नाड्यः हृदयात्सकाशात् अभि समन्ततः पुरीततमेकान्तस्थलं तस्मादभितः प्रतिष्ठन्ते आवृत्य स्थिताः भवन्ति। ताभिर्नाडीभिः प्रत्यवसृप्य आवरणं विधाय पुरीतति एकान्तस्थले शेते निश्चेष्टतया तिष्ठति। अत्र दृष्टान्तमाह- **स यथेति**। यथा कुमारो बालः, महाब्राह्मणः श्रोत्रियो वा अतिघ्नीं स्थूलसूक्ष्मप्रपञ्चनाशकर्त्रीं आनन्दस्य पदवीं गत्वा शयीत एवम्। अनेन सर्वेषां जीवानां सुषुप्तिसुखे तारतम्यं नास्तीति सूचितम्। एवमेवोक्तप्रकारेण पुरीतति शेते।।६५।।

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह- **सर्वे नन्दन्तीति**। अधिगतेन प्राप्तेन यशसा ब्रह्मणा कृत्वा सर्वे जीवा नन्दन्ति परमसुखं प्राप्नुवन्ति। आत्मसाक्षात्कारे वर्णाश्रमादयः प्रयोजका न भवन्ति। किंभूतेन ब्रह्मणा? चक्षुरादीनन्तर्गृह्णता आक्रमता। पुनः किंभूतेन? बहिरपि च सर्वोपकर्त्रा इन्द्रियद्वारा विषयभोगदानेनारादुपकारकेण। किंभूताः जीवाः? तुल्यसंस्था आत्मप्राप्तौ तुल्या संस्था संस्थानं येषां ते। जातिप्रयुक्ततारतम्यवर्जिता इत्यर्थः। अत्र दृष्टान्तमाह- **सुषुप्ताविति**। सुषुप्तौ यथाऽऽत्माकारान्तःकरणवृत्तौ[१] सत्यां सकलजीवानां सुखतारतम्यं नास्ति तद्वदात्मप्रतीतावपि। अथैतेषां जीवानां मध्ये यः जठरभृतिकृते अन्नादिविषयभोगार्थं बहिर्वृत्तिरास्ते स किल्बिषस्पृक् किंल्बिषं दुःखं स्पृशति स तथा। अथैतदेव प्रकटयन्नाह- **त्वगित्यादि**। त्वक्चक्षुःश्रोत्रनासारसनवशमितः इन्द्रियाधीनत्वं प्राप्तः सन् शोकं मोहं च याति, विषयाप्राप्तौ शोकं, प्राप्तौ च मोहमित्यर्थः। **श्रुतिः**। "सर्वे नन्दन्ति यशसा गतेन सभासाहेन सख्या सखायः। किल्बिषस्पृत्[२] पितुषणिर्ह्येषामरं हितो भवति वाजिनाय"।। (ऋ. १०-७१-१०) अत्र प्रथममाचार्याभिमत**मध्यात्मरीत्या रावणभाष्यम्**। "न तस्य प्रतिमाऽस्ति तस्य नाम महद्यश" इति श्रुतेः यशसा परमात्मना आगतेन प्राप्तेन सर्वे जीवा नन्दन्ति परमानन्दं प्राप्नुवन्ति। यथा नृपशुपक्षिप्रभृतयः सर्वे जीवाः सुषुप्तिसमये परमसुखिनो भवन्ति, तद्वदात्मप्राप्तावित्यर्थः। किम्भूतेन यशसा? सभासाहेन। सभांस्तेजोरूपान् अर्थप्रकाशकान् चक्षुरादीन् सहते आक्रमते, स तथा। "गृहीता वाग् गृहीतं चक्षु"रिति श्रुतेः। पुनः कथंभूतेन? सख्या उपकारकेणापिं विषयभोगनिमित्तत्वेनेत्यर्थः। किंभूता जीवाः? सखायः समानज्ञानाः सदृशसुखानुभवाः। अथैषां जीवानां मध्ये यः पितुषणिः पितुः इत्यन्ननाम पितुं[३] सुनोति स पितुषणिः केवलमुदरम्भरः स किल्बिषस्पृत् दुःखभागी भवति। हि यस्मात् कारणात् अरमत्यर्थं वाजिनाय इन्द्रियवीर्याय हितः तृप्तो[४] भवति। **अथै [त्रै] तदुक्तं भवति**। सुखशब्दव्यपदेश्यं आत्मसुखमेव। इन्द्रियसुखं तु दुःखपक्षान्तर्भूतमित्यर्थः।

**अथ अधिदैवरीत्या सायणभाष्यकारः**। सर्वे नन्दन्ति इति[५] सखायः समानख्यानाः समानज्ञानाः सर्वे मनुष्याः सभ्याः सभासाहेन सभाम् सोढुं शक्नुवता सख्या ऋत्विजा सखिभूतेन[६] यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टा भवन्ति। स हि स एव सोमः एषां जनानां किल्बिषस्पृत् यः स्वस्मात् अन्यः पुरुषः श्रेष्ठतामश्नुते स किल्बिषं भवति बाध्यत्वेन, यथा पापं सदाचारैर्बाधितव्यं भवति। तद्वत् पापरूपस्य शत्रोर्बाधकः। यद्वा यज्ञे साध्वनुप्रवचनाकरणेन यत्किञ्चित् किल्बिषमेषां जायते तत् यो बाधते स

---

१. अविद्यावृत्तौ इत्यर्थः सुषुप्तौ अन्तःकरणलयश्रवणात्। २ 'स्पृक्'।
३. 'पितुः'। ४. 'तत्परो भवति'। ५. 'इति' नास्ति। ६. 'प्रतिभूतेन'।

**जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नान्विधास्यन्**
**श्राम्यत्सर्वेन्द्रियौघोऽधिगतमपि सुखं विस्मरन् याति निद्राम्।**
**विश्रामाय स्वरूपे त्वतितरसुलभं तेन चातीन्द्रियं हि**
**सौख्यं सर्वोत्तमं स्यात्परिणतिविरसादिन्द्रियोत्थात् सुखाच्च।।६७।।**
**पक्षावभ्यस्य पक्षी जनयति मरुतं तेन यात्युच्चदेशं**
**लब्ध्वा वायुं महान्तं श्रममपनयति स्वीयपक्षौ प्रसार्य।**

---

किल्बिषस्पृत् तथा त्वं पितुषणिः पितुरित्यन्ननाम दक्षिणा वा तमनेन सोमेन सुनोति यजमानः। किञ्च हितः पात्रेषु निहितः सोमः वाजिनाय इन्द्रियवीर्याय तत्कर्तुं अरमलं पर्याप्तः समर्थो भवति।।६६।।

अथ परमानन्दापेक्षया क्षुद्रानन्दानामतितुच्छत्वमस्तीति अनुभवैकसिद्धत्वेन निरूपयति- **जाग्रत्यामिति**। जाग्रत्यां जाग्रदवस्थायां अन्तरात्मा जीवः विषयसुखनिमित्तं अनेकयत्नान् विधास्यन् वर्तते। तत्र विद्वान् देशे पर्यटनात् दुःशीलप्रभुणा[१] भर्त्सनात्, शूरस्तु संग्रामादिषु प्राणसमर्पणात्, चोरस्तु देहहिंसापर्यवसन्नकर्मकरणात्, तथैव गारुडादिविद्योपजीविनः एवं सर्वोऽपि जनः स्वस्वोद्यमानतिक्रमेण विषयसुखाय यतते। तत्र तत्र श्राम्यत्सर्वेन्द्रियौघः शिथिलीभूतकरचरणवाग्व्यापारः पुमान् विधिवशात्प्राप्तमपि विषयं विस्मरन् विश्रामाय हृद्याकाशावस्थिते स्वात्मरूपे क्षणं निद्रां याति। अप्राप्ते विषये समुद्विग्नस्य विश्रान्त्यै निद्रैव शरणमित्यर्थः। तेन कारणेन इन्द्रियोत्थात् सुखादतीन्द्रियसुखं सर्वोत्तमम् सर्वापेक्षया श्रेष्ठम्। तथा अतितरसुलभं विषयसुख-प्रयासापेक्षयाऽल्पप्रयाससाध्यमित्यर्थः। तथा अतिप्रयाससाध्यं किमपि विषयसुखं क्षणभङ्गुरमन्ते च विरसमित्याह। किंभूतादिन्द्रियसुखात्? परिणतिविरसात् परिणामे दुःखप्रदात्।।६७।।

अथात्र श्रुत्युक्तं दृष्टान्तमुपन्यस्यन् उक्तार्थमेव दृढीकुर्वन्नाह-- **पक्षावभ्यस्येति**। पक्षी पक्षावभ्यस्य व्यापारयित्वा मरुतं वायुमुत्पादयति। तेन वायुनोच्चदेशं याति। तत्रोच्चैस्तरामाकाशदेशे महान्तं वायुं लब्ध्वा पक्षौ प्रसार्य प्राक्तनं श्रममपनयति त्यजति। एवं प्रकृते दुःसंकल्पैस्तद्विपरीतैर्विकल्पैश्च विषयं अनु लक्षीकृत्य एतच्चित्तं कदर्थीकृतं ततः खिन्नं सत् हस्तपादान् प्रसार्य विश्रामहेतोश्चिरं स्वपिति। **अत्र श्रुतिः**। "तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सँल्लयायैव ध्रियत एवमेवायं पुरुषः एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति"। **भाष्यम्**। यथा यद्वदस्मिन् दृक्प्रसारोपलक्षिते आकाशे श्येनः पक्षिकुलहन्ता पतत्रिविशेषः, सुपर्णो गृध्रादिः विपरिपत्य उच्चैरुत्पत्य[२] तत्र श्रान्तः सन् पक्षौ संहत्य प्रसार्य संलयाय विश्रान्तये ध्रियते प्रयत्नं करोति, एवमेवायं पुरुषः एतस्माज्जाग्रत्प्रयासात् अन्ताय उपरमाय धावति तूर्णं स्वमूलमाश्रयते। तत्र सुषुप्तः सन् जाग्रद्दशायामिव न कञ्चन कामं विषयोद्देशेनेच्छां करोति। न वा स्वप्नं पश्यति। अथ हस्तपादान् प्रसार्येत्यत्र तथा बोधितः सन् दुःखी स्यादित्यत्र च **श्रुतिः**- "तं नायतम्बोधयेदित्याहु"रिति। **भाष्यम्**। तस्मात्कारणादायतं विस्तारितहस्तपादाद्यं प्रसुप्तं न बोधयेत्। जागरं न प्रापयेत् इति श्रुतय[३] आहुः। तथाचोक्त**मग्निरहस्ये दशमकाण्डे**— "तस्मादु ह स्वपन्तं पुरुषं धुरेव

---

१. 'प्रभुसमर्जनात्'। २. 'उत्प्लुत्य'। ३. 'श्रूयत इत्याहुः'।

**दुःसङ्कल्पैर्विकल्पैर्विषयमनु कदर्थीकृतं चित्तमेतत्**
**खिन्नं विश्रामहेतोः स्वपिति चिरमहो हस्तपादान् प्रसार्य।।६८।।**

**आश्लिष्यात्मानमात्मा न किमपि सहसैवान्तरं वेद बाह्यं**
**यद्वत्कामी विदेशात्सदनमुपगतो गाढमाश्लिष्य कान्ताम्।**
**यात्यस्तं तत्र लोकव्यवहृतिरखिला पुण्यपापानुबन्धः**
**शोको मोहो भयं वा समविषममिदं न स्मरत्येव किञ्चित्।।६९।।**

**अल्पानल्पप्रपञ्चप्रलय उपरतिश्चेन्द्रियाणां सुखाप्ति-**
**र्जीवन्मुक्तौ सुषुप्तौ त्रितयमपि समं किन्तु तत्रास्ति भेदः।**

---

सहसा न बोधयेन्नैते देवते मिथुनीभवन्त्यौ हिनसानी''ति। **भाष्यम्**। तस्मात्कारणात् उ ह नियमेन स्वपन्तं पुरुषं धुरेव सहसा न बोधयेत्। यत एते देवते इन्द्रेन्द्राण्यौ मिथुनीभवन्त्यौ सुरतसुखासक्तौ न हिनसानीति न हन्मीति मत्वा न बोधयेदित्यर्थः। अनया निद्राभङ्गकर्त्तुः प्रत्यवायोऽपि दर्शितः।।६८।।

अथ सुषुप्तिपरिणामावस्थामाह- **आश्लिष्येति**। आत्मा जीवः आत्मानं परमात्मानं सहसा अकस्मादाश्लिष्य आलिङ्ग्य एकीभूय किमप्यान्तरं सूक्ष्मदेहानुभूतं स्वप्नं, बाह्यं स्थूलदेहानुभूतं न वेद न जानाति। सर्ववृत्तीनां लीनत्वात्। अथात्र दृष्टान्तमाह-**यद्वदिति**। यद्वद्विदेशात्सदनं स्वगृहमुपगतः कामी चिरकालं प्रोषितत्वात् कामातुरः कान्तां कमनीयां स्त्रियं गाढमत्यौत्कण्ठ्येनाश्लिष्यालिङ्ग्य बाह्यमान्तरं वा किमपि विषयान्तरं न वेद तद्वदित्यर्थः। **अत्र श्रुतिः**। ''तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूपं। तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् एवमेवायं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्''। **भाष्यम्**। पूर्वश्रुतौ योऽस्य परमो लोको यत्र सुप्तो न कञ्चन कामं कामयते इत्याद्युक्तं तद् वा अस्य सुषुप्तावस्थां प्राप्तस्य पुरुषस्य रूपं प्रथमत आत्मकामं आत्मसुखान्यसुखनिरपेक्षम्, आप्तकामं सुखप्राप्तौ अवाप्तसकलकामं ततः अकाममस्तमितकामं भवति। एवं शारीरः शरीरावच्छिन्नः परमात्मा प्राज्ञेन जीवात्मना परिष्वक्तः आश्लिष्टः सन् न वेद किञ्चनान्तरं बाह्यं वा। अत्र दृष्टान्तमाह-**तद्यथेति**। प्रियया प्रेमास्पदीभूतया स्त्रिया परिष्वक्तः पुमान् इति स्पष्टम्।।६९।।

इदानीं मुक्तिसुषुप्त्योर्लक्षणसाम्येऽपि वैलक्षण्यं दर्शयति-**अल्पानल्पेति**। जीवन्मुक्तौ सुषुप्तौ च एतत् त्रितयं समं तुल्यम्। तत्किं त्रितयं? अल्पानल्पप्रपञ्चप्रलयः सूक्ष्मासूक्ष्मयोः प्रपञ्चयोः प्रलयः प्रकृष्टमात्यन्तिको लयः। तथेन्द्रियाणामुपरतिः परमो विलयः ''गृहीत एव प्राणो गृहीता वागि'' त्यादिपूर्वमेवोक्तम्। तथा सुखाप्तिः निरतिशयसुखप्राप्तिः। एवं चेत्तर्हि सुषुप्तिरेव मुक्तिरास्तां नाम। कथं पुनर्मुक्तिसाधनार्थं प्रयास इत्याशङ्क्याह-**किन्त्विति**।किन्तु तत्र सुषुप्तिमुक्त्योर्मध्ये भेदोऽस्ति। तमेवाह- **प्रसुप्तः** सुषुप्तिं प्राप्तः पुरुषः प्राक्संस्कारात्पुनरपि परावृत्तिं एति। तथा यः प्रबुद्धः प्रबोधं ज्ञानं प्राप्तः निरन्तरं मुक्तः स नश्यत्संस्कारजातः सन् पुनर्नावर्तते आवृत्तिं न प्राप्नोति। अयमर्थः। यद्यपि सुषुप्तौ सर्वप्रलयो भवति तथापि तस्याः

**प्राक्संस्कारात्प्रसुप्तः पुनरपि च परावृत्तिमेति प्रबुद्धो**
**नश्यत्संस्कारजातो न स किल पुनरावर्तते यश्च मुक्तः।।७०।।**

**आनन्दान् यश्च सर्वाननुभवति नृपः सर्वसम्पत्समृद्धः**
**तस्यानन्दः स एकः स खलु शतगुणः सम्प्रदिष्टःपितृणाम्।**
**आदेवब्रह्मलोकं शतशतगुणितास्ते यदन्तर्गताः स्युः**
**ब्रह्मानन्दः स एकोऽस्त्यथ विषयसुखान्यस्य मात्रा भवन्ति।।७१।।**

**यत्रानन्दाश्च मोदाः प्रमुद इति मुदश्चासते सर्व एते**
**यत्राप्ताः सर्वकामाः स्युरखिलविरमात्केवलीभाव आस्ते।**

---

दैनन्दिनत्वादाकस्मिकत्वाच्च प्राक् पूर्वं जाग्रति तदुत्पन्नाः संस्काराः बीजरूपेण तिष्ठन्ति। तैरात्मा जीवः आश्लिष्टः पुनरावर्तते। मुक्तौ तु शनैर्ज्ञानयोगात्सर्वसंस्कारनाशो भवति, तेन न स पुनरावर्तते।।७०।।

अथ सकलविषयसुखापेक्षया आत्मसुखस्य निरतिशयत्वं युक्त्या निरूपयति— **आनन्दानिति**। यः सर्वसम्पत्समृद्धो नृपः सर्वानन्दाननुभवति। दरिद्राणामेकैकविषयप्राप्तौ एक एवानन्दो भवति, मनागधिकानामानन्दद्वयं, एवमुत्तरोत्तरं यस्य यावतां विषयाणां प्राप्तिस्तावन्तस्तस्यानन्दा भवन्ति। एवं सर्वविषयप्राप्तिर्नृपस्यास्ति। अतस्तस्य सर्वानन्दभोगः। तथा च सर्वविषयानन्दा यत्र एकीभवन्ति स एको राज्ञ आनन्दः। स खल्विति निर्धारणे। शतगुणः सन् पितृणामानन्दः। स एवमुत्तरोत्तरं देवलोकमारभ्य ब्रह्मलोकपर्यन्तं ये शतगुणिताः आनन्दा भवन्ति ते सर्वेऽपि यदन्तर्गताः अन्तर्भूताः स्युः स एको ब्रह्मानन्दोऽस्ति। अथास्य ब्रह्मानन्दस्य विषयसुखानि पूर्वोक्तानि क्षुद्रा मात्राः अंशा भवन्ति। [१]तथाऽऽत्मैवोपाधिवशेन पृथक् क्षुद्रत्वेन भासते। तथैव परमानन्दोऽपि विषयसुखाकारेणेत्यर्थः। **अत्र श्रुतिः**- "स यो मनुष्याणां राद्धः समृद्धो भवति अन्येषामधिपतिः सर्वैर्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणां परम आनन्दः अथ ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्द" इत्यादि। तथा- "अथैष ब्रह्म लोकस्सम्राडिति हैनमुवाचैषास्य परमा सम्पदेषोऽस्य परमो लोकः एषोऽस्य परम आनन्दः अथैतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति"। **भाष्यम्**। यो मनुष्याणां मध्ये राद्धः सिद्धः [२]समृद्धः प्राप्तसर्वविषयो भवति। अन्येषां मनुष्याणां अधिपतिर्नियन्ता सर्वैर्मानुष्यकैर्मनुष्यप्रसिद्धैः कामैः प्रार्थनीयपदार्थैः सम्पन्नतमः तस्य आनन्दः मनुष्याणां परमानन्दः। अथ ये शतं मनुष्याणामानन्दाः स एकः पितृणामानन्दः जितः [३]सर्वो लोको यैस्ते जितलोकास्तेषां पितृणामित्यर्थः। एवमुत्तरोत्तरं कर्मदेवाद्यानन्दाः स्युः। अथैष ब्रह्मलोक[४] इति ह इति निश्चित्य एनं जनकं प्रति याज्ञवल्क्य इत्युवाच। इतीति किम्? भो सम्राड् जनक, एष एव उक्तप्रकार आनन्दः ब्रह्मलोकः ब्रह्मैव लोकः प्राप्यस्थानं यस्मिन् स ब्रह्मलोकः। अथास्य मुमुक्षोः पुरुषस्य एषा परमा उत्कृष्टा निरतिशया सम्पत् परमैश्वर्यम्। तथास्य एष परमो लोकः पूर्वोक्तः। तथा एषोऽस्य परम आनन्दः। **अथैतस्यैवेति**। अन्यानि आत्मबहिर्मुखानि भूतानि जीवजातानि एतस्य निरूपितस्य परमानन्दस्य मात्रामेकदेशमुपजीवन्ति। ये भूतानां क्षुद्रानन्दास्ते परमानन्दस्यैवांशाः, परमानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात्।।७१।।

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह— **यत्रानन्दा इति**। यत्र यस्मिन् परमानन्दे सर्वे आनन्दाः मनुष्यानन्दाः तथा पितृणां [५]प्रमुदः, आजानदेवानां एवमुत्तरोत्तरं सर्वेऽपि आसते वर्तन्ते। तथा यत्र यस्मिन् परमानन्दे सर्वे कामाः सत्यलोकादिप्राप्तिरूपा आप्ताः प्राप्ताः स्युः। तथा यत्र अखिलविरमात् स्थूलसूक्ष्मप्रपञ्चविलयात्

---

१. 'यथा'। २. 'साम्राज्यसमृद्धः' । ३. 'अर्वाक्'।
४. 'लोक प्राप्यवसानं यस्मिन् स ब्रह्म'। ५. मोदाः, अग्रे आजानदेवानां प्रमुदः।

**मां तत्रानन्दसान्द्रे कृधि चिरममृतं सोम पीयूषपूर्णां**
**धारामिन्द्राय देहीत्यपि निगमगिरो भ्रूयुगान्तर्गताय।।७२।।**

**आत्माऽकम्पः सुखात्मा स्फुरति तदपरा त्वन्यथैव स्फुरन्ती**
**स्थैर्यं वा चञ्चलत्वं मनसि परिणतिं याति तत्रत्यमस्मिन्।**
**चाञ्चल्यं दुःखहेतुर्मनस इदमहो यावदिष्टार्थलब्धिः**
**तस्यां यावत्स्थिरत्वं मनसि विषयजं स्यात्सुखं तावदेव।।७३।।**

**यद्वत्सौख्यं रतान्ते निमिषमिह मनस्येकताने रसे स्यात्**
**स्थैर्यं यावत्सुषुप्तौ सुखमनतिशयं तावदेवाथ मुक्तौ।**
**नित्यानन्दः प्रशान्ते हृदि तदिह सुखस्थैर्ययोः साहचर्यं**
**नित्यानन्दस्य मात्रा विषयसुखमिदं युज्यते तेन वक्तुम्।।७४।।**

---

केवलीभाव आस्ते। भो सोम षोडशकलरूपहिरण्यगर्भ![1] मां जीवदशापन्नं तत्र सान्द्रानन्दे चिरं अमृतं कृधि कुरुष्व। तथा इन्द्राय जीवात्मने पीयूषपूर्णां धारां देहि। मुक्तानां सोमचक्रादमृतद्रावो भवतीति योगशास्त्रे प्रसिद्धम्। किंभूतायेन्द्राय? भ्रूयुगान्तर्गतायेति। एवमुक्तप्रमेयं निगमगिरः प्राहुः। **अत्र श्रुतिः सप्तमाष्टके।** "यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव"। **भाष्यम्।** कामस्य वासनारूपस्य मनसः कामाः यत्राप्ताः प्राप्ता भवन्ति तत्र माममृतं कृधि। तदेवाह—भो इन्दो चन्द्ररूप परमात्मन् इन्द्राय सकलेन्द्रियनियन्त्रे जीवाय अमृतं परिस्रव।।७२।।

नन्वतीन्द्रियं सुखं हि परमानन्दः, तथा विषयसुखं इन्द्रियजन्यं, एवमुभयोर्महति वैषम्येऽनुभवसिद्धे सति कथमुक्तं एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति इत्याशङ्क्य श्लोकद्वयेनोत्तरयति—**आत्मेति**। आत्मा तावदकम्पः कम्परहितः तथा सुखात्मा सुखस्वरूपोऽपि। "विज्ञानमानन्दं ब्रह्मे" ति आत्मनः आनन्दस्वरूपत्वं श्रुतिसिद्धं, सुषुप्त्यवस्थायामनुभवसिद्धं चान्तः[2] स्फुरतीत्युक्तम्। तथा तदपरा तद्विलक्षणा माया अन्यथा उक्ता तद्विपरीतस्वभावा सकम्पा दुःखरूपा चात्मसहचरितैव स्फुरति पूर्ववदनुभवसिद्धाऽस्ति। एवं तत्रत्यं तयोरात्ममाययोरनुगतं स्थैर्यं चञ्चलत्वं वाऽस्मिन्मनसि परिणतिं परिणामं याति। तस्य चिदचिद्ग्रन्थिस्वरूपत्वात्। अहो इति सम्बुद्धौ। यावदिष्टार्थलब्धिरभीष्टविषयप्राप्तिस्तावत्प्रयत्नशताकुलस्य मनसश्चाञ्चल्यं इदं दुःखहेतुर्भवति मायापरिणामत्वात्। अथ तस्यां विषयप्राप्तौ सत्यां कृतकृत्यत्वेन मनसि यावत् स्थिरत्वं तावदेव विषयजं सुखं स्यात्।।७३।।

अथात्र द्वितीयश्लोकेन दृष्टान्तद्वयमाह—**यद्वदिति**। यथा इहास्मिन् अनुभवसिद्धरतान्ते शृङ्गाररसे मनस्येकताने एकाग्रे सति निमिषं निमिषमात्रं सुखं भवति। तथा सुषुप्तौ मनसि यावत्स्थैर्यं तावदेवानतिशयं सुखम्। अथ मुक्तावपि हृदि प्रशान्ते सति नित्यानन्दो भवति। तत्तस्मात्कारणात् इह सुखस्थैर्ययोः साहचर्यं सहचरितत्वं अनुभवसिद्धम्। तेन कारणेनेदं विषयसुखं नित्यानन्दस्य मात्रेति वक्तुं युज्यते।।७४।।

।।इत्यानन्दमयकोशप्रकरणम्।।

---

१. 'हिरणमयरूप'।

२. 'अतः'।

**श्रान्तं स्वान्तं स[1] बाह्यव्यवहृतिभिरिदं ताः समाकृष्य सर्वा-**
**स्तत्तत्संस्कारयुक्तं ह्युपरमति परावृत्तमिच्छन्निदानम्।**
**[2]स्वप्नान्संस्कारजातप्रजनितविषयान्स्वाप्नदेहेऽनुभूतान्**
**प्रोज्झ्यान्तः प्रत्यगात्मप्रवणमिदमगाद् भूरि विश्राममस्मिन्।।७५।।**

**स्वप्ने भोगः सुखादेर्भवति ननु कुतः साधने मूर्च्छमाने**
**स्वाप्नं देहान्तरं तद्व्यवहृतिकुशलं नव्यमुत्पद्यते चेत्।**
**तत्सामग्र्या अभावात् कुत इदमुदितं तद्धि साङ्कल्पिकं चेत्**
**तत्किं स्वाप्ने रतान्ते वपुषि निपतिते दृश्यते शुक्रमोक्षः।।७६।।**

---

## अथ जगन्मिथ्यात्वप्रकरणमुच्यते

तत्र प्रपञ्चमिथ्यात्वं प्रथमतः स्वप्नदशानिदर्शनेन दर्शयन् स्वप्नरूपं निरूपयति—**श्रान्तं स्वान्तमिति**। इदं स्वान्तं मनः बाह्यव्यवहृतिभिः स्त्रीपुत्रादिपोषणप्रभृतिभिः श्रान्तं सत् उपरमति विरमति विरतव्यापारं भवति। किं कृत्वा? ताः सर्वाः बाह्येन्द्रियार्थव्यवहृतीः समाकृष्य। यद्वा इदन्ताः इन्द्रियैः कृत्वा इदन्ताकारेण भासमाना विषयास्तान् अन्तः समाकृष्य। एवं यद्यपि बाह्यव्यवहारास्त्यक्ताः तथापि दृढानुसन्धानोत्पन्नतत्तत्संस्कारयुतं सत्परावृत्तम्। अथ किमुद्दिश्य परावृत्तमित्याशङ्क्याह-निदानं इच्छन्[3] निदानं स्वीयमादिकारणं आत्मस्वरूपं इच्छन्। यथा बहुदेशाटनैः खिन्नः पान्थः विश्रान्त्यै स्वगेहगमनमिच्छति तद्वदित्यर्थः। **अत्र श्रुतिः**। "अथ हैतत्पुरुषः स्वपिति नाम तत् गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन" इति। ततः स्मरणाधिरूढसंस्कारजातेन प्रजनितविषयान् स्वप्नान् सूक्ष्मदेहेऽनुभूतान् प्रोझ्य त्यक्त्वा प्रत्यगात्मप्रवणं परमात्मसंयोगोन्मुखं [4]तदस्मिन्नात्मनि विश्रामं विश्रान्तिमगात् अगच्छत्। यथा महद्भूपदर्शनाय कश्चित् प्रवृत्तः सामन्तो बहिर्द्वारि सेनासन्नाहं त्यक्त्वा द्वित्रैः पार्षदैः सह विशति। तथान्तर्द्वारि तान्यपि त्यक्त्वा केवलं स्वरूपेणैव समक्षं गच्छति तद्वदित्यर्थः। अनेन मनसः प्रथमतः सुषुप्तिरेवोद्दिष्टा। स्वप्नावस्था तु विधिवशादन्तराऽऽन्त-रालिकैवोत्पन्नेत्युक्तम्।।७५।।

अथ पूर्वपक्षमुद्घाट्य दृढीकुर्वन् श्लोकमाह—**स्वप्ने भोग इति**। ननु [5]आशङ्किते साधने भोगसाधने स्थूलशरीरे ज्ञानकर्मेन्द्रियैः सह मूर्च्छमाने निश्चेष्टतया पतिते सति स्वप्ने स्वप्नावस्थायां सुखादेः सुखदुःखसाधकविषयभोगः कुतः कस्माद् भवति इति। अथ चेदेवं ब्रूषे स्वाप्नं स्वप्नसम्बन्धि देहान्तरं तद्व्यवहृतिकुशलं स्वाप्नविषयभोगकुशलं नव्यं नवीनं उत्पद्यते; तेन स्वाप्नव्यवहारोऽस्तु किं प्राक्तनेन शरीरेणेति। तदपि दूषयति—**तदिति**। तत्सामग्र्याः तस्य स्वप्नदेहस्य या सामग्री पित्रोः शुक्रशोणितरूपा तस्या अभावात् कुतः कस्मात्सामग्र्यन्तरादिदमुदितमुत्पन्नम्? असद्रूपं **भूतावेशन्यायेन** उत्पन्नमिति चेन्न, स्वाप्ने रतान्ते स्वाप्नस्त्रीभोगान्ते शुक्रद्रावः स्वाप्ने शरीर एवास्तु। स निपतिते वपुषि निश्चेष्टे स्थूलशरीरे किमिति दृश्यते? मृषारूपस्य देहस्य सुरतान्तोऽपि मृषैवास्तु। सुरतान्ताभिव्यञ्जकः शुक्रद्रावः प्रातः सत्यत्वेन कथमुपलभ्यत इत्यर्थः।।७६।।

---

१. 'स्व'। २. 'स्वाप्नान्'।
३. 'इच्छत्'। ४. तत् = मनः। ५. 'इत्याशङ्कते'।

**भीत्या रोदित्यनेन प्रवदति हसति श्लाघते नूनमस्मात्**
**स्वप्नेऽप्यङ्गेऽनुबन्धं त्यजति न सहसा मूर्च्छितेऽप्यन्तरात्मा।**
**पूर्वं ये येऽनुभूतास्तनुयुवतिहयव्याघ्रदेशादयोऽर्था-**
**स्तत्संस्कारस्वरूपान्सृजति पुनरमूञ्श्रित्य संस्कारदेहम्।।७७।।**

**सन्धौ जाग्रत्सुषुप्त्योरनुभवविदिता स्वाप्यवस्था द्वितीया**
**तत्रात्मज्योतिरास्ते पुरुष इह समाकृष्य सर्वेन्द्रियाणि।**
**संवेश्य स्थूलदेहं समुचितशयने स्वीयभासाऽन्तरात्मा**
**पश्यन् संस्काररूपानभिमतविषयान् याति कुत्रापि तद्वत्।।७८।।**

**रक्षन्प्राणैः कुलायं निजशयनगतं श्वासमात्रावशेषै-**
**र्मा भूत्तत्प्रेतकल्पाकृतिकमिति पुनः सारमेयादिभक्ष्यम्।**

---

दूषणान्तरमाह—**भीत्येति**। स्वाप्नोत्पन्नया दस्युव्याघ्रादिभीत्या अनेन स्थूलदेहेन कृत्वैव रोदिति साट्टहासं रोदनं करोति, न स्वाप्नशरीरेणेत्यर्थः। न केवलं रोदिति, अनेनैव प्रवदति यत्किञ्चिज्जल्पति तथा हसति, श्लाघते अहं कृतार्थ इति। एवं पूर्वपक्षमनूद्य प्रागुक्तं पर्यवसितमर्थमाह-**नूनमिति**। नूनं निश्चयेन अस्माद्धेतोः अन्तरात्मा स्वप्नेऽप्यङ्गे स्थूलदेहे मूर्च्छितेऽपि सहसा अनुबन्धं सम्बन्धं न त्यजति। अथ सोऽनुबन्धः पूर्वं त्वयैव निराकृतः, कथमिदानीं अनुबन्धः प्रोच्यते इत्याशङ्क्याह-**पूर्वमिति**। पूर्वमनादिजाग्रदवस्थासु ये ये अर्थाः पदार्थाः अनुभूतास्ते के? तनुयुवतिहयव्याघ्रदेशादयः तनुः शरीरं, युवतिः स्त्री स्वकीया परकीया वा, हयोऽश्वः प्रयाणनिमित्तं, व्याघ्रो भयनिमित्तं, देशः काश्यादिप्रदेशः आदिशब्दादन्येऽपि विषयास्तेषां पूर्वमनुभूतानां यः संस्कारः स एव रूपं स्वरूपं येषां ते तथाविधानमून् शरीरादिविषयान् तदनुरूपानेव पुनः सृजति। त एव विषयाः संस्काररूपत्वेन आभासन्त इत्यर्थः। अथान्तरात्मा किम् आश्रित्य सृजतीत्याह—**संस्कारदेहं** लिङ्गदेहं श्रित्य तमधिष्ठाय। तस्मिन् देहे सर्वे संस्काराः उद्बुद्धाः सन्तः तत्तद्विषयाकारेण परिणमन्तीत्यर्थः।।७७।।

अथ श्रुत्यर्थानुरूपामुक्तार्थप्रक्रियां निरूपयति-**सन्धौ जाग्रदिति**। जाग्रत्सुषुप्त्योरवस्थयोः सन्धौ अनुभवसिद्धा स्वाप्नी द्वितीयावस्था। तत्र तस्यामवस्थायां इह स्वरूपे सर्वेन्द्रियाणि समाकृष्य पुरुषोऽन्तरात्मा आत्मज्योतिरास्ते। इन्द्रियाभावात् तस्यामवस्थायां यद्विषयग्रहणं तदात्मज्योतिषैव सम्पादयतीत्यर्थः। ननु तदा स्थूलदेहस्य का गतिरित्यत आह। **स्थूलदेहं समुचितशयने** यथाप्राप्तनिद्रास्थले निवेश्य प्रसारितहस्तपादं संवेश्य तथा स्वीयभासा स्वसामर्थ्येन [१]स्वाप्नदेहान् संस्काररूपान् समुचितेन्द्रियगणान् निर्माय यत्र कुत्राप्यभीष्टस्थाने तद्वत् संस्काररूपेणैव याति विचरति।।७८।।

पूर्वश्लोके देहं विसृज्य यातीत्युक्तं, तत्र जीवत् अजीवद् वा विसृजति? जीवच्चेत्तर्हि कथमव्यापारं? अजीवच्चेत्तर्हि कथं श्वासाद्युपेतमित्याशङ्क्य श्लोकद्वयेनोत्तरमाह-**रक्षन्प्राणैरिति**। निजशयनगतं कुलायं शरीरं प्राणैः कृत्वा रक्षन् यत्र कुत्रापि याति इति पूर्वेणान्वयः। तर्हि तत्र क्षुत्पिपासादिप्राणकृत्यं कथं न दृश्यत इत्याशङ्क्याह। किंभूतैः प्राणैः? श्वासमात्रावशेषैः श्वासमात्रमवशिष्टं येषां ते। न हि प्रयोजकव्यतिरेकेण प्राणाः

---

१. 'स्वप्नदेहसंस्काररूपसमुचितेन्द्रियगणान्'।

**स्वप्ने स्वीयप्रभावात्सृजति हयरथान्निम्नगाः पल्वलानि**
**क्रीडास्थानान्यनेकान्यपि सुहृदबलापुत्रमित्रानुकारान्।।७९।।**
**मातङ्गव्याघ्रदस्युद्विषदुरगकपीन् कुत्र चित्प्रेयसीभिः**
**क्रीडन्नास्ते हसन् वा विहरति कुहचिन्मृष्टमश्नाति चान्नम्।**
**म्लेच्छत्वं प्राप्तवानस्म्यहमिति कुहचिच्छङ्कितः स्वीयलोका-**
**दास्ते व्याघ्रादिभीत्या प्रचलति कुहचिद् रोदिति ग्रस्यमानः।।८०।।**

कर्म कुर्वन्ति। अथ तद्रक्षणे हेतुमाह— तत्पुनः शरीरं प्रेतकल्पाकृतिकं मा भूदिति। अथास्तां तथात्वमिति चेत्तत्र बाधकमाह—**सारमेयादिभक्ष्यं माभूदिति**। निर्जीवस्य गन्धं गृह्णतां सारमेयादीनां श्वापदानां भक्ष्यं मा भूदिति। अथ पूर्वश्लोके स्वाप्नदेहान्निर्मियेत्युक्तं। तदर्थप्रतिपादकश्रुत्यर्थं दर्शयति- **स्वप्ने स्वीयप्रभावात्** सामर्थ्यात् हयरथान् निम्नगाः नदीः पल्वलानि ईषत्सञ्चितोदकानि तथाऽनेकानि क्रीडास्थानानि तथा सुहृदबलापुत्र-मित्रानुकारांश्च सृजति, अनुकारशब्देन प्रागुक्तसंस्कारोत्पन्नानित्यर्थः। तथा मातङ्गव्याघ्रदस्युद्विषदुरगकपींश्च सृजति। तथा कुत्राप्यहं ब्राह्मणः सन् म्लेच्छत्वं प्राप्तवानिति स्वीयसुहल्लोकाच्छङ्कित आस्ते। 'स्वप्ने शूद्रत्वमापन्न' इत्यादि**वासिष्ठोक्तेः**। तथा कुत्रचिद् व्याघ्रादिभीत्या प्रचलति पलायनं करोति। पलायनासमर्थोऽपि व्याघ्रादिना ग्रस्यमानः सन् क्रन्दते रोदिति। उक्तार्थनिरूपिकाः क्रमेण **श्रुतयः**-"स यत्रायं प्रस्वपित्यस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति। न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अत रथान् रथयोगान् पथः सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि कर्त्ता।" तथा "प्राणेन रक्षन्नवरं कुलायं बहिः कुलायादमृतश्चरित्वा"। तथा-"स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि। उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्" इत्यादि। **भाष्यम्**। स जीवः यत्र यदा प्रस्वपिति निद्रां करोति तदास्य सर्वावत सर्वं अवति रक्षतीति सर्वावान्[१] तस्य सर्वावतः परमात्मनो मात्रामेकदेशं आदाय गृहीत्वा स्वयं विहत्य स्वत एव सुषुप्त्यवस्थां त्यक्त्वा तथा मायिकं वासनामयं स्वप्नदेहं स्वयं निर्माय स्वेन स्वया भासा स्वसामर्थ्येन स्वेन ज्योतिषा स्वप्रकाशेन स्वपिति। अत्रायं पुरुषः स्वयंज्योतिर्भवति। तत्र तस्मिन् स्वप्नसमये न रथाः सन्ति, न रथयोगाः अश्वादयः, न पन्थानः रथमार्गा सन्ति। परन्तु असौ रथान् [२]रथमार्गान् पथः सृजति। तथा न तत्र आनन्दाः सुखविशेषाः, मुदः क्षुद्रानन्दाः, प्रमुदः पुत्रादिलाभहर्षाश्च। परं त्वयमानन्दादीन् सृजति। तथा न तत्र वेशान्ताः पल्वलानि, न स्रवन्त्यो नद्यः सन्ति, पुष्करिण्यः सरांसि न तडागानि सन्ति। परन्त्वेष वेशान्तादि सर्वं सृजते। कः[३] सृजते। स हि कर्त्ता अन्तरात्मा। अथ दैनन्दिनस्वप्नदशायां प्राणेन पञ्चवृत्तिना कौ लीयते तत्कुलायं शयनभूमौ सन्निविष्टं शरीरं रक्षन् सन्, अन्यथा मृतभ्रान्तिः स्यात्। स्वयं अमृतः अमरणधर्मा कुलायाद् बहिश्चरित्वा शरीरान्तर्गतोऽपि आकाशवद् बाह्येऽपि वसन् यत्रकामं यथाकामं, भिन्नं पदं वा। यत्र यत्र कामो विषयेषूत्पद्यते तं तं कामं संस्काररूपेण ईयते गच्छति। **अथ स्वप्नान्त इति**। ततः स्वप्नान्ते स्वप्नावसरे उच्चावचं देहं ईयमानः प्राप्यमाण उच्चं देवादि अवचं तिर्यगादि यथासंस्कारतारतम्यानुरूपं देहं गम्यमानः देवः प्रकाशात्मा बहूनि रूपाणि असंख्यानि वासनारूपाणि निर्वर्तयति तदेवाह-**उतैव** यथावासनं **स्त्रीभिः** सह मोदमानः। उतेव जक्षदिव हसन्निव, उतेव भयानि व्याघ्राद्युत्पन्नानि पश्यति।।७९-८०।।

१. सर्वमवतीति सर्वावान् कार्यकरणसंघातः। यद्वा सर्वा भूतभौतिकमात्रा अस्य विद्यन्ते इति सर्ववान् सर्ववानेव सर्वावान् बृ. भाष्यम्। २. रथयोगान् इति स्यात्। ३. वाक्यमिदं नास्ति।

**यो यो दृग्गोचरोऽर्थो भवति स स तदा तद्गतात्मस्वरूपा-**
**ऽविज्ञानोत्पद्यमानः स्फुरति ननु यथा शुक्तिकाऽज्ञानहेतुः।**
**रौप्याभासो मृषैव स्फुरति च किरणाज्ञानतोऽम्भो भुजङ्गो**
**रज्ज्वज्ञानान्निमेषं सुखभयकृदतो दृष्टिसृष्टं किलेदम्।।८१।।**

**मायाऽध्यासाश्रयेण प्रविततमखिलं यन्मया तेन मत्स्था-**
**न्येतान्येतेषु नाहं यदपि हि रजतं भाति शुक्तौ न रौप्ये।**
**शुक्त्यंशस्तेन भूतान्यपि मयि न वसन्तीति विष्वग्विनेता**
**प्राहास्माद् दृश्यजातं सकलमपि मृषैवेन्द्रजालोपमेयम्।।८२।।**

---

अथ जाग्रदवस्थायां दृष्टिसृष्टिपक्षं निरूपयति- **यो यो दृग्गोचरोऽर्थ इति**। जाग्रदवस्थायां यो योऽर्थः पदार्थः नृपशुपक्षितिर्यगादिरूपो दृग्गोचरो दृष्टिविषयो भवति स स पदार्थः तदा तद्दर्शनसमये तद्गतात्मस्वरूपाविज्ञानोत्पन्न एव स्फुरति। तच्छब्देन पूर्वोक्तः पदार्थः। तद्गतं तस्मिन्नन्तर्यामित्वेन स्थितं यदात्मस्वरूपं तस्य अविज्ञानं अज्ञानं तस्मादुत्पद्यमान एव स्फुरति। दृग्गोचरीभूतपदार्थोत्पत्तावधिकरणाज्ञानमेव कारणमित्यर्थः। एतदेव दृष्टान्तेन द्रढयति—**यथेति**। यथा रौप्याभासः शुक्तिकाज्ञानहेतुः दृष्टः शुक्तिकायाः अज्ञानमेव हेतुः कारणं यस्य शुक्त्यज्ञानोत्पादितो रजताभासः इदं रजतमित्याकारेण स्फुरति, तद्वदात्माज्ञानेन पदार्थाकारः स्फुरति यतः [1]सुषुप्तावात्माकारान्तःकरणवृत्तौ सत्यां पदार्थमात्रं न स्फुरति। च परं किरणाज्ञानतो मरीच्यज्ञानान्मृगजलोत्पत्तिः। तथा रज्ज्वज्ञानाद्भुजङ्गोत्पत्तिः। एवं स[2] [illegible]भासिकोऽपि पदार्थः निमेषं निमेषसमयं यावत्सुखभयकृद्भवति। दरिद्रस्य पिपासार्दितस्य च रौप्यमरीच्यम्बुदर्शनादाश्वासनेन सुखं भवति। तथैव भुजङ्गदर्शनाद्भयं भवति। यथा च प्रातिभासिकस्यापि पदार्थस्येषत्कार्यक्षमत्वं दृष्टमस्ति तद्वत् प्रकृतेऽपि क्षणिकसुखदुःखोत्पत्तिशक्तत्वमस्तीत्यर्थः। अत इदं पदार्थजातं; किलेति निर्धारणे। दृष्टिसृष्टं दर्शनकाल एव सृष्टम्। परन्तु दृढसंस्कारानुबन्धेन तथा न ज्ञायते। यथोल्मुके भ्राम्यमाणे परिधिरूपं तेजो गोचरीभवति नोल्मुकं भवतीत्यर्थः।।८१।।

अथोक्तार्थे भगवद्वाक्यं संवादयन्नाह—**मायाध्यासेति**। यद्यस्मात्कारणात् मायारूपोऽयमध्यासः आरोपस्तस्याश्रयीभूतेन मया अखिलं विश्वजातं नामरूपात्मकं प्रविततं विस्तारितं। तेन कारणेन एतानि भूतानि मत्स्थानि मदाश्रयवर्त्तीनीति प्रतीयते, परन्त्वेतेषु भूतेषु अहं नास्मि। असङ्गोऽहं न वर्ते। ननु कारणं हि स्वकार्यमभिव्याप्य तिष्ठति इति प्रसिद्धिरस्ति। कथमुक्तं तेषु नाहमितीत्याशङ्क्य दृष्टान्तेनोत्तरयति- **यदपीति**। यद्यपि शुक्तौ रजतं भाति, परन्तु रौप्ये शुक्त्यंशो न दृश्यते। अथ यदि [3]दृश्यते भ्रम एव न स्यात्। तेन कारणेन मयि भूतान्यारोपितानि, परं त्वेतेषु नाहमित्यर्थः। **इति विष्वग्विनेता** जगद्गुरुः श्रीयादवेन्द्रः प्राह। तस्मात्कारणात् सकलमपि दृश्यजातं मृषैव। किंभूतं? इन्द्रजालोपमेयं इन्द्रजालवदुपमीयते तत्। तदुक्तं भगवता—"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना। मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः"।।८२।।

।। इति जगन्मिथ्यात्वप्रकरणम् ।।

---

१. भगवत्पादमते सुषुप्तौ अन्तःकरणस्य लयात् न तत्रान्तःकरणवृत्तिः प्रामाणिकी।

२. 'सत्'।

३. 'दृश्येत'।

**हेतुः कर्मैव लोके सुखतदितरयोरेवमज्ञोऽविदित्वा**
**मित्रं वा शत्रुरित्थं व्यवहरति मृषा, याज्ञवल्क्यार्तभागौ।**
**यत्कर्मैवोचतुः प्राग्जनकनृपगृहे चक्रतुस्तत्प्रशंसां**
**वंशोत्तंसो यदूनामिति वदति न कोऽप्यत्र तिष्ठत्यकर्मा।।८३।।**

**वृक्षच्छेदे कुठारः प्रभवति यदपि प्राणिनोद्यस्तथाऽपि**
**प्रायोऽन्नं तृप्तिहेतुस्तदपि निगदितं कारणं भोक्तृयत्नः।**
**प्राचीनं कर्म तद्वद्विषमसमफलप्राप्तिहेतुस्तथाऽपि**
**स्वातन्त्र्यं नश्वरेऽस्मिन् न हि खलु घटते प्रेरकोऽस्यान्तरात्मा।।८४।।**

---

## अथ कर्ममीमांसाप्रकरणं व्याख्यायते

तत्र सर्वप्राणिनां सदसत्फलहेतुः कर्मैवास्ति इति निरूपयति— **हेतुरिति**। लोके जीवलोके सुखतदितरयोः सुखदुःखयोर्हेतुः कारणं कर्मैव नान्यत्। एवमुक्तप्रमेयमविदित्वा अज्ञो ज्ञानहीनो जन्तुर्मित्रं शत्रुर्वा इत्थं मृषैव व्यवहरति। मित्रं सुखहेतुः, शत्रुः दुःखहेतुरित्थं अभिनिविष्टः सन् व्यवहरतीत्यर्थः। यत् यस्मात् कारणात् प्राक् पूर्वं याज्ञवल्क्यार्तभागौ जनकगृहे यज्ञमण्डपे कर्मैवोचतुः। तथा तच्छब्देन कर्म। तस्यैव प्रशंसां चक्रतुः। न केवलं तौ प्रशशंसतुः, यदूनां वंशोत्तंसः श्रीकृष्णोऽपि इति वदति स्म। इतीति किम्? अत्र अस्मिन् लोके कोऽप्यकर्मा न तिष्ठतीति। तदुक्तं गीतासु "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणै"रिति।।८३।।

अथ पूर्वग्रन्थे यद्यपि कर्मणः प्रशंसा कृता तथापि केवलस्य कर्मणो न फलदानसामर्थ्यम्; कुतः? अचेतनत्वात्। किन्त्वीश्वरप्रेरितस्य इति सदृष्टान्तमाह- **वृक्षच्छेदे कुठार इति**। यद्यपि वृक्षच्छेदे कुठारः प्रभवति समर्थो भवति तथापि स प्राणिनोद्यः; प्राणोऽस्यास्तीति प्राणी; जीवत्पुरुषेण नोद्यः प्रेर्यमाण एव भवति। न स्वातन्त्र्येणेत्यर्थः। अथ पुनर्दृष्टान्तमाह- **प्राय इति**। अन्नं प्रायो निश्चयेन तृप्तिहेतुर्भवत्येव तथापि भोक्तृयत्नः पचनभोजनक्रियारूपः कारणं निगदितः। अथ यदर्थं दृष्टान्तद्वयमुक्तं तदाह—**प्राचीनमिति**। तद्वदुक्तदृष्टान्तवत् प्राचीनं कर्म प्राग्जन्मकृतं कर्म यद्यपि विषमसमफलहेतुर्भवति तथापि अस्मिन्नश्वरे कर्मणि फलदाने स्वातन्त्र्यं न हि घटते। किन्तु तत्प्रेरकोऽन्तरात्मा भवति। अयमर्थः—क्रियमाणं सदसत्कर्म न तदैव नश्यति धर्माधर्मरूपेणात्मनि तिष्ठति। तत्तदात्मना प्रेरितं सत् भोगानुकूलं भवति। फलभोगस्तु कर्मसाक्षिणेश्वरेण प्रेरितस्याविद्यया देहाभिमानिनो जीवस्यैव सम्भवतीति। "पुण्यः पुण्येन कर्मणा भवति पापः पापेने"ति श्रुतेः। तदुक्तं भगवता—

"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति।।८४।।

**स्मृत्या लोकेषु वर्णाश्रमविहितमदो नित्यकाम्यादिकर्म**
**सर्वं ब्रह्मार्पणं स्यादिति निगमगिरः सङ्गिरन्तेऽतिरम्यम्।**
**यन्नासानेत्रजिह्वाकरचरणशिरः श्रोत्रसन्तर्पणेन**
**तुष्येदङ्गीव साक्षात् तरुरिव सकलो मूलसन्तर्पणेन।।८५।।**

**यः प्रैत्यात्मानभिज्ञः श्रुतिविदपि तथा कर्मकृत् कर्मणोऽस्य**
**नाशः स्यादल्पभोगात् पुनरवतरणे दुःखभोगो महीयान्।**
**आत्माभिज्ञस्य लिप्सोरपि भवति महाञ्शाश्वतःसिद्धिभोगो**
**ह्यात्मा तस्मादुपास्यः खलु तदधिगमे सर्वसौख्यान्यलिप्सोः।।८६।।**

---

क्षुद्रदेवताराधनमपि ब्रह्मार्पणमेव भवतीत्याह-**स्मृत्या लोकेष्विति**। लोकेषु मनुष्यलोकेषु स्मृत्या वर्णाश्रमक्रमेण यन्नित्यकाम्यादिकं कर्म विहितं तत्सर्वं निषिद्धव्यतिरेकेण पञ्चविधं ब्रह्मार्पणमेव स्यादिति निगमगिरः अतिरम्यं युक्तियुक्तं सङ्गिरन्ते। यद्यपि कर्तारः फलाभिसन्धानादन्यदेवतोद्देशेन कर्म कुर्वन्ति तथापि ब्रह्मार्पणमेव भवति। कर्तारस्तु तत्तद्वासनाभिर्लिप्यन्ते। तत्र षड्विधानि कर्माण्यभिहितानि। नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि। काम्यानि इष्टसाधनानि ज्योतिष्टोमादीनि। नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि। प्रायश्चित्तानि पापक्षयसाधनानि, उपासनानि देवताराधनरूपाणि। प्रतिषिद्धानि हिंसादीनि। तत्र नित्यादीनां बुद्धिशुद्धिः परमं प्रयोजनं। उपासनानां तु तदैकाग्र्यम्, "विविदिषन्ति यज्ञेने"त्यादिश्रुतेः। "तपसा किल्बिषं हन्ति" इत्यादिस्मृतेश्च। नित्यनैमित्तिकयोरुपासनानां चावान्तरफलं पितृलोकदेवलोकप्राप्तिः। 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुतेः। अथाऽन्यदेवतोद्देशेन कर्म कृतं तद् ब्रह्मार्पणमित्यत्र युक्तिमाह—**यदिति**। **नासानेत्रजिह्वाकरचरणशिरःश्रोत्राणां** अवयवानां सन्तर्पणेन अङ्गी देही तुष्येदिति साक्षात् प्रतीतिः सिद्धा। क इव? मूलसंतर्पणेन तरुरिव। यथा सकलो वृक्षः मूलसेचनेन सन्तर्पितो भवति। एवं अन्यदेवतोद्देशेन कृतेऽपि कर्मणि अवयवीभूतःसकलदेवतात्मकः परमेश्वर एव तुष्यतीत्यर्थः।।८५।।

अथेश्वरानभिज्ञेन यत् कर्म कृतं तद्व्यवस्थामाह- **यः प्रैत्यात्मानभिज्ञ इति**। यः श्रुतिविदपि वेदज्ञोऽपि तथा कर्मकृत् [१]तत्प्रतिपादितकर्मकृत् पुरुष आत्मानभिज्ञः आत्मबहिर्मुखः सन् प्रैति म्रियते अस्य पुरुषस्य कर्मणः नाशः स्यात्। कस्मात्? अल्पभोगात् देवलोकादिभोगात्। 'ते तं भुक्त्वा स्वर्गलोकं विशालं, क्षीणे पुण्ये मर्त्यलोकं विशन्ती'त्यादि **भगवद्वचनात्**। तथाऽस्य पुरुषस्य पुनरवतरणे महीयान् दुःखभोगो भवति। अथाऽऽत्माभिज्ञः सन् यः फलेप्सुर्भवति तस्य का गतिरित्याह। लिप्सोरप्यात्माभिज्ञस्य महान् शाश्वतः सिद्धिभोगो भवति। महान् स्वर्गलोकादप्यधिकः तथा शाश्वतः बहुकालभोग्यः एवंविधोऽणिमाद्यष्टसिद्धिभोगो भवति। तथा अलिप्सोः सिद्ध्यनपेक्षस्यात्माभिज्ञस्य पुरुषस्य तदधिगमे आत्मप्राप्तौ सर्वसौख्यानि भवन्ति। परमानन्दप्राप्तिर्भवतीत्यर्थः। **अत्र श्रुतिः**। "अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं भवति यदुह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत" इति। **भाष्यम्**। अथ यः पुरुषः अस्मात् मृत्युलोकात् स्वं लोकमात्माभिधं लोकमात्मानमदृष्ट्वा साक्षादकृत्वा प्रैति म्रियते स एनमात्मानमविदितः अजानन् कर्मफलं भोक्तुं न समर्थो

---

१. 'यागादिकर्मकृत्'।

**सूर्याद्यैरर्थभानं न हि भवति पुनः केवलैर्नात्र चित्रं**
**सूर्यात्सूर्यप्रतीतिर्न भवति सहसा नापि चन्द्रस्य चन्द्रात्।**
**अग्नेरग्नेश्च किन्तु स्फुरति रविमुखं चक्षुषश्चित्प्रयुक्तात्**
**आत्मज्योतिस्ततोऽयं पुरुष इह महो देवतानां च चित्रम्।।८७।।**

---

भवति[1]। भोगावसाने कर्मनाशात् च्यवत इत्यर्थः। अथ कुत आत्मानं न पश्यतीत्याह। यथा वेदो वाऽननूक्तः यथा वेदः अननूक्तः अर्थमनु लक्षीकृत्य न पठितः अननूक्तः। वेदतात्पर्यमजानतः आत्मदर्शनं कुत इत्यर्थः। तथा अन्यद्वेदार्थाद्विपरीतं यत्कर्म तदकृतमेव निरर्थकमेवेत्यर्थः। तथा अनेवंवित् न एवंवित् अनेवंवित् स्वस्वरूपानभिज्ञः पुरुषो यन्महत् पुण्यं अश्वमेधादिकं कर्म करोति तदस्य अन्ततः भोगावसानात् क्षीयते नाशमाप्नोति। अथ चित्तशुद्धिद्वारा आत्मप्रकाशकं यत्कर्म तन्न नश्यतीत्यर्थः। तदुक्तं भगवता--"अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसामिति।" तदेवाह—**तदिति**। तत्तस्मात्कारणात् आत्मानमेव लोकमुपासीत। स य आत्मानमेव लोकमुपास्ते। ह इति निश्चयेन। तस्य कर्म न क्षीयते। ननु विषयसुखलम्पटस्य कथमात्मलोकापेक्षेत्यत आह-- **अस्मादिति**। अस्मादात्मनः सकाशात् यद्यत्कामयते कामनाविषयं करोति तत्तत्सृजते सम्पादयति। आत्मयोगादणिमादिसिद्धयो लभ्यन्ते किंपुनरन्यदित्यर्थः।।८६।।

अथ सूर्यचन्द्रादीनां अर्थप्रकाशकत्वे न स्वातन्त्र्यमस्तीति प्रकटयन्नाह--- **सूर्याद्यैरिति**। सूर्याद्यैः सूर्यचन्द्रादिभिः केवलैः स्वतन्त्रैरर्थभानं पदार्थज्ञानं न भवतीति प्राङ्निरूपितमेवास्तीत्यतो नात्र चित्रमपूर्वम्। अथान्यदपूर्वमस्तीत्याह- **सूर्यादिति**। लोके सूर्याद्याः स्वस्वप्रकाशका इति प्रसिद्धिरस्ति सा न तात्त्विकी। कुतः? यतः सूर्यात् सूर्यप्रतीतिः सहसा अकस्मात् न भवति। तथा चन्द्रस्य प्रतीतिरपि चन्द्रान्न भवति। तथाऽग्नेर्दीपादेर्वा प्रतीतिर्न दीपादग्नेर्वा भवति। किन्तु रविमुखं सूर्यचन्द्रप्रभृति चित्प्रयुक्तादात्मप्रेरिताच्चक्षुषो निमित्तभूतात्स्फुरति प्रकाशते; न निद्राणस्य जात्यन्धस्य प्रकाशते। तस्मात् कारणादयं यः कश्चित्पुरुषो जाग्रत्यां स्वप्नेऽपि आत्मा ज्योतिः प्रकाशको यस्य स तथाविधोऽस्ति। इह इन्द्रियव्यापारे चित्रं देवानां चक्षुरादीनां महस्तेजो रूपरसादिप्रकाशकमस्ति। **अत्र श्रुतिः।** [2]**सामवेदारण्यके** "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च"। **भाष्यम्**। जगतो जङ्गमस्य तथा तस्थुषः स्थावरस्य चराचरस्य [3]सर्वस्य प्रकाशकः आत्मैव न सूर्यादिः। यतः सः आत्मा मित्रस्य नेत्राधिदैवतत्वेन रूपग्राहकादित्यस्य तथा वरुणस्य रसग्राहकस्य तथाऽग्नेर्वागधिदेवतस्य चक्षुः प्रकाशकः। न ह्यात्मप्रकाशमन्तरेण सूर्यादिप्रतीतिः। अथैतदर्थे प्रत्यायकमनुभवमाह-- **चित्रमिति**। द्योतयन्त्यर्थान् प्रकाशयन्ति इति देवाश्चक्षुराद्यास्तेषामनीकं प्रकाशसमूहं चित्रं विचित्रं उदगादुदयं प्राप्तमनुभूयते। अत्रैतदुक्तं भवति। रूपरसादिषु पञ्चविधविषयेषु मध्ये सूर्यादिरेकैकस्यैव ग्राहकः न सर्वेषाम्। विचित्राणां तथाविधानां ग्राहकत्वं तु तद्वृत्तिप्रवर्तकस्य परमात्मन एव सम्भवति, नान्यस्य। एवं देहावच्छेदेन यदध्यात्मस्वरूपं एकमनुभूयमानं परमात्मतत्त्वं तत् द्यावापृथिवी अन्तरिक्षं च आप्राः स्वकीयेन तेजसा आसमन्तादापूरयत्, सर्वात्मकत्वेन स्थितमित्यर्थः।।८७।।

---

१. आत्मलोकः स्वयमविदितः एनं अज्ञं न पालयति न सुखयति—बृ. भाष्यम्।

२. इदं पदं नास्ति। ३. 'सूर्यः'।

**प्राणेनाम्भांसि भूयः पिबति पुनरसावन्नमश्नाति तत्र**
**तत्पाकं जाठरोऽग्निस्तदुपहितबलो द्राक् शनैर्वा करोति।**
**व्यानः सर्वाङ्गनाडीष्वथ नयति रसं प्राणसन्तर्पणार्थं**
**निस्सारं पूतिगन्धं त्यजति बहिरयं देहतोऽपानसंज्ञः।।८८।।**
**व्यापारं देहसंस्थः प्रतिवपुरखिलं पञ्चवृत्त्यात्मकोऽसौ**
**प्राणः सर्वेन्द्रियाणामधिपतिरनिशं सत्तया निर्विवादम्।**
**यस्येत्थं चिद्घनस्य स्फुटमिह कुरुते सोऽस्मि सर्वस्य साक्षी**
**प्राणस्य प्राण एषोऽप्यखिलतनुभृतां चक्षुषश्चक्षुरेषः।।८९।।**

---

अथ प्राणादिकृत्यमाह--- **प्राणेनेति**। असौ देहः[1], प्राणेन कृत्वा भूयः अम्भांसि पिबति। पुनरन्नं चाश्नाति। तस्य तस्य पीतस्य भक्षितस्य वा तदुपहितबलो जाठराग्निः पाकं करोति। तेन प्राणेन उपहितबलः वीज्यमानः सन् द्राक् शीघ्रं शनैर्वा, यथा प्राणः प्रयत्नं करोति। अथ पाकानन्तरं परिपक्वान्नोदकरसं सारं प्राणसन्तर्पणार्थं व्यानः सर्वाङ्गनाडीषु नयति। प्राणशब्देनेन्द्रियाणि, तेषां सन्तर्पणार्थं करोति। तथा शेषं निःसारमन्नमुदकं पूतिगन्धं मूत्रविष्ठादिरूपेण त्यजति बहिर्निःसारयति देहतः अपानसंज्ञः। **श्रुतिः**— तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। परोरजसेऽसावदोम्। **भाष्यम्**। तद्देवस्य द्योतमानस्य स्वप्रकाशस्य भर्गस्तेजः धीमहि चिन्तयामः। किंभूतं? सवितुर्वरेण्यं सवितुः सूर्यस्य वरेण्यं उपजीव्यं। अथ तद्देवस्वरूपमाह-- **धिय इति**। यो देवः न अस्माकं धियः बुद्धीः प्रचोदयात् प्रेरयति। निश्चयात्मकेन[2] रूपं प्रकटयति। अत्रैतदुक्तं भवति। सत्यज्ञानानन्दात्मकः सविता सर्वजगदुपादानाश्रयतया जगत्कर्ता सर्वोपाधिभिश्चिक्रीडिषुः सन् उपाधिधर्मान् विजिगीषुः स्वकमनीयत्वादिमहिम्नो दिदर्शयिषुः स्वयं वशीकृतमपि सर्वात्मनामात्मभूतः सन्नन्तर्यामी देवो नो ऽस्माकं धियः धीः प्रचोदयात्। तस्य सवितुर्देवस्यात्मभूतं संसारक्लेशमूलभर्जकं भर्गः तेजः परं ज्योतिः धीमहि ध्यायेमहि। किंभूतः? रजसः परः। अत्र रजस इति चतुर्थी पञ्चम्यर्थेऽवगम्यते। असौ अदः व्यक्ताव्यक्तस्वरूपाद्रजसो लोकात्परः। रजांसि लोका इति **यास्कः**। ॐ मित्यर्वाग्जनि[3]त्री प्रणवगम्या।।८८।।

(श्रीकृष्णार्पणमस्तु। श्रीशङ्कर) एवं प्राणादीनां कृत्यमुक्त्वेदानीं तन्निखिलवृत्त्यात्मकस्य मुख्यप्राणस्य सत्ताप्रकाशदानेन तत्साक्षिसच्चिदानन्दमात्मानं विशदीकृत्य लक्षयति-- **व्यापारमिति**। इह व्यष्टिदेहे समष्टिदेहे च चिद्घनस्य चेत्यरहितचिन्मात्रस्य यस्यात्मनः सत्तया सत्तां प्राप्य सन् भूत्वा पञ्चवृत्त्यात्मकः पूर्वोक्तप्राण-नादिपञ्चवृत्तिमान् भूत्वा देहसंस्थः समष्टौ समष्टिरूपेण उपास्यो भूत्वा व्यष्टिदेहे व्यष्टिरूपेणोपासको भूत्वा स एव सर्वेन्द्रियाणां सर्वेषां शब्दादिज्ञानसाधनानां समष्टिव्यष्टिदेहस्थानां करणानां अधिपतिः स्वामी। तं विना सर्वकरणानां व्यापाराऽनुपपत्तेः। असौ प्राणः पूर्वोक्तप्राणः जीवभूतः सन् प्रतिवपुः प्रत्येकं सर्वशरीरेषु स्फुटं व्यक्तं यथा तथा अखिलं सम्पूर्णं व्यापारं व्यवहारं कुरुते निर्वर्तयति। सः एवंविधः सर्वसत्ताप्रकाशदानेन निर्वाहकः। अत एव सर्वस्य समस्तस्य कार्यस्य निमित्तोपादानत्वाभ्यां साक्षी अव्यवधानेन प्रकाशकः अस्मि भवामि स एवाहमस्मीत्यर्थः। (**अत्र श्रुतिं** प्रमाणयति।) एषः प्रत्यक्परोक्षत्वरहितः प्राणस्य समष्टिव्यष्टिरूपेण

---

१. 'देही'।
२. 'निश्चयात्मकत्वेन'। ३. 'जनी'।

**यं भान्तं चिद्घनैकं क्षितिजलपवनादित्यचन्द्रादयो ये**
**भासा तस्यैव चानुप्रविरलगतयो भान्ति तस्मिन् वसन्ति।**
**विद्युत्पुञ्जोऽग्निसङ्घोऽप्युडुगणविततिर्भासयेत् किं परेशं**
**ज्योतिश्शान्तं ह्यनन्तं कविमजममरं शाश्वतं जन्मशून्यम्।।९०।।**

**तद् ब्रह्मैवाहमस्मीत्यनुभव उदितो यस्य कस्यापि चेद्वै**
**पुंसः श्रीसद्गुरूणामतुलितकरुणापूर्णपीयूषदृष्ट्या।**

---

सकलजगद्व्यापारकारणस्य वायोः प्राणः जीवनहेतुः। तथा एषः प्रत्यक्परोक्षत्वहीनः आत्मा सकलतनुभृतां समस्तशरीरधारिणां व्यष्टिसमष्टिजीवानां चक्षुषः ज्ञानस्य चक्षुः ज्ञानं प्रकाशक इत्यर्थः। ''प्राणस्य प्राणमुत चक्षुश्चक्षु''रित्यादिश्रुतेः।।८९।।

एवं सर्वप्रकाशकत्वेन लक्षीकृत्य तस्यैव स्थूणानिखननन्यायेन दृढीकरणाय तदेव सर्वप्रकाशकत्वमुक्तमपि ''न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति,'' इति श्रुत्यन्तरप्रमाणेन द्रढयति—**यं भान्तमिति**। प्रविरलगतयः अन्योन्यं न श्लिष्टा गतिः स्वरूपव्यवहारादिस्थितिर्येषां ते तादृशाः। क्षितिः पृथ्वी, जलं तोयं, पवनो वायुः, आदित्यः सूर्यः, चन्द्रः सोमः आदिर्येषां वागादीनां ते सर्वे यं सच्चिदानन्दघनं एकं निरपेक्षं अन्यनिर्वाहक्षमं आत्मानं भान्तं स्वतः प्रकाशमानं सन्तं अनु पश्चात् भान्ति प्रकाशन्ते। किञ्च तस्मिन्स्वप्रकाशसदात्मनि वसन्ति तिष्ठन्ति, तत्सत्तां प्राप्यैव स्वस्वव्यापारक्षमा जाता इत्यर्थः। तमुक्तलक्षणं परेशं सर्वजगत्कारणभूतप्रकृतिनियन्तारं। शान्तं जगद्वासनाऽस्पृष्टं अनन्तं नाश्यनाशान्यथानुपपत्त्या स्वतो नाशहीनम्। कविं ज्ञानस्वरूपं शास्त्रयोनित्वेन सर्वज्ञत्वोपलक्षितं इत्यर्थः। अजं जन्मशून्यं। अमरं मृतिशून्यं। जन्मनाशान्यथानुपपत्त्या जन्ममरणहीनमित्यर्थः। तत्रैव हेतुद्वयं स्पष्टार्थम्। शाश्वतं नित्यं। जन्मशून्यं जन्मरहितं। एतेन **यास्क**पठिता ''जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यती''ति षड्विकारा अपि निरस्ता ज्ञेयाः। तमात्मानं विद्युत्पुञ्जो विद्युतां पुञ्जः समूहः लोकदृष्ट्या प्रकाशकोऽपि तथा अग्निसङ्घः वह्नीनां समूहस्तथाभूतोऽपि। तथा उडुपानां नक्षत्राणां गणस्य समूहस्य वितति: विस्तारः। उपलक्षणमेतत् सूर्यादीनां। तत्सर्वं प्रकाशजातं भासयेत्किं प्रकाशयेत्किं? नैव प्रकाशयेत्। लोकेऽपि प्रकाश्यस्य प्रकाशकप्रकाशयितृत्वं न दृष्टचरमिति भावः।।९०।।

एवंभूतात्मानुभववतो जीवन्मुक्तिः फलं भवतीत्याह- **तद्ब्रह्मेति**। यस्य कस्यापि इत्युक्त्या जातिवर्णाश्रमवयोवस्थास्त्रीपुरुषोच्चनीचादिभेदा लोकदृष्टाः न शास्त्रीयज्ञानप्रतिबन्धका इति सूचितम्। लौकिकानां अनधिकारित्वभ्रमभू[1]तानामाधिदैविकाधिकारित्वनिरूपकवाक्यैर्बाधस्य दृश्यमानत्वात्। पुंसः इत्युक्त्या मुमुक्षोः मोक्षमुख्यसाधनतत्त्वज्ञानकारणगुरुशुश्रूषापूर्वकश्रवणादिषु पुरुषप्रयत्न एवापेक्षितः इति सूचितम्। यस्य कस्याप्यधिकारिणः पुरुषस्य। श्रीसद्गुरूणां मुक्तिश्रीसहितानां सतां सद्रूपब्रह्मसाक्षात्कारवतां गुरूणां देशिकवर्याणां। गुरूणां मुक्तिश्रीमत्त्वे सत्त्वे च श्रुती-''भद्रैषां लक्ष्मीर्निहिताधिवाचि''। ''अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिती'' ति। अतुलिता निरुपमा या करुणा तया पूर्णा भरिता अत एव पीयूषं अमृतं तद्वत् मरणनिर्वर्तिका दृष्टिः ज्ञानं तया कृत्वा। दृश्यते त्वग्र्यया बुद्ध्येति श्रुतेः। गुरुतः प्राप्तया ब्रह्मविद्ययेत्यर्थः। तदुक्तलक्षणं ब्रह्मैव देशकालवस्तुकृतपरिच्छेदरहितं तत्पदलक्ष्यं अहमेव त्वंपदलक्ष्यं कूटस्थरूपमेव। ततः पृथगहं न

---

१. 'युतानामातिदेशिका'।

**जीवन्मुक्तः स एव भ्रमविधुरमना निर्गतेऽनाद्युपाधौ**
**नित्यानन्दैकधाम प्रविशति परमं नष्टसन्देहवृत्तिः।।९१।।**
**नो देहो नेन्द्रियाणि क्षरमतिचपलं नो मनो नैव बुद्धिः**
**प्राणो नैवाहमस्मीत्यखिलजडमिदं वस्तुजातं कथं स्याम्।**
**नाहङ्कारो न दारा गृहसुतसुजनक्षेत्रवित्तादि दूरं**
**साक्षी चित्प्रत्यगात्मा निखिलजगदधिष्ठानभूतःशिवोऽहम्।।९२।।**

---

भवामीत्येवं निश्चयरूपः अनुभवः साक्षात्कारः उदितः आविर्भूतः चेत् यदि स्यात्। तदानीमेव स पुरुष भ्रमविधुरमनाः भ्रमेण विपरीतज्ञानेन विधुरं वियुक्तं मनः जीवन्मुक्तव्यवहारयोग्यं प्रारब्धशेषं यावत् मनो यस्य। अत एव नष्टसन्देहवृत्तिः नष्टाः विलीनाः संशयविशिष्टाः वृत्तयो यस्य स तथाभूतः सन् जीवन्मुक्तः भवति। तस्यैव विदेहमुक्तिफलमप्याह— **स एवेति**। स जीवन्मुक्त एव प्रारब्धान्ते अनाद्युपाधौ निर्मूलमायोपाधौ, निर्गते स्वरूपतो लयं प्राप्ते सति, बीजनाशस्य पूर्वमभेद[1] ज्ञानसमकालं जातत्वात्, परमं कार्यकारणास्पृष्टं निरुपाधिकमित्यर्थः। नित्यानन्दं निरतिशयबाधहीनसुखरूपं एकं मुख्यं धाम तेजः गृहं च, स्वरूपं सर्वसूर्यादितेजःप्रकाशकत्वात्, सर्वब्रह्मादिजीवानां निवासभूतत्वाच्च। प्रविशति तदेव भवतीत्यर्थः।।९१।।

इदानीं तस्यैव ज्ञानिनो यावत्प्रारब्धं सर्वव्यवहाराप्रतिबन्धकत्वेन जीवन्मुक्तिसुखमनुभवितुं सर्वदेहाद्यसत्त्वानुसन्धानपूर्वकं स्वात्मसुखानुसन्धानमाह—**नो देह इति**।

देहः पञ्चीकृतपञ्चभूतकार्यः अन्नविकारः स्थूलदेहः अहं न, मम चिद्रूपत्वात् सत्त्वाच्च। देहस्तु क्षरं अतिचपलमिति हेतुगर्भितविशेषणद्वयं क्षरत्वान्नाशधर्मित्वात्, अन्यथान्यथापरिणामवत्त्वेनातिचञ्चलत्वाच्च। आत्मा तु सद्रूपत्वेन स्थिरश्चिद्रूपश्च अनुभूयते। अतो वैलक्षण्यादुभयोः, अहमात्मा, देहो न भवामि; किन्तु देहस्तु नास्त्येवेत्यर्थः। किञ्च अहं आत्मा, इन्द्रियाणि क्रियासाधनानि ज्ञानसाधनानि चेत्युभयात्मकानि दशापि न भवामि। इन्द्रियाणामन्योन्यव्यावृत्त्या असत्त्वप्रतीतेः। विषयाणां असत्त्वेनेन्द्रियाणामसत्त्वस्यानुभूयमानत्वाच्चञ्चलत्वाच्च तान्यहं न भवामि। पूर्वविशेषणद्वयमप्यनात्मत्वहेतुत्वेनात्र योज्यम्। किञ्च अहं मनः संशयात्मकं न भवामि, नास्मि। कामादिवृत्तिमत्त्वेनोत्पत्त्यादिमत्त्वेन च विकारवत्त्वादसत्त्वाच्च मनो नास्त्येव। अहं तु मनोविकाराणामुत्पत्ति-विनाशयोश्च प्रकाशकत्वेन सच्चिद्रूपेण प्रकाशमानः अस्म्येवातो मनो नाहमित्याशयः। किञ्च बुद्धिः निश्चयात्मिका अन्तःकरणवृत्तिरपि अहं न भवामि। जाग्रदाद्यवस्थावत्त्वेनोत्पत्तिविलयवत्त्वात्। अहं तु आत्मा अवस्थात्रय-[2]तद्बुद्धिसाक्षी सच्चिद्रूपः। स बुद्धिः कथं स्यां नैव स्यामित्यर्थः। किञ्च प्राणः पञ्चवृत्त्यात्मकः शारीरो वायुः अहं नैवास्मि नैव भवामि। इदं मम कूटस्थस्यात्मनः प्रकाश्यमखिलं जडं सर्वं इदमचिद्रूपं देहादिवस्तुजातं पदार्थसमूहः अहं कूटस्थसच्चिदानन्दः कथं स्याम्? केन प्रकारेण भवामि। अत एव कार्यस्य सर्वस्य दृश्यत्वात् जडत्वादसत्त्वाद्विकारित्वाच्च अहङ्कारस्यापि तथात्वात् स अहंकारः, अहं द्रष्टा सच्चिदानन्दः कूटस्थः इत्यतीव वैलक्षण्यान्न भवामि। अत एव दाराः स्त्री, गृहं वेश्म, सुताः पुत्राः, सुजनाः सम्बन्धिबान्धवमित्रभृत्यादयः, क्षेत्रं भूमिः, वित्तं द्रव्यं आदि मुख्यं यस्य, जातिकुलवर्णाश्रमधर्माधर्मादिः तत्सकलमपि देहादिसापेक्ष[3] सिद्धिकत्वाद्दूरं अतस्तन्नैवाहमस्मि। अहं तु एतस्य देहादिजडवस्तुजातस्य साक्षाद् अव्यवधानेन प्रकाशकत्वात्साक्षीति प्रकाशकत्वाच्चित् ज्ञानम्। सर्वान्तरत्वेन स्वतः प्रकाशमानत्वात्प्रत्यङ्। आततत्वादत्तृत्वात्सद्रूपत्वादात्मा यं विना सर्वारोपाधिष्ठानस्य शबलब्रह्मणोऽप्यसिद्धेरुपचारेण निखिलस्य समस्तस्य जगतो विश्वस्याधिष्ठानभूतः अधिष्ठानत्वेनोक्तः शिवः सुखरूपः अस्मि।।९२।।

---

१. 'पूर्वमेव'। २. 'तद्बद्धु'। ३. 'क्षमिति कृत्वा दूरम्'।

**दृश्यं यद्रूपमेतद्भवति च विशदं नीलपीताद्यनेकं**
**सर्वस्यैतस्य दृग्वै स्फुरदनुभवतो लोचनं चैकरूपम्।**
**तद् दृश्यं मानसं दृक्परिणतविषयाकारधीवृत्तयोऽपि**
**दृश्या दृग्रूप एव प्रभुरिह स तथा दृश्यते नैव साक्षी।।९३।।**
**रज्ज्वज्ञानाद् भुजङ्गस्तदुपरि सहसा भाति मन्दान्धकारे**
**स्वात्माज्ञानात्तथाऽसौ भृशमसुखमभूदात्मनो जीवभावः।**
**आप्तोक्त्याऽहिभ्रमान्ते स च खलु विदिता रज्जुरेका तथाऽहं**
**कूटस्थो नैव जीवो निजगुरुवचसा साक्षिभूतः शिवोऽहम्।।९४।।**

---

एवं जीवन्मुक्तस्यात्मानुसन्धानमुक्त्वा इदानीं प्रकारान्तरेण तदेव पुनराह— **दृश्यमिति**। यत्प्रकारकं[1] एतत् इदन्तया प्रतीयमानं रूपं रूप्यते प्रकाश्यते इति रूपं प्रकाशितं तत्सर्वं दृश्यं दृग्विषयं अनेकरूपम्। नीलपीतादि नीलं श्यामं, पीतं गौरं, इत्यादिविविधगुणवत्त्वात्। एतस्य प्रतीयमानस्य सर्वस्य अनेकविधस्य रूपस्य दृक् दृश्यते रूपमनया सा दृष्टिः वै निश्चयेन स्फुरदनुभवतः स्फुरन्ति प्रतीयन्ते अनुभवरूपाणि स्फुरणानि यस्यां सा तथोक्ता। सा लोचनं रूपालोकसाधनत्वात्। तच्च एकरूपं एकधैव प्रतीयते। किञ्च तल्लोचनमपि दृश्यं प्रतीतिविषयं अतो जडं, तस्यापि दृक् दर्शनसाधनं मानसं मनः अस्ति, तस्य मानसस्य दृश्यत्वेनानुभूयमानत्वात्तस्य दृक् दृष्टिः धीर्निश्चयात्मकमन्तःकरणं, तस्या अपि अनुभूयमानत्वात्परिणतविषयाकार-धीवृत्तयोऽपि परिणामेन विषयाकृतित्वेन अनेकविधत्वाद्विकारित्वात् धियो वृत्तयो दृश्या एव। सर्वस्यैतस्य जडविकारत्वेनानात्मत्वनिश्चयः। इह जडसमूहे सर्वस्मिन् प्रभुः सर्वप्रकाशनसमर्थः साक्षी अव्यवधानेन प्रकाशकः आत्मा दृग्रूप एव। सर्वप्रकाशसाधनभूतोऽपि तथा विषयवन्नैव दृश्यते अनुभवविषयो नैव भवतीत्यर्थः।।९३।।

इदानीं तस्यैव जीवन्मुक्तस्य गुरुवचनविश्वासपूर्वकं युक्त्या स्वजीवत्वबाधेन स्वात्मानुसन्धानमाह- **रज्ज्वज्ञानादिति**। यथा मन्दान्धकारे ईषदन्धकारावृते आलोके रज्ज्वज्ञानात् रज्जुरूपानवलोकनात् तदुपरि तत्सदृशाज्ञात[2] रज्ज्वामित्यर्थः। सहसा अकस्मात् भुजङ्गः सर्पो भाति भासते। तथा तेनैव प्रकारेण स्वात्माज्ञानात् स्वस्वरूपानवलोकनात् स्वसदृशेऽनवलोकिते आत्मनि असौ समस्ताज्ञान्यनुभूयमानः भृशं अत्यन्तं असुखं दुःखरूपः आत्मनः सदाधारं विनाऽऽरोपासिद्धेः आत्मसम्बन्धी जीवभावः जीवत्वं भाति प्रकाशत इत्यर्थः। स भ्रान्तिरेवेति भावः। यथा रज्जुसर्पदृष्टान्ते आप्तोक्त्या प्रामाणिकपुरुषवचनविश्वासेन अहिभ्रमान्ते सर्पभ्रान्तिनिवृत्तौ सत्यां सः सर्पप्रत्ययः पूर्वः विदिता ज्ञाता सती एका रज्जुः रशनाप्रत्यय एव अभूत् जाता तथा तेन प्रकारेण निजगुरुवचसा निजः स्वीयः गुरुः देशिकः तस्य वचसा, युक्त्या तत्त्वमसीत्यादिवाक्यार्थबोधनरूपं वचः, तेन कृत्वा जीवत्वभ्रमान्ते जीवत्वभ्रमे नष्टे सतीत्यर्थः। अहं जीवो सुखी दुःखी जननमरणवान् कर्तृभोक्तृरूपः नैव नास्म्येव। अहं साक्षिभूतः जीवस्याव्यवहितप्रकाशकत्वात्साक्षित्वोपचारवान्। वस्तुतस्तु कूटस्थः निर्विकारः शिवः आनन्दरूपः अस्मि।।९४।।

---

१. 'यत्प्रकारकं' नास्ति। २. तत्सदृशेति। सर्पसदृशेत्यर्थः।

**किं ज्योतिस्ते वदस्वाहनि रविरिह मे चन्द्रदीपादि रात्रौ**
**स्यादेवं भानुदीपादिकपरिकलने किं तव ज्योतिरस्ति।**
**चक्षुस्तन्मीलने किं भवति च सुतरां धीर्धियः किं प्रकाशे**
**तत्रैवाहं ततस्त्वं तदसि परमकं ज्योतिरस्मि प्रभोऽहम्।।९५।।**

**[1]किञ्चित्कालं स्थितः कौ पुनरिह भजते नैव देहादिसङ्गं**
**यावत्प्रारब्धभोगं कथमपि स सुखं चेष्टतेऽसङ्गबुद्ध्या।**

---

इदानीं तस्य जीवन्मुक्तस्य स्वहृदि गुरुशिष्यभावं प्रकल्प्य संवादेन स्वस्य परमज्योतीरूपानुसन्धानमाह- **किं ज्योतिरिति**। हे शिष्य! ते तव अहनि दिवसे घटपटादिप्रकाशव्यवहारे रात्रौ च निशि किं ज्योतिः तेजः किमस्ति तद्वदस्व कथय। येन दिनरात्रिव्यवहारः सिद्ध्यति— इति पृष्टे गुरुणा शिष्यः— चक्षुः नेत्रं— इत्याह। येन लोके प्रकाशकं सूर्यचन्द्राग्निरूपं प्रकाशकं द्रव्यं तत्प्रकाश्यं द्रव्यं च व्यवह्रियते तच्चक्षुरेव ज्योतिरित्यर्थः। एवमुत्तरे शिष्येण दत्ते गुरुः पृच्छति-**तन्मीलन इति**। तन्मीलने चक्षुषः निमीलने कृते सति किं ज्योतिः? पश्चात् सूर्यचन्द्राग्निप्रकाशकतत्प्रकाश्यघटादिस्फुरणस्य किं प्रकाशसाधकं तेजः तेऽस्ति इति पृष्टः शिष्यः आह— नेत्रनिमीलनानन्तरं सर्वव्यवहारस्फुरणसाधनं ज्योतिः नितरां अत्यन्तं प्रकाशकं धीर्बुद्धिः अस्तीत्युत्तरं दत्तम्। ततो गुरुः पृच्छति- **धिय इति**। धियोऽपि बुद्धेः नेत्रसूर्यादिवत्प्रकाश्यत्वेनानुभूयमानायाः तत्प्रकाशे ज्ञेयत्वव्यवहारे ते तव किं ज्योतिः तेजः इति पृष्टः शिष्य आह- **अहमिति**। मम बुद्ध्यनुभवितृत्वात्तत्र बुद्धिप्रकाशव्यवहारे साधकं अहं ज्योतिः अस्मि। एवमुक्ते शिष्येण साधके गुरुः पृच्छति- **तत्रेति**। तत्रापि अहंत्वस्यापि अनुभूयमानव्यवहारे साधकं तव किं ज्योतिः किं प्रकाशकं तेजः अस्ति इति पृष्टः शिष्य आह- **अहमिति**। अहंत्वप्रकाशक आत्मा अस्तीत्यर्थः। एवमुक्तो गुरुराह- **ततस्त्वमिति**। त्वदन्यस्य कस्यापि प्रकाशद्रव्यस्याभावात् प्रकाश्यद्रव्यस्यापि तत्प्रकाशयितुमशक्यत्वात् स्वयंज्योतिष्ट्वेन प्रकाशमानत्वात्तत्परमकं ज्योतिः कार्यकारणप्रकाश्यप्रकाशकत्वाद्यस्पृष्टं तेजः त्वं त्वंपदलक्ष्यः आत्मा असि भवसि। अतस्तज्ज्योतिः प्रकर्षभानरूपः अस्मीत्यनुभवः। अत्रार्थे बृहदारण्यकी श्रुतिरपि "आत्मैवास्य ज्योति"रित्यादिका।।९५।।

एवंभूतानुभववतो जीवन्मुक्तस्य व्यवहारमाह-**किञ्चिदिति**। स ब्रह्मवेत्ता जीवन्मुक्त इत्यर्थः। किञ्चित्कालं कतिचित्कालपर्यन्तम्। यथाकालं यथाधिकारिव्यक्तिपरिच्छेदककालपर्यन्तमित्यर्थः। कौ स्थूलदेहापेक्षया पृथिव्याम्। **वस्तुतस्तु** ब्रह्मवसिष्ठादीनामपि अन्यलोकेषु स्थितिश्रुत्या कौ क्षेत्रशब्दवाच्येऽन्तःकरणे स्थितः वर्तमान इव लक्षितोऽपि, इह पृथिव्यां क्षेत्रे च पुनः देहक्षेत्रादिसत्वनिवृत्तेः पश्चात् देहादिसङ्गं स्थूलदेहस्त्रीपुत्रमित्रभ्रात्रादिसमूहं नैव भजते नैवाङ्गीकरोति। स्वत्वेनात्मनि तत्सम्बन्धवत्त्वप्रतीतिं न करोतीत्यर्थः। किञ्च क्षेत्रे स्थूलदेहादिसङ्गे च यावत्प्रारब्धभोगं प्रारब्धभोगपर्यन्तं कथमपि, ब्रह्मवेत्तुः ईश्वरत्वेन मायाप्रारब्धयोरधीनत्वाभावात्, तद्विना च कर्तृभोक्तृत्वान्यथानुपपत्त्या प्रारब्धभोगस्य च ब्रह्मज्ञानां ब्रह्मादीनां कर्तृभोक्तृव्यवहारस्यापि दृश्यमानत्वात् सर्वव्यवहारस्य मायामात्रत्वेनानिर्वचनीयो ब्रह्मवेत्तृव्यवहार इति भावः। असङ्गबुद्ध्या असङ्गब्रह्मात्मबोधेन सुखं यथा भवति तथा निःसंशयत्वान्निर्दुःखमित्यर्थः। चेष्टते चेष्टावत्त्वेन प्रतीतो भवतीत्यर्थः। तस्यासङ्गबोधमेवोत्तरार्द्धेन विशेषणैर्विशदयति- निर्द्वन्द्वः सुखदुःखादिद्वन्द्वहीनः। तत्र हेतुः नित्यशुद्धः जीवस्य पापपुण्यवत्त्वेन शुद्धत्वस्य कादाचित्कत्वात् ब्रह्मणोऽभेदं प्राप्तस्य ज्ञानिनः कालत्रयेऽपि पुण्यपापहीनत्वान्नित्यशुद्धत्वमिति भावः। अत एव विगलिते ममताहंकृती अत्यन्तमुत्पत्तिबीजरहितत्वेन नष्टे ममता अन्यत्र पुत्रादौ, देहादौ च अहंकृतिः

---

१. 'कंचित्'। एवं व्याख्यायामपि।

**निर्द्वन्द्वो नित्यशुद्धो विगलितममताऽहंकृतिर्नित्यतृप्तो**
**ब्रह्मानन्दस्वरूपः स्थिरमतिरचलो निर्गताशेषमोहः।।९६।।**

**जीवात्मब्रह्मभेदं दलयति सहसा यत्प्रकाशैकरूपं**
**विज्ञानं तच्च बुद्धौ समुदितमतुलं यस्य पुंसः पवित्रम्।**
**माया तेनैव तस्य क्षयमुपगमिता संसृतेः कारणं या**
**नष्टा सा कार्यकर्त्री पुनरपि भविता नैव विज्ञानमात्रात्।।९७।।**

**विश्वं नेति प्रमाणाद्विगलितजगदाकारभानस्त्यजेद्वै**
**पीत्वा यद्वत्फलाम्भस्त्यजति च सुतरां तत्फलं सौरभाढ्यम्।**

---

तादात्म्यं यस्य सः। अत एव नित्यतृप्तः निरंकुशसन्तोषवान्। **तत्र हेतुः**। ब्रह्मानन्दस्वरूपः अपरिच्छिन्नानन्दरूपः, स्थिरमतिः स्थिरे ब्रह्मणि मतिर्यस्य। स्वतश्च ब्रह्मरूपत्वादचलः स्थिरः। तत्र हेतुः निर्गताशेषमोहः निःशेषनिवृत्तः अशेषःमूलाऽज्ञानतूलाज्ञानपर्यायः अज्ञानसमूहः विपरीतज्ञानसहितो यस्य। अतो ज्ञानिनि चेष्टा या प्रतीयते सा मायामात्रं इति भावः।।९६।।

इदानीं ज्ञानिनि प्रतीयमानचेष्टामात्रस्य संसारजनकत्वाभावं सहेतुकं प्रपञ्चयति—**जीवात्मेति**।

यत् महावाक्यजन्यत्वे सति गुरुमुखात् श्रुत्या स्वतो युक्तिपूर्वकं सम्भावितत्वेन निश्चितं ज्ञानं चरमवृत्त्याख्यं प्रकाशैकरूपं प्रकाश एवैकं मुख्यं रूपं यस्य तादृशं, सहसा अकस्मात् तत्कालमित्यर्थः। जीवात्मब्रह्मभेदं जीवात्मनः त्वंपदलक्ष्यस्य कूटस्थब्रह्मणः तत्पदलक्ष्यस्य च भेदं भिन्नत्वं कारणेन मूलाज्ञानेन सह दलयति नाशयति। तत्तादृशं पवित्रं रागद्वेषादिवासनासहितसर्वमलनिवर्तकत्वात्पावनम्। "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति भगवदुक्तेः। अतुलं निरुपमं यस्याधिकारिधुरीणस्य पुंसः पुरुषप्रयत्नवतः बुद्धौ शुद्धान्तःकरणे समुदितं संशयविपर्ययरहितमाविर्भूतमभूत्। तस्य पुरुषस्य तेनैवान्यसाधननिरपेक्षेण ज्ञानेन कर्त्रा या संसृतेः कारणं संसारस्य हेतुरूपा माया स्वतः कार्यकारणहीनत्वेनार्थशून्या प्रकृत्यपरपर्याया क्षयं नाशं उपगमिता प्रापिता विज्ञानमात्रात् आभासमात्रत्वेन सा माया पुनरपि नाशप्राप्तेः पश्चात् इत्यर्थः। अपिशब्दात् पूर्वमपि कार्यकर्तृत्वं ज्ञानिदृष्ट्या नासीत्किं पुनर्ज्ञानानन्तरमित्यर्थः। नष्टा नाशं प्राप्ता सती कार्यकर्त्री कार्यं भ्रमः तस्य कर्त्री जनिका नैव भविता न भविष्यतीत्येवं निश्चय एव।।९७।।

इदानीं भासमानायामपि संसृतौ ज्ञानिनि तत्त्यागं दृष्टान्तेन सम्भावयन् आह—**विश्वमिति**। असौ ज्ञानी विश्वं जगत् न, नास्ति इति प्रमाणात् एवंविधस्वतःप्रमाणभूतात् " नेह नानास्ति किञ्चने" ति श्रुतिवाक्यादित्यर्थः। विगलितजगदाकारभानः विगलितं बीजसहितं नष्टं जगतः आकार इव आकृतिमद्भानं भासनं यस्य। किञ्च हृदा कृतेन सर्वापवादेन सम्यक् चिद्घनैकामृतसुखकवलास्वादपूर्णः समीचीनतया चिद्रूपं यद्घनं निबिडं अज्ञानजगदाद्यप्रवेशात् सम्यक् यच्छिद्रहीनमित्यर्थः। एकं स्वगतसजातीयभेदहीनं, अमृतं नाशहीनं, सुखमानन्दः, तस्य कवलो ग्रासः। यथा ग्रासः हस्तेन मुखे क्रियते तद्वत् सांख्ययोगहस्तेनान्तःकरणस्य विद्यारूपमुखे कृतः आनन्दः ग्रासत्वेनोक्तः। तस्य आस्वादोऽनुभवनम्। मुखे क्षिप्तग्रासस्य जिह्वयेव। तेन पूर्णः नित्यतृप्तः। एवं

**सम्यक्सच्चिद्घनैकामृतसुखकवलास्वादपूर्णो हृदाऽसौ**
**ज्ञात्वा निःसारमेवं जगदखिलमिदं स्वप्रभः शान्तचित्तः।।९८।।**

**क्षीयन्ते चास्य कर्माण्यपि खलु हृदयग्रन्थिरुद्भिद्यते वै**
**छिद्यन्ते संशया ये जनिमृतिफलदा दृष्टमात्रे परेशे।**
**तस्मिंश्चिन्मात्ररूपे गुणमलरहिते तत्त्वमस्यादिलक्ष्ये**
**कूटस्थे प्रत्यगात्मन्यखिलविधिमनोऽगोचरे ब्रह्मणीशे।।९९।।**

**आदौ मध्ये तथाऽन्ते जनिमृतिफलदं कर्ममूलं विशालं**
**ज्ञात्वा संसारवृक्षं भ्रममदमुदिताशोकिताऽनेकपत्रम्।**

---

उक्तरीत्या अखिलं समस्तं जगत् विश्वं निःसारं सत्त्वसुखत्वहीनं अत एवेदं दृश्यत्वेन प्रतीयमानत्वाच्चित्त्वरहितं ज्ञात्वा अनुभूय शान्तचित्तः शान्तं भर्जितबीजत्वेनोपरतं चित्तं चेतो यस्य सः तज्जगत् त्यजेत् विसृजेत्। तत्र दृष्टान्तः **यद्वदिति**। लोके यद्वद् यथा कोऽपि फलाम्भः नारङ्गाम्रादेः फलस्य अम्भः रसं सुतरां अत्यन्तं निःशेषमित्यर्थः। पीत्वा प्राश्य तत्फलं पीतरसं फलं सौरभाढ्यं सुगन्धभरितमपि वै निश्चयेन फलगतसौगन्ध्यस्य तृप्तिहेतुत्वाभावात्, तृप्तस्य तृप्त्यपेक्षाभावाच्च त्यजति तद्वदिति सम्बन्धः।।९८।।

इदानीं ज्ञानिनि बाधिताहङ्कारादिजगत्प्रतीतावपि बन्धकत्त्वं कर्मणां न भवतीत्यस्मिन्नर्थे 'भिद्यते हृदयग्रन्थि'रित्यादिकां श्रुतिं प्रमाणयति—**क्षीयन्त इति**।

तस्मिन् सर्ववेदान्तोक्तलक्षणलक्षिते। तान्येव लक्षणान्याह विशेषणैः-**चिन्मात्ररूपे** चेत्यरहितचिन्मात्रे। तत्र हेतुः **गुणमलरहिते** गुणकृता रागद्वेषादयः, गुणरूपाश्च मलाः बन्धनलेपहेतवः तैः रहिते हीने। **तत्त्वमस्यादिलक्ष्ये** तत्त्वमस्यादिमहावाक्यैर्भागत्यागलक्षणयैव केवलं लक्षितुं योग्ये **ब्रह्मणि** अपरिच्छिन्ने, ईशे तं विना मायातत्कार्ययोरनिर्वाहान्नियन्तृत्वाद्युपचरिते, अखिलविधिमनोऽगोचरे समस्तविधिवाक्यानामनियोज्ये अविषये मनसां चाविषये, कूटस्थे निर्विकारे, प्रत्यगात्मनि अन्तर्मुखवृत्त्यैवाऽज्ञानमात्रनिरसने जाते स्वयमेव प्रकाशमाने, आत्मनि वस्तुनि स्वस्मिन् परेशे परेषां ब्रह्मादीनां मायायाश्च नियन्तृत्वोपचरिते। तमात्मानं विना तेषां तत्कार्याणां चासिद्धेः, दृष्टमात्रे केवलमनुभूते एव अस्य कूटस्थब्रह्मभूतान्तःकरणवृत्तिमतः कर्माणि सञ्चितप्रारब्धक्रियमाणाख्यानि सर्वाण्यपि क्षीयन्ते नष्टानि भवन्ति। तत्र हेतुमाह- **खल्विति**। अस्येत्यनुवृत्त्या कूटस्थब्रह्मात्मसाक्षात्कारवतः पुरुषस्य हृदयग्रन्थिः हृदन्तःकरणं तस्य अयः प्रकाशकः आत्मा तयोर्ग्रन्थिः स्वात्माज्ञानरूपः अन्योन्यतादात्म्य-रूपेणैक्यरूपः संश्लेषः। स निश्चयेन खलु उद्भिद्यते तयोरन्तःकरणचिदात्मनोर्भेदप्रतीत्या छिन्नो भवति। तल्लिङ्गमाह-**छिद्यन्ते इति**। सर्वसंशयाः देहादात्मा भिन्नो वाऽभिन्न इत्यादयः अज्ञानग्रन्थिमूलत्वात्तेषां तन्नाशे ते छिद्यन्ते नश्यन्ति। तत्फलं चाह विशेषणेन-**जनिमृतिफलदा इति**। जन्ममरणफलप्रदाः। अतस्तन्निवृत्तौ जन्ममरणनिवृत्तिर्ब्रह्मज्ञानफलं इत्यर्थः।।९९।।

इदानीमेतादृशज्ञानिनो ब्रह्मात्मसाक्षात्कारवृत्तेर्वासनाजननपर्यन्तं दृढीकाराय ध्यानं तत्पूर्वावश्यकर्तव्यसहितमाह-**आदाविति**। आदौ उत्पत्तेः प्राक् तथान्ते नाशानन्तरं मध्ये प्रतीतिकाले असन्नपि जनिमृतिफलदं जनिर्जन्म मृतिर्मरणं ते एव फले प्रसवे तयोर्दातारं, कर्ममूलं कर्म क्रिया सा मूलं यस्य, विशालं महान्तं, भ्रमो विपरीतज्ञानं, मदः स्वश्रैष्ठ्यज्ञानं, मुदिता हर्षवृत्तिः, शोकः खेदवृत्तिः इत्यादीनि अनेकानि अनन्तानि पत्राणि पर्णानीव यस्य, कामक्रोधादिशाखं कामः प्रियविषयिणीच्छा, **क्रोधः** तत्प्रतिबन्धके रोषवृत्तिः आदिपदेन

**कामक्रोधादिशाखं सुतपशुवनिताकन्यकापक्षिसङ्घं**
**छित्त्वाऽसङ्गासिनैनं पटुमतिरभितश्चिन्तयेद् वासुदेवम्।।१००।।**

**जातं मय्येव सर्वं पुनरपि मयि तत्संस्थितं चैव विश्वं**
**सर्वं मय्येव याति प्रविलयमिति तद् ब्रह्म चैवाहमस्मि।**
**यस्य स्मृत्या च यज्ञाद्यखिलशुभविधौ सुप्रयातीह कार्यं**
**न्यूनं सम्पूर्णतां वै तमहमतिमुदैवाच्युतं सन्नतोऽस्मि।।१०१।।**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचिता शतश्लोकी सम्पूर्णा

---

लोभादिवृत्तयः ता एव शाखा इव यस्य, सुतपशुवनिताकन्यकापक्षिसङ्घं सुताः पुत्राः, पशवः गोवृषादयः, वनिताः स्त्रियः, कन्यकाः दुहितरः ते पक्षिणः पतत्रिणस्तेषां सङ्घो यस्मिन्संसारवृक्षं संसरणस्वभावं वृश्चनीयत्वात् वृक्षं "ऊर्ध्वमूलोऽवाक्शाख" इति श्रुतेः, "ऊर्ध्वमूलमधःशाख" मित्यादिस्मृतेश्च। अश्वत्थापरपर्यायं ज्ञात्वा असत्त्वेन प्रतीत्य अनुभूयेत्यर्थः। तत एनं उक्तलक्षणं संसारवृक्षं पटुमतिः पट्वी कुशला मतिः मननवती वृत्तिर्यस्य स पुमान् असङ्गासिना स्वासङ्गत्वानुभव एवासिः खड्गः तेन छित्त्वा विनाश्य। अभितः सर्वदा वासुदेवं, वा विकल्पेन असूनां प्राणेन्द्रियादीनां देवः प्रकाशकः आत्मा तं चिन्तयेत् अनुभवेत्। प्राणादीनां सत्त्वासत्त्वेन प्रकाशके त्वयि विकल्प इति भावः।।१००।।

इदानीं सर्वोत्पत्तिस्थितिलयाधारत्वेन स्वस्मिन् ब्रह्मत्वानुसन्धानपूर्वकं स्वात्मज्ञानस्यैवाऽखिलकर्मसमाप्तित्वं द्योतयन्नात्मानं नमस्करोति- **जातमिति**। सर्वं समस्तं द्वैतजातं मय्येव ब्रह्माभिन्ने कूटस्थात्मसहिते ज्ञाते ब्रह्मात्मनि, एवकारेणान्यः कोऽपि आधारो नास्तीति सूचितं, जातं आविर्भूतम्। पुनरपि पश्चादुत्पत्त्यनन्तरमपि तत्समस्तं विश्वं जगत् मयि शबले ब्रह्मात्मनि संस्थितं सम्यक् स्थितिं प्राप्तम्। किञ्च तत्सर्वं समस्तं जगत् मय्येव शबले ब्रह्मण्येव प्रविलयं निद्रां प्रलयसमये सबीजं, शुद्धे मयि च ज्ञानेन अत्यन्तनाशं तिरोधानमित्यर्थः। याति प्राप्नोति। इत्यतो हेतोः तत् "यतो वा इमानि भूतानि जायन्त" इत्यादिकया "तद् ब्रह्मेती"त्यन्तया श्रुत्योत्पत्तिस्थितिलयाधारत्वोपलक्षितोपादानत्वेन निर्दिष्टं ब्रह्म देशकालवस्तुकृतपरिच्छेदरहितं वस्तु अहम् अहंपदलक्षितः कूटस्थः प्रत्यगात्मा अस्मि भवामि, च पुनः यस्य ब्रह्माभिन्नप्रत्यगात्मनः स्मृत्याऽनुसन्धानेन यज्ञाद्यखिलशुभविधौ यज्ञः अश्वमेधआदिर्यस्य तादृशे समस्तशुभकर्मणि विधाने, कार्यं कर्त्तव्यविधिः न्यूनं तन्त्रादिभिर्न्यूनमपि वै निश्चयेन सम्पूर्णतां समाप्तिं फलप्रदत्वमित्यर्थः। सुप्रयाति प्राप्नोति। अहं ब्रह्माभिन्नकूटस्थात्मसाक्षात्कारवान् अतिमुदैव अत्यन्तमानन्दसाक्षात्कारवृत्त्यैव केवलं तं ब्रह्माभिन्नं प्रत्यगात्मानं अच्युतं अप्रच्युतस्वभावं सन्नतः अष्टाङ्गभूताष्टप्रकृतिसहितस्तत्र लीनः अस्मि भवामि[१]।।१०१।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्य-
आनन्दज्ञानाचार्यविरचिता शतश्लोकीटीका समाप्ता।।

---

१. अत्र मूलभूतः स्मृतिगतः श्लोकः—

यस्य स्मृत्या च नामोक्त्या जपहोमार्चनादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्।।

श्रीनारायणेन्द्रसरस्वतीविरचित-

वार्तिकाभरणोपेतम्

श्रीमत्सुरेश्वराचार्यविरचित-

वार्तिकोपेतम्

श्रीशङ्करभगवत्पादाचार्यविरचितं

# पञ्चीकरणम्

श्रीआनन्दज्ञानाचार्यविरचितं

विवरणम् च

श्रीरामतीर्थविरचित-

विवरणतत्त्वचन्द्रिकायुतम्

श्रीमच्छङ्करभगवत्पादाचार्यविरचितं

# पञ्चीकरणम्

+ॐ पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सर्वं विराडित्युच्यते। एतत् स्थूलशरीरमात्मनः। इन्द्रियैरर्थोपलब्धिर्जागरितम् । तदुभयाभिमान्यात्मा विश्वः । एतत्त्रयमकारः ।

अपञ्चीकृतपञ्चमहाभूतानि पञ्चतन्मात्राणि तत्कार्यं च पञ्चप्राणाः, दशेन्द्रियाणि मनो बुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते । एतत्सूक्ष्मशरीरमात्मनः। करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इत्युच्यते। तदुभयाभिमान्यात्मा तैजसः । एतत्त्रयमुकारः ।

शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते । एतत्कारणशरीरमात्मनः । तच्च न सत्, नासत्, नापि सदसत्, न भिन्नं, नाभिन्नं, नापि भिन्नाभिन्नं कुतश्चित्, न निरवयवं, न सावयवं, नोभयं, किन्तु केवलब्रह्मात्मैकत्वज्ञानापनोद्यम्। सर्वप्रकारज्ञानोपसंहारे बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिः । तदुभयाभिमान्यात्मा प्राज्ञः । एतत्त्रयं मकारः ।

अकार उकारे, उकारो मकारे, मकार ओङ्कारे, ओङ्कारेऽहम्येव । अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः नाज्ञानं नापि तत्कार्यं किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः । "तत्त्वमसि" ( छां० ६.८.७ ) "अहं ब्रह्मास्मि" ( बृ० १.४.१० ) "प्रज्ञानं ब्रह्म" ( ऐ० ३.३ ) "अयमात्मा ब्रह्म" ( मा० १.२ ) इत्यादिश्रुतिभ्यः । इति पञ्चीकरणं भवति ।। ॐ ।।

●

---

+पाठोऽयं आचार्यैः न स्वीकृतः । पाठान्तरेणादृतत्वात् निवेशितः ।

अथातः परमहंसानां समाधिविधिं व्याख्यास्यामः ।

ॐ सच्छब्दवाच्यमविद्याशबलं ब्रह्म । ब्रह्मणोऽव्यक्तम् । अव्यक्तान्महत् । महतोऽहङ्कारः । अहङ्कारात् पञ्चतन्मात्राणि । पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि । पञ्चमहाभूतेभ्योऽखिलं जगत् । पञ्चानां भूतानामेकैकं द्विधा विभज्य स्वार्द्धभागं विहायार्द्धं भागं चतुर्धा विभज्येतरेषु योजिते पञ्चीकरणं भवति । अस्य दर्शनं अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।

ॐ

तत्सत्परमात्मने नमः

श्रीमच्छङ्करभगवत्पादाचार्यविरचितं

# पञ्चीकरणम्

## ॐ पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सर्वं विराडित्युच्यते ।

### श्रीमत्सुरेश्वराचार्यविरचितं पञ्चीकरणवार्तिकम्

**ॐकारः सर्ववेदानां सारस्तत्त्वप्रकाशकः ।**
**तेन चित्तसमाधानं मुमुक्षूणां प्रकाश्यते ॥ १ ॥**

---

**श्रीमन्नारायणेन्द्रसरस्वतीविरचितं वार्तिकाभरणम्**

इह खलु परमेश्वराराधनार्थमनुष्ठितैर्नित्यादिकर्मभिः परिशुद्धान्तःकरणानामत एव नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमदमादिसाधनषट्कसम्पन्मुमुक्षुत्वाख्यसाधनचतुष्टयवतां ब्रह्मजिज्ञासूनां परित्यक्तकाम्यनिषिद्धकर्मणां परमहंसपरिव्राजकानां श्रवण-मनन-निदिध्यासन-पराणां आरुण्युपनिषदा "सन्धिं समाधावात्मन्याचरेत्" इति समाधिर्विहितः । स च समाधिरोङ्कारेण कर्त्तव्य इति "ॐ इत्यात्मानं युञ्जीत" इति तैत्तिरीयबृहन्नारायणोपनिषच्छ्रुतौ विहितः, "युज समाधौ" इति स्मृतेः । स च समाधिरोङ्कारेण कथं कर्त्तव्य इत्याकाङ्क्षायां तं प्रकारं वक्तुं भगवता भाष्यकारेण पञ्चीकरणं नाम प्रकरणमुद्दिष्टम् । तत्प्रकरणं व्याचिख्यासुर्भगवान् वार्त्तिककारः चिकीर्षितस्योक्तानुक्तद्विरुक्तचिन्तात्मकस्य तद्व्याख्यानरूपस्य वार्त्तिकस्य निर्विघ्नेन परिसमाप्तिप्रचयगमनसिद्ध्यर्थं—

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति ।

स्मृतेरोङ्कारोच्चारणं तदर्थतत्त्वानुस्मरणात्मकं च मङ्गलमाचरन्प्रकरणस्यार्थं संक्षेपेण श्रोतृबुद्धिसौकर्यार्थं कथयति—**ॐकार इति** । तेन ओङ्कारेण चित्तसमाधानं प्रकाश्यत इति सम्बन्धः । चित्तस्य समाधानं ब्रह्मात्माभेदाकारतयाऽवस्थानम्, अखण्डब्रह्माकारवृत्तिरूपेण परिणामः, न तु शास्त्रान्तरप्रसिद्धचित्तवृत्तिनिरोध इत्यर्थः । "ब्रह्मैवाहमस्मि इत्यभेदेनावस्थानं समाधिः" इति मूले वक्ष्यमाणत्वात् । 'समाधिः संविदुत्पत्तिः परजीवैक्यतां प्रति ।' इति स्मृतेश्च । तच्चितस्याखण्डाकारवृत्तिरूपज्ञानं येन प्रकारेण ओङ्कारेण जायते स प्रकारः प्रकाश्यत इत्यर्थः । ओङ्कारस्य ज्ञानजननसामर्थ्यमाह—**तत्त्वप्रकाशक इति** । तत्त्वमस्यादिवाक्यवद्विधिविधया विधिमुखेन 'नेति नेति' इति वाक्यवन्निषेधविधया च तत्त्वप्रकाशकत्वं तस्य श्रुतिस्मृतिप्रसिद्धमित्यर्थः । ननु तत्त्वमस्यादि-

**आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम् ।**
**तत्स्वमायासमावेशाद्बीजमव्याकृतात्मकम् ॥ २ ॥**

---

वाक्येभ्यः ओङ्कारस्य को वा विशेषः, येन ओङ्कारेणैव चित्तसमाधानं प्रकाश्यते? तत्राह—**सर्ववेदानां सार इति**। स मृदिव घटशरावादीनां सर्ववेदानुस्यूततया कारणत्वात् तेषां सारः "तद्यथा शंकुना सर्वाणि पर्णानि सन्तृण्णान्येवं ॐकारेण सर्वा वाक् सन्तृण्णा" इति श्रुतेरित्यर्थः।

अयमाशयः—यदि तत्त्वमस्यादिवाक्यानां मध्ये केनचिद्वाक्येन चित्तसमाधानप्रकारः प्रकाश्यते, अप्रकाशितवाक्यान्तराध्यायिनां ततो वाक्यात्समाधानासिद्धेर्वाक्यान्तरेऽपि तत्प्रकाशयितव्यं स्यादिति यत्नगौरवं स्यात्। ओङ्कारेण तत्प्रकाशने तु तस्य सर्ववेदवाक्यसारत्वात् सर्वत्र वाक्ये समाधानप्रकारः प्रकाश्यत इति न पृथक् कार्यः स्यात्। ओङ्कारेणैव सर्वेषां चित्तसमाधानसिद्धेश्च न यत्नान्तरं कार्यमिति लाघवम्। किञ्च वेदोच्चारणस्य पापनिवर्त्तकत्वस्मरणात् लौकिकवाक्यापेक्षया वेदवाक्यस्य स्वोच्चारणस्मरणद्वारा ज्ञानप्रतिबन्धककल्मषनिवर्तकत्वेन शीघ्रमप्रतिबद्धज्ञानोत्पादकत्वं विशेष इति वक्तव्यम्। अर्थबोधकत्वस्य उभयत्रापि तुल्यत्वेन प्रकारान्तरेणातिशयस्य वक्तुमशक्यत्वात्। एवञ्च सति ओङ्कारस्य सर्ववेदसारत्वेन सर्ववेदात्मकत्वात्तदुच्चारणस्य सर्ववेदोच्चारणत्वात्ततो बहुकल्मषनिवृत्त्या शीघ्रमप्रतिबद्धं ज्ञानं ततो भवति। किञ्च "ओमित्यात्मानं युञ्जीत" इत्यादिबहुश्रुतिषु तस्मिन्नादरदर्शनाच्च तेनैव समाधानं प्रकाशनीयमिति[1]। अत्राधिकारिणमाह—**मुमुक्षूणामिति**। अत्र च ओङ्कारप्रकाश्यं तत्त्वं विषयः, मोक्षः काम्यमानत्वात् मुख्यं प्रयोजनं, चित्तसमाधानशब्दितं तत्त्वज्ञानं अवान्तरप्रयोजनं, प्रकरणस्य फलस्य च जन्यजनकभावः सम्बन्धः, अधिकारिणः स्वकीयप्रयोजनजनकत्वं प्रकरणेन सम्बन्धः, मुमुक्षुरधिकारीत्यनुबन्धचतुष्टयं प्रवृत्त्यङ्गमर्थादुक्तमिति द्रष्टव्यम् ॥ १ ॥

इह भगवता भाष्यकारेण अध्यारोपापवादाभ्यामोङ्कारेण प्रत्यग्ब्रह्माभेदप्रतिपत्तिप्रकारं दर्शयितुमधिष्ठानस्य वास्तवं रूपम्, अध्यारोप्यप्रपञ्चस्य सृष्टिं च सिद्धवत्कृत्याध्यारोपमात्रमुदितम्। वार्त्तिकाचार्यस्तु उक्तानुक्तदुरुक्तचिन्तात्मकत्वाद्वार्तिकस्योक्तानुक्तं तदुभयं वक्तुकाम आदौ अध्यारोपात्पूर्वमवस्थितमधिष्ठानभूतात्मस्वरूपमाह—**आसीदेकमिति**। ब्रह्म देशकालवस्तुपरिच्छेदशून्यम्, अत एव एकं सजातीय-विजातीय-स्वगत-भेदशून्यं परं परमानन्दरूपं नित्यमुक्तं कालत्रयेऽपि सर्वानर्थरूपप्रपञ्चसम्बन्धशून्यं सच्चिदानन्दात्मकं वस्त्वासीत्सृष्टेः प्रागित्यर्थः। "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयं ब्रह्म, आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत्, विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतेरित्यर्थः। यद्यपि अद्वितीयस्य 'आसीत्' इति कालसम्बन्धो न युक्तः, तथापि श्रोतॄणां प्रतिपत्तिसौकर्यार्थं कालसम्बन्धमारोप्योपदिशतीति बोध्यम्। ननु जगदुपादानस्य कालत्रयेऽपि कथं सम्बन्धशून्यत्वं तत्राह—**अविक्रियमिति**। निरवयवत्वेन विभुत्वेन च परिणामपरिस्पन्दयोरसम्भवादुपादानत्वमपि न तस्यास्तीत्यर्थः। तर्हि कथं "आत्मन आकाशः सम्भूतः, तत्तेजोऽसृजत" इत्यादिश्रुतिभिरुपादानत्वाभिधानं ब्रह्मण इत्याशङ्क्य तत्त्वतोऽन्यथाभावलक्षणपरिणाम्युपादानत्वासम्भवेऽपि मायया अतत्त्वतोऽन्यथात्वलक्षणं विवर्त्तोपादानत्वं सम्भवतीत्याह—

---

१. 'प्रणवो धनुः' 'ओमित्येतत्' इत्यादौ सर्वत्र प्रणवेनैव आत्मा ध्यातव्य इत्युक्तेः तस्य जीवब्रह्मैक्यबोधकत्वस्यान्यत्रोक्तेः नानुध्यायाद्बहून् शब्दान् इति बहुशब्दध्याननिषेधाच्च प्रणवध्यानमेव युक्तमित्यर्थः।

**तस्मादाकाशमुत्पन्नं शब्दतन्मात्ररूपकम् ।**
**स्पर्शात्मकस्ततो वायुस्तेजो रूपात्मकं ततः ॥ ३ ॥**
**आपो रसात्मिकास्तस्मात्तेभ्यो गन्धात्मिका मही ।**
**शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत् ॥ ४ ॥**
**शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते ।**
**शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः ॥ ५ ॥**
**शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ।**
**तेभ्यः समभवत्सूत्रं भूतं[1] सर्वात्मकं महत् ॥ ६ ॥**

---

**तत्स्वमायेति** । स्वस्य ब्रह्मणः शक्तिभूता स्वस्मिन्नेवाध्यस्ता माया तस्याः समावेशः आध्यासिकतादात्म्यं तस्माद्बीजमुपादानमित्यर्थः । शुक्त्यादेर्विक्रियां विनापि रजताद्युपादानत्वदर्शनात् अविक्रियस्यापि जगद्विवर्तोपादानत्वमविरुद्धमित्यर्थः । ननु यत्र यत्कार्यं सूक्ष्मरूपेण वर्तते तदेव तस्य कार्यस्य बीजम्, अन्यथा तन्तूनामपि घटं प्रति बीजत्वं स्यात् । तथा च नित्यमुक्ते ब्रह्मणि प्रागुत्पत्तेर्जगत्सूक्ष्मरूपासम्भवात्कथं तद्बीजत्वमत आह—**अव्याकृतात्मकमिति** । स्वतो नित्यमुक्तस्य सूक्ष्मकार्याश्रयत्वासम्भवेऽपि मायायां तत्सम्भवात्तद्द्वारा अव्याकृतात्मकं अनभिव्यक्तनामरूपात्मकजगदाश्रयः "तद्धेदं तर्ह्यव्याकृतमासीत्" इति श्रुतेः । अतो बीजत्वं युक्तमित्यर्थः ॥ २ ॥

एवं ब्रह्मणः प्रपञ्चोपादानत्वमुपपाद्य इदानीं तस्मिञ्जगतः अध्यारोपार्थं ततः सृष्टिमाह—**तस्मादित्यादिना** सार्द्धेन । तस्य स्थूलाकाशवैलक्षण्यमाह—**शब्दतन्मात्ररूपकमिति** । शब्द एव तस्मिन्नाकाशे मात्रा मीयते, न तु अवकाशदातृत्वशान्तघोरमूढत्वादयो यस्मिन् तच्छब्दतन्मात्रं, तदेव रूपं यस्य, गुणगुणिनोरभेदात् । तथा शब्दमात्रमेवावगम्यते अवकाशदानादिव्यवहारविशेषा न सन्ति यस्मिन् तत्सूक्ष्ममाकाशमित्यर्थः । तदुक्तं **विष्णुपुराणे**–'तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि ते घोरा न मूढाश्चाविशेषिणः' इति। स्पर्शात्मक इत्यादावेवमेव योज्यम् ॥३॥

तत्तद्भूतानामसाधारणगुणान् पूर्वपूर्वकारणानुस्यूत्या प्राप्तगुणान्तराणि च सङ्गृह्याह—**शब्दैकगुणमिति** । पूर्वपूर्वभूतभावमापन्नस्यैव ब्रह्मण उत्तरोत्तरभूतोपादानत्वात्पूर्वपूर्वगुणानुस्यूतिरुत्तरोत्तरस्मिन्न्याय्येति भावः । ॥ ४ ॥

**शब्दस्पर्शरूपेति** स्पष्टम् ॥ ५ ॥

सूक्ष्मभूतानामुत्पत्तिमुक्त्वा तेषां कार्यमाह—**तेभ्य इति** । लिङ्गशरीरं च 'ज्ञानेन्द्रियाणि पञ्चैव' इत्यादिना वक्ष्यमाणम् । ननु इन्द्रियाण्यहङ्कारकार्याणि, प्राणास्तु करणानां सामान्यवृत्तिरिति साङ्ख्याः पौराणिकाश्चाहुः तत्कथं भूतकार्यत्वमत आह—**भूतमिति** । भूतात्मकं तत्कार्यमित्यर्थः । "अन्नमयं हि सोम्य मनः" इत्यादिश्रुतेः चक्षुरादीनां तेजआदिभूतैरुपचयदर्शनात् तेजआदिभूतग्राहकत्वाच्च भौतिकत्वमित्यर्थः । **सर्वात्मकमिति** । हिरण्यगर्भोपाधिभूतस्य समष्टिलिङ्गशरीरस्य

१. 'लिङ्गं' इत्यपि पाठः ।

**ततः स्थूलानि भूतानि पञ्च तेभ्यो विराडभूत् ।**
**पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः ॥ ७ ॥**
**पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा ।**
**एकैकं भागमादाय चतुर्धा विभजेत्पुनः ॥ ८ ॥**

---

सर्वव्यष्टिलिङ्गशरीरव्यापित्वात्सर्वात्मकत्वमित्यर्थः । यद्वा वैशेषिकादयस्तु चक्षुरादीन्द्रियाणि भौतिकान्येव तानि शरीरेण सह जायन्ते, सहैव नश्यन्ति, न तु शरीरान्तरसञ्चारिचक्षुरादिकरणसङ्घातरूपं लिङ्गं नाम किञ्चिदस्ति, मन एव तु केवलं शरीरान्तरसञ्चारीत्याहुः, तन्मतं निराकरोति—**सर्वात्मकमिति** । क्रमेण प्रतिपद्यमानदेवादिसर्वशरीरेषु प्रविश्य तेषामात्मतया वर्तमानमित्यर्थः । केवलस्य व्यापकस्यात्मनः स्वत उत्क्रान्त्याद्यसम्भवात् । ननु "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति श्रुतेश्च "तदापीतेः संसारव्यपदेशात्" ( ब्र० सू० अ० ४ पा० २ सू० ८ ) इति न्यायाच्च करणसमुदायरूपमात्मन उत्क्रान्त्याद्युपाधिभूतं लिङ्गं शरीरान्तरसञ्चार्यङ्गीकर्तव्यम् ।

अत्रेदमवधेयम्—मायायास्त्रिगुणात्मकत्वात्तत्कार्याणि भूतान्यपि तादृशान्येव । तत्र भूतानां सात्विकांशेभ्यः प्रत्येकं श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि जायन्ते, तेभ्यो मिलितेभ्यः मनोबुद्ध्यहङ्कारचित्तात्मकमन्तःकरणं जायते, तेषामेव राजसांशेभ्यः प्रत्येकं कर्मेन्द्रियाणि वागादीनि पञ्च क्रमेण जायन्ते, तेभ्यो मिलितेभ्यः प्राणापानादिपञ्चवृत्तिकः प्राणो जायते, तत्र चित्ताहङ्कारयोर्मनोबुद्ध्योरन्तर्भावेण अन्तःकरणस्य द्वैविध्ये सति ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणादिवृत्तिभेदेन पञ्चप्राणाः मनोबुद्धिश्चेति सप्तदशकं लिङ्गं तेभ्यः समभवदिति । एवमेव समष्टिलिङ्गं हिरण्यगर्भोपाधिभूतं गोव्यक्तिषु गोत्वमिव व्यष्टिलिङ्गेष्वनुस्यूतं जायते ।

इयांस्तु विशेषः—कृत्स्नब्रह्माण्डे कारणतया अनुस्यूतेभ्यः सात्त्विकेभ्यः सूक्ष्मभूतेभ्य एकैकतः समष्टिज्ञानेन्द्रियाणि, समुदितेभ्यस्तेभ्य एव समष्ट्यन्तःकरणम् । एवं राजसेभ्यः कर्मेन्द्रियाणि प्राणाश्च जायन्ते, समष्टिलिङ्गारम्भकतया तदनुस्यूतेभ्यः सात्विकादिभूतांशेभ्यो व्यष्टिकरणानीति । अत एव सगुणब्रह्मोपासकस्य समष्ट्यपरिच्छिन्नसगुणब्रह्मभावेन परिच्छेदाभिमाने निवृत्ते व्यष्टिलिङ्गं समष्टिलिङ्गतां प्रतिपद्यते । ततश्च हिरण्यगर्भोपाधिलिङ्गाभिमानेन हिरण्यगर्भताप्राप्तिरिति तत्र तत्र भाष्यकारादिभिरुच्यमानं सङ्गच्छते, अंशकार्यस्यांशिकार्यान्तर्भावादिति ॥ ६ ॥

एवं लिङ्गशरीरवत्तेभ्य एव भूतेभ्यः पञ्चीकरणेन स्थूलतामापन्नेभ्यो भूतेभ्यः समष्टिव्यष्टिस्थूलशरीरं जातमित्याह—**तत इति** । तेभ्य एव सूक्ष्मेभ्यो भूतेभ्यः स्थूलत्वविशिष्टवैशेष्येण जातानि स्थूलानि भूतानि, तेभ्यो विराट् स्थूलं शरीरं समष्ट्यात्मकं द्विप्रकारकमप्यभूदित्यर्थः । अत्रापि भूतेभ्योंऽशिभ्योऽण्डं, तदंशेभ्यः पिण्डमिति उपासकस्य वैश्वानरात्मत्वप्राप्तिः पूर्वोक्तरीत्या द्रष्टव्या । सूक्ष्मभूतेभ्यो भिन्नानि स्थूलानि जातानीति भ्रमं वारयति—**पञ्चीकृतानीति** । तान्येव पञ्चीकृतानि सन्ति स्थूलानीत्यर्थः ॥ ७ ॥

पञ्चीकरणप्रकारमाह—**पृथिव्यादीनीति** । एकैकं भूतं द्वेधा विभज्य तयोरेकं चतुर्धा विभज्य

**एकैकं भागमेकस्मिन्भूते संवेशयेत् क्रमात् ।**
**ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि ॥ ९ ॥**

**वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् ।**
**पञ्चीकरणमेतत्स्यादित्याहुस्तत्त्ववेदिनः ॥ १० ॥**

**पञ्चीकृतानि भूतानि तत्कार्यं च विराड् भवेत् ।**

---

चतुरो भागान् तद्व्यतिरिक्तभूतचतुष्टये योजयेत् । ततश्च स्वांशार्द्धं इतरभूतानामंशाश्चत्वारोऽपि मिलित्वाऽर्धमिति एकैकं भूतं पञ्चात्मकं सम्पद्यते इत्यर्थः ॥ ८ ॥

**एकैकमिति** । स्पष्टम् ॥ ९ ॥

**वाय्वादीति** । वाय्वादिभागाश्चत्वार आकाशभागार्धं च मिलित्वा आकाशभूतस्य भागाः पञ्चेति पूर्वेणान्वयेन योज्यम् । **वाय्वादिष्विति** । वायुभागार्धं भूतान्तराणां चतुर्णां भागाश्चत्वारः, ततश्च वायोर्भागाः पञ्च भवन्तीत्येवं क्रमेण सर्वत्र आदिशेदित्यर्थः ।

अत्र केचिद्वाचस्पतिमिश्रमतानुसारिणः—पञ्चीकरणं यद्यपि सम्प्रदायसिद्धं तथापि युक्तिविधुरत्वात् त्रिवृत्करणमेव आदरणीयम् । पञ्चीकरणपक्षे पृथिव्यादिभागानामाकाशवाय्वोः प्रवेशे रूपवत्त्वान्महत्त्वाच्च तयोश्चाक्षुषत्वं स्यात् । यद्यपि आकाशादिभागानामाधिक्यादितरभागानां च स्वल्पत्वादधिकेन स्वल्पस्याभिभूतत्वात्, "वैशेष्यात्तु तद्वादस्तद्वादः" (ब्र० सू० अ० २ पा० ३ सू० २२) इति न्यायेन चाक्षुषत्वाभावः तर्हि आकाशादौ पृथिव्यादिभागकल्पना व्यर्था, तेषां व्यवहारागोचरत्वात् । अथापि श्रुतिसिद्धत्वादेव कल्प्यत इति यद्युच्येत तथापि त्रिवृत्करणमेव श्रुतिसिद्धम् । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति श्रुतेर्न पञ्चीकरणं तत्र श्रुतेरभावादित्याहुस्तत्राह—**इत्याहुस्तत्त्ववेदिन इति** । श्रुतिस्मृतिन्यायतत्त्ववेदिन इत्यर्थः । श्रुतिस्तावद**दाथर्वणे**—"पृथिवी च पृथिवीमात्रा च" इत्यादिना स्थूलसूक्ष्मभूतकथनप्रस्तावे "वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च" इति तयोरपि स्थूलसूक्ष्मभेदं दर्शयति स्थूलत्वं च पञ्चीकृतत्वमेव, अन्यस्यासम्भवात्, 'पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः' इत्युक्तत्वाच्च । स्मृतिरपि स्कान्दे **ब्रह्मगीतासु** 'पञ्चीकृत्य शिवाज्ञया' इत्यादिना ।

न्यायश्च—श्रुतौ त्रिवृत्करणोक्तिबलादत्रिवृत्कृतानां स्थूलव्यवहारानर्हत्वं गम्यते, अन्यथा तदुक्तेर्वैयर्थ्यादत्रिवृत्कृतभूतकार्याणामिन्द्रियाणामतीन्द्रियत्वेन स्पष्टव्यवहारादर्शनाच्च त्रिवृत्करणमर्थवदिति वक्तव्यम् । एवं पञ्चीकरणाभावे आकाशवायुभ्यामपि स्पष्टावकाशदानादिस्थूलव्यवहारो न स्यादिति न्यायादेव पञ्चीकरणमङ्गीकार्यम् । त्रिवृत्करणश्रुतिस्तु छान्दोग्ये भूतत्रयसृष्टिश्रुतिर्यथा पञ्चभूतोपलक्षणार्था वियदधिकरण ( ब्र० सू० अ० २ पा० ३ सू० १ ) न्यायेन, तथा त्रिवृत्करणश्रुतिरपि पञ्चीकरणोपलक्षणार्था । चाक्षुषत्वापत्तिस्तु "वैशेष्यात्तु तद्वादस्तद्वाद" इति न्यायेनार्द्धभूयस्त्वादेव परिहृतेति भावः ॥ १० ॥

एवमुपोद्घाततया सृष्टिमभिधाय नित्यमुक्ते आत्मनि अतस्मिंस्तद्रूपत्वेन मायाकार्यत्वेन च

एतत् स्थूलशरीरमात्मनः।

**स्थूलं शरीरमेतत्स्यादशरीरस्य चात्मनः॥ ११॥**

इन्द्रियैरर्थोपलब्धिर्जागरितम्।

**अधिदैवतमध्यात्ममधिभूतमिति त्रिधा।**
**एकं ब्रह्म विभागेन भ्रमाद्भाति न तत्त्वतः॥ १२॥**
**इन्द्रियैरर्थविज्ञानं देवतानुग्रहान्वितैः।**
**शब्दादिविषयं ज्ञानं तज्जागरितमुच्यते॥ १३॥**

---

तस्या आरोपत्वं चोक्त्वा इदानीं तस्या ॐकारेणापवादसौकर्याय आरोपितस्य कृत्स्नस्य त्रैविध्यकरणार्थं पञ्चीकृतेत्यादि आचार्यवाक्यं व्याचष्टे—**पञ्चीकृतानीत्यादिना**।

विराट्शब्दार्थमाह—**स्थूलं शरीरमिति**। अनेन व्यष्टिसमष्टिशरीरद्वयमप्युक्तम्। ननु तस्य स्थूलशरीराङ्गीकारे अस्थूलमित्यादिश्रुतिविरोध इत्याशङ्क्य वस्तुतोऽशरीरस्य शरीरसम्बन्धासम्भवं वदन् तस्य मृषात्वमाह—**अशरीरस्येति**। चोऽवधारणे। वस्तुतः कालत्रयेऽपि शरीरसम्बन्धरहितस्यैवेत्यर्थः॥ ११॥

ननु "इन्द्रियैरर्थोपलब्धिर्जागरितम्" इति मूलमनुपपन्नम्। अद्वितीयात्मनि इन्द्रियादिभेदाभावादारोपितस्य तस्य सत्त्वेऽपि इन्द्रियाणां जडानां स्वतःप्रवृत्त्यसम्भवः, न चात्माऽसङ्गस्तत्प्रवर्त्तको भवति, अतस्तेषां विषयसम्बन्धाभावादर्थोपलब्धिर्न सम्भवतीत्यत आह—**अधिदैवतमिति**। अधिदैवतमित्यादिषु सप्तम्यर्थेऽव्ययीभावः। देवतासु विद्यमानं दिगादिकं अधिदैवतं आत्मनि कार्यकरणसङ्घाते शरीरे विद्यमाने श्रोत्राद्यध्यात्मं भूतेषु विद्यमानं विषयभूतं शब्दादिकमधिभूतम्। "तेभ्यः समभवत्" ( वार्ति० ६ ) इति वार्तिके भूतानामिन्द्रियाणां च सृष्टिः कण्ठरवेणोक्ता। इन्द्रियसृष्ट्युक्त्यैव समष्टीन्द्रियाभिमानिचेतनानामेव देवतात्वात् तत्सृष्टिरप्यर्थादुक्तेति त्रिविधस्याप्यात्मन्यारोपो दर्शित इति भावः। एवं सति "इन्द्रियैरर्थोपलब्धिः" इति वाक्यमुपपन्नम्॥ १२॥

देवतानामिन्द्रियप्रवर्त्तकत्वोपपत्तिरित्याह—**इन्द्रियैरिति**। एवं सति देवतानुग्रहान्वितैरिन्द्रियैरर्थविज्ञानं जायते, तज्ज्ञानं जागरितमुच्यत इति, एवं वाक्यभेदेन ज्ञानपदद्वयस्याप्यन्वयो द्रष्टव्यः।

यद्वा इन्द्रियजन्यज्ञानं अन्यच्च शास्त्रानुमानादिजन्यं ज्ञानं सर्वं च जागरितमिति ज्ञानपदद्वयस्यापुनरुक्तिः। अत्र उपलब्धिरित्युक्ते तुरीये गतम् अतः **अर्थेति**। विषयोपलब्धिरित्यर्थः। सुषुप्तावज्ञानस्य विषयत्वोपलब्धेरर्थपदं शब्दादिपरत्वेन व्याख्यातम्, शब्दादिविषयमित्यनेन। तथापि स्वप्ने वासनारूपशब्दाद्यर्थोपलब्धेः सत्त्वादतिव्याप्तिवारणाय इन्द्रियैरित्युक्तम्। न च तत्रापि इन्द्रियाणि दृश्यन्त इति वाच्यम्, तेषां वासनामात्रत्वात्। न च वासनारूपैरपि तैरर्थोपलब्धिस्तत्रास्तीति वाच्यम्, वासनारूपाणां तेषामर्थानामिव विषयत्वेन साक्षिभास्यत्वमेव नतूपलब्धौ करणत्वम्। तत्प्रतीतिस्तु जाग्रत्काले करणत्वप्रतीतेस्तद्वासनामात्रं देवतानुग्रहाभावेन मुख्यकरणत्वाभावादित्याशयेन

**श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् ।**
**अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम् ॥ १४ ॥**

**त्वगध्यात्ममिति प्रोक्तं स्प्रष्टव्यं स्पर्शलक्षणम् ।**
**अधिभूतं तदित्युक्तं वायुस्तत्राधिदैवतम् ॥ १५ ॥**

**चक्षुरध्यात्ममित्युक्तं द्रष्टव्यं रूपलक्षणम् ।**
**अधिभूतं तदित्युक्तमादित्योऽत्राधिदैवतम् ॥ १६ ॥**

---

"देवतानुग्रहान्वितैः" इत्युक्तम् । न चैवमपि मनःकरणं तत्रास्तीति वाच्यम्, तस्येन्द्रियत्वाभावात् "मनः सर्वेन्द्रियाणि च ।" इत्यादिश्रुतौ इन्द्रियेभ्यः पृथग्ग्रहणात् । अत एव श्रुतेः इन्द्रियत्वाभावनिश्चयात् "मनःषष्ठानीन्द्रियाणि" इत्यत्र विजातीयेनैव सङ्ख्यापूरणं कार्यम् । "यजमानपञ्चमा इडां भक्षयन्ति" इत्यत्र अनृत्विजाऽपि विजातीयेन यजमानेन सङ्ख्यापूरणदर्शनात् । सजातीयेनैव संख्यापूरणन्यायस्तु "गुहां प्रविष्टौ" ( ब्र० सू० अ० १ पा० २ सू० ११ ) इत्यधिकरणसिद्धसन्देहस्थले एव, न तु मानान्तरेण विजातीयत्वनिश्चयस्थलेऽपि इति भावः । स्वप्ने मनस अर्थोपलब्धि प्रत्युत्पादकत्वेन करणत्वाभावाच्च न तदा अतिव्याप्तिरिति । न चैवमपि समाधिमूर्च्छयोरव्याप्तिः, तत्र इन्द्रियैरुपलब्ध्यभावात्तयोर्जागरणत्वादिति वाच्यम्, मूर्च्छाया "मुग्धेऽर्धसम्पत्तिः" ( ब्र० सू० अ० ३ पा २ सू० १० ) इति न्यायेन अजागरणत्वात्समाधेस्तुरीयावस्थात्वेनाजागरणत्वाच्चेति भावः ॥ १३ ॥

इदानीमध्यात्मादिविभागं सुखप्रतिपत्त्यर्थं विविच्य दर्शयति—**श्रोत्रमित्यादिना** "ईशस्तत्राधिदैवतम्" इत्यन्तेन । अत्राधिभूतमिति तत्तदिन्द्रियविषय उच्यते, शब्दस्वरूपं श्रोत्रेन्द्रियस्य विषय इत्यर्थः । एवं सर्वत्र योज्यम् । "दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" इत्यादिश्रुत्या दिगादीनामधिष्ठातृदेवतात्वावगमात्तेषां तथात्वमङ्गीकार्यमित्यर्थः । एतेन जीवाधिष्ठितानामेवेन्द्रियाणां प्रवृत्त्युपपत्तेस्तदधिष्ठात्र्यो देवता न सन्तीति वदन्तो वैशेषिकादयो निरस्ताः श्रुतिविरोधादसङ्गस्य[1] जीवस्याधिष्ठातृत्वानुपपत्तेश्चेति । यद्यपि श्रुतौ "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्यादिना वागग्न्यादिक्रमेणाध्यात्मादिविभाग उक्तः, तथापि तदुत्पादकतद्ग्राह्यभूतक्रमेण तत्रापि ज्ञानेन्द्रियपूर्वकत्वात् कर्मेन्द्रियप्रवृत्तेस्तदुत्पादकतद्ग्राह्यभतक्रमेण अध्यात्मादिक्रम इहोक्तः ॥ १४ ॥

**त्वगध्यात्ममिति । वायुरिति ।** यद्यपि "ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्" इति श्रुतौ ओषधिवनस्पतीनां त्वग्देवतात्वमुक्तं तथापि देवतात्वाप्रसिद्धेस्तेषामधिष्ठाता वायुरेव ओषध्यादिशब्देनोक्त इति मत्वा इह वायुरुक्तः । वृक्षाणां वाय्वधिष्ठितत्वं च श्रुत्यादिप्रसिद्धमिति भावः ॥१५॥

**चक्षुरिति स्पष्टम्** ॥ १६ ॥

---

१. यद्यपि देवता अपि जीवा एवेत्यसङ्गत्वं समानं तथापि तेषामाधिकारिकत्वात् अनुग्राहकत्वं जीवानां स्वेन्द्रियनिममेतेऽसामर्थ्याच्च एवमुक्तम् ।

**जिह्वाऽध्यात्मं तयाऽऽस्वाद्यमधिभूतं रसात्मकम् ।**
**वरुणो देवता तत्र जिह्वायामधिदैवतम् ॥ १७ ॥**
**घ्राणमध्यात्ममित्युक्तं घ्रातव्यं गन्धलक्षणम् ।**
**अधिभूतं तदित्युक्तं[1] पृथिव्यत्राधिदैवतम् ॥ १८ ॥**
**वागध्यात्ममिति प्रोक्तं वक्तव्यं शब्दलक्षणम् ।**
**अधिभूतं तदित्युक्तमग्निस्तत्राधि दै वतम् ॥ १९ ॥**
**हस्तावध्यात्ममित्युक्तमादातव्यं च यद्भवेत् ।**
**अधिभूतं तदित्युक्तमिन्द्रस्तत्राधिदैवतम् ॥ २० ॥**
**पादावध्यात्ममित्युक्तं गन्तव्यं तत्र यद्भवेत् ।**
**अधिभूतं तदित्युक्तं विष्णुस्तत्राधिदैवतम् ॥ २१ ॥**

---

**जिह्वेति।** रसात्मकमास्वाद्यं अधिभूतमित्यन्वयः। "वरुणो वा एतं गृह्णाति" इत्यादौ व्याधिविशेषे वरुणशब्दस्य प्रयोगात्तद्व्यावृत्त्यर्थं देवतारूपोऽधिदैवतमित्युक्तम् । वरुणस्य चाधिष्ठातृत्वाद्रसस्य चाबात्मकत्वात् "शन्नो मित्रः शं वरुणः" इत्यत्र इन्द्रियदेवतासु तस्य गणनाच्च तत्र देवतेति भावः॥१७॥

**घ्राणमध्यात्ममिति । पृथिवीति ।** घ्राणेन्द्रियस्य पार्थिवत्वात्पृथिव्यभिमानिदेवतायास्तत्र देवतात्वमुचितमिति 'पृथिव्यत्राधिदैवतम्' इत्युक्तम् । यद्वा "दिग्वातार्कप्रचेतो"–इति सम्प्रदायश्लोके अश्विनोः घ्राणाधिदेवतत्वोक्तेः वडवाभूतसूर्यपत्नीनासिकानिर्गतत्वेन पुराणप्रसिद्धेश्च तयोरेवाधिदैवतत्वौचित्याच्च, इह पृथिवीशब्देन तावेवोक्तौ "अपूतौ वा इमौ मनुष्यचरौ" इत्यत्र तयोर्मनुष्यवत्पृथ्वीसम्बन्धश्रवणात् । यद्यपि "वायुः प्राणो भूत्वा नासिके प्राविशत्" इत्यत्र वायोर्देवतात्वमुक्तं, तथापि नासिकासञ्चारिश्वासरूपेण वायोर्गन्धग्रहणे सहकारित्वमात्रेण तथोक्तम् । वस्तुतस्तत्र वायुशब्देन तत्सहचारिपूर्वोक्तदेवतैव ग्राह्येति न विरोधः ॥ १८ ॥

वैशेषिकादयस्तु–कर्मेन्द्रियाणि न सन्त्येव हस्ताद्यवच्छिन्नात्मनि प्रयत्नोत्पत्तौ तत एव हस्तादौ व्यापारोत्पत्तिसम्भवादित्याहुः । तदयुक्तम् । "अग्निर्वाग्भूत्वा" इत्यादिश्रुतिविरोधात्कुणित्वादिप्रापककर्मप्रतिबद्धेन्द्रियाभावे कुणित्वपङ्गुत्वाद्यसम्भवापत्तेः। अन्यथा तत्तद्गोलकावच्छिन्नात्ममनः संयोगादेव ज्ञानोत्पत्तिसम्भवेन ज्ञानेन्द्रियाणामप्यभावप्रसङ्गाच्चेत्यभिप्रेत्य कर्मेन्द्रियेषूक्तविभागमाह–**वागध्यात्ममिति** । वागादयश्च यथाक्रमं राजसाकाशादिभूतकार्याणीति बोध्यम् ॥ १९ ॥

**हस्तावध्यात्ममिति । इन्द्र इति ।** "इन्द्रो मे बले श्रितः" इति श्रुत्या इन्द्रस्य बलाधिष्ठातृत्वाद्बलस्य "बाहुवोर्बलम्" इति श्रुत्या बाहुधर्मत्वादिन्द्रो हस्ताधिदैवतमित्यर्थः ॥ २० ॥

**पादाविति । विष्णुरिति ।** विष्णोर्विक्रमणकर्तृत्वात् विक्रमणहेतुपादाधिष्ठातृत्वं तस्योचितमित्यर्थः ॥ २१ ॥

---

१. अश्विनौ इत्यपि पाठः ।

**पायुरिन्द्रियमध्यात्मं विसर्गस्तत्र यो भवेत् ।**
**अधिभूतं तदित्युक्तं मृत्युस्तत्राधिदैवतम् ॥ २२ ॥**
**उपस्थेन्द्रियमध्यात्मं स्त्र्याद्यानन्दस्य कारणम् ।**
**अधिभूतं तदित्युक्तमधिदैवं प्रजापतिः ॥ २३ ॥**
**मनोऽध्यात्ममिति प्रोक्तं मन्तव्यं तत्र यद्भवेत् ।**
**अधिभूतं तदित्युक्तं चन्द्रस्तत्राधिदैवतम् ॥ २४ ॥**
**बुद्धिरध्यात्ममित्युक्तं बोद्धव्यं तत्र यद्भवेत् ।**
**अधिभूतं तदित्युक्तमधिदैवं बृहस्पतिः ॥ २५ ॥**
**अहंकारस्तथाऽध्यात्ममहङ्कर्तव्यमेव च ।**
**अधिभूतं तदित्युक्तं रुद्रस्तत्राधिदैवतम् ॥ २६ ॥**
**चित्तमध्यात्ममित्युक्तं चेतव्यं तत्र यद्भवेत् ।**
**अधिभूतं तदित्युक्तं क्षेत्रज्ञोऽत्राधिदैवतम् ॥ २७ ॥**
**तमोऽध्यात्ममिति प्रोक्तं विकारस्तत्र यो भवेत् ।**
**अधिभूतं तदित्युक्तमीश्वरोऽत्राधिदैवतम् ॥ २८ ॥**
**बाह्यान्तःकरणैरेवं देवतानुग्रहान्वितैः ।**
**स्वं स्वं च विषयज्ञानं तज्जागरितमुच्यते ॥ २९ ॥**

---

**पायुरिति** स्पष्टम् ॥ २२ ॥

**उपस्थेति । प्रजापतिरिति ।** यद्यपि "आपो रेतो भूत्वा शिश्नं प्राविशन्" इति श्रुतौ अपां देवतात्वमुक्तं, तथापि तत्र अप्शब्देन तदुपलक्षितपञ्चभूतोपाधिकः प्रजापतिरेवोक्त इति भावः ॥२३॥

मन्तव्यबोद्धव्यादिकं सर्वं यद्यपि श्रोतव्यादिरूपमेव, तथापि मन्तव्यत्वादिरूपेण श्रोतव्याद्यपेक्षया भेदमङ्गीकृत्य तेषां मनआदिविषयत्वमाह—**मनोऽध्यात्ममिति** त्रिभिः **मन्तव्यमि**त्यादिना । बृहस्पत्यादीनां तु बुद्ध्यादिदेवतात्वमागमादवगन्तव्यम् । इतरेषां तु "अग्निर्वाग्भूत्वा" इत्यादिश्रुतौ तथात्वं स्पष्टमिति ॥ २४-२५-२६ ॥

**चित्तमिति ।** क्षेत्रज्ञः साक्षीत्यर्थः ॥ २७ ॥

**तम इति । ईश्वरः** मायाप्रवर्त्तको जगत्कारणमिति भेदः ॥ २८ ॥

एवमध्यात्मादिविभागं प्रदर्श्य 'इन्द्रियैरर्थोपलब्धिर्जागरितम्' इति वाक्ये इन्द्रियग्रहणं करणोपलक्षणार्थमित्यभिप्रेत्य वदन् वाक्यार्थमुपसंहरति—**बाह्येति** । अत्र ज्ञानमिति कर्मेन्द्रियव्यापाराणामुपलक्षणम् । अन्यथा कर्मेन्द्रियस्यासंग्रहापातात् स्वरूपनिरूपणवैयर्थ्यं स्यादिति ॥ २९ ॥

तदुभयाभिमान्यात्मा विश्वः। एतत्त्रयमकारः।

येयं जागरितावस्था शरीरं करणाश्रयम्।
यस्तयोरभिमानी स्याद्विश्व इत्यभिधीयते ॥ ३० ॥

अपञ्चीकृतपञ्चमहाभूतानि पञ्चतन्मात्राणि। तत्कार्यं च पञ्च प्राणाः दशेन्द्रियाणि मनो बुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते। एतत्सूक्ष्मशरीरमात्मनः।

विश्वं वैराजरूपेण पश्येद्भेदनिवृत्तये।
ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ॥ ३१ ॥
श्रोत्रत्वङ्नयनघ्राणजिह्वा धीन्द्रियपञ्चकम्।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् ॥ ३२ ॥

---

**तदुभयाभिमानी** इत्यत्रोभयशब्दार्थं वदन् तद्वाक्यार्थमाह—**येयमिति**। विश्वस्य स्थूलसूक्ष्मकारणशरीरत्रयाभिमानित्वात्सूक्ष्मशरीरसंग्रहाय 'शरीरं करणाश्रयम्' इत्युक्तम्। अत एव तमश्शब्दितं कारणशरीरमपि 'तमोऽध्यात्मम्' इत्यत्रोक्तम्। अन्यथा जागरावस्थोक्तिप्रस्तावे तस्यानवसरप्रसङ्गात्। तच्च इह शरीरग्रहणेन गृहीतमिति बोध्यम् ॥ ३० ॥

ननु 'तत्कार्यं च विराड् भवेत्' इत्यत्र समष्टिव्यष्टिशरीरयोरभिधानात् समष्टौ च वैश्वानरशब्दितस्य वैराजस्याभिमानित्वात्कथं व्यष्ट्यभिमानिनो विश्वस्य तदुभयाभिमानित्वम्? अत आह—**विश्वमिति**। वैराजस्य रूपं यस्य स तथा। भावप्रधानो निर्देशः। वैराजरूपत्वेनेत्यर्थः। वैराजं विश्वात्मत्वेन पश्येदित्यर्थः। हिरण्यगर्भरूपेण चिन्तयेदित्यादावप्येवमेवार्थः यथाश्रुते विश्वस्य वैराजान्तर्भावे विश्वस्य प्राधान्यं न स्यात्। तथा च सति प्रत्यगात्मशोधनं न भवेत्। वैराजादीनां ईश्वरावस्थाभेदत्वेन प्रत्यगात्मावस्थाभेदत्वाभावात्। तथा सति "अकारमात्रं विश्वः स्यात्। अकारं पुरुषं विश्वमुकारे प्रविलापयेत्" इत्यादि वक्ष्यमाणाः विश्वादिप्राधान्यव्यपदेशा विरुध्येरन्।[1]

एतदुक्तं भवति—एकस्यैव चैतन्यस्य समष्टिव्यष्ट्यभिमानभेदेन भेदाज्जीवानामपि "सर्वे जीवाः सर्वमयाः" इति श्रुत्या अपरिच्छेदात्परिच्छिन्नव्यष्ट्यभिमानकृतः परिच्छेदभ्रमः। तत्र समष्टिव्यष्ट्योः स्थूलत्वसामान्येन अभेदे चिन्तिते परिच्छिन्नाभिमाननिवृत्त्या परिच्छेदभ्रमनिवृत्तौ तदभिमानिनोरपि विश्ववैराजयोरभेददर्शनं स्यादिति 'एतत्त्रयमकारः' इत्यादिनोक्तम्।

पादानां मात्राणां चाभेदं श्रौतक्रममनुसृत्यैव "अकारमात्रं विश्वः स्यात्' इत्यादिना वक्ष्यामीत्यभिसन्धाय अपञ्चीकृतेत्यादिनोक्तं द्वितीयपादं व्याचष्टे—**ज्ञानेन्द्रियाणी**त्यादिना ॥ ३१ ॥

**श्रोत्रत्वगिति** स्पष्टम् ॥ ३२ ॥

---

१. व्यतिहारो विंशिषन्तीति सूत्रात् परस्पराभेदध्यानस्यावश्यकत्वं शास्त्रसिद्धमेव।

मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ।
संकल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥ ३३ ॥
अभिमानात्मकस्तद्वदहंकारः प्रकीर्तितः ।
अनुसन्धानरूपं च चित्तमित्यभिधीयते ॥ ३४ ॥
प्राणोऽपानस्तथा व्यान उदानाख्यस्तथैव च ।
समानश्चेति पञ्चैताः कीर्तिताः प्राणवृत्तयः ॥ ३५ ॥
खं वाय्वग्न्यम्बुक्षितयो भूतसूक्ष्माणि पञ्च च ।
अविद्याकामकर्माणि लिङ्गं पुर्यष्टकं विदुः ॥ ३६ ॥

---

**मनो बुद्धिरिति । सङ्कल्पाख्यमिति ।** सङ्कल्पवृत्तिरूपेण परिणतमन्तःकरणं मन इत्यर्थः । निश्चयाख्यवृत्तिरूपेण परिणतमन्तःकरणं बुद्धिः । ३३ ॥

**अभिमानात्मक इति ।** अभिमानवृत्तिरूपेण परिणतमन्तःकरणमहङ्कारः । पूर्वोत्तरानुसन्धानरूपवृत्तिमच्चित्तमित्यर्थः । "मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् । संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥' इत्यभियुक्तोक्तेः । तत्र गर्वोऽभिमानः, स्मरणं अनुसन्धानं, विषयाः साध्या वृत्तय इत्यर्थः ॥ ३४ ॥

**प्राणोऽपान** इति स्पष्टम् ॥ ३५ ॥

**खं वाय्विति । पुर्यष्टकमिति ।** एकैकं पञ्चकमेकैका पुरी, मनआदिचतुष्टयमेका पुरी, कामादिकं प्रत्येकमेकैका पुरीति पुर्यष्टकम् । एतच्च ज्ञानेन्द्रियादिकं जीवस्य भोगसाधनत्वात्तदुपाधित्वेन तदवस्थानप्रदेशत्वाच्च पुरीव राज्ञः पुरीत्यर्थः । "ज्ञानेन्द्रियाणि खलु पञ्च[1] तथा पुराणि, कर्मेन्द्रियाणि[2] मनआदिचतुष्टय[3] च । प्राणादिपञ्चकमथो[4] वियदादिकं[5] च, कामश्च[6] कर्म[7] च तमः[8] पुनरष्टमी पुरी ॥" इत्यभियुक्तोक्तेः । अत्र वार्तिके अभियुक्तश्लोके चाविद्यातमश्शब्दौ पूर्वपूर्वभ्रमजन्यवासनारूपाविद्यापरौ, मूलाविद्यायाः कारणशरीरत्वेन सूक्ष्मशरीरान्तर्भावासम्भवात् । पूर्वपूर्वभ्रमजन्यवासनायामप्यविद्याशब्दः प्रयुक्तो **वाचस्पतिमिश्रैः** "अनिर्वाच्याऽविद्याद्वितयसचिवस्य" इत्यत्र । यद्यपि 'पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥' इति प्राणादिसप्तदशकमेव लिङ्गशरीरमित्यात्मबोधादावुक्तम्[1] । अत्र च कामकर्मादीनामपि लिङ्गशरीरान्तर्भाव उच्यते "एतत्सूक्ष्मशरीरं स्यात्" इति । तथाप्यात्मबोधादिश्लोकेषूपलक्षणपरत्वेन कामकर्मादीनामपि ग्रहणं स्वीकर्तव्यम् । अन्यथा तेषां शरीरत्रयेऽप्यन्तर्भावाभावेन शरीरत्रयापलापेऽपि तदपलापाभावप्रसङ्गात् । तथा च स्थूलप्रपञ्चः सर्वोऽपि स्थूलशरीरम्, सूक्ष्मप्रपञ्चः सर्वोऽपि सूक्ष्मशरीरं, मूलप्रकृतिः कारणशरीरमिति शरीरत्रयापलापे सर्वप्रपञ्चापलापसिद्धिरिति द्रष्टव्यम् ॥ ३६ ॥

---

१. आ० प्रा०–१३ ।

**त्रिपञ्चाङ्गान्यथो वक्ष्ये पूर्वोक्तस्य हि लब्धये ।**
**तैश्च सर्वैः सदा कार्यं निदिध्यासनमेव तु ॥ १०० ॥**
**नित्याभ्यासादृते प्राप्तिर्न भवेत्सच्चिदात्मनः ।**
**तस्माद्ब्रह्म निदिध्यासेज्जिज्ञासुः श्रेयसे चिरम् ॥ १०१ ॥**
**यमो हि नियमस्त्यागो मौनं देशश्च कालता ।**
**आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ॥ १०२ ॥**
**प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।**
**आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥ १०३ ॥**

---

च्छेदरूपो द्वितीयो दोष इति । न केवलं दोषद्वयस्यैव प्राप्तिरपि तु वेदान्तमतहानं च । वेदान्तमतस्याद्वैतस्य हानं त्यागो भविष्यति, प्रारब्धग्रहणरूपस्य द्वैतस्य याथार्थ्यादित्यर्थः । तर्हि किं प्रतिपत्तव्यमित्यत आह—**यत इति** । यतो यस्याः सकाशात् ज्ञानं भवति तादृशी सा श्रुतिः । ग्राह्येति शेषः । सा श्रुतिस्तु—'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥' इति । एतदभिप्रायः क इति चेल्लिख्यते—धीरो विवेकी ब्राह्मणो ब्रह्म भवितुमिच्छुस्तमेव वेदान्तप्रसिद्धमात्मानं विज्ञायाऽऽदावुपदेशतः शास्त्रतश्च ज्ञात्वाऽनन्तरं प्रज्ञां शास्त्राचार्योपदिष्टविषयामपरोक्षानुभवपर्यन्तां जिज्ञासापरिसमाप्तिकरीं कुर्वीत । बहून् कर्मोपासनाप्रतिपादकान् शब्दान् वाक्यसन्दर्भान्नानुध्यायान्न चिन्तयेत् । तर्हि तान् ब्रूयात्किं तेनेत्याह—**वाच इति** । तद्द्वैतशास्त्रपठनं वाचो विग्लापनं विशेषेण श्रमकरम् । हीति सर्वानुभवसिद्धमित्यलं पल्लवितेन ॥९९॥

तदेवमेतावता ग्रन्थसन्दर्भेण मुख्याधिकारिणो वैराग्यादिसाधनचतुष्टयपूर्वकं वेदान्तवाक्यविचार एव प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा मुख्यं मोक्षकारणमित्यभिहितम् । इदानीमसकृद्विचार्यापि बुद्धिमान्द्यविषयासक्त्यादिप्रतिबन्धेनापरोक्षज्ञानं यस्य न जायते यस्य मन्दाधिकारिणो निर्गुणब्रह्मोपासनमेव मुख्यं साधनमित्यभिप्रेत्य ससाधनं ध्यानयोगं प्रतिजानत आचार्याः—**त्रिपञ्चेति** । अथोशब्दोऽधिकारिभेदार्थः । क्वचित् 'अत' इति पाठस्तस्मिन् पक्षे यतो मन्दाधिकारो विचारं न लभतेऽतो हेतोरित्यर्थः । त्रिपञ्च त्रिगुणितानि पञ्च, पञ्चदशेत्यर्थः । तत्सङ्ख्याकान्यङ्गानि निदिध्यासनाङ्गिसाधनविशेषान् यज्ञसाधकप्रयाजादिवदित्यर्थः । वक्ष्ये वक्ष्यामि । तैर्वक्ष्यमाणैः सर्वैरङ्गैर्निदिध्यासनमेव कार्यं नतु तूष्णीमवस्थानमुचितमित्यर्थः । निदिध्यासनकर्तव्यप्रतिज्ञाप्रयोजनमाह—**पूर्वोक्तस्येति** । पूर्वोक्तस्य स्वरूपावस्थानलक्षणमोक्षस्य सिद्धय इति । हीति वेदान्तप्रसिद्धौ । तुशब्दः पातञ्जलवैलक्षण्यलक्षणेन मोक्षस्य सिद्धय इति । अनेनाष्टाङ्गप्रतिपादकं पातञ्जलमवैदिकत्वाद्वैशेषिकादिवदनादेयमिति ध्वनितम् ॥ १०० ॥

मन्दाधिकार्यन्यत्सर्वं कर्म सगुणोपासनविचाररूपं साधनं च विहाय श्रद्धयाऽऽचार्योक्तप्रकारेण निर्गुणं ब्रह्मैव निदिध्यासेदित्याह—**नित्येति** । स्पष्टम् ॥ १०१ ॥

ननु कानि तान्यङ्गानि यैः सह निदिध्यासनं कर्त्तव्यमित्यपेक्षायां तानि निर्दिशति—**यम इति** द्वाभ्याम् । उत्तानार्थावुभावपि श्लोकौ ॥ १०२-१०३ ॥

सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।
यमोऽयमिति सम्प्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ १०४ ॥

सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।
नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ १०५ ॥

त्यागः प्रपञ्चरूपस्य चिदात्मत्त्वावलोकनात् ।
त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ १०६ ॥

यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः ॥ १०७ ॥

---

इदानीमेतेषां प्रत्येकं निर्देशक्रमेण स्वाभिमतानि लक्षणान्याह—सर्वमित्याद्येकविंशत्या । तत्र प्रथमोद्दिष्टं यमं तावद्दर्शयति—**सर्वमिति** । सर्वमाकाशादि देहान्तं जगद्ब्रह्म, बाधसामानाधिकरण्यद्वारा स्थाणुपुरुषादिवदित्यर्थः । इति विज्ञानान्निश्चयाद्धेतोरिन्द्रियाणां श्रोत्रादीनामेकादशकरणानां ग्रामः समूहस्तस्य संयमः सम्यक् शब्दादिविषयाणां विनाशित्वसातिशयत्वदुःखदत्वादिदोषदर्शनात् यमो विषयेभ्यो निवारणम् अयं यम इति सम्प्रोक्तः, न तु केवलमहिंसादिरित्यर्थः । ततश्च किमत आह—**अभ्यसनीय इति** । अयं मुहुर्मुहुरभ्यसनीय इति ॥ १०४ ॥

एवं यमं लक्षयित्वा नियमं लक्षयति—**साजतीयेति** । सजातीयं प्रत्यगभिन्नं परं ब्रह्म, तदेकाकारो वृत्तिप्रवाहः सजातीयप्रवाहः । यद्वा सजातीयानामसङ्गोऽहमविक्रियोऽहमित्यादिप्रत्यगभिन्नब्रह्मप्रत्ययानां प्रवाहः । च पुनः, **विजातीयतिरस्कृतिः**—विजातीयं ब्रह्मात्मविलक्षणम्, जगत्पूर्वसंस्काराज्जायमाना तदाकारा वृत्तिरित्यर्थः । तस्य तिरस्कृतिर्दोषस्मृत्याऽधिकोपेक्षाऽनादर इत्यर्थः । अयं नियम उक्तः । न तु केवलं शौचादिरित्यर्थः । हीत्युपनिषत्प्रसिद्धौ । नन्वनयोरुपनिषत्प्रसिद्धया कः पुरुषार्थ इति चेदत आह—**परमानन्द इति** । ततश्च किमत आह—**नियमादित्यादि** । सुगमम् ॥१०५॥

इदानीं तृतीयं त्यागं लक्षयति—**त्याग इति** । प्रपञ्चरूपस्य प्रपञ्चो नामरूपलक्षणः । रूप्यते घटोऽयं पटोऽयम् इत्यादि नामरूपतो निरूप्यते व्यवह्रियते प्रकाश्यते येन तत्प्रपञ्चरूपं सर्वाधिष्ठानभूतं पदार्थस्फुरणं तस्य । चिदात्मत्वावलोकनाच्चिदजडं स्वत एव प्रकाशमानं ब्रह्म, तदात्मस्वरूपं यस्य तद्भावस्तस्यावलोकनमनुसन्धानं तस्माद्धेतोर्यस्त्यागः नामरूपोपेक्षा स एव त्यागस्त्यागशब्दवाच्यः, 'ईशावास्यमिदं सर्वम्' इत्यादिश्रुतेः । हीति विद्वदनुभवप्रसिद्धौ । नन्वयं त्यागो न कुत्रापि प्रसिद्ध इत्याशङ्क्याह—**महतां पूज्य इति** । तत्र हेतुः—**सद्य इति** । यतोऽयं त्यागः सद्योऽनुसन्धानकाल एव मोक्षमयः परमानन्दस्वरूपावस्थानरूपः, अत एवात्मतत्त्वविदामिष्टत्वादतिप्रसिद्धोऽयं त्याग इत्यर्थः । तस्मादयमेव मुमुक्षुणा कर्तव्यो नान्यः । केवलस्वकर्माद्यकरणरूप इति भावः । एवमग्रेऽप्यूह्यम् ॥ १०६ ॥

अथ मौनं लक्षयति—**यस्मादिति** । शब्दप्रवृत्तिनिमित्तजातिक्रियादेरभावात् मनोवाचामगोचरं यन्मौनं वक्तुमशक्यं यत्ब्रह्म तथापि योगिभिर्गम्यं ज्ञानयोगिभिः प्रत्यगभिन्नत्वेन प्राप्यं तत्प्रसिद्धमेव ब्रह्मरूपं मौनं सर्वदा बुधो विवेकी भवेत् । तदहमस्मीत्यनुसन्दध्यादित्यर्थः ॥ १०७ ॥

**वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ।**
**प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥ १०८ ॥**
**इति वा तद्भवेन्मौनं सतां सहजसंज्ञितम् ।**
**गिरा मौनं तु बालानां प्रयुक्तं ब्रह्मवादिभिः ॥ १०६ ॥**
**आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।**
**येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥ ११० ॥**
**कलनात्सर्वभूतानां ब्रह्मादीनां निमेषतः ।**
**कालशब्देन निर्दिष्टो ह्यखण्डानन्द अद्वयः ॥ १११ ॥**
**सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।**
**आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥ ११२ ॥**
**सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् ।**
**यस्मिन् सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ ११३ ॥**
**यन्मूलं सर्वभूतानां यन्मूलं चित्तबन्धनम् ।**
**मूलबन्धः सदा सेव्यो योग्योऽसौ राजयोगिनाम् ॥ ११४ ॥**

---

नन्विदं प्रत्यगभिन्नब्रह्मानुसन्धानं ध्यानरूपं चदुर्दशमङ्गं प्रतीयते इत्याशङ्क्य स्वारस्यात्प्रकारान्तरेण मौनमेव लक्षयति सार्द्धेन **वाच इति** । अयं भावः—शब्दप्रवृत्तिनिमित्ताभावाद्ब्रह्म यथा वागविषयं तथा नामरूपजात्यादिप्रपञ्चोऽपि सदसदादिविकल्पासहत्वाद्वागतीतः ॥ १०८ ॥

**इतीति** । इत्युक्तप्रकारेण ब्रह्मजगतोर्विवादत्यागरूपं वा तन्मौनं भवेत् । केषामित्याकाङ्क्षायां सतां चेदं प्रसिद्धमित्याह—**सतामिति** । सत्पुरुषाणां सहजस्थितिनाम्ना प्रसिद्धमित्यर्थः । ननु वाङ्नियमनमेव प्रसिद्धं मौनमिति चेदत आह अर्द्धेन—**गिरेति** ॥ १०९ ॥

इदानीं देशं लक्षयति—**आदाविति** । अत्र जनस्य त्रैकालिकाभाव आनुभविकः स्वप्रतीत्या ज्ञेयः, न तु लौकिकशास्त्रीयप्रतीतिभ्याम् । विरोधादिति भावः । स्पष्टमन्यत् ॥ ११० ॥

अथ कालं लक्षयति—**कलनादिति** । निमेषत आरभ्य कलनात्सर्गस्थितिप्रलयाधारत्वादित्यर्थः । शेषं स्पष्टम् ॥ १११ ॥

आसनं लक्षयति—**सुखेनैवेति** । यस्मिन्सुखे सुखरूपे ब्रह्मणि चिन्तनं कर्त्तव्याकर्त्तव्यचिन्ता नैव भवेत् तद्ब्रह्मासनं विजानीयादित्यन्वयः । कीदृशं ब्रह्म ? अजस्रं कालत्रयावस्थायीत्यर्थः । सुगममन्यत् ॥ ११२ ॥

प्रसङ्गादासनविशेषं लक्षयति—**सिद्धमिति** । सिद्धं च तदासनं च । अथवा सिद्धानामासनं सिद्धासनमिति । कर्मधारयतत्पुरुषसमासाभ्यां ब्रह्मैवेत्यर्थः ॥ ११३ ॥

अथ मूलबन्धं लक्षयति—**यन्मूलमिति** । आकाशादिसर्वभूतानां यन्मूलमादिकारणं ब्रह्म तथा

**अङ्गानां समतां विद्यात् समे ब्रह्मणि लीयते ।**
**नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥ ११५ ॥**
**दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं जगत् ।**
**सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ ११६ ॥**
**दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् ।**
**दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रावलोकिनी ॥ ११७ ॥**
**चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।**
**निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ११८ ॥**
**निषेधनं प्रपञ्चस्य रेचकाख्यः समीरणः ।**
**ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरीरितः ॥ ११९ ॥**

---

चित्तबन्धनं चित्तस्य बन्धकारणं मूलाज्ञानं तदपि यन्मूलं यदाश्रयं पृथक्सत्ताशून्यत्वादिति । यद्वा चित्तस्य बन्धनमेकत्र लक्ष्ये निग्रहस्तदपि यन्मूलं यस्य ब्रह्मणः प्राप्तिनिमित्तमित्यर्थः । स मूलबन्ध इत्यन्वयः । राजयोगिनां व्यवहारेऽप्यविक्षिप्तचित्ततालक्षणो राजयोगस्तद्वतां ज्ञानपरिपाकयुक्ताना-मित्यर्थः । शेषं स्पष्टम् ॥ ११४ ॥

इदानीं देहसाम्यं लक्षयति—**अङ्गानामिति** । अङ्गानां ब्रह्मण्यध्यस्तानां स्वभावविषमाणाम-धिष्ठानसमत्वदृष्ट्या समतां विद्याज्जानीयात् चेत्समे ब्रह्मणि । अङ्गवैषम्यमित्यत्राध्याहारः । तच्चेन्नो लीयते समब्रह्मरूपतया न तिष्ठतीत्यर्थः । तर्हीत्यत्र शेषः । शुष्कवृक्षवदङ्गानामृजुत्वं सरलत्वम-चञ्चलत्वं च यत्तत्समानत्वं नैव भवेदिति सम्बन्धः । अङ्गानां विषमस्वभावत्वादिति भावः ॥११५॥

इदानीं दृक्स्थितिं लक्षयति—**दृष्टिमिति** । ब्रह्मणि फलव्याप्यत्वाभावेऽपि वृत्तिव्याप्यत्वात् दृष्टिमन्तःकरणवृत्तिं ज्ञानमयीमखण्डब्रह्माकारां कृत्वा जगत्सर्वं ब्रह्ममयं पश्येत् । 'ब्रह्मैवेदं सर्वमि'त्ये-तावन्मात्रैव वृत्तिः कार्येति भावः । स्पष्टमन्यत् ॥ ११६ ॥

ननु तथापि ब्रह्मणि वृत्तिप्रवृत्तिनिमित्तजात्याद्यभावादिन्द्रियादिप्रत्यक्षविषयस्य जगतो ब्रह्म-रूपत्वेन दर्शनं कथं स्यादित्याशङ्क्य स्वारस्यात्पक्षान्तरेणाह—**दृष्टीति** । वाशब्दः पक्षान्तरे । दृष्टीत्यादिना श्रोत्रादिसर्वत्रिपुटीनामुपलक्षणम् । यत्र यस्मिन् ब्रह्मस्वरूपे दृष्ट्यादिसर्वत्रिपुटीनां विरामो लयो भवेत्तत्र तस्मिन्नेव प्रपञ्चातीते दृष्टिरन्तःकरणवृत्तिः कर्तव्या, न नासिकाग्राव-लोकिनीत्यर्थः ॥ ११७ ॥

अथ प्राणायामं लक्षयति—**चित्तादीति** । मनोऽधीनत्वात्प्राणस्य मनोनिरोधेनैव प्राणनिरोधः, न तु प्राणनिरोधेनैव पातञ्जलाभिमतेन मनोनिरोधस्तदधीनत्वाभावादिति फलितार्थः ॥ ११८ ॥

अमुं प्राणायामं स्वाभिमतेन रेचकादिविभागत्रयेण लक्षयति सार्द्धेन—**निषेधनमिति** ॥११९॥

करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इत्युच्यते।

**एतत्सूक्ष्मशरीरं स्यान्मायिकं प्रत्यगात्मनः।**
**करणोपरमे जाग्रत्संस्कारोत्थप्रबोधवत् ॥ ३७ ॥**

तदुभयाभिमान्यात्मा तैजसः। एतत्त्रमुकारः॥

**ग्राह्यग्राहकरूपेण स्फुरणं स्वप्न उच्यये।**
**अभिमानी तयोर्यस्तु तैजसः परिकीर्तितः ॥ ३८ ॥**

शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते। एतत् कारणशरीरमात्मनः।

**हिरण्यगर्भरूपेण तैजसं चिन्तयेद्बुधः।**
**चैतन्याभासखचितं शरीरद्वयकारणम् ॥ ३९ ॥**

---

**एतदिति**। एतत्पुर्यष्टकम्। तस्य निरसनयोग्यतां दर्शयितुं मायिकमिति विशेषणम्।

एवं शरीरं निरूप्य तस्य यस्यामवस्थायां भोगसाधनत्वं तामवस्थां दर्शयति—**करणोपरमे इति**। करणानां चक्षुरादीनामुपरमे सति जाग्रदनुभवजन्यसंस्कारोत्थान्तःकरणवृत्तिरूपप्रबोधयुक्तं यद्ग्राह्यग्राहकरूपेण स्फुरणं चैतन्यमस्ति तद्विषयभूतरथगजादि तद्विषयकान्तःकरणवृत्तिश्चेति द्वयं स्वप्न इत्यर्थः। मूले "**जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्नः**" इत्युक्तत्वात्, तदनुसारेणैव व्याख्यातम्। अन्यथा चैतन्यस्य स्वप्नावस्थान्तर्भावे तस्याप्यपलापापत्तेः।

एवं शरीरमवस्थां चोक्त्वा तदभिमानिनं दर्शयति—**अभिमानीति**। तयोः स्वप्नसूक्ष्मशरीरयोः। तैजस इति, तेजसि वासनायामभिमानित्वेन निर्वृत्तो भवतीति तैजस इत्यर्थः ॥ ३७-३८ ॥

**हिरण्यगर्भेति**। हिरण्यगर्भशब्देन समष्टिसूक्ष्मशरीराभिमानी सूत्रात्मोच्यते। यथा व्यष्टिभूतपत्रपुष्पशाखादिकं समष्टिभूतवृक्षरूपेण पश्यति "एको वृक्षः" इति, तथा व्यष्टिसूक्ष्मशरीराभिमानिनमात्मानं व्यष्टिसूक्ष्मशरीराभिमानं हित्वा समष्टिसूक्ष्मशरीराभिमानित्वेन ध्यायेदित्यर्थः।

एवं सूक्ष्मशरीरं स्वप्नावस्थां तदभिमानिनं च उकारार्थमुक्त्वा मकारार्थं वक्तुं कारणशरीरं तस्य भोगसम्पादिकामवस्थां तदभिमानिनं च दर्शयति—**चैतन्येति**। केवलाज्ञानस्य शरीरद्वयकारणत्वासम्भवाच्चैतन्याभासखचितमित्युक्तं, चैतन्यप्रतिबिम्बसहितमित्यर्थः। **आत्माज्ञानमिति**। अत्र यदित्यध्याहारः। यत् शरीरद्वयकारणमज्ञानमस्ति तदव्यक्तमव्याकृतमिति च ईर्यते इति सम्बन्धः ॥ ३९ ॥

तच्च न सत्, नासत् नापि सदसत्, न भिन्नं, नाभिन्नं, नापि भिन्नाभिन्नं कुतश्चित्। न निरवयवं, न सावयवं, नोभयम्। किन्तु केवलब्रह्मात्मैकत्वज्ञानापनोद्यम्।

आत्माज्ञानं तदव्यक्तमव्याकृतमितीर्यते।
न सन्नासन्न सदसद्भिन्नाभिन्नं न [1]चात्मनः॥ ४०॥

न सभागं न निर्भागं न चाप्युभयरूपकम्।
ब्रह्मात्मैकत्वविज्ञानहेयं मिथ्यात्वकारणात्॥ ४१॥

---

ननु शरीरद्वयकारणत्वे तस्यार्थक्रियाकारित्वेन सत्तावश्यंभावात्तत्कार्यशरीरद्वयस्यापि सत्तासम्भवात्तदपलापो न सम्भवतीत्याशङ्क्य नार्थक्रियाकारित्वमेव सत्त्वं, किन्त्वबाध्यत्वम्। तच्चाधिष्ठानतत्त्वज्ञानबाध्यत्वादज्ञानस्य नास्ति इत्यभिप्रायेणाह—**न सदिति**। तर्हि शशशृङ्गादिवदसदेव स्यादित्याशङ्क्याह—**नासदिति**। अज्ञोऽहमित्यपरोक्षतया प्रतीयमानत्वान्नात्यन्तमसदित्यर्थः। न च सत्त्वनिषेधेऽसत्त्वम्, असत्त्वनिषेधे सत्त्वं वा वक्तव्यं, परस्परविरुद्धयोरन्यतरनिषेधे अन्यतरावश्यम्भावादिति वाच्यम्, परमते घटात्यन्ताभावे घटतदत्यन्ताभावयोरभाववत्सत्त्वासत्त्वयोरप्यभावोपपत्तेरिति भावः। तर्हि केवलसदसद्रूपत्वाभावेऽपि तदुभयरूपत्वं स्यादित्याशङ्क्याह—**न सदसदिति**। एकस्यैकदैव सदसद्रूपत्वस्य विरुद्धत्वादित्यर्थः। ननु तदज्ञानमात्मनः सकाशाद्भिन्नमभिन्नं वा? भिन्नत्वे अद्वैतहानिः, अभिन्नत्वे बाध्याज्ञानाभिन्नत्वेनात्मनोऽपि बाध्यत्वापत्तिरित्यत आह—**भिन्नाभिन्नमिति**। भिन्नत्वाभिन्नत्वयोः परस्परविरुद्धयोरप्यभावः पूर्ववदेव द्रष्टव्यः। यद्यपि 'न 'भिन्नं नाभिन्नं कुतश्चित्' इत्यस्य 'सतः असतः प्रत्येकं मिलितस्य च प्रतियोगित्वमुच्यते' इत्या**नन्दगिरीये** व्याख्यातं, तथापि वार्तिके आत्मन एव कण्ठरवेण भेदादिप्रतियोगित्वमुक्तमिति एवं व्याख्यातम्॥ ४०॥

ननु सत्त्वादिना निर्वक्तुमशक्यत्वेऽपि सभागत्वादिना निर्वक्तुं शक्यत एवेत्याशङ्क्य सभागत्वं नाम सावयवत्वं तच्चावयवरूपकारणसमवेतत्वं, तच्चाज्ञानस्यानादित्वेन नास्तीत्याह—**न सभागमिति**। तर्हि निर्भागं भविष्यतीत्याशङ्क्य तद्भागभूतानामंशभूतानां पृथिव्यादीनां विद्यमानत्वान्न निर्भागमित्याह—**न निर्भागमिति**। अत एव नोभयरूपमित्याह—**न चापीति**। ननु सर्वात्मना निर्वक्तुमशक्यत्वे तत्स्वरूपाधिगतिरेव न स्यात्, लक्षणाभावे लक्ष्याधिगतेरसम्भवादित्याशङ्क्य सत्त्वादिना निर्वचनाभावेऽपि आत्मज्ञानापनोद्यत्वादिरूपेण निर्वचनं सम्भवतीत्याह–**ब्रह्मेति**। ब्रह्मात्मैकत्वविषयकाज्ञानस्यैवानर्थहेतुत्वात्तद्विषयकज्ञानमेव तन्निवर्तकमित्यर्थः। **हेयमिति**, नाश्यमित्यर्थः। **ननु** अन्यज्ञानेनान्यनाशः कथमित्याशङ्क्य मिथ्यात्वादधिष्ठानतत्त्वज्ञानेन तदज्ञानस्य निवृत्तिः सम्भवतीत्याह—**मिथ्यात्वेति**॥ ४१॥

---

१. 'न चोभयम्' इत्यन्यत्र पाठान्तरम्।

सर्वप्रकारज्ञानोपसंहारे बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिः ।

**ज्ञानानामुपसंहारे बुद्धेः कारणतास्थितिः ।**
**वटबीजे वटस्येव सुषुप्तिरभिधीयते ॥ ४२ ॥**

तदुभयाभिमान्यात्मा प्राज्ञः । एतत् त्रयं मकारः ॥

**अभिमानी तयोर्यस्तु प्राज्ञ इत्यभिधीयते ।**
**जगत्कारणरूपेण प्राज्ञात्मानं विचिन्तयेत् ॥ ४३ ॥**

**विश्वतैजससौषुप्तविराट्सूत्राक्षरात्मभिः ।**
**विभिन्नमिव संमोहादेकं तत्त्वं चिदात्मकम् ॥ ४४ ॥**

**विश्वादिकत्रयं यस्माद्वैराजादित्रयात्मकम् ।**
**[1]एकत्वेनैव संपश्येदन्याभावप्रसिद्धये ॥ ४५॥**

---

एवं **कारणशरीरस्वरूपं निरूप्य** अवस्थां निरूपयति--**ज्ञानानामिति** । अत्र ज्ञानानामिति बहुवचनत्वात्स्थूलसूक्ष्मार्थविषयकाणां जाग्रत्स्वप्नावस्थासम्बन्धिनां सर्वेषां ज्ञानानामभावो विवक्षितः। तर्हि वृत्तीनामभावे बुद्धेरप्यभावः स्यादित्याशङ्क्याह—**बुद्धेरिति । कारणतास्थितिरिति**, कारणात्मना अज्ञानात्मना स्थितिरवस्थानं पुनर्बुद्ध्युत्पादनयोग्यवासनात्मनाऽवस्थानमित्यर्थः। उपरतवृत्तिता बुद्धेः कारणात्मनाऽवस्थितिः सुषुप्तिरभिधीयत इत्यर्थः । ज्ञानानामुपसंहारो मुक्तावपि, इति बुद्धेः कारणतास्थितिरित्युक्तम् । तावत्युक्ते जाग्रद्दशायामतिव्याप्तिः । कार्यदशायामपि कार्यस्य कारणरूपेणाप्यवस्थानात्, अत उक्तम्—**ज्ञानानामुपसंहार इति** । अत्रानुरूपं दृष्टान्तमाह— **वटेति** ॥ ४२ ॥

**अभिमानीति** । तयोः कारणशरीरसुषुप्त्यवस्थयोः । **जगदिति** । व्यष्टिकारणशरीराभिमानिनं प्राज्ञात्मानं समष्टिमायावच्छिन्नेश्वरात्मना चिन्तयेदित्यर्थः ॥ ४३ ॥

ननु विश्वतैजसादीनां बहूनामङ्गीकारे 'चिदात्मकमेकं तत्त्वं' इत्यद्वैतहानिः स्यादित्याशङ्क्य तेषां तत्तदुपाधिकृतत्वात्स्वतः चिदात्मनो न भेद इत्याह—**विश्वेति । अक्षरात्मभिरिति** तृतीया इत्थंभावे । **चिदात्मकमेकमेव तत्त्वं विश्वादिरूपेण** विभिन्नमिव भासत इति शेषः । तत्र हेतुमाह— **सम्मोहादिति । 'चिदात्मकमेकं तत्त्वम्'** इत्यज्ञानादित्यर्थः ॥ ४४ ॥

तादृशज्ञानं कथं भवतीत्याशङ्क्य तादृशज्ञानार्थं प्रपञ्चापलापप्रकारं दर्शयति—**विश्वादिकेत्यादिना** । तत्र प्रथमं विश्वादीनां त्रयाणां वैराजादीनां त्रयाणां च भेदाभावसिद्ध्यर्थमैक्यचिन्तनं दर्शयति—**विश्वेति** । यस्मादेवमेव सम्पश्येत्तस्मादात्मानमद्वयं पश्येदित्युत्तरेण सम्बन्धः । अत्र प्रथमे-

---

१. 'एकत्वेन समं पश्येत्' इत्यपि पाठः ।

**ओङ्कारमात्रमखिलं विश्वप्राज्ञादिलक्षणम् ।**
**वाच्यवाचकताभेदाद्भेदेनानुपलब्धितः ॥ ४६ ॥**

**अकारमात्रं विश्वः स्यादुकारस्तैजसः स्मृतः ।**
**प्राज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु ॥ ४७ ॥**

**समाधिकालात्प्रागेवं विचिन्त्यातिप्रयत्नतः ।**
**स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ ४८ ॥**

अकार उकारे, उकारो मकारे, मकार ओङ्कारे, ओङ्कारोऽहम्येव[1] ।

**अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ।**
**उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥ ४९ ॥**

---

नादिशब्देन तैजसप्राज्ञयोर्ग्रहणं, द्वितीयेनादिशब्देन सूत्राक्षरात्मनोर्ग्रहणम् । **एकत्वेनेति** । यथा व्यष्टिपत्रपुष्पफलशाखादिकं 'एको वृक्षः' इत्येकत्वेन पश्यति तथा व्यष्टिविश्वादीन्समष्टिवैराजाद्यात्मना पश्येदित्यर्थः । **अन्याभावेति**, अन्यत्वाभावसिद्धये इत्यर्थः । तथा अभेदचिन्तने अभेद एव भवतीत्यर्थः। तथा च त्रयः परिशिष्टा भवन्ति ॥ ४५ ॥

तेषां त्रयाणामपि चिदात्मनि विलापनं वक्तुमेकहेलया शब्दस्याप्यपलापसिद्धयर्थं सर्वशब्दार्थयोरभेदं दर्शयति—**ओङ्कारेति** । विश्वप्राज्ञादिलक्षणमखिलमर्थजातं सर्वशब्दात्मकप्रणवमात्रं अकारोकारमकारमात्रं, तत्र च स्थूलप्रपञ्चवाचकसर्वशब्दात्मकत्वमकारस्य, सूक्ष्मप्रपञ्चवाचकसर्वशब्दात्मकत्वमुकारस्य, कारणवाचकसर्वशब्दात्मकत्वं मकारस्य द्रष्टव्यम् । एतत्सर्वं माण्डूक्यभाष्यादौ स्पष्टमुक्तम् । सर्वशब्दात्मकत्वं च प्रणवस्य "यथा शंकुना" इत्यादि छान्दोग्योपनिषदि स्पष्टमुक्तम् । तत्र हेतुमाह—**वाच्येति** । भावप्रधानो निर्देशः । वाच्यवाचकाभेदादित्यर्थः । वाच्यवाचकाभेदे हेतुमाह—**भेदेनेति** । वाच्याद्भेदेन वाचकस्य, वाचकाद्भेदेन वाच्यस्य वाऽनुपलब्धेरित्यर्थः । वाच्यवाचकाभेदश्च माण्डूक्योपनिषद्भाष्यादौ सम्यङ्निरूपितमिति नेह प्रपञ्च्यते ॥ ४६ ॥

एवं सामान्यतः प्रणवतदर्थयोरभेदमुक्त्वा इदानीं विशेषतः प्रणवावयवानामकारादीनां तदर्थानां चाभेदं दर्शयति—**अकारमात्रमिति** ॥ ४७ ॥

एवं समाधिपूर्वकालकृत्यमुक्त्वा समाधेरव्यवहितपूर्वकालकर्तव्यं प्रविलापनप्रकारमाह—**समाधीति**। विश्ववैराजाद्यभेददृष्टीनां प्रणवावयवतदर्थाभेददृष्टीनां चासुलभत्वादतिप्रयत्नत इत्युक्तम् ॥४८॥

"स्थूलादिक्रमात् सर्वं चिदात्मनि विलापयेत्" इति संक्षेपेणोक्तं विलापनप्रकारं विशेषेण दर्शयति—**अकारमिति** । "उकारे प्रविलापयेत्" इति "अकारः उकार एव" इत्येवंप्रकारेणेत्यर्थः । "मकारे प्रविलापयेत्" इति "उकारो मकार एव" इति प्रकारेणेत्यर्थः ॥ ४९ ॥

---

1. 'अहमेव' इति पाठान्तरं वार्तिकाभरणे द्रष्टव्यम् ।

अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः। नाज्ञानं, नापि तत्कार्यं, किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः। "तत्त्वमसि" ( छां० ६।८।७ ) "ब्रह्माहमस्मि" ( परमहं० ३ ) "प्रज्ञानमानन्दं ब्रह्म" ( ऐ० बृ० ३।९ ) "अयमात्मा ब्रह्म" ( बृह० २।५।१९) इत्यादिश्रुतिभ्यः।

**मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ।**
**चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ ५० ॥**

**परमानन्दसंदोहवासुदेवोऽहमोमिति ।**
**ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत् ॥ ५१ ॥**

**चिदात्मनि विलीनं चेत्तच्चित्तं नैव चालयेत् ।**
**पूर्णबोधात्मनाऽऽसीत पूर्णाचलसमुद्रवत् ॥ ५२ ॥**

---

**मकारमिति**। "चिदात्मनि विलापयेत्" इति "मकारोऽहमेव" इति प्रकारेणेत्यर्थः। एवं च मकारः ओङ्कार एव। '**ओङ्कारोऽहमेव**' इति पाठान्तरं **वार्तिकाननुगुणमिति** वेदितव्यम्। तादृशपाठस्य सर्वोपनिषद्व्याख्यानाननुगुणत्वात्। **प्रपञ्चस्तु पञ्चीकरणभावप्रकाशिकायां** द्रष्टव्यः।

"सर्वं चिदात्मनि विलापयेत्" इति सर्वप्रपञ्चप्रविलापनप्रकारमुक्त्वा चिदात्मा कीदृश इत्याकाङ्क्षायां चिदात्मनः स्वरूपं कथयन् सम्प्रज्ञातसमाधिप्रकारमाह—**चिदात्मेति**। अत्र वाक्यद्वयाङ्गीकारात्पूर्वोत्तरार्द्धयोरहमित्यस्य न पौनरुक्त्यम्। नित्यपदं शुद्धेत्यादिषु सर्वत्रान्वेति—नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो नित्यसद्रूपो नित्याद्वयरूप इति। शुद्धत्वादीनां कादाचित्कत्वं निरस्तम् ॥ ५० ॥

एतादृशचिदात्मस्वरूपस्येष्यमाणत्वे हेतुं दर्शयति—**परमेति**। तस्य पूर्णतां दर्शयति—**वासुदेव इति**। 'सर्वत्रासौ समत्वेन वसत्यत्रेति वै यतः। अतः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥' इति विष्णुपुराणवचनात्, तस्य पूर्णत्वार्थकत्वादित्यर्थः। परमानन्दसन्दोहश्चासौ वासुदेवश्चेति समानाधिकरणसमासः। आनन्दसन्दोहरूपत्वं च सर्वेषामानन्दानां ब्रह्मानन्देऽन्तर्भूतत्वादिति द्रष्टव्यम्। वासुदेवस्य प्रणवार्थत्वात्। प्रणवाभिन्नत्वादोमित्यस्य तद्बोधकवासुदेवादिशब्दैः सामानाधिकरण्यं द्रष्टव्यम्। अथवा पूर्वार्द्धोक्तमहावाक्यार्थस्य स्वानुभवेनाङ्गीकारार्थो वा ओमिति। एवं शब्दानुविद्धसम्प्रज्ञातसमाधिमुक्त्वाऽसम्प्रज्ञातमाधिं वक्तुं सम्प्रज्ञातसमाधिरूपवृत्तिविलापनप्रकारमाह—**ज्ञात्वेति**। बहुकालं सम्प्रज्ञातसमाधौ स्थित्वेत्यर्थ। **विवेचकमिति**। ध्यातृध्यानादिभेदसहितमित्यर्थः। तत्साक्षिणि विवेचकचित्तसाक्षिणीत्यर्थः ॥ ५१ ॥

इदानीमसंप्रज्ञातसमाधिमाह—**चिदात्मनोति**। 'तच्चित्तं नैव चालयेत्' इत्युक्तं, पुनः किं कुर्यादित्यत आह—**पूर्णबोधेति**। दृष्टान्तमाह—**पूर्णाचलेति**। न चलतीत्यचलः, **पूर्णः** अचलश्च योऽयं समुद्रः तद्वदासीतेत्यर्थः ॥ ५२ ॥

एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः ।
जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ॥ ५३ ॥

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवेत्सदा ॥ ५४ ॥

यः पश्येत्सर्वगं शान्तमानन्दात्मानमद्वयम् ।
न तेन किञ्चिदाप्तव्यं ज्ञातव्यं वाऽवशिष्यते ॥ ५५ ॥

कृतकृत्यो भवेद्विद्वाञ्जीवन्मुक्तो भवेत्सदा ।
आत्मन्येवारूढभावो जगदेतन्न वीक्षते ॥ ५६ ॥

कदाचिद्व्यवहारे तु द्वैतं यद्यपि पश्यति ।
बोधात्मव्यतिरेकेण न पश्यति चिदन्वयात् ॥ ५७ ॥

---

एवं समाधिप्रकारमुक्त्वा तत्परिपाकफलभूततत्त्वसाक्षात्कारप्रकारं दर्शयति—**एवमिति**। एवमुक्तप्रकारेण समाहितः समाधियुक्तो योगी तत्परिपाकानन्तरं अद्वयमात्मानं पश्येत्। ज्ञाने विध्यसम्भवात्साक्षात्करोतीत्यर्थः। 'कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम्। एतद्धि सर्ववेदेषु नियतं विधिलक्षणम् ॥' ज्ञाने विध्यसम्भवात्। तादृशसाक्षात्कारोत्पत्त्यर्थं समाधिकालेऽपि श्रद्धा-भक्तीन्द्रियजयक्रोधजयादीनामावश्यकतां दर्शयति—**श्रद्धेत्यादिना** ॥ ५३ ॥

ननु लौकिकव्यापारं विहाय सर्वदा तत्त्वनिष्ठारूपसमाधिः कर्तुं न शक्यत इत्याशङ्क्य अधिकारिविशेषणीभूतवैराग्यस्यैव दार्ढ्याय समाधिदशायामपि वैराग्यं दर्शयति—**आदीति**। आदौ भोगसाधनीभूतद्रव्यस्यार्जने दुःखं, मध्ये तत्परिपालने दुःखम्, अवसाने तन्नाशे दुःखमित्येवंप्रकारेण सर्वमपि दुःखहेतुरेव। एवं ब्रह्मलोकान्तलोकसाधनकर्माद्यार्जनमपि दुःखहेतुरेवेति निश्चित्य सातिशयानित्यलोकफलसाधनं सर्वं परित्यज्य नित्यनिरतिशयपुरुषार्थसिद्ध्यर्थं सर्वदा तत्त्वनिष्ठारूपसमाधिमान्भवेदित्यर्थः ॥ ५४ ॥

एवं समाधिनिष्ठया तत्त्वसाक्षात्कारलाभे किं फलं भवतीत्याशङ्क्य कृतकृत्यता भवतीत्याह—**यः पश्येदिति**। सर्वत्र परिपूर्णपरमानन्दाद्वयं ब्रह्मरूपमात्मानं साक्षात्कुर्वतः सर्वानन्दानां ब्रह्मानन्द एवान्तर्भावादाप्तव्यान्तरं नास्ति। "यस्मिन्विज्ञाते सर्वमिदं विज्ञातं स्यात्" इति ज्ञातव्यान्तरमपि नास्ति, अतः कृतकृत्यो भवतीत्यर्थः ॥ ५५ ॥

**कृतकृत्य इति**। कृतकृत्यो भवेदित्यस्य विवरणं जीवन्मुक्तो भवेदिति। सदेति, समाधिकाले तदितरभिक्षाटनादिव्यवहारकाले चेत्यर्थः। अन्यथा जीवन्मुक्तत्वस्य ज्ञानात्पूर्वकाले विदेहकैवल्यकाले चाभावेन विरोधात् ॥ ५६ ॥

अत एव समाधिकाले तदितरभिक्षाटनादिव्यवहारकाले द्वैतदर्शनेऽपि तस्य मिथ्यात्वेनैव दर्शनान्न जीवन्मुक्ताविरोध इति दर्शयति–**कदाचिदिति**। बद्धजनसाधारणं द्वैतदर्शनमङ्गीकरोति–**द्वैतं यद्यपि**

**किन्तु पश्यति मिथ्यैव दिङ्मोहेन्दुविभागवत् ।**
**प्रतिभासः शरीरस्य तदाऽऽप्रारब्धसंक्षयात् ।। ५८ ।।**
**[1]तस्य तावदेव चिरमित्यादिश्रुतिरब्रवीत् ।**
**प्रारब्धस्यानुवृत्तिस्तु मुक्तस्याभासमात्रतः ।। ५९ ।।**
**सर्वदा मुक्त एव स्याज्ज्ञाततत्त्वः पुमानसौ ।**
**प्रारब्धभोगशेषस्य संक्षये तदनन्तरम् ।। ६० ।।**

---

**पश्यतीति** । तर्हि बद्धजनात्को विशेष इत्यत आह–**बोधात्मेति** । बद्धजनः सर्वदा द्वैतं पश्यति, विद्वांस्तु कदाचित्समाधिव्यतिरिक्तकाले एवेत्येको विशेषः । अपरस्तु बद्धजनः बोधात्मव्यतिरेकेण द्वैतं सत्यतया पश्यति, विद्वांस्तु सत्यतया न पश्यतीति । अत्रहेतुः—**चिदन्वयादिति**, सर्वत्र प्रपञ्चे चित एव सत्ताप्रदत्वेनानुस्यूतत्वज्ञानादित्यर्थः ।। ५७ ।।

विद्वान्द्वैतं सत्यतया न पश्यतीत्युक्तम्, कथं पुनः पश्यतीत्यत आह—**किन्त्विति** । शुद्धाद्वितीयब्रह्मणः प्रपञ्चाकारस्य मिथ्यात्वे दृष्टान्तमाह—**दिङ्मोहेति** । प्राच्यादीनां प्रतीच्याद्याकारवदित्यर्थः । एकस्यैव ब्रह्मणो देवतिर्यगादिरूपेण भेदस्य मिथ्यात्वे दृष्टान्तमाह—**इन्द्विति** । यथा एकस्यैव इन्दोर्भेदेन भानं नेत्रावष्टंभाद्युपाधिवशात्तथा एकस्यैव ब्रह्मणस्तत्तदुपाधिवशाद्देवतिर्यगादिरूपेण भानमित्यर्थः । ननु तत्त्वसाक्षात्कारानन्तरमज्ञाननाशेऽपि पुनः शरीरप्रतिभासाङ्गीकारे अनिर्मोक्ष एव स्यादित्याशङ्क्य तस्यावधिमाह–**प्रतिभास इति** । तदा ज्ञानकालेऽपि शरीरस्य प्रतिभासः 'आप्रारब्धसंक्षयात्' इति मर्यादायामाङ्, प्रारब्धसंक्षयपर्यन्तम्, तन्नाशे तु शरीरादिप्रतिभासोऽपि नश्यतीत्यर्थः । तदुक्तमभियुक्तैः—

शास्त्रेण नश्येत्परमार्थरूपं कार्यक्षमं नश्यति चापरोक्षात् ।
प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ।। १ ।। इति ।। ५८ ।।

अस्मिन्नर्थे श्रुतिं प्रमाणयति—**तस्येति** । तस्य ज्ञानिनस्तावदेव तावत्पर्यन्तमेव विलम्बः यावत्प्रारब्धकर्मणा न विमोक्ष्ये–न विमोक्ष्यते अथ प्रारब्धकर्मविमोचनानन्तरं सम्पत्स्ये सम्पत्स्यते सम्पद्यते लकारपुरुषव्यत्ययश्छान्दसः । ज्ञानेनाज्ञानस्यावरणशक्तिनाशेऽपि तत्कृतो विक्षेपः किञ्चित्कालं चक्रभ्रमणन्यायेन परमते तन्त्वादिनाशानन्तरमपि पटादिवच्चानुवर्त्तते इत्यर्थः । तर्हि विदुषो बद्धजनस्येव शरीरादिप्रतिभासाङ्गीकारे तत्कृतसुखदुःखादिहेतुत्वमित्याह–**प्रारब्धस्येति** । प्रारब्धस्य प्रारब्धकार्यस्य शरीरादेरित्यर्थः । मुक्तस्य जीवन्मुक्तस्य आभासमात्रतः प्रतीतिमात्रात्, न तु वस्तुतोऽनुवृत्तिरस्तीत्यर्थः । तथा च सर्पभ्रमानन्तरं रज्जुतत्त्वज्ञानवतः अतिसादृश्याद्रज्ज्वाः सर्पाकारतया प्रतीतावपि न भयकम्पादिः, एवं जीवन्मुक्तस्य शरीरादिप्रतीतेरपि मिथ्यात्वेन ज्ञानान्न दुःखादिहेतुत्वमिति भावः ।। ५९ ।।

तत्र हेतुमाह—**सर्वदेति** । ज्ञाततत्त्वः पुमान्सर्वदा समाधिकाले तदितरव्यवहारकाले च मुक्त एव । "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुत्या ज्ञानसमकालमेव मुक्तेः सिद्धत्वादतो विदुषः शरीरादि-

---

१. छान्दोग्योपनिषद् ६।१४।२ ।

**अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ।**
**चैतन्यममलं शुद्धं मनोवाचामगोचरम् ॥ ६१ ॥**
**वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ।**
**प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ॥ ६२ ॥**

इति पञ्चीकरणं भवति ॐ ॥

**इदं प्रकरणं यत्नाज्ज्ञातव्यं भगवत्तमैः ।**
**अमानित्वादिनियमैर्गुरुभक्तिप्रसादतः ॥ ६३ ॥**

---

प्रतिभासेऽपि न दुःखादिप्रसक्तिरिति भावः। प्रारब्धक्षयानन्तरं विदेहकैवल्यप्राप्तिप्रकारमाह—**प्रारब्धेति** ॥ ६० ॥

**अविद्येति** । "शास्त्रेण नश्येत्" इत्यादिश्लोकोक्ता त्रिविधाऽविद्या सैव तिमिरं वस्तुस्वरूपाच्छादकत्वात्तदतीतं निवृत्ताविद्यकमित्यर्थः। कारणाभावमुक्त्वा कार्याभावमप्याह-**सर्वेति**। आभास्यन्त इत्याभासाः शरीरादयः तद्वर्जितमित्यर्थः । अविद्यातिमिरातीतत्वादेवामलम् । सर्वाभासविवर्जितत्वादेव शुद्धम् । अत एव केवलानन्दरूपम् । तस्यापरिमिततां दर्शयति—**मन इति** । मनांसि च वाचश्च मनोवाचः तासामगोचरम्, अपरिमितत्वादित्यर्थः ॥ ६१ ॥

इदानीं तत्स्वरूपप्रतिपत्त्यर्थं शब्दाद्यन्वेषणव्यावृत्त्यर्थमाह—**वाच्येति** । तद्दशायां इष्टानिष्टपरिहारार्थं प्रवृत्त्यादिकं वारयति—**हेयेति** । आनन्दस्याज्ञायमानस्य पुरुषार्थत्वाभावादाह्-**प्रज्ञानघनमानन्दमिति** । स्वप्रकाशतया ज्ञायमानानन्दरूपमित्यर्थः । प्रज्ञानघनमित्यनेन भट्टादिमत इव चिदचिदात्मकं न भवति, किन्तु केवलज्ञानस्वरूपमेवेति दर्शितम् । आनन्दस्वरूपस्यात्यन्ताभिलषितत्वात् पुनर्वचनम् । "विष्लृ व्याप्तौ" इति धातुनिष्पन्नत्वाद्विष्णुशब्देन त्रिविधपरिच्छेदरहितं ब्रह्मोच्यते । विष्णोरिदं वैष्णवं ब्रह्मस्वरूपं "राहोः शिरः" इत्यादिवदभेदेऽपि भेदोपचारः । पद्यत इति पदं अश्नुते प्राप्नोति, ब्रह्मस्वरूपो भवतीत्यर्थः । न तु विष्णोः पदं वैकुण्ठाख्यं लोकं प्राप्नोति, तस्योपासनाफलत्वेन तत्त्वसाक्षात्कारफलत्वासम्भवात् । ब्रह्मसाक्षात्कारस्य "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुत्या ब्रह्मैक्यप्राप्तिफलत्वादिति भावः ॥ ६२ ॥

एवं मुमुक्ष्वनुग्रहार्थं कृतस्य प्रकरणस्यार्थग्रहणप्रकारमाह—**इदमिति** । इदं पञ्चीकरणवार्तिकरूपं प्रकरणं यत्नात् गुरुशुश्रूषादियत्नपूर्वकं ज्ञातव्यम् । अथवा ज्ञातव्यं मुमुक्षुभिरिति शेषः । कीदृशैर्गुरुभिर्ज्ञातव्यमित्यत आह—**भगवत्तमैरिति** । वेदान्तजन्यज्ञानवन्तो भगवन्तस्तेषां भगवद्रूपत्वात्, तत्त्वसाक्षात्कारवन्तस्तु भगवत्तमास्तैर्निमित्तैस्तान् गुरून्कृत्वेत्यर्थः । "गुरुभिर्ज्ञात्वा गुरूणां रूपम्" इत्यादिदर्शनात् । पुनः कीदृशैरित्यत आह—**अमानित्वादीति** । अमानित्वादयः "अमानित्वमदंभित्वम्" इत्यादिभगवतोक्ता नियमाः येषां तैरित्यर्थः । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतेः । एवंविधान् गुरून्प्राप्य इत्यर्थः । न च तादृशाः कृतकृत्यतया

**इमां विद्यां प्रयत्नेन योगी सन्ध्यासु सर्वदा ।**
**समभ्यसेदिहामुत्रभोगानासक्तधीः सुधीः ॥ ६४ ॥**[1]

॥ इति श्रीमत्सुरेश्वराचार्यविरचितं पञ्चीकरणवार्तिकं सम्पूर्णम् ॥

---

किमर्थं उपदिशन्तीति वाच्यम्, 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥' इति गीतावचनात्तादृशा अपि केवलं कृपया उपदिशन्तीति भावः । **गुरुभक्तिरिति**, गुर्वी चासौ भक्तिश्च गुरुभक्तिः तया यः प्रसादः गुरूणामनुग्रहः तस्मात् ज्ञातव्यमित्यर्थः । गुरुषु भक्तिरिति वा ॥ ६३ ॥

एवं विशिष्टगुर्वनुग्रहादिदं प्रकरणमर्थतो ज्ञात्वा किं कर्त्तव्यमित्यत आह—**इमामिति** । विद्यां विद्याहेतुभूतमिदं प्रकरणमित्यर्थः । उपनिषच्छब्दवाच्यविद्याहेतुवेदान्तवाक्येषूपनिषच्छब्दवद्द्रष्टव्यम् । **प्रयत्नेनेति** । लोकवार्त्तादिविघ्ना यथा न स्युः तथा प्रयत्नं कृत्वेत्यर्थः । सन्ध्यासु सायंप्रातःसन्ध्यासु समभ्यसेत् अर्थानुसन्धानपूर्वकं जपेदित्यर्थः । तत्राधिकारिणं दर्शयति—**इहेति** वैराग्यं साधनचतुष्टयसम्पत्त्युपलक्षणार्थम् । **सुधीरिति**, श्रवणमननजन्यज्ञानवानित्यर्थः । कृतश्रवणमननस्यैव निदिध्यासने अधिकारादिति ॥ ६४ ॥

अनया पञ्चीकरणवार्त्तिकाभरणरूपया कृत्या ।
कृष्णः प्रीतो भवतु बुधाश्च तां समीक्ष्य मोदन्ताम् ॥ १ ॥

॥ इति श्रीमन्नारायणेन्द्रसरस्वतीविरचितं पञ्चीकरणवार्त्तिकाभरणं सम्पूर्णम् ॥

---

१. रागद्वेषादिरहितं स्वात्मानं चिन्तयेत् सदा ।
स एव जीवन्मुक्तो वा न पुनर्भवसम्भवः ॥ ६५ ॥ इत्यधिकः पाठः ।

ॐ

तत्सत्परमात्मने नमः

श्रीमच्छङ्करभगवत्पादाचार्यविरचितं

# पञ्चीकरणम्

## ॐ पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सर्वं विराडित्युच्यते।

**श्रीमदानन्दगिर्याचार्यविरचितं विवरणम्**

**यदबोधादिदं भाति यद्बोधाद्विनिवर्तते।**
**नमस्तस्मै परानन्दवपुषे परमात्मने ॥ १ ॥**

---

**श्रीमद्रामतीर्थविरचिता तत्त्वचन्द्रिका**

यन्नामरूपजगदुद्भवसम्प्रतिष्ठासंरोधकारणमनिर्वचनीयशक्तिः ।
सच्चित्सुखाद्वयवपुर्जगतो हिताय रामाभिधामुपगतं भुवि तन्नमामि ॥ १ ॥

यत्पांसुधूसरितमस्तकमस्तपापमज्ञानलक्षणमहाग्रहयक्षभूताः[1] ।
मुक्त्वाऽऽशु मां ययुरजस्रमतीव रम्यं श्रीकृष्णतीर्थगुरुपादयुगं नमामि ॥ २ ॥

जगन्नाथाश्रमाद्या ये गुरवो मे कृपालवः। तानहं विधिवन्नत्वा करवै तत्त्वचन्द्रिकाम् ॥ ३ ॥

श्रीमच्छङ्करभगवत्पूज्यपादविरचितं पञ्चीकरणाख्यं प्रकरणमतिसंक्षिप्तमनेकार्थसंग्रहगम्भीरमतिविमलमर्थतः प्रकटीचिकीर्षुरानन्दगिर्याचार्यः स्वचिकीर्षितस्याविघ्नपरिसमाप्तये विशिष्टशिष्टाचारपरिप्राप्तमिष्टदेवतानमस्कारलक्षणं मङ्गलमाचरन् शास्त्रस्य विषयप्रयोजने दर्शयति—**यदबोधादिति।**

अयमक्षरार्थः—परमात्मने नम इत्यन्वयः। तस्याप्रसिद्धिं वारयति—**तस्मा** इति, सर्वनाम्नः प्रसिद्धार्थवाचित्वात्। प्रसिद्धिश्च "एष सर्वेश्वरः" ( बृह० ४।४।२२. माण्डू० ६ ) इत्यादिश्रुतिभ्यः। तच्छब्दनिर्दिष्टस्य परमात्मनः स्वरूपं तटस्थलक्षणस्वरूपलक्षणाभ्यामुपलक्षयति—**यदबोधादिदं भातीति।** यस्मिन् अबोधः यदबोधः तत्त्वावरणलक्षणः, तस्मात्कल्पितमिदं भूतभौतिकमाब्रह्मस्तम्बपर्यन्तं जगद्भाति केवलं न यथाप्रतिभासस्वरूपमस्ति। रज्ज्वज्ञानात् सर्पमालादण्डधारादिप्रतीतिवदित्यर्थः। ज्ञाननिवर्त्यत्वेन जगतोऽनिर्वचनीयतां दर्शयति—**यद्बोधाद्विनिवर्तत इति।** एतेन बाध्यत्वमनिर्वचनीयत्वमित्युक्तं भवति। यद्विषयो बोधो यद्बोधः, तस्मात् ब्रह्माकारान्तःकरणवृत्तिरूपादिदं जगत्सोपादानं विनिवर्तते विशेषेण निवर्तते, अत्यन्तं समुच्छिद्यत इत्यर्थः।

---

१. यत्पांसवः मां ययुरिति योजनीयम्।

**अतीतानेकजन्मकृतसुकृतप्रसादासादितशुद्धिबुद्धिमता विवेकवैराग्यशमदमादि-साधनसम्पन्नानां परित्यक्तसर्वकर्मणां मोक्षमात्रमाकाङ्क्षतां तदुपायभूतं तत्त्वज्ञानमापाततः**

---

अयं भावः—"ब्रह्मविदाप्नोति परम्" ( तै० २।१।१ ) इत्यादिशास्त्रात् ब्रह्मज्ञानं मोक्षसाधन-मित्यवगम्यते। तच्च केवलमेव, न कर्मसमुच्चितम्। "न कर्मणा न प्रजया" ( महानारा० १०।५ ) इति साधनान्तरनिषेधात्। मोक्षश्च निष्प्रपञ्चब्रह्मात्मनाऽवस्थानम्। तथा च प्रपञ्चस्य ज्ञाननिवर्त्यत्वे सति "ज्ञानादेव तु कैवल्यम्" इति शास्त्रमर्थवत्स्यात्, नान्यथा। प्रपञ्चोऽपि ज्ञाननिवर्त्यस्तदा स्यात्, यद्यज्ञानमात्ररूपः स्यात्। सत्यत्वे तस्य न ज्ञाननिवर्त्यत्वं सम्भवति, विरोधाभावादिति। तदेवं तटस्थलक्षणेन सर्वाधिष्ठानं सर्वनिषेधावधिभूतं ब्रह्म निर्दिष्टम्। तस्यैव स्वरूपलक्षणं दर्शयति—**परानन्देति**। परो निरतिशय आनन्दो वपुः स्वरूपं यस्य स तथा। "आनन्दो ब्रह्मेति व्यजानात्" ( तै० ३।६।१ ) इति श्रुतेः। अत्रानन्दशब्दः सत्यादीनामप्युपलक्षणार्थः।

ननु नमस्कर्तुर्ब्रह्मणोऽनन्यत्वात् कथं ब्रह्म नमस्कार्यमिति चेत्, नायं दोषः, कारणत्वाक्रान्तस्य नमस्कार्यत्वादिति। **परमात्मन** इत्यात्मनः परमत्वनिर्देशेन ब्रह्मात्मैक्यलक्षणो विषयो दर्शितः। **यद् बोधाद्विनिवर्तत इति** प्रयोजनमज्ञाननिवृत्तिलक्षणं दर्शितम्। सम्बन्धाधिकारिणावर्थाद्बोद्धव्यौ ॥१॥ तत्राधिकारिस्वरूपनिरूपणपुरःसरं ग्रन्थस्य पातनिकामाह—**अतीतानेके**त्यादिना।

अयमर्थः—अनाद्यविद्याकल्पितसंसारवासनावासितान्तःकरणानाम् 'अहं कर्ता भोक्ता' इत्यभिमन्य-मानानां स्वर्गनरकसुखदुःखमनुभवतां पूर्वपूर्वभोगवासनया प्रवृत्तिमार्गरतानां जीवानां कथं निवृत्त्यु-न्मुखत्वं भवितुमर्हतीत्याशङ्क्याह—**अनेकजन्मेति**। यद्यपि कर्मानुष्ठानं ततः फलभोगः पुनस्तद्वासनया कर्मानुष्ठानमविरतिः कर्ममार्गात्, तथापि बहुजन्मासादितयादृच्छिकपुण्यपुञ्जपरिपाकवशात्कस्मिंश्चि-ज्जन्मनि निवृत्त्युन्मुखताऽपि स्यात्। ततोऽनेकजन्मसु नित्यनैमित्तिककर्ममात्रमनुतिष्ठन्ति, तेनानेक-जन्मसु कृतेन सुकृतेन प्रसादासादिता बुद्धेरन्तःकरणस्य वृत्तेः शुद्धिर्यैस्ते तथा, तेषाम्। पुनः कथं-भूतानाम्। विवेकादिसम्पन्नानाम्। तत्र विवेको नाम नित्यानित्यवस्तुविवेकः। स च ब्रह्मैव नित्यं, ततोऽन्यत्सकलमनित्यमित्येवमाकारः, "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २।१।१ ) "अजो नित्यः शाश्वतः" ( कण्ठ० २।१८। गी० २।२० ), "नित्यं विज्ञानमानन्दं ब्रह्म" ( बृह० ३।२८ ), "नेह नानास्ति किञ्चन" ( बृह० ४।४।१९। कण्ठ० ४।११ ), "यत्र नान्यत्पश्यति नान्यच्छृणोति" ( छां० ७।२४।१ ), "मृत्तिकेत्येव सत्यम्" ( छा० ६।१।४ ), इत्यादिवाक्यपर्यालोचनयोत्पद्यते। वैराग्यं तु "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृह० २।४।६), तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" ( छां० ८।१।६ ), इत्यादिश्रुतिपर्यालोचनयोत्पद्यते। ततः "शान्तो दान्तः" ( बृह० ४।४।२३ ) इत्यादिवाक्यालोचनया शमादिरुत्पद्यते। तत्र शमोऽन्तःकरणनिग्रहः दमो बाह्येन्द्रियनिग्रहः। आदिशब्दादुपरतितितिक्षासमाधानश्रद्धाः संगृह्यन्ते।

साधनसम्पत्त्यभिव्यञ्जकमाह—**परित्यक्तेति**। परितः सर्वात्मना त्यक्तानि सकलानि लौकिकानि यादृच्छिकदेहयात्रातिरिक्तानि वैदिकान्यप्यावश्यकातिरिक्तानि यैस्ते तथा तेषामिति यावत्। कथ-मेतावता मोक्षशास्त्रे प्रवृत्तिः, प्रयोजनाकांक्षाभावात्। प्रयोजनमाकाङ्क्षन् हि प्रवर्तते प्रेक्षावान्, अत आह—**मोक्षमात्रमाकाङ्क्षतामिति**। मात्रशब्दः कामनान्तरशङ्कानिवृत्त्यर्थः।

**श्रुतिमुखादधिगतमपि सम्यगवाप्तुमिच्छतामतिलघुनोपायेन कथमिदमुत्पद्यतामिति मन्वानः सन्नाचार्यः ओङ्कारं सर्ववेदसारभूतं तथाविधसम्यग्बोधसमुदयनिदानं प्रतिलभ्य तदीयस्वरूपनिरूपणद्वारा तत्त्वं निवेदयितुकामस्तदवयवभूतमकारमवतारयन्नध्यारोपाप-**

---

ननु मात्रशब्देन न कामनान्तरव्यावृत्तिः, तत्त्वज्ञानमवाप्तुमिच्छतामित्यनेन विरोधादित्याशङ्क्य तस्यापि मोक्षोपायत्वेनेच्छाविषयत्वान्न कामनान्तरत्वमित्याह—**तदुपायभूतमिति**। ननु "एतावदरे खल्वमृतत्वम्" ( बृह० ४।५।१२ ) इति श्रुतेस्तत्त्वज्ञानस्यैव फलत्वावगमनान्न तस्य मोक्षोपायतेति चेत्, उच्यते—दुःखनिवृत्त्यानन्दावाप्ती पुरुषार्थौ, न तत्त्वज्ञानं तयोरन्यतरत्। तस्य कार्यरूपस्यानित्यत्वेन तदयोगात्। परिशेषात्तत्त्वज्ञानस्य फलसाधनत्वमेव। अमृतत्वशब्दप्रयोगस्तु जीवनसाधने लाङ्गलादौ जीवनशब्दप्रयोगवन्नानुपपन्नः। तथा चोपायापेक्षाऽप्युपेयार्थेति न मात्रपदवैयर्थ्यमिति।

तत्त्वज्ञानस्य मोक्षोपायत्वं कुतोऽवगतमिति तत्राह-**श्रुतिमुखादिति**। 'तद्विज्ञानेन परिपश्यन्ति धीरा" ( मुण्ड० २।२।७ ) "विद्ययाऽमृतमश्नुते" ( ईश० ११ ) "तस्मिन् दृष्टे परावरे" ( मुण्ड० २।२।८ ) इत्यादिश्रुतिमुखादित्यर्थः। तर्हि प्राप्तमेव तत्त्वज्ञानं श्रुतिमुखात्, कुतस्तदिच्छेति तत्राह—**आपातत इति**। विचारं विना सामान्यतोऽधिगतमित्यर्थः। नन्वेतादृशानामधिकारिणां तत्त्वनिर्णयप्रधानं शारीरकमेव व्याख्येयम्। किमपूर्वपञ्चीकरणनिर्माणेनेत्यत आह—**अतिलघुनोपायेनेति**। मन्वानो विचारयमाणः। सिद्धार्थमाह—**ॐकारमिति**। ॐकारं प्रतिलभ्येति व्यवहितेन सम्बन्धः। अतिविततगम्भीरे भाष्ये बहुवादिविसम्वादनिरासपटीयसि अलसप्रायाधिकारिणो न व्युत्पादयितुं शक्याः। अतः सार्थक एव **पञ्चीकरणारम्भ** इत्यभिप्रायः। **तथाविधेति**। मोक्षोपायभूतस्य बोधस्य समुदयः सम्यगनायासेन उदय उत्पत्तिस्तस्य निदानं समीचीनं कारणमित्यर्थः। सम्यक्त्वं च ज्ञानस्य निरतिशयफलहेतुत्वात्। ननु वेदार्थविचारस्यैव तथाविधज्ञानोपायत्वाद्वेद एव व्याख्येयः, न प्रणव इत्यत आह—**सर्ववेदसारभूतमिति**। ॐकारो हि सर्ववेदसारभूतः सर्ववाग्व्यापकत्वात्सर्वात्मकत्वाच्च। तथा च श्रुतयः "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा" ( छां० २।२३।४) इति। तथा "ॐ इत्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्" (छां० १।१।१) "भूतं भवद्भविष्यदिति सर्वमोङ्कार एव" (माण्डू० १) इत्याद्याः। स्मृतिरपि "वेदः प्रणव एवायम्" इत्यादिका। तथा चोङ्कारनिरूपणमेव सर्ववेदार्थनिरूपणमित्यर्थः। ननु तत्त्वज्ञानमिच्छतां तन्निर्णायकमहावाक्यनिरूपणमुचितं न प्रणवनिरूपणमत आह—**तदीयस्वरूपनिरूपणद्वारा तत्त्वं निवेदयितुकाम इति**। प्रणवस्वरूपेऽर्थतो निरूपिते महावाक्यमेवार्थतो निरूपितं भवेदित्यर्थः। ननु ब्रह्मात्मैक्यं विचारविषयः स च वाक्यार्थः, न पदार्थः, वाक्यं चानेकपदात्मकम्। तथा च प्रणवस्य वर्णत्रयात्मकत्वेन पदत्वान्न वाक्यता। अतो न तन्निरूपणेन वाक्यार्थो निरूप्येतेति, तन्न, प्रणवस्यापि वाक्यत्वात्। न वर्णसमूहः पदमिति पदलक्षणं, वाक्ये व्यभिचारापत्तेः। किन्तु प्रत्येकं सम्भूय वा वाक्यांशबोधको वर्णः पदमिति तल्लक्षणम्। अन्यथैकाक्षराणामर्थवाचकानां पदत्वं न स्यात्। स्मर्यते हि "अकारो वासुदेवः स्यात्" इत्यभिधानम्। अतो न वर्णसमूहः पदमिति। तथाचाकारादीनामपि पदत्वात्तत्समुदायात्मकस्य प्रणवस्य वाक्यत्वं नानुपपन्नमिति भावः।

**वादन्यायमनुसरन् प्रतिपत्तिसौकर्यार्थं प्रथमं स्थूलप्रपञ्चमुपन्यस्यति—ॐ पञ्चीकृतेति।**

**अस्यायमर्थः—आकाशवायुतेजोऽम्ब्वन्नानि भूतानि तावदविद्यासहायात्परस्मादात्मनः सकाशादनुक्रमेण जातानि। तानि चातिसूक्ष्माणि व्यवहाराक्षमाणीति तदीयस्थौल्यापेक्षायां कल्पितव्यवहर्तृ प्राणिनिकायव्यवहारनिर्वाहकतदीयधर्माधर्मात्मककर्मापेक्षया तान्येव पञ्चीकृतानि स्थूलानि भवन्ति। तानि हि प्रत्येकं द्वैविध्यमापद्यन्ते। तत्र चैकैकं भागं प्रविहायापरेषु भागेष्वेकैकशश्चातुर्विध्ये सिद्धे सति तत्तदात्मीयमर्द्धभागं परित्यज्येतरेषु भागेष्वेकैकस्य भागस्यानुप्रवेशे कृते सति प्रत्येकं भूतानि पञ्चतामापन्नानि पञ्चीकृतानीत्युच्यन्ते। तेषु च "वैशेष्यात्तु तद्वादस्तद्वादः" ( ब्र. सू. २, ४, २२ ) इति न्यायेन**

---

ननु पदार्थावगतिपूर्विका वाक्यार्थावगतिः, अतः पदार्थो वर्णनीय इत्यत आह—**तदवयवभूतमकारमिति**। तस्य प्रणवस्यावयवभूतमित्यर्थः। वाक्यार्थो ह्यद्वितीयब्रह्मस्वरूपम्। अतस्तवगमाय तदवयवो निरूपणीयः, किं प्रपञ्चोपन्यासेनेत्यत आह—**अध्यारोपेति**। वस्तुन्यवस्त्वारोपोऽध्यारोपः, अध्यारोपितस्याधिष्ठानमात्रपर्यवशेषणमपवादः। अपवादस्य प्रतिषेधरूपत्वात्तस्य च प्राप्तिपूर्वकत्वात्, तदर्थमध्यारोपस्य प्राथम्यम्। तथा च तदवयवनिरूपणाय प्रपञ्चोपन्यास इति भावः। त्रयाणां वर्णानां प्रणवावयवत्वे समाने किमित्यकारार्थः प्रथमतो निरूप्यते, तत्राह—**प्रतिपत्तिसौकर्यार्थमिति**। स्थूलप्रपञ्चस्य प्रत्यक्षादिसिद्धत्वेऽपि न तस्याविद्यात्मकता प्रसिद्धा। अविद्यात्मकत्वानुपपादने च तस्य न ज्ञानेनापवादः सम्भवति। अतस्तन्निरूपणायैव स्थूलप्रपञ्चोपन्यास इति भावः।

"पञ्चीकृतपञ्चमहाभूतानि" इति पदं व्याचष्टे—**अस्यायमर्थ इति**। स्थूलभूतानां पञ्चीकृतत्वमुपपादयितुं तत्कारणभूतानां सूक्ष्मभूतानामुत्पत्तिं दर्शयति—**आकाशेति**। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१।१ ) इति श्रुतिसिद्धेयं सृष्टिरुच्यते। अन्नशब्दः पृथिवीवाचकः। "पृथिवी वा अन्नम्" ( तैत्ति० ३।६।१ ) इति श्रुतेः। कथं शुद्धस्यात्मनो जगत्कारणत्वमित्यत आह—**अविद्यासहायादिति**। अनुक्रमस्तु श्रुतिसिद्धः। तेषां स्वरूपमाह—**अतिसूक्ष्माणीति**। अतिसूक्ष्माण्यगोचराण्यत एव व्यवहाराक्षमाणि। तानि यदा पञ्चीकृतानि भवन्ति तदा स्थूलानि भवन्तीत्यन्वयः। तेषां किं पञ्चीकरणमकस्मादेव, नेत्याह—**कर्मापेक्षयेति**। तत्किं स्पन्दनात्मकमेवापेक्ष्यम्, नेत्याह—**धर्माधर्मात्मकेति**। धर्माधर्मावात्मा स्वरूपं यस्य तत्तथा। व्यवहारनिर्वाहकेति कर्मणः पञ्चीकरणोत्पादने योग्यतोक्ता। सूक्ष्माणामव्यवहार्यत्वाद्व्यवहारान्यथाऽनुपपत्त्या पञ्चीकरणं कल्प्यमिति व्यवहारपदेन प्रमाणमपि सूचितमिति भावः। व्यवहारो व्यवहर्तृसाध्यः। न च व्यवहर्ता अद्वैतमतेऽस्ति, तत्राह—**कल्पितव्यवहर्तृ प्राणीति**। निकायः समूहः। अनाद्यविद्यावासनापरिकल्पिता व्यावहारिका जीवा व्यवहर्तार इति नानुपपन्नं किञ्चिदिति भावः। **तानि चेत्यादि उच्यन्त** इत्यन्तो ग्रन्थः स्पष्टः।

कथं तर्हि भूतानां पञ्चात्मकत्वे समाने व्यवहारासांकर्यम्, अत आह—**तेषु चेति**। वैशेष्याद्भागस्याधिक्यात्तद्वादः 'पृथिवी', 'जलम्' इत्यादिव्यवहार इत्यर्थः। वीप्सा सूत्रे अध्यायसमाप्त्यर्था।

**व्यवहारासंकरश्च सिद्ध्यति । न च पञ्चीकरणमप्रमाणकमिति वक्तुं युक्तम्, भूतत्रयसर्गश्रुतौ भूतपञ्चकसर्गाङ्गीकारवत्त्रिवृत्करणश्रुतौ पञ्चीकरणाङ्गीकारात् ।**

**ननु भूतत्रयसृष्टिश्रुतौ ब्रह्मणः सच्छब्दितस्याद्वितीयत्वसिद्ध्यर्थं सृष्टिपरिपूर्तये च भूतद्वयमश्रुतमपि श्रुत्यन्तरमाश्रित्य गुणोपसंहार–[ ब्र० सू० ३-३-१ ] न्यायेनोपसंहर्तव्यम् । त्रिवृत्करणश्रुतौ तु पञ्चीकरणोपलक्षणे न कारणमस्तीति चेत्, न, छान्दोग्ये भूतपञ्चकसृष्टिविवक्षायां पुनस्त्रिवृत्करणव्यपदेशस्य परिसंख्यार्थत्वे प्रकरणविरोधप्रसङ्गात् ।**

---

तथा च न व्यवहारसङ्कर इत्यर्थः । पञ्चीकरणप्रतिपादकश्रुत्यादिप्रमाणाभावे कथं पञ्चीकरणं सिद्धवदुपन्यस्यत इत्याशङ्क्य परिहरति—**न चेत्यादि तानि चेत्यतः** प्राक्तनेन ग्रन्थेन । भूतत्रयसर्गश्रुतौ भूतपञ्चकसर्गोपलक्षणतां सिद्धवत्कृत्य तद्दृष्टान्तेन त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणपरतामाह—**भूतत्रयेति** । भूतत्रयसृष्टिश्रुतेर्भूतपञ्चकोपलक्षणता युज्यते, न त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणता, प्रमाणाभावादित्याशङ्कते—**ननु भूतत्रयेति** । तुशब्दसूचितं वैषम्यमुपपादयति—**ब्रह्मण** इति । "सदेव सोम्येदमग्र आसीत्" इत्यारभ्य "तत्सत्यं स आत्मा" ( छान्दोग्य० ६।२।१ ) इत्युपसंहारात्सच्छब्दितं ब्रह्म, तस्मात् ब्रह्मणो भूतद्वयानुत्पत्तौ नाद्वितीयता तस्य सिद्ध्येत् । कार्यकारणयोरभेदेन खल्वद्वितीयतोपपाद्यते एतदुक्तम् अद्वितीयत्वसिद्ध्यर्थमिति । **सृष्टिपरिपूर्तय इति** । जगदन्तःपातिनोर्वाय्वाकाशयोर्ब्रह्मकार्यत्वेन ब्रह्मणो जगत्सृष्टिः परिपूर्यते, सकलजगत्कारणत्वप्रतिपादकश्रुतिविरोधादित्यर्थः । चकारो हेतुसमुच्चयार्थः ।

ननु छान्दोग्ये ( ६।३ ) भूतत्रयस्यैवोत्पत्तिश्रवणात् अश्रुतभूतपञ्चककल्पनमयुक्तं, श्रुतहान्यश्रुतकल्पनाप्रसङ्गादित्यत आह—**भूतद्वयमश्रुतमपीति । गुणोपसंहारेति** । सकलशाखाप्रत्ययमेकं कर्मेति प्रतिपादनात्, एकस्यामेव शाखायां चातुर्होत्रकर्मप्रतिपत्त्यसिद्धेर्यथा शाखान्तरमाश्रित्य तदुपसंहारः, तथेहापि शाखान्तरमाश्रित्य भूतद्वयसर्गोपसंहार इति । तथा च नाश्रुतकल्पना, शाखान्तरे श्रुतत्वात् । नापि श्रुतहानिः, पञ्चकसर्गेऽपि श्रुतस्य त्रिसर्गस्यापरित्यागादित्यर्थः ।

एवं भूतत्रयसृष्टिश्रुतेर्भूतपञ्चकसर्गोपलक्षणे प्रमाणमभिधाय त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणे न प्रमाणमित्याह—**त्रिवृत्करणेति** ।

अयमाशयः—त्रिवृत्करणं तु साक्षात् श्रूयते, न पञ्चीकरणं तादृशश्रुत्याद्यभावात् । ननु सूक्ष्मयोर्वायुनभसोरव्यवहार्यत्वात् तदीयस्थौल्यस्य च भूतान्तरानुप्रवेशाभावेऽभावात् व्यवहारान्यथाऽनुपपत्त्या पञ्चीकृतिः कल्प्यत इति चेत्, न, तस्यान्यथाप्युपपत्तेः सूक्ष्माणामपि परमाणूनां व्यवहार्यत्वात् । तेषां प्रत्यक्षव्यवहारो नास्तीति चेत् तदिहापि तुल्यं, वाय्वाकाशयोरप्रत्यक्षत्वात् । अतो न पञ्चीकरणोपलक्षणे प्रमाणमिति । किमेतच्चोद्यं भूतत्रयसर्गश्रुतेर्भूतपञ्चकसर्गोपलक्षणत्वमनङ्गीकुर्वत उताङ्गीकुर्वत इति विकल्प्य वाक्यैकवाक्यतया सकलसर्गप्रतिपादकश्रुतीनां ब्रह्मणि समन्वयाभावप्रसङ्गान्नाद्य इत्याह—**नेति** । द्वितीयं दूषयति–**छान्दोग्येति । परिसंख्यार्थत्व इति** । 'अपपरी वर्जने' (पा० सू० १।४।८८) इति सूत्रात्पञ्चीकरणनिवृत्त्यर्थत्व इत्यर्थः । **प्रकरणविरोधेति** । छान्दोग्ये उपलक्षितभूतपञ्चकसृष्टि प्रक्रम्य त्रिवृत्करणमात्रप्रतिपादने प्रकरणविरोध इत्यर्थः । न पञ्चीकरणे प्रमाणाभावः,

**किञ्च नभोनभस्वतोरपि पृथिव्यादिषु स्थूलौ भागौ शब्दस्पर्शौ श्रोत्रेण त्वचा चोपलभ्येते। 'पञ्च चेन्द्रियगोचराः' ( गी. १३।५ ) इत्यत्र स्थूलानि भूतानीन्द्रियगोचरशब्देन व्याख्यातानि भगवता भाष्यकृता। न च शब्दस्पर्शयोः स्थौल्यं भूतान्तरानुप्रवेशादृते सिद्ध्यति। तानि चैतानि पञ्चीकृतानि पञ्चसंख्याकानि भूतानि स्वकार्यव्यापित्वान्महान्ति च व्यपदिश्यन्ते। तेषां च कार्यमन्तःकरणप्राणसमष्टीनामिन्द्रियसमष्टीनां च गोलकादिभेदभिन्नमाधिदैविकं ब्रह्माण्डमाध्यात्मिकमाधिभौतिकं च तत्तदुच्चावचपरिच्छिन्नं शरीरभेदजातम्। तदिदं सर्वभूतभौतिकरूपं सकलमपि स्थूलं जगद-**

---

व्यवहारान्यथाऽनुपपत्तेरेव प्रमाणत्वात्। न च परमाणुव्यवहारवत्तस्य व्यवहारः स्यादिति वाच्यम्। "स्थूलो वायुर्व्याप्तं नभः" इति व्यवहारस्य तद्विलक्षणत्वात्। नभोनभस्वतोर्भूतान्तरानुप्रवेशे रूपादिमत्तयोपलम्भप्रसङ्ग इति चेत्, तर्हि त्रिवृत्करणपक्षे अप्तेजसोर्गन्धवत्तयोपलम्भप्रसङ्ग इति तुल्यम्। अथ पृथिव्यंशस्याल्पत्वादितरांशस्याधिक्यान्नातिप्रसङ्ग इति चेत्तुल्यमन्यत्राभिनिवेशादिति। न च नभोनभस्वतोरप्रत्यक्षता, प्रत्यक्षगुणकत्वात्, न च वातानीतगन्धाश्रये व्यभिचारः. तस्य कदाचित्तज्जातीयप्रत्यक्षोपपत्तेरिति नावद्यं किञ्चित्।

इतोऽपि पञ्चीकरणमभ्युपेयमित्याह—**किञ्चेति**। कथं शब्दस्पर्शयोर्नभोनभस्वत्स्थूलभागात्मतेति तत्राह—**पञ्च चेन्द्रियगोचरा इति**। कथं भाष्यकारैरिन्द्रियगोचरशब्देन स्थूलानि भूतानि व्याख्यातानीति चेत्, कार्यकारणयोरभेदाभिप्रायेणेति ब्रूमः। न कार्यकारणयोः परमार्थतो भेदोऽस्ति, सर्वस्य भेदमात्रस्याग्रे निराकरिष्यमाणत्वात्। ननु—"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च॥ इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः" ( गी० १३।५ ) इत्यत्र महाभूतशब्देनैव स्थूलभूतानामुक्तत्वादिन्द्रियगोचरशब्देन पुनर्महाभूतव्याख्याने पौनरुक्त्यापात इति चेत्, न, महाभूतशब्देन सूक्ष्मभूतोक्तेः। कथं तेषां महाभूतशब्दवाच्यतेति चेत्, लिङ्गदेहाख्यस्वकार्यव्यापित्वेन महत्त्वोपचारात्। वक्ष्यति च—"पूर्ववन्महान्ति च भवन्ति" इति। तथा च शब्दस्पर्शयोर्नभोनभस्वत्स्थूलभागता युक्तेति भावः। ततः किम्? अत आह—**न चेति**। उपसंहरति—**तानि चेति**। पञ्चीकृतानां महत्त्वे हेतुमाह—**स्वकार्येति**। तेषां कार्यमेव गमयति—**तेषां चेति**। चकारः पुनरर्थे। अन्तःकरणसमष्टिः सर्वान्तःकरणसमुदायः प्राणसमष्टिः सर्वप्राणसमुदायः। सर्वेन्द्रियसमुदाय इन्द्रियसमष्टिः। तासां गोलकादिभेदैः स्थानभेदैर्भिन्नं सकलमपि स्थूलं जगदेकीकृत्य विराडित्युच्यते। अध्यात्मविद्भिरिति योजना। विविधं राजते इति विराट्। तत्राधिदैविकं निर्दिशति—**ब्रह्माण्डमिति**। आध्यात्मिकं गोलकादिः। आधिभौतिकमिन्द्रियाणां विषयः। उच्चो देवमनुष्यादिः। अवचः तिर्यगादि। **भूतभौतिकरूपमिति** कारणकार्यरूपमित्यर्थः।

कथमसङ्कीर्णानामाध्यात्मिकादीनामेकीकरणम्? तत्राह—**न पुनरिति**। विभागो वास्तव इति शेषः। कुत इत्यत आह—**सर्वस्येति**। अयं भावः—आध्यात्मिकादिकार्यं भूतपञ्चकाभिन्नं भूतपञ्चककार्यत्वात्, यद्यस्य कार्यं तत्ततोऽभिन्नम्, यथा मृत्कार्यं करकादि मृदभिन्नम्, तथा चेदम्, तस्मात्तथा। न च पितृपुत्रादौ मुद्गरघटप्रध्वंसादौ व्यभिचारः, उपादानरूपकारणविशेषस्य विवक्षित-

ध्यात्मविद्भिरेकीकृत्य विराडित्युच्यते । न पुनराध्यात्मिकाधिभौतिकाधिदैविक-विभागोऽस्ति सर्वस्यास्य भेदजातस्य भूतपञ्चककार्यस्य भूतव्यतिरेकेणाभावात् मृद्विकारस्येव तद्व्यतिरेकेणाभावादिति ।

**एतत् स्थूलशरीरमात्मनः ।**

अथेदं वैराजमेव रूपं प्रत्यगात्मतया प्रतिपत्तव्यं, न त्वन्यदात्मतत्त्वं ज्ञातव्यमस्तीति चेत्, नेत्याह—एतत्स्थूलशरीरमात्मन इति ।

**इन्द्रियैरर्थोपलब्धिर्जागरितम् ।**

ननु इदमात्मनः शरीरमपवर्गे नोपयुज्यते, तस्याशरीररूपत्वात् भोगायतनत्वेन भोगोपयोगित्वं वक्तव्यम् । कुत्र च तदभिमानाधीनो भोगः स्यादित्याकाङ्क्षायां तत्र जागरिते तदभिमानप्रयुक्तो भोगो भवतीति वक्तुं जागरितं लक्षयति—इन्द्रियैरिति । सुषुप्तिव्यावृत्त्यर्थं शब्दादिविषयवाचकमर्थपदम् । स्वप्नं निरसितुमिन्द्रियविशेषणम् । तत्र हि विद्यमानमपि मनो विविधविषयाकारेण परिणतं साक्षिणो दृश्यतयाऽवतिष्ठमानं नोपलब्धौ करणं भवतीति भावः ।

---

त्वात् । साध्यविकलो दृष्टान्त इति चेत्, तत्र वक्तव्यं किं मृद्घटयोरत्यन्तभेदः, उत भेदाभेदाविति । तत्र नाद्यः । कुण्डलस्यापि मृज्जातीयत्वप्रसङ्गात् अत्यन्तभेदाविशेषात् । द्वितीयेऽपि किं कारणस्य कार्यात् भेदाभेदौ, कार्यस्य वा कारणात् । न उभयथाऽपि, वस्तुनो द्वैरूप्यासम्भवात् ।

ननु कार्यस्य कारणात्मनाऽभेदः कार्यात्मना भेदः इत्यापेक्षिकोऽभेदव्यवहार इति चेत्, न, सापेक्षस्य स्वरूपस्यावस्तुत्वात् । यद्धि यस्यान्यानपेक्षस्वरूपं तत्तस्य तत्त्वम्, यदन्यापेक्षं न तत्तस्य तत्त्वम्, अन्याभावेऽभावात् । अतः प्रतीयमानभेदस्य मिथ्यात्वान्न कार्यकारणयोर्वास्तवो भेद इति । लोकायतिकदृष्ट्या शङ्कते—**अथेति** । परिहरति—**नेत्याहेति** ।

आत्मनः शरीरसम्बन्धाभावमभिप्रेत्य शङ्कते—**नन्विति** । सम्भवे वा आत्मन एतच्छरीरं मोक्षे उपयुज्यते, अवस्थान्तरे वेति विकल्प्य प्रथमस्यासम्भवमाह—**अपवर्ग इति** । कुत इत्यत आह—**तस्येति** । "अस्थूलम्" ( बृ० ३।३।८ ) इत्यादिश्रुतेरशरीरतेत्यर्थः । अवस्थान्तरमाकाङ्क्षन्नाऽऽह—**भोगायतनत्वेनेति** । भोगः सुखादिसाक्षात्कारः, तदायतनत्वं तन्निष्पादनस्थानत्वम् । भोगोपयोगित्वं तु तत्साधनत्वमिति विवेकः । उभयं स्वात्मपरात्मभेदेनेति द्रष्टव्यम् । **कुत्रेति** कस्यामवस्थायामित्यर्थः । चकारः समुच्चयार्थः । एतदुत्तरत्वेन मूलमवतारयन्नाह—**तत्रेति** । तस्यां शङ्कायां सत्यामित्यर्थः । उपलब्धिर्जागरितमित्युक्ते सुषुप्तेऽतिव्याप्तिः, तत्रापि स्वरूपोपलब्धिसत्त्वात् । अन्यथा 'सुखमहमस्वाप्सम्' इत्युत्थितस्य परामर्शानुपपत्तेस्तन्निवृत्त्यर्थमर्थपदमित्याह—**सुषुप्तीति** । ननु स्वरूपमप्यर्थ एव, तत्राह—**शब्दादीति** । तावत्युक्ते स्वप्नेऽतिव्याप्तिमाशङ्क्याह—**स्वप्नमिति** । अस्त्येव तत्रापि मनोऽन्तरमिन्द्रियमिति चेत्तत्राह—**तत्रेति** । तत्र स्वप्नावस्थायां यद्यपि मनसोऽवस्थानमस्ति तथाऽपि दृश्यविषयाकारपरिणतत्वान्न तद्ग्राहकवृत्त्याकारपरिणामः सम्भवति, युगपदेव ग्राह्यग्राहकत्वेन

तदुभयाभिमान्यात्मा विश्वः। एतत्त्रयमकारः।

**ननु वैराजे शरीरे जागरिते च प्रत्यगात्मा कथं 'अहं' 'मम' इत्यभिमानभाक् भवितुमुत्सहते ? न हि तस्यासङ्गोदासीनस्य क्वचिदहङ्कारो ममकारो वा युज्यते, तत्र वस्तुतोऽभिमानाभावेऽपि कल्पनया तदुपपत्तेरित्यभिप्रेत्य स्थूले शरीरे जागरिते चाहम्ममाभिमानवतः संज्ञां दर्शयन्नध्यात्माधिभूताधिदैवविभागाभावं सूचयति—तदुभयेति। ननु वैराजशरीरं जागरितं तदुभयाभिमानी चेति कथमेतत्त्रयमद्वैतवादिभिरास्थीयते, तत्राह—एतत्त्रयमिति।**

अपञ्चीकृतपञ्चमहाभूतानि पञ्चतन्मात्राणि। तत्कार्यं च पञ्च प्राणाः दशेन्द्रियाणि मनो बुद्धिश्चेति सप्तदशकं लिङ्गं भौतिकं हिरण्यगर्भ इत्युच्यते। एतत्सूक्ष्मशरीरमात्मनः।

---

विरुद्धपरिणामद्वयानुपपत्तेः। मनउपादानभूताविद्यावृत्त्यवच्छिन्नसाक्षिमात्रवेद्यत्वान्नेन्द्रियवेद्यः स्वाप्नपदार्थः। अतः स्वप्ननिवृत्तये इन्द्रियविशेषणं युक्तमिति। ननु विवरणानुसारिणस्तु निद्रादोषदूषितान्तःकरणावच्छिन्नचैतन्यं स्वाविद्याशक्तिविवर्तस्वप्नावलम्बनमिच्छन्ति, अन्तःकरणस्य च तद्ग्राहकवृत्त्याकारपरिणामम्। अतः "इन्द्रियैरर्थोपलब्धिर्जागरितम्" इति तन्मतेऽतिव्याप्तमिति चेत्, न, तन्मते बाह्यपदस्यानुसन्धेयत्वात्। न च तर्हि जाग्रत्सुखाद्युपलब्धावव्याप्तिरिति शङ्क्यम्, सुखादेरिन्द्रियवेद्यत्वानभ्युपगमादिति द्रष्टव्यम्। यद्वा मनस इन्द्रियत्वानभ्युपगमान्न मनोमये स्वप्नेऽतिव्याप्तिः।

ननु कथं मनस इन्द्रियत्वस्यानभ्युपगम इति ? उच्यते—लिङ्गदेहावयवगणनावसरे कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकमितीन्द्रियत्वस्य वागादिष्वेव नियमितत्वात्। तथाचान्तःकरणवृत्त्यभ्युपगमे तस्यानिन्द्रियत्वान्न तद्वेद्ये स्वप्नेऽतिव्याप्तिः।

वस्तुतस्तु विचार्यते—अन्तःकरणवृत्तिर्हि द्विधा, वृत्तिः फलं चेति। तत्र वृत्तिः अन्तःकरणस्य विशिष्टशब्दादिप्रमाणबलात्तत्तद्विषयाकारसमुल्लासः। फलं तु तस्य चक्षुरादिद्वारा बाह्यविषयाकारपरिणामः। तदुभयं प्रमाणमेव। न पुनरप्रमाया अन्तःकरणवृत्तिरूपत्वं मायावादिनाऽभ्युपेयते, तस्या अविद्याविवर्तत्वाङ्गीकारात्। तदुक्तमिष्टसिद्धिकारैः—"सदसद्भ्यामनिर्वाच्याऽविद्या वेद्यैः सह भ्रम" इति तस्मात्स्वप्नस्य विपर्ययत्वान्नान्तःकरणपरिणामत्वमित्यतः सुष्ठूक्तं नोपलब्धौ करणं भवतीति भाव इति।

यत्तु "तदुभयाभिमान्यात्मा विश्व" इत्युक्तं तदयुक्तम्, आत्मनोऽभिमानाभावादिति शङ्कते—**नन्विति।** वैराजे शरीरे अहमिति, जागरिते ममेति विभागः। "असङ्गो ह्ययं पुरुषः" (बृह० ४।३।१५) इति श्रुतिमाश्रित्यात्मनोऽभिमानाभावं दर्शयति—**न हीति।**

सिद्धान्ती अभिमानस्यावास्तवत्वमङ्गीकृत्य काल्पनिकोऽभिमान इति परिहरति—**तत्रेति।** अध्यात्माधिभूताधिदैवविभागाभावम्। वस्तुत इति शेषः। द्वैतापत्तिमाशङ्कते—**नन्विति।** वास्तवाभेदमाश्रित्य परिहरति—**तत्राहेति।**

**तदेवमाद्यमकारं निरूप्य मध्यममुकारं निरूपयितुं सूक्ष्मप्रपञ्चं कथयति—अपञ्चीकृतेति। अयमर्थः—शब्दस्पर्शरूपरसगन्धाः तन्मात्राणि सूक्ष्मभूतानि परस्परमनुप्रवेशशून्यान्यपञ्चीकृतानि पञ्चसंख्याकानि पूर्ववन्महान्ति च भवन्ति। तेषां च कार्यं कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं प्राणादिवायुपञ्चकं बुद्धिर्मनश्चेत्यन्तःकरणद्वयमिति सप्तदशकं लिङ्गम्। तच्चेदं कयापि विधया प्रतीचो गमकत्वादेव लिङ्गमिति व्याख्यायते। तत्कार्यमुक्त्वा भौतिकत्वमभिदधानो लिङ्गस्याहङ्कारिकत्वमप्रामाणिकमिति मन्यते। तदेतदपञ्चीकृतभूतपञ्चकं लिङ्गम्। तच्च सप्तदशकं पूर्वोक्तं भूतकार्यतया भौतिकम्। सर्वमेतदेकीकृत्य हिरण्यगर्भशब्देनोच्यत इति हिरण्यगर्भस्यापि विराडात्मवन्नात्मत्वम्। किन्तु तदुपाधित्वमित्यभिप्रेत्याह—एतदिति।**

करणेषूपसंहृतेषु जागरितसंस्कारजः प्रत्ययः सविषयः स्वप्न इत्युच्यते।

**अथाधुना चास्य भोगायतनत्वं यत्र तमवस्थाविशेषं लक्षयति—करणेष्विति। 'प्रत्ययः स्वप्नः' इत्युक्ते सुषुप्तावतिप्रसक्तिर्मा भूदित्युक्तं सविषयः स्वप्न इति।**

---

वृत्तानुवादपुरःसरमुत्तरग्रन्थमवतारयति—**तदेवमिति**। अपञ्चीकृतपञ्चमहाभूतानीति पदतात्पर्यं कथयति—**अयमर्थ** इत्यादिना। शब्दस्पर्शरूपरसगन्धास्त्वपञ्चीकृतानि भूतानीति योजना। तेषां सूक्ष्मत्वादाह—**तन्मात्राणीति**। तेषामाकाशादीनां मात्राणि कारणानि। तेषामपञ्चीकृतत्वं दर्शयति—**परस्परेति**। **पूर्ववदिति,** स्वकार्यव्यापित्वादित्यर्थः। तेषां कार्यमाह—**तेषां चेति**। वाक्पाणिपादपायूपस्थानीति कर्मेन्द्रियाणि, श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ज्ञानेन्द्रियाणि, प्राणादिवायुपञ्चकम्। चित्ताहङ्कारयोर्बुद्धिमनसोरन्तर्भावमभिप्रेत्याह—**अन्तःकरणद्वयमिति**। तेषां लिङ्गशब्दवाच्यत्वे हेतुमाह—**प्रतीचो गमकत्वादिति**। प्रतीचः प्रत्यगात्मनो गमकत्वाज्ज्ञापकत्वात्। लीनमर्थं गमयतीति लिङ्गमिति व्युत्पत्त्या गमकं लिङ्गमिति प्रसिद्धेः। **कयाऽपि विधयेति**। केनापि प्रकारेण इन्द्रियाणि स्वप्रवृत्त्या स्वप्रेरकमनुमापयन्तीत्यर्थः। **तत्कार्यत्वमिति**। तस्य सप्तदशावयवात्मकस्य लिङ्गस्य आहङ्कारिकत्वमहङ्कारविषयत्वमित्यर्थः। **अप्रामाणिकमितीति**। यत इदं भूतकार्यमतोऽस्मिन्नहमित्यात्माभिमानोऽप्रामाणिक इत्यर्थः। भूतभौतिकयोः कार्यकारणत्वेनाभेदमाश्रित्य हिरण्यगर्भशब्देन ब्रूत इत्याह—**तदेतदिति**। भौतिकत्वे हेतुः—**भूतकार्यतयेति**। हिरण्यगर्भ एव प्रत्यगात्मतया प्रत्येतव्य इति नेत्याह—**हिरण्यगर्भस्यापीति**। हिरण्यगर्भस्यापि नात्मत्वं, किन्तु विराडात्मवत्तदुपाधित्वमित्यन्वयः। तस्यात्मन उपाधिस्तदुपाधिः, तस्य भावस्तत्त्वमिति यावत्।

हिरण्यगर्भोपाधिकस्यात्मनोऽपि भोगः किं जागरिते, अथवा अवस्थान्तर इति जिज्ञासायामवस्थान्तरं दर्शयति—**अथाधुनेति**। करणेषूपसंहृतेषु सविषयः प्रत्ययः स्वप्न इति स्वप्नलक्षणम्। स्वप्नावस्थायां विषयाभावात् सविषयत्वाभावमाशङ्क्याह—**वासनेति**। करणाभावे प्रत्ययानुदय-

वासनामयविषयसहितः स्वप्नेऽपि प्रत्ययो भवतीत्यर्थः। जागरितव्यावृत्त्यर्थमुक्तं—करणेषूपसंहृतेष्विति।

ननु तर्हि करणाभावात्कथमयं प्रत्ययः समुद्भवेदित्याशङ्क्याह—जागरितेति। संस्कारग्रहणं न कारणान्तरपरिसंख्यार्थं, कारणान्तरस्यादृष्टादेरिष्टत्वादिति द्रष्टव्यम्।

तदुभयाभिमान्यात्मा तैजसः। एतत्त्रयमुकारः॥

इदानीं हिरण्यगर्भशरीरे स्वप्ने चाहम्ममाभिमानवतः संज्ञां सङ्गिरते—तदुभयेति। तैजसस्तेजसि वासनायामभिमानितया निर्वृतो भवतीति व्युत्पत्त्योच्यते। न च सूक्ष्मशरीरं स्वप्नावस्था च तयोरभिमानीत्येतत्त्रितयाङ्गीकारेण द्वैतमाशङ्कितव्यमित्याह—एतत्त्रयमुकार इति।

शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते। एतत् कारणशरीरमात्मनः।

नन्वकारात्मकस्थूलशरीरस्योकारात्मकसूक्ष्मशरीरस्य च पारमार्थिकत्वाभ्युपगमे द्वैतता स्यादिति, नेत्याह—शरीरद्वयेति। कथं पुनरात्माश्रयमात्मविषयं चाज्ञानं कार्याय पर्याप्तम् अचेतनत्वादिति? तत्राह—साभासमिति। कुलालाद्यधिष्ठितं हि मृदादि घटादिकं कुर्वदुपगम्यते। तद्वच्चिदाभासव्याप्तमज्ञानं शरीरद्वयाकारेण परिणमते विवर्तते इत्यर्थः। "तद्धेदं तर्ह्यव्याकृमासीत्" ( बृह० १।४।७ ) इत्यादिश्रुतावव्याकृतस्य कारणत्वश्रुतेः।

---

माशङ्कते—**तर्हीति**। संस्कारस्यैव करणत्वान्न करणाभाव इति परिहरति—**जागरितेति**। कश्चिदाह स्वप्नः स्मृतिरिति। स प्रष्टव्यः स्मृतेः किं लक्षणमिति, संस्कारजन्यत्वमिति चेत्, प्रत्यभिज्ञायामतिव्याप्तिः। तन्मात्रजन्यत्वं तु प्रकृते नास्तीत्यत आह—**संस्कारग्रहणमिति**। परिसंख्या परिवर्जनम्। **अदृष्टादेरिति** आदिशब्दाद्दोषो गृह्यते।

न चादृष्टस्य संस्कारोद्बोधकत्वेनान्यथासिद्धिरिति वाच्यम्, सर्वोत्पत्तिमन्निमित्तकारणत्वव्याहतिप्रसङ्गादिति। **संज्ञां सङ्गिरते** व्यवहारासाङ्कर्यायेति शेषः। तैजसत्वं निर्वक्ति—**तेजसीति**। निर्वृतः तृप्तः। द्वैतापत्तिं परिहरति—**नचेति**।

तदेवमकारोकारनिरूपणं सप्रपञ्चं व्याख्याय मकारनिरूपणमवतारयति—**नन्विति**। स्थूलसूक्ष्मप्रपञ्चरूपकार्यस्य तत्कारणमात्रत्वान्न द्वैतमिति परिहरति—**नेत्याहेति**। अज्ञानस्य प्रपञ्चोत्पादकत्वासम्भवमाशङ्कते—**कथमिति**। तत्र हेतुमाह—**अचेतनत्वादिति**। पर्याप्तमलं समर्थमिति यावत्। आत्माश्रयमात्मविषयमित्यस्यायं भावः—न अनात्मनः अज्ञानाश्रयता, तस्याज्ञानोत्पादितत्वेन तदाश्रयत्वायोगात्। न हि मृदुत्पादितो घटो मृदाश्रयो भवति। कथं तर्हि स्वप्रकाशचैतन्यमावरणरूपाऽविद्या समाश्रयेदिति चेत्, तत्र किं वास्तवमाश्रयत्वं न सम्भवति उत प्रातीतिकमपि। आद्येऽ-

**कथमात्माज्ञानस्य तु तदुक्तमित्याशङ्क्य तत्रैवाव्याकृतशब्दप्रयोगान्नैवमित्याह— अव्याकृतमिति ।**

तच्च न सत्, नासत्, नापि सदसत्, न भिन्नं, नाभिन्नं, नापि भिन्नाभिन्नं कुतश्चित्। न निरवयवं, न सावयवं, नोभयम्। किन्तु केवलब्रह्मात्मैकत्वज्ञानापनोद्यम्।

**शरीरद्वयहेतोरव्याकृतस्यार्थक्रियाकारित्वेन सत्त्वाभ्युपगमात्, तत्कार्यस्यापि तथात्वात्, अद्वैतानुपपत्तिरित्याशङ्क्याह—तच्चेति । तस्यापि सत्त्वे 'सदेव' इति ब्रह्मण्यवधारणायोगात् अभिधास्यमानज्ञानापनोद्यत्वानुपपत्तेश्च सत्त्वासिद्धिरित्यर्थः ।**

---

विवाद एव । द्वितीये 'अहमज्ञः' इत्यनुभवविरोधः । तथा चात्माश्रयमज्ञानमिति युक्तम् । तथाऽज्ञानविषयोऽप्यात्मैव । कथं तर्हि घटाज्ञानं पटाज्ञानमिति अनुभव इति चेत्, तदवच्छिन्नचैतन्यावरणादेवेति ब्रूमः । घटविषयकमज्ञानमित्यत्र घटावरणरूपमज्ञानमिति वक्तव्यम् । तच्च न सम्भवति, प्रमाणप्रयोजनयोरभावेन जडावरणस्य दुर्निरूपत्वात्। प्रसक्तप्रकाशप्रतिबन्धायावरणमपेक्षते। न कदाचिज्जडे प्रकाशः प्रसक्तः । विस्तृतमेतद्विवरणाचार्यैरिति नेह वदामः । उक्तं च—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ।।

( संक्षे० शारी० १।३।१९ ) इति ।

अतोऽचेतनत्वादज्ञानं कथं कार्याय पर्याप्तमिति । उत्तरमाह—**तत्राहेति** । आ समन्ताद्भासत इत्याभासः चैतन्यं तेन सह वर्तते इति तथा, चैतन्याधिष्ठितमित्यर्थः । दृष्टान्तः स्पष्टः । प्रपञ्चद्वयकारणमात्माज्ञानमित्युक्तं तदयुक्तं, श्रुतिविरोधादित्याशङ्कां परिहरति–**तद्धेदमिति** । अव्याकृतं सुषुप्तिर्निद्रा मायाऽविद्या शक्तिरित्याद्यनेकशब्दवाच्यमात्माज्ञानमित्यर्थः ।

नन्वज्ञानं सत् उत असत्, अथवा सदसत् भिन्नम्, उताभिन्नम्, अथवा भिन्नाभिन्नमिति निरूपणासहिष्णुतया अनिर्वचनीयत्वं प्रकटयितुमाह—**शरीरेत्यादिना** । तच्च न सदित्युक्तम्, तदाक्षिपति—**शरीरद्वयहेतोरिति** । तस्य सत्त्वे हेतुमाह—**अर्थक्रियाकारित्वेनेति** । ततः किमनिष्टमित्यत आह—**अद्वैतानुपपत्तिरिति** । तत्रोत्तरत्वेन मूलमवतारयति—**तच्चेतीति** । तदुपपादयति—**तस्यापीति** ।

नन्वग्रे सृष्टेः पूर्वं सदेवासीदिति सन्मात्रमेवावधारयति श्रुतिः, न तु ब्रह्मासीदिति । तत्कथं ब्रह्मण्यवधारणयोग इति चेत्, न, छान्दोग्ये "सदेव सोम्य" इत्युपक्रम्य, "तत्सत्यं स आत्मा" ( छां० ६।२।२० ) इत्युपसंहारात् ब्रह्मण्येवावधारणोपपत्तेः । हेत्वन्तरमाह—**अभिधास्यमानेति** ।

अयमर्थः—न ज्ञानं वस्तुसतो निवर्तकम्, तेन सह विरोधाभावात् । विरोधस्तु प्रसिद्ध एव ज्ञानाज्ञानयोः, रज्जुतत्त्वज्ञानेन रज्ज्वज्ञानविलयदर्शनात् । यद्यज्ञानं परमार्थतः सत् स्यात् तर्हि ज्ञानेन न निवर्तेत । निवर्तते न तत् । श्रूयते च "भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वे० १-१० ) इति ।

तर्हि सत्त्वनिषेधादसत्त्वमेव स्यात्, नभोनलिनीवदिति चेत्, न, इत्याह—नासदिति। "अज्ञोऽहम्" इत्यपरोक्षप्रतीतिविरोधादर्थक्रियाकारित्वाच्च नात्यन्तिकमसत्त्वम्। न च परस्परविरोधे सत्त्वासत्त्वयोर्विधान्तरानुपपत्तिः। संसर्गाभावान्योन्याभावयोर्भेदप्रतिपादको योऽन्योन्याभावः स यथा एतदुभयविलक्षणस्तद्वदत्रापि सत्त्वासत्त्वविलक्षण इत्यर्थः। अभावान्योन्याभावयोरन्योन्याभावस्य तद्भावानभ्युपगमवत् इहापि सत्त्वस्यासत्त्वस्य चानभ्युपगमसम्भवादिति भावः।

अस्तु तर्हि प्रत्येकं सत्त्वासत्त्वप्रतिषेधेऽपि समुच्चितं सदसदात्मकमव्याकृतमिति चेत्, मैवम्, विरोधात्, एकत्र तद्भावासम्भवादित्याह—नापीति। तर्हि सतोऽसतः सदसद्भ्यां वा भिन्नमिति चेत्, नेत्याह—न भिन्नमिति। न हि भेदो धर्मत्वेन स्वरूपत्वेन वा प्रतिपादयितुं शक्यते। धर्मत्वे भेदाभेदविकल्पप्रवेशप्रसङ्गात्। स्वरूपत्वे चान्यतरपरिशेषापातादित्यर्थः।

भेदनिषेधे प्राप्तमभेदं निरस्यति—नाभिन्नमिति। सदसद्भ्यामन्यतमपरिशेषे

---

तस्मान्न सदज्ञानमिति सत्त्वासत्त्वयोः परस्परस्पर्द्धिनोरेकनिषेधेऽन्यविधानान्तरीयकत्वादसदेवेत्याशङ्कते—**तर्हीति**। दूषयति—**नेत्याहेति**। कुत इत्यत आह—**अज्ञोऽहमिति**। न ह्यत्यन्तासतः शशशृङ्गादेरपरोक्षावभासः सम्भवतीत्यर्थः।

नन्वसत्त्वनिषेधे सत्त्वं, सत्त्वनिषेधे चासत्त्वम्, अतः कथं तृतीयः प्रकार इत्याशङ्क्याह—**न चेति**। विधान्तरमेव दृष्टान्तेन साधयति—**संसर्गाभावान्योन्याभावयोरिति**। संसर्गाभावश्चान्योन्याभावश्च संसर्गाभावान्योन्याभावौ, तयोरन्योन्याभावः अन्योन्यात्मकता तदभावः अन्योन्यात्मकताऽभावः। **तद्भावानभ्युपगमादिति** तदुभयानभ्युपगमसम्भवादिति योजना।

अयमर्थः—**अनभ्युपगमसम्भवादित्यन्ते** परिशेषात्प्रकारान्तरसम्भव इति योजनीयम्। "अभावान्योन्याभावयोः" इति पाठे संसर्गाभावान्योन्याभावयोर्भेदको योऽन्योन्याभावस्तस्य तदुभयविलक्षणत्वाङ्गीकारवदित्यर्थः। यद्यपि तार्किकमतेऽभावान्योन्याभावयोः संसर्गाभावान्योन्याभावयोर्वा भेदकः स्वरूपातिरिक्तोऽन्योन्याभावो नास्ति, तथापि स्वरूपात्मकभेदानभ्युपगमात् भेदकः कश्चिदाकार एष्टव्यः, भावाभावयोरभावयोर्वाऽन्यथापेक्षानपेक्षाविरुद्धधर्मयोर्भेदस्वरूपयोरैक्यप्रसङ्गात्।

अतो दृष्टान्तोपपत्तिरिति। परिशेषात् सदसत्समुच्चय एवास्त्वव्याकृतमिति शङ्कते—**अस्तु तर्हीति**। न च समुच्चयोऽनुपपन्न इति वाच्यम्, त्रिदोषसमुच्चयस्य सन्निपातत्ववत् त्रिगुणसमुच्चयस्य प्रकृतित्ववत्, सदसत्समुच्चयस्याव्याकृतत्वोपपत्तेरिति परिहरति—**मैवमिति**। न च सन्निपातादिवत्समुच्चयसम्भवः, परस्परप्रतिस्पर्द्धित्वात्सत्त्वासत्त्वयोः। न ह्येकमेव वस्तु युगपत् सच्चासच्च भवतीति भावः।

तर्हि चतुर्थ एव प्रकारोऽस्त्वित्याशङ्कते—**तर्हीति**। न हि भेद इति। भेदः किं वस्तुधर्मः

**पूर्वोक्तदोषानुषङ्गात् । अव्याकृतमात्रपरिशेषे च वस्त्वप्रसिद्धेस्तदसिद्धिरित्यर्थः । भेदाभेदयोरेकैकस्य निषेधेऽपि प्राप्तं भिन्नाभिन्नत्वं विरोधात्प्रत्याचष्टे—नापि भिन्नाभिन्नं कुतश्चिदिति । सतोऽसतश्चेति प्रत्येकं मिलितस्य च प्रतियोगित्वमुच्यत इति ज्ञातव्यम् ।**

**सत्त्वादिना निर्वक्तुमशक्यत्वेऽपि मूलकारणत्वादव्याकृतं निरवयवत्वेन शक्यं निर्वक्तुमित्याशङ्क्याह—न निरवयवमिति । न हि तस्यानात्मनो निरवयवत्वं तत्तन्नानाविधप्रपञ्चाकारपरिणामित्वादित्यर्थः ।**

**तर्हि परिणामित्वादेव मृदादिवदेष्टव्यं सावयवत्वमित्याशङ्क्याह—न सावयवमिति । सावयवत्वे कार्यद्रव्यत्वेन मूलकारणत्वानुपपत्तेः, तत्तत्कार्याकारपरिणामस्य च मिथ्यात्वेन विवर्तत्वादित्यर्थः । अर्थप्राप्तमुभयरूपत्वं विरोधेन प्रत्यादिशति—नोभयमिति ।**

---

स्वरूपं वा ? । नाद्य इत्याह—**धर्मत्व इति** । वस्तुधर्मयोर्यो भेदः स किं वस्तुनः सकाशाद्भिन्नः उत अभिन्नः ? आद्येऽपि किं स्वत एवोत भेदान्तरेण ? नाद्यः, स्वस्यैव भेद्यभेदकत्वेन कर्मकर्तृत्वविरोधप्रसङ्गात् । न द्वितीयः, सोऽपि भेदो भेदान्तरेणेत्यनवस्थापातादिति । अभिन्नत्वे धर्मत्वव्याघातात् । नापि द्वितीय इत्याह—**स्वरूपत्वे चेति** । घटपटयोर्भेदस्य स्वरूपानतिरिक्तत्वे घट एव वा स्यात्पटो वा नान्यो भेदोऽस्तीत्यर्थः । **पूर्वोक्तदोषानुषङ्गा**दिति । सतोऽभिन्नत्वे ज्ञानापनोद्यत्वानुपपत्तेः, असतोऽभिन्नत्वे अपरोक्षप्रतिभासानुपपत्तेः, समुच्चयाभेदस्य विरोधिनोः समुच्चयासम्भवादेवासम्भव इत्यर्थः । तर्ह्यव्याकृताभेद एवास्तु । तत्राह—**अव्याकृते**ति । पक्षान्तरव्याख्याऽतिरोहितार्था । कुतश्चित्पदस्य वैयर्थ्यमाशङ्क्याह—**कुतश्चिदितीति** । सदाद्यन्यतमादपि न भिन्नं नाभिन्नं नापि भिन्नाभिन्नमित्यर्थः ।

ननु सदादिभिः प्रकारैर्निर्वक्तुमशक्यत्वेऽप्यव्याकृतस्य नानिर्वचनीयता सिद्ध्येत्, प्रकारान्तरेण शक्यनिर्वचनत्वादित्याशङ्कते—**सत्त्वादिनेति** । निरवयवत्वे हेतुः—**मूलकारणत्वादिति** । सावयवस्यावयवपरतन्त्रत्वेनानित्यत्वान्न मूलकारणत्वम् । "मायां तु प्रकृतिम्" ( श्वेता० ४।१० ) इति श्रुतेर्न मूलकारणत्वं हीयत इत्यर्थः । दूषयति—**न निरवयवमितीति** । तत्रोपपत्तिमाह—**न हीति** । निरवयवत्वाभावे हेतुमाह—त**त्तन्नानेति** । सावयवाकारेण प्रतीयमानकार्यस्य न कारणं निरवयवं भवितुमर्हतीत्यर्थः ।

अस्तु तर्हि कार्यानुसारेण सावयवमेवाव्याकृतमिति शङ्कते—तर्हीति । परिहरति—**न सावयवमितीति** । कार्यद्रव्यत्वेनेति हेतौ तृतीया । ननु कार्यस्य सावयवत्वे कथं कारणं निरवयवम्, परमाणुवदिति चेत्, न, अव्याकृतस्य भवद्भिर्निरवयवत्वानभ्युपगमादिति चेत्, तत्राह—**तत्तदिति** । कार्यस्यापि सावयवत्वेन स्वरूपे निर्णीते भवेदियमाशङ्का, तदेव न निर्णीयते । प्रतीतिस्तु स्वप्नवदुपपद्यते, स्वप्नस्यारोपरूपत्वात् । आरोप्यस्य वास्तवं सावयवत्वं क्वचिदेष्टव्यमिति चेत्, न पूर्वपूर्वभ्रमकल्पितसावयवत्वस्योत्तरोत्तरोपपत्तेर्न वास्तवसावयवत्वाभ्युपगम इति भावः । पक्षान्तरं निगदव्याख्यातम् ।

**ननु केनापि प्रकारेण निर्वचनासम्भवेऽपि किं तदनिर्वचनीयत्वम्। न हि लक्षणमन्तरेण लक्ष्याधिगतिरस्ति, तत्राह—किन्त्विति। अस्याज्ञानस्य सर्वथोक्तलक्षणशून्यत्वादत एव निर्वक्तुमशक्यत्वात् यत्किञ्चिच्छब्दवाच्यत्वेन तत्सिद्धेरात्मनि द्वैतोत्पत्तिः सिद्धा। तन्निवारणार्थं तद्धानोपायमाह—केवलेति। निरालम्बनज्ञानायोगाद्यत्किञ्चिदालम्बनज्ञानस्य च सनिदानसंसारनिराससाधनत्वासम्भवात्तदुचितं विषयं दर्शयति—ब्रह्मात्मैकत्वेति।**

**अथ यथोक्तं ज्ञानमग्निहोत्रादिसहितं फलसाधनं, साधनभूयस्त्वे फलभूयस्त्वसम्भवात्, मैवम्, मिथो विरुद्धयोः समुच्चयायोगात्, फलस्य च कैवल्यस्य निरतिशयत्वादित्याशयवानाह—केवलेति।**

**सर्वप्रकारज्ञानोपसंहारे बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिः।**

**अव्याकृतस्य अनिर्वाच्यस्याधिदैविकीमवस्थामुक्त्वा सम्प्रत्याध्यात्मिकीमवस्थां तदेकत्वविवक्षया दर्शयति—सर्वप्रकारेति। इन्द्रियसंसृष्टस्थूलार्थाकारतया स्थूलत्वं वासना-**

---

ननु लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः, तत्कथं केनापि प्रकारेण निर्वचनानर्हं वस्तु सिद्ध्येदिति शङ्कते—**नन्विति**। उक्तप्रकारेण निर्वचनासम्भवेऽपि प्रकारान्तरेणास्ति निर्वचनमित्याह—**तत्राहेति**। ज्ञानापनोद्यमव्याकृतमिति लक्षणम्। तत्तु पूर्वोक्तरीत्या निर्वचनानर्हमित्यनिर्वचनीयमेव। न चातिव्याप्तिः अनिर्वचनीयस्य आत्मनोऽनपोह्यत्वात्। नाप्यव्याप्तिः, भूभूधरादीनामविद्याकार्यत्वेनाविद्यात्मकत्वादिति। नाप्यसम्भवः, ज्ञानाज्ञानयोर्विरोधेनाज्ञानस्य ज्ञाननिवर्त्यत्वोपपत्तेरिति। तत्र ज्ञानशब्देनान्तःकरणवृत्तिरुच्यते। तच्च न निर्विषयमित्याह—**निरालम्बनेति**। अस्तु तर्हि घटाद्यालम्बनमेव ज्ञानं, नेत्याह—**यत्किंचिदिति**। "ब्रह्मविदाप्नोति परम्" ( तै० २।१।१ ) "ब्रह्म वेद ब्रह्मैव भवति" ( मुण्ड० ३।२।९ ) "भिद्यते हृदयग्रन्थिः" ( मुण्ड०२।२।८ ) इत्यादिश्रुतिभ्यः संसारनिरसनसाधनत्वं ब्रह्मज्ञानस्यावगम्यत इत्याशयेनाह—**तदुचितमिति**।

ज्ञानकर्मसमुच्चयवाद्याशङ्कते—**अथेति**। ज्ञानमात्रादेव मोक्षोपपत्तौ किमिति कर्माद्यपेक्ष्यत इति तत्राह—**साधनभूयस्त्व इति**। मोक्षो नाम सुखविशेषः स च ज्ञानमात्राज्जातादपि कर्मसहितज्ञानाज्जातोऽधिको भवति। यथाऽग्निष्टोममात्रजन्यात्स्वर्गात् वाजपेयसहिताज्जन्योऽधिकस्तद्वदिति। भवेदेवं यदि ज्ञानकर्मणोः समुच्चयो भवेत्, तदेव न सम्भवतीति परिहरति—**मैवमिति**। ज्ञानकर्मणोर्विरुद्धाधिकारिनिष्पाद्यतया समुच्चयासम्भवादित्यर्थः। किञ्च मोक्षलक्षणस्य फलस्य जन्यत्वे भवेत्सातिशयत्वम्, न तु तदस्तीत्याह—**फलस्येति**। कैवल्यस्य कैवलात्मस्वरूपस्य नित्यात्मस्वरूपस्येत्यर्थः।

अव्याकृतस्याधिदैविक्यवस्था स्वरूपलक्षणा, आध्यात्मिक्यवस्था सुषुप्तिलक्षणा, अव्याकृतस्यावस्था सुषुप्तिरिति वक्तव्येऽव्याकृतं सुषुप्तिरित्युक्तं तदयुक्तमित्याशङ्क्याह—**तदेकत्वेति**। कार्यकारणयोरत्यन्तभेदाभावादित्यर्थः। सर्वप्रकारकज्ञानोपसंहार इत्युक्तम्, किं तत्सर्वप्रकारत्वमित्यत आह—

रूपसूक्ष्मार्थाकारतया सूक्ष्मत्वं च ज्ञानानां सर्वप्रकारत्वम्। तेषामशेषविशेषविज्ञानानामुपरमो मुक्तावपि सम्भवतीत्येतदुक्तम्। बुद्धेरिति। अन्तःकरणस्य कारणाकाररूपेणावस्थानमवस्थान्तरेऽपि जागरितादावस्तीत्याद्यं विशेषणम्। किमिदं कारणात्मना बुद्धेरवस्थानम्? किं कारणस्य बुद्धेश्चावस्थानम्? किं कारणस्यैव तद्वासनावासितस्यैव पुनर्बुद्ध्युत्पादनयोग्यस्य? प्रथमे जागरितादेरविशेषः सुषुप्ते स्यात्, द्वितीये बुद्धिग्रहणमनर्थकमिति चेत्, मैवम्, बुद्धेर्यत्कारणं तस्यैव तद्वासनावासितस्य पुनर्बुद्ध्युत्पादनयोग्यस्य स्थितेरिष्टत्वादिति द्रष्टव्यम्।

तदुभयाभिमान्यात्मा प्राज्ञः। एतत् त्रयं मकारः।

सम्प्रत्यव्याकृताभिमानिनाऽन्तर्यामिणा सहैकत्वं सुषुप्त्यभिमानिनः सिद्धवत्कृत्य तद्विषयसंज्ञाविशेषं व्यवहारलघुतायै निवेदयति—तदुभयेति।

प्राज्ञ इति। प्रज्ञा चैतन्यम्, तत्प्रधानः पुरुषः प्राज्ञशब्दार्थः। तदुपाधिभूतकारणस्य तत्प्रकाश्यत्वेनोपसर्जनत्वात्। अव्याकृतं सुषुप्तिरुभयोरभिमानी चेति त्रितयं मकारान्तर्भूतत्वान्मिथो न पृथगित्यद्वैतमनुस्मरन्नाह—एतत्त्रयं मकार इति। स्थूलप्रपञ्चात्मनो विराजो जागरितस्य तदुभयाभिमानिनो विश्वस्याकारत्वम्, सूक्ष्मप्रपञ्चात्मनो हिरण्यगर्भस्य स्वप्नस्य तदुभयाभिमानिनस्तैजसस्योकारत्वम्, प्रपञ्चद्वयकारणभूताव्याकृतस्य सुषुप्तेस्तदुभयाभिमानिनश्च प्राज्ञस्य मकारत्वमित्युक्तमुपनिषत्प्रामाण्यात्प्रतिपत्तव्यम्।

---

**इन्द्रियेति**। एतावता सविषयप्रत्ययनिरासेन जाग्रत्स्वप्नयोरतिव्याप्तिर्निरस्ता भवति। एवमपि मुक्त्यवस्थादौ व्यभिचारमाशङ्क्य परिहरति—**तेषामि**त्यादिना। अस्तु तर्हि बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिरित्येतावदेव लक्षणम्, तत्राह—**अन्तःकरणस्येति**। किमिदमित्यादिपूर्वपक्षग्रन्थः स्पष्टार्थः। कारणात्मनाऽवस्थानमित्युक्तेऽविशेषेण सर्वकार्याणां कारणात्मनावस्थानं प्रलयेऽस्ति ततो बुद्धेरिति विशेषणम्। तथापि सर्वान्तःपातिन्या बुद्धेः प्रलयेऽपि कारणात्मनाऽवस्थानमस्तीति चेत्, सत्यम्, तत्र सर्वकार्यवासनावासितस्य कारणस्यावस्थानेऽपि न केवलं बुद्धिविशेषवासनावासितस्य कारणस्यावस्थानमस्ति, येन झटिति बुद्धिमेवोत्पादयेदिति मन्वानः परिहरति—**मैवमिति**। **पुनर्बुद्ध्युत्पादनयोग्यस्ये**ति। पुनर्झटिति बुद्ध्युत्पादनयोग्यस्येत्यर्थः। अव्याकृताभिमानी ईश्वरः। "एष सर्वेश्वर एषोऽन्तर्यामी" ( माण्डू० ६ ) इति श्रुतेः। एकत्वं तु स्वरूपतः, नोपाधितः।

तद्विषये सुषुप्त्यभिमानिनि प्राज्ञत्वं निर्वक्ति—**प्रज्ञेति**। कथं प्राज्ञस्य चैतन्यप्रधानत्वं तस्यौपाधिकत्वेनोपाधिप्रधानत्वादित्यत आह—**तदुपाधीति**। उपाधेरुपसर्जनत्वे हेतुः—**तत्प्रकाश्यत्वेनेति**। **अव्याकृत**मिति ग्रन्थः स्पष्टार्थः। विराडादीनामकाराद्यात्मनोपसंहारो न युक्तः, प्रमाणाभावादित्यत

**अकार उकारे, उकारो मकारे, मकार ओङ्कारे, ओङ्कारोऽहम्येव ।**

तथापि त्रयाणामकारादीनां मिथो विभक्तानामवस्थानात् कुतोऽद्वैतं सिद्धयतीत्याशङ्कयापवादप्रक्रियां प्रकटयति—अकार इति ।

अस्यार्थः—स्थूलभूतकार्यं समष्टिव्यष्टयात्मकमधिदैवतादिभेदभिन्नं दृश्यं सर्वं स्थूलभूतात्मना प्रलीयते । तानि च स्थूलानि भूतानि पञ्चीकृतान्यवस्थाभिमानिसहितान्यकारात्मकानि अपञ्चीकृतभूतेषु विलीयन्ते । तत्कार्यं च सप्तदशकं लिङ्गमारम्भणाधिकरणन्यायेन तन्मात्रतां प्रतिपद्यते । तानि च अपञ्चीकृतानि सूक्ष्मभूतान्यवस्थाभिमानिसहितान्युकारात्मकानि सम्भूतिवैपरीत्येन प्रलयं प्रतिपद्यन्ते । तत्र पृथिवी गन्धतन्मात्रात्मिका रसतन्मात्रात्मिकास्वप्सु, ताश्चापो रूपतन्मात्रे तेजसि, तत्तेजः स्पर्शतन्मात्रे वायौ, स च वायुः शब्दतन्मात्रे नभसि, तच्चाविद्यासहाये सच्छब्दिते ब्रह्मण्यव्यक्ते,

---

आह—**उपनिषत्प्रामाण्यादिति** । "स्थूलभुग्वैश्वानरः प्रथमः पादः । प्रविविक्तभुक्तैजसो द्वितीयः पादः । आनन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः" (माण्डू० १।३-४-५) इति माण्डूक्योपनिषत्प्रामाण्यादित्यर्थः ।

तदेवमध्यारोपं सप्रपञ्चं निरूप्याद्वैतप्रतिपत्तिसिद्धयेऽपवादं प्रकटयितुं पूर्वपक्षमुत्थापयति—**तथाऽपीति** ।

अपवादप्रकारमुत्पत्तिवैपरीत्येन स्पष्टीकरोति—**अस्यार्थ इति** । अक्षरार्थस्त्वतिरोहितः । **आरम्भणाधिकरणन्यायेनेति** । शारीरके द्वितीयाध्याये चिन्तितं, भोक्तृभोग्यभेदप्रपञ्चस्य प्रत्यक्षादिप्रमाणसिद्धत्वान्न मिथ्यात्वमिति प्राप्ते राद्धान्तः । "**तदनन्यत्वमारम्भणशब्दादिभ्यः**" ( ब्रह्मसूत्र० २।१।१४ ) । छान्दोग्ये एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय श्रूयते "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छां० ६।१।४ ) इति । अस्यार्थः—एकस्मिन्कारणे मृदादौ ज्ञाते सति घटशरावादि सर्वं मृण्मयं ज्ञातं भवति. यदि कार्यस्य कारणानन्यत्वं स्यात् अन्यथा कार्याणामानन्त्येनाशक्यज्ञानत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽनर्थिका स्यादिति ।

ननु तथाऽपि नाद्वैतसिद्धिः, "त्रीणि रूपाणीत्येव सत्यम्" ( छां० ६।४।१ ) इति पुनः पुनरवधारणादिति चेत्, न, भौतिकानां भूतमात्रतावधारणपरत्वात् । अन्यथोपक्रमोपसंहारविरोधप्रसङ्गात् । "सदेव" इत्युपक्रम्य "तत्सत्यम् स आत्मा" इत्युपसंहारः श्रूयते । अतः कारणमात्रं सत्यम् । कार्यभेदस्तु वाचारम्भणमात्रो मिथ्येति यावत् । आगमस्यानुपसञ्जातविरोधित्वादुपजीव्यांशाबाधकत्वादुत्तरत्वाच्च बलवत्त्वम् । यदुक्तं भट्टपादैः—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत् ॥ इति

**तन्मात्रतामिति**, अपञ्चीकृतपञ्चभूतमात्रतामित्यर्थः । अपञ्चीकृतभूतानां लयं दर्शयति—**तानि चेति** । **सम्भूतिवैपरीत्येनेति**, एतदेव विवृणोति—**तत्र पृथिवीत्यादिना** । तच्च नभोऽविद्यासहायेऽ-

तच्चाव्यक्तमवस्थाभिमानिभ्यां सहितं मकारात्मकं कार्यकारणविभागविकले निष्कले परिशुद्धे ब्रह्मण्योङ्कारलक्षिते विलीयते न तस्मात्परं किञ्चिदस्ति । उक्तं हि—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
आपस्तेजसि लीयन्ते तेजो वायौ विलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन् निष्कले सम्प्रलीयते ॥
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ।

इति ( विष्णुपुराणे )

अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः । नाज्ञानं, नापि तत्कार्यं, किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः । "तत्त्वमसि" ( छां० ६।८।७ ) "ब्रह्माहमस्मि" ( परमहं० ३ ) "प्रज्ञानं ब्रह्म" ( ऐ० बृ० ३।९ ) "अयमात्मा ब्रह्म" ( बृह० २।५।१९ ) इत्यादिश्रुतिभ्यः ।

इति पञ्चीकरणं भवति ॐ ॥

अकारादीनां पूर्वपूर्वस्य उत्तरोत्तरस्मिन्ननुप्रवेशेन प्रत्यगात्मनि पर्यवसितत्वेऽपि प्रत्यगात्मा देहेन्द्रियमनोबुद्धिप्राणाहङ्काराव्याकृतानां मध्ये कतमः स्यादित्याशङ्क्याह—अहमात्मेति । देहस्तावदनात्मा दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् आद्यन्तवत्त्वाच्च

---

विद्याशबलिते सच्छब्दवाच्ये । न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं साभासमव्याकृतम्, तस्मिन् लीयते इति शेषः । ततः किमित्यत आह—**तच्चेति** । अवस्था प्रलयः, अभिमानी सर्वज्ञःमकारात्मकमव्यक्तं परिशुद्धे ब्रह्मणि लीयत इत्यन्वयः । ब्रह्मणः शुद्धतामाह—**कार्यकारणविभागविकल इति** । तदपि ब्रह्म क्व लीयत इति चेत्, न कुत्रापीत्याह—**न तस्मादिति** । उक्तेऽर्थे श्रुतिं सम्वादयति—**उक्तं हीति** । पुरुषे ब्रह्मन् ब्रह्मणि, निष्कले शुद्धे, शेषः श्रुत्यर्थोऽतिरोहितः । तदेवमध्यारोपापवादन्यायमनुसृत्य प्रणवस्वरूपनिरूपणेन प्रत्यगात्मैकः पर्यवशेषितः **पुरुषान्न परं किञ्चिदिति** ।

भवत्वेवं प्रत्यगात्मपर्यन्तमपवादः, प्रत्यगात्मनो नापवादश्चेत्तदेव प्रत्यगात्मस्वरूपं विशेषतो निर्धारणीयमिति शङ्कते—**अकारादीनामिति** । प्रश्नबीजं वादिविप्रतिपत्तिरूपं दर्शयति—**देहेन्द्रियेति** । तत्रोत्तरत्वेन मूलमवतारयति—**अहमात्मेतीति** ।

देहाद्यव्याकृतान्तातिरिक्त आत्मेति मूलार्थं प्रकटयितुं देहादेरनात्मत्वं साधयति—**'देहस्तावत्'** इत्यादिना । तत्र जडत्वहेतुः साध्याविशिष्ट इति चेत्, न, अनात्मत्वं नाम आत्मातिरिक्तत्वं जडत्वं त्वसंविद्रूपत्वमिति साध्यसाधनयोर्भेदात् । दृश्यत्वं तु स्वव्यवहारे स्वातिरिक्तदर्शनापेक्षत्वम् ।

**घटवत् । तथा इन्द्रियादीनामव्याकृतपर्यन्तानामनात्मत्वमवधेयम् । न च प्रतीचो देहादिसाक्षिणो जाड्यमुपपद्यते । जडत्वे घटादिवदनात्मत्वप्रसङ्गात् । तस्मादज्ञानं साभासमव्याकृतशब्दितं तत्कार्यं देहाद्यनात्मत्वेन प्रतिपत्तव्यम् । तद्व्यतिरिक्तश्चात्मा तदुभयसाक्षी चिद्धातुरेव द्रष्टव्य इत्यर्थः । केवलशब्देन चितो विषयनिरपेक्षत्वं विवक्ष्यते । चिन्मात्रशब्देनात्मनो द्रव्यबोधरूपत्वं परेष्टं प्रत्याचष्टे—चिन्मात्रेति ।**

---

अत्र कश्चिदाह—किमिदं दृश्यत्वं फलव्याप्यत्वं वृत्तिव्याप्यत्वं वेति वक्तव्यम् । आद्ये भागासिद्धिः, देहस्याभ्यन्तरभागे दृश्यत्वाभावात् । द्वितीये त्वात्मन्यनैकान्तिकता, आत्मनोऽपि वृत्तिव्याप्यत्वाङ्गीकारादिति ।

अत्रोच्यते—न फलव्याप्यत्वे भागासिद्धिः, सम्मुखस्यावयविनः फलित्वात् । अन्यथा घटादेरपि फलव्याप्यत्वाभावप्रसङ्गात् । नापि वृत्तिव्याप्यत्वे आत्मन्यनैकान्तिकम्, तस्य स्वप्रकाशत्वेन वृत्तिव्याप्यत्वाभावात् । वृत्त्यङ्गीकारस्तु तदावरणनाशाय, न तु स्वरूपप्रकाशायेत्यविरोधः । न चात्मनः स्वप्रकाशत्वमसिद्धमिति वाच्यम् "अत्रायं पुरुषः स्वयंज्योतिः," ( बृह० ४।३।९ ) 'आत्मैवास्य ज्योतिः' ( बृह० ४।३।६ ) इत्यादिश्रुतिसिद्धत्वात् । किञ्चानवधारितफलव्याप्यत्ववृत्तिव्याप्यत्वविशेषं दृश्यत्वमात्रं हेतुः । अन्यथा किमनेन तद्देशकालसंलग्नो धूमो हेतुरेतद्देशकालसंलग्नो वा ? आद्ये स्वरूपासिद्धिः, द्वितीये साधनशून्यं निदर्शनमित्युक्ते धूमानुमानभङ्गप्रसङ्गात् । धूममात्रं हेतुरिति परिहारे अत्रापि दृश्यत्वमात्रं हेतुरिति समानम् । अलमतो विस्तरेण ।

ननु जडत्वहेतुरसिद्धः, प्रत्यक्षेण चेतनत्वेनोपलम्भादिति चेत्, न, चेतनत्वप्रतीतेरात्मव्याप्यदेहविषयत्वात् । अन्यथा मृतशरीरेऽपि चेतनत्वप्रतीत्यापत्तेः । कृशोऽहमित्यादिप्रत्ययस्तु भ्रान्त एव, न्यायसहितममप्रत्ययबाधितत्वात् हेत्वन्तरं त्वतिरोहितार्थम् । तथेन्द्रियादीनामित्युक्तैरेव हेतुभिरनात्मत्वमवधेयमित्यर्थः । अतः परिशेषात् देहादीनां दृश्यानामदृश्यो द्रष्टा आत्मा सिद्धः ।

भवतु देहादिविलक्षण आत्मा, सोऽपि जड एव किं न स्यादिति तत्राह—**न चेति** । प्रतीचः प्रत्यगात्मनः स्वप्रकाशस्येति यावत् । '**देहादिसाक्षिणः**' इति हेतुगर्भं विशेषणम् । विपक्षे दोषमाह—**जडत्व इति** । अनात्मत्वप्रसङ्गो जडत्वाविशेषादित्यर्थः ।

परिशेषितं सिद्धमर्थमादायोपसंहरति—**तस्मादिति** । **तदुभयेति**, अव्याकृततत्कार्यसाक्षीत्यर्थः । चिद्धातुश्चिदेकरस इत्यर्थः । अनेन "केवलश्चिन्मात्रस्वरूप" इत्यत्र चित्स्वरूपपदं व्याख्यातम् । केवलपदकृत्यमाह—**केवलेति** । न च ज्ञानस्य विषयघटितत्वं स्वरूपम्, विषयाणां व्यभिचारेऽपि ज्ञानाव्यभिचारात् । तत्तद्विषयाणि ज्ञानानि भिन्नान्येवेति चेत्, न, स्वतो भेदानवगमात् । प्रतीयमानभेदस्य विषयभेदघटितत्वेनौपाधिकत्वादिति भावः । मात्रपदप्रयोजनमाह—**चिन्मात्रेति । द्रव्यबोधरूपत्वमिति** । द्रव्यरूपत्वं बोधरूपत्वं च । द्रव्यमिति वैशेषिकाः, बोध इति बुद्धा इत्यर्थः । न ह्यात्मनो द्रव्यरूपता, निर्गुणत्वात् । समवायिकारणत्वेन द्रव्यत्वं स्यादिति चेत्, न, समवायस्यैवाभावात्, भावे वाऽद्वितीयत्वासङ्गश्रुतिविरोधात् । बोधरूपत्वं त्वनुमानेन निराकृतमेवेह स्मारितमिति भावः ।

**एवमज्ञानतत्कार्यस्पर्शशून्यश्चिदात्मा परिशुद्धस्त्वम्पदार्थः तत्पदार्थाद्ब्रह्मणोऽर्थान्तरं किं न स्यादिति मन्वानः सन्नाह—किन्त्विति। तत्पदार्थपरिशोधनपूर्वकं परिशोधितं त्वम्पदार्थमनूद्य तस्य ब्रह्मत्वं वाक्यार्थं कथयति—नित्येत्यादिना। "आकाशवत्सर्वगतश्च नित्यः।" "अजो नित्यः शाश्वतोऽयं पुराणः॥" (कठ० १।२।१८) इति श्रुतिस्मृती समाश्रित्य कार्यैक्यं ब्रह्मणो नित्यत्वविशेषणेन निरस्यति।**

**"शुद्धमपापविद्धम्" (ईश० ८) इत्यादिश्रुतिवाक्यावष्टम्भेन कार्यतादात्म्यवैधुर्यं ब्रह्मणः शुद्धविशेषणेनोच्यते। "प्रज्ञानघनः" (बृह० ४।५।१३) इति श्रुतिमाश्रित्य नित्यविज्ञप्तिरूपतां ब्रुवाणो बुद्धविशेषणेन कारणैक्यं ब्रह्मणो निषेधति। "विमुक्तश्च विमुच्यते" (कठ० २।५।१) इति श्रुतिमनुसृत्याविद्याकामकर्मपारतन्त्र्यापाकरणेन कारणतादात्म्यं ब्रह्मणो मुक्तपदेन प्रत्याचष्टे। ऐक्यतादात्म्ययोश्च भेदासहत्वभेदसहत्वाभ्यां भेदः।**

**ननु ब्रह्मणो यथोक्तस्य प्रपञ्चस्येव यथाकथञ्चिद्बाध्यत्वप्रसिद्धौ न प्रेप्सितत्वं**

---

"अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपो नाज्ञानं नापि तत्कार्यं च" इत्येतावता त्वम्पदार्थः परिशोधितः। 'किन्तु' इति पदसूचितां शङ्कामाविष्करोति—**एवमज्ञानेति**। अर्थान्तरशङ्कां व्यावर्तयितुमुत्तरग्रन्थतात्पर्यमाह—**तत्पदार्थेति**। वाक्यार्थपरिशोधनाय तत्पदार्थशोधनमित्यर्थः। नित्येत्यादिसप्तविशेषणैस्तत्पदार्थशोधनमिति तात्पर्यार्थः। आकाशवत्सर्वगतः सर्वव्यापक इति योजना, न त्वाकाशवन्नित्य इति। तथा सति नित्यत्वस्य सापेक्षत्वप्रसङ्गात् नित्यश्चेति श्रुतिपदं प्रकृतोदाहरणम्। "अजो नित्यः" (कठ० १।२।१८) इति श्रुतिः। नित्यविशेषणेन फलितार्थमाह—**कार्यैक्यमिति**। कार्यस्यानित्यत्वान्न ब्रह्मणः कार्यैक्यमित्यर्थः।

माऽस्तु कार्यैक्यं, कार्यतादात्म्यं तु भविष्यतीति तत्राह—**शुद्धमिति**। कार्यतादात्म्यकार्यैक्ययोरभावेऽप्यव्याकृताख्यकारणैक्यं तत्तादात्म्यं वा किं न स्यादिति तत्राह—**प्रज्ञानघन इति**। प्रज्ञानघनः प्रज्ञानैकरसः इत्यर्थः। प्रकृष्टं ज्ञानमस्येति विग्रहशङ्कां वारयति—**नित्यविज्ञप्तीति**। ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्तिरेवाविलम्बितप्रतीतिराश्रयणीयेत्यर्थः। अतो ज्ञानरूपस्य जडेन कारणेन नैक्यमित्यर्थः।

कारणैक्यं पराकृत्य कारणतादात्म्यं पराकरोति—**विमुक्तश्चेति**। अविद्या मिथ्याज्ञानम्। कामोऽभिलाषः। कर्म पुण्यापुण्यरूपम्। नित्यमुक्तत्वान्न कारणतादात्म्यशङ्काऽपीत्यर्थः। तादात्म्यैक्ययोरभेदमाशङ्क्य तद्भेदं स्फुटयति—**ऐक्यतादात्म्ययोरिति**। भेदसहत्वं तादात्म्यस्य, भेदासहत्वमैक्यस्येति विभागः।

सत्यपदसमाधेयां शङ्कामुत्थापयति—**नन्विति**। न प्रेप्सितत्वं नेच्छागोचरत्वम्, न सत्यत्वमिति यावत्। ब्रह्मणोऽबाध्यत्वं साधयितुं ब्रह्म किं प्रपञ्चाद्भिन्नमभिन्नं वेति विकल्प्य नाद्य इत्याह—**न हीति**।

परिकल्पते । न हि ब्रह्म प्रपञ्चाद्भिन्नम्, अब्रह्मत्वप्रसङ्गात् । अभेदे च तद्बाध्यत्वमभ्युपेयताम् । अतः कथं तदभिन्नं ब्रह्माबाध्यमभ्युपेयमित्याशङ्क्य "सत्यं ज्ञानमनन्तं ब्रह्म" ( तैत्ति० २।१।३ ) "सत्यस्य सत्यम्" ( बृह० २।१।२० ) इत्यादिश्रुतिमनुसन्दधानः समाधत्ते—सत्येति ।

तथापि न तस्मिन्प्रेप्सया प्रवर्तेत पुरुषार्थत्वाभावादित्याशङ्क्य "विज्ञानमानन्दं ब्रह्म" ( बृह० ३।९।२८ ) "आनन्दो ब्रह्मेति व्यजानात्" ( तैत्ति० ३।६।१ ) इत्यादिश्रुतिमनुरुध्य ब्रूते—परमानन्देति । ब्रह्मानन्दस्य क्षयिष्णुत्वसातिशयत्वनिरासार्थं परमेति विशेषणम् । किञ्च यथोक्तं ब्रह्म द्वैताभावोपलक्षितमिष्यते । अस्थूलादिश्रुतेः स्वतःप्रमाणत्वात् ।

वस्तुतश्च प्रपञ्चाभावाद्भेदाभेदवाचोयुक्तेरयुक्तत्वादित्यभिप्रायेणाह—अद्वयमिति । परिशोधितं तत्पदार्थमनूद्य तस्य परिशोधितेन त्वम्पदार्थेन सहैक्यं वाक्यार्थं कथयति—ब्रह्मैवेति । एवकारस्तादात्म्याङ्गीकारप्रयुक्तभेदनिरासार्थम् । तत्पदार्थमनूद्य तस्य त्वम्पदार्थत्वं विधाय त्वमर्थमनूद्य तस्य तत्पदार्थत्वं विदधाति—अहं ब्रह्मास्मीति ( बृह० १।४।१० ) ।

---

कुत इत्यत आह—**अब्रह्मत्वप्रसङ्गादिति**। ब्रह्मत्वं नाम बृहत्त्वं बृंहणत्वं वा । तच्च न बृंह्यमाणप्रपञ्चात्तस्य परिच्छिन्नत्वे सम्भवतीत्यर्थः । द्वितीये दोषमाह—**अभेदे चेति**। परिहाराभिप्रायमाविष्करोति—**सत्यं ज्ञानमिति**। बाध्यमानस्य प्रपञ्चस्य बाधो न निरधिष्ठानः सम्भवति । बाधाधिष्ठानं च सत्यमबाध्यम्, अन्यथाऽधिष्ठानानवस्थाप्रसङ्गात् । अतो बाधाधिष्ठानमबाध्यं ब्रह्मेत्यर्थः ।

आनन्दपदव्यावर्त्याशङ्कामवतारयति—**तथापीति**। प्रेप्सा प्राप्तुमिच्छा । परमविशेषणकृत्यमाह—**ब्रह्मानन्दस्येति**। अद्वयपदं व्याचष्टे—**किञ्चेति**। द्वैताभावोपलक्षितमेवाद्वितीयं न त्वद्वितीयत्वधर्मत्वम् । तथा सति धर्मधर्मिभावेनाद्वितीयता न सिद्धयेत् । "स्वाङ्गमव्यवधायकम्" इति न्यायमाश्रित्य धर्माङ्गीकरणे निर्धर्मकत्वप्रतिपादकश्रुतिविरोध इत्यभिसन्धिः । केयं निर्धर्मकत्वबोधिका श्रुतिरत आह—**अस्थूलेति**। **स्वतःप्रमाणत्वादिति**। वेदस्यापौरुषेयत्वेन पुरुषाश्रयाणां दोषाणामसम्भवात्स्वत एव प्रामाण्यमित्यर्थः । प्रामाण्यस्य परतस्त्वेऽनवस्थाऽनाश्वासयोर्दुष्परिहार्यत्वादिति भावः ।

किञ्च वस्तुतः संश्चेत्प्रपञ्चोऽस्ति, तदा ब्रह्म प्रपञ्चाद्भिन्नं न वेति विकल्पावकाशः । स एव नास्ति, वाचारम्भणश्रुत्या मिथ्यात्वस्यावसितत्वादित्याशयेनाह—**वस्तुतश्चेति**। उत्तरग्रन्थतात्पर्यमाह—**परिशोधितमिति**। **एवकार इति**, अभेदस्यौपचारिकत्वशङ्काव्यावृत्तये एवकार इत्यर्थः । पुनः "अहं ब्रह्म" इतिवचनं वाक्यार्थदार्ढ्यायेत्याह—**त्वमर्थमिति**।

अथ जीवब्रह्मणोर्मिथो व्यतिहारेणैकरसस्वरूपवाक्यार्थप्रतिपत्त्यर्थं साधनभूतं समाधिं सङ्गिरते—इत्यभेदेनावस्थानं समाधिरिति। पूर्वोक्तयुक्त्या प्रणवस्वरूपार्थानुसन्धानपुरःसरं एकरसवस्तुमात्रत्वेन चित्तस्य तदाकारवृत्त्यवशेषावस्थानं सम्प्रज्ञातसमाधिः ( योगसूत्रं १।१८ ) इत्युच्यते। उक्तं हि—

ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना।
सम्प्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः॥ इति।

वृत्तिमपि तन्मात्रत्वेनोपसंहृत्य वृत्तिमतश्चित्तस्य प्रयत्नपूर्वकं वस्तुमात्रत्वेनावस्थानमसम्प्रज्ञातसमाधिः ( योगसूत्रं १।२० ) इति गीयते। उक्तं च—

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः।
याऽसम्प्रज्ञातनामाऽसौ समाधिरभिधीयते॥ इति।

अस्य च प्रयत्नपूर्वकत्वादेव सुषुप्तितो विशेषसिद्धिः। सुषुप्तौ तु कारणात्मना चित्तस्यावस्थानमास्थितम्। इदं तु कार्यकारणसम्बन्धविधुरवस्तुमात्रत्वेन तस्य पर्यवस्थानमिष्यते। तद्वासनाविशेषाभ्युपगमाच्चास्य साधनपक्षपात इति भावः।

जीवब्रह्मणोरैक्ये श्रुतिं प्रमाणयति—अयमात्मा ब्रह्मेति ( बृह० ४।४।५ )। अत्र च ब्रह्मात्मपदयोः सामानाधिकरण्यं पदार्थयोर्विशेषणविशेष्यत्वम्, ततो विरोधस्फूर्तौ

---

ननु वाक्यार्थसाक्षात्कारसाधनत्वान्नानवसरकथनमित्याह—**अथेति**। मिथः अन्योन्यं व्यतिहारेण ऐक्यसम्पादनेनेत्यर्थः। समाधिर्द्विविधा सम्प्रज्ञातसमाधिरसम्प्रज्ञातसमाधिश्चेति। तत्र प्रथमस्य स्वरूपं कथयति—**पूर्वोक्तेति**। अध्यारोपापवादन्यायेनेत्यर्थः। **तदाकारेति**। एकरसवस्त्वाकार इत्यर्थः। द्वितीयसमाधिस्वरूपमाह—**वृत्तिमपीति**। उक्तेऽर्थे वृद्धवचनं सम्वादयति—**उक्तं चेति**। सुषुप्त्यविशेषमाशङ्क्य परिहरति—**अस्य चेति**। अस्य द्वितीयस्य समाधेः, विशेषमेव दर्शयति—**सुषुप्तौ चेति**। कार्यकारणविधुरवस्तुमात्रावस्थानस्य फलत्वात् तत् कथं तस्य साधनतेत्यत आह—**तद्वासनेति**। चित्तस्य ब्रह्माकारवासनाभ्युपगमादित्यर्थः।

जीवब्रह्मस्वरूपपरिशोधनपूर्वकं कथिततदैक्यार्थे श्रुत्यन्तरमुपोद्वलयतीत्याशयेनाह—**जीवब्रह्मणोरिति**। "**अयमात्मा**" ( बृ० २।५।१९ ) इत्यादिवाक्यस्याखण्डार्थत्वमुपपादयति—**अत्रेत्यादिना**। **पदयोः सामानाधिकरण्यमिति**, भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमित्यर्थः। **विशेषणविशेष्यत्वमिति**। पदार्थयोरन्योन्यभेदव्यावर्तकतया विशेषणविशेष्यत्वमित्यर्थः। नीलमुत्पलमितिवद्विशिष्ट एव वाक्यार्थोऽस्तु किं लक्षणयेति नेत्याह—**विरोधस्फूर्ताविति**।

**पदार्थस्य निष्कृष्टस्य वस्तुमात्रेण लक्षणया सम्बन्धः, ततश्चाखण्डैकरसवाक्यार्थप्रतिपत्तिः। न चैकार्थत्वे पदभेदानुपपत्तिः, व्यावर्त्यभेदादर्थवत्त्वसिद्धेरिति द्रष्टव्यम्। आदिपदेन तत्त्वमस्यादिमहावाक्यानि तत्त्वम्पदार्थविषयाणि च अवान्तरवाक्यानि ब्रह्मात्मैकरसत्वे पर्यवसितानि ग्रहीतव्यानि।**

**तदेवमधिकारिणो वाक्यात् ब्रह्मात्मैक्यसाक्षात्कारसमुत्पत्तौ अज्ञानतत्कार्यनिवृत्तौ अनारब्धफलपूर्वोपार्जितकर्मदहनात्, उत्तरकालीनकर्मणश्चानाश्लेषात्, आरब्धफलकर्मणश्च भोगेनैव क्षयात्, तदवस्थितिप्रयुक्तदेहावभासजगदवभासनिवृत्तौ तदात्मना**

---

तत्र नीलगुणस्योत्पलद्रव्यस्य च गुणगुणिभावेन वैशिष्ट्यमुपपद्यते। इह तु पदार्थयोर्विरोधेन न विशिष्टवाक्यार्थसम्भव इत्यर्थः। तत्र लक्षणा त्रिविधा–जहल्लक्षणा, अजहल्लक्षणा जहदजहल्लक्षणा चेति। तत्र जहल्लक्षणा न सम्भवति, गङ्गायां घोष इतिवत्, वाच्यार्थाशेषपरित्यागाभावात्। नाप्यजहल्लक्षणा शोणो धावतीतिवत्, विरुद्धार्थत्वादेव। परिशेषाज्जहदजहल्लक्षणा सोऽयं देवदत्त इतिवदाश्रयणीया। विरुद्धांशपरित्यागेनानुगतचिदंशेनाखण्डैकरसवाक्यार्थप्रतीतिरित्याह—**ततश्चेति**। प्रमाणं च—"अयमात्मा ब्रह्म" ( बृ० २।५।१९ ) इत्यादिवाक्यमखण्डार्थनिष्ठम्, अकार्यकारणद्रव्यनिष्ठत्वे सति समानाधिकरणत्वात्, 'सोऽयं देवदत्तः' इति वाक्यवत् इति। पदयोरेकार्थपरत्वे पर्यायता स्यात्। तथात्वे च सहप्रयोगायोग इति तत्राह—**न चेति**। तत्र हेतुमाह—**व्यावर्त्येति**। अयमात्मा ब्रह्मेत्यादिश्रुतिभ्यः इत्यत्रादिपदसंगृहीतं दर्शयति—**आदीति**। अवान्तरवाक्यानीति "सत्यं ज्ञानमनन्तं" ( तै० २।१।३ ) इत्यादीनीत्यर्थः।

प्रकरणार्थमुपसंहरन्ननुक्रमेण जीवन्मुक्तिपरममुक्ती दर्शयति—**तदेवमित्यादिना**। प्रथमं वाक्यार्थपरिशीलनफलमाह—**ब्रह्मात्मैक्यसाक्षात्कारेति**। आप्तवाक्यात् कण्ठगतचामीकरसाक्षात्कारवत् गुरूपदिष्ट–"तत्त्वमसि"–महावाक्याद्ब्रह्मात्मैक्यसाक्षात्कारो भवतीति भावः। साक्षात्कारे सति किं स्यात्तत्राह—**अज्ञानेति**। यथा प्रदीपोऽन्धकारं निवर्तयन्नेवोदेति तद्वदात्मसाक्षात्कारोऽनेकसंसारमूलाज्ञानं निवर्तयन्नेवोदेति इति भावः।

कारणनिवृत्त्या कार्यनिवृत्तिं दर्शयति—**तत्कार्येति**। न च ज्ञानाज्ञानयोरेव विरोधे कथमविरोधि कर्म ज्ञानान्निवर्त्तेतेति वाच्यम्, सर्वस्यापि प्रपञ्चजातस्य अज्ञानात्मकत्वप्रतिपादनादिति। तर्हि देहारम्भककर्मणामविद्याकार्यत्वात् ज्ञानोत्पत्तिसमकालमेव देहपातः स्यादिति तत्राह—**आरब्धेति**। "प्रारब्धकर्मणां भोगादेव क्षयः" इति शास्त्रादित्यर्थः।

एतावता जीवन्मुक्तिर्दर्शिता, परममुक्तिस्वरूपमवतारयति–**तदवस्थितीति**। तस्य देहारम्भककर्मणोऽवस्थितिरिति यावत्। देहावभासो देहरूपेणावभासः तत एव दग्धपटायमानजगदाभासश्च, तदुभयनिवृत्तेरित्यर्थः। ततः किमत आह—**तदात्मनेति**। तदात्मना देहात्मना तत्कारणकर्मात्मना

**तत्कारणकर्मात्मनाऽवस्थिताविद्याभावात्, तत्कार्यनिवृत्तेश्च वस्तुस्वरूपेणैव परिशेषात्, प्रत्यगात्मा सच्चिदानन्दात्मकः सत्यज्ञानानन्तानन्दस्वरूपं ब्रह्मैवेति सिद्धम् ।**

**षड्विधं लिङ्गमाश्रित्य वेदान्ता यत्र निष्ठिताः ।**
**विधानप्रतिषेधाभ्यां तं वन्दे पुरुषोत्तमम् ॥ १ ॥**

॥ इति श्रीमदानन्दगिर्याचार्यविरचितं पञ्चीकरणविवरणं सम्पूर्णम् ॥

---

प्रारब्धकर्मात्मना स्थित्यभावादित्यर्थः । **तत्कार्यवृत्तेरिति**, वासनामयसंसारनिवृत्तेश्चेत्यर्थः । अतः परिशेषात्सिद्धमर्थं प्रकरणप्रतिपादितमबाध्यं मोक्षस्वरूपमनेकैर्विशेषणैर्निर्द्धारयति-**वस्तुस्वरूपेणैवेति**।

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारमनुरुन्धान इष्टदेवतां प्रणमति— **षड्विधमिति** । "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ १ ॥" इति लिङ्गानि । विधानं "सदेव सोम्येदमग्र आसीत्" ( छान्दो० ६।२।१ ) इत्यादि । प्रतिषेधो "नेह नानाऽस्ति किञ्चन" ( बृह० ४।४।१९ ) इत्यादि ।

पञ्चीकृतेर्विवरणमर्थतः प्रकटीकृतम् ।
यथाश्रुतं यथाबुद्धि तेन तुष्येद्रमापतिः ॥ १ ॥

सीतासुवर्णलतिकापरिवीतगात्रं
प्रेमामृतार्द्रचरणं सुखसत्फलाढ्यम् ।
कीर्तिप्रसूनपरिवासितसर्वलोकं
रामाभिधं जगति कल्पतरुं नमामि २॥

॥ इति श्रीमद्रामतीर्थविरचिता पञ्चीकरणविवरणटीका तत्त्वचन्द्रिका समाप्ता ॥

श्रीशङ्करभगवत्पादाचार्यविरचिता

# अपरोक्षानुभूतिः

श्रीमद्विद्यारण्यस्वामिविरचितदीपिकोपेता

ॐ

तत्सत्परमात्मने नमः

श्रीमच्छङ्करभगवत्पादाचार्यविरचिता

# अपरोक्षानुभूतिः

**श्रीहरिं परमानन्दमुपदेष्टारमीश्वरम् ।**
**व्यापकं सर्वलोकानां कारणं तं नमाम्यहम् ॥ १ ॥**

---

**श्रीमद्विद्यारण्यस्वामिविरचिता दीपिका**

स्वप्रकाशश्च हेतुर्यः परमात्मा चिदात्मकः ।
अपरोक्षानुभूत्याख्यः सोऽहमस्मि परं सुखम् ॥ १ ॥
ईशगुर्वात्मभेदाद्यः सकलव्यवहारभूः ।
औपाधिकः स्वचिन्मात्रः सोऽपरोक्षानुभूतिकः ॥ २ ॥
तदेवमनुसन्धाय निर्विघ्नां स्वेष्टदेवताम् ।
अपरोक्षानुभूत्याख्यामाचार्योक्तिं प्रकाशये ॥ ३ ॥
यद्यपीयं स्वतः स्पष्टा तथापि स्वात्मसिद्धये ।
यत्नोऽयं सोऽपि संक्षेपात्क्रियतेऽनर्थनाशनः ॥ ४ ॥
क्वाहमुल्काकरः क्वायं सूर्यस्तेजोनिधिः किल ।
तथापि भक्तिमान्कः किं न कुर्यात्स्वहितासये ॥ ५ ॥

तत्राचार्याः स्वेष्टपरदेवताऽनुसन्धानलक्षणं मंगलं निर्विघ्नग्रन्थसमाप्तये स्वमनसि कृत्वा शिष्यशिक्षायै ग्रन्थादौ निबध्नन्ति—**श्रीहरिमिति**। अहं तं नमामीत्यन्वयः। अत्रेयं प्रक्रिया—पदार्थो द्विविधः—आत्माऽनात्मा चेति। तत्रात्मा द्विविधः—ईश्वरो जीवश्चेति। एतावपि द्विविधौ शुद्धाऽशुद्धभेदात्। तत्राऽशुद्धौ मायाऽविद्योपाधित्वेन भेदव्यवहारहेतू, शुद्धौ त्वभेदव्यवहारहेतू। तथाऽनात्मापि त्रिविधः कारणसूक्ष्मस्थूलभेदात्। एतदेव शरीरत्रयमिति व्यवह्रियते। एवं चिज्जडरूपवैलक्षण्यात्तमःप्रकाशयोरिव विभक्तयोरुभयोरात्मानात्मनोरविवेक एव बन्धकारणम्। तयोर्विवेकस्तु मोक्षकारणमिति दिक्। तत्र तावदहंशब्देन देहत्रयविशिष्टत्वेनाशुद्धो जीवः अस्यैऽवाकृष्टत्वात् तं नमामि, तं मायातत्कार्यहन्तृत्वेऽपि तदाश्रयभूतत्वेन सर्वकारणं वेदान्तप्रसिद्धमीश्वरम्। एतस्यैव सर्वोत्कृष्टत्वात् नमामि नमस्करोमि स्वात्मत्वेनानुसन्दधामीत्यर्थः। तस्यैव सर्वोत्कृष्टत्वेनानुसन्धानयोग्यत्वमाह—**श्रीहरिमिति**। श्रियं दधानमित्यर्थः। यद्वा—स्वाश्रयतया श्रियते स्वीक्रियते प्रलयसुषुप्त्यादौ सर्वभूतैरिति श्रीर्जीवत्वोपाधिभूताऽविद्या तां हरत्यात्मज्ञानप्रदानेन नाशयतीति श्रीहरिस्तम्। यद्वा—स एव सर्वाधिष्ठानतया श्रीरित्युच्यते। श्रीरेव हरिस्तम्। ननु किमनेनाऽविद्यातत्कार्यहरणेनेत्याशङ्क्य परमपुरुषार्थप्राप्तिर्भवतीति सूचयितुं तस्य परमानन्दरूपतामाह—**परमानन्दमिति**। परमोऽविनाशित्वनिरतिशयत्वाभ्या-

**अपरोक्षानुभूतिर्वै प्रोच्यते मोक्षसिद्धये ।**
**सद्भिरेव प्रयत्नेन वीक्षणीया मुहुर्मुहुः ॥ २ ॥**
**स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ।**
**साधनं च भवेत्पुंसां वैराग्यादिचतुष्टयम् ॥ ३ ॥**

---

मुत्कृष्ट आनन्दः सुखविशेषस्तद्रूपमित्यर्थः । तर्हि वैषयिकसुखवज्जडः स्यादित्यत आह—**उपदेष्टारमिति ।** आचार्यद्वारात्मसुखोपदेशकं चिद्रूपमित्यर्थः । ननु केवलानन्दस्य कथमुपदेष्टृत्वमित्यत आह—**ईश्वरमिति ।** ईष्टेऽसावीश्वरः विचित्रशक्तित्वात्सर्वसमर्थस्तं नमामीत्यन्वयः । एवमपि परिच्छन्नत्वात् घटादिवदनात्मत्वं स्यादित्यत आह—**व्यापकमिति ।** स्वसत्ताप्रकाशाभ्यां नामरूपे व्याप्नोति स व्यापकस्तं परिच्छेदकस्य देशकालादेर्मायिकत्वादनन्तमित्यर्थः । ननु व्याप्यव्यापकभावेनानन्तत्वमसिद्धमित्यत आह—**सर्वलोकानां कारणमिति ।** अभिन्ननिमित्तोपादानमित्यर्थः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आत्मनात्मानमभिसंविवेशे'त्यादिश्रुतेः ॥ १ ॥

इदानीं प्रेक्षावत्प्रवृत्तयेऽनुबन्धचतुष्टयं दर्शयन् स्वचिकीर्षितं प्रतिजानीते—**अपरोक्षेति ।** वै इत्यव्ययेन विद्वदनुभवं प्रमाणयति । तथाचायमर्थः—विद्वदनुभवप्रसिद्धा या तत्त्वमस्यादिमहावाक्यश्रवणजा प्रत्यगभिन्नब्रह्मविषया अपरोक्षानुभूतिः = अक्षाणामिन्द्रियाणां परमतीतं न भवतीत्यपरोक्षमिन्द्रियाधिष्ठानतत्प्रकाशत्वाभ्यां नित्यप्रत्यक्षस्वप्रकाशात्मतत्वं तस्यानुभूतिर्वृत्त्यारूढाखण्डता। यद्वा—अपरोक्षा चासावनुभूतिश्चेत्यपरोक्षानुभूतिर्विद्याऽपरपर्यायो ब्रह्मसाक्षात्कारः । तत्साधनग्रन्थोऽप्युपनिषच्छब्दवदपरोक्षानुभूतिशब्देनोपचर्यते । झटित्यवलोकनमात्रेणैवोत्तमाधिकारिणां ब्रह्मात्मसाक्षात्कारकारणं ग्रन्थविशेष इत्यर्थः । अनेन नित्यापरोक्षब्रह्मात्मतत्त्वविषयो यो दर्शितः स प्रोच्यते = **प्रकर्षेण** तत्तदाशङ्कानिराकरणपूर्वकं सिद्धान्तरहस्यप्रदर्शनरूपेणोच्यते, कथ्यत इत्यर्थः । अस्माभिः पूर्वाचार्यैरित्यर्थादध्याहारः। ननु प्रायः 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इति न्यायान्नारम्भणीयो ग्रन्थ इत्याशङ्क्य प्रयोजनमाह—**मोक्षसिद्धय इति ।** मोक्षो नाम स्वाविद्याकल्पितानात्मदेहाद्यात्मत्वाभिमानरूपबन्धनिवृत्तिद्वारा स्वस्वरूपावस्थानं तस्य सिद्धिः प्राप्तिस्तदर्थम् । अनेन सर्वानर्थनिवृत्तिद्वारा परमानन्दावाप्तिरूपं प्रयोजनं दर्शितम् । किंलक्षणाऽपरोक्षाऽनुभूतिः ? सद्भिः = साधुभिर्नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पन्नैर्मुमुक्षुभिरित्यर्थः । एवशब्दान्नान्यैः कर्मोपासनाधिकारिभिरिति भावः । मुहुर्मुहुर्नैरन्तर्यदीर्घकालाभ्यासप्रयत्नेन स्नानभिक्षादावप्यनादरं कृत्वेत्यर्थः । वीक्षणीया गुरुमुखादवगत्य विचारणीया । अनेन मुमुक्षुरधिकारी दर्शितः । एतेनैवार्थात् पूर्वकाण्डोत्तरकाण्डयोः साध्यसाधनभावः सम्बन्धश्च दर्शितो भवतीति बोद्धव्यम् ॥ २ ॥

ननु कार्यस्य कारणाधीनत्वात् पूर्वोक्तसाधनचतुष्टयस्य किं कारणमित्याशङ्क्याह—**स्ववर्णेति ।** अत्र स्वशब्देन मुख्यगौणमिथ्याभेदेन त्रिविधेषु साक्षिपुत्रादिदेहादिलक्षणेष्वात्मसु मध्ये मिथ्यात्मायोग्यत्वाद् गृह्यते । तस्य देहादेर्ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमप्रयुक्तेन धर्मेण ब्रह्मार्पणकृतकर्मानुष्ठानजन्येनाऽपूर्वेण पूर्वमीमांसाप्रसिद्धेन भाविफलाधारभूतेन पुण्यादिशब्दवाच्येनेत्यर्थः । तथा तपसा कृच्छ्रचान्द्रायणादिना प्रायश्चित्तेनेत्यर्थः । पुनः हरितोषणाद्भगवत्प्रीतिकरात्सर्वभूतदयालक्षणात् कर्मविशेषात् । एतैस्त्रिभिः साधनैः वैराग्यादिचतुष्टयरूपं साधनं मोक्षसाधको धर्मविशेषः पुंसां प्रभवेत् ।

**ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु ।**
**यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ ४ ॥**

**नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् ।**
**एवं यो निश्चयः सम्यग्विवेको वस्तुनः स वै ॥ ५ ॥**

**सदैव वासनात्यागः शमोऽयमिति शब्दितः ।**
**निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ॥ ६ ॥**

**विषयेभ्यः परावृत्तिः परमोपरतिर्हि सा ।**
**सहनं सर्वदुःखानां तितिक्षा सा शुभा मता ॥ ७ ॥**

---

सम्भावनायां लिङ् । यद्वैवमन्वयः—स्ववर्णाश्रमधर्मरूपेण तपसा कृत्वा यद्धरितोषणं तस्मादिति । यद्यपि साधनचतुष्टयस्य विवेकादिक्रमेण हेतुहेतुमद्भावस्तथापि वैराग्यस्यासाधारणकारणतां द्योतयितुमादौ ग्रहणं कृतमिति बोद्धव्यम् ॥ ३ ॥

कीदृशं तद्वैराग्यादिचतुष्टयमित्याकाङ्क्षायां तत्स्वयमेव व्याचष्टे—'ब्रह्मादीत्यारभ्य वक्तव्या सा मुमुक्षुता' इत्यन्तेन श्लोकषट्कात्मकेन ग्रन्थेन । तत्रादौ वैराग्यस्य लक्षणमाह—**ब्रह्मादिस्थावरान्तेष्विति** । ब्रह्मादिस्थावरान्तेषु सत्यलोकादिमर्त्यलोकान्तेषु साधनेषु अनु—कर्मजन्यत्वेनानित्यत्वं लक्षीकृत्येत्यर्थः । वैराग्यं—इच्छाराहित्यम् । तत्र दृष्टान्तमाह—**यथैवेति** । यथैव काकविष्ठायां वैराग्यं गर्दभादिविष्ठायामपि कदाचित् कस्यचित् ज्वरशान्त्यर्थं ग्रहणेच्छा भवति अतः काकविष्ठाया ग्रहणम् । उपलक्षणमेतत् वान्त्यादीनाम् विषयेष्विच्छानुदये वैराग्यस्य हेतुगर्भितं विशेषणमाह—**तदिति** । हि यस्मात्तद्वैराग्यं निर्मलं रागादिमलरहितम् ॥ ४ ॥

इदानीं वैराग्यकारणं विवेकं लक्षयति—**नित्यमिति** । वै प्रसिद्धं सः वस्तुनः पदार्थस्य विवेको विवेचनविशेषो ज्ञेयः । सः क इत्यत आह—**एवमिति** । य एवंप्रकारेण सम्यक् संशयादिशून्यो निश्चयः । एवं कथमित्यत आह—**नित्यमिति** । हीति विद्वदनुभवप्रसिद्धमात्मस्वरूपं नित्यमविनाशि अबाध्यं सत्यमित्यर्थः । 'अविनाशी वा अरेऽयमात्मा' इति श्रुतेः । दृश्यमनात्मस्वरूपं तद्विपरीतगं तदात्मस्वरूपं तस्माद्विपरीतत्वेन गच्छति प्राप्नोति व्यवहारभूमिमिति तथाविधं विनाशि बाध्यमित्यर्थः । अत्रेदमनुमानमपि सूचितं भवति—'आत्मस्वरूपं नित्यं द्रष्टृत्वात् यन्न नित्यं तन्न द्रष्टृ, यथा घटादीति; केवलव्यतिरेकी हेतुः । तथाऽनात्मस्वरूपमनित्यं दृश्यत्वात्, यन्नानित्यं तन्न दृश्यं, यथात्मस्वरूपमित्ययमपि केवलव्यतिरेकी हेतुः' ॥ ५ ॥

तदेवं वैराग्यकारणं विवेकं व्याख्याय वैराग्यकार्यं शमादिषट्कं लक्षयति—**सदैवेत्यादित्रिभिः** श्लोकैः । सदैव सर्वस्मिन्नपि काले वासनात्यागः पूर्वसंस्कारापेक्षाऽयं शम इति शब्दितः । अन्तःकरणनिग्रहः शमशब्दार्थः । बाह्यवृत्तीनां श्रोत्रवागादीनां निग्रहो निषिद्धप्रवृत्तितिरस्कारो दम इति—शब्देनाभिधीयते कथ्यते ॥ ६ ॥

**विषयेभ्य इति** । हीति प्रसिद्धेभ्यो बन्धकेभ्यः शब्दादिभ्यो या परावृत्तिर्निवृत्तिरनित्यत्वादिदोषदर्शनेन ग्रहणानिच्छा सोपरतिरुच्यत इत्यर्थः । कीदृशी सेत्यत आह—**परमेति** । परम् उत्कृष्ट-

**निगमाचार्यवाक्येषु भक्तिः श्रद्धेति विश्रुता ।**
**चित्तैकाग्र्यं तु सल्लक्ष्ये समाधानमिति स्मृतम् ।। ८ ।।**

**संसारबन्धनिर्मुक्तिः कथं मे स्यात्कदा विधे ।**
**इति या सुदृढा बुद्धिर्वक्तव्या सा मुमुक्षुता ।। ९ ।।**

**उक्तसाधनयुक्तेन विचारः पुरुषेण हि ।**
**कर्तव्यो ज्ञानसिद्ध्यर्थमात्मनः शुभमिच्छता ।। १० ।।**

**नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः ।**
**यथा पदार्थभानं हि प्रकाशेन विना क्वचित् ।। ११ ।।**

---

मात्मज्ञानं यस्याः सकाशाज्जायते सा परमा, आत्मज्ञानसाधनभूतेत्यर्थः । अनया सर्वकर्मसंन्यासो लक्ष्यते । किञ्च सहनमिति सर्वदुःखानां सर्वदुःखसाधनानां शीतोष्णादिद्वन्द्वानां यत्सहनं प्रतीकारानिच्छा सा शुभा सुखरूपा तितिक्षा मता विदुषामित्यर्थः ।। ७ ।।

**निगमेति** । निगमाचार्यवाक्येषु—वेदगुरुवचनेषु, यद्वा उपनिषद्व्याख्यातृउपदेशेषु भक्तिर्भजनं विश्वास इत्यर्थः । सा श्रद्धेति विश्रुता वेदान्तप्रसिद्धा । तु पुनः सल्लक्ष्ये 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिलक्ष्ये प्रत्यगभिन्ने ब्रह्मणि चित्तैकाग्र्यं तदेकजिज्ञासेत्यर्थः, तत्समाधानमिति स्मृतम् ।। ८ ।।

एवं शमादिषट्कमभिधायैतत्कार्यभूतां मुमुक्षुतामाह—**संसारबन्धेति** । इति या सुदृढा बुद्धिः सा मुमुक्षुता वक्तव्येत्यन्वयः । सा केत्यत आह—**संसारेति** । भो विधे मद्दैव, यद्वा सर्वकर्तर्विधातर्ब्रह्मन् ! मे मम संसारबन्धनिर्मुक्तिर्नानायोनिसम्बन्धनिवृत्तिः कदा कस्मिन् काले कथं केन प्रकारेण भवेदित्येवंरूपा बुद्धिर्मुमुक्षुतेत्यर्थः ।। ९ ।।

इदं साधनचतुष्टयं यदर्थमुपन्यस्तं तदिदानीं दर्शयति—**उक्तेति** । उक्तानि—ब्रह्मादीत्यारभ्य वक्तव्या सा मुमुक्षुतेत्यन्तग्रन्थसन्दर्भेण वर्णितानि यानि वैराग्यादिसाधनानि ज्ञानोपकरणानि तैर्युक्तेन पुरुषेणाधिकारिणा देहवता मनुष्योत्तमेन हीति विद्वत्प्रसिद्धत्वेन वक्ष्यमाणलक्षणः । यद्वा हीत्यव्ययमेवार्थेऽन्यनिषेधार्थं इत्यर्थः । विचारो विवेकः कर्तव्य आवर्त्तयितव्यः । किमर्थमित्यत आह—**ज्ञानसिद्ध्यर्थमिति** । आत्मनो ज्ञानसिद्ध्यर्थं ब्रह्मात्मैक्यबोधोद्भवनाय । नन्वात्मज्ञानसिद्ध्या कः पुरुषार्थ इत्याशङ्क्य मोक्षाख्यं चतुर्थपुरुषार्थरूपं फलं द्योतयन् पुरुषार्थं विशिनष्टि—**शुभमिति** । शुभं परमानन्दरूपत्वेन मङ्गलं मोक्षसुखमित्यर्थः । इच्छता प्रार्थयता । आत्मनः शुभमिति वान्वयः ।। १० ।।

ननु ज्ञानसिद्ध्यर्थं विचार एव कर्तव्य इति नियमः कुतः क्रियत इत्याशङ्क्य सदृष्टान्तमाह—**नोत्पद्यत इति** । विचारेण विना अन्यसाधनैः कर्मोपासनालक्षणैः ज्ञानं नोत्पद्यते । तत्र दृष्टान्तमाह—**यथेति** । यथा क्वचित्कस्मिंश्चद्देशे सूर्यादिप्रकाशेन विना पदार्थभानं घटादिवस्तुप्रकाशो न भवति । हीति सर्वजनप्रसिद्धम् । अतो नियमः क्रियत इति भावः ।। ११ ।।

**कोऽहं कथमिदं जातं को वै कर्ताऽस्य विद्यते ।**
**उपादानं किमस्तीह विचारः सोऽयमीदृशः ॥ १२ ॥**

**नाहं भूतगणो देहो नाहं चाक्षगणस्तथा ।**
**एतद्विलक्षणः कश्चिद्विचारः सोऽयमीदृशः ॥ १३ ॥**

**अज्ञानप्रभवं सर्वं ज्ञानेन प्रविलीयते ।**
**सङ्कल्पो विविधः कर्त्ता विचारः सोऽयमीदृशः ॥ १४ ॥**

**एतयोर्यदुपादानमेकं सूक्ष्मं सदव्ययम् ।**
**यथैव मृद्घटादीनां विचारः सोऽयमीदृशः ॥ १५ ॥**

---

तर्हि स विचारः कीदृश इत्यत आह—**कोऽहमिति**। अहं कर्ता सुखीत्यादिव्यवह्रियमाणः कः किंस्वरूपः तथा इदं जगत् स्थावरजङ्गमात्मकं कथं कस्माज्जातम्। किमधिष्ठानमित्यर्थः। तथाऽस्य प्रत्यक्षादिप्रमाणसिद्धस्य जगतः कर्त्तोत्पादकः को विद्यते। वै इति विकल्पं द्योतयति। किं जीवदृष्टं कर्तृ किं वेश्वरः किं वान्यदेव किञ्चिदिति विकल्पः। किञ्चेह जगति उपादानं घटस्य मृद्वत् किमस्ति? अयमात्मा जगत्कारणविषयः ईदृश एवंस्वरूपो विचारः। स एव ज्ञानसाधनमित्यर्थः॥ १२॥

ननु 'चैतन्यविशिष्टः कायः पुरुष' इति बार्हस्पत्यसूत्राद्देहाकारेण परिणतानि पृथिव्यादिचत्वारि भूतान्येवात्मेति **चार्वाकाः** वदन्ति। स एव कर्ता सुखीत्यादिसर्वव्यवहारमूलमिति सर्वजनप्रसिद्धौ सत्यामात्मविषयो विचारो न स्यादित्यत आह—**नाहमिति**। अहमहंशब्दप्रत्ययालम्बनः प्रत्यगात्मा भूतगणो यो देहः स न भवामि, तस्य घटादिवद् दृश्यत्वादित्यर्थः। 'तर्हीन्द्रियगणस्त्वं स्या' इति चार्वाकैकदेशिमतमुत्थाप्य दूषयति—**नाहं चेति**। च पुनरक्षगणः=श्रोत्रादीन्द्रियसङ्घातोऽप्यहं न भवामि। तथेतिपदेन देहवदिन्द्रियगणस्यापि भूतविकारत्वं दर्शितम्। 'स वा एष पुरुषोऽन्नरसमयः अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्यादिश्रुतिरुभयत्र प्रमाणम्। ननु यदि देहद्वयं त्वं नासि तर्हि शून्यमेव स्यादित्याशङ्क्याह—**एतदिति**। एतद्विलक्षणः=एताभ्यां स्थूलसूक्ष्मदेहाभ्यां विपरीतधर्मकोऽस्मि। 'अस्थूलमनण्वह्रस्वम्' इत्यादिश्रुतेः। **कश्चिदिति**। जात्यादिरहितत्वान्मनोवाचामगोचरत्वं दर्शितम्। अयमीदृशः स विचार इति व्याख्यातार्थश्चतुर्थः पादः श्लोकचतुष्टयेऽपि बोद्धव्यः॥ १३॥

तदेवं कोऽहमित्येतन्निश्चित्येदानीं कथमिदं जातमित्यस्य निश्चयः क्रियते। तत्र 'पृथिव्यादिभूतानि कार्यत्वात्स्वस्वपरमाणुभ्यो जायन्ते' इति **तार्किकादयो** मन्यन्ते। 'कर्मणो जायन्ते इति **मीमांसकाः**। 'प्रधानादेव' इति **साङ्ख्याः**। तदेतन्निराकुर्वन्नाह—**अज्ञानेति**। सर्वं जगदिदं नामरूपात्मकमज्ञानप्रभवमज्ञानात्पूर्वोक्तस्वस्वरूपास्फुरणात्प्रभवति। तथाविधम्, अत एवैतद्विरोधिना ज्ञानेन स्वस्वरूपस्फुरणेन तम इव प्रकाशेन प्रविलीयते, निश्शेषलीनं भवतीत्यर्थः। को वै कर्तेत्यस्य निर्णयमाह—**सङ्कल्प इति**। विविधो नानाप्रकारः सङ्कल्पः इदं करिष्यामीत्यादिलक्षणोऽन्तःकरणपरिणामः। कारणानुकूलव्यापारवान् कर्त्ता। शेषं पूर्वोक्तम्॥ १४॥

अथोपादानं किमस्तीत्यस्य निर्णयमाह—**एतयोरिति**। एतयोरज्ञानसङ्कल्पयोर्यदुपादानं उत्पत्ति-

**अहमेकोऽपि सूक्ष्मश्च ज्ञाता साक्षी सदव्ययः ।**
**तदहं नात्र सन्देहो विचारः सोऽयमीदृशः ॥ १६ ॥**

**आत्मा विनिष्कलो ह्येको देहो बहुभिरावृतः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १७ ॥**

**आत्मा नियामकश्चान्तर्देहो बाह्यो नियम्यकः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १८ ॥**

---

स्थितिनाशाय कारणं तत्तु सत्कालत्रयाबाध्यं ब्रह्मैव नान्यदित्यर्थः । अत एवाधिष्ठानज्ञाननिर्वर्त्याऽज्ञानकार्यत्वेन मिथ्याभूतमपि जगत् यावज्ज्ञानोदयं रज्जुसर्पादिवत् संसारभयव्यवहारक्षमं भवेदिति भावः । ब्रह्मणः सत्त्वे हेतुः—**अव्ययमिति** । अव्ययमपक्षयरहितम् । अनेनैतत्पूर्वभूता अपि जन्मादिविकारा निरस्ताः, नाशश्च निरस्तः । षड्भावविकारराहित्ये हेतुः एकं सजातीयादिभेदशून्यम् । तद्धि कुतो न दृश्यते तत्राह—**सूक्ष्ममिति** । सूक्ष्मं मनोवागादीन्द्रियागोचरम् । तेषां प्रवृत्तिनिमित्तजातिक्रियादिशून्यत्वादित्यर्थः । ब्रह्मण उपादानत्वे दृष्टान्तमाह—**यथैवेति** । यथैव मृद्घटादीनामुपादानं तथैवेत्यर्थः । एवंप्रकारेण कार्यकारणभेदो नाममात्रमिति सूचितम् ॥ १५ ॥

ननु यद्यपि कार्यकारणभेदो वाचारम्भणमात्रस्तथापि जीवब्रह्मणोर्भेदो वास्तवः स्यादित्याशङ्क्याह—**अहमिति** । अत्र यत इत्यध्याहारः । तथाचायमर्थः—यतोऽहमहंप्रत्ययवेद्योऽप्येकः सजातीयादिभेदशून्यः । मनुष्यमात्रेऽप्यहंबुद्धेरेकत्वप्रतीतेरित्यर्थः । च पुनः सूक्ष्म इन्द्रियागोचरः । पुनर्ज्ञाताऽहङ्कारादिप्रकाशकत्वेन चेतन इत्यर्थः । तथा साक्षी—साक्षादिन्द्रियार्थसन्निकर्षं विनैवेक्षते पश्यति प्रकाशयतीति साक्षी; निर्विकार इत्यर्थः । अत एव सदव्ययः संश्चासावव्ययश्च, विनाशापक्षयोपलक्षितसर्वविकारशून्य इत्यर्थः । यस्मादेवंभूतोऽहं तत्तस्मादहमहंप्रत्ययवेद्यस्तत्सत्यज्ञानादिलक्षणं ब्रह्म अत्र सन्देहो नास्तीत्यर्थः । सोऽयमीदृशो विचार इति ॥ १६ ॥

एतदेव जीवब्रह्मैक्यमज्ञानप्रदर्शनेन द्रढयति—**आत्मेत्यादि**पञ्चभिः । यतोऽप्रत्ययवेद्य आत्मा—अतति सन्ततभावेन जाग्रदादिसर्वावस्थास्वनुवर्तत **इत्यात्मा**, अवस्थात्रयभावाभावसाक्षित्वेन सत्यज्ञानादिस्वरूप इत्यर्थः । स त्वंपदलक्ष्यार्थोऽपि तत्पदलक्ष्यार्थ एव । विनिष्कलो विशेषेण निर्गतकलो निरवयवय इत्यर्थः । अन्यथा सावयवत्वे घटादिवद्विनाशित्वापत्तिरितिभावः । अत्र हेतुः—एकः । **हीति** 'एकमेवाद्वितीयम्' इत्यादिश्रुतिप्रसिद्धिं द्योतयति । ननु तथा लिङ्गदेहोप्यस्तीति चेन्नेत्याह—**देह इति** । देहो लिङ्गदेहः सूक्ष्मशरीरमिति यावत् । स बहुभिः कलाभिः श्रोत्रादिबुद्ध्यन्ताभिः सप्तदशभिरावृतः आच्छादितस्तत्सङ्घात इत्यर्थः। अत एव लिङ्गदेहस्य निरवयवत्वाद्यभावात् ज्ञानेन तत्कारणाज्ञाननिवृत्तौ निवृत्तिरन्यथाऽनिर्मोक्षप्रसङ्ग इति भावः । एवमतिवैलक्षण्ये सत्यपि तयोरात्मदेहयोः प्रकाशतमसोरिवैक्यमैकात्म्यं प्रपश्यन्ति तार्किकादय इत्यर्थः । अतो विपरीतदर्शनात्परमन्यदज्ञानं किमस्ति एतदेवाज्ञानमित्यर्थः । विपर्ययरूपकर्मान्यथानुपपत्त्या तत्कारणं मूलाऽज्ञानं कल्प्यत इति भावः ॥ १७ ॥

पुनर्वैलक्षण्यमाह—**आत्मेति** । आत्मा नियामको नियन्ता । च पुनरन्तः पञ्चकोशान्तरः देहस्तु नियम्यः सन् बाह्यः । तयोरैक्यमित्युत्तरार्द्धं व्याख्यातम् । एवमग्रेऽपि ज्ञेयम् ॥ १८ ॥

**आत्मा ज्ञानमयः पुण्यो देहो मांसमयोऽशुचिः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १९ ॥**

**आत्मा प्रकाशकः स्वच्छो देहस्तामस उच्यते ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ २० ॥**

**आत्मा नित्यो हि सद्रूपो देहोऽनित्यो ह्यसन्मयः ।**
**तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ २१ ॥**

**आत्मनस्तत्प्रकाशत्वं यत्पदार्थावभासनम् ।**
**नाग्न्यादिदीप्तिवद्दीप्तिर्भवत्यान्ध्यं यतो निशि ॥ २२ ॥**

---

अन्यदपि वैलक्षण्यमाह—**आत्मेति** । आत्मा ज्ञानमयः प्रकाशरूपोऽत एव पुण्यः शुद्धः, देहस्तु मांसादिविकारवानत एवाऽशुचिः । एतेनात्मनः स्थूलदेहादपि वैलक्षण्यमुक्तं भवति । तयोरैक्यमित्यादि पूर्ववत् ॥ १९ ॥

वैलक्षण्यान्तरमाह—**आत्मेति** । आत्मा स्वयंप्रकाशः सन् सूर्यादिवदन्यसर्वप्रकाशकोऽत एव स्वच्छः, प्रकाश्यगुणदोषसम्बन्धशून्य इत्यर्थः । 'असङ्गो ह्ययं पुरुष' इति श्रुतेः । देहस्तु तामसो घटादिवत्प्रकाश्यत्वेन जडः । तयोरैक्यमित्यादि पूर्ववत् ॥ २० ॥

अत्र सर्वत्र पौनरुक्त्यं नाशङ्कनीयम् । आत्मनोऽलौकिकत्वेनात्यन्तदुर्बोधत्वादेव बहुधा वैलक्षण्यं प्रदर्श्यते परमकारुणिकैः श्रीमदाचार्यैः—**आत्मेति** । आत्मा नित्यो ध्वंसाप्रतियोगी । तत्र हेतुः—हि यस्मात्सद्रूपः अबाध्यस्वरूपः, देहस्तु ध्वंसप्रतियोगी । अत्रापि हेतुः—हि यस्मादसन्मयोऽनित्यः विकारित्वेन बाधयोग्य इत्यर्थः । यस्मादेवमात्मदेहयोरत्यन्तवैलक्षण्यं तस्मात्तयोरैक्यदर्शनं केवलमज्ञानमिति ॥ २१ ॥

नन्वात्मनः प्रकाशत्वं किं नामेत्यत आह—**आत्मन इति** । आत्मनस्तत् प्रकाशत्वं **बोद्धव्यम्** । किं तदित्यत आह—**यदिति** । यदिति यत्पदार्थावभासनं घटपटादिवस्तुविषयप्रकाश इदन्तया निर्दिश्यमानविषयदर्शनमिति यावत् । तर्ह्यग्न्यादिप्रकाशवद्विकारित्वं स्यादित्यत आह—**नाग्न्यादिदीप्तिवद्दीप्तिरिति** । इयमात्मदीप्तिरग्न्यादिदीप्तिवन्न, कदाचिदुत्पत्तिविनाशादिविकारवती नेत्यर्थः । तत्र हेतुमाह–**भवतीति** । भवत्यान्ध्यं यतो निशि–यतः कारणान्निशिरात्रावग्न्यादिप्रकाश एकस्मिन्देशे सत्यपि तदन्यत्र लोकस्यान्ध्यं रूपग्रहाक्षमत्वं भवति नैतादृश्यात्मदीप्तिरेकत्र विद्यमाना चैकत्राऽविद्यमाना परिच्छिन्ना चास्ति; किन्तु दीपादिरूपस्याग्न्यादिप्रकाशस्य प्रकाशिका, तदभावे चान्धकारस्य प्रकाशिका उत्पत्तिनाशरहिता च सदा सर्वत्र पूर्णैवास्ति । यद्वा इयमात्मदीप्तिरग्न्यादिदीप्तिसदृशी न, कुतः ? यतः कारणान्निशि रात्रावान्ध्यमन्धकारो भवत्यतस्तद्विलक्षणाऽऽत्मदीप्तिर्ज्ञेया । यद्यात्मदीप्तिरग्न्यादिदीप्तिसदृशी भवेत्तर्ह्यग्न्यादिदीप्त्या यथान्धकारस्य नाशो भवति तथाऽऽत्मदीप्त्याऽप्यन्धकारस्य नाशः स्यात् । परन्त्वात्मनः सत्ताप्रकाशाभ्यां सर्वत्र सर्वदा विद्यमानत्वेऽप्यन्धकारस्य नाशो न भवत्यत आत्मदीप्तिरग्न्यादिदीप्तिसदृशी न, किन्तु इयमग्न्यादिदीप्तिर्भातीदमान्ध्यं भातीत्याद्याकारेण

**देहोऽहमित्ययं मूढो धृत्वा तिष्ठत्यहो जनः ।**
**ममायमित्यपि ज्ञात्वा घटद्रष्टेव सर्वदा ॥ २३ ॥**

**ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः ।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २४ ॥**

**निर्विकारो निराकारो निरवद्योऽहमव्ययः ।**
**नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २५ ॥**

---

अग्न्यादिदीप्तेरान्ध्यस्य चान्यस्य सर्वस्य च प्रकाशिका चाविरोधिन्यात्मदीप्तिः स्वप्रकाशैवाभ्युपेतव्या सर्वैरात्मज्ञानारूढैरित्यर्थः । तस्मादग्न्यादिदीप्तीनामपि दीपिकाऽन्यसाधननिरपेक्षा या दीप्तिः सा आत्मप्रकाश इति भावः ॥ २२ ॥

तदेवं प्रकाश्यप्रकाशकत्वादिलक्षणवैलक्षण्ये सत्यपि आत्मानात्मभेददर्शितमुपसंहरन्नुभयोर्भेदं स्पष्टयति—**देह इति** । अहमहंशब्दप्रत्ययालम्बनः प्रत्यगात्माऽयमिदन्तया निर्दिश्यमानो घटादिवत्प्रत्यक्षतया दृश्यमानो देहोऽस्मीति उभयोर्द्रष्टृदृश्ययोरैक्यं कृत्वा मूढः-स्वाज्ञानकार्यविपर्ययमोहव्याप्तो जनस्तिष्ठति, कृतकृत्यबुद्ध्या निर्व्यापारो भवतीत्यर्थः । एतदहो ! महदज्ञानमिति भावः । किं कृत्वापीत्यत आह—**ममेति** । मम मत्सम्बन्धी अयं देह इति सामान्यतो भेदं ज्ञात्वापि । अत एवाश्चर्यमिति तात्पर्यम् । क इव सर्वदा घटद्रष्टेव । यथा सर्वकाले घटद्रष्टा पुरुषो 'ममायं घट' इति जानाति न तु 'अहं घट' इति कदाचिदपि जानातीत्यर्थः ॥ २३ ॥

नन्वतस्मिंस्तद्बुद्धिरितिलक्षणभ्रमापरपर्यायमोहकार्यलिङ्गानुमेयमज्ञानमीदृक् तर्हि तन्निवर्तकं किमित्याकाङ्क्षायां तद्विरोधित्वादात्मज्ञानमेवात्माऽज्ञाननिवर्तकमित्यभिप्रेत्य तल्लक्षणमाह—**ब्रह्मेत्यादिपञ्चभिः** । अहम् अहंशब्दप्रत्ययालम्बनः प्रत्यागात्मा ब्रह्मैवास्मि । एतयोस्तत्त्वंपदार्थयोरैक्ये हेतुगर्भितानि विशेषणान्याह—**सम इति** । समः सत्ताप्रकाशाभ्यां सर्वाभिन्नः । पुनः किंलक्षणः । **शान्तः**—निरस्तसमस्तोपाधित्वाद् विक्षेपादिविकारशून्यः । पुनः किंलक्षणः । **सच्चिदानन्दलक्षणः** सच्चिदानन्दैरनृतजडदुःखप्रतियोगिभिर्लक्ष्यते, विरुद्धांशत्यागरूपया भागलक्षणया ज्ञायत इति सच्चिदानन्दलक्षणः । ब्रह्मबोधे हि द्विविधं द्वारम्—विधिर्निषेधश्चेति । तत्र सत्यज्ञानादिसाक्षाद्वाचकशब्दप्रयोगलक्षणो विधिरुक्तः । इदानीमतन्निरसनलक्षणो निषेधः प्रदर्श्यते—**नाहमिति** । अहमहंशब्दप्रत्ययालम्बन आत्मा देहो नेत्यन्वयः । देह इत्युपलक्षणं प्राणेन्द्रियादीनामपि । **हीति** विद्वज्जनप्रसिद्धम् । देहादेरनात्मत्वे हेतुमाह—**असदिति** । असद्रूपोऽसद्बोध्यमनृतं तादृग्रूपं स्वरूपं यस्य स तथाविधः । इत्येवंप्रकारम् 'अहं ब्रह्मास्मि' इत्यादिमहावाक्यजन्याऽखण्डाकारबुद्धिरूपं ज्ञानं बुधैरात्मतत्त्वज्ञैरुच्यते, कथ्यत इत्यर्थः । एतद्विलक्षणः सर्वो ज्ञानाभास इति भावः ॥ २४ ॥

नन्वहं जातो मृतः सुखी दुःखीत्याद्यनेकविकारत्वेनाहंशब्दप्रत्ययालम्बनस्य प्रतीयमानत्वात् कथं तस्य ब्रह्मत्वमित्यत आह—**निर्विकार इति** । अहमहंशब्दप्रत्ययालम्बनः प्रत्यगात्मा निर्विकारोऽस्मीति शेषः । निर्गता विकारा जन्मादयो यस्मात् स तथाविधः । तेषां देहधर्मत्वादिति भावः । तत्र हेतुः—निराकारः देहाद्याकाररहितः । अत एव निरवद्यो वातपित्तादिजन्याध्यात्मिकादितापत्रयरहितः

निरामयो निराभासो निर्विकल्पोऽहमाततः ।
नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २६ ॥

निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोऽहमच्युतः ।
नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २७ ॥

निर्मलो निश्चलोऽनन्तः शुद्धोऽहमजरोऽमरः ।
नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २८ ॥

स्वदेहे शोभनं सन्तं पुरुषाख्यं च सम्मतम् ।
किं मूर्ख! शून्यमात्मानं देहातीतं करोषि भोः ॥ २९ ॥

स्वात्मानं शृणु मूर्ख! त्वं श्रुत्या युक्त्या च पूरुषम् ।
देहातीतं सदाकारं सुदुर्दर्शं भवादृशैः ॥ ३० ॥

---

इत्यर्थः । अत एवाऽव्ययः अपक्षयादिरहित इत्यर्थः । अहं मनुष्य इत्यादिप्रतीतेः कथं निर्विकारत्वमिति चेत् सा प्रतीतिः शुक्तिरजतादिवद् बाध्यत्वाद् भ्रान्तिरित्याह—**नाहमिति** । नाहमित्युत्तरार्द्धं व्याख्यातं पूर्वश्लोके । एवमुत्तरत्रापि ज्ञेयम् । पुनरुक्तिस्तु ज्ञानप्रतिबन्धकस्य बुद्धिमान्द्यविपर्ययादेर्दार्ढ्यान्नाशङ्कनीया ॥ २५ ॥

पुनः किंलक्षणं ज्ञानमित्यत आह—**निरामय इति** । अहं निरामयः सर्वरोगरहितः, निराभासो वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वशून्यः, निर्विकल्पः कल्पनाहीनः, आततः व्यापकः ॥ २६ ॥

पुनः किंलक्षणं ज्ञानमित्यत आह—**निर्गुण इति** । अहं निर्गुणो—गुणरहितः, गुणानां मायामयत्वादित्यर्थः । अत एव निष्क्रियः—क्रियारहितः तथा नित्यो विनाशरहितः अत एव नित्यमुक्तः—कालत्रयेऽपि बन्धशून्यः । तत्र हेतुः—अच्युतः अप्रच्युतसच्चिदानन्दस्वभावः ॥ २७ ॥

पुनरपि ज्ञानलक्षणमाह—**निर्मल इति** । अहं निर्मलः अविद्यातत्कार्यलक्षणमलरहितः; अत एव निश्चलः व्यापकत्वादाकाशवन्निश्चल इत्यर्थः । निश्चलत्वे हेतुः—अनन्तः देशकालवस्तुपरिच्छेदशून्यः, शुद्धः अशुद्धिरहितः, पुनरजरः जरारहितः, अमरो मरणरहितश्च । सर्वधर्माणां देहत्रयवर्तित्वादिति भावः ॥ २८ ॥

नन्वात्मा प्रत्यक्षदेहरूपो न भवति तर्हि शून्यत्वमात्मनः स्यादित्याशङ्क्याह—**स्वदेह इति** । भो मूर्ख ! स्वदेहे पुरुषाख्यं पुरि मनुष्यशरीरे उषति अहमाकारेण वसतीति पुरुष इत्याख्या नाम यस्य तम् । अत एव शोभनं मङ्गलं शरीरविलक्षणत्वादतिमङ्गलं तथा सम्मतम् । 'अयमात्मा ब्रह्म' इत्यादिवाक्यनिर्णीतं चकारात् 'उत्तमः पुरुषस्त्वन्यः' इत्यादिस्मृतिनिर्णीतं घटद्रष्टृवद्देहद्रष्टृत्वेन देहातीतमात्मानं सततं भावं सन्तं सर्वव्यवहाराधिष्ठानं, शून्यं खपुष्पादिवत् अत्यन्ताभावरूपं किं करोषि कथं मन्यसे । मा मन्यथा इति भावः । क्वचित् 'स्वदेहम्' इति द्वितीयान्तः पाठस्तस्मिन् पक्षे देहात्मवाद्येव वदति । उक्तलक्षणं मनुष्यदेहं त्यक्त्वा, समानमन्यत् ॥ २९ ॥

ननु शून्यवादिन एवाभावापत्तेः शून्यं मास्तु, परन्त्वात्मनो देहातीतत्वे प्रमाणाभावाद्देह एवात्मा स्यादित्याशङ्क्याह—**स्वात्मानमिति** । भो मूर्ख देहात्मवादिन् चार्वाक ! त्वं स्वात्मानं

**अहंशब्देन विख्यात एक एव स्थितः परः ।**
**स्थूलस्त्वनेकतां प्राप्तः कथं स्याद्देहकः पुमान् ॥ ३१ ॥**

**अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः ।**
**ममायमिति निर्देशात्कथं स्याद्देहकः पुमान् ॥ ३२ ॥**

**अहं विकारहीनस्तु देहो नित्यं विकारवान् ।**
**इति प्रतीयते साक्षात्कथं स्याद्देहकः पुमान् ॥ ३३ ॥**

**यस्मात्परमिति श्रुत्या तया पुरुषलक्षणम् ।**
**विनिर्णीतं विमूढेन कथं स्याद्देहकः पुमान् ॥ ३४ ॥**

---

स्वकीयमात्मानं पुरुषं देहातीतं देहातिरिक्तं श्रुत्या 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा' इत्यादिकया, पुनर्युक्त्या च 'एकस्मिन्कर्तृकर्मविरोध' इत्यादिरूपया शृणु--अवधारय। देहातीतत्वे किमाकार आत्मेत्यत आह—**सदाकारमिति**। सदाकारमस्तीत्येतन्मात्रव्यवहारकारणभूत आकारो यस्य तम्। एवंविधोऽस्ति चेत्कुतो न दृश्यत इत्यत आह—**सुदुर्दर्शमिति**। भवादृशैः श्रुत्याचार्यश्रद्धाशून्यैः सुदुर्दर्शं सर्वथा दर्शनायोग्यम्, तस्यादृष्टरूपत्वादेवेत्यर्थः। यद्वा पूर्वश्लोकोक्तद्वितीयापेक्षया देहात्मवादिनः समाधानार्थोऽयं श्लोकः स्वात्मानमिति ॥ ३० ॥

तदेवाह—**अहमित्यादिसप्तभिः**। परः देहादन्य आत्मा अहंशब्देन। शब्द इत्युपलक्षणं प्रत्ययस्यापि। विख्यातः प्रसिद्धः। किंलक्षण इत्यत आह—**एक इति**। एक एव स्थितः। एवेति प्रत्येकमवधारणम्। तुशब्दः पूर्वोक्तादात्मनः स्थूलदेहस्य वैलक्षण्यद्योतकः। स्थूलो देहकः—देह एव देहकः। स्वार्थे कप्रत्ययः। कथं पुमान् पुरुषः आत्मा स्यान्न कथञ्चिदित्यर्थः। देहस्यानात्मत्वे हेतुमाह—**अनेकतामिति**। अनेकतां परस्परं भिन्नतां प्राप्तः। एवं तमःप्रकाशवदतिविलक्षणत्वेऽपि देहस्यात्मत्वं ब्रुवन्नतिमूढत्वादुपेक्ष्य इति भावः ॥ ३१ ॥

तदेवातिवैलक्षण्यं दर्शयति—**अहमिति**। अहमहंशब्दप्रत्ययालम्बन आत्मा द्रष्टृतया शब्दादिविषयप्रकाशकतया सिद्धः—शब्दं शृणोमीत्यादिव्यवहारेण प्रसिद्धः, देहस्तु दृश्यतया शब्दादिवत्प्रकाश्यतया स्थितः। तत्र हेतुमाह—**ममेति**। ममायं देह इति घटादिवत्स्वीयसम्बन्धितया निर्देशात्—व्यवहारात्। एवमुभयोर्वैलक्षण्ये सति कथं देहकः पुमान् स्यादिति व्याख्यातार्थश्चतुर्थपादः। एवमग्रेऽपि बोद्धव्यम् ॥ ३२ ॥

पुनर्वैलक्षण्यान्तरमाह—**अहमिति**। अहं (व्याख्यातार्थः) विकारहीनः—जायतेऽस्तीत्यादिषड्विकारहीनः। तु वैलक्षण्ये। देहो नित्यं सर्वकालं विकारवान् अत्र किं प्रमाणमत आह—**इतीति**। इति साक्षात् प्रत्यक्षप्रमाणेन प्रतीयते अनुभूयते। एवं सति कथं स्याद्देहकः पुमानिति ॥ ३३ ॥

एवं युक्त्वा देहात्मनोर्वैलक्षण्यमुक्त्वा श्रुत्याप्याह—**यस्मादिति**। 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' तया प्रसिद्धया तैत्तिरीयश्रुत्या। श्रुत्येति करणे तृतीया। पुरुषस्यात्मनो लक्षणम्। विमूढेन

**सर्वं पुरुष एवेति सूक्ते पुरुषसंज्ञिते ।**
**अप्युच्यते यतः श्रुत्या कथं स्याद्देहकः पुमान् ॥ ३५ ॥**

**असङ्गः पुरुषः प्रोक्तो बृहदारण्यकेऽपि च ।**
**अनन्तमलसंश्लिष्टः कथं स्याद्देहकः पुमान् ॥ ३६ ॥**

**तत्रैव च समाख्यातः स्वयंज्योतिर्हि पूरुषः ।**
**जडः परप्रकाश्योऽसौ कथं स्याद्देहकः पुमान् ॥ ३७ ॥**

**प्रोक्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः ।**
**नित्यश्च तत्फलं भुङ्क्ते देहपातादनन्तरम् ॥ ३८ ॥**

**लिङ्गं चानेकसंयुक्तं चलं दृश्यं विकारि च ।**
**अव्यापकमसद्रूपं तत्कथं स्यात् पुमानयम् ॥ ३९ ॥**

---

विगतमूढभावेनातिचतुरेण, श्रुत्यर्थविवेचनकुशलेनेत्यर्थः । इयं कर्तरि तृतीया । विनिर्णीतं—विचार्य स्थापितम् । अन्यत्पूर्ववत् । यद्वा—श्रुत्येति कर्तृपदम् । अस्मिन् पक्षे विमूढेनेति देहात्मवादिनं प्रति सम्बोधनम् । विमूढानां इन स्वामिन् । मूर्खशिरोमणित्वादेव श्रुतिं नाद्रियस इति भावः ॥ ३४ ॥

न केवलमनयैकया श्रुत्या विनिर्णीतं किंत्वन्ययापीत्याह—**सर्वमिति** । यतो हेतोः श्रुत्या वेदाख्यपरदेवतया 'पुरुष एवेदं सर्वम्' इति पुरुषसंज्ञिते सूक्तेऽप्युच्यते । पुरुषलक्षणमिति पूर्वश्लोकादध्याहारः । अतः कथं स्यादिति पूर्ववत् ॥ ३५ ॥

अपरयापि श्रुत्यैवमेव निर्णीतमित्याह—**असङ्ग इति** । 'असङ्गो ह्ययं पुरुषः' इति श्रुत्या बृहदारण्यके वाजसनेयोपनिषदि पुरुष असङ्गः प्रोक्तः । देहकस्त्वनन्तमलसंश्लिष्टः । कथं पुमान् स्यादिति प्राग्वत् ॥ ३६ ॥

तत्रैवान्यप्रकारेणापि देहात्मनोर्वैलक्षण्यं निरूपितमित्याह—**तत्रैवेति** । तत्रैव बृहदारण्यक एवेत्यर्थः । अत्रायं पुरुषः स्वयंज्योतिर्भवतीति श्रुत्या स्वयंज्योतिः पुरुषः समाख्यातः । हीति विद्वत्प्रसिद्धिं द्योतयति । असौ घटादिवद् दृश्योऽत एव परप्रकाश्यस्तत एव जडो देहकः कथं पुमान् स्यादिति व्याख्यातम् ॥ ३७ ॥

अथास्तामिदं ज्ञानकाण्डं कर्मकाण्डेऽपि देहात्मनोर्भेद एव निर्णीत इत्याह—**प्रोक्त इति** । हि यस्मात्कर्मकाण्डेनापि 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिरूपेण कर्मप्रतिपादकेन वेदभागेनेत्यर्थः । आत्मा देहाद्विलक्षणः प्रोक्तः । कथमित्यत आह—**नित्य इति** । नित्यत्वं च कुत इत्यत आह—**तदिति** । देहपातादनन्तरं तत्फलमनित्यं कर्मफलं यत आत्मा भुङ्क्तेऽतो नित्य इत्यर्थः । चकारात् न्याय-साङ्ख्यादावप्येवमेव देहात्मनोर्भेदो वर्णित इति दर्शितम् ॥ ३८ ॥

नन्वेवं सति वेदान्तिनामपसिद्धान्तः स्यादित्यत आह—**लिङ्गमिति** । लिङ्गं लिङ्गशरीरं तत्परोक्षादिधर्मविशिष्टम्, अयं नित्यापरोक्षस्वभावः पुमान् कथं स्यान्न कथञ्चिदित्यर्थः । चकारात् कारण-

एवं देहद्वयादन्य आत्मा पुरुष ईश्वरः ।
सर्वात्मा सर्वरूपश्च सर्वातीतोऽहमव्ययः ॥ ४० ॥

इत्यात्मदेहभागेन प्रपञ्चस्यैव सत्यता ।
यथोक्ता तर्कशास्त्रेण ततः किंपुरुषार्थता ॥ ४१ ॥

इत्यात्मदेहभेदेन देहात्मत्वं निवारितम् ।
इदानीं देहभेदस्य ह्यसत्त्वं स्फुटमुच्यते ॥ ४२ ॥

चैतन्यस्यैकरूपत्वाद् भेदो युक्तो न कर्हिचित् ।
जीवत्वं च मृषा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥ ४३ ॥

---

शरीरमपि निराकृतम् । अनयोरपि भेदे लिङ्गदेहस्य वैलक्षण्यसूचकानि विशेषणान्याह—**अनेकेति ।** अनेकसंयुक्तं देवमनुष्यादिनानास्थूलशरीरसम्बन्धयुक्तम् । यद्वा श्रोत्रादिबुद्ध्यन्तसप्तदशकलासंयुक्तं तथा चलं चञ्चलं मनःप्रधानत्वादित्यर्थः । पुनर्दृश्यं 'ममेदं श्रोत्रं, ममेदं मन' इत्यादिममतास्पदत्वेनात्मन उपसर्जनभूतं च पुनर्विकारि उपचयादिमत् । अव्यापकं परिच्छिन्नमसद्रूपमात्मज्ञानैकबोध्यं च । अत्रेदमाकूतम्—यद्यपि लिङ्गशरीराध्यासे नात्मनः कर्तृत्वभोक्तृत्वादिभावस्तथाऽप्यात्मनः स्वतस्तदभावाज्ज्ञानाध्यासनिवृत्तावकर्तृत्वाभोक्तृत्वादिभावसिद्धिरिति वेदान्तिनां न किञ्चिदपसिद्धान्तोऽप्यवदिति मङ्गलम् ॥ ३९ ॥

इदानीं पूर्वोक्तमर्थमुपसंहरति—**एवमिति ।** एवं पूर्वोक्तप्रकारेण देहद्वयात् स्थूलसूक्ष्मलक्षणादन्यो भिन्न आत्मा । कोऽसावित्यत आह—**पुरुष इति ।** पुरि शेते इति पुरुषः शरीराधिष्ठाता, तर्हि किं जीवः नेत्याह—**ईश्वर इति ।** तत्र हेतुः—**सर्वात्मेति ।** तर्ह्यद्वैतहानिः स्यादित्यत आह—**सर्वरूप इति ।** एवं सति विकारित्वं स्यादित्यत आह—**सर्वातीत इति ।** एतादृश आत्मा चेदस्ति तर्हि कुतो नोपलभ्यत इत्यत आह—**अहमिति ।** अहं प्रत्यक्षोऽहंशब्दप्रत्ययालम्बनत्वेन सर्वदोपलब्धिस्वरूप इत्यर्थः । तर्ह्यहङ्कारः स्यान्नेत्याह—**अव्यय इति ।** अव्ययः अपक्षयादिविकारशून्यः अहङ्कारसाक्षीति भावः ॥ ४० ॥

अथेदानीमात्मनो देहद्वयातिरिक्तत्वप्रतिपादनमनर्थकमिति शङ्कते—**इतीति ।** इति पूर्वोक्तप्रकारेण वर्णितेनात्मदेहविभागेन प्रपञ्चस्यैव सत्यता यथोक्ता यथा तर्कशास्त्रेण ततः प्रपञ्चसत्यत्वप्रतिपादनात्किंपुरुषार्थता कुत्सितपुरुषार्थत्वम्, भयनिवृत्त्यभावादित्यर्थः । 'द्वितीयाद्वै भयं भवति' इति श्रुतेः ॥ ४१ ॥

भेदज्ञानस्याभेदज्ञानं प्रति कारणत्वादात्मदेहविभागकथनं नानर्थकमित्याह—**इतीति ।** इति पूर्वोक्तेनात्मदेहभेदेनात्मनो देहात्पृथक्करणेन देहस्यैव प्राप्तं चार्वाकमतेनात्मत्वं तन्निवारितम् । इदानीमुत्तरग्रन्थेन तस्य देहभेदस्यासत्त्वमात्मसत्तातिरिक्तसत्ताराहित्यं स्फुटं स्पष्टं यथा स्यात्तथा हीति प्रसिद्धमुच्यते ॥ ४२ ॥

तदेवाह—**चैतन्यस्येति ।** चैतन्यस्य सर्वभूतभौतिकप्रपञ्चाधिष्ठानप्रकाशस्य । 'घटः प्रकाशते, पटः प्रकाशते' इत्यादिष्वेकरूपत्वादेकाकारत्वाद्धेतोः कर्हिचित् कस्याञ्चिदवस्थायामपि भेदो न युक्तो

**रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी ।**
**भाति तद्वच्चितिः साक्षाद्विश्वाकारेण केवला ॥ ४४ ॥**

**उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ।**
**तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ॥ ४५ ॥**

**व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ।**
**इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ ४६ ॥**

**श्रुत्या निवारितं नूनं नानात्वं स्वमुखेन हि ।**
**कथं भासो भवेदन्यः स्थिते चाद्वयकारणे ॥ ४७ ॥**

**दोषोऽपि विहितः श्रुत्या मृत्योर्मृत्युं स गच्छति ।**
**इह पश्यति नानात्वं मायया वञ्चितो नरः ॥ ४८ ॥**

---

**न यथार्थ** इत्यर्थः । तर्हि जीवभेदः सत्यः स्यादित्यत आह—**जीवत्वमिति** । जीवत्वम्, चकारोऽप्यर्थः । मृषा मिथ्या ज्ञेयम् । तदुपाधेरेवान्तःकरणादेर्मायामयत्वादित्यर्थः । अधिष्ठानसत्यत्वेन कल्पितस्य मिथ्यात्वबोधे दृष्टान्तमाह—**रज्जाविति** । यथा रज्जौ तदज्ञानात् वक्रतादिसादृश्येन मन्दान्धकारे सर्पग्रहः सर्पबुद्धिरव्युत्पन्नस्य भवति नतु व्युत्पन्नस्य, तथैवात्मन्यात्माज्ञानात् प्रकाशसादृश्यादविशेषप्रकाशे चिज्जडग्रन्थिरूपचिदाभासभ्रमो भवत्यविवेकिनां नतु विवेकिनामिति वेदान्तसिद्धान्तरहस्यम् ॥ ४३ ॥

इदानीं पूर्वोक्तमेव दृष्टान्तं विवृण्वन् सर्वस्यापि प्रपञ्चस्य ब्रह्मरूपतामाह—**रज्ज्वति** । केवलेतिविशेषणेन पूर्वावस्थामपरित्यज्यावस्थान्तरप्राप्तिलक्षणविवर्तोपादानत्वमेवोक्तम्, नारम्भोपादानत्वं नापि परिणामोपादानत्वमिति बोध्यम् । अन्यत् स्पष्टम् ॥ ४४ ॥

अत्र हेतुं दर्शयन् पूर्वोक्तमुपसंहरति—**उपादानमिति** । यस्मात्प्रपञ्चस्याकाशादिदेहान्तस्य जगद्विस्तारस्य ब्रह्मणो मायाशबलाच्चैतन्यादन्यत्परमाणवो यद्वा प्रकृतिरुपादानकारणविशेषो न विद्यते, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिश्रुतेः। तस्माद्धेतोरिति । स्पष्टमन्यत् ॥४५॥

ननु व्याप्यव्यापकतारूपे भेदे जाग्रति सति कथं प्रपञ्चस्य ब्रह्मतेत्याशङ्क्याह—**व्याप्येति** । व्याप्यमान्तरं व्यापकं बाह्यं तयोर्भावस्तत्ता । मिथ्या घटाकाशादिवत् कल्पितत्वादसन्नित्यर्थः । तत्र प्रमाणमाह—**सर्वमिति** । 'इदं ब्रह्मेदं क्षत्रमिति प्रकृत्येदं सर्वं यदयमात्मा' इत्यादिश्रुतिरूपेश्वराज्ञाबलादित्यर्थः । ततः किमत आह—**इतीति** । इति ज्ञाते इत्यादि सुगमम् ॥ ४६ ॥

ननु प्रत्यक्षेण भासमानो व्याप्यव्यापकभावः कथं मिथ्येत्याशङ्क्याह—**श्रुत्येति** । नूनमिति निश्चये । हीति प्रसिद्धौ । श्रुत्या 'नेह नानास्ति किञ्चन' इत्यादिरूपयेत्यर्थः । नानात्वं निवारितम् । तेन च नानात्वनिवारणेनाद्वयकारणेऽभिन्ननिमित्तोपादाने ब्रह्मणि स्थिते सति भासो व्याप्यव्यापकादिप्रतिभासः, कार्यभूतोऽन्यः स्वकारणातिरिक्तः कथं भवेन्न कथञ्चिदित्यर्थः ॥ ४७ ॥

किञ्च भेददृष्टेर्दोषश्रवणादपि कारणादभिन्नमेव कार्यमित्याह—**दोष इति** । 'मृत्योः स मृत्यु-

ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः ।
तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत् ॥ ४९ ॥
ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।
कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ ५० ॥
सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् ।
ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥ ५१ ॥
स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनोः ।
यः सन्तिष्ठति मूढात्मा भयं तस्याभिभाषितम् ॥ ५२ ॥
यत्राज्ञानाद्भवेद् द्वैतमितरस्तत्र पश्यति ।
आत्मत्वेन यदा सर्वं नेतरस्तत्र चाण्वपि ॥ ५३ ॥

---

माप्नोति य इह- नानेव पश्यति' इत्यादिरूपया श्रुत्येत्यर्थः। तत्र मृत्योरनन्तरं मृत्युं जननमरणपरम्परामित्यर्थः। स्पष्टमन्यत् ॥ ४८ ॥

तर्हि किं कुर्यादित्यत आह—**ब्रह्मण इति**। बृहत्त्वादपरिच्छिन्नत्वाद् ब्रह्म। तद्रूपात्परमात्मनः सर्वाणि भूतानि जायन्त उत्पद्यन्ते। जायन्त इति स्थितिप्रलययोरप्युपलक्षणम्, 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतेः। यस्मादेवं तस्माद्धेतोरेतानि भूतानि ब्रह्मैव भवन्ति सन्मात्रब्रह्मरूपाणीत्यवधारयेन्निश्चिनुयादिति ॥ ४९ ॥

ननु नानानामरूपकर्मभेदेन विचित्राणि भूतानि कथं ब्रह्मात्मकानीत्याशङ्क्याह—**ब्रह्मैवेति**। 'त्रयं वा इदं नाम रूपं कर्म' इति बृहदारण्यकश्रुतिर्जगौ गायनं कृतवती, स्वाधिकारिणः श्रावयामासेत्यर्थः। किमित्यत आह—ब्रह्मैव सर्वनामान्याकाशादिदेहान्तान् संज्ञाविशेषान्, च पुनर्विविधानि रूपाण्यवकाशादिद्विपदान्तान् नानाविकारविशेषान्। अपि शब्दश्चार्थे। रूपग्रहणं गन्धादिग्रहणस्याप्युपलक्षणम्। समग्राणि कर्माणि आकाशप्रदानादीनि स्नानशौचादीन् क्रियाविशेषानपि बिभर्ति। रज्ज्वादिकमिव सर्पादिप्रतिभासं दधात्यधिष्ठानदर्शनशून्यान् प्रति दर्शयतीत्यर्थः ॥ ५० ॥

अत्र लोकप्रसिद्धं दृष्टान्तमाह—**सुवर्णेति**। सुगमम् ॥ ५१ ॥

एवं कर्तृकर्मादिकारकघटस्यैकाधिष्ठानरूपत्वे सिद्धेऽपि भेददर्शिनो भयमाह—**स्वल्पेति**। स्वल्पमप्यन्तरमुपास्योपासकरूपं भेदं कृत्वा—कल्पयित्वा यस्तिष्ठति तस्य भयं भाषितम्। 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इत्यादिश्रुत्येत्यर्थः ॥ ५२ ॥

ननु प्रकाशतमसोरिव परस्परविरुद्धस्वभावयोर्द्वैताद्वैतयोः कुत एकाधिकरणत्वमित्याशङ्क्यावस्थाभेदादित्याह—**यत्रेति**। यत्र यस्यामज्ञानावस्थायाम् अज्ञानेन द्वैतमिव भवेत्तत्र तस्यामज्ञानावस्थायाम् 'इतरोऽन्योऽन्यत्पश्यति यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजाना-

यस्मिन् सर्वाणि भूतानि ह्यात्मत्वेन विजानतः ।
न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः ॥ ५४ ॥
अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः ।
इति निर्धारितं श्रुत्या बृहदारण्यसंस्थया ॥ ५५ ॥
अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधतः ॥ ५६ ॥
स्वप्नो जागरणेऽलीकः स्वप्नेऽपि न हि जागरः ।
द्वयमेव लये नास्ति लयोऽपि ह्युभयोर्न च ॥ ५७ ॥
त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम् ।
अस्य द्रष्टा गुणातीतो नित्यो ह्येकश्चिदात्मकः ॥ ५८ ॥
यद्वन्मृदि घटभ्रान्तिं शुक्तौ वा रजतस्थितिम् ।
तद्वद्ब्रह्मणि जीवत्वं वीक्ष्यमाणे न पश्यति ॥ ५९ ॥

---

तीति । यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेत्' इत्यादिश्रुतेः । चशब्दः पूर्वोक्ताद्वैलक्षण्यं सूचयति । यदा यस्मिन् ज्ञानकाले सर्वमात्मत्वेन भवेत् तत्र तस्मिन् ज्ञानकाले इतरोऽण्वपि किञ्चिदप्यन्यन्न पश्यति । 'यत्र वा, अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' इत्यादिश्रुतेः सकार्याज्ञाननिवृत्त्या न द्वैतमिति भावः ॥ ५३ ॥

ननु द्वैतादर्शने कः पुरुषार्थ इत्याशङ्क्य तत्प्रतिपादिकाम् 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥' इति श्रुतिमर्थतः पठति—**यस्मिन्निति ।** यस्मिन्नवस्थाविशेषे सर्वाणि भूतान्यात्मत्वेनात्मभावेन विजानतः अपरोक्षेण साक्षात्कुर्वतोऽधिकारिणः पुरुषस्य । तस्येति षष्ठी सप्तम्यर्थे । तस्मिन्नवस्थाविशेषे वै निश्चयेन मोहो भ्रमो न भवेत्, च पुनः शोको व्याकुलतापि न भवेत् । उभयत्र हेतुः–अद्वितीयतः तत्कारणाभावादित्यर्थः ॥ ५४ ॥

शोककारणद्वैताभावे प्रमाणमाह –**अयमिति ।** 'स वा अयमात्मा ब्रह्म विज्ञानमयः' इत्यादिरूपयेत्यर्थः । शेषं स्पष्टम् ॥ ५५ ॥

नन्वयं लोक एव तत्कारणे सति कथं शोकाद्यभाव उच्यत इत्याशङ्क्य सदृष्टान्तमाह–**अनुभूत इति ।** शेषं स्पष्टम् ॥ ५६ ॥

दृष्टान्तं विवृण्वन्नुक्तन्यायमन्यत्राप्यतिदिशति—**स्वप्न इति ।** अलीको मिथ्या द्वयं स्वप्नजागरणे । लये सुषुप्तौ । शेषं स्पष्टम् ॥ ५७ ॥

उक्तमुपसंहरन्फलितमाह—**त्रयमिति ।** त्रयं जाग्रदाद्यवस्थात्रयमेवमुक्तपरस्परव्यभिचारेण मिथ्या । मिथ्यात्वे हेतुः—**गुणेति ।** गुणत्रयविनिर्मितं मायाकल्पितमित्यर्थः । तर्हि किं सत्यमत आह—**अस्येति ।** अस्य अवस्थात्रयस्य । शेषं स्पष्टम् ॥ ५८ ॥

नन्ववस्थात्रयं मिथ्या भवतु जीवस्तु सत्यः स्यादित्याशङ्क्य सदृष्टान्तमुत्तरमाह—

**यथा मृदि घटो नाम कनके कुण्डलाभिधा ।**
**शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥ ६० ॥**

**यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ।**
**पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ६१ ॥**

**यथैव शून्ये वेतालो गन्धर्वाणां पुरं यथा ।**
**यथाऽऽकाशे द्विचन्द्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥ ६२ ॥**

**यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम् ।**
**पात्ररूपेण ताम्रं हि ब्रह्माण्डौघैस्तथाऽऽत्मता ॥ ६३ ॥**

**घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।**
**जगन्नाम्ना चिदाभाति ज्ञेयं तत्तदभावतः ॥ ६४ ॥**

**सर्वोऽपि व्यवहारस्तु ब्रह्मणा क्रियते जनैः ।**
**अज्ञानान्न विजानन्ति मृदेव हि घटादिकम् ॥ ६५ ॥**

---

**यद्विदिति ।** ब्रह्मणि वीक्ष्यमाणे आत्मत्वेन साक्षात्कृते सति जीवत्वं न पश्यतीत्यन्वयः । अन्यत् स्पष्टमेव ॥ ५९ ॥

अज्ञानावस्थायां प्रतीयमानो यो जीवब्रह्मभेदः स नाममात्र इति बहुदृष्टान्तैराह—**यथेति ।** रजतस्य ख्यातिराख्या, नामेति यावत् । परे परब्रह्मणि जीवशब्दस्तथा । शेषं स्पष्टम् ॥ ६० ॥

न केवलं जीव एव नाममात्रः किंतु सर्वं विश्वमपि ब्रह्मणि नाममात्रमित्यनेकदृष्टान्तैराह—**यथैवेति ।** स्पष्टम् ॥ ६१ ॥

नाममात्रप्रपञ्चस्य मिथ्यात्ववासनादार्ढ्यायेममेवार्थं बहुभिर्लोकप्रसिद्धदृष्टान्तैः प्रपञ्चयति—**यथैव शून्य** इत्यादित्रिभिः । शून्ये निर्जने देशे वैतालः अकस्मादाभासमानो भूतविशेषः । गन्धर्वपुरस्यापि शून्याधिष्ठानत्वं ज्ञेयम् । गन्धर्वनगरं नाम राजनगराकारो नीलपीतादिमेघरचनाविशेषः । आकाशे द्विचन्द्रत्वम् । स्पष्टमन्यत् ॥ ६२ ॥

**यथा तरङ्गेति** सुगमम् ॥ ६३ ॥

**किञ्च घटेति ।** तत्र पादत्रयं स्पष्टम् । ननु किमनेन मिथ्यात्ववासनादार्ढ्येनेत्यत आह—**ज्ञेयमिति ।** तदभावतो नामाभावतस्तद्ब्रह्म ज्ञेयम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतेः ॥ ६४ ॥

ननु 'यत्र हि द्वैतमिव भवति' इत्यादिश्रुत्यर्थदर्शनेनावस्थात्रये विदेहमोक्षावुक्तौ नतु जीवन्मोक्ष इत्याशङ्क्याह—**सर्व इति ।** सर्वोऽपि लौकिको वैदिकश्चेति । शेषं स्पष्टम् । अयं भावः—अज्ञाननिवृत्तिरेव जीवन्मुक्तिर्न तु द्वैतादर्शनमिति ॥ ६५ ॥

कार्यकारणता नित्यमास्ते घटमृदोर्यथा ।
तथैव श्रुतियुक्तिभ्यां प्रपञ्चब्रह्मणोरिह ॥ ६६ ॥

गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ।
वीक्ष्यमाणे प्रपञ्चेऽपि ब्रह्मैवाभाति भासुरम् ॥ ६७ ॥

सदैवात्मा विशुद्धोऽस्ति ह्यशुद्धो भाति वै सदा ।
यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम् ॥ ६८ ॥

यथैव मृन्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ।
आत्मानात्मविभागोऽयं मुधैव क्रियतेऽबुधैः ॥ ६९ ॥

सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥ ७० ॥

घटत्वेन यथा पृथ्वी पटत्वेनेव तन्तवः ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥ ७१ ॥

---

तत्र हेतुं सदृष्टान्तमाह—**कार्येति**। यथा 'सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इत्यादिश्रुतिः। युक्तिस्तु कार्यकारणयोरन्यत्वे एककारणज्ञानात्सर्वकार्यज्ञानं न स्यादित्यादि। सुगममन्यत् ॥ ६६ ॥

कार्यकारणयोरनन्यत्वमेव दृष्टान्तेन स्पष्टयति—**गृह्यमाण इति**। भासुरं प्रमाणनिरपेक्षतयैव भासनशीलम्। स्पष्टमन्यत् ॥ ६७ ॥

ननु ब्रह्मणि भासमाने प्रपञ्चो न भासेतेत्याशङ्क्यावस्थाभेदेनोभयमपि भासत इति सदृष्टान्तमाह—**सदैवेति**। तत्र ज्ञानिनः सदैवात्मा विशुद्धः, अज्ञानतत्कार्यप्रपञ्चमलरहितत्वान्निष्प्रपञ्चोऽस्तीत्यर्थः। अज्ञानिनस्तु सदैवाशुद्धोऽस्तीति भ्रमाद्विभाति। वै हीति तत्प्रसिद्धौ। उभयत्रापि दृष्टान्तः—**यथेति**। यथा रज्जुर्ज्ञानिनः सर्पाभावतया निर्विषत्वेनाभयङ्करी। अज्ञानिनस्तु सर्परूपतया विपरीतत्वेन भयङ्करीति द्विविधा भाति। अयं भावः ब्रह्म यद्यपि स्वयंप्रकाशत्वेन सदा भात्येव तथापि वृत्त्यारूढत्वेन पुरुषार्थोपयोगीति ज्ञानिनः प्रतिभाति नाज्ञानिनः, सूर्यदीपादिरिव चक्षुष्मदन्धयोरिति दिक् ॥ ६८ ॥

नन्वात्मा यदि सदैव निष्प्रपञ्चत्वेन भाति तर्हि किमर्थं देहात्मभेदो वर्णित इत्याशङ्क्याविवेकिनो देहव्यतिरिक्तात्मबोधार्थं विवेकिनस्तु व्यर्थ एवेति सदृष्टान्तमाह—**यथेति**। तत्राबुधैरित्यकारप्रश्लेषे मुधैव क्रियते अपितु नेति काकुव्याख्यानम्। अन्यत्सर्वं सुगमम् ॥ ६९ ॥

इदानीमविवेकिनः कल्पितदेहतादात्म्यं सदृष्टान्तमाह—**सर्पत्वेनेति** ॥ ७० ॥

घटत्वेनेति। स्पष्टम् ॥ ७१ ॥

कनकं कुण्डलत्वेन तरङ्गत्वेन वै जलम् ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥ ७२ ॥

पुरुषत्वे यथा स्थाणुर्जलत्वेन मरीचिका ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥ ७३ ॥

गृहत्वेनेव काष्ठानि खड्गत्वेनेव लोहता ।
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ॥ ७४ ॥

यथा वृक्षविपर्यासो जलाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७५ ॥

पोतेन गच्छतः पुंसः सर्वं भातीव चञ्चलम् ।
तद्वदात्मनि देवत्वं पश्यत्यज्ञानयोगतः ॥ ७६ ॥

पीतत्वं हि यथा शुभ्रे दोषाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७७ ॥

चक्षुर्भ्यां भ्रमशीलाभ्यां सर्वं भाति भ्रमात्मकम् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७८ ॥

अलातं भ्रमणेनैव वर्तुलं भाति सूर्यवत् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ७९ ॥

महत्त्वे सर्ववस्तूनामणुत्वं ह्यतिदूरतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८० ॥

---

**कनकमिति** ॥ ७२ ॥

**पुरुषत्व इति** ॥ ७३ ॥

**गृहत्वेनेति** । सर्पत्वेनेत्यादिपञ्चानामप्येतेषां श्लोकानामर्थः स्फुटतर एवास्त्यतो न व्याख्यानं कृतम् ॥ ७४ ॥

नन्वन्यथानिर्णये किं कारणमिति चेत्तदज्ञानमेवेति सदृष्टान्तमाह—**यथा वृक्षे**त्यादि-द्वादशभिः ॥ ७५ ॥

**पोतेनेति** । पोतेन नौकया । स्पष्टमन्यत् ॥ ७६ ॥

**पीतत्वमिति** ॥ ७७ ॥

**चक्षुर्भ्यामिति** ॥ ७८ ॥

**अलातमिति** ॥ ७९ ॥

**महत्त्व इति** हीति सर्वलोकप्रसिद्धौ ॥ ८० ॥

सूक्ष्मत्वे सर्वभावानां स्थूलत्वं चोपनेत्रतः ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८१ ॥
काचभूमौ जलत्वं वा जलभूमौ हि काचता ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८२ ॥
यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुमान् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८३ ॥
अभ्रेषु सत्सु धावत्सु सोमो धावति भाति वै ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८४ ॥
यथैव दिग्विपर्यासो मोहाद्भवति कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८५ ॥
यथा शशी जले भाति चञ्चलत्वेन कस्यचित् ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ ८६ ॥
एवमात्मन्यविद्यातो देहाध्यासो हि जायते ।
स एवात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ८७ ॥
सर्वमात्मतया ज्ञातं जगत्स्थावरजङ्गमम् ।
अभावात्सर्वभावानां देहस्य चात्मता कुतः ॥ ८८ ॥

---

**सूक्ष्मत्वे इति** ॥ ८१ ॥
**काचभूमाविति** ॥ ८२ ॥
**यद्वदिति** ॥ ८३ ॥
**अभ्रेष्विति** ॥ ८४ ॥

**यथेति** । यथा वृक्षेत्यादिश्लोकानां स्फुटार्थत्वात् पिष्टपेषणतुल्यत्वेन न व्याख्यानं कृतम् ॥ ८५ ॥

**यथा शशीति** । शशीत्युपलक्षणं सूर्यादीनामपि । शेषं स्पष्टम् ॥ ८६ ॥

एवं द्वादशभिः श्लोकैरुक्तमर्थमुपसंहरति—**एवमिति** । एवमुक्तेन प्रकारेणात्मन्यविद्यातः आत्माज्ञानात् देहाध्यासो मनुष्योऽहमित्यादिबुद्धिर्जायते भवति । हीति प्रसिद्धौ । नन्वेतस्य निवृत्तिः कुतो भवेदिति चेदात्मज्ञानादेवेत्याहोत्तरार्धेन—**स इति** । स एव देहाध्यास एवात्मपरिज्ञानात् ब्रह्मात्मैक्यसाक्षात्कारात्परात्मनि अज्ञानतत्कार्यरहिते प्रत्यगभिन्ने ब्रह्मणि लीयते ब्रह्मस्वरूपेणावतिष्ठते । नह्यधिष्ठानं विनाऽऽरोपितस्य स्वरूपमस्ति । चकारादध्यासकारणमज्ञानमपि लीयत इति । अन्यथाऽध्यासलयाभावादित्यर्थः । नहि कारणे सति कार्यस्य लयः सम्भवति । तस्मादात्मज्ञानादेव सकारणकार्याध्यासनिवृत्तिरित्यलं पल्लवितेन ॥ ८७ ॥

एतदेव विवृणोति—**सर्वमिति** । आत्मता देहस्य नेत्यर्थः । स्पष्टमन्यत् ॥ ८८ ॥

**आत्मानं सततं जानन्कालं नय महाद्युते ।**
**प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्तुमर्हसि ॥ ८९ ॥**
**उत्पन्नेऽप्यात्मविज्ञाने प्रारब्धं नैव मुञ्चति ।**
**इति यच्छ्रूयते शास्त्रे तन्निराक्रियतेऽधुना ॥ ९० ॥**
**तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ।**
**देहादीनामसत्यत्वाद्यथा स्वप्नो विबोधतः ॥ ९१ ॥**
**कर्म जन्मान्तरीयं यत्प्रारब्धमिति कीर्तितम् ।**
**तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ॥ ९२ ॥**
**स्वप्नदेहो यथाऽध्यस्तस्तथैवायं हि देहकः ।**
**अध्यस्तस्य कुतो जन्म जन्माभावे हि तत्कुतः ॥ ९३ ॥**
**उपादानं प्रपञ्चस्य मृद्भाण्डस्येव कथ्यते ।**
**अज्ञानं चैव वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ॥ ९४ ॥**

---

ननु ज्ञानिनो निष्प्रपञ्चात्मतया मम किं स्यात् ब्रह्मण्यभोजनेनान्यस्तृप्यतीति चेदत आह—**आत्मानमिति**। भो महाद्युते ! कामादिपराभवेन स्वहितसाधनोन्मुखस्त्वम् आत्मानं प्रत्यगभिन्नं सततम् आसुप्तिमृतिपर्यन्तं जानन् वेदान्तवाक्यैर्विचारयन् कालं नय अतिक्रामस्व। विचारसाध्यज्ञानानन्तरं चाखिलं प्रारब्धं चरमदेहारम्भकं कर्म भुञ्जन् सुखदुःखाभासानुभवेन क्षपयन् समुद्वेगं कर्तुं नार्हसीत्युपदेशः ॥ ८९ ॥

वस्तुतस्तु प्रारब्धमेव नास्ति कुतो भोगः, भोगाभावे कुत उद्वेगकारणम्, तदभावे च कुतस्तरां तन्निषेधोपदेश इति वेदान्तसिद्धान्तरहस्यं वक्तुं प्रतिजानत आचार्याः—**उत्पन्न इति**। अत्रेयं प्रक्रिया, जगत्प्रतीतिस्त्रिधा–शास्त्रीया, लौकिकी, आनुभाविकी चेति। तत्राद्या पारमार्थिकी, द्वितीयाऽपारमार्थिकी, तृतीया तु प्रातिभासिकी। तासां निवृत्तिस्तु क्रमात् वेदान्तश्रवणादित्रयसाक्षात्कारप्रारब्धक्षयैर्भवति नान्यथेति। तत्रेयं प्रतिज्ञाऽन्यप्रतीत्यभिप्रायेणेति ज्ञातव्यम्। श्लोकार्थस्तु स्फुट एव ॥९०॥

तदेवाह—**तत्त्वेति**। ज्ञानेन सर्वव्यवहारकारणाज्ञाननिवृत्तौ प्रारब्धाभाव इति श्लोकार्थः। पदार्थस्तु स्फुट एव ॥ ९१ ॥

इदानीं प्रारब्धशब्दं व्युत्पादयन्नुक्तमुपसंहरति—**कर्मेति**। तत्र कर्म त्रिविधम्—सञ्चितक्रियमाणप्रारब्धभेदात्। तन्मध्ये भाविदेहारम्भकं सञ्चितम्, तथा वर्तमानदेहनिर्वर्त्यं क्रियमाणम्। प्रारब्धं तु वर्तमानदेहारम्भकम्। तत्र यद्यपि सञ्चितं जन्मान्तरीयमेव तथापि भाविदेहस्य तत्प्रारब्धमेव भवति। तेनेदं सिद्धमात्मनः स्वतःकर्तृत्वाभावात्कालत्रयेऽपि जन्म नास्तीति सर्वमवदातम् ॥ ९२ ॥

पूर्वोक्तं दृष्टान्तं विवृण्वन्नकारणजन्माभावे युक्तिमाह—**स्वप्नेति**। जन्माभावे तत्प्रारब्धं कुतः। स्पष्टमन्यत् ॥ ९३ ॥

ननु देहादिप्रपञ्चस्य 'यतो वा०' इत्यादिश्रुतेः सत्यब्रह्मजन्यत्वात्कथं प्रातिभासिकत्वमिति चेदुच्यते—**उपादानमिति**। अत्र कारणं द्विविधम्—निमित्तोपादानभेदात्। तत्र निमित्तं नामोत्पत्ति-

**यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ।**
**तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ९५ ॥**
**रज्जुरूपे परिज्ञाते सर्पभ्रान्तिर्न तिष्ठति ।**
**अधिष्ठाने तथा ज्ञाते प्रपञ्चः शून्यतां व्रजेत् ॥ ९६ ॥**
**देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः ।**
**अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः ॥ ९७ ॥**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।**
**बहुत्वं तन्निषेधार्थं श्रुत्या गीतं च यत्स्फुटम् ॥ ९८ ॥**
**उच्यतेऽज्ञैर्बलाच्चैतत्तदाऽनर्थद्वयागमः ।**
**वेदान्तमतहानं च यतो ज्ञानमिति श्रुतिः ॥ ९९ ॥**

---

मात्रकारणम् । उपादानं तूत्पत्तिस्थितिलयकारणम् । तत्र वेदान्तैः—'मायां तु प्रकृतिं विद्यात्' इत्यादिभिः प्रपञ्चस्योपादानमज्ञानं पठ्यते, चकाराद्ब्रह्मापि । अत्रायं भावः—न केवलं ब्रह्मैव जगत्कारणम्, निर्विकारत्वात् । नापि केवलमज्ञानम्, जडत्वात् । तस्मादुभयं मिलित्वैव जगत्कारणं भवतीति । 'सत्यानृते मिथुनीकरोति' इत्यादिश्रुतेः । तत्र दृष्टान्तः—भाण्डस्य घटकरकादेर्मृदिव मृत्पिण्डं इव । जलस्थाने, आवरकत्वसाम्यात् । तत्र ब्रह्मणोऽविनाशित्वाद्ब्रह्मज्ञानेन तस्मिन्नज्ञान एव नष्टे सति विश्वता जीवजगदीश्वरात्मकजगद्भावः क्व, न क्वाप्यस्तीत्यर्थः ॥ ९४ ॥

मिथुनीभावस्यैव जगत्कारणत्वं सदृष्टान्तं प्रपञ्चयति—**यथा रज्जुमिति** ॥ ९५ ॥

इदानीं यदुक्तं 'तस्मिन्नष्टे क्व विश्वता' इति तत् प्रपञ्चयन् पूर्वोक्तं प्रारब्धाभावं सदृष्टान्तमुपसंहरति सार्द्धेन—**रज्जुरूप इति** स्पष्टम् ॥ ९६ ॥

किञ्च **देहस्येति** । जीवन्मुक्तस्य ज्ञानिनः प्रारब्धाभावे सति 'अत्र ब्रह्म समश्नुते' इत्यादिश्रुतिः प्रारब्धं किमर्थं वक्तीति चेदुच्यते अर्द्धेन—**अज्ञानीति** । श्रुतिः अज्ञानिजनबोधार्थं प्रारब्धं वक्तीत्यन्वयः । ज्ञानेन सर्वव्यवहारकारणेऽज्ञाने नष्टे सति ज्ञानिनः कथं व्यवहार इत्यज्ञानिभिराक्षिप्ते प्रारब्धादिति तद्बोधार्थमिति । शेषं स्पष्टम् ॥ ९७ ॥

किं तर्हि ज्ञानिबोधार्थं वक्ति श्रुतिरिति चेदुच्यते—**क्षीयन्त इति** । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥' इति श्रुत्या । कर्माणीति बहुत्वं यत् स्फुटं गीतं तत्तन्निषेधार्थं प्रारब्धाभावप्रतिपादनार्थम्, अन्यथा सञ्चितक्रियमाणापेक्षया कर्माणीति द्वित्वं गेयम् । तथा न गीतमतो ब्रह्मात्मसाक्षात्कारात् चिज्जडग्रन्थिभेदेन सञ्चितक्रियमाणप्रारब्धाख्यत्रिविधकर्मक्षयान्ते परमपुरुषार्थं ज्ञानिबोधार्थं श्रुतिर्वक्तीति भावः ॥ ९८ ॥

उक्तवैपरीत्ये बाधकमाह—**उच्यत इति** । एतत्प्रारब्धमज्ञैः श्रुतितात्पर्यानभिज्ञैर्बलादविवेकसामर्थ्याच्चोच्यते यथार्थतया प्रतिपाद्यते । चकारादद्वयात्मानं न पश्यन्ति । तदाऽनर्थद्वयागमो दोषद्वयप्राप्तिः । तत्र प्रारब्धरूपस्य द्वैतस्याङ्गीकारे अनिर्मोक्षप्रसङ्ग एको दोषः, मोक्षाभावे ज्ञानसम्प्रदायो-

**ततस्तद्वृत्तिनैश्चल्यं कुम्भकः प्राणसंयमः ।**
**अयं चापि प्रबुद्धानामज्ञानां प्राणपीडनम् ॥ १२० ॥**

**विषयेष्वात्मतां दृष्ट्वा मनसश्चिति मज्जनम् ।**
**प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥ १२१ ॥**

**यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।**
**मनसो धारणं चैव धारणा सा परा मता ॥ १२२ ॥**

**ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।**
**ध्यानशब्देन विख्याता परमानन्ददायिनी ॥ १२३ ॥**

**निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।**
**वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥ १२४ ॥**

---

**तत इति** । अनात्मोपेक्षाऽऽत्मानुसन्धानतद्दाढर्यानि रेचकादिशब्दवाच्यानीति भावार्थः । नन्वयं त्रिविधोऽपि प्राणायामो न कुत्रापि श्रुत इत्यपेक्षायामत्राधिकारिणमाहार्द्धेन—**अयमिति** । अयमुक्तलक्षणः प्राणायामः । चकाराद्वेदत्रययुक्त इत्यर्थः । प्रबुद्धानां प्रकर्षेणासम्भावनादिरहितत्वेन बुद्धानामात्मबोधयुक्तानाम् । निःसन्देहाऽपरोक्षज्ञानिनामित्यर्थः । योग्य इत्यध्याहारः । तर्ह्यज्ञानां कीदृश इत्यत आह—**अज्ञानामिति** ॥ १२० ॥

इदानीं प्रत्याहारं लक्षयति—**विषयेष्विति** । विषयेषु घटादिषु । यद्वा शब्दादिषु अन्वयव्यतिरेकाभ्यामात्मतां सत्तास्फुरत्ताप्रियतामात्रतां दृष्ट्वानुसन्धाय मनसोऽन्तःकरणस्य चितिमज्जनं नामरूपक्रियानुसन्धानराहित्येन चित्स्वरूपतयावस्थानं स प्रत्याहारः । ततः किमत आह—**अभ्यसनीय इति** ॥ १२१ ॥

धारणां लक्षयति—**यत्रेति** । यत्र यत्र यस्मिन् यस्मिन् पदार्थे मनो याति गच्छति तत्र तत्र ब्रह्मणः सत्तादिमात्रस्य नामाद्युपेक्षया दर्शनादनुसन्धानान्मनसो धारणं ब्रह्मण्येव स्थिरीकरणं धारणेत्यर्थः । नन्वाधारादिषट्चक्रमध्ये एकत्र मनसो धारणं 'धारणा' इति प्रसिद्धमत आह—**सेति** । साऽत्रोक्तलक्षणा धारणा परोत्कृष्टा मता । तत्त्वबोधवतामिति शेषः । अन्या तु पातञ्जलाभिमता प्राणायामादिवदपरेति भावः । च एवेत्यव्ययद्वयं वेदान्तविद्वदनुभवप्रसिद्धिं द्योतयति ॥१२२॥

अथात्मध्यानं लक्षयति—**ब्रह्मैवेति** । सद्वृत्त्या सती प्रमाणान्तरबाधायोग्या वृत्तिस्तया वृत्त्या निरालम्बतया देहाद्यनुसन्धानराहित्येन स्थितिः, अवस्थानमित्यर्थः । शेषं स्पष्टम् ॥ १२३ ॥

अथान्त्यं समाधिरूपं पञ्चदशमङ्गं लक्षयति—**निर्विकारतयेति** । निर्विकारतया विषयानुसन्धानरहिततयान्तःकरणवृत्त्या, पुनरनन्तरमेव ब्रह्माकारतया यत्सम्यक्प्रपञ्चसंस्काररहितं धातृध्येयाकारवृत्तिशून्यं वृत्तिविस्मरणं द्वैताननुसन्धानं स समाधिः पञ्चदशमङ्गमित्यर्थः । ननु वृत्तिविस्मरणस्याज्ञानरूपत्वात्कथं समाधित्वमित्याशङ्क्य ब्रह्मात्मैक्यबोधाभावे केवलवृत्तिविस्मरणस्य

इमं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् ।
वश्यो यावत्क्षणात्पुंसः प्रयुक्तः सम्भवेत्स्वयम् ॥ १२५ ॥

ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।
तत्स्वरूपं न चैतस्य विषयो मनसो गिराम् ॥ १२६ ॥

समाधौ क्रियमाणे तु विघ्ना आयान्ति वै बलात् ।
अनुसन्धानराहित्यमालस्यं भोगलालसम् ॥ १२७ ॥

लयस्तमश्च विक्षेपो रसास्वादश्च शून्यता ।
एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः ॥ १२८ ॥

भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ।
ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत् ॥ १२९ ॥

ये हि वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम् ।
ते तु वृथैव जीवन्ति पशुभिश्च समा नराः ॥ १३० ॥

---

तथात्वेऽपि न ब्रह्मज्ञानसहितस्य तथात्वमित्याशयेन समाधिं विशिनष्टि—**ज्ञानसंज्ञक इति**। ज्ञानमिति संज्ञा यस्य स ज्ञानसंज्ञकः। ब्रह्माकारतया स्फुरणरूप इत्यर्थः। उक्तं च—'समाधिः संविदुत्पत्तिः परजीवैकतां प्रति' इति ॥ १२४ ॥

इदानीं यदर्थं साङ्गमिदं निदिध्यासनमुक्तं तदाह—**इममिति**। अकृत्रिमानन्दं स्वरूपभूतानन्दाभिव्यञ्जकं निदिध्यासनमित्यर्थः। चकाराद्यथाबुद्धि वेदान्तविचारमपीति स्पष्टमन्यत् ॥१२५॥

एवमभ्यसतः फलमाह—**तत इति**। साधननिर्मुक्तः साधनाभ्यासरहित इत्यर्थः। एतस्य योगिनः तद्वेदान्तप्रसिद्धं स्वरूपं ब्रह्मैवेति भावः ॥ १२६ ॥

अखण्डैकरसब्रह्मस्वरूपत्वेनावस्थानलक्षणमोक्षफलदोऽयं समाधिपर्यन्तो योगो गुर्वनुग्रहवतां सुकरोऽस्ति तथापि सुकर इत्यनादरो न कार्यः, विघ्नबाहुल्यसम्भवादित्याह द्वाभ्यां—**समाधाविति**। स्पष्टोऽर्थः ॥ १२७ ॥

**लय इति**। तत्र लयो निद्रा। तमः कार्याकार्याऽविवेकः। विक्षेपो विषयस्फुरणम्। रसास्वादो धन्योऽहमित्याद्यानन्दाकारा वृत्तिः। च पुनः शून्यता चित्तदोषः, रागद्वेषादितीव्रवासनया चित्तस्य स्तब्धीभावः कषायः। क्षुब्धतेत्यर्थः। स्पष्टमन्यत् ॥ १२८ ॥

वृत्तिरेव बन्धमोक्षकारणमित्याह—**भावेति**। भाववृत्त्या घटाद्याकारवृत्त्या भावत्वं तन्मयत्वम्। भवतीति शेषः। शून्यवृत्त्या अभाववृत्त्या। शून्यता जडतेत्यर्थः। हीति लोकप्रसिद्धौ। तथा ब्रह्माकारवृत्त्या पूर्णत्वम्। हीति विद्वत्प्रसिद्धौ। ततः किमत आह—**पूर्णत्वमिति**। ॥ १२९ ॥

इदानीं ब्रह्ममयीं वृत्तिं स्तोतुं तद्वृत्तित्यागपरान्निन्दति—**ये हीति**। ये एनां ब्रह्माख्यां वृत्तिं जहति त्यजन्ति ते तु वृथैव जीवन्तीत्यन्वयः। स्पष्टमन्यत् ॥ १३० ॥

**ये हि वृत्तिं विजानन्ति ज्ञात्वापि वर्धयन्ति ये ।**
**ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥ १३१ ॥**

**येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ।**
**ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ १३२ ॥**

**कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ।**
**तेऽप्यज्ञानितया नूनं पुनरायान्ति यान्ति च ॥ १३३ ॥**

**निमेषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ।**
**यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ १३४ ॥**

**कार्ये कारणताऽऽयाता कारणे नहि कार्यता ।**
**कारणत्वं ततो गच्छेत्कार्याभावे विचारतः ॥ १३५ ॥**

**अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ।**
**द्रष्टव्यं मृद्घटेनैव दृष्टान्तेन पुनः पुनः ॥ १३६ ॥**

---

सम्प्रति तामेव वृत्तिं विवर्द्धयितुं ब्रह्मवृत्तिपरान्सत्पुरुषान् स्तौति—**ये हीति** । स्पष्टम् ॥१३१॥

एवं ब्रह्मवृत्तिपरान्स्तुत्वाऽधुना तेषां ब्रह्मप्राप्तिरूपं फलमाह—**येषामिति** । सुगमम् ॥ १३२ ॥

तानेव शब्दवादिनो निन्दति—**कुशला इति** । स्पष्टम् ॥ १३३ ॥

यत एवं तस्माद् ब्रह्मनिष्ठैर्ब्रह्मवृत्त्यैव सर्वदा स्थातव्यमिति सूचयितुं ब्रह्मादीनामुदाहरणमाह—**निमेषेति** । यथा ब्रह्माद्यास्तथा सनकाद्याः, यथा सनकाद्यास्तथा शुकाद्या इति सम्प्रदायो दर्शितः । एतेन ब्रह्मादिसेव्यत्वादतिश्रेष्ठोऽयं समाधिपर्यन्तो राजयोगः सर्वदा मुमुक्षुभिः सेवनीय इति ध्वनितम् ॥ १३४ ॥

तदेवं स्वाभिमतं साङ्गं राजयोगमभिधाय पूर्वोपक्रान्तसाङ्ख्यापरपर्यायं वेदान्तविचारमुपसंहरति—**कार्य** इत्यादिपञ्चभिः श्लोकैः । कार्ये घटपटादिरूपे विकारे कारणता मृत्तन्त्वादिरूपा सर्वविकाराधिष्ठानता आयाताऽनुगता, कारणे तु कार्यता नाहीति प्रसिद्धम् । ततः कारणात्कार्याभावे कारणत्वं गच्छेत् । ननु कथं कारणे कार्याभाव इत्यत आह—**विचार इति** । यथायं दृष्टान्तस्तथाकाशादिकार्ये कारणता । आकाशोऽस्तिभातीत्यादिव्यवहारहेतुभूता सत्यज्ञानादिरूपब्रह्मणः कारणता आयाता अनुगता, कारणे ब्रह्मणि तु आकाशादिकार्यता नहीति । परमार्थतः आकाशाद्यभावे ब्रह्मणः कारणतापि नहीति दार्ष्टान्तिकोऽर्थः ॥ १३५ ॥

ततः किमत आह—**अथेति** । अथानन्तरं कार्यकारणभावनिवृत्तौ यच्छुद्धं मनोवाचामगोचरं वस्तु तद्भवेत् । 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः । ननु वृद्धेः क्षणिकत्वेनैकदा तथा विचारितेऽपि पुनरन्यथैव भातीत्यत आह—**द्रष्टव्यमिति** ॥ १३६ ॥

**अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् ।**
**उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ १३७ ॥**

**कारणं व्यतिरेकेण पुमानादौ विलोकयेत् ।**
**अन्वयेन पुनस्तद्धि कार्ये नित्यं प्रपश्यति ॥ १३८ ॥**

**कार्ये हि कारणं पश्येत्पश्चात्कार्यं विसर्जयेत् ।**
**कारणत्वं ततो गच्छेदवशिष्टं भवेन्मुनिः ॥ १३९ ॥**

**भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मना ।**
**पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ १४० ॥**

**अदृश्यं भावरूपं च सर्वमेव चिदात्मकम् ।**
**सावधानतया नित्यं स्वात्मानं भावयेद्बुधः ॥ १४१ ॥**

---

न केवलमयं विचारो ज्ञानसाधनमेवापि तु ध्यानसाधनमपीत्याह—**अनेनेति** । अनेनैव प्रकारेण शुद्धचित्तानां वृत्तिज्ञानम् उदेति, ततः परं ब्रह्मात्मिका वृत्तिर्भवेदिति योजना । पदानामर्थस्तु स्फुट एव ॥ १३७ ॥

तमेव विचारं विशदयति द्वाभ्याम्—**कारणमिति** । आदौ प्रथमं कारणं व्यतिरेकेण कार्यविरहेण विचारयेत् । पुनस्तत्कारणमन्वयेनानुवृत्त्या कार्येऽपि नित्यं प्रपश्यतीति ॥ १३८ ॥

अथवैवं विचारयेदित्याह—**कार्येति** । आदौ कार्ये कारणमेव विचारयेत्, पश्चात्तत्कार्यं विसर्जयेत् नानुसन्दध्यात् । एवं कार्यवर्जने सति कारणत्वं स्वत गच्छेत् । एवं कार्यकारणवर्जनेऽवशिष्टं सच्चिन्मात्रं मुनिर्मननशीलः स्वयमेव भवेदिति ॥ १३९ ॥

ननु विचारजन्यापरोक्षज्ञानेन मुनेर्ब्रह्मत्वं भवतु नाम, परन्तु परोक्षज्ञानिनः कथं भवेदित्याशङ्क्य तीव्रभावनया परोक्षज्ञानिनोऽपि ब्रह्मत्वं भवेदिति सदृष्टान्तमाह—**भावितमिति** । अयं भावः—यद्यपि परोक्षज्ञानेन प्रमातृगतावरणनिवृत्तौ सत्यामपि प्रमेयगतमावरणं न निवर्त्तते तथापि निश्चयात्मना निश्चययुक्तबुद्धिमता पुरुषेण यद्वस्तु सच्चिदानन्दं ब्रह्म तीव्रवेगेनाहर्निशं ब्रह्माकारवृत्त्या भावितं चिन्तितं तद्वस्तु ज्ञेयमपरोक्षेण ज्ञातुं योग्यं ब्रह्म शीघ्रमचिरेण पुमान् भवेत् । प्रत्यगभिन्नब्रह्मभावनया पुरुषो ब्रह्मरूपो भवतीत्यर्थः । हीति विद्वत्प्रसिद्धौ । तत्र सर्वलोकप्रसिद्धं दृष्टान्तमाह—**भ्रमरकीटवदिति** । भ्रमरेण कुतश्चिदानीय जीवन्नेव स्वकुट्यां प्रवेशितो यः कीटः स यथा भयात् भ्रमरध्यानेन भ्रमर एव भवति तद्वदिति ॥ १४० ॥

यदि पूर्वश्लोकोक्तदृष्टान्ते भावनाबलादेवान्यस्यान्यत्वं भवेत् तर्हि ब्रह्मविवर्तत्वेन ब्रह्मरूपस्य विश्वस्य ब्रह्मभावनया तद्रूपता भवेदिति किमु वक्तव्यमित्याशयेन सर्वात्मभावनामाह—**अदृश्यमिति** । अदृश्यं परोक्षं भावरूपं प्रत्यक्षं च सर्वं विश्वम् । यद्वा अदृश्यं द्रष्टृरूपम्, भावरूपं दृश्यम् । चकाराद्दर्शनम् । एतत्सर्वं त्रिपुट्यात्मकं जगद्भ्रान्त्याऽऽत्मभिन्नत्वेन भासमानमपि चिदात्मकं निर्विशेषस्फुरणमात्र-

**दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।**
**विद्वान्नित्यसुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥ १४२ ॥**

**एभिरङ्गैः समायुक्तो राजयोग उदाहृतः ।**
**किञ्चित्पक्वकषायाणां हठयोगेन संयुतः ॥ १४३ ॥**

**परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः ।**
**गुरुदैवतभक्तानां सर्वेषां सुलभो जवात् ॥ १४४ ॥**

॥ इति श्रीमच्छङ्करभगवत्पादाचार्यविरचिताऽपरोक्षानुभूतिः समाप्ता ॥

---

स्वरूपं स्वात्मानमेव बुधः अद्वैतज्ञाननिष्ठः सावधानतया स्थिरवृत्त्या नित्यं भावयेत्, सकलमिदमहं च ब्रह्मैवेति सर्वदा पश्येदित्यर्थः ॥ १४१ ॥

एतदेव विवृणोति—**दृश्यमिति** । दृश्यं घटादिकमदृश्यतामधिष्ठानचिद्रूपतां नीत्वा । हीति विद्वत्प्रसिद्धौ । ब्रह्माकारेण कल्पितस्य परिच्छिन्नस्य नामरूपादेर्निवृत्तिपूर्वकं बृहदाकारेणापरिच्छिन्नरूपेण चिन्तयेदित्यर्थः । ततः किमत आह—**विद्वानिति** । चिद्रसपूर्णया चिदेव रसश्चिद्रसश्चिदानन्दस्तेन पूर्णया धिया नित्यसुखे अविनाशिसुखे विद्वांस्तिष्ठेदिति ॥ १४२ ॥

इदानीमुक्तं स्वाभिमतयोगमुपसंहरति—**एभिरिति** । किञ्चित्स्वल्पं पक्वाः दग्धाः कषाया रागादयो येषां तेषां हठयोगेन पातञ्जलोक्तेन प्रसिद्धेनाष्टाङ्गयोगेन संयुतोऽयं वेदान्तोक्तो योग इति । शेषं स्पष्टम् ॥ १४३ ॥

अयं राजयोग एव केषां योग्य इत्याकाङ्क्षायां सर्वग्रन्थार्थमुपसंहरन्नाह—**परिपक्वमिति** । येषां मनः परिपक्वम्, रागादिमलरहितमिति यावत् । तेषामित्यध्याहारः । तेषां जिताग्निषड्वर्गाणां पुरुषधुरन्धराणाम् । केवलः पातञ्जलाभिमतयोगनिरपेक्षः । अयं वेदान्ताभिहितो योगः सिद्धिदः प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्षणमुक्तिप्रदः । चकारोऽवधारणे । नान्येषामपरिपक्वमनसामित्यर्थः । ननु परिपक्वमनस्त्वमतिदुर्लभमित्याकाङ्क्षायामस्यापि साधनत्वादतोऽप्यन्तरङ्गसाधनमाह—**गुरुदैवतभक्तानामिति** । जवादतिशीघ्रमित्यर्थः । सर्वेषामिति पदेन वर्णाश्रमादिनिरपेक्षं मनुष्यमात्रं ग्रहीतव्यम्, अत एव गुरुदैवतभक्तेरन्तरङ्गत्वम् । तथा च श्रुतिः—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति । स्मृतयश्च—'तद्विद्धि प्रणिपातेन' । 'श्रद्धावाँल्लभते ज्ञानम्' इत्याद्याः । अयं भावः—परिपक्वमनसामपि दुःसाध्यानि साधनानि गुरुदैवतभक्तानां सुसाध्यानि भवन्तीति हेतोर्गुरुदैवतभजनमेव स्वधर्माविरोधेन सर्वैः कार्यमिति परमं मङ्गलम् ॥ १४४ ॥

॥ इति श्रीमद्विद्यारण्यस्वामिविरचितदीपिका समाप्ता ॥

श्रीशङ्करभगवत्पादाचार्यविरचितः

# आत्मबोधः

श्रीपद्मपादाचार्यविरचितवेदान्तसारटीकोपेतः

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचितः

# आत्मबोधः

**तमोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।**
**मुमुक्षूणामपेक्ष्योऽयं आत्मबोधो विधीयते ।। १ ।।**

**बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।**
**पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति ।। २ ।।**

**अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।**
**विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ।। ३ ।।**

---

**श्रीपद्मपादाचार्यविरचितवेदान्तसारटीकासहितः**

शतमखपूजितपादं शतपथमनसोप्यगोचराकारम् ।
विकसितजलरुहनेत्रं उमाच्छायाङ्कमाश्रये शम्भुम् ।।

तत्र भगवान् शङ्कराचार्यः उत्तमाधिकारिणां वेदान्तप्रस्थानत्रयं निर्माय तदवलोकनासमर्थानां मन्दबुद्धीनां अनुग्रहार्थं सर्ववेदान्तसिद्धान्तसङ्ग्रहधनमात्मबोधप्रकरणं दिदर्शयिषुः प्रतिजानीते— **तपोभिरिति**। कृच्छ्रचान्द्रयणनित्यनैमित्तिकाद्यनुष्ठानरूपैः तपोभिः क्षोणानि पापानि-रागाद्यन्तःकरणदोषाः येषाम् । "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयं" इति वचनात् । अत एव शान्तानां वीतरागिणां इहामुत्रार्थफलभोगरहितानां मुमुक्षूणां संसारग्रन्थिभेदने कृतप्रयत्नानां यथोक्तसाधनसम्पन्नानां अयमात्मबोधो विधीयते विधिमुखेन आवश्यकतया प्रतिपाद्यत इत्यर्थः ।। १ ।।

ननु तपोमन्त्रकर्मयोगाद्यनेकसाधनेषु सत्सु मोक्षं प्रति बोध एव किमिति प्राधान्येनोच्यते इत्यत्राह—**बोधोऽन्येति**। तपोमन्त्रकर्मयोगादिसाधनानि परम्परया क्रमेण ज्ञानद्वारा मोक्षं साधयन्ति। ज्ञानन्तु स्वजन्ममात्रादेव अज्ञानं निश्शेषं नाशयित्वा मुमुक्षुन् स्वाराज्येऽभिषेचयति । अतोऽन्यसाधनेभ्यो ज्ञानस्य प्रधान्यमुक्तम् । तदेव दृष्टान्तेन दृढयति--**पाकस्येति** । यथा लोके पचनक्रियायाः काष्ठजलभाण्डादिसाधनेषु सत्स्वपि वह्निं विना पाको न सिध्यति तद्वत् ज्ञानं विना मोक्षो न सिध्यतीत्यर्थः ।। २ ।।

ननु कर्मणां विचित्रशक्तित्वात्कर्मैव किञ्चिदज्ञानं नाशयिष्यति । किमात्मज्ञानेनेत्याशङ्क्य कर्माज्ञानयोर्विरोधाभावान्नेत्यमित्याह--**अविरोधितयेति** । अज्ञानरूपं कर्म अन्तःकरणमालिन्यरूपं

अविच्छिन्न इवाज्ञानात्तन्नाशस्येति केवलः ।
स्वयंप्रकाशते ह्यात्मा मेघापायेऽंशुमानिव ॥ ४ ॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥
संसारः स्वप्नतुल्यो हि रागद्वेषादिसङ्कुलः ।
स्वकाले सत्यवद्भाति प्रबोधे सत्यसन्भवेत् ॥ ६ ॥
तावत्सत्यं जगद्भाति शुक्तिका रजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ७ ॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधास्सर्वा हाटके कटकादिवत् ॥ ८ ॥

---

कामक्रोधादिकं नाशयितुं नोत्सहते । विद्या तु प्रकाशरूपत्वादज्ञानं नाशयितुं तमस्तेजःपुञ्ज इव क्षमत इत्यर्थः ॥ ३ ॥

ननु प्रतिशरीरं भिन्न एवात्मा उपलभ्यते कथमस्य कैवल्यमित्याशङ्क्याह—**अवच्छिन्न इवेति** । परिपूर्णस्याद्वितोयस्यात्मनः अज्ञानपरिकल्पितोच्चावचशरीराध्यासकृतपरिच्छिन्नत्वमविवेककृतमेव । न तु तत्त्वदृष्ट्या । विवेकेन तन्नाशादात्मा केवल एव प्रकाशते मेघावरणाभावे भानुरिवेत्यर्थः ॥ ४ ॥

नन्वात्मनः अभेदबुद्धिरयुक्ता, वृत्तिज्ञानेन भेदसिद्धेः इत्यात्राह—**अज्ञानकलुषमिति** । अज्ञानकार्यभूतैः अहमादिभिः कलुषीकृतं कर्तृत्वभोक्तृत्वाद्यभिमानिनं जीवं च ज्ञानं कर्तृ चिरकालाभ्यासवशादज्ञानहानिद्वारा तत्कार्यान्तःकरणादिकमशेषतो नाशयित्वा स्वयमपि नश्यति । आत्माज्ञानकार्यत्वाद्वृत्तेः तत्र प्रतिबिम्बितज्ञानं आत्मावभासरूपत्वादात्मन्येवैकीभवति । तदानीं आत्मा प्रकाशते । यथा कतकरेणुः अखिलं जलं निर्मलं कृत्वा स्वयमपि नश्यति तद्वदित्यर्थः ॥ ५ ॥

अपरोक्षतया अनुभूयमानस्य संसारस्य कथमत्यन्तासत्वं, प्रत्यक्षविरोधादित्याशङ्क्य स्वप्नदृष्टान्तेन तस्य मिथ्यात्वं साधयति—**संसारेति** । रागद्वेषादिभिः सङ्कुलायमानः संसारः स्वकाले स्वस्य कारणभूताज्ञाने स्थिते सति तावन्मिथ्याभूतोऽपि संसारः सत्य इव भाति । प्रबोधे सति वाक्यश्रवणादात्मज्ञानोत्पत्तौ असत्य एव भवति । तत्र दृष्टान्तः स्वप्नतुल्यः । यावन्निद्रा अनुभूयते तावन्मिथ्याभूतोऽपि स्वप्न सत्य इवाभाति । प्रबोधे निद्रानाशे मिथ्या भवति । तद्वदित्यर्थः ॥ ६ ॥

जगन्मिथ्यात्वमेव दृष्टान्तान्तरेण द्रढयति—**तावदिति** । यथा नीलपृष्ठत्रिकोणादिविशेषज्ञानं नोत्पद्यते यावत् तावद्रजतज्ञानं सत्यमिवानुभूयते । तथा सर्वाधिष्ठानभूतं सच्चिदानन्दाद्वयं ब्रह्म यावन्न ज्ञायते, साक्षी नानुभूयते तावज्जगदाकारेण परिणतः संसारः सत्य इव भ्रान्त्या दृश्यत इत्यर्थः ॥ ७ ॥

सर्वं दृश्यं प्रपञ्चजातं ब्रह्मण्येव मायया परिकल्पितमिति प्रतिपादयति—**सच्चिदात्मनीति** ।

यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशे केवलो भवेत् ॥ ९ ॥
नानोपाधिवशादेव जातिनामाश्रमादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ १० ॥
पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ ११ ॥
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १२ ॥
अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १३ ॥

---

सत्यज्ञानानन्दात्मनि नित्ये सर्वानुस्यूते विष्णौ व्यापके परब्रह्मणि सर्वा व्यक्तयो देवतिर्यङ्नरस्थावरजङ्गमादयः सर्वोपादानभूते परमेश्वरे हेम्नि कटकमुकुटादिवत्कल्पिता एव ब्रह्मणोऽभिन्ना इत्यर्थः ॥ ८ ॥

उक्तमर्थमाकाशदृष्टान्तेन द्रढयति—**यथाकाश इति** । हृषीकेशः = मनःप्रभृतिसर्वेन्द्रियप्रेरकः नियामको वा, विभुः = सर्वगतः परमेश्वरः स्वमायापरिकल्पितनानाविधोपाधिषु प्रतिबिम्बितः सन्नानेन भाति । तन्नाशे सति = ब्रह्मात्मैक्यज्ञाने सति तेषां मायापरिकल्पितदेहाद्युपाधीनां नाशे सति केवलः एक एव भाति । यथा एक एव आकाशो मठघटाद्युपाधिषु एकस्सन्नानेव भाति, उपाधिविलयादेकवद्भाति तद्वदित्यर्थः ॥ ९ ॥

ननु सर्वदेहेषु तत्तज्जात्यादिभिरनुविद्ध्यमानस्य कथं नित्यमुक्ततेत्यत्राह—**नानोपाधीति** । पूर्वोक्तनानोपाधिवशादेव आत्मनि जातिनामाश्रमादयः, आरोपिताः = मायया परिकल्पिताः । ननु सत्याः । यथा स्वभावतो माधुर्यं जलं कटुतिक्तमधुररक्तपीतादिद्रव्यवशात्तत्तद्रूपं भवति नतु स्वरूपेण तद्वदित्यर्थः ॥ १० ॥

आत्मनो विद्यात्मनोऽविद्यापरिकल्पितोपाधित्रयमध्ये स्थूलोपाधिमाह—**पञ्चीकृतेति** । पञ्चीकृतानां, भूतानां प्रत्येकं द्वेधाविभज्य तत्रैकमेकधर्मं पुनश्चतुर्धा विभज्य स्वांशं परित्यज्योत्तरेषु संयोजनं पञ्चीकरणम् । एवं पञ्चीकृतेभ्यः स्थूलपृथिव्यादिमहाभूतेभ्यः सम्भवो यस्य तत् । सम्भूतं प्रारब्धकर्मभिः सञ्चितं = रचितं स्थूलशरीरं सुखदुःखभोगानामायतनं = भोगस्थानं प्रत्यगात्मन इत्युच्यते ॥ ११ ॥

**पञ्चप्राण इति** । यस्यैव महाप्राणस्य प्राणादयः पञ्च वृत्तयः । ज्ञानेन्द्रियकर्मेन्द्रियाणि दश, मनः यस्य सङ्कल्पात्मिका अन्तःकरणवृत्तयः, बुद्धिशब्देन निश्चयान्तःकरणवृत्तिः । अपञ्चीकृतसूक्ष्मवृत्तिव्याप्तमहाभूतेभ्यः इत्थं जातं सूक्ष्माङ्गं लिङ्गशरीरं सुखदुःखभोगसाधनमुच्यत इत्यर्थः ॥ १२ ॥

कार्योपाधिमुक्त्वा कारणोपाधिमाह—**अनादीति** । सदसद्भ्यामनिर्वचनीयाऽविद्याऽनादिः-

**पञ्चकोशादियोगेन तत्तन्मय इव स्थितः।**
**शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा॥ १४॥**
**वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यवघाततः।**
**आत्मानमान्तरं शुद्धं विविञ्च्याचण्डुलं यथा॥ १५॥**
**सदा सर्वगतोप्यात्मा न सर्वत्रावभासते।**
**बुद्धावेवाभासेत स्वच्छेषु प्रतिबिम्बवत्॥ १६॥**
**देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम्।**
**तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा॥ १७॥**

---

कारणोपाधिभूता। स्थूलसूक्ष्मप्रपञ्चयोः कारणभूतत्वात्। अनृतजडदुःखविलक्षणत्वेन सच्चिदानन्दादिरूपेण अञ्चति प्रकाशत इति प्रत्यक्कारणोपाधिरुच्यते। उपाधिवर्णने प्रयोजनमाह—**उपाधित्रितयादन्यमिति**। तत्साक्षिणमात्मानं अवधारयेत् जानीयादित्यर्थः॥ १३॥

ननु अन्नमयादिकोशेषु तत्तन्मयतया स्थितस्य कुतो नित्यमुक्तत्वमुच्यते इत्याशङ्क्याह—**पञ्चकोश इति**। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्चकोशाः। आदिशब्देनाशनादीनां ग्रहणम्। एतयोर्योगेन मिथ्यातादात्म्येन तत्तन्मय इव स्थितः। आत्मा शुद्धः। ननु तेषु वस्तुतो रञ्जनाखेदोऽपि, "स वा एष पुरुषोऽन्नरसमयः" इति सूक्ष्मवस्तुदर्शनार्थमुपाधिस्थ ब्रह्म सूचयति। ननु तत्वदृष्ट्या, यथानीलः स्फटिकः नीलपीतादिवस्त्रयोगेन तत्तन्मय इव भाति वस्तुतो नास्ति रञ्जना तद्वदित्यर्थः॥ १४॥

आत्मस्वरूपज्ञाने विवेचनप्रकारमाह—**वपुरिति**। पञ्चकोशैस्तावदात्मानं मिथ्यातादात्म्येन स्थितं, वपुः=स्थूलशरीरं, तुषादिभिर्युक्तं तण्डुलमिव, युक्त्यवघाततः=अवहननाच्छुद्धमात्मानं तण्डुलमिव, विविच्यात् विवेकेन जानीयात्। कथं, स्थूलदेहो नात्मा, कार्यभूतत्वात्, घटवत्। सूक्ष्मदेहोऽपि तथैवानात्मा, देहत्वात् स्थूलदेहवदित्यनुमानादिना तेभ्यस्तेभ्यो भिन्नमात्मनं विविच्य जानीयादित्यर्थः॥ १५॥

ननु सर्वगतस्तर्हि किं सर्वत्र न दृश्यत इत्यत्राह—**सदेति**। आत्मा सदा सर्वगतोऽपि सर्वत्र व्याप्य स्थितोपि जडैः बहिः प्रवृत्ताक्षैः न प्रकाश्यते! रागादिभिः अविद्यायां बुद्धावेवावभासते। न सर्वत्र यथा प्रतिबिम्बः स्वच्छेषु दर्पणादिष्वेव दृश्यते नान्यत्र, तद्वदित्यर्थः॥ १६॥

देहे स्थितस्याप्यात्मनः औदासीन्यं राजपुरुषदृष्टान्तेनाह—**देहेन्द्रियेति**। देहेन्द्रियमनोबुद्धिप्रकृतिभ्यः जडपरिणामदृश्येभ्यः। विलक्षणं=शुद्धं, आत्मानं, तद्वृत्तीनां=साक्षितया स्थितं, यथा राजा स्वनगरेषु स्थितः मन्त्रिषु वर्तमानेषु सत्सु स्वयंसाक्षितया तान्पश्यन् तिष्ठति तद्वदेव जानीयादित्यर्थः॥ १७॥

**व्यापृत्तेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ।**
**दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १८ ॥**

**आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।**
**स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥ १९ ॥**

**देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि ।**
**अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥ २० ॥**

**अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।**
**कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाऽम्भसः ॥ २१ ॥**

**रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ।**
**सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २२ ॥**

---

नन्वात्मनोऽविकारित्वं अयुक्तं यतः सर्वदा व्यापारवान्दृश्यते इत्यत्राह—**व्यापृतेष्विति** । इन्द्रियादिषु व्यापृत्तेषु आत्मा व्यापारीवाविवेकिनां गुरुशास्त्रादिरहितानां दृश्यते । नतु तत्वदृशाम् । यथा मेघेषु वायुवशाद्धावत्सु चन्द्रोऽपि धावन्निव लौकिकैः दृश्यते । नतु चन्द्रमा धावति । तद्वदात्मापीत्यर्थं ॥ १८ ॥

ननु देहेन्द्रियमनोबुद्धयोऽपि आत्मवत्किमर्थं सचेतना दृश्यन्त इत्यत्राह—**आत्मचैतन्यमिति** । सत्यज्ञानानन्दरूपस्यात्मनः चैतन्यमाश्रित्य देहेन्द्रियमनोबुद्ध्यादयः स्वकीयार्थेषु स्वस्वविषयेषु वर्तन्ते । यथा जनाः प्राणिनः । सूर्यालोकं = सूर्यप्रकाशमाश्रित्य व्यापारेषु व्यवहरन्ति । स्वतः चैतन्यमात्मन एव, देहेन्द्रियादयस्तु जडा एव इत्यर्थः ॥ १९ ॥

ननु अहं जातोऽस्मि, बाल्यकौमारयौवनाद्यवस्थामनुभवामि, पश्यामीत्यादिना अनवरतमनुभूयमानस्यात्मनः कथं अविकारित्वमुच्यत इत्यत्राह—**देहेन्द्रियेति** । देहेन्द्रियमनोबुद्धिधर्मान् गुणांश्च सत्त्वादीन्कर्माणि च कर्मेन्द्रियव्यापारान् मिथ्यातादात्म्येन स्थिते निर्मलेऽसङ्गरूपे सच्चिदानन्दात्मके परमात्मनि अत्यन्तसामीप्यादविवेकतोऽध्यस्यन्ते । यथा गगने नीलादिवत् अतस्ते आत्मधर्मा न भवन्ति । अपितु देहादीनामेवेत्यर्थः ॥ २० ॥

ननु कर्तृभोक्तृत्वादिकमात्मन्यनवरतमनुभूयमानत्वात्तत्र दुर्वारमित्याशङ्क्य तदापि तथैव मिथ्येत्याह—**अज्ञानादिति** । अज्ञानवशान्मानसोपाधिः यस्य तस्यैव कर्तृत्वादयो धर्माः । ते तु अज्ञानवशादेव आत्मनि कल्प्यन्ते । यथा अम्भसः चलनादिकं अम्बुनि प्रतिफलिते चन्द्रेऽविवेकतः कल्प्यते तद्वदात्मनीत्यर्थः ॥ २१ ॥

इच्छाद्वेषसुखदुःखादीनात्मधर्मान् मन्यन्ते वैशेषिकादयः । तान्निराकरोति—**रागेच्छेति** । रागेच्छादि सुखदुःखप्रयत्नादिकं सर्वं बुद्धेरेव न त्वात्मनः । कथं ? जाग्रत्स्वप्नयोः बुद्धौ सत्यां प्रवर्तते । सुषुप्तौ तस्या बुद्धेर्नाशे कारणे लीने तन्न प्रवर्तते । यस्माद्बुद्धेरेव धर्माः न त्वात्मनः इति ॥ २२ ॥

**प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।**
**स्वभावस्सच्चिदानन्दनित्यनिर्मलतात्मनः ॥ २३ ॥**

**आत्मनस्सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् ।**
**संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २४ ॥**

**आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्वपि ।**
**जीवत्सर्वमलं ज्ञात्वा ज्ञाता द्रष्टेति मुह्यति ॥ २५ ॥**

**रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् ।**
**नाहं जीवः परात्मेति ज्ञातश्चेन्निर्भयो भवेत् ॥ २६ ॥**

**आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि ।**
**दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥ २७ ॥**

**स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः ।**
**न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ २८ ॥**

---

तस्यात्मनः कीदृक् स्वभावः इत्याशङ्क्यात्मस्वभावमुपदिशति—**प्रकाश इति** । यथा प्रकाश एव अर्कस्य स्वभावः । तोयस्य शैत्यं, अग्नेरुष्णता तथा आत्मनोऽपि सच्चिदानन्दनित्यनिर्मलता स्वभावः = स्वरूपमित्यर्थः ॥ २३ ॥

यद्यविकारोऽयमात्मा जानामीति प्रत्ययः कथमित्यपेक्षायामाह—**आत्मन इति** । प्रत्यगात्मनः सच्चिदंशः अंश इवांशः आत्माभासः । बुद्धेः वृत्तिश्च एतद्द्वयं अविवेकेन संयोज्य असङ्गस्यात्मनः संयोज्य, असङ्गस्यात्मनः केनापि संयोगो नास्त्येव तथापि अज्ञानवशान्मेलनं सम्भाव्य जानामीति प्रत्ययः साभासाहङ्कारवृत्तिः प्रवर्तते । प्रत्यगात्मनि किञ्चिद्विकारो नास्तीति भावः ॥ २४ ॥

एतदेव स्पष्टयति—**आत्मन इति** । आत्मा स्वभावादेव विकारशून्यः । बुद्धेः कदाचिदपि बोधशङ्कैव नास्ति, आत्मन्यपि विक्रिया नास्ति, तथापि जीवः साभासाहङ्कारः साभासान्तःकरणवृत्तीनामेकत्र तप्तायःपिण्डवत्सङ्गतमेव, अलमत्यर्थं देहेन्द्रियादिकमहमिति ज्ञात्वाऽविचार्य अहं ज्ञाता द्रष्टा भोक्ता कर्ता जातो मृत इति, मुह्यति = भ्रमत इत्यर्थः ॥ २५ ॥

आत्मा स्वयमेव स्वप्ने वा अविवेकेनान्यधर्मानारोप्य बिभेतीत्याह—**रज्जुसर्पवदिति** । रज्जौ सर्पारोपणं कृत्वा भयकम्पनादिकं वहेत् । एवं आत्मानं जीवं मत्वा बहुदुःखसंसारमग्नो भवति । यदा शास्त्राचार्योपदेशवशात् विवेकचक्षुषा स्वमात्मानमखण्डैकरूपं जानाति तदा भयरहितः सुखी भवेत् । २६ ॥

**आत्मेति** । आत्मा केवलमेक एव सन्नपि बुद्ध्यादीनि अवभासयति, तैस्तु नावभास्यते । यथा एक एव दीपः घटादिकं तद्वदित्यर्थः ॥ २७ ॥

आत्मा बुद्ध्यहङ्कारादीनपेक्षते स्वप्रकाशने इति स्वीकर्तव्यमित्याशङ्क्याह—**स्वबोधेति** ।

निषिध्य सकलोपाधीन्नेति नेतीति वाक्यतः ।
विन्द्यादैक्यं महावाक्ये जीवात्मपरमात्मनोः ॥ २९ ॥
आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम् ।
एतद्विलक्षणं विन्द्यादहं ब्रह्मेति निर्मलम् ॥ ३० ॥
देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः ।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥ ३१ ॥
अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाश्शुभ्र इत्यादिश्रुतिशासनात् ॥ ३२ ॥
निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३३ ॥

---

आत्मनो बोधरूपत्वात् स्वबोधे नित्ये सति तस्यात्मनो बोधाय ज्ञानान्तरापेक्षा नास्त्येव । अनुभवरूपत्वात् । यथा दीपस्य स्वप्रकाशने दीपान्तरापेक्षा नास्त्येव तद्वदित्यर्थः ॥ २८ ॥

यदि बुध्यादिभिः आत्मा ज्ञेयो न भवेत्तर्हि आत्मज्ञाने उपायान्तरं वक्तव्यम् । स उपाय कथमित्यत आह—**निषिध्येति** । अथात आदेशो नेति नेतीत्यतन्निरसनवेदान्तवाक्येन तत्त्वंपदार्थगतसर्वज्ञत्वकिञ्चिज्ज्ञत्वाखिलोपाधीन्निषिध्य-अनात्मत्वेन ज्ञात्वा निरस्य 'तत्वमसि' 'अयमात्मा ब्रह्म' 'अहं ब्रह्मास्मि' इत्यादिवाक्यैः लक्षणया ब्रह्मात्मैक्यज्ञानं विद्यात् प्राप्नुयात् । अनेन प्रकारेण ज्ञातव्यमित्यर्थः ॥ २९ ॥

आत्मस्वरूपज्ञाने अतन्निरसनाभावे का क्षतिरित्याशङ्क्य अतन्निरसनाभावे आत्मा ज्ञातुमशक्यः । यथायं सर्प इत्यारोपितस्य सर्पस्यापाकरणाभावे रज्जुज्ञानं नोत्पद्यते तद्वदनात्मनिरसनेनात्मा ज्ञातव्य इत्याशयेनाह—**आविद्यकमिति** । देहेन्द्रियादि सर्वं दृश्यजातं, आविद्यकं, दृश्यत्वाद्-बुद्बुदवत्, क्षरं, एतद्विलक्षणं निर्मलं निरुपाधिकं नित्यमेकं सच्चिदानन्दात्मकं ब्रह्मैवाहमस्मीति विन्द्यात्, ततः कृतकृत्यो भवतीत्यर्थः ॥ ३० ॥

एवमुक्तरीत्याऽऽत्मानमद्वयानन्दं वाक्यार्थज्ञानेनापरोक्षतया ज्ञात्वा स्वानुभवावष्टम्भेन आत्मन्येवात्मनो मननप्रकारमाह—पञ्चभिः श्लोकैः । **देहान्यत्वादिति** । देहान्यत्वात् दृश्यादिस्वाभावस्थूलशरीराद्यन्यत्वाज्जन्मजराकार्श्यलयादयो न सन्ति इन्द्रियादिभिः असङ्गतत्वात् शब्दादिविषयभोगैः सङ्गः=अनुभवः, नास्त्येव, अनुभवत्वात् न मे दुःखरागद्वेषादयः । "अप्राणो ह्यमनाश्शुभ्र" इत्यादिश्रुतेः ॥ ३१ ॥

कथमिन्द्रियप्राणमनसामभावस्तस्यैवेत्याशङ्क्य श्रुतिं प्रमाणयति । अत्र श्रुतिः—**अप्राणो ह्यमनाश्शुभ्रो** ह्यक्षरात्परतः परः । एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । अप्राणो ह्यमना इति स्वार्थः ॥ ३२ ॥

गुरोः प्रसादात्स्वानुभवसिद्धमर्थं चाभिनन्दयति निर्गुण इत्यादिभिः त्रिभिः श्लोकैः । अहं निर्गुणः बुद्ध्याद्यभावात् । निष्क्रियः=इन्द्रियाद्यभावात् । नित्यः, अविद्याकार्यरहितत्वात् ॥ ३३ ॥

**अहमाकाशवत्सर्वं बहिरन्तर्गतोऽच्युतः ।**
**सदा सर्वसमश्शुद्धो निस्सङ्गो निर्मलोऽचलः ॥ ३४ ॥**
**एवं निरन्तरकृता ब्रह्मैवास्मीति वासना ।**
**हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३५ ॥**
**नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।**
**सत्यं ज्ञानमनन्तं यत् परब्रह्माहमेव तत् ॥ ३६ ॥**
**विविक्तदेश आसीनो विरागो विजितेन्द्रियः ।**
**भावयेदेकमात्मानं तमनन्तमनन्यधीः ॥ ३७ ॥**
**आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः ।**
**भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३८ ॥**
**रूपवर्णादिकं सर्वं विहाय परमार्थवित् ।**
**परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ ३९ ॥**
**ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।**
**चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव तत् ॥ ४० ॥**

---

पूर्वोक्तहेतुभिः अवशिष्टं स्वरूपं अज्ञासिषमित्युक्ते तत्किमवशिष्टमित्याशङ्क्याह—**अहमिति**। आकाशवत्सर्वस्य दृश्यजातस्य बहिरन्तर्गतः अच्युतः = च्युतिरहितः सदा सर्वसमः = विषमेऽपि समं व्याप्य स्थितः तथापि शुद्धः निर्लेपः अचलः पूर्णस्य चलनाभावात् ॥ ३४ ॥

पूर्वोक्तश्लोकमननं चिरकालाभ्यस्तं तत् पुरुषार्थं साधयतीत्याह—**एवमिति**। एवमुक्तं ब्रह्मैवाहमस्मीति नैरन्तर्येण चिरकालाभ्यस्तवासना अविद्याकृतचित्तविक्षेपान् निश्शेषतो नाशयति। यथा रसायनं औषधं चिरकालसेवितं सत् रोगान्निश्शेषतो नाशयति तद्वदित्यर्थः ॥ ३५ ॥

**नित्य इति**। सत्यादिश्रुत्या यत्प्रतिपाद्यते तत् ब्रह्मैवाहमस्मीति स्वरूपतत्त्वं कथितम् ॥ ३६ ॥

ब्रह्मानुसन्धाने साधननियमानाह—**विविक्त इति**। ब्रह्मण्येव स्थिता बुद्धिः यस्य तादृशो भवेत्। दृश्यप्रपञ्चे जाग्रति कथमेकत्वभावना सम्भवतीत्यत आह ॥ ३७ ॥

**आत्मनीति**। अखिलं दृश्यजातं सुधीः = शुद्धान्तःकरणः सन् शुद्धया धिया आत्मन्येव समाधिसमये प्रविलाप्य प्रकर्षेण नाशयित्वा तदा द्वितीयाभावादेकमात्मानं सज्योत्स्नाकाशवद्भावयेत् ॥ ३८ ॥

परमात्मदर्शी मुनिः नामरूपवर्णादिकं सर्वं विहाय परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते इत्याह—**रूपे इति**। रूपवर्णादिकमिति स्पष्टोऽर्थः ॥ ३९ ॥

ननु प्रमातृत्वादित्रिपुटीज्ञानं वर्तमानमुपलभ्यते। कथमेकत्वभावनेत्याशङ्क्य परमात्मनि भेदो नास्तीत्याह—**ज्ञात्रिति**। ज्ञातृज्ञानज्ञेयभेदः परमात्मनि न विद्यते भेदः कल्पितात्मन्येव अवभाति ज्ञानानन्दैकरूपत्वादात्मा स्वयमेव दीप्यते = प्रकाशते ॥ ४० ॥

**एवमात्माऽरणौ ध्यानमथने सततं कृते ।**
**उदिताऽवगतिज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ ४१ ॥**
**अरुणेनेव बोधेन पूर्वसन्तमसे हृते ।**
**तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४२ ॥**
**आत्मा तु सततं प्राप्तो ह्यप्राप्तवदविद्यया ।**
**तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४३ ॥**
**स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।**
**जीवस्य तात्त्विके रूपे सम्यक् दृष्टे निवर्तते ॥ ४४ ॥**
**तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।**
**अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥ ४५ ॥**
**सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम् ।**
**एकं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥ ४६ ॥**

---

एवं विशुद्धवस्तुज्ञानात्प्रत्यक्षफलमाह—**एवमिति** । आत्मा अन्तःकरणमेव अरणिः तस्मिन् मन एव उत्तरारणिः ध्यानेन तयोर्मथने सर्वदा कृते तत्रोदिता ज्वालारूपावगतिः ज्ञानं विद्या अज्ञानमेव इन्धनं मूलाज्ञानं निश्शेषतः सपरिकरं दहति = नाशयति । तितिक्षुः मुमुक्षुः स्वाराज्येऽभिषिक्तः कृतकृत्यो भवतीत्यर्थः ॥ ४१ ॥

जीवपरयोरत्यन्तैक्यज्ञानेन अविद्यापरिकल्पितान्धतमसि निश्शेषमपयाते सति परमात्मा स्वयमाविर्भवतीत्याह—**अरुणेति** । अरुणेन प्रकाशेनादौ अन्धकारक्षये अंशुमान् यथा अविर्भवेत् तद्वदात्माऽपीत्यर्थः ॥ ४२ ॥

आत्मा सर्वदा परोक्षस्वभावत्वादप्राप्त एव कदा प्राप्तो भवेदित्याह—**आत्मेति** । आत्मा सर्वत्र परिपूर्णः अद्वयानन्दस्वरूपः सर्वदा प्राप्त एव । अविद्यावशाद्भ्रान्त्या अप्राप्त इव भाति । तन्नाशे तदावरणाविद्यानाशे वाक्यश्रवणात्प्राप्त इव कण्ठगतचामीकरन्यायेन तद्विदित्यर्थः ॥ ४३ ॥

ननु जीवस्य परमात्मैक्यमयुक्तमित्याशङ्क्याह—**स्थाणाविति**। यथाऽन्धकारे स्थिते स्थाण्वादौ पुरुषोऽयमित्याशङ्क्या बिभेति तथैवाविवेकाद्ब्रह्मणि जीवत्वमारोप्य । यदा तत्त्वमस्यादिवाक्योपजनितविवेकदृष्ट्या तस्य जीवस्य तात्त्विके रूपे सम्यक्दृष्टे सति कल्पितत्वाज्जीवत्वमपि निवर्तते तदैव ब्रह्मैवाहमिति जानीयादित्यर्थः ॥ ४४ ॥

अहंममेति प्रत्यये जाग्रति कथमैक्यज्ञानमित्याशङ्क्याह—**तत्त्वस्वरूपेति** । जीवपरयोः नैरन्तर्याभासेनैकत्वानुभवादुत्पन्नं यद्ज्ञानं तदहं ममेति अज्ञानं बाधते दिग्भ्रमादिवत् । अनुभवदर्शनादित्यर्थः ॥ ४५ ॥

अहं ममेति प्रत्यये नष्टे योगी विज्ञानेन चक्षुषा सर्वं दृश्यजातं स्वात्मन्येवाभेदेन पश्यतीत्याह—**सम्यगिति** । सम्यग्विज्ञानवान्योगी अधिष्ठानभूते स्वात्मनि अखिलं विश्वं स्थितं पश्यति

आत्मैवेदं जगत्सर्वं आत्मनोऽन्यन्न किञ्चन ।
मृदो यथा घटादीनि स्वात्मानं सर्वमीक्षते ॥ ४७ ॥
जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत् ।
स सच्चिदादिधर्मत्वं भेजे भ्रमरकीटवत् ॥ ४८ ॥
तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् ।
योगी शान्तिसमायुक्त आत्मारामो विराजते ॥ ४९ ॥
बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः ।
घटस्थदीपवच्छश्वदन्तरेव प्रकाशते ॥ ५० ॥
उपाधिस्थोऽपि तद्धर्मैर्न लिप्तो व्योमवन्मुनिः ।
सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५१ ॥

---

विज्ञानेन चक्षुषा मृत्सुवर्णादिवत् । यद्वा आत्मत्वाच्च प्रमातृत्वात्सर्वभूतेषु मशकादिष्वपि नियन्तृत्वेन वर्तमानं निरतिशयैश्वर्यं पश्यति नतु तारतम्येन, किञ्च मलिनभूतेत्वपि निरतिशयेन जात्याद्यप्रसक्त्या ऐश्वर्यादि पश्यति परिपूर्णत्वात् । तदा कृतकृत्यो भवतीत्यर्थः ॥ ४६ ॥

नन्वात्मा सर्वं न भवति । प्रत्यक्षविरोधात् । नानात्वेन दृश्यमानमिदं कथमात्मन्यभेदेन पश्यतीत्यत आह—**आत्मैवेति** । इदं सर्वजगदात्मैव आत्मकार्यत्वात् । अतोऽन्यदात्मनः किञ्चिन्न विद्यते। यथा घटशरीरादि मृदन्यन्न भवति। अतः आत्मन्येव सर्वं दृश्यजातं न भेदेनेक्षते पश्यतीत्यर्थः। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "सर्वखल्विदं ब्रह्मे"ति श्रुतेः ॥ ४७ ॥

एवंभूतश्चेज्जीवन्मुक्तो भवति—**जीवन्निति** । अनाद्यविद्यापरिकल्पितस्थूलशरीराद्युपाधि-गुणान्परित्यजन्नयमेव जीवन्मुक्त इत्युच्यते । सच्चिदानन्दादिधर्मत्वात् । भ्रमरकीटवत्साक्षाद्ब्रह्म भेजे प्राप्नोतीत्यर्थः । ततः स्वात्मारामः सुखं तिष्ठतीत्याह—**तीर्त्वेति** । मोह एव अर्णवः अपर्यन्तत्वात्, तं ज्ञानप्लवेनैव तीर्त्वा, रागद्वेषादय एव राक्षसाः मोक्षपरिपन्थिनः । तान्निश्शेषतो नाशयित्वा, शान्तिसमायुक्तः=शमदमादिसमेतः । आत्मारामः आत्मन्येव क्रीडा यस्य सः । विराजते=स्वाराज्येऽभिषिक्तः प्रकाशत इत्यर्थः ॥ ४९ ॥

जीवन्मुक्तस्य लक्षणमाह—**बाह्येति** । बाह्येन्द्रियोद्भवां अनित्यसुखाक्तिं=वासनां हित्वा, तत्र हेतुः आत्मसुखनिर्वृत इति । घटस्थदीपवदन्तरेव स्वसाक्षितया आत्मानुभव इतरैर्न ज्ञायत इत्यर्थः ॥ ५० ॥

एवमुक्तप्रकारेण जीवन्मुक्तेन प्रारब्धसंक्षयपर्यन्तं वर्तितव्यमित्याह—**उपाधिरिति** । देहाद्युपाधिसाक्षित्वेन स्थितोऽपि मुनिः व्योमवत्तद्धर्मैः नानुलिप्तः कर्मलेपो नास्त्येव । सर्वज्ञोऽपि प्राकृतवत्तिष्ठेत् । सर्वत्र विषयेषु यदृच्छया प्राप्तेष्वपि आसक्तिरहितसन्वायुवच्चरेत् ॥ ५१ ॥

**उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।**
**जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ॥ ५२ ॥**

**यल्लाभान्न परो लाभो यत्सुखान्न परं सुखम् ।**
**यज्ज्ञानान्न परं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५३ ॥**

**यद् दृष्ट्वा न परं दृश्यं यद्भूता न पुनर्भवः ।**
**यज्ज्ञात्वा परं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥**

**तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम् ।**
**अनन्तं नित्यमेकं यत् तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥**

**अतद्व्यावृत्तिभेदैस्तु वेदान्तैर्लक्ष्यतेऽव्ययम् ।**
**अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥**

**अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः ।**
**ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः ॥ ५७ ॥**

---

प्रारब्धक्षये सति देहद्वयोपाधौ विलीनेऽपि देहात्कैवल्यमाह—**उपाधिविलयादिति** । उपाधिभूतदेहद्वयलये प्रारब्धकर्मसंक्षये मुनिः = योगी सन् । विष्णौ = सर्वव्यापके परब्रह्मणि निर्विशेषं यथा भवति तथा विशेत् । दृष्टान्तः—**जले जलमित्यादि** ॥ ५२ ॥

ब्रह्म सर्वातिशयत्वात्तटस्थलक्षणेनाभिन्नमिति श्लोकत्रयेणाह—**यल्लाभादिति** । यल्लाभात् = ब्रह्मसाक्षात्कारलाभादपरो लाभो न विद्यते, सर्वलाभानामत्रैवान्तर्भूतत्वात् । ब्रह्मानन्देषु क्षुद्रानन्दानां अन्तर्धानम् । यत्सुखात् = ब्रह्मानुभवसुखादपरं सुखं नास्ति । निरतिशयसुखत्वात् । यज्ज्ञानात् = ब्रह्मसाक्षात्कारज्ञानादपरं ज्ञानं नास्ति । मोक्षहेतुत्वात् । तद्ब्रह्मेत्यवधारयेत् = जानीयादित्यर्थः ॥ ५३ ॥

**यद्दृष्ट्वेति**। यद्ब्रह्म दृष्ट्वा पुनरन्यद्दृश्यं नास्ति तत्रैव पुरुषार्थस्य सिद्धत्वात्। **यज्ज्ञात्वा = येन पर**मात्मनाऽप्यैक्यं ज्ञात्वा, न पुनर्भवः जन्मादिकं नास्ति । यज्ज्ञात्वा = यत्स्वरूपं ज्ञात्वाऽन्यत् ज्ञेयं नास्ति तद्ब्रह्मेत्यवधारयेत् । अन्यत्सर्वं वृथापाण्डित्यमेव ॥ ५४ ॥

स्वरूपलक्षणं श्लोकद्वयेनाह—**तिर्यगूर्ध्वमिति** । स्पष्टोऽर्थः ॥ ५५ ॥

**अतद्व्यावृत्तीति** । स्पष्टोऽर्थः ॥ ५६ ॥

ननु ब्रह्मादयोऽपि निरतिशयानन्दा एव श्रूयन्ते । तत आह—**अखण्डेति** । लवा ब्रह्मेन्द्रादयः परिच्छिन्नानन्दा एव । ब्रह्म त्वखण्डानन्दरूपत्वादपरिच्छिन्नानन्दमेव, तस्य आनन्दसमुद्रस्य लेश-

तद्युक्तमखिलं वस्तु व्यवहारस्त्वतिप्रियः ।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ।। ५८ ।।

अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् ।
अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ।। ५९ ।।

यद्भासा भास्यतेऽर्कादि भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ।। ६० ।।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति ।। ६१ ।।

स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ।। ६२ ।।

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किञ्चन ।
ब्रह्मान्यदस्ति चेन्मिथ्या यथा मरुमरीचिका ।। ६३ ।।

---

माश्रित्य ब्रह्मादयः आनन्दिनो भवन्ति आनन्दतारतम्येन "एतस्यैवानन्दस्यान्यापि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः ।। ५७ ।।

आत्मैव परमप्रेमास्पदतया सर्वप्रियतमो भवतीत्याह—**तदुक्तमिति**। अखिलं देहादिवस्तु तद्युक्तं तेन संयुक्तमेव प्रियतमम् । व्यवहारोऽपि तद्युक्तं एव अत्यन्तं प्रियः । तस्मात्सर्वगतं ब्रह्मात्यन्तप्रियं यथाखिले क्षीरे घृतमिव व्यापित्वात् आत्मैव प्रियत्वेन सिद्धः ।। ५८ ।।

तर्ह्यात्मा केन प्रकारेण सर्वं व्याप्य तिष्ठतीति जानीयादित्याशङ्क्य साक्षाद्वक्तुमशक्यत्वात्सत्तारूपेण भातीत्यनण्वस्थूलमिति । श्रुतिं प्रमाणयतीत्याह—**अनण्वेति** । स्पष्टोऽर्थः ।। ५९ ।।

पुनस्तदेव ब्रह्म ज्ञानार्थं श्लोकत्रयेण प्रथमं निरूपयति—**यद्भासेति**। यत्तेजोभासा भान्वादिकं भास्यते भास्यैरर्कादिभिः यत्तेजो नावभासते। "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति श्रुतेः ।। ६० ।।

तथा गीताशास्त्रे—येन सर्वमिदं भाति तद्ब्रह्मेति जानीयात् ।। ६१ ।।

तप्तायःपिण्डवत्स्वयमेव अन्तर्बहिर्व्याप्य प्रकाशत इत्याह—**स्वयमिति**। स्पष्टोऽर्थः ।। ६२ ।।

पुनस्तदेवाह—**जगद्विलक्षणमिति** । सर्वं ब्रह्मैव सत्यं तथापि जगद्रूपेण यदा पश्यति तदा-

**दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् ।**
**तत्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥ ६४ ॥**

**सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते ।**
**अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६५ ॥**

**श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः ।**
**जीवस्सर्वमलान्मुक्तः स्वर्णवद्दृश्यते स्वयम् ॥ ६६ ॥**

**हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत् ।**
**सर्वव्यापी सर्वधारी भाति भासयतेऽखिलम् ॥ ६७ ॥**

---

ग्राह्यजगद्वैलक्षण्येन तत्कार्यत्वेन विचार्य ज्ञातुं शक्यम् । ब्रह्मणोऽन्यद्वस्तु न विद्यते । मृत्सुवर्णादिवत् । ततोऽन्यद्यत्किञ्चिद्दृश्यते चेत्तन्मिथ्या मरुमरीचिकाजलवदित्यर्थः ॥ ६३ ॥

पुनस्तदेव स्पष्टयति—**दृश्यत इति** । चक्षुषा यद्दृश्यते श्रोत्रेन्द्रियेण यच्छ्रूयते मनसा यत्स्मर्यते मनसा वाचा यदभिधीयते तत्वज्ञानात्तत्सर्वं ब्रह्म । "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तमसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्यायमान" इत्यादिश्रुतेः । "न कर्मणा न प्रजये"त्यादिश्रुतेः । तथा गीताशास्त्रे—"नाहं वेदै"रित्यादि—भक्त्या त्वनन्यया शक्य इत्यन्तेन ॥ ६४ ॥

ननु सर्वगतं चेद्ब्रह्म सर्वैः किं न दृश्यत इत्याशङ्क्य न चक्षुरादिभिः गृह्यत इत्याह—**सर्वगमिति** । अज्ञानचक्षुः सर्वगतमपि सच्चिदानन्दमद्वयं ब्रह्म न पश्यति । "न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति । तमक्रतुं पश्यति वीतशोको धातुप्रसादान्महिमानमीशमि"त्यादिश्रुतेः । तत्र दृष्टान्तमाह—प्रकाशमानमपि । भानुं=सूर्यं अन्धो न पश्यति तद्वदित्यर्थः ॥ ६५ ॥

एवं तावदुक्तरीत्याऽनुभवसम्पन्नस्यापि तदभ्यासरहितस्य वासनाबलात्किञ्चिदज्ञानं सम्भवति । तत्परिहारार्थं पुनः श्रवणादीनि कार्याणीत्याह—**श्रवणादिभिरिति** । जीवः प्रत्यगात्मा साभासाहङ्कारः इह श्रवणमननादिभिः दीप्तः=प्रकाशितः ज्ञानाग्निपरितापितः ज्ञानमेवाग्निः तेन परितापित=शोधित इत्यर्थः । सर्वाज्ञानमलान्मुक्तः स्वयमेव सम्यक्प्रकाशते । यथाग्निना परितापितं स्वर्णं स्वोपाधिद्रव्यं हित्वा स्वरूपेण प्रकाशते तद्वदित्यर्थः ॥ ६६ ॥

एवं शोधितो जीवः परमात्मा हृदाकाशतमोऽज्ञानमुपसंहरन्भानुवत्प्रकाशत इत्याह—**हृदाकाश इति** । बोध एव भानुः आकाशवत्सर्वव्यापी सर्वस्य आधारभूतत्वात् सर्वाधारो भाति । सर्वस्वरूपेण सर्वं ब्रह्माहमिति प्रकाशते । मृत्सुवर्णादिवत् "सर्वं खल्विदं ब्रह्मे"तिश्रुतेः । "विश्वं भूतं" इत्यादि "तस्मै रुद्राय नमो अस्त्वि"त्यन्तं श्रुतेः । रुः अशुभं द्रावयते इति रुद्रः ॥ ६७ ॥

**दिग्देशकालाद्यनवेक्ष्य सर्वगं**
**शीतादिहृन्नित्यसुखं निरञ्जनम् ।**
**यः स्वात्मतीर्थं भजते विनिष्क्रियः**
**स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६८ ॥**

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादाचार्यविरचितः आत्मबोधः ॥

---

आत्मज्ञस्य परमज्ञानप्रतिबन्धकदुरितपरिहारार्थं नानापदार्थैर्यागः कर्तव्य इत्याशङ्क्य **स्वात्मतीर्थरतस्य न किञ्चित्कर्तव्यमस्तीत्याह**—यः निष्क्रियः परमहंसः स्वात्मतीर्थं भजते सः **सर्ववित्** = सर्वज्ञः सर्वत्रगः परमात्मस्वरूपत्वादमृतः। मुक्तो भवेत्। कथंभूतं स्वात्मतीर्थं दिग्देश-**कालाद्यनवेक्ष्य** शीतादिहृत् = शीतादिभेददुःखानि हरतीति शीतादिहृत्। नित्यसुखं = परमानन्द-हेतुत्वात्। अत एव निरञ्जनम्। इतरतीर्थेषु तद्वैपरीत्यं द्रष्टव्यम्। तस्मादात्मतीर्थरतस्य न किञ्चिदवशिष्यत इति भावः ॥ ६८ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादशिष्यश्रीपद्मपादाचार्येण कृतं वेदान्तसाराख्यं व्याख्यानं सम्पूर्णम् ॥

श्रीशङ्करभगवत्पादाचार्यविरचिता

# त्रि पु री

श्रीआनन्दगिर्याचार्यविरचितविवरणटीकोपेता

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचिता

# त्रिपुरी

**शब्दस्पर्शरूपरसगन्धादयो विषयाः पञ्च, पृथिव्यादयश्च परमात्मनः समुत्पन्नाः। पृथिव्यापस्तेजो वायुराकाशमिन्द्रियाणि, अहङ्कारो बुद्धिर्महानव्यक्तम्। तत्र पृथिवी**

---

## श्रीआनन्दगिर्याचार्यविरचितविवरणम्

अध्यात्मादिविभेदेन यदविद्या विजृम्भते।
तद्ब्रह्म नौम्यहं सत्यमानन्दज्ञानमव्ययम्॥

मुमुक्षूणां मोक्षसाधनसम्यग्ज्ञानमपेक्षमाणानां अनायासेन तत्प्राप्त्यर्थं त्रिपुरीप्रकरणमारभमाणः सुखप्रतिपत्त्यर्थं अध्यारोपापवादन्यायेन तत्त्वमुपदिदिक्षुः अध्यारोपप्रक्रियया प्रथमं सृष्टिमन्वाचष्टे—**शब्देति**। शब्दादयो गन्धान्ताः बुद्धीन्द्रियविषयाः। वक्तव्यादयश्च आनन्दयितव्यान्ताः कर्मेन्द्रियविषयाः। मन्तव्यादयश्च चेतयितव्यान्ताः अन्तःकरणविषयाः। पृथिव्यादयश्च आकाशान्ताः पञ्चमहाभूताख्याः स्थूलसूक्ष्मविभागभाजः परस्मादात्मनः सकाशान्मायाशक्तिद्वारा जाता व्यवहारमार्गमवतरन्ति। तत्र शब्दादयः स्थूलास्सन्तो भौतिकत्वात् भूतद्वारा परस्मादुत्पद्यन्ते। भूतानि पुनरव्यक्तमेव द्वारीकृत्य ततो भवन्तीति विवेक्तव्यमित्यर्थः।

साधारण्येन महाभूतानां उत्पत्तिमभिधाय तेषामेव अपञ्चीकृतानामुत्पत्तिमभिप्रेत्याह—**पृथिवीति। आकाशमिति**। एतद्भूतपञ्चकं अपञ्चीकृतं परमात्मनः समुत्पन्नमिति सम्बन्धः। सम्प्रति एकादशेन्द्रियाणां अपञ्चीकृतभूतद्वारेण परस्मादुत्पत्तिमभिप्रेत्योक्त**मिन्द्रियाणीति**। परमात्मनः समुत्पन्नानीति पूर्ववत्। तत्र श्रोत्रं पादौ च आकाशद्वारेण। त्वक् पाणी च वायुद्वारेण चक्षुर्वाक्च तेजोद्वारेण। रसनं उपस्थश्च सलिलद्वारेण। घ्राणं वायुश्च पृथिवीद्वारा परस्मादुद्भवति। मनस्तु समुदितभूतपञ्चकद्वारा तस्मादुत्पन्नं। तद्विषयाणां च तत्तदिन्द्रियप्रकृतिद्वारा परस्मादेवोत्पत्तिरिति विवेचनीयम्। अहङ्कारोऽपि भूतपञ्चकद्वारा परस्मादेवोत्पद्यत इत्याह—**अहङ्कार इति**। अस्मदादिसम्बन्धिनी व्यष्टिबुद्धिरपि तथैवेत्याह्—**बुद्धिरिति**। हिरण्यगर्भसम्बन्धिनी समष्टिबुद्धिरपि तथैवेत्याह—**महानिति**। एतेन चित्तोत्पत्तिर्व्याख्याता। उक्तानां भूतभौतिकानामतिसूक्ष्माणां समुत्पत्तौ प्रधानद्वारमनाद्यनिर्वाच्यमज्ञानं कथयति—**अव्यक्तमिति**। पञ्चीकृतस्थूलभूतोत्पत्तिमभिप्रेत्य धारणादितत्तत्क्रियानिमित्तत्वेन तत्तद्भूतोत्पत्तिरित्यर्थः।

क्रियया भूतानि लक्षयति—**पृथिवीत्यादिना**। गुणद्वारेणापि भूतानि लक्षयितुं शक्यानी-

**धारणे, आपः पिण्डीकरणे क्लेदने च, तेजः प्रकाशने पचने च, वायुर्व्यूहने, आकाशमवकाशदाने। आकाशमेकलक्षणं, द्विलक्षणो वायुः, त्रिलक्षणं तेजः, आपश्चतुर्गुणाः, पञ्चलक्षणा पृथिवी। शब्दगुणमाकाशम्। परस्परानुप्रवेशेन शब्दस्पर्शगुणो वायुः। शब्दस्पर्शरूपगुणोऽग्निः। शब्दस्पर्शरूपरसगुणा आपः। शब्दस्पर्शरूपरसगन्धगुणा पृथिवी। यत्कठिनं सा पृथिवी। यद्द्रवं तदापः। यदुष्णं तत्तेजः। यस्संसरति स वायुः। यत्सुषिरं तदाकाशमित्येतत्स्थूलशरीरं सदसदात्मकम्।**

**मनः संकल्पविकल्पात्मकं चेति। इन्द्रियाणि विज्ञानशक्तयः क्रियाशक्तयश्च। ज्ञानशक्तयः श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमिति पञ्च बुद्धीन्द्रियाणि। क्रियाशक्तयः वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि। प्राणापानव्यानोदानसमाना इति पञ्च वायवः। मनोबुद्धिरहंकारश्चित्तमिति अन्तःकरणचतुष्टयम्। चेतयितव्यलक्षणं चित्तम्। अभिमानलक्षणोऽहङ्कारः। बोद्धव्यलक्षणा बुद्धिः। महान् प्राणो हिरण्यगर्भः परिस्पन्दात्मा**

---

त्याह—**आकाशमित्यादिना**। लक्षणशब्दो गमकगुणमधिकरोति। उक्तमेव प्रपञ्चयति—**शब्दगुणमिति**। परस्परानुप्रवेशेनेति पञ्चीकरणं सूच्यते। उत्तरत्रापि इदं विशेषणं सम्बध्यते। यद्यपि शब्दादीनां भूम्याकाशादिभूताभेदाभ्युपगमान्न गुणगुणिभावोऽवकल्पते, तथापि स्थूलेषु भूतेषु तथा प्रथामाश्रित्य गुणगुणिभावाभिधानमविरुद्धम्। यद्यपि पञ्चीकृतेषु भूतेषु सर्वत्र सर्वे गुणाः सम्भवन्ति, तथापि तथा प्रतीतिविशेषवशात्तद्व्यवस्थोक्तिरिति भावः। पञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च ब्रह्माण्डं सर्वमेतद्वैराजरूपमात्मनः स्थूलं शरीरमित्याह—**इत्येतदिति**। तस्य कार्यकारणरूपतामाह—**सदसदात्मकमिति**। कार्यमभिव्यक्तेः सदित्युच्यते। कारणं चानभिव्यक्तेरसदित्याख्यायते। तदुभयात्मकमुक्तं शरीरमित्यर्थः। अथवा सम्यग्ज्ञानमन्तरेणानिवृत्तेः सदात्मकं, तेन च निवृत्तेरसदात्मकम्। यद्वा कल्पितेन स्वेन रूपेण असदात्मकं, अधिष्ठानरूपेण तु सदात्मकमिति व्याख्येयम्।

सम्प्रति सूक्ष्मशरीरं विवृण्वन्निन्द्रियान्तर्भूतत्वेन सूचितस्य मनसो लक्षणमाह—**मन इति**। अथवा सदसदात्मकमिति सूक्ष्मशरीरान्तर्भूतस्य मनसो लक्षणम्। तद्व्यवस्थाद्वयेन सदपि सुषुप्तावसदिष्यते। तस्यैव लक्षणान्तरमाह—**सङ्कल्पेति**। कानि पुनरिन्द्रियाणि इत्याशङ्क्य, तानि द्वेधा विभजति—**इन्द्रियाणीति**। विज्ञानशक्तिमन्तीन्द्रियाणि विशेषतो निर्दिशति—**विज्ञानेति**। क्रियाशक्तिमन्तीन्द्रियाणि विविच्य कथयति—**क्रियेति**। सप्तदशकलिङ्गसिध्यर्थं क्रियाशक्तिप्रसङ्गात्प्राणादिपञ्चकमुपन्यस्यति—**प्राणेति**। उक्तपञ्चदशकमन्तःकरणद्वयं च गृहीत्वा सप्तदशकं लिङ्गं सिध्यतीत्यभिसन्धाय अन्तःकरणं विभजते—**मनोबुद्धिरिति**। तत्र प्रागेव मनसो लक्षितत्वादवशिष्टमहङ्कारादित्रितयं लक्षयति—**अभिमानेत्यादिना**। बोधशब्देन निश्चयो विवक्ष्यते। चैतन्यलक्षणं तदाभासव्याप्तं तत्प्रधानं तदाकारमिति यावत्। यदुक्तं महानिति, तदिदानीं विवृणोति—**महानित्यादिना**। यद्यपि हैरण्यगर्भी बुद्धिर्महानित्युक्तं तथापि बुद्धिमहतोरभेदमादाय क्रियाशक्तिप्राधान्येन प्राणो महानित्युच्यते। ज्ञानशक्तिप्राधान्येन हिरण्यगर्भः तथा विवक्ष्यते। प्राणशब्दार्थं विविच्य कथयति—**परिस्पन्दात्मेति**। क्रियामात्रस्यात्मासत्ताप्रदः प्राणशब्दार्थः इत्यर्थः। नच तस्मिन्प्रमाणाभावः।

**सूत्रं वायुरिति एतत्सूक्ष्मशरीरम् । तथाऽव्यक्तमव्याकृतं प्रधानं बीजं क्षेत्रं तम इति सुषुप्तमित्येतदविद्याशरीरम् ।**

**स परमात्मा नित्यशुद्धबुद्धमुक्तस्वभावः आकाशवदवस्थितः 'सदेव सोम्येदं' इत्यादिश्रुत्युक्तः इह प्रविष्टः सर्वभूतेषु स्थित्वा श्रोत्रेण शब्दं प्रतिपद्यते । त्वचा स्पर्शं, चक्षुषा रूपं, जिह्वया रसं, नासिकया गन्धं, वाचा वक्तव्यं, हस्ताभ्यां ग्रहीतव्यं, पद्भ्यां गन्तव्यं, पायुना विसर्जयितव्यं, उपस्थेन आनन्दयितव्यम्, मनसा मन्तव्यम्, बुद्ध्या बोद्धव्यम्, अहङ्कारेण अहङ्कर्तव्यम्, चित्तेन चेतयितव्यं, तमसा विकारं प्रतिपद्यते इति सर्वत्र संबध्यते । स आत्मा क्षेत्रज्ञः कर्ता जीवो विज्ञानात्मेति । एतदविद्याशरीरं मणिवदुपाधिविशेषात् । तमेवंविधं मोहशरीरं विदित्वा अकर्तारमात्मानं कर्मणा पापपुण्यात्मकेन न लिप्यत इति ।**

---

स्थूलप्रपञ्चविधारणलिङ्गात्तदधिगतेरित्याह—**सूत्रमिति** । प्राणस्य सूत्रत्वेन विधारयितृत्वे 'वायुर्वै गौतम' इत्यादिश्रुतिं सूचयति—**वायुरिति** । अपञ्चीकृतानि महाभूतानि तत्कार्यं चोक्तं सर्वमात्मनः सूक्ष्मं शरीरमित्याह—**इत्येतदिति** ।

शरीरद्वयकारणं दर्शयन् पूर्वोक्तं प्रपञ्चयति—**अव्यक्तमित्यादिना** । 'तद्धेदं तर्हि अव्याकृतमासीत्' इति श्रुतिसिद्धं साभासमज्ञानं अव्याकृतमित्युच्यते । तस्यैव प्रविलीयमानसमस्तकार्याश्रयत्वं दर्शयति—**प्रधानमिति** । उत्पत्तिकालेऽपि तस्मादेव सर्वं कार्यमुत्पद्यत इत्याह—**बीजमिति** । स्थितिकालेऽपि तत्रैव कार्यजातं तिष्ठतीत्याह—**क्षेत्रमिति** । 'नासदासीन्नोसदासीत्' इत्युपक्रम्य 'तम आसीत्' इति श्रुतेः, 'आसीदिदं तमोभूतम्' इति स्मृतेश्च प्रसिद्धमेतदित्याह—**तम इति** । तस्य चेतनापरतन्त्रतया स्वातन्त्र्यं व्यावर्तयति—**इति सुषुप्तमिति** ।

ननु परमात्मनः सकाशादविद्याद्वारेण स्थूलसूक्ष्मशरीरद्वयलक्षणं जगदुत्पद्यते चेत्तस्याविद्यातदुत्थसम्बन्धिनो नित्यशुद्धतादिविहतिरित्याशङ्क्य अध्यारोपितसम्बन्धो न वास्तवं रूपं व्याहन्तीति परिहरति—**स परमात्मेति** । यस्य वस्तुतो नास्ति परस्य कार्यकारणात्मकप्रपञ्चसम्बन्ध तस्यातिविशदमसङ्गत्वमित्याह—**आकाशवदिति** । अथवा कार्यकरणसम्बन्धो वस्तुतो नास्तीत्यत्र असङ्गत्वं हेतुमाह—**आकाशवदिति** । ननु परस्य कार्यकारणात्मकद्वैतप्रपञ्चसंस्पर्शाभावे तस्य भेदेनावस्थानादस्थाने परित्यक्तमद्वैतमित्याशङ्क्य आरोपितस्याधिष्ठातृमात्रत्वावगमान्नैवमित्याह—**सदेवेति** ।

नन्वेवमपि परस्य स्रष्टव्ये प्रविष्टत्वाभावात्तदन्तर्वर्तिना श्रोत्रप्रभृतीनां पृथक्त्वात्कथमद्वितीयत्वमित्याशङ्क्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतिमाश्रित्योत्तरमाह—**स परमात्मेत्यादिना** । तर्हि परमात्मनः तत्र श्रोत्रादिभावेन विभक्तत्वादद्वैतानुपपत्तितादवस्थ्यमित्याशङ्क्य 'क्षेत्रज्ञं चापि मां विद्धि' इति श्रुतिमाश्रित्याह—**स आत्मेति** । तस्यैव क्रियाश्रयत्वेन कर्तृत्वं, प्राणानां चारयितृत्वेन जीवत्वं, विज्ञानशब्दितबुद्ध्युपाधिकत्वेन विज्ञानात्मत्वमित्याह—**कर्तेति** । तस्य नानात्वमौपाधिकं स्फटिकादेरिव जपाकुसुमाद्युपाधिकृतं लौहित्यादीत्याह—

**अथाऽध्यात्माधिभूताधिदैवानि वक्ष्ये। श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतम्। त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम्। चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम्। जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम्। नासाध्यात्मं घ्रातव्यमधिभूतं, पृथिवी तत्राधिदैवतम्। वागध्यात्मं वक्तव्यमधिभूतं अग्निस्तत्राधिदैवतम्। हस्तावध्यात्मं आदातव्यमधिभूतं इन्द्रस्तत्राधिदैवतम्। पादावध्यात्मं गन्तव्यं अधिभूतं विष्णुस्तत्राधिदैवतम्। पायुरध्यात्मम्, विसर्जयितव्यमधिभूतं मित्रस्तत्राधिदैवतम्। उपस्थोऽध्यात्मं आनन्दयितव्यमधिभूतं प्रजापतिस्त्राधिदैवतम्। मनोऽध्यात्मं, मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्। बुद्धिरध्यात्मम्, बोद्धव्यमधिभूतं, ब्रह्मा तत्राधिदैवतम्। अहङ्कारोऽध्यात्मं अहंकर्तव्यमधिभूतं, रुद्रस्तत्राधिदैवतम्। चित्तमध्यात्मम्, चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम्। तमोऽध्यात्मं, विकारयितव्यमधिभूतम्, ईश्वरः कर्म दैवं तत्राधिदैवतम्। एवमध्यात्माधिभूताधिदैवतं तत्सर्वमुक्तम्।**

**स परमात्मा निर्विकल्पो निरवयवो निर्गुणो निरञ्जनः सर्वगतः सर्वव्यापी सर्वज्ञः सूक्ष्मो नित्यो विरजोऽक्षरः परं ब्रह्म, 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म'**

---

**मणिवदिति**। जीवस्योपाधिवशात्कर्तृत्वादिरूपेण स्थितस्य अकर्तृत्वादिरूपपरमात्ममात्रत्वेन परिज्ञाने पुण्यापुण्यसंस्पर्शाभावान्मुक्तिरेवेति तज्ज्ञानफलं दर्शयति—**तं विदित्वेति**। अकर्तारमितिच्छेदः।

एकस्य पुरस्य तत्त्वप्रतिपत्तिस्थानरूपं पुरान्तरमवतारयति—**श्रोत्रमित्यादिना। अध्यात्मं इति**। आत्मनि शरीरे विषयत्वेन व्यवस्थितमित्यर्थः। **अधिभूतमिति**। भूतेषु तत्तदिन्द्रियविषयत्वेनावस्थितम्। दिशि इति आकाशाभिमानिनी देवता उच्यते। तत्रत्याध्यात्माधिभूतयोः उक्तिः। **अधिदैवमिति**। देवतासु मध्ये अधिष्ठात्री देवतेत्यर्थः। मित्रशब्देन प्राणापानवृत्त्योरभिमानिनी देवता गृह्यते। प्रजापतिशब्देन विराडात्मा पितृरूपमापन्नो विवक्ष्यते ब्रह्मेति हिरण्यगर्भो विराजस्सकाशादान्तरस्सूक्ष्मो देवतात्मा विवक्षितः। रुद्रशब्दो मूर्तिविशेषवचनः। ईश्वरशब्देन सर्वस्योक्तस्य भेदजातस्य कारणमभिलप्यते। अन्यदपि किञ्चिदनुक्तमध्यात्मादिभेदभिन्नमस्तीत्याशङ्कामपनुदन्नुपसंहरति—**एवमिति**।

तत्रेदं भेदजातं परिकल्प्यते सोऽपि भिन्नस्सन्कल्पितस्स्यादिति शून्यवादिनो दर्शनमाशङ्क्य स किं स्वतो भिद्यते परतो वेति विकल्प्य प्रथमं दूषयति—**स परमात्मेति**। स्वतो भेदपक्षेऽपि स भेदः स्वरूपगतो वा स्यादवयवद्वारको वा गुणद्वारको वेति विकल्प्याद्यं निरस्यति—**निर्विकल्पक इति**। द्वितीयं प्रत्याह—**निरन्वय इति**। न तृतीय इत्याह—**निर्गुण** इति। परतो भेदपक्षं प्रतिक्षिपति—**निरञ्जन इति**। न चतुर्थ इत्याह—**सर्वगत** इति। पृथिव्यादेरिव सर्वगतत्वमौपचारिकमिति शङ्कां शिथिलयति—**सर्वव्यापीति**। आकाशवदचेतनत्वमाशङ्क्य विशिनष्टि—**सर्वत्र** इति। तस्य द्विविधेन्द्रियागोचरत्वादपि प्रामाणिको भेदो नास्तीत्याह—**सूक्ष्म** इति। परमाणुतुल्यतां वारयति—**नित्य** इति। न च त्रसरेणुव्यतिरिक्तो नित्योऽस्ति परमाणुरिति भावः। सत्वरजस्तमोभिर-

**'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वं' 'पुरुष एवेदं' 'तेनेदं पूर्णं पुरुषेण सर्वं' इत्येतैः विशेषणैः विशेषितं परं ब्रह्म, तदेवाहमोमिति प्रतिपद्यते नील-महत्सुगन्ध्युत्पलवत् ।**

**शब्दादयः आत्मानं न जानन्ति परस्परमपि, अन्यज्ञातत्वात् बाह्यघटादिवत् । एवं देहेन्द्रियमनोबुद्धिसङ्घाता आत्मानं न जानन्ति परस्परमप्यन्यदृष्टत्वात्, शब्दादिवत् दृश्यत्वाच्च । शरीरमात्मानं न जनाति घटादिवत् दृश्यत्वाच्च । इन्द्रियाणि आत्मानं न जानन्ति प्रदीपवद्दृश्यत्वात् । मन आत्मानं न जानाति इन्द्रियवद्दृश्यत्वात् । बुद्धिरात्मानं न जानाति मनोवद्दृश्यत्वात् । अहङ्कारः आत्मानं न जानाति बुद्धिवद्दृश्यत्वात् । चित्तमात्मानं न जानाति, अहङ्कारवत् दृश्यत्वात् । सुखदुःखादयो रागादयश्चात्मानं न जानन्ति चित्तवद्दृश्यत्वात् । सुषुप्तौ इन्द्रियमनोबुद्ध्यादीनामभावे शब्दादयो न ज्ञायन्ते, नात्माभावे । तस्मान्नाहं दृश्यो द्रष्टैवाहं सर्वप्रत्ययसाक्षित्वात् ।**

---

संस्पर्शाच्च न तस्मिन्भेदाशङ्केत्याह—**विरज** इति । कूटस्थत्वाच्च तथेत्याह—**अक्षरमिति** । ननु ब्रह्मैवंविधमिष्यते, परमात्मा तु कथमित्थं स्यादित्याशङ्क्याह—**परं ब्रह्मेति** । अथ कथं यथोक्तं ब्रह्म परमपुरुषार्थतया प्रेप्सितमित्याशङ्क्याह—**विज्ञानमिति** । ब्रह्मणा यथोक्तरूपत्वेऽपि प्रत्यगात्मनि किमायातमित्याशङ्क्याह—**तदेवाहमिति** । ननूक्तमैक्यज्ञानमनायासेन केनोपायेन स्यादिति चेदोङ्काराभ्यासेनेत्याह—**ओमिति प्रतिपद्यत** इति । आध्यात्मादिना स्थूलादिना च त्रिधोक्तं योजनादिमात्रं कृत्वा तदपि पूर्वपूर्वमुत्तरोत्तरमात्रमापाद्योङ्कारं कार्यकारणविभागशून्ये प्रतीचि प्रविलाप्य तन्मात्रमोङ्कारोपलक्षितं सदेवानुसन्दध्यादित्यर्थः । कथं पुनः विज्ञानानन्दादिशब्दानां ब्रह्मणि पर्यवसानमित्याशङ्क्य सामानाधिकरण्यादिद्वारेणेत्युदाहरणेन दर्शयति—**नीलमिति** । दृष्टान्ते धर्मधर्मिभावे सत्यपि दार्ष्टान्तिके तदभावात्पदानामैकरस्यपर्यवसायित्वमवसेयम् ।

तदेवं पुरद्वयं दर्शयित्वा द्रष्टृदृश्यविवेकद्वारापि तत्वप्रतिपत्ती सम्भावयितुं पुनरान्तरं दर्शयति—**शब्दादय इति** । आत्मानमिति शब्दादिस्वरूपोक्तिः । **परस्परमिति** । शब्दो रूपं रूपं च शब्दं न जानातीति यावत् । अन्यदृष्टत्वादित्यनेन हेतुः क्रियते । बाह्यस्य शब्दादिसङ्घातस्य ज्ञातृत्वं निराकृत्याध्यात्मिकस्य निराकरोति—**मन इति** । शरीरस्य न स्वपरविषये द्रष्टृत्वमित्याह—**इन्द्रियाणीति** । उभयविषयद्रष्टृत्वाभावं मनसो दर्शयति—**मन इति** । एवमेव बुद्धिरपीत्यादि व्याख्येयम् । **चतुर्विध**स्यान्तःकरणस्य द्रष्टृत्वाभावात्तद्वृत्तीनां स्वात्मनि परमात्मनि वा तदभावमभिधत्ते—**सुखेति** । ननु शब्दादीनां दृश्यमानत्वात्तद्द्रष्टृत्वेन आत्मा चेदिष्यते तर्हि सुषुप्त्यादौ शब्दाद्युपलम्भाभावादात्मनोऽपि तदुपलब्धुः असिद्धिरेव स्यात् । आदित्यदर्शनाभावे तत्प्रतियोगिकस्य द्रष्टृत्वस्य प्रतिनिर्देष्टुमशक्यत्वादित्याशङ्क्य 'अविनाशी वा अरेऽयमात्मा' इत्यादिश्रुतिमाश्रित्य परिहरति—**स्वप्न इति** । 'त्रयः स्वप्नाः' इति श्रुतेः स्वप्नशब्देन सुषुप्तिर्गृह्यते । द्रष्टृदृश्यविवेकमुपपादितमुपसंहरति—**तस्मादिति** । तत्पदपरामृष्टं हेतुमेव स्पष्टयति—**सर्वप्रत्ययेति** ।

**अपवरकमध्ये प्रदीपवत्स्वभावेनैव प्रकाशयति। यस्मात् गृहप्रविष्टमार्जारान् प्रयत्नाभिमानरहितः प्रकाशयति यथा तथा बुद्धिगृहे ज्ञप्तिस्वरूपः स्वयंज्योतिरात्मा, 'अत्रायं पुरुषस्स्वयंज्योतिर्भवति' 'स्वेन भासा सर्वमिदं विभाति' 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥' इत्येवमादिवचनेभ्यः। बुद्धिवृत्तीनां चक्षुरादिद्वारेणोत्पद्यमानानां रूपाद्याकारप्रत्ययानां सुखदुःखमोहात्मकानां अभ्यन्तरे स्मृतीच्छाप्रयत्नरागद्वेषाभिमानरहितः स्वभावेनैव प्रकाशयति यस्मात्तस्मान्नित्यत्वं शुद्धत्वं बुद्धत्वं विकाररहितत्वं सर्वज्ञत्वं सूक्ष्मत्वमचलत्वं अनामरूपकर्मात्मत्वम्। अशनापिपासाशोकमोहजरामृत्युप्रभृतयः शरीरस्येति 'योऽशनापिपासे जरां मृत्युमत्येति' 'यदिदं किञ्चाश्वभ्यः आशकुनिभ्यः आकीटपतङ्गेभ्यः' प्रकृतेरन्नमिति सिद्धम्। न त्वात्मन इति।**

---

प्रत्यगात्मनः सर्वसाधकत्वे तदनुकूलप्रयत्नाभिमानप्रसङ्गादविकृतब्रह्मत्वानुपपत्तिरित्याशङ्क्याह—**अपवरकेति**। प्रदीपदृष्टान्तं विवृणोति—**यथेति**। प्रकाशयतीत्यत्र कर्तृत्वेन प्रदीपस्सम्बध्यते। दार्ष्टान्तिकं व्याचष्टे—**तथेति** आत्मा सर्वप्रत्ययप्रयत्नाभिमानरहितः सन्प्रकाशयतीति सम्बन्धः। ज्ञप्तिस्वरूपं यत् ज्योतिः तत्स्वरूपोऽयमात्मेति आत्मनः स्वयंप्रकाशत्वमुक्तम्। तत्र श्रुतिं प्रमाणयति—**अत्रेति**। स्वप्नावस्था सप्तम्या परामृश्यते। स्वेन भासा प्रत्यगात्मस्वरूपभूतेन ज्ञानेन सर्वमिदमादित्यादि तदाभासव्याप्त्या स्पष्टं प्रतिभातीत्यर्थः। तत्र तस्मिन्ब्रह्मणि विषये सूर्यो भासकत्वेन न भातीति योजना। एवं न चन्द्रतारकमित्यादि योजनीयम्। इतश्च परमात्मप्रकाशकत्वं न सूर्यादीनामस्ति, तत्प्रकाश्यत्वादित्याह—**तमेवेति**। अनुगमनवदनुभानं स्वगतप्रकाशवशादित्याशङ्क्य—**तस्येति**। 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म', 'प्रज्ञानघन एव' इत्यादिवचनानि, आदिशब्देन गृह्यन्ते।

आत्मनो ज्ञप्तिस्वभावस्य प्रयत्नादिरहितस्य सर्वप्रत्ययसाक्षित्वे फलितमाह—**बुद्धिवृत्तीनामिति**। अभ्यन्तरे स्थित्वा ता एव बुद्धिवृत्तीरिति शेषः। शुद्धत्वं सर्वबुद्धिसाक्षित्वात्। बुद्धत्वं समस्तजडसाधकत्वेन बोधैकरसत्वात्। सूक्ष्मत्वं साक्षित्वेनोभयविधेन्द्रियाग्राह्यत्वात्। अचलत्वं आकाशवदवस्थितत्वात्। नामरूपयोस्साक्ष्यकोटिनिविष्टयोः साक्षिणि सम्भावनाभावात्। विकाररहितत्वमनामरूपत्वात् इति विवेक्तव्यम्। प्रत्यगात्मनः षडूर्मिसम्बन्धिनो विकाररहितत्वमसिद्धमित्याशङ्क्याह—**अशनेति**। आश्रयान्तरगामित्वादशनायादीनामात्मसम्बन्धो नास्तीति फलितं वक्तुमितिशब्दः। आत्मनः षडूर्मिसम्बन्धाभावे प्रमाणमाह—**योऽशनेति**। तमेतमात्मानं वेदितुमिच्छन्तः प्रव्राजिनः प्रव्रजन्तीति सम्बन्धः। आत्मनोऽशनायाद्यभावे कथं प्रसिद्धो भोक्तृभोग्यविभागस्सम्भवेदित्याशङ्क्याह—**यदिदमिति**। **प्रकृतेरिति**। अस्मादधस्तात्पदमध्याहर्तव्यम्। प्रकृतिशब्देन प्राणो गृह्यते, तस्यात्तृत्वप्रसिद्धेरिति द्रष्टव्यम्। अनात्मन्येव भोक्तृभोग्यविभागस्साभासस्यान्तःकरणस्य भोक्तृत्वादिति मन्वानो व्यावर्त्यं दर्शयति—**नत्वात्मन इति**। तृतीयपुरसमाप्त्यर्थं इतीत्युक्तम्।

**जाग्रत्स्वप्नसुषुप्तेषु एक एव आत्मा। जागरिते वैश्वानरः, स्वप्ने तैजसः, सुषुप्ते प्राज्ञः। स एव निर्विशेषस्तुरीयः। स परमात्मा सोऽहमिति। 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहैवेति'।**

॥ इति श्रीमच्छङ्करभगवत्पादाचार्यविरचिता त्रिपुरी समाप्ता ॥

---

शरीरद्वयोपन्यासेनाध्यात्मादिविभागाभिधानेन द्रष्टृदृश्यवचनेन च तत्त्वप्रतिपत्तिप्रकारं व्याख्यायावस्थात्रयद्वारेणापि तत्प्रतिपत्तिप्रकारं व्याचिख्यासुः आत्मनः प्रत्यवस्थं भेदमाशङ्क्याह—**जाग्रदिति**। एकत्वे कथं संज्ञाभेदः स्यादित्याशङ्क्य अवस्थाभेदवशादित्याह—**जागरित इति**। अवस्थासम्बन्धिनस्सकाशादन्यस्यैवात्मनो ज्ञेयत्वमाशङ्क्याह—**स एवेति**। क्रमाक्रमाभ्यामवस्थात्रयमनुभवन्नेवात्माकार्यकारणात्मकं त्रितयमतीत्य सकलविशेषाभावोपलक्षितस्तुरीयो निरुच्यते। स च सदानन्दैकतानः विज्ञानधातुः इत्यर्थः।

शोधितं त्वंपदार्थमनूद्य तस्य तत्पदार्थत्वं वाक्यार्थं कथयति—**स परमात्मेति**। सम्प्रति व्यतिहारविवक्षया परिशोधितं तत्पदार्थमनूद्य तस्य प्रत्यगात्ममात्रत्वं प्रत्याययति—**सोऽहमिति**। इतिशब्देन प्रकरणं परिसमापयन्यथोक्तवाक्यार्थपरिज्ञानादज्ञानतदुत्थानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावेन कृतकृत्यता भवतीति।

पुरत्रयपरामर्शो वस्तुतो नानुभूयते।
यत्र तस्मै नमः कुर्वे पुरुषोत्तममूर्तये॥

॥ इति श्रीआनन्दगिर्याचार्यविरचितं विवरणं समाप्तम् ॥

श्रीशङ्करभगवत्पादाचार्यविरचितं

# मनीषापञ्चकम्

श्रीसदाशिवेन्द्रसरस्वतीयोगिविरचिततात्पर्यदीपिकासहितं



श्रीबालगोपालेन्द्रमुनिविरचितं

मधुमञ्जरीटीकासहितञ्च

श्रीशङ्करभगवत्पादाचार्यविरचितं

# मनीषापञ्चकम्

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।
सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्यास्ति चेत्
चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ १ ॥

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणया सेशं मया कल्पितम् ।
इत्थं यस्य दृढा मतिस्सुखतरे नित्ये परे निर्मले
चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ २ ॥

शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरो-
र्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।
भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ३ ॥

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ।
तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्
योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ४ ॥

यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित्
यः कश्चित् स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ५ ॥



ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचितं

# मनीषापञ्चकम्

**जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते**
**या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।**
**सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्यास्ति चेत्**
**चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ १ ॥**

---

**श्रीसदाशिवेन्द्रयोगिविरचिता तात्पर्यदीपिका**

स्वप्रकाशचिदानन्दसदेकरसरूपिणे ।
नित्यशुद्धनिराभासकूटस्थायाऽऽत्मने नमः ॥
आनन्दघनमद्वन्द्वं निर्विकारं निरञ्जनम् ।
भजेऽहं भगवत्पादं भजतामभयप्रदम् ॥
यत्कटाक्षवशादेव मुच्येऽहं भवबन्धनात् ।
तं वन्दे सच्चिदानन्दं श्रीगुरुं करुणानिधिम् ॥

इह खलु परमकारुणिको भगवान् शिवः अनर्थमकरागारे संसारसागरे निमग्नं लोकमुद्दिधीर्षुः कदाचित् काशीं प्रति गच्छन्तं आचार्यं प्रति चण्डालवेषं धृत्वा जगाम । ततो जगाद भगवानाचार्यः—हे चण्डालाधम ! इतो दूरं गच्छ गच्छेति । ततश्चण्डालवेषमण्डितः शिवः प्राह—

अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् ।
यतिवर ! दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥

हे यतिवर ! अत्र ब्रूहि किमन्नमयाच्छरीरादन्नमयं शरीरं गच्छ गच्छेति दूरीकर्तुं वाञ्छसि ? अथवा चैतन्यादेव चैतन्यं गच्छ गच्छेति दूरीकर्तुं वाञ्छसि । न तावदाद्यः । उभयोश्शरीरयोरन्नकार्यत्वेनैकत्त्वात् । श्रूयते हि शरीरस्य अन्नकार्यत्त्वम् । 'स वा एष पुरुषोऽन्नरसमय" इति । एवं सर्वस्यापि जगतो मायाकार्यत्वेनैकत्वं द्रष्टव्यम् । न द्वितीयः । चैतन्यस्य सर्वत्रैकरूपत्त्वात् । "एको देवः सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मे'ति श्रुतेः । न ह्येकस्य सर्वगतस्य चैतन्यस्य देशाद्देशान्तरं प्रत्यपसरणं सम्भवति । एतत्सर्वमभिप्रेत्योक्तम् ।

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥ इति ॥

तस्मात् सर्वस्य मायामयत्वेन चैतन्यत्वेन वा एकात्मकत्वात् परनिन्दादिकं न युक्तिमिति भावः। चैतन्यैकत्वमेव स्पष्टीकुर्वन्नाह—

प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ विप्रोऽयं श्वपचोऽयमित्यपि महान् कोऽयं विभेदग्रहः।
किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चण्डालवीथीपयः पूरेवान्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाम्बरे॥

**प्रत्यग्वस्तुनि** प्रातिलोम्येन अनृतजडदुःखाहङ्कारादिभ्यो विलक्षणत्वेन प्रतिभासमानं यद्वस्तु सद्रूपं तस्मिन्। ब्रह्मणः वस्तुपदसूचितं सद्रूपत्वं निगद्य चिदानन्दरूपत्वं निराह। **निस्तरङ्गसहजानन्दावबोधाम्बुधाविति।** निस्तरङ्गः निर्विकल्पः। अत एव सहजः ध्रुवः यः परमानन्दावबोधः। स एवाम्बुधिरिवाम्बुधिः सर्वत्रैकरसत्वात्तस्मिन्। तदनेन सच्चिदानन्दत्वं ब्रह्मणः स्वरूपलक्षणमुक्तं भवति। ननु तर्हि लक्ष्यस्य ब्रह्मणः सत्ताद्यात्मकत्वं न स्यादिति चेन्नैतत् सारम्। यथा वीचीतरङ्गाद्युपाधिभेदभिन्नचन्द्रानुगतचन्द्रत्वेन लक्षिता चन्द्रव्यक्तिः चन्द्रत्वं न जहाति चन्द्रत्वस्य चन्द्रव्यक्त्यात्मत्वात्। तथा मायाकल्पितकुम्भादिव्यक्त्यनुगतसत्तया लक्ष्यमाणं ब्रह्मापि सत्त्वं न जहाति। एवमन्तःकरणवृत्त्युपाधिभेदभिन्नचिद्विशेषानुगतचित्त्वेन लक्ष्यमाणं चित्त्वं न जहाति। एवं प्रियप्रमोदाद्यन्तःकरणवृत्त्युपाधिभेदभिन्नानन्दानुगतानन्दत्वेनापि लक्ष्यमाणं आनन्दत्वं न जहाति। तत् कस्मात् सत्यत्वादीनां ब्रह्मव्यक्त्यात्मकत्वात्। तदुक्तमाचार्यैः—

सत्तादीनां हि जातीनां व्यक्तितादात्म्यदर्शनात्।
लक्ष्यव्यक्तिरपि ब्रह्म सत्तादि न जहाति नः॥ इति। ( वे० कल्पतरुः १-१-२ )

ननु सद्व्यक्तिनानात्वे कथं तदात्मकाद्वितीयब्रह्मसिद्धिरिति चेत् न। तस्य सद्भेदस्यौपाधिकत्वात्। एवं सत्यज्ञानानन्दभेदोऽप्यौपाधिक एव। अन्यथा सत्त्वरहितज्ञानानन्दयोः शून्यत्वप्रसङ्गात् बोधात्मकत्वरहितसतश्च भानाभावप्रसङ्गात्। दृश्यत्वे सत्त्वायोगाच्च सद्बोधात्मकसाक्षिणश्च परमप्रेमास्पदत्वेनानन्दस्वाभाव्यावगमात्। तस्मादौपाधिकव्यक्त्याकारभेदबाधेन सत्यज्ञानानन्दात्मकं ब्रह्मेति निश्चीयते। श्रुतिरपि सत्यज्ञानानन्दात्मकत्वं प्रतिपादयति। "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्मे"ति। अतो निरस्तसमस्तोपाधिके कूटस्थनित्ये अखण्डसच्चिदानन्दैकरसे ब्रह्मणि अयं विप्रः अयं श्वपच इति। तल्लक्षणं स्मर्यते।

द्विजोत्तमायां चण्डालाद्यः पुमान् जायते भुवि।
श्वपचस्स तु विज्ञेयः सर्वशास्त्रविशारदैः॥ इति।

एवं उत्तमाधमभावेन **महानयं विभेदग्रहः कः**[न]कोऽपीत्यर्थः। 'एकमेवाद्वितीय'मिति स्वगतसजातीयविजातीयभेदराहित्यश्रवणात् "मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति" इत्यादिभेददर्शननिन्दाश्रवणाच्च। अतस्सर्वत्राखण्डैकरसे ब्रह्मणि न मनागपि भेदावकाशः। नह्युत्कृष्टनिकृष्टोपाधिभेदेन सर्वत्रैकरसस्य चैतन्यस्य वास्तवभेदः तद्धर्मत्वं वाऽस्ति। तत् कस्मात्? यथा **गङ्गाम्बुनि** भागीरथीपाथसि प्रतिबिम्बिते चण्डालवीथीपयःपूरे नीचवाटिकोदकप्रवाहे वा प्रतिबिम्बितेऽम्बरमणौ सूर्ये किमन्तरमस्ति। अन्तरं भेदो नास्तीत्यर्थः। कथं तर्ह्युभयत्र भेदप्रतीतिरिति चेत्। उपाधित इति ब्रूमः। तथा च श्रुतिः।

यथा ह्ययंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको नु गच्छन्।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा॥ इति।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ इति च।

अतः परमात्मनः सूर्यकादिवदपारमार्थिक एव भेदः। ननु न सूर्यतुल्यत्वमिहोपपद्यते। सूर्यस्य हि रूपवतः परिच्छिन्नस्य रूपवति सलिले प्रतिबिम्बभावः सम्भवति। आत्मनस्तु नीरूपत्त्वादपरिच्छिन्नत्वाच्च कथमनात्मनि देहादौ प्रतिबिम्बभावस्सम्बोभविष्यतीति चेत्। नायं दोषः। युक्त एव त्वयं दृष्टान्तः विवक्षितांशसम्भवात्। नहि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशेन साम्यं पदमजेनापि प्रतिपादयितुं पार्यते। सर्वसाम्ये हि दृष्टान्तदार्ष्टान्तिकाभेदप्रङ्गात्। अस्मिन्नंशे हि साम्यं एकस्सूर्यः उपाधिवशान्नानेव उपाधिगतधर्मवानिव लक्ष्यते। एवं परमात्मा परमार्थत एकोऽपि निर्विकारोऽपि देहाद्युपाध्यन्तस्तावन्नानेव उपाधिर्मान् वृद्धिह्रासादीन् भजत इव उपलक्ष्यत इत्येवं दृष्टान्तदार्ष्टान्तिकभावे किं वा बाधकमस्ति॥ अत एव भगवान् बादरायणः एतदसूत्रयत् "अत एव चोपमा सूर्यकादिवदि"ति। दृष्टान्तान्तरमाह—काञ्चनघटीमृत्कुम्भयोर्वाम्बर इति। यथा परमार्थतः परिपूर्ण एकोऽप्यकाशः रुक्मघटमृद्घटयोरवच्छिन्नतया नानेव परिच्छिन्न इवोपलक्ष्यते। न हि तस्मिन् वास्तवभेदः परिच्छिन्नभावो वास्ति। एवं परमात्मा परमार्थतोऽपरिच्छिन्न एकोऽपि देहाद्यवच्छिन्नत्वेन नानेव परिच्छन्न इवानुभूयमानोऽपि सर्वदा परिपूर्ण एवावशिष्यते। तथा च श्रूयते—

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः॥

"आकाशवत् सर्वगतश्च नित्य" इति। तदुक्तम्—

चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे।
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तमः॥
व्योमवत् सर्वदा व्याप्तः सर्वसम्बन्धवर्जितः।
एकरूपो महादेवस्स्थितः सोऽहं परामृतः॥ इति।

अतः सर्वत्राखण्डैकरसे स्वप्रकाशचिद्घनसदानन्दसान्द्रे परिपूर्ण एकस्मिन् ब्रह्मणि भेदानवकाशात् परनिन्दा कथं सञ्जाघटीतीति भावः।

योऽवस्थात्रयभिन्नसद्भासकस्सच्चिदेकरसमेकम् ।
बोधयति शिष्यवृन्दं परशिवेन्द्रं प्रणौमि यतिचन्द्रम्॥

इत्थमीश्वरवाक्यं निशम्य सर्वज्ञो भगवानाचार्यः सकलसाधनकलापैस्सह श्रुताध्यात्मशास्त्रान् विगलितनिरन्तरनिरतिशयनिजानन्दानुसन्धानतया अनुपशान्तस्वान्तान् अत एवाविगलिताभिमानवतः कांश्चित् पुरुषविशेषान् उपलक्ष्य तेषां विनैव समाधिना ब्राह्मणत्वाद्यभिमानापनुत्तये स्वपदे विश्रान्तये च पञ्चभिः श्लोकैः स्वानुभूतिमाविष्करोति। तत्रापि जाग्रदाद्यवस्थात्रयावभासकत्वेन प्रतीचः परब्रह्माभेदं दर्शयति।

**जाग्रत्स्वप्नसुषुप्तिष्विति**—यदा आदित्याद्यनुगृहीतैश्चक्षुरादीन्द्रियैः शब्दादिस्थूलविषयाणामुपलब्धिस्तदा जाग्रदवस्था। यदा तु चक्षुरादीन्द्रियाणां उपरतत्वेन चित्तस्यापि बाह्यव्यापारोपरमः केवलं वासनामयपदार्थाकारपरिणामेनावस्थानं तदा स्वप्नावस्था। यदा तु कारणभूते भावरूपाज्ञाने इन्द्रियान्तरवच्चित्तमपि प्रविलीयते तदा सुषुप्त्यवस्था। आसु तिसृष्वप्यवस्थासु तदवभासकत्वेन

अनुवर्तमाना स्फुटतरा आविर्भावतिरोभावधर्मरहिता या संवित् चैतन्यैकरसः परमात्मा उज्जृम्भते स्वयमेव प्रकाशते। अत्र **प्राभाकराः** नायमात्मा स्वयमेव प्रकाशते। अपि तु स्वप्रकाशसंविदाश्रयत्त्वेन प्रकाशत इत्याचक्षते। नैतत् सारम्। श्रुतिविरोधात्। श्रूयते ह्यात्मनः स्वयंज्योतिष्ट्वम्। अत्रायं पुरुषस्स्वयंज्योतिरिति। यदुक्तम्—स्वप्रकाशसंविदाश्रयत्त्वेनात्मा प्रथत इति तत्र वक्तव्यम्। येयमर्थप्रकाशरूपा संवित् यस्यामर्थश्चात्मा च प्रथेते सा किं जडा आहोस्विन् अजडा। जडैव चेदर्थात्मनोरपि जडतया अविशेषादशेषस्य जगतः प्राप्तमान्ध्यम्। नन्वभ्युपेयते संविदपराधीन-प्रकाशेति आत्मा तु जड एव स्यादिति चेत्। नैतत् सङ्गतम्। अथात्मसम्बन्धिन्यां संविद्यजडायामपि अर्थात्मनोः प्रकाशमानता न सिद्ध्येत् पण्डितेऽपि पुत्रे पितुरपाण्डित्यवत्। नन्वर्थात्मनोः प्रकाशेन सह संवित्प्रकाशते इति चेत् तत्र वक्तव्यम्। यः संविदः प्रकाशः यश्चार्थात्मनोस्तौ किं संविद-स्सकाशात् भिन्नौ अहोस्विदभिन्नौ। नतावदाद्यः, संविदः प्रकाशव्यतिरेके संविदप्रकाशरूपा सती घटवदस्वप्रकाशा स्यात्। अर्थात्मप्रकाशयोस्संविद्व्यतिरेके संविदर्थप्रकाशा न भवेत्। किं तु ज्ञापिका स्यात्। ननु संविदः अर्थात्मनोश्च प्रकाशौ संविदः सकाशादभिन्नाविति चेत्। न। संविदतिरिक्त-प्रकाशानङ्गीकारे संविदर्थात्मनां साहित्यमुक्तं स्यात्। न हि जात्वर्थसंविदोः सहभावस्सम्भवति। अतीतानागतार्थगोचरायाः संविदोऽर्थसहभावाभावात्। अत्र **कश्चित्** प्रलपति प्रकाशस्य स्वरूपा विषया इति **तदसङ्गतम्**। विषयप्रकाशयोरत्यन्तवैलक्षण्यात्। विषया भिन्नदीर्घस्थूलतयाऽनुभूयन्ते। प्रकाशस्त्वान्तरास्थूलानणवह्रस्वदीर्घतयाऽनुभूयन्ते। अतः प्रकाशादन्योऽर्थोऽनिर्वचनीय इति व्यक्त-मुत्पश्यामः। न चास्य प्रकाशस्याजानतः स्वलक्षणभेदोऽनुभूयते। न चानिर्वाच्यार्थभेदः प्रकाशं निर्वाच्यं भेत्तुमर्हति। तस्मादयं प्रकाश एव स्वप्रकाश एकः कूटस्थो नित्यो निरंशः प्रत्यगात्मेत्य-नवद्यम्। अतः योऽयमवस्थात्रयावभासकत्त्वेन अनुवर्तमानः आविर्भावतिरोभावधर्मरहितः स्वप्रकाश-चिदेकरसः परमात्मा स एवाहमस्मीत्युत्तरेणान्वयः।

एवं अवस्थात्रयावभासकत्त्वेन प्रतीचः परब्रह्मतां प्रदर्श्य व्यष्टिसमष्ट्यात्मकसकलशरीराधिष्ठा-नत्वेन तदवभासकतया प्रत्यगात्मनः परब्रह्मत्वं दर्शयति। या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता आत्मभावेन अवभासकतयाऽवस्थिता या संवित् यो विज्ञानैकरसः परमात्मा। न केवलमयमात्मा देहादिचेतनप्रपञ्चस्यावभासकः अपि तु जगतः प्रपञ्चस्यापीत्याह—**जगत्साक्षिणीति**। साक्षादीक्षत इति साक्षी सर्वस्य जगतः द्रष्टा परमात्मा।

नन्वेतादृश आत्मा अस्ति चेत् किमिति नोपलभ्यत इति चेत्। न, जगदवभासकत्त्वेनोपलभ्य-मानत्वात्। यद्यसौ चिन्मात्ररूपः साक्षी न स्यात्, केन तर्हि प्रकाशेन साक्ष्यं जगत् भायात्। ननु साक्षिस्वरूपवत्साक्ष्यस्यापि स्वत एव भानं किं न स्यात् इति चेत्। न। साक्षिस्फुरणाभावे तस्य जडत्वेन स्वाभाविकस्फुरणासम्भवात्। यद्युच्येत साक्षिणोऽभावेऽपि जडं जगदजडेन ज्ञानाधारेणात्मना तदा ज्ञायत एवेति। हन्त तर्ह्यनात्मा जडः आत्मा चाजड इत्येतत् भानं तव कथं बोभविष्यति। तथा च यो भानविषयः स तावज्जडः। यस्तु दृगाश्रयः सोऽजड इति जडत्वाजडत्त्वे उभे अपि भानाधीन-निरूपणे इत्यवश्यमकामेनापि साक्षिस्वरूपं भानमङ्गीकर्तव्यम्। अत्र **भाट्टाः**—अस्तु भानं तच्च चक्षुरादिवन्निलीनेन विज्ञानेन स्वविषये जन्यत इति जगुः। तन्न सङ्गतमेव स्यात्। यदि हि विषय-स्फुरणरूपं भानं जन्यं स्यात्तर्हि मृज्जन्यघटादिवज्जन्यत्वेन जडमेव स्यात्। अतो विषयवत् भान-स्यापि जडत्वाविशेषात् स्वतः स्फूर्तिर्न स्यात्।

**यत्तावदुक्तम्** भानस्य विज्ञानं जनकमिति तत्र वक्तव्यम् । किं विज्ञानं भानरूपेण परिणमते उत भानस्यारम्भकम् । न तावदाद्यःज्ञानस्याविक्रियत्त्वात् । विकारिण एव हि क्षीरादेर्दध्याद्याकारेण परिणामो दृष्टः । न ह्यविक्रियस्य ज्ञानस्य परिणामः सम्भवति । यदि ज्ञानस्यापि विक्रिया स्यात् तर्हि क्षीरादिवच्चेत्यमेव भवेत् । अतः दृश्यत्त्वे ज्ञानत्वमेव हीयेत । नापि द्वितीयः विज्ञानस्याद्रव्यत्त्वात् । द्रव्यं हि द्रव्यान्तरारम्भकं तन्तुपटादौ तथा दृष्टत्त्वात्, न हि ज्ञानं द्रव्यं, गुणत्वेन परैरङ्गीकारात् । अतो भानस्याद्रव्येण सता ज्ञानेन आरम्भो न युक्तः । अपिचारम्भवादे ह्यसदेव कार्यमुत्पद्यत इति स्थितिः । तथा चासतस्स्द्रूपभानस्य ज्ञानमारम्भकमिति न युक्तम् । यदि हि ज्ञानमसदपि भानमारभेत । हन्त तर्ह्यसत्त्वाविशेषाद्वन्ध्यापुत्रादेरारम्भकं स्यात् । तस्मात् परिणामारम्भकत्वव्यतिरेकेणोत्पादकत्वानिरूपणात् विज्ञानेन भानं नोत्पद्यते । एवं विज्ञानमपि न जन्यते । यदि हि विज्ञानं जन्यं स्यात्तर्हि जन्यत्वेन हेतुना जडमेव स्यात् । ननु रूपादिविषयैश्चक्षुरादिसम्प्रयोगानन्तरं रूपादिविषयं ज्ञानं दृश्यते । तर्हि तस्य का गतिरिति चेत् । नैष दोषः । ज्ञानस्य जन्यत्वप्रतीतेर्भ्रान्तिरूपत्त्वात् । कस्मात् ? विषयाकारपरिणतान्तःकरणवृत्तिर्हि तत्र जन्यते । अतस्तदीयजन्यत्त्वं तदवच्छिन्ने चैतन्येऽपि स्फटिकादौ लौहित्यमिवावभासते । अतो भ्रान्तिरेव ज्ञाने जन्यत्वप्रतीतिः । एवं घटादिविषयस्फुरणरूपस्य भानस्यापि जन्यत्वप्रतीतिर्भ्रान्तिरेव । तस्याप्युत्पत्तिमद्वृत्तिज्ञानान्वयव्यतिरेकानुविधायित्वेन तस्यैव जन्यत्वस्य तत्रावभासनात् । तस्मादजन्यत्वात् विज्ञानं सत्यमेव तदभेदात् भानमपि सत्यमेव । तथा चायं प्रयोगः—विमतं सत्यं भावत्त्वे सत्यजन्यत्त्वादात्मवत् । अत एव न प्रागभावेऽनैकान्तिकता । तस्य भावत्त्वाभावात् । तस्मात्तदिदं भानमेव चिन्मात्ररूपः साक्षीत्यनवद्यम् । अतः सर्वेषु शरीरेष्वात्मत्वेनावस्थितः सर्वस्य जडप्रपञ्चस्य अवभासकः चिन्मात्ररूपः साक्षी यः परमात्मा स एवाहमस्मि न च दृश्यवस्तु देहादिकं नास्ति । तस्य स्वरूपयाथात्म्यज्ञानेन बाध्यमानत्त्वात् । एवं यस्य दृढप्रज्ञाऽस्ति । किमिदं प्रज्ञानस्य दाढर्यं ? यथा बहुजन्मसु दृढं भावितत्त्वेन अस्मिन् जन्मनि विनैव परोपदेशं कामादय उत्पद्यन्ते । तथा दीर्घकालनैरन्तर्यसत्कारैर्भाविते तत्त्वे पश्चाद्वाक्ययुक्तिपरामर्शमन्तरेणैव पुरोवर्तिघटादिवत् सहसा तत्त्वं परिस्फुरति चेत् तदिदं प्रज्ञानस्य दाढर्यं नाम । एतादृश तत्त्वज्ञानं यस्यास्ति स तु ब्रह्मैवेति कृत्वा चण्डालो वास्तु । तल्लक्षणम् स्मर्यते । "शूद्राद्विप्राङ्गनायां तु चण्डालो नाम जायते" इति । द्विजो वास्तु गुरुरिति मम मनीषा । ननु चाण्डालस्य कथं गुरुत्वमिति चेत् । न, नित्यशुद्धासङ्गात्मविज्ञानेन जातिकुलाद्यभिमाननिवृत्तेः सोऽन्त्यजोऽपि शुद्ध एव । तथा च स्मर्यते ।

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि च जातानां वृत्तमेव विशिष्यते ॥ इति ।

अतः ब्रह्मात्मैक्ये न किञ्चित् बाधकमिति भावः । ननु—

"यतो वा इमानि भूतानि जायन्ते" इत्यादिना ब्रह्मणो जगत्कारणत्त्वश्रवणात् प्रत्यगात्मनस्तदन्तर्भावात् कथमुभयोरैक्यमिति चेत् । नायं दोषः । त्रिगुणात्मिकाऽविद्यासध्रीचीनेन प्रत्यगात्मना द्रष्ट्रा स्वप्नप्रपञ्चवत् सर्वस्य मेश्वरस्य दृश्यजातस्यापि कल्पितत्त्वात् । तदुक्तम्—

यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।
एवं जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः ॥ इति ।

**ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं**
**सर्वं चैतदविद्यया त्रिगुणया सेशं मया कल्पितम् ।**
**इत्थं यस्य दृढा मतिस्सुखतरे नित्ये परे निर्मले**
**चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ २ ॥**

---

एवं प्रत्यगात्मनो जगत्कारणत्त्वसम्भवात् परब्रह्मत्त्वं सङ्घटते। अपि च "तत् सृष्ट्वा तदेवानुप्राविशत्। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"त्यादिश्रुतेः परब्रह्मैव हि साक्षात् प्रत्यगात्मा। अत एव हि तत्त्वमस्यादिका श्रुतिः जीवभावापन्नस्य यत् स्वाभाविकमद्वितीयं परब्रह्मात्मत्वं तत् प्रतिपादयन्ती जगत्कारणत्वोपाधिकं यत् सर्वज्ञत्वादिलक्षणम् यच्चाज्ञानतत्कार्योपाधिकं सर्वप्रत्यग्रूपं चैतन्यं तदुभयं एकमेवेति सोऽयं देवदत्त इतिवत् विरुद्धांशपरिहारेणैक्यं बोधयति।

**अत्र केचिदाहु**—आत्मनो जीवत्त्वं न भ्रान्तिसिद्धम्। अपि तु स्वाभाविकमेवेति। तद्वार्तामात्रमेव स्यात्। तत् कस्मात् यद्यात्मनो जीवत्त्वं स्वाभाविकं स्यात् तर्हि तस्य मुक्त्यवस्थायामपि निवृत्तिर्न स्यात्। स्वभावस्यानपायात्। अतो मुक्तानामपि सुखदुःखानुवृत्तिः स्यात्। ननु यथा आम्लसम्पर्कात् ताम्रस्य स्वभावभूतं मलं निवर्तते एवं केनचित् परमेश्वरसमाराधनादिना साधनेन जीवस्य सुखदुःखादिसंसारानुभवात्मकजीवत्त्वनिवृत्तौ सत्यां परब्रह्मसायुज्यरूपा मुक्तिः किं न स्यात् इति चेत्। नैतत् सारम्। तत् कथं, यथा अग्नेः स्वभावभूतस्य दहनप्रकाशनादेर्विनाशो नास्ति, एवं स्वाभाविकस्य जीवत्वस्यापि विनाशो दुर्घट एव स्यात्। ननु मणिमन्त्रादिसामर्थ्यादग्नेरुष्णप्रकाशयोर्निवृत्तिमुपलभामहे तद्वत् साधनवैचित्र्यात् स्वाभाविकजीवत्त्वस्यापि निवृत्तिः किं न स्यात् इति चेत् तदज्ञानविजृम्भितमेव स्यात्। तत् कस्य हेतोः अग्नेः स्वभावभूतमौष्ण्यादिकं मणिमन्त्रादिसामर्थ्यात् प्रतिबद्धमेव केवलं न तु नष्टम्। एवमेव सुखदुःखादिलक्षणस्य स्वाभाविकस्य जीवत्त्वस्य केनचित् साधनेन प्रतिबन्ध एव केवलं स्यात्। न तु नाशः। तस्मादयं जीवः यदि परमार्थतो ब्रह्मणोऽन्यः स्यात् तर्हि साधनशतेनापि तस्य ब्रह्मभावो न घटत एव। ननु न वयं जीवस्य ब्रह्मतादात्म्यलक्षणां मुक्तिं ब्रूमः। अपि तु तत् साम्यमिति केचिदिच्छन्ति। तद्वार्तामात्रमेव। कस्मात् विकल्पासहत्त्वात्। तथा हि—जीवस्य किमेकदेशेन ब्रह्मसाम्यं विवक्षितम् उताहो सर्वात्मना ? एकदेशेन चेत् संसारिणामपि जीवानां चेतनत्वादिना एकदेशेन परब्रह्मसाम्यसम्भवादयत्नेन तेऽपि मुक्ताः स्युः। यदि सर्वेणैवाकारेण ब्रह्मसाम्यं विवक्षितं स्यात्तर्हि तत्साम्यं न युज्यते। केनचिदाकारेण व्यावृत्तयोरेव हि समानधर्मयोगादुपमानोपमेयभावः। इह तु सर्वात्मना समानयोर्जीवब्रह्मणोर्भेदजनकव्यावृत्ताकारविरहात्। अत एव भेदाभावाच्च जीवः परब्रह्मैव स्यात्। न तु ब्रह्मसम इत्येतदनवद्यम् ॥ १ ॥

तस्मात् सच्चिदानन्दैकरसः साक्षात् परमात्मैव सत्त्वपरिणामरूपनानाविधतत्तदन्तःकरणोपहितः सन् अनपक्रान्तात्मभावेन नानाविधजीवभावं भजते। स च जीवभावापन्नः स्वात्मनः परब्रह्मात्मत्त्वज्ञानेन स्वस्वरूपस्याच्छादकं भावरूपाज्ञानं तत्कार्यं संसारं चात्ममात्रतया विलापयन् स्वयमेव स्वप्रकाशचिदानन्दस्वरूपेणावशिष्यते। एवं प्रत्यग्ब्रह्मणोरैक्ये किं बाधकमित्यभिप्रेत्याह—**चिन्मात्रविस्तारितमिति** हेतुगर्भविशेषणं चिन्मात्रविस्तारितत्त्वात् चिन्मात्रे ब्रह्मण्यध्यस्तत्त्वादिदं सर्वं जगच्चिन्मात्रं ब्रह्मैवेत्यर्थः। त्रिगुणया अविद्यया साधनेन मया प्रत्यगात्मना द्रष्ट्रा एतत् सर्वं

**शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरो-**
**र्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।**
**भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके**
**प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ३ ॥**

---

दृश्यजातं सेश्वरं जगत् कल्पितम् । यतः अतः जगदधिष्ठानभूतं चिन्मात्रं ब्रह्मैवाहमस्मि । इत्थमनेन प्रकारेण सुखतरे निरतिशयानन्दैकरसे नित्ये ध्रुवे। अत एव परे सर्वोत्कृष्टे। अत एव च निर्मले अज्ञानतत्कार्यमलरहिते स्वप्रकाशचिदेकरसे ब्रह्मणि यस्य मुमुक्षोर्मतिर्दृढा भवति निरतिशयानन्दनित्यशुद्धस्वप्रकाशचिदेकरसब्रह्मविषयकसाक्षात्कारो दृढो भवति । स तु नित्यशुद्धब्रह्मैवेति कृत्वा चण्डालो वा भवतु द्विजो वा भवतु गुरुरिति मम मनीषेत्यन्वयः। अतः प्रत्यग्ब्रह्मणोरैक्यं सुघटत इति भावः ।

नन्वेवमप्यविसम्वादिव्यवहारदर्शनात् आरोपितरजतादिवैलक्षण्यात् पारमार्थिकमेवेदं जगत् । अतः कथमद्वैतसिद्धिरिति चेत् । न । दृग्रूपे अद्वैते ब्रह्मण्यध्यस्तत्त्वेन शुक्तिरूप्यवदसत्यत्त्वात् । ननु कथं चैतत् प्रपञ्चस्याध्यस्तत्त्वमिति चेत् । अविसम्वादिव्यवहारदर्शनेऽपि दृश्यत्वात् शुक्तिरूप्यवत् इति ब्रूमः ।

न च दृश्यत्वहेतोः पक्षधर्मताऽसिद्धिरिति वाच्यम् । द्वैतप्रपञ्चस्य स्वतो जडत्त्वेन दृग्रूपेण स्वप्रकाशब्रह्मस्वरूपचैतन्येनावभास्यमानत्त्वात् दृश्यत्त्वहेतुः कृत्स्नपक्षं व्याप्य वर्तत इति । एतत् सार्वपरिषम् । तस्मात् आरोपितद्वैतप्रपञ्चोऽसत्य एव। नन्वेवमद्वितीयस्यात्मनोऽप्यसत्त्वं किं न स्यादिति चेन्न अद्वितीयात्मनो दृग्रूपतया दृश्यत्वाभावेन अध्यस्तत्त्वासम्भवात् । यद्यद्वैतमपि द्वैतवदध्यस्तं स्यात् तर्हि तस्य केन चिदधिष्ठानेन भवितव्यम् । निरधिष्ठानभ्रमानुपपत्तेः । किं तदधिष्ठानं अद्वैतमेव उत द्वैतमपि, न तावदग्रिमः आरोप्यादद्वैतात् अन्यस्याद्वैतान्तरस्याभावात् । नापि चरमः । अद्वैतस्य केवलं कल्पिते द्वैते अध्यासासम्भवात् । लोके हि परमार्थभूते शुक्तिकाशकलादौ रजताध्यासस्य दृष्टत्वात्तदनुसारेणाद्वैताध्यासस्यापि अधिष्ठानत्त्वेन तत्त्वभूतमेव किञ्चित् वक्तव्यम् न परिकल्पितम् । ननु भवतु लोके सत्याधिष्ठानत्वं अद्वैताऽध्यासे अन्यस्यासम्भवात् कल्पितस्यैवाधिष्ठानत्वमिति नियमः किं न स्यादिति चेत् । न । द्वैतस्याध्यस्तैकशरीरत्त्वात् । अध्यस्तस्य चाधिष्ठानात् ब्रह्मस्वरूपादनतिरेकादेकस्यैवाधिष्ठानत्वमारोप्यत्वञ्चेति व्याहतमेव प्रसज्येत । किञ्च यदि द्वैताद्वैते उभे अप्यारोपिते स्याताम् तर्हि तद्व्यतिरिक्तस्य वस्त्वन्तरस्याभावात् निरधिष्ठानभ्रमः प्रसज्येत । ननु शून्यमेवोभयोरधिष्ठानमस्त्विति चेत् । न । निस्स्वरूपस्य शून्यस्य केनचिदाकारेण निर्वक्तुमशक्यत्वेनाधिष्ठानत्वबाधावधित्वलक्षणधर्मयोगासम्भवात् । प्रपञ्चितमेतत् **रत्नदीधितौ** ॥ २॥

तस्मादद्वैतस्याध्यासासम्भवात् द्वैतस्य चाद्वैते स्वप्रकाशचिदेकरसे ब्रह्मण्यध्यस्तत्त्वेनासत्यत्त्वात् सत्यज्ञानानन्दैकरसं एकं अद्वितीयं ब्रह्मैवावशिष्यते।अतो न काचनानुपपत्तिरित्यभिप्रेत्याह—**शश्वदिति। गुरोर्वाचा** इदं विश्वं शश्वदनुक्षणं नश्वरमेवेति निश्चित्य नित्यं कालत्रयाबाध्यं निरस्तसमस्तप्रपञ्चं स्वप्रकाशचिदेकरसं सदानन्दघनमद्वितीयं ब्रह्म यत्तदेवाहमस्मीति निरन्तरं एतत् दीर्घकालादेरप्युपलक्षणं विमृशता विमर्शोऽत्र भावना । अत एव भगवान् **पतञ्जलि**रेतदसूत्रयत्—आदरनैरन्तर्यदीर्घकालसत्कारासेवितो दृढभूमिरिति । तथा चायमर्थः सम्पन्नः—विधिवत् सर्वकर्माणि संन्यस्य नैरन्तर्य-

दीर्घकालसत्कारैः दृढमसङ्गचिद्रूपमखण्डैकरसं ब्रह्माहमिति भावयेदिति। ब्रह्मभावनाप्रकारस्तु भगवत्पादैरेव दर्शितः।

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ओमिति॥

ननु कथं सर्वकर्मसंन्यासित्वं घटते। ज्ञानकर्मणोरङ्गाङ्गिभावेन समुच्चयसम्भवात् इति चेत्। नैतत् सारं, उभयोः परस्परविरोधात्। तथा हि—सर्वानर्थप्रपञ्चस्य मूलभूतं प्रत्यगात्मनः पारमार्थिकपरब्रह्मस्वरूपत्वाच्छादकं अज्ञानम्। तस्मिन् सविलासे सत्येव कर्म तत्प्रसादेन स्वात्मानं लभते। औपनिषदमद्वितीयात्मज्ञानं तु अज्ञानम् तत् कार्यं च प्रत्यगात्मन्युपाधिवशात् भासमानकर्मापेक्षितकर्तृभोक्तृत्वादिसकलानर्थं विलापयदेवाविर्भवति। तथा च ज्ञानकर्मणोस्सहावस्थानविरोधादङ्गाङ्गिभावेन समुच्चयो न घटत एव। अपि च स्वर्गपशुपुत्रादिकं स्वल्पमेव फलं कर्म प्रयच्छति। ज्ञानं तु परमानन्दावाप्तिलक्षणं परिपूर्णं फलं प्रयच्छति। अतोऽधिकफलं ज्ञानं न्यूनफलस्य कर्मणोऽङ्गं इत्येतन्न युक्तम्। अफलस्य हि प्रयाजादेः कैमर्थ्यवशात् फलवत्सन्निधावफलं तदङ्गमिति न्यायेन फलवदाग्नेयादियागशेषत्वं दृश्यते। ज्ञानस्य तु पृथक् फलसद्भावस्य श्रुतत्वेन फलाकाङ्क्षाया अभावान्नास्य शेषत्वम्। ननु यथा प्रयाजविधिवाक्यशेषेण वर्म वा एतद्यज्ञाय क्रियते इत्यादिना श्रुतस्य फलस्य अङ्गेषु फलश्रुतिः अर्थवाद इति न्यायेनार्थवादत्वम्। तथा ज्ञानफलस्यापि अर्थवादत्वात् प्रयाजादिवदङ्गत्वं किं न स्यात् इति चेत्। न। प्रयाजादेर्हि दर्शपूर्णमासप्रकरणपठितत्वेनाङ्गभावस्य निर्णीतत्वाद्युक्तं तदीयफलश्रवणस्यार्थवादत्वं न तथा ज्ञानं कस्यचित् कर्मणः प्रकरणे स्थितं येन फलश्रुतेरर्थवादता कल्प्येत। अतः प्रकरणभेदादपि ज्ञानस्य न कर्माङ्गत्वम्। अपि च स्वर्गपुत्रादिफलरागयुक्तः कर्मण्यधिकारी। ज्ञाने तु वैराग्ययुक्त इत्यधिकारिविशेषमुपादाय प्रवृत्तत्वात् ज्ञानस्य न कर्माङ्गत्वं। स्वरूपभेदाच्च। अज्ञानकार्यत्वात् कर्म अप्रकाशात्मकं स्वप्रकाशात्मकब्रह्मात्मकत्वात् ज्ञानं प्रकाशात्मकम्। तथा च तमःप्रकाशयोरिवानयोस्सहावस्थानानुपपत्त्या कथमङ्गाङ्गिभावेन समुच्चयस्सम्भवति। तस्मात् सर्वकर्मसन्यासः सम्यगुपपद्यते। अत एव श्रुतिस्मृतयो विविदिषाविद्वत्प्रभेदेन परमहंससंन्यासं प्रतिपादयन्ति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एवं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति।

ब्रह्मविज्ञानलाभाय परहंससमाह्वयः।
शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत्॥
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम्।
तस्मात् ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्॥
यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम्।
तदैकदण्डं सङ्गृह्य सोपवीतां शिखां त्यजेत्॥
ज्ञात्वा सम्यक् परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत्॥

इत्येवमाद्याः—अतः सुष्ठूक्तम्—**निरन्तरं विमृशतेति**। निरन्तरं निरतिशयानन्दब्रह्मभावनायामुपायमुपदर्शयन्नाह—**निर्व्याजशान्तात्मनेति**। निर्गतः व्याजः दम्भः दर्पादेरप्युपलक्षणम्। शान्तः नष्टः आत्मा मनः। तथा च दम्भदर्पाद्यशुभवासनाक्षयः मनोनाशश्च यस्य विदुषस्तेनेत्यर्थः।

ननु के ते वासनामनसो ? कथं नाम तयोर्नाश इति चेत् तच्छृणु—पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य दम्भदर्पादिवृत्तिविशेषस्य हेतुश्चित्तगतसंस्कारो वासना पूर्वाभ्यासेन चित्तस्य वास्यमानत्वात्। तदुक्तम्—

दृढभावनया त्यक्तपूर्वापरविचारणम्।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ।। इति।

तस्या वासनाया क्षयो नाम विवेकजन्यायाममानित्वादिदैववासनायां दृढायां सत्यां बाह्यनिमित्तेन दम्भाद्यनुत्पत्तिः। प्रदीपज्वालासन्तानवत् वृत्तिसन्तानरूपेण परिणममानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते। तस्य च मनसो नाशो नाम वृत्तिरूपपरिणामं परित्यज्य निरुद्धाकारेण परिणामः। तथा च योगशास्त्रे **पतञ्जलिः** सूत्रयामास—व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणाम इति। व्युत्थानसंस्कारा अभिभूयन्ते। निरोधसंस्काराः आविर्भवन्ति। निरोधक्षणास्तु चित्तेनान्वीयन्ते। सोऽयं मनोनाश इत्यवगन्तव्यम्। तत्र मनोनाशाभावे वृत्तिषूत्पद्यमानासु कदाचित् बाह्यनिमित्तेन दम्भाद्युत्पत्तेर्नास्ति वासनाक्षयः। अक्षीणायां च वासनायां तथैव वृत्त्युत्पादनान्नास्ति मनोनाशः। तथा चोक्तम्—

यावद्विलीनं न मनो न तावत् वासनाक्षयः।
न क्षीणा वासना यावत् चित्तं तावन्न शाम्यति ।। इति।

तथा च मनसो दम्भादिवृत्त्यनुदयान्मनो नश्यति। अनेन वासनाक्षयमनोनाशयोरपि परस्परसाधनत्वमुक्तं भवतीति द्रष्टव्यम्। नन्वस्त्वेतत्, वासनाक्षयमनोनाशयोः ज्ञानसाधकत्वं क्व प्रसिद्धमिति चेत् श्रुतिस्मृतिष्विति ब्रूमः।

तथाहि—आसुरवासनाक्षयकारिण्याः दैववासनायास्तत्त्वज्ञानसाधनत्वं श्रुतिस्मृत्योरुपलभ्यते। "शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्यती"ति श्रुतिः। स्मृतिरपि च।

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।।
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ।।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।। इति।

अन्यस्मिन् अहंबुद्धिरभिष्वङ्गः ।
ज्ञायतेऽनेन इति व्युत्पत्त्या ज्ञानं ज्ञानसाधनमित्यर्थः ।।

मनोनाशस्यापि ज्ञानसाधनत्त्वं श्रुतिस्मृतिप्रसिद्धम् । "ततस्तु तं पश्यते निष्कल ध्यायमानः" इति श्रुतिः । "अध्यात्मयोगाधिगमेन देवं मत्त्वा धीरो हर्षशोकौ" जहाति ।। इति च ।

प्रत्यगात्मसमाधिप्राप्त्या देवं ज्ञात्त्वेत्येर्थः ।।
यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै विद्यात्मने नमः ।। इति स्मृतिः ।

इत्थं तत्त्वज्ञानस्य साधनं प्रदर्श्य फलं प्रदर्शयन्नाह—**भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावक** इति । भूतमप्रवृत्तफलं जन्मान्तरसञ्चितम् । अस्मिन्नपि जन्मनि प्राक् ज्ञानोत्पत्तेः सञ्चितम् । भावि च ब्रह्मसाक्षात्कारादूर्ध्वं देहेन्द्रियव्यापारवशात् सम्भावितञ्च दुष्कृतं संविन्मये स्वप्रकाशचिदेकरसे सर्वाधिष्ठानभूते पावके ब्रह्माग्नौ प्रदहता स्वव्यतिरेकेणाभावादिति प्रविलापयतेत्यर्थः । नाभुक्तं क्षायते कर्म कल्पकोटिशतैरपि" इति पापाविनाशस्य सर्वशास्त्रसिद्धत्त्वात् ब्रह्मज्ञानिनोऽप्यस्ति पापलेप इति चेत् । न । अत्र तावत् ब्रह्मात्मतत्त्वविदः पापलेपशङ्काऽपि नोदेति । नाकार्षं न करोमि न करिष्यामीति कालत्रयेऽप्यकर्तृब्रह्मस्वरूपत्त्वेन निश्चितत्त्वात् । न ह्यकर्तुः पापलेपं मन्दा अपि शङ्कन्ते । कुतः ? अश्लेषविनाशयोः श्रुतत्त्वात् । श्रूयते हि ब्रह्मसाक्षात्कारादूर्ध्वं देहेन्द्रियव्यवहार-वशात् सम्भावितस्य पापस्याश्लेषः । "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति । साक्षात्कारात् पूर्वं इह जन्मनि जन्मान्तरेषु च सञ्चितस्य पापसङ्घस्य विनाशः श्रूयते—"तद्यथेषोकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति । अत एव भगवान् बादरायणः "**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादि**"त्यधिकरणेनैतत् प्रतिपादयामास । नाभुक्तमित्यादिशास्त्रं तु ब्रह्मज्ञानरहितविषयम् । तस्मान्नास्ति ज्ञानिनः पापलेपः । ननु माभूत् पापलेपः । पुण्यलेपस्तु विद्यते । पुण्यस्य श्रौतत्त्वेन श्रौतब्रह्मज्ञानेन सहाविरोधादिति-चेत्, न। अकर्त्रात्मवस्तुबोधसामर्थ्यात् पापवत् पुण्येनापि न लिप्यते। पापवत् पुण्यमपि जन्महेतुत्त्वात् पापसममेवेति पापत्त्वेनैव श्रुतिः परामृशति—"सर्वे पाप्मानोऽतोनिवर्तन्ते" इति । किञ्च "उभे उ हैवैष एते तरती"ति श्रुतिः पुण्यपापयोरुभयोर्ज्ञानिना तरणं सममेव ब्रूते । अत एव भगवान् बादरायणः "**इतरस्याप्येवं असंश्लेषः पाते तु**" इत्यधिकरणेन ज्ञानिनः पुण्येनापि न लिप्यन्ते—इत्यूचे । अतः मूले दुष्कृतपदं सुकृतस्याप्युपलक्षणमिति व्याख्येयम् ।।

ननु ज्ञानात् पूर्वं सञ्चितपुण्यपापे द्विविधे आरब्धफले च तयोर्द्विविधयोरप्यकर्तृत्त्वमात्मनः समानम् । तद्बाधश्च समः । ततोऽनारब्धवदारब्धयोरपि ज्ञानोदयसमय एव विनाशः किं न स्यादित्या-शङ्क्याह—**प्रारब्धाय समर्पितं स्ववपुरिति ।** प्रारब्धाय प्रारब्धफलाय सुकृताय दुष्कृताय च स्ववपुस्समर्पितं, तत्त्वविदोऽपि आदेहपातमाभासमात्रेण संसारोऽङ्गीकर्तव्य इति फलितार्थः । यदुक्तम् अनारब्धवदारब्धस्यापि नाशः किं न स्यदिति । तन्न । कस्मात् ? श्रुत्यनुभवयुक्तिभ्यः आरब्धफलयोः कर्मणोरविनाशोऽवगम्यते—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रुतिः । यथा अनया श्रुत्या तत्त्वविदोऽप्यादेहपातं संसारोऽङ्गीकृतः तथा विद्वदनुभवोऽप्यस्मिन्नर्थे स्फुटः ।

युक्तिश्चोच्यते। यथा तूणनिष्ठेषु बाणेषु धानुष्कस्य स्वीकारपरित्यागयोः स्वातन्त्र्येऽपि मुक्ते बाणे स्वातन्त्र्यं न दृश्यते। स च बाणो वेगे क्षीणे स्वयं पतति। एवं कुलालचक्रभ्रमणमुदाहर्तव्यम्। एवं ब्रह्मज्ञानस्यापि अनारब्धकर्मनाशकत्त्वे स्वातन्त्र्यमस्तु, न त्वारब्धे कर्मणि, आरब्धस्य प्रवृत्तफलत्वात्। तस्मान्नारब्धफलयोः सुकृतदुष्कृतयोर्नाशः। अत एव भगवान् बादरायणः "**अनारब्धकार्ये एव तु पूर्वे तदवधेरि**"त्यधिकरणेन इममर्थं प्रतिपादयामास। ननु केन तर्ह्यारब्धपुण्यपापयोः क्षयः इति चेत् भोगेनेति ब्रूमः। तथा च विद्वान् भोगेन पुण्यपापे क्षपयित्वा अखण्डसच्चिदानन्दैकरसं अद्वितीयं ब्रह्म प्राप्नोति। तथा च श्रूयते—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इति। "ब्रह्मैव सन् ब्रह्माप्येती"ति च। अत एव भगवान् बादरायणोऽपि एतदसूत्रयत्। "**भोगेन त्वितरे क्षपयित्वा सम्पद्यत**" इति। एतत् भगत्पादैरेवोक्तम्—

प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत्।
कञ्चित्कालमनारब्धकर्मबन्धस्य संक्षये॥
निरस्तातिशयानन्दं वैष्णवं परमं पदम्।
पुनरावृत्तिरहितं कैवल्यं प्रपिपद्यते॥ इति।–(वा० वृत्तिः)

इतिशब्दो हेतौ। येनैतादृशेन विदुषा स्ववपुः प्रारब्धाय समर्पितं यतः अतः स गुरुरिति मम मनीषेत्यन्वयः। तस्मात् ब्रह्मात्मैक्ये न किञ्चित् बाधकमिति भावः। नन्वेवमपि स्थूलोऽहं कृशोऽहं काणोऽहं बधिरोऽहं बुभुक्षितोऽहं पिपासितोऽहं मन्ताऽहं निश्चेताऽहमिति देहादिरूपेण अनुभूयमानप्रत्यगात्मनः कथं स्वप्रकाशचिदेकरसब्रह्मत्वमिति चेन्न। ममेदं चक्षुः ममेदं श्रोत्रं ममायं प्राणः ममेदं मनः ममेयं बुद्धिरिति देहेन्द्रियादय इदङ्कारास्पदत्वेन अनुभूयन्ते। आत्मा तु देहेन्द्रियप्राणमनोबुद्धिभ्योऽपि भिन्नतया देवतिर्यङ्मनुष्यादिभिः सर्वैः जन्तुभिरहमहमित्यन्तःस्फुटतरमहंप्रत्ययालम्बनत्वेनानुभूयते। अतः इदङ्कारास्पददेहेन्द्रियादीनां घटादिवदात्मत्वाभावेन सिद्धमहमर्थस्यैव प्रत्यगात्मतया तया स्वप्रकाशचिदेकरसब्रह्मत्वम्। तदुक्तम्—

इदंबुद्धिश्च बाह्यार्थे त्वहंबुद्धिस्तथाऽऽत्मनि।
प्रसिद्धा सर्वजन्तूनां विवादोऽत्र न कश्चन॥
इदमर्थे घटाद्यर्थे नात्मत्वं सर्वदेहिनाम्।
अहमर्थे तथात्मत्वमपि सिद्धं स्वभावतः॥ इति।

नन्वहं मनुष्य इत्यादौ मनुष्यत्वादिधर्मयुक्तदेहादिसमानाधिकरणाहंप्रत्ययस्य तद्विषयत्वमनुभवसिद्धमिति चेन्नैष दोषः। चिद्भास्यत्वलक्षणयोगान्निश्चितेदमर्थे शरीरादौ जायमानोऽहंप्रत्ययः स्फटिके रक्तिमबुद्धिवत् भ्रान्तिरेव। अतस्मिन् तद्बुद्धिर्विपर्यय इति तल्लक्षणयोगात्। अपि चान्नपरिणामरूपत्वात् जडं स्थूलशरीरं तावदहंप्रत्ययस्य नालम्बनम्। तदनालम्बनत्वस्य मृत्पिण्डादौ जडे दृष्टत्वात्, अतोऽहंबुद्ध्यनालम्बनत्वात् स्थूलदेहो नात्मा। अत एवेन्द्रियप्राणमनोबुद्धयः स्थूलशरीरवदचिद्रूपत्वेन अहंबुद्ध्यनालम्बनत्वात् नात्मानः। नन्विन्द्रियादीनां चिद्भास्यत्वादस्त्वहंबुद्ध्यविषयत्वम्। बुद्धिस्तु चिद्रूपैव। तस्मात्तदनालम्बनत्वमयुक्तमिति चेत्। न, तस्या उत्पत्तिविनाशधर्मवत्त्वात् घटादिवदचिद्रूपत्वेन अहंप्रत्ययानास्पदत्वं युक्तमेव। नन्वहङ्कारस्य अहंबुद्ध्यालम्बनत्वेन आत्मत्वमस्त्विति चेत्। न। तस्यापि सत्वपरिणामरूपान्तःकरणकार्यतया चिद्भास्यत्वेन जडत्वात् घटादि-

**या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते**
**यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ।**
**तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्**
**योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ४ ॥**

---

वदहंप्रत्ययानालम्बनतया नात्मत्वम् । अपि च अहङ्कारस्तावदात्मा न भवति । अहं सुखी अहं दुःखीति सर्वप्रत्ययरूपेण विवर्तमानतया विकारित्वात् शरीरवत् । किञ्च दध्याकारपरिणामिनः क्षीरादेरनित्यत्वं लोकप्रसिद्धम् । तद्वत् सर्वप्रत्ययात्मना परिणममानस्याहङ्कारस्य तथाविधमचेतनत्वं केन निवारयितुं पार्यते । तस्माद्देहेन्द्रियादीनां चिद्भास्यत्वेन घटादिवत् परागर्थत्वात् प्रत्यग्भूतः साक्षी चिन्मात्ररूप एव आत्मा अहंप्रत्ययस्य विषयः, नाचिद्रूपं जडं देहेन्द्रियादिकम् । ननु यदि चिन्मात्ररूप आत्मा अहंबुद्धिविषयः तर्हि तस्य स्वप्रकाशत्वभङ्ग इति चेत् नैष दोषः । सर्वान्तरस्य प्रत्यगात्मनोऽहंप्रत्ययविषयत्वे सत्यप्यसौ स्वयंप्रकाशमान एव भवति । ननु बुद्धिवृत्तिविषयत्वं स्वप्रकाशत्वं च परस्परविरुद्धमिति चेत् । नायं दोषः । प्रत्यगात्मनः सत्यपि बुद्धिवृत्तिव्याप्यत्वे घटकुड्यादिवत्, स्फुरणं तदधिकम् । किं तु स्वच्छां बुद्धिवृत्तिमनुप्राप्य तस्या वृत्तेर्भासकसाक्षिचिद्रूपेणायं अवस्थितः सन् स्वयमेव प्रकाशते । नन्वहमर्थश्चिदात्मा स्वयं प्रकाशमानश्चेदहंवृत्तिस्तर्हि किमर्थेति चेत् । आत्मस्वरूपावरणभूताज्ञाननिवृत्त्यर्थेति ब्रूमः । तथा चोक्तम्—

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयं स्फुरणरूपत्वात् नाभास उपयुज्यते ॥ इति

अज्ञाननिवृत्तिरपि स्वप्रकाशचिन्मात्ररूपेणावशिष्यते । तदुक्तम्—अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः इति ॥ ३ ॥

तस्मात् स्वप्रकाशचिदेकरसः कूटस्थो नित्यः प्रत्यगात्मा अहमर्थः, स च स्वप्रकाशचिदेकरसं ब्रह्मैवेत्यनवद्यमित्यभिप्रेत्याह—**या तिर्यगिति**। तिर्यञ्चः कीटपतङ्गादयः । एतैस्तिर्यगादिसर्वजन्तुभिरहमित्यहंप्रत्ययालम्बनत्वेन अन्तःसर्वान्तरतया स्फुटा प्रकाशान्तरनिरपेक्षतया स्वयंप्रकाशमाना या स्फूर्तिः चिदेकरसः परमात्मा गृह्यते अनुभूयते । न देहेन्द्रियादयः । कुत इति चेत् । तेषां स्वतो जडत्वेन चिद्भास्यत्वादित्याह—**यदिति**। स्वतोऽचेतनाः हृदयाक्षदेहविषयाः यद्भासा यस्य स्वप्रकाशचिदेकरसस्यात्मनो भासा प्रकाशेन भान्ति । 'तस्य भासा सर्वमिदं विभाती'तिश्रुतेः । तदुक्तम् —

अजडात्मवदाभान्ति यत्सान्निध्याज्जडा अपि ।
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ इति ।

ननु यद्ययमात्मा स्फुटतरमहंप्रत्ययगम्यः स्यात्तर्ह्ययत्नेन सर्वे जन्तवः किमिति न मुक्ताः स्युरित्याशङ्क्याह—प्रत्ययालम्बनत्वेनात्मानं जानन्तोऽप्यसङ्गचिदानन्दस्वरूपत्वेन चिद्भास्याज्ञानपटलावृताः विविच्य न जानन्ति । यथा आदित्यावभास्याभ्रावृताक्षो जन्तु अर्कं विघनमिवाद्धा विविच्य न जानाति । किं तु घनच्छन्नं निष्प्रभमेव पश्यति । तद्वदहंप्रत्ययास्पदत्वेन जानन्तोऽपि असङ्गचिद्रूपत्वेनात्मानं न जानन्ति । तथा चोक्तम्—

तमहंप्रत्ययव्याजात् सर्वे जानन्ति जन्तवः ।
तथापि शिवरूपेण न विजानन्ति मोहिताः ।। इति ।

एतदभिप्रायेणाह—**भास्यैः पिहितार्कमण्डलनिभामिति** । निभां सदृशामित्यर्थः । तस्माद्देहेन्द्रियादिविलक्षणतया स्फुटतराहमनुभवगम्या तत्साक्षिणी या स्फूर्तिः चिदेकरसः परमात्मा तां स्वप्रकाशचिदेकरसमात्मानं सदा अनन्यव्यापारतया भावयन् स एवाहमिति तदेकाकारवृत्तिसन्तानं कुर्वन्नित्यर्थः । तदुक्तम्—

सावधानतया नित्यं स्वात्मानं चैव भावयेत् ।
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ।। इति ।

अयमेव सम्प्रज्ञातसमाधिरित्युच्यते । तं भगवान् **पतञ्जलिः** सूत्रयामास—**तत्र प्रत्ययैकतानता** एकविषयप्रवाहः । स च द्विविधः विच्छिद्य विच्छिद्य जायमानः सन्ततश्चेति । तावुभौ क्रमेण ध्यानसमाधी भवतः । तदुभयं दर्शितम्—

चित्तैकाग्र्यादतो ज्ञानमुक्तं समुपजायते ।
तत्साधनमतो ध्यानं यथावदुपदिश्यते ।।
विलाप्य विकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात् ।
परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत् ।। इति ।
ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना ।
सम्प्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ।। इति ।

तत्साधनमुपदर्शयन्नाह—**योगीति** । योगश्चित्तवृत्तिनिरोधस्तद्वान् योगी । योगशब्दो मौनादेरप्युपलक्षणम् तथा च स्मर्यते—

मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ।। इति

अथवा योगो जीवब्रह्मैक्यज्ञानम् । तद्वान् योगी । तथा च स्मर्यते—

वृत्तिहीनं मनःकृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ।। इति ।

नन्वनेन ज्ञानस्य भावनासाधनत्वमुक्तं भवतीति चेत् । बाढम् । "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इत्यनया श्रुत्या ज्ञानानन्तरं भावनायाः प्रतिपादित्वात् । ततः किमित्यत आह—**निर्वृतमानसः इति** । निर्वृतिः स्वरूपसुखं तद्वन्मानसं यस्य स तथोक्तः । तथा च विदुषो निरुद्धाशेष वाग्व्यापारमनोवृत्तितया विदिततत्त्वतया वा निरन्तरं निर्विघ्नेन भावनानुवृत्तौ परिपूर्णस्वप्रकाशचिदेकरसब्रह्मानन्द आविर्भवतीति भावः । तथा चोक्तम् ।

शान्तसन्देहदौरात्म्यं गतकौतुकविभ्रमम् ।
परिपूर्णतरं चेतः पूर्णेन्दुरिव राजते ।।
परिप्राप्तविवेकस्य त्यक्तसंसारसंस्थितेः ।
चेतसस्त्यजतो रूपमानन्दो हि विवर्द्धते ।। इति ।

हिशब्दो हेतौ । हि यस्मात् यो निरुद्धमनाः स्फूर्तिं भावयन्नास्ते स तस्मात् सुखितमानसः गुरुरिति मम मनीषेत्यन्वयः । इत्थं जीवब्रह्मैक्यं सुष्ठु प्रतिपादितमिति भावः ।। ४ ।।

**यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृताः**
**यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।**
**यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित्**
**यः कश्चित् स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ५ ॥**

॥ इति श्रीमच्छङ्करभगवत्पादाचार्यविरचितं मनीषापञ्चकं समाप्तम् ॥

---

प्रत्यगात्मनः परमप्रेमास्पदत्वेन परमानन्दब्रह्मता सुघटत इत्याह—यस्य स्वप्रकाशचिदेकरसस्यात्मनः सुखमेव सौख्यं स्वार्थे ष्यञ्प्रत्ययः। तदेवाम्बुधिरिवाम्बुधिः सर्वत्रैकरसत्वात्। तस्य लेशलेशतः इमे शक्रादयो निर्वृताः सुखिनो भवन्ति। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतेः। यस्मिन् नित्यसुखाम्बुधौ नित्यनिरतिशयानन्दैकरसे ब्रह्मणि गलितधीः गलिता निमग्ना तद्भावमापन्ना धीश्चेतो यस्य स तथोक्तः, स्वप्रकाशचिद्घनसदानन्दैकरसवस्तुमात्रत्वेनावस्थितस्वान्त इत्यर्थः। अयमेवासम्प्रज्ञातसमाधिरिति सञ्ज्ञीयते। तथा च तं समाधिमसूत्रयत् **पतञ्जलिः—"तदेवात्ममात्रनिर्भासं स्वरूपशून्यमिव समाधिरि"**ति। तथा चोक्तम्—

मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः।
या सम्प्रज्ञातनामासौ समाधिरभिधीयते ॥ इति।

इत्थं यः कश्चित् परिपूर्णपरमानन्दपयोनिधौ प्रलीनमनस्कः स तु परिपूर्णपरमानन्दस्वरूपत्वात् तत् स्वरूपं ब्रह्मैव न ब्रह्मवित् भेदाभावात्। तथा च श्रूयते—"स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती"ति। स्मर्यते च—

दर्शनादर्शने हित्वा स्वयं केवलरूपतः।
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित् स्वयम् ॥ इति।

अत एव सुरेन्द्रवन्दितपदः। सुरेन्द्रैरिन्द्रादिभिः भूतिकामैर्मनुष्यैश्च वन्दिते पादौ यस्य स तथोक्तः। तथा च श्रूयते—"तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः" इति। एतदेवाभिप्रेत्योक्तम्—

विचारेण परिप्राप्तविवेकस्योदितात्मनः।
अनुकम्प्या भवन्त्येते ब्रह्मविष्ण्विन्द्रशङ्कराः ॥ इति।

अथवा सुरेन्द्रवन्दितपदः। सुरेन्द्रैः ब्रह्मादिभिः वन्दितं अहमित्यपरोक्षेणानुभूतं पदं स्थानं ब्रह्मस्वरूपं यस्य स तथोक्तः। अत एवेन्द्रवाक्यं श्रूयते च—"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वे"ति। श्रुत्यन्तरे नारदं च प्रति ब्रह्मवाक्यं श्रूयते—शान्तममलमद्वयानन्दविज्ञानघन एवास्मि तदेव मम धामेति। एतदेवाभिप्रेत्योक्तम्—

निमेषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ इति।

इत्येतादृशस्स गुरुरिति मम मनीषेत्यन्वयः। उक्तार्थे आदर्तव्यतां दर्शयितुमाह—**नूनमिति**। इयता प्रबन्धेन यत्प्रतिपादितं तत्सर्वं निश्चितमेवेत्यर्थः।

॥ इति श्रीसदाशिवब्रह्मेन्द्रयोगिविरचितं मनीषापञ्चकविवरणं समाप्तम् ॥

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचितं

# मनीषापञ्चकम्

### श्रीबालगोपालेन्द्रमुनिविरचितमधुमञ्जरीटीकोपेतम्

**जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते**
**या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।**
**सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्यास्ति चेत्**
**चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ १ ॥**

---

श्रीमद्यतीन्द्र[मानम्य]नाथस्य जगन्नाथमुनिं गुरुम् ।
मनीषापञ्चकव्याख्या तन्यते मधुमञ्जरी ॥

तत्रादौ कथा निरूप्यते—

कदाचिच्छङ्कराचार्यः काशीं प्रति पुरीं ययौ ।
तस्य ज्ञानपरीक्षार्थं कश्चिद्देवस्समागतः ॥
चण्डालरूपी तं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् ।
तथोक्तवन्तमाचार्यं स देवः पुनरब्रवीत् ॥

तथाहि—

अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् ।
द्विजवर ! दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥

**अन्नमयेति**—अस्यायमर्थः-अद्यते यज्जनैः तदन्नम् । अनुभवन्ति च भूतानि यत्तदन्नम् । अद भक्षणे इति धातोः अन्नशब्दस्योत्पन्नत्वात् । "अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते इति" इति श्रुतेश्च । तदन्नमयः तत्प्रधानः, तद्विकारो वा स्थूलदेहः अन्नमय इत्युच्यते । तस्मादन्नमयाच्चण्डालत्व-जातिविशिष्टाद्विप्रत्वजातिविशिष्टाद्वाऽन्नमयमुक्तलक्षणं स्थूलदेहमन्यतरजातिविशिष्टं दूरीकर्तुं दूरतः परिहृत्य गन्तुं, हे द्विजवर ! "जन्मना जायते शूद्रः कर्मणा जायते द्विजः । वेदाध्यायी भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः ॥ इति स्मरणात् । द्विजानां-द्विजन्मनां कर्मिणां मध्ये वरः श्रेष्ठः अत्यन्तकर्मिन् इत्यर्थः । गच्छ गच्छेति वचसा वाञ्छसि अभिलषसि । मनःपूर्वकत्वात् वाग्व्यापारस्य, 'यद्धि मनसा ध्यायति तद्वाचा वदति' 'वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितम्' इत्यादिश्रुतिभ्यो

वाग्व्यापारस्य मनोव्यापारपूर्वकत्वं सिद्धम् । यदुक्तं भाष्यकृता **श्रीविष्णुदिव्यसहस्रनामभाष्ये** 'मनसा वाऽग्रे सङ्कल्पयत्यथ वाचा व्याहरति' । 'यद्धि मनसा ध्यायति तद्वाचा वदति' इति श्रुतिभ्यां स्मरणं ध्यानं च नामकीर्तन एव अन्तर्भूतमिति । किं ब्रूहीति काकुस्वरेणाक्षेपः । पक्षान्तरमवलम्बयति—**अथवेति** । अथवा उत, चैतन्यमेव–चेतनमेव चैतन्यं न तु भिन्नः चेतनधर्मः । चेतनस्याद्वितीयत्वेन व्यक्तिभेदस्यानङ्गीकारेण जातेरनङ्गीकारात् । तच्च चैतन्यं कूटस्थरूपं प्रतिबिम्बरूपं अवच्छिन्नरूपमेव, वा नान्यत् । तादृशादेव चैतन्यात्पूर्वोक्तोभयजातिविशिष्टस्थूलदेहान्तर्वर्तिनः आत्मनो दूरीकर्तुं वाञ्छसि किं ब्रूहि पूर्ववदनुषज्यते ।

किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चण्डालवाटीपयः
पूरे वाऽन्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाऽम्बरे ।
प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽयं श्वपचोऽयमित्यपि महान्कोऽयं विभेदभ्रमः ॥

**किं गङ्गेति** । गङ्गाम्बुनि ब्रह्मावर्तक्षेत्रे काश्यादिपुण्यनगरप्रान्ते देवतामनोहारिणी विष्णुपदोद्भवा भागीरथी जाह्नवीति ह्यपरपर्यायनाम्नी विलसति गङ्गा । तस्याः सर्वपापक्षयकरं परम्परया मोक्षप्रापकं च यदम्बु जलं तस्मिन् । अम्बरमणौ अम्बरे नभसि मणिरिव दीप्यतेऽतिशयेन विराजमानत्वादम्बरमणिः सूर्यः, तस्मिन् बिम्बिते प्रतिबिम्बिते सति प्रतिच्छायया दृश्यमाने सति इति यावत् । तथैव चण्डालवाटीपयःपूरे । चण्डालाः श्वपचा तेषां वाटी वीथी तस्या यत्पयःपूरं, चर्मक्लेदनादिना दुर्गन्धं दुर्मलिनं जलं तस्मिन् बिम्बिते सतीत्यनुषज्यते । अन्तरं भेदोऽस्ति किमित्याक्षेपः उभयत्रापि योज्यः । नान्तरमनुभूयते विद्वदविद्वत्साम्येनेत्याक्षेपाभिप्रायः । एवं प्रतिबिम्बपक्षाङ्गीकारे भेदभ्रमस्यानवकाशं प्रदर्श्यावच्छिन्नपक्षेऽपि तं दर्शयति—**काञ्चनेति** । काञ्चनेन सुवर्णेन निर्मिता घटी कुम्भः काञ्चनघटी। मृदा प्रसिद्धया गन्धादिगुणवत्या निर्मितः कुम्भः मृत्कुम्भः। काञ्चनघटीमृत्कुम्भयोः, ताभ्यामवच्छिन्नमाच्छादितं अम्बरं नभः यत्तस्मिन् अम्बरेऽन्तरमस्ति किं इत्याक्षेपः । नास्त्येवेति तात्पर्यम् । अत्रोभयपक्षयोः प्रतिबिम्बयोरवच्छिन्नयोर्वा बिम्बेनानवच्छिन्नेन प्रतिबिम्बाभ्यां अवच्छिन्नाभ्यां बिम्बस्यानवच्छिन्नस्य प्रतिबिम्बयोरवच्छिन्नयोर्वा परस्परं न कदाचिद्भेदगन्धस्यावकाशः । व्यवहारभेदस्योपाधिपरामर्शमन्तरेणाविभाव्यमानत्वाद्विचाराभावजीवनस्य द्वैतमिथ्याभ्रमस्य विचारवद्भिः न वस्तुत्वमवसीयते । किन्तु विचारविकलैरेवेत्यतो विचारवता भवता कथमुच्यते गच्छ गच्छेत्यभिप्रायः ।

सम्प्रति दृष्टान्ते सोपाधिकयोः अन्योऽन्यमनुपाधिकेन उपाधिभ्यां ( तस्य च ) अनुपाधिकस्य च भेदाभावेऽपि उपाधिभूतयोरार्यावर्तादिपुण्यापुण्यक्षेत्रयोः अथ च तत्स्थगङ्गादिपुण्यापुण्यजलयोः भेदस्य विद्यमानत्वात् दार्ष्टान्तिकेऽपि विप्रत्वाविप्रत्वजातिविशिष्टयोः स्थूलदेहयोः तत्संस्कारतदभावविशिष्टयोः अन्तःकरणयोश्च भेदस्यानुभूतत्वाद्विप्रत्वजातिविशिष्टतत्संस्कारयुक्ततद्देहतदन्तर्वर्त्यन्तःकरणाभ्यां तज्जातिरहिततत्संस्कारशून्यदेहतदन्तःकरणयोः दूरीकरणेच्छा युक्तैवेति वदता शङ्कित इव पुनरप्यध्यस्तप्रपञ्चविधुरे परमात्मनि विज्ञाते न किञ्चिदन्यद्विद्यत इति 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिश्रुतिमवष्टभ्य सर्वात्मकत्वमात्मनोऽनुभवन्नुपाधिदृष्ट्यापि तद्दूरीकरणेच्छा न घटिष्यत इति प्रथमं विकल्पं परिहरति प्रातिलोम्येन—**प्रत्यगिति** । मिथ्याऽध्यस्तसर्वप्रपञ्च-

वैलक्षण्येनाञ्चति प्रकाशते इति प्रत्यक् परमात्मा, स च, वस्तु अनध्यस्तात्मस्वभावत्वे सति कल्पितसमस्तवस्त्वधिष्ठानभूतः। तस्मिन् प्रत्यग्वस्तुनि। किञ्च निर्गतः प्रपञ्चरूपः तरङ्गः यस्मात्। सहजानन्दावबोधाम्बुधौ सहजः स्वभावः, आनन्दः सुखं, अवबोधः स्फुरणं, स्वभावभूतः न केनापि निर्वर्तितः। आनन्दश्चासाववबोधश्चेति सहजानन्दावबोधः। स एव अम्बुधिरिव अम्बुधिरपर्यन्तत्वात्। तस्मिन् निस्तरङ्गसहजानन्दावबोधाम्बुधौ प्रत्यग्वस्तुनि अहमहमित्यनुभूयमाने सति इति शेषः। विप्रोऽयं द्विजातिरध्ययनशील:, श्वपचोऽयं चण्डालः पशुघातकः इतिः, इयत्तापरिच्छेदशून्येऽयं विभेदभ्रमः द्वैतभ्रान्तिः कः कुतस्सम्भवति, न कुतोऽपीत्यर्थः प्रत्यगेकरसस्य वस्तुनः निष्प्रपञ्चत्वोक्तेरिति भावः।

एवं केवलपारमार्थिकदृष्टिमवलम्ब्याक्षिप्तस्सन्नाचार्यः अयं देवः तारकोपदेष्टा पूर्णपुरुषः विश्वेश्वरो भवितुमर्हतीति निश्चित्य, यथोक्तमेवं तत्, एतादृशदृष्टिमत्सु भवादृशेषु न अस्माकं चण्डालत्वादिप्रतीतिरित्यभिप्रेत्य जाग्रदित्यादिभिः पञ्चभिः श्लोकैः स्वानुभवं निरूपयति। तत्र तावच्चतुर्षु वेदेषु यानि प्रसिद्धानि 'प्रज्ञानं ब्रह्म', 'अहं ब्रह्मास्मि', 'तत्वमसि', 'अयमात्मा ब्रह्म', इत्येवंरूपाणि क्रमेण ऋग्यजुस्सामाथर्वणोपनिषद्गतानि महावाक्यानि अर्थतोऽनुक्रामति **जाग्रदित्यादिना**—

अस्यायमर्थः—यस्यापि कस्यचित्पुरुषविशेषस्य दृढप्रज्ञाऽस्ति चेत्स पुरुषः चण्डालोऽस्तु, द्विजो वा अस्तु, गुरुरित्येषा मम मनीषेत्यन्वयः। अत्र सैवाहं न च दृश्यवस्तु इति प्रज्ञायाः प्रकारः उक्तः। स्फुटतरेति सर्वप्रसिद्धिद्योतनार्थम्। जानामीत्यादिसंव्यवहारेषु प्रज्ञानस्य विजृम्भमाणत्वात्प्रज्ञानानुभवविहीनस्य लोष्टवन्नरसमाकृतेः शास्त्रार्थविचारे अनधिकाराच्च। अथवा स्फुटतरेति संविदोऽनावृतत्वमुच्यते। तस्याः सर्वाधिष्ठानतया सर्वप्रकाशकत्वेन आवरणाज्ञानस्यापि भासकत्वात्। 'तमेव भान्तमनुभाति सर्वम्' इत्यत्र श्रुतौ सर्वशब्देन आवरणस्यापि विवक्षितत्वात्। चैतन्यप्रसिद्धिद्योतनन्तु यच्छब्देन भवति। ननु यच्छब्देन चैतन्यस्य प्रसिद्धिः विवक्षिता चेत्तर्हि सा प्रसिद्धिः क्वेत्याकाङ्क्षायामाह—**जाग्रत्स्वप्नसुषुप्तिष्विति**। इन्द्रियैरर्थोपलब्धिः जागरितम्। करणेषु उपसंहृतेषु जागरितसंस्कारजप्रत्ययः सविषयः स्वप्नः। सर्वप्रकारकज्ञानोपसंहारो बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिरित्येवंलक्षणका जाग्रदाद्यवस्थाः प्रसिद्धाः। तासु प्रसिद्धास्ववस्थासु संविदपि प्रसिद्धा।

नन्वेवं शास्त्रकृतपरिश्रमाणां संवित्प्रसिद्धिरस्तु। अतिरिक्तानां कथमिति चेदुच्यते—शब्दान्तरेण व्यवहृतत्वादिति। संवित्, प्रज्ञानं, बोधः, साक्षी, कूटस्थः, स्वयमात्मा इत्येवंप्रकारकैः शब्दैः व्यवहर्तुं असंस्कृता असमर्था अपि देशभाषादिसाङ्केतिकशब्दैः आत्मानं चैतन्यरूपं सर्वसंव्यवहारसाधकत्वेन व्यवहरन्ति। ज्ञापकं च तेषां वर्तते विजानामीत्यादि। तत्र विजानामीत्यादिव्यवहारो बोधमूलक इत्यनुमानादिना प्रमाणेनाविजानन्तोऽपि प्रसिद्धाः जानन्त्येव। इदानीं ज्ञानमस्ति व्यवहारोऽप्यस्ति, इदानीं तु ज्ञानं नास्ति व्यवहारोऽपि नास्तीति अन्वयव्यतिरेकज्ञानं विवेकिनां गुरुमुखात्सिद्धमपि अविवेकिनामनुभवत एव सिद्धम्। तद्यथा चन्द्रमा भगवत ईश्वरस्य हृदयं नेत्रमित्यादिरूपेण शिष्टैर्विज्ञातोऽपि मूढैर्ज्ञात एव स्वप्रकाशत्वेन शिशिरकरत्वेन मण्डलाद्याकारेण। एवमेव संवित्स्वतःसिद्धप्रकाशेत्यादिना लिङ्गसिद्धकान्त्यादिविशेषानुभवविवेकेनाविज्ञाताऽपि संविद्व्यवहारसाधकत्वप्राधान्येन विज्ञाता भवति। तस्माद्विवेकविकलानामप्यात्मसंवित्प्रसिद्धिरस्तीति बोध्यं

व्यवहारबलेनेत्यभिप्रेत्याह—**उज्जृम्भत इति**। उत् अधिकं यथा तथा जृम्भते उल्लसति व्यवहार-हेतुतया प्रकाशत इत्यर्थः। यद्वा उदपि जृम्भत इति हेतुः। संवित्प्रसिद्धौ विद्वत्स्वविद्वत्सु च अहमिति सर्वदा भानात्। विद्वांसो हि वयं स्म इति जानन्ति अविद्वांसोऽपि तथा। किन्तु प्रकारान्तरेण अत एव विद्वदविद्वद्भेदः।

जाग्रदित्यारभ्य उज्जृम्भत इत्यन्तेन इयता ग्रन्थसन्दर्भेण 'प्रज्ञानं ब्रह्म' इति महावाक्यस्थ-प्रज्ञानशब्दस्य अर्थः उक्तो भवति। अधुना ब्रह्मशब्दस्य अर्थमाह—

ब्रह्मा चतुर्मुखः आदिः येषां ते ब्रह्मादयः। पिपीलिका कीटविशेषः अन्त येषां ते पिपीलि-कान्ताः। ब्रह्मादयश्च पिपीलिकान्ताश्च ब्रह्मादिपिपीलिकान्ताः प्राणिनः। तेषां तनवः शरीराणि तासु। जगतः प्रपञ्चस्य साक्षिणी साक्षादव्यवधानेन ईक्षणकर्त्रीति हेतोः प्रोता अनुगततया वर्तमाना या प्रसिद्धा संवित् ( जाग्रदित्यादौ ) व्याख्याता एव।

ब्रह्मशब्दस्य परिपूर्णत्वमर्थमुक्त्वा तेन प्रत्यगात्मन एकत्वमभिवदति—**सैवाहमिति**। सैव-प्रसिद्धैव संवित्, अहं–अहंपदलक्षितः, अहंप्रत्ययव्यवहारयोग्यः चिदात्मा। न च दृश्यवस्तु। दृशा व्याप्यत इति दृश्यं जगत्, तद्वस्तु, जगतो वस्तुत्वं कल्पितसम्बन्धेन परमार्थवस्तुनि विद्यमानमुप-चर्यते। जगतः कल्पितत्वेन वस्तुतो वस्तुत्वाभावेऽपि व्यवहारसत्यत्वाङ्गीकाराद्योग्यवस्तुत्वमस्तीत्य-भिप्रायः। तदहं न भवामि, दृश्यवस्तुनो जडत्वात्परिच्छिन्नत्वाच्चेति दृढप्रज्ञा, दृढा संशयासम्भावना-दिभिः अबाधिता प्रज्ञा-मतिः, अज्ञानां देहादिप्रज्ञेव यस्य कस्यचिदपि पुरुषविशेस्य श्रुत्याचार्यप्रसाद-महिम्ना अस्ति विद्यते चेत्-यदि, स तु पुरुषः चण्डालः पशुघातकः अस्तु-भवतु। अथवा द्विजः-जात्या विप्रः अस्तु-भवतु। गुरुः-सर्वज्ञो भगवानिति। 'ज्ञानी त्वात्मैव मे मतम्' इति स्मृतेः, 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इत्यादिश्रुतेश्च। एषा-एतादृशो मम मनीषा मदीया बुद्धिः, मम अनुभव इति यावत्।

इदमत्र कृतं–यस्तु पुरुषधौरेयः 'जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते' इति ग्रन्थेनोक्तप्रज्ञानशब्दार्थं बुद्ध्वा एतस्यार्थस्य 'या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी' इति इयता ग्रन्थेनोक्तब्रह्मशब्दार्थत्वं विज्ञाय एतद्विज्ञानस्य फलभूतं 'सैवाहं न च दृश्यवस्तु' इति इयता ग्रन्थेनोक्तवाक्यार्थनुभवं कुर्वन् स्थितप्रज्ञो भूत्वा सदा समाहितस्सन् वर्तेत, न तस्मिन्मम चण्डालत्वादिविपरीतज्ञानं, किन्तु ब्रह्मत्वमतिरेव 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुतेरिति। यद्यपि सर्वमात्मेति विज्ञानात् श्वपचत्वादिप्रतीतिः न पारमार्थिकी। तथापि व्यवहारसाङ्कर्यानापत्तये 'व्यवहारे भट्टनयः' इति न्यायाद्भावनया स्वात्मनः सर्वात्मकत्वमनुभवन्क्रियया यावत्प्रारब्धं द्वैत-व्यापारे यथापूर्वं यथाशास्त्रं विदुषा वर्तितव्यं इति च 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इति स्मृतेराचार्यस्य अभिप्रायान्तरं विज्ञायते।

ननु 'चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मम मनीषा' इति कथमभियुक्तैः वक्तुमुचित-मिति चेन्न। आक्षेप्तुः देवस्य चण्डालवेषधारित्वादाक्षेपस्यापि 'विप्रोऽयं श्वपचोऽयमित्यपि महान्कोऽयं विभेदभ्रमः' इत्येवंरूपत्वादुक्तस्य चोक्त्यनुसारित्वात्। अथ च परमार्थवस्तुन उपनिषदेकसमधि-गम्यत्वेन वेदाधिकारिणामेव तदनुभवः, तथापि यश्च कश्चन योगभ्रष्टो "गहना कर्मणो गति"रिति

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणया सेशं मया कल्पितम् ।
इत्थं यस्य दृढा मतिस्सुखतरे नित्ये परे निर्मले
चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ २ ॥
शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरो-
र्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।
भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ३ ॥

---

वचमात् किञ्चित्कर्मशेषतया चण्डालदेहधार्यपि भवेन्नाम । तस्मिञ्जन्मनि न तस्याध्यापनापेक्षा, जन्ममात्रेणैव प्रारब्धकर्मणो नष्टत्वात् । भूतपूर्वगत्या ब्रह्मानुभवस्य सिद्धत्वात् न तस्मिन् चण्डालत्वादिभ्रमः । 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति स्मृतेः । 'अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः' इत्यादिश्रुतेश्च ॥ १ ॥

इदानीं यजुर्वेदोपनिषद्गत 'अहं ब्रह्मास्मीति' महावाक्यार्थं अभिवर्णयति—**ब्रह्मैवाहमिति** । यस्य मतिः सुखतरे नित्ये परे निर्मले दृढा स तु पुरुषः चण्डालोऽस्तु द्विजो वास्तु मम गुरुः इत्येषा मनीषेत्यन्वयः । इत्यादिविशेषणैः विशेषिते परे किमिति मतिर्दृढेत्याकाङ्क्षायामाह—**ब्रह्मैवाह**मित्यादिना । अहं अहंशब्दप्रत्ययाभ्यामुपलक्षित आत्मा ब्रह्मैव परिपूर्णपरमात्मैव । किञ्चेदं सकलं समस्तं जगत् चेतनाचेतनात्मकं चिन्मात्रविस्तारितं चिन्मात्रे चिदेकरसे ब्रह्मणि विस्तारितं प्रपञ्चितम् । केन विस्तारितमित्याशङ्क्यायामाह—**सर्वं चैत**दिति । एतत् परिदृश्यमानं अशेषं ब्रह्मादीश्वरसहितं सर्वं जगत् त्रिगुणया त्रिगुणात्मिकया अविद्यया मया अध्यक्षेण कल्पितं रचितम् । इत्थमेवं प्रकारेण निश्चित्येति शेषः । दृढप्रज्ञा दृढबुद्धिः, असम्भवनादिभिः न बाधितेत्यर्थः । यस्य वा कस्यचित्पुरुषवरस्यास्ति विद्यते चेत् इत्यनेन ज्ञाननिष्ठायाः दुर्लभत्वमुक्तम् । स तु चण्डालोऽस्त्वित्यादि स्पष्टम् ॥ २ ॥

अधुना सामशाखोपनिषद्गततत्त्वमसीति महावाक्यस्यार्थमाह—**शश्वदिति** । अखिलजगत्कारणं सत्तामात्रं वस्तु यन्निर्दिष्टं 'सदेव सोम्येदमग्र आसीत्' इत्यादिना, तदेव त्वं न ततो भिन्नोऽसि भेदस्य मिथ्यात्वात्, वस्तुनः एकरूपत्वादित्युपदेष्टुराचार्यस्य वाचा वचसा ब्रह्म परिपूर्णं वस्तु निरन्तरं स्वात्मनोऽभिन्नं निश्चित्य निश्चयेन ज्ञात्वा, अखिलं समस्तं जगत्, शश्वत् सर्वदा नश्वरमेव, न तु नित्यमिति, नित्यं सर्वदा विमृशता आलोचयता अत एव निर्व्याजशान्तात्मना निर्व्याजः निष्कपटः शान्तः उपरतः आत्मा अन्तःकरणं यस्य तेन, भूतं अतीतं भावि आगामि च यत् दुष्कृतं दुःखानुभवकारणं पापं संविन्मये अहं ब्रह्मास्मीति ज्ञानस्वरूपे पावके अग्नौ प्रदहता प्रकर्षेण दहनं कृतवता येन पुरुषधौरेयेण ब्रह्मविन्मुख्येनेति यावत् । स्वं स्वकीयं वपुः शरीरं प्रारब्धाय अवश्यंभाविफलाय कर्मणे

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ।
तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्
योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ४ ॥

यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृताः
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित्
यः कश्चित् स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ५ ॥

॥ इति श्रीशङ्करभगवत्पादाचार्यविरचितमनीषापञ्चकं समाप्तम् ॥

---

समर्पितं, प्रारब्धाधीनं कलेवरं कृतम् । तस्य जीविते मरणे वा न स्वयं बुद्धिर्विक्रियते इति भावः । स तु चण्डालोऽस्तु द्विजो वास्तु गुरुरित्येतदनुषञ्जनीयम् । शिष्टं स्पष्टार्थम् ॥ ३ ॥

सम्प्रति 'अयमात्मा ब्रह्म' इत्याथर्वणशाखोपनिषद्गतमहावाक्यस्य अर्थमाह—**या तिर्यगिति**। तत्र तावदयमात्मा ब्रह्मेति वाक्यस्थब्रह्मशब्दार्थमाह—या प्रसिद्धा स्फूर्तिः स्फुरणं, चैतन्यमिति यावत् । तिर्यङ्नरदेवताभिः तिर्यग्भिः पशुभिः नरैः मनुष्यैः देवताभिः दैवतैश्च अहमिति अहंप्रत्ययव्यवहारयोग्यतया अन्तः विज्ञानमयशब्दवाच्यायां बुद्धौ स्फुटं अनावरणं यथा तथा गृह्यते अनुभूयते । यद्भासा यस्याः स्फूर्तेः भासा प्रकाशेन हृदयाक्षदेहविषयाः हृदयं हृदि हृद्गोलके अयनं अस्येति हृदयं मनः । अक्षाणि इन्द्रियाणि ज्ञानकर्माख्यानि, देहः स्थूलः । विषयाः शब्दाद्याः वचनाद्याश्च एते सर्वे स्वतः स्वभावतः अचेतनाः जडाः अपीति अपिशब्दो द्रष्टव्यः । भान्ति प्रकाशन्ते चेतना इवेत्यर्थः । पुनर्भास्यैः प्रकाश्यैः हृदयाक्षदेहविषयैः पिहितार्कमण्डलनिभां पिहितं आच्छादितं मेघैः यदर्कमण्डलं सूर्यमण्डलं तन्निभां तत्सदृशीं स्फूर्तिं व्याख्यातां सदा नित्यं योगी ( निर्वृतमानसः ) जितेन्द्रियः भावयन् अहमिति ध्यायन् इति ( आत्मशब्दार्थो व्याख्यातः ) या स्फूर्तिः तिर्यङ्नरदेवताभिः अहमित्यन्तःस्फुटं गृह्यत इति ब्रह्मणो रूपमुक्तम् । यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः इत्यात्मनो रूपमुक्तम् । तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्निति हि ब्रह्मात्मनोरेकत्वमुक्तम् । यच्छब्दद्वयेन स्फूर्तिसमष्टिव्यष्ट्युपाधिविशिष्टं लक्षयित्वा तच्छब्देनैकान्वयेन तस्य योजितत्वात् । एवं निर्वृतमानसः मोक्षसुखयुक्तमानसो हि प्रसिद्धं यः स गुरुरित्यादि स्पष्टम् । अथवा हिशब्दो हेत्वर्थः । यस्मान्निर्वृतमानसः तस्माद्गुरुरिति ॥ ५ ॥

एवं महावाक्यचतुष्टयस्य जीवब्रह्मैक्यपरत्वमभिवर्ण्य तन्निष्ठस्य गुरुत्वमपि व्याख्याय अधुना फलितमाह—**यत्सौख्याम्बुधीति** । यत् प्रसिद्धं विद्वत्सु सौख्यं सुखं अम्बुधिः समुद्र इव समुद्रः अपर्यन्तत्वात् । 'एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । तस्य सौख्याम्बुधे-

र्लेशलेशतः सूक्ष्मात्सूक्ष्मतराल्लेशमात्रादित्यर्थः। इमे प्रसिद्धाः शक्रादयः इन्द्रादयः, ब्रह्मबृहस्पतिप्रभृतयः आदिशब्देनोच्यन्ते। निर्वृताः मुक्ताः आनन्दिनो जाता इत्यर्थः। यत्सुखं चित्ते अन्तःकरणे नितरां अत्यन्तं प्रशान्तं कलनं चलनं यस्मिस्तत्तथा। तस्मिन्सति लब्ध्वा प्राप्य अपरोक्षतया अहमित्यनुभूयेत्यर्थः। स मुनिः मननशीलः निर्वृतः मुक्तो भवतीत्यर्थः। यस्मिन्योगिप्रत्यक्षगम्ये प्रसिद्धे नित्यसुखाम्बुधौ सुखमेवाम्बुधिः सुखाम्बुधिः। नित्यश्चासौ सुखाम्बुधिश्चेति नित्यसुखाम्बुधिः। सुखस्य विषयजनितस्य वृत्त्यधीनतया क्षणिकत्वेऽपि अविषयजनितस्य वृत्त्यधीनत्वाभावान्नित्यत्वं, अत एव अपरिच्छिन्नत्वं चेति विज्ञेयम्। तत्र तस्मिन्नित्यसुधाम्बुधौ गलिता भ्रष्टा विलीनेत्यर्थः। धीः बुद्धिः ब्रह्माकारवृत्तिरिति यावत्, यस्य सः तथा स ब्रह्मैव ब्रह्मस्वरूप एव, न ब्रह्मवित् ब्रह्म वेत्तीति ब्रह्मवित् स न भवति, वृत्तेरुपरतत्वात्। वृत्त्यधीनं हि वेद्यत्वं वेदितृत्वं च। यः एतादृशः कश्चित् इत्यनेन ब्रह्मविन्निर्विकल्पसमाधिमान् लोके दुर्लभतर इति गम्यते। सर्वसिद्धो ब्रह्मविद्वरिष्ठः सुरेन्द्रवन्दितपदः, सुरा देवाः तेषां इन्द्रः स्वामी शतमखः तेन वन्दितं नमस्कृतं पदं पादः यस्य स तथा। नूनं सत्यं, अस्मिन्नर्थे न संशयः। एवं मनीषा मम इति स्पष्टम्।

मनीषापञ्चकस्यैषा कृता टोका मनोहरा।
बालगोपालेन्द्रनाम्ना मुनिना मधुमञ्जरी॥

॥ इति श्रीबालगोपालेन्द्रमुनिविरचितमधुमञ्जरी समाप्ता॥

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचितः

# आत्मज्ञानोपदेशविधिः

श्रीआनन्दगिर्याचार्यविरचितटीकोपेतः

## अथ प्रथमः पटलः

**अथात्मज्ञानोपदेशविधिं व्याख्यास्यामो मुमुक्षवे श्रद्धानाय यतये वीतरागाय,**

---

### अथ प्रथमः पटलः

विधूतविविधानन्दकल्पनं कल्पनास्पदम् ।
अमन्दानन्दसन्दोहं वन्देऽहं पुरुषोत्तमम् ।।
यस्य प्रसादमासाद्य सद्गतिं बहवो गताः ।
तमहं प्रत्यहं वन्दे शुद्धानन्दपदं गुरुम् ।।

आत्मज्ञानाख्यं प्रकरणमशेषोपनिषदर्थसारसङ्ग्राहकं प्रारभमाणो भगवान् भाष्यकारः चिकीर्षितप्रकरणाप्रत्यूहपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय मङ्गलाचरणं वृद्धाचारप्रमाणकं कुर्वन्—

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ।।"

इति स्मृतिमनुसृत्याथशब्दोच्चारणरूपं मङ्गलाचरणमादौ सम्पादयति—**अथेति**। न चायमथशब्दो विशिष्टाधिकारिणमानन्तर्योक्तिद्वारा समर्पयितुमर्हति, तस्य वक्ष्यमाणतया पौनरुक्त्यप्रसङ्गात्। न चास्याधिकारार्थत्वम्, वाक्यार्थेऽन्वयायोगात्। न च प्रकृतादर्थादर्थान्तरार्थत्वम्, प्रकृतानिरूपणात्। न च हृदयाद्यवदानेष्विव क्रमार्थत्वम्, क्रमवतोऽभावात्। तेन पारिशेष्यादस्य मङ्गलार्थत्वमेव युक्तम्। तदर्थस्य च वाक्यार्थत्वान्नान्वयानुपपत्तिः। न चेदमधिकारेऽपि तुल्यम्, तस्य पृथगुक्तरुक्तत्वादिति भावः। एवमोङ्कारोच्चारणवत् अथशब्दोच्चारणकृतमङ्गलाचरणः ग्रन्थमारभमाणः विषयाद्यनुबन्धमादर्शयन् उद्देश्यं प्रतिजानीते—**आत्मज्ञानेति**। आत्मनो निरुपचरितस्वरूपस्य प्रतीचो ज्ञानमित्युक्त्या प्रकरणविषयत्वमस्य द्योत्यते। तेन विषयविषयिभावः सम्बन्धोऽपि तस्य सूचितो वेदितव्यः। ज्ञानशब्दप्रयोगात् जिज्ञासूनामिष्टत्वात् ज्ञानस्य प्रयोजनत्वं ध्वनितम्। तस्य **उपदेशविधिः** उपदेशप्रकारः। "आचार्यवान् पुरुषो वेद" ( छा० ६-१५-२ ) इति श्रुतेः आचार्योपदेशमन्तरेणात्मज्ञानं लब्धुमशक्यमिति दर्शयितुमुपदेशग्रहणम्। उपदेशश्च गुरुसम्प्रदायः आचार्योपदेशमन्तरेणात्मज्ञानमुपपादयितुमलमधिकारिभेदात् । यद्यपि गुरूपदेशमात्रादुत्तमाधिकारी तत्त्वं प्रतिपत्तुं प्रभवति तथापि मन्दमध्यमयोः न तथा सम्भवतीति सर्वाधिकारिणोऽनुरोद्धुं प्रकार-

**आत्मलाभात् परलाभाभावात् । द्रष्टुर्दृश्योऽन्य इति प्रसिद्धो लोके । अथ क आत्मेति ? देहस्तावदात्मा न भवति रूपादिमत्त्वेनोपलभ्यमानत्वात् घटादिवत् । यथा घटादयो**

---

भेदवाची विधिशब्दः । एतेन "तस्य ज्ञानमुपदेशः" ( पू० मी० १-१-५ ) इत्युपदेशशब्दस्य विधिपर्यायत्वात् उपदेशविधिरिति पौनरुक्त्यमिति प्रत्युक्तम् । तं विशेषेण, अतिविशदतया प्रकथयिष्यामो येन संशयादेरनवकाशत्वमित्यर्थः । अभिधेयाद्यनुबन्धत्रयमपेक्षितमुपक्षिप्तम् । सम्प्रत्यधिकार्यनुबन्धमुपक्षिपति—**मुमुक्षव इति** । न हि मोक्षापेक्षामन्तरेण तदुपायज्ञाने पुरुषोऽधिक्रियते । "श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य परं पारं तारयतु" ( छा० ७-१-३ ) इति प्रक्रमदर्शनात् "ब्रह्मविदाप्नोति परम्" ( तै० २-१-१ ) इत्यादिवचनाच्च संसारं परित्यज्य ब्रह्मप्रेप्सा विशेषणमधिकारिणो भवतीत्यवगम्यते । न च तस्यापेक्षिते मोक्षे तदुपाये ज्ञाने तदन्तरङ्गबहिरङ्गहेतुषु तदुपदेशे तत्कर्तरि चाचार्ये श्रद्धामन्तरेणापेक्षितमोक्षौपयिके ज्ञानेऽधिकारो युज्यते । "श्रद्धत्स्व सोम्य" ( छा० ६-१२-३ ) "श्रद्धावित्तो भूत्वा" ( बृ० ४-४-२३ ) "श्रद्धावान् लभते ज्ञानम्" ( भ० गी० ४-५२ ) इत्यादिश्रुतिस्मृतिप्रामाण्यात् फलतदुपाययोः श्रद्दधानस्यैवाधिगमात् । न च पुत्राद्येषणात्रयपरित्यागाभावे तत्परवशस्य प्रकृतेऽधिकारः सेद्धुमर्हति । आत्मानमेव लोकमिच्छन्तः प्रव्रजन्तीति ज्ञानाधिकारिणि पारिव्राज्यविधानाच्च "शान्तो दान्त उपरतस्तितिक्षुः" ( बृ० ४-४-२३ ) इति च तस्मिन्नेव शमादिभिः सहोपरतिशब्दितकर्मपरित्यागश्रवणात् । न चैहिकामुष्मिकार्थभोगविरागादृते प्रकृते ज्ञाने अधिकारः सम्भवति "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" ( मु० १-२-१२ ) इति चाधिकारिविशेषणत्वेन वैराग्यं श्रूयते । तदेवमधिकारिणे साधनचतुष्टयविशिष्टायात्मज्ञानमुपदेष्टव्यम् । "तेषु हि सत्सु ब्रह्म जिज्ञासितुं शक्यते ज्ञातुं च" इति ( सू० भा० १-१-१ ) दर्शनादित्यर्थः ।

ननु प्रयोजनमिष्टलक्षणमिष्टम् । तच्चाभ्युदयः निश्श्रेयसं चेति प्रसिद्धम् । आत्मज्ञानाच्च केचिदुद्वेगभाजो दृश्यन्ते । तथा च कथमात्मज्ञानं प्रकरणस्य प्रयोजनत्वेन प्रदर्शितमिति तत्राह—**आत्मलाभादिति** । आत्म[त्मा]लाभस्य[अ]ज्ञानत्वेन अनर्थत्वात् तल्लाभस्य ज्ञानात्मनः तन्निमित्तत्वेन पुरुषार्थत्वात् तस्यैव निश्श्रेयसत्वात् तस्मात्परस्य निरतिशयस्य लाभस्य अभावात्, अभ्युदयस्य ततोऽर्वाचीनत्वेन पुरुषार्थाभासत्वात् "आत्मलाभान्न परं विद्यते" ( आ० ध० सू० १-८-२ ) इति स्मृतेः आत्मज्ञाना(दन)धिकृतानां तत्र समधिकाभिरुचिदर्शनात् तदस्य प्रयोजनमिति वचनमुचितमेवेत्यर्थः ।

नन्वात्मनो नित्यलब्धत्वादलाभाभावात्, अज्ञानात्तदलाभाभिमाने ज्ञानस्यैव तल्लब्धित्वात् ज्ञानोपायानभिधाने कुतो ज्ञानसिद्धिरित्याशङ्क्य द्रष्टृदृश्यविवेकात्मकं ज्ञानोपायमुपदिदिक्षुः आदौ प्रसिद्धमर्थं निर्दिशति—**द्रष्टुरिति** । वदेदत्ताद्दृष्टुः सकाशात् दृश्यो घटोऽन्यो भवतीति कृत्वा लोकव्यवहारमेव निमित्तीकृत्य द्रष्टुः दृश्यविवेकात्मको ज्ञानस्योपचारः प्रसिद्धोऽस्तीत्यर्थः । ननु द्रष्टृशब्देनात्मा उच्यते । स च देहादिष्वन्यतमत्वात् प्रसिद्धिमुपगतो न व्युत्पाद्यतामपेक्षते । तथा चात्मज्ञानमुपदेष्टुमश्लिष्टा प्रवृत्तिरिति मन्वानश्चोदयति—**अथेति** । देहादिव्यतिरिक्तमात्मानं वक्तुं देहस्यानात्मत्वमनुमिनोति—**देहस्तावदिति** । देहविषयाहंप्रत्ययस्य तु गतिरग्रे वक्ष्यते । रूपादिमत्वादिपदं यो रूपादिमानुपलभ्यमानश्च सोऽनात्मा यथा घटादिरिति व्याप्तिं व्यनक्ति—**यथेति** ।

**रूपादिमन्तश्चक्षुरादिकरणैरुपलभ्यन्ते एवं देहोऽपि रूपादिमान् चक्षुरादिकरणैरुपलभ्यते । यथा दाह्यप्रकाश्यकाष्ठादिव्यतिरिक्तो दाहकः प्रकाशकोऽग्निः तथा दृश्यात् देहात् द्रष्टा व्यतिरिक्तः आत्मा सिद्धः । एतस्मादपि कारणात् देहव्यतिरिक्तः आत्मा, स्वापमरणादिदर्शनात् । यस्मिन् काले देहं संव्याप्य वर्तते आत्मा काष्ठादिवत् तदा देहो व्यवहारयोग्यो भवति । यदा देहादपसर्पति तदा देहः काष्ठादिसदृशो भवति । तस्माद्देहव्यतिरिक्त आत्मा सिद्धः ।**

**चक्षुरप्यात्मा न भवति रूपग्रहणसाधनत्वात् प्रदीपवत् । यथा प्रदीपेन करणेन**

---

व्याप्तिः पक्षधर्मतेत्युभयमनुमानाङ्गमङ्गीक्रियते । तत्र व्याप्तिमुक्त्वा पक्षधर्मतां हेतुद्वयस्योपन्यस्यति—**एवमिति ।** न चोपलभ्यत्वमात्मन्यपीत्यनैकान्तिकत्वमिति युक्तम्, तस्य वृत्तिव्याप्यत्वेऽपि फलत्वेन फलव्याप्तत्वानभ्युपगमात्; फलव्याप्यत्वस्य च उपलभ्यमानत्वशब्देनाभिलापादित्यवसेयम् । देहस्यानात्मत्वमनुमाय तद्व्यतिरिक्तस्यात्मत्वमनुमातुं कथयति—**यथेति ।** यो दाहकः प्रकाशक. वा स दाह्यात्प्रकाश्याच्च व्यतिरिच्यते यथा काष्ठादेरग्निरिति विषयविषयिणोः व्यतिरेकसिद्धिरित्यर्थः । सम्प्रत्यनुमानमाह—**तथेति ।** विमतो द्रष्टा दृश्याद्भिद्यते, द्रष्टृत्वात्, देवदत्तवत् । यद्वा देहःस्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वात्, घटवत् । अथ वा देहः स्वव्यतिरिक्तप्रकाशप्रकाश्यः, प्रकाश्यत्वात्, काष्ठादिवत् । आत्मा वा स्वप्रका(शा)श्याद्भिद्यते, प्रकाशकत्वात्, अग्निवदित्यर्थः ।

तत्रैवानुमानान्तरमाह—**एतस्मादिति।** तदेव कारणं दर्शयति—**स्वापेति ।** स्वापमरणमूर्च्छासु सत्यपि देहे गमनादिव्यवहाराभावात् जागरितादौ च तद्दर्शनात् आगन्तुकव्यापारत्वात् पराधीनमस्य तद्वत्त्वं गम्यते । देहः स्वव्यतिरिक्तव्यापाराधारः, कादाचित्कव्यापारवत्वात्, रथादिवदित्यर्थः । ननु देहस्य स्वसत्ताकाले स्वपरान्यतरव्यवहारव्यभिचारिणो न युक्तमागन्तुकव्यापारत्वमिति हेत्वसिद्धिमाशङ्क्य परिहरति—**यस्मिन्नित्यादिना ।** यथा हि काष्ठनिष्ठो वह्निः सर्वतः तद्व्याप्त्या दाहपाकादिव्यवहारयोग्यतामुपगतो दृश्यते न पुनरसौ तत्र सत्तामात्रेण व्यवहारयोग्योऽङ्गीक्रियते तदा काष्ठस्यापि दाहादिव्यवहारयोग्यतोपपद्येत, तथा यत्र जाग्रदवस्थायामात्मा देहव्याप्तिं तस्मिन्नहमभिमानरूपां कृत्वा व्यवतिष्ठते तदा देहः स्वयमभिवदनादिव्यवहारयोग्यः सम्पद्यते । यत्र च स्वापादौ देहादावात्माहमभिमा(नचरीत्याह ।) [नं परित्यज्य ब्रह्म ?] रूपतामुपगच्छति तदा देहोऽभिवदनादिव्यवहारयोग्यो न भवति । न हि काष्ठादेः तथाविधव्यवहारयोग्यता उपलभ्यते । यत्तु[तत्तु] देहस्यागन्तुकमेवेति नास्ति हेत्वसिद्धिरित्यर्थः । न चोक्तानामनुमानानां अमानत्वमभिधानीयम्; तत्र हेत्वभिधानानभिधानयोः तदयोगादिति मत्वा प्रगुक्तानामनुमानानां फलमुपसंहरति—**तस्मादिति ।** केचित् इन्द्रियाणामात्मत्वम् 'अन्धोऽहम्' इत्यादिप्रत्ययमाश्रित्याश्रयन्ते । तत्र चक्षुषो ममप्रत्ययविषयत्वात् केवले च तस्मिन्नहंप्रत्ययाभावादन्धत्वादिविशिष्टे च तत्र तत्प्रत्ययस्य भ्रमादपि सिद्धेः न तस्यात्मत्वमित्यनुमानेन साधयति—**चक्षुरपीति ।** रूपग्रहणं करणसाध्यम् क्रियात्वाच्छिदिक्रियावत् इत्यनुमानात् परिशेषतो रूपोपलब्धिसाधनत्वेन चक्षुः सिध्यतीति हेतुसाधनार्थं रूपग्रहणविशेषणम् । उपकरणेऽपि प्रदीपे साधनशब्दितं करणत्वमात्रमस्तीति मन्वानो दृष्टान्तमाह—**प्रदीपवदिति ।** यत्करणं तन्नात्मा यथा प्रदीप इति व्याप्तिं साधयति—**यथेति ।** व्याप्तस्य हेतोरसिद्धिमुद्धर्तुं पक्षधर्मतामाह—

**रूपमुपलभ्यते, तथा चक्षुरादिकरणेन रूपमुपलभ्यते। एवमेवेतराण्यपि करणानि। मनोऽप्यात्मा न भवति दृश्यत्वात् करणत्वाच्च प्रदीपवत्। बुद्धिरप्यात्मा न भवति दृश्यत्वात् करणत्वाच्च प्रदीपवदेव। प्राणोऽप्यात्मा न भवति, सुषुप्ते चैतन्याभावात् प्राणस्य, इतरस्मिन् काले भृत्यस्वामिनोरिव सङ्कीर्णयोर्न ज्ञायते कस्येदं चैतन्यमिति। सुषुप्ते तु पुनः विज्ञानरहितः प्राण उपलभ्यते। करणोपरमाद्विज्ञानाभावः प्राणस्येति चेत् न,**

---

**तथेति**। चक्षुषि दर्शितन्यायं श्रोत्रादिष्वतिदिशति—**एवमेवेति**। न हीन्द्रियाणां प्रत्येकमात्मत्वमवकल्पते ममप्रत्ययविरोधात्; अहंप्रत्ययस्य च तेष्वन्यथासिद्धेरुक्तत्वात्। न च ममात्मेतिवत् औपचारिकस्तेषु ममप्रत्ययोऽपीति युक्तम्, मुख्यत्वे बाधकाभावात्; आत्मनि च ममप्रत्ययस्यात्मशब्दविरोधादौपचारिकत्वध्रौव्यात्। न च तेषां तत्र करणत्वेनाङ्गीकृतानामात्मत्वमुपपद्यते, प्रदीपादिष्वात्मत्वादर्शनात्। न च बहुषु तेषु प्रत्यभिज्ञानं प्रकल्पते। न चैकशरीरारूढत्वात्तेषु प्रत्यभिज्ञानमविरुद्धमिति श्रद्धेयम्; एककुम्भारूढेषु चैत्रमैत्रादिषु तदनुपलम्भात्; तस्मान्नेन्द्रियाणामात्मत्वमित्यर्थः।

केचित्तु मनसोऽहंप्रत्ययविषयत्वात् अहंप्रत्ययालम्बनस्य चात्मत्वात् तदेवात्मेति मन्यन्ते। तान्प्रत्याह—**मनोऽपीति**। पूर्ववदहंप्रत्ययस्य ममप्रत्ययप्रहतस्य प्रामाण्यानुपपत्तिरिति भावः। बौद्धास्तु बुद्धिरेवात्मेत्याचक्षते। तान्प्रत्युक्तम्—**बुद्धिरपीति**। सा चेद्दृश्या न सिद्ध्येत्। स्वप्रकाशत्वे तस्या जन्माद्ययोगादविप्रतिपत्तिः; अदृश्यत्वे यथार्थसिद्धिः; तस्याश्च कर्तृत्वे व्यतिरिक्ता बुद्धिः सिद्ध्येत्; कर्तुरतिरिक्तकरणापेक्षत्वात्, चक्षुरादीनां च निश्चायकसाधनकरणव्यतिरेकेण प्रवृत्त्ययोगात्, करणत्वे प्रदीपवदनात्मत्वमविवादमित्यर्थः।

हैरण्यगर्भास्तु प्राणमात्मानं प्रतिपद्यन्ते। तान्प्रत्याह—**प्राणोऽपीति**। तस्यापि ममप्रत्ययविषयत्वेन दृश्यत्वादात्मत्वानुपपत्तिः। "प्राणेन रक्षन्नवरं कुलायम्" (बृ० ४-३-१२) इति करणत्वाङ्गीकरणाच्च श्रुतिविरोधे चागमस्याप्रामाण्यादित्यर्थः। प्राणस्यानात्मत्वे हेत्वन्तरमाह—**सुषुप्त इति**। न हि तस्यामवस्थायां प्राणे व्यापारवति भात्यपि चैतन्यमुपलभ्यते; न च तस्मिन्भात्येव चैतन्यानुपलब्धितस्तस्यात्मत्वे युक्ता; तेन नासावात्मेत्यर्थः। ननु सुषुप्तविशेषणादवस्थान्तरे प्राणस्य चैतन्यमनुमतमिति प्रतिभाति। दृश्यते हि दक्षिणेनाक्ष्णा न पश्यतीत्युक्ते वामेनाक्ष्णा पश्यतीति। तत्राह—**इतरस्मिन्निति**। जागरितादौ चैतन्याधारे सन्देहसम्भवात् असन्देहार्थं सुषुप्तग्रहणम्। दृश्यते हि खल्वेकस्मिन्नेव प्रदेशविशेषे समवेतयोर्भृत्यस्वामिनोः नानाविधपदातिवाजिगजच्छत्रचामरपताकादिपरिवारपरिवृतयोरयं नरपतिरिति निर्धारणासिद्धौ कस्येदमिति सन्दिह्यमानं; तथेहापि संशयसम्भवाद्युक्तमसन्देहार्थं विशेषणम्; न पुनरवस्थान्तरे चैतन्याद्यनुज्ञानार्थमित्यर्थः। ननु सुषुप्तिविशेषणे कथं प्राणस्य चैतन्यराहित्यं निर्धार्यते; तत्राह—**सुषुप्ते त्विति**। तदापि प्राणोपलम्भेऽपि चैतन्यानुपलम्भात् तस्याचेतनत्वं निश्चितमित्यर्थः। चैतन्यस्यैव प्राणस्य सुषुप्तौ विज्ञानहेतूनां श्रोत्रनेत्रादिकरणानामुपसंहाराद्विज्ञानाभावो न त्वचेतनत्वादिति शङ्कते—**करणेति**। यदि करणादि प्रति प्राणः स्वामी स्यात्तदा तस्मिन् तद्व्यापाराविष्टे भृत्यस्थानीयानां करणानामुपरमो नोपपद्येत। न हि नरपतौ परेण नरपतिना सह सन्धिविग्रहादौ व्याप्रियमाणे तदीयपुरुषा निर्व्यापारा निर्वृण्वन्ति। ततश्च चेतनस्यैव प्राणस्य करणोपरमाधीनं विज्ञानाभाववचनमनुचितमिति परिहरति—**नेत्यादिना**।

स्वामिनि व्याप्रियमाणे करणोपरमाभावात् राजपुरुषवत्। अत एव न प्राणस्यैतानि करणानि; यः स्वापेनोपरतः तस्यैतानि करणानि। यदासौ बहिर्निर्गम्य करणान्यधितिष्ठति तदा सर्वाणि करणानि स्वविषयेषु वर्तन्ते। यदा जाग्रत्स्थितिनिमित्तं कर्मोद्भूतं भवति तदा स्वापादुपरतो भवति तत्क्षये सर्वाणि करणानि गृहीत्वा बुद्ध्युपाधिसम्पर्कजनितविज्ञानेन स्वप्नं सुषुप्तं वा गच्छति। एवं स्थानत्रयमनवरतं गच्छति। कर्मनिमित्तं चेदं गमनम्। स्वप्नजागरिते गच्छति पुनः स्थानद्वयनिमित्तकर्मोद्भूतश्रमापनयनाय सुषुप्तमपि गच्छति।

---

सुषुप्ते करणोपरमात् प्राणस्य चानुपरतत्वात् न तस्य करणस्वामित्वमित्याह—**अत एवेति**। तर्हि करणानां स्वतन्त्रत्वासम्भवात् करणस्वामित्वमेष्टव्यमित्याशङ्क्याह—**य स्वापेनेति**। करणात्मना बुद्धेरवस्थानं स्वापोऽभिलप्यते तेन उपरतः दर्शनस्पर्शनादिविशेषविज्ञानविरही योऽवतिष्ठते तस्य विज्ञानात्मनः श्रोत्रादीनि करणानि न स्वतन्त्राणि करणत्वव्याघातात्। तथा च विज्ञानकरणस्वामीत्यर्थः। स्वापेनोपरतस्य करणस्वामित्वमित्यत्रान्वयव्यतिरेकौ प्रमाणयन्नादावन्वयमाचष्टे—**यदेति**। सुषुप्तौ हि पुरुषो यस्मिन्काले करणात्मकमन्तः करणं ततोऽपकृष्य बाह्यविषयाभिमुखमापाद्य स्वमपि तद्द्वारा बहिर्मुखो भूत्वा बुद्धिद्वारेण तत्तद्विषयाभिमुखानि श्रोत्रादीनि करणान्यधिष्ठाय तिष्ठति। तस्मिन् करणानि सर्वाणि प्रतिनियतेषु शब्दादिषु प्रवृत्तानि तत्तदाकारान् बुद्धिपरिणामान् दर्शनश्रवणादिशब्दितान् उत्पाद्य पर्यवस्यन्ति। तथा चात्माधिष्ठितबुद्ध्यधिष्ठितानि करणानि श्रवणादिहेतवो भविष्यन्तीत्यात्मा करणस्वामी सिद्ध्यतीत्यर्थः। कदा पुनरात्मा बहिर्निर्गत्य बुद्धिद्वारा करणान्यधितिष्ठतीति तत्राह—**यदेति**। यदैतस्मिन् काले जागरितप्रापकं धर्माधर्माख्यमुद्भवति तदा पुरुषः सुषुप्तरूपात् प्रच्युतो भवतीत्यर्थः। आत्मनि सुषुप्तरूपं परित्यज्य करणान्यधिष्ठाय व्यापारायोन्मुखीभूते तानि प्रवृत्तिभाञ्जि भवन्तीत्यन्वयो दर्शितः। सम्प्रति व्यतिरेकं दर्शयति—**तत्क्षय इति**। तस्य जागरितस्य तद्धेतुकर्मणः तन्निमित्तोभयविधकरणाधिष्ठातृत्वस्य च क्षये सति जागरितवासनावासितत्वेन चित्रपटवदवस्थितबुद्धिरूपोपाधिसम्पर्कवशादुत्पन्नेन बुद्ध्यवच्छिन्नचैतन्याभासलक्षणेन विज्ञानेन करणभूतेन सर्वाणि करणानि गृहीत्वा व्यापाररहितानि कृत्वा स्वप्नं गच्छति। तथैवाज्ञानोपाधिकेन चैतन्याभासात्मकेन विज्ञानेन बुद्ध्युपाधिकमपि विज्ञानमुपसंहृत्य सुषुप्तं वा अयमात्मा प्रतिपद्यते "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" ( बृ० २-१-१७ ) इत्यादिश्रुतेः। क्रमनियमव्यावृत्त्यर्थो वाशब्दः। तथा च करणे स्वात्मनोऽधिष्ठातृत्वाभावे तेषां[न]प्रवृत्तिरित्यर्थः। मोक्षात्प्रागवस्थायां सदैवायमात्मा स्थानत्रयं क्रमाक्रमाभ्यां गच्छतीत्युपसंहरति—**एवमिति**। किमर्थमस्य स्थानत्रयस्य गमनं किन्निमित्तं चेति शङ्कमानं प्रत्याह—**कर्मेति**। चशब्दात् मिथ्याज्ञानकामादि कथ्यते। एतेन कर्मफलोपभोगार्थं गमनमित्यर्थादुक्तमित्यवसेयम्। ननु "अनन्वागतं पुण्येनानन्वागतं पापेन" ( बृ० ४-३-२२ ) इत्यादिश्रुत्या सुषुप्ते कर्मतत्फलाभावोऽभिलप्यते। तथा च कथं कर्मनिमित्तं स्थानत्रयगमनमुक्तमिति, तत्राह—**स्वप्नेति**। कथं तर्हि निमित्तमन्तरेण सुषुप्तं प्रतिपद्यते ? न हि तत्र कर्मनिमित्तमस्ति; तत्राह—**पुनरिति**। यथा स्वप्नजागरितानुकूलकर्मबलात् तत्फलोपभोगार्थं स्थानद्वयं गच्छति तथा तदुपभोगायतनासादितश्रमसम्भवात् तन्निवृत्तये सुषुप्तमपि प्राप्नोति। न च तत्र किञ्चिदपि कर्मनिमित्तमस्ति, अनन्वागतवचनविरोधात्। न च विषयविषय्याकारेण स्फुटतर-

**प्राणोऽपि तत्कर्मवशादेव शरीरं परिपालयन् वर्तते स्वप्नसुषुप्त्योर्मृतभ्रान्तिपरिहाराय। अहमित्यपि चात्मा न भवति सर्वैरात्मत्वेनाभिमतोऽपि प्रत्यगात्मविवेकरहितैः, दृश्यत्वात् घटादिवत्, व्यभिचारात्, सुखदुःखाद्यनेकसंसारधर्मविशिष्टत्वाच्च, कृशस्थूलादिधर्मविशिष्टदेहवत्। यद्येवं देहादिष्वनात्मसु आत्मत्वाशङ्का कुत इति चेत्। द्रष्टृदृश्यविवेकाभावात्।**

॥ इत्यात्मज्ञाने प्रथमः पटलः ॥

---

कर्मतत्फलाभावविषयमेतदिति वाच्यम्, नियामकाभावात्। न हि सुषुप्ते कर्म वा तत्फलं वा प्रमाणतो दृश्यते। न च कारणाभावात् तत्प्राप्तेरनुपपत्तिः, अवस्थाद्वयसञ्चारसञ्जातश्रमवशादुपाधिभूतबीजभावप्राप्तेरविरोधात्। अज्ञातब्रह्मप्राप्तेश्च स्वाभाविकत्वादिति भावः। ननु प्राणस्य करणान्तर्भावात् तेषूपरतेषु प्राणोऽपि(त)कस्मान्नोपरमते ? तथा च स्वापादेः करणावस्थातो विशेषो न स्यात् इत्यत आह—**प्राणोऽपीति**। चेतनस्य हि कर्मफलोपभोगाय शरीरमारब्धम्। तस्मात्प्राणापसर्पणे स्वापादौ तस्य श्ववायसादि(तिरिति)भिस्ततोऽपकर्षणे कर्मफलोपभोगायोगात्(त्मको)मृतोऽयमिति भ्रा(न्तौ त)न्तत्त्वपरिहारद्वारा शरीरपरिपालनाय प्राणस्य प्रवृत्तत्वात् उपरतेष्वपि करणेषु नासावुपरन्तुमर्हति; न च प्राणस्य करणान्तर्भावः शङ्कितुं शक्यते; "न वायुक्रिये पृथगुपदेशात्" (ब्र० सू० २-४-९) इति न्यायविरोधादित्यर्थः। दृश्यत्वादकरणत्वादचेतनोपभोगोपकरणत्वाच्च प्राणो नात्मेत्युक्तम्।

अपरे पुनः 'अहं जानामि' इत्यहङ्कारे निरुपचरितमहंप्रत्ययमुपलभमानाः तथैवात्मत्वमभ्युपयन्ति सर्वे चाहंप्रत्ययालम्बनमहङ्कारमेवात्मानमनुमन्यन्ते। तत्राह—**अहमित्यपीति**। ये हि प्रत्यगात्मानमहङ्कारसाक्षिणमहमित्यत्रानिदंचिद्धातुमितरस्मादिदम(च्छात्म्या)शादहङ्कारान्निकृष्य निश्चेतुं नोत्सहन्ते तैः सर्वैर्लौकिकैर्वादिभिश्चात्मत्वेनाभिमतोऽपि नासावात्मा भवितुमर्हतीत्यत्र हेतुमाह—**दृश्यत्वादिति**। आत्मनि च दृश्यत्वं पुरस्तादेव निरस्तम्। विमतो नात्मा व्यभिचारित्वात्, कुलालादिवत्। प्रसिद्धं चात्मनि सुषुप्त्यवस्थायामनुभूयमाने तदनुभवितरि नाहमुल्लेखोऽस्ति इत्यहमो व्यभिचारित्वमिति मत्वाऽऽह—**व्यभिचारादिति**। इतश्चाहङ्कारो नात्मा, कादाचित्कधर्मवत्वात् धर्मत्वाद्वा सम्प्रतिपन्नवदित्याह—**सुखेति**। सुखदुःखरागद्वेषादिभिः अनेकैस्संसारात्मभिः धर्मैरहं सुखीत्यादिना विशिष्टत्वमहमो दृष्टम्। अतश्च स नासावात्मा इति निश्चीयते, आत्मनः सर्वधर्मराहित्यश्रवणात्। न हि देहस्य कार्श्यकार्ष्ण्यस्थौल्यादिधर्मविशिष्टस्य आत्मतेत्युपदिष्टम्। भूमविद्यायां अहङ्कारादेशात्पृथगात्मादेशानुक्रमणादहङ्कारस्यानात्मत्वमवगमितम्। तस्माद्देहादीनामहङ्कारपर्यन्तानामनात्मत्वेन आत्माविद्याकल्पितत्वं सिद्धमित्यर्थः। देहादीनामनात्मत्वानुमानानि तेष्वहंप्रत्ययप्रतिहतत्वान्न प्रामाण्यं प्रतिपत्तुं प्रभवन्तीति प्रत्यवतिष्ठते—**यद्येवमिति**। देहादयो दृश्यास्तद्व्यतिरिक्तो द्रष्टेति विवेकानुदयादयसि दहनव्याप्ते दहतीति प्रत्ययवद्देहादिषु चैतन्यव्याप्तेषु अहंप्रत्ययसम्भवात् न विरुद्धानि प्रागुक्तान्यनुमानानीति परिहरति—**द्रष्टृति**।

देहादेरहमन्तस्य श्रुतिन्यायानुराधतः।
धियोऽन्यथात्वादात्मत्वभानादज्ञानकल्पना॥

॥ इत्यात्मज्ञानटीकायां प्रथमः पटलः ॥

## अथ द्वितीयः पटलः

**अथ स आत्मा क इति? उक्तेभ्यः सर्वेभ्यो व्यतिरिक्तेभ्यः अन्तरतमः आकाशवत् सर्वगतः सूक्ष्मो नित्यो निरवयवो निर्गुणो निरञ्जनो गमनागमनादिरहितोऽहङ्कारममकारेच्छाप्रयत्नरहितः स्वयंज्योतिःस्वभावः अग्न्युष्णवत् सवितृप्रकाशवच्च, आकाशादिभूतरहितः बुद्ध्यादिकरणरहितः प्राणादिवायुभेदरहितः सत्वादिगुणरहितः अशनायापिपासाशोकमोहजरामरणप्राणबुद्धिशरीरधर्मरहितो यः सर्वप्राणिहृदि स्थितः सर्वबुद्धेर्द्रष्टा स आत्मेति।**

---

## अथ द्वितीयः पटलः

देहादीनामनात्मत्वे आत्मा तद्व्यतिरिक्तः पृथङ्नासीत्। इदानीं तमेव प्रतिपादयितुं तस्याप्रसिद्धत्वान्न प्रतिपादनं सुकरमित्याक्षिपति—**अथेति**। ये तावदात्मनो व्यतिरिक्ता देहादयोऽहङ्कारान्ता दर्शिताः, तेभ्यः सर्वेभ्योऽन्तरतमोऽयमात्मा तस्य सर्वान्तिरत्वश्रुतेरित्युत्तरमाह—**उक्तेभ्य इति**। तर्हि तस्य बुद्ध्यादिवदन्तरवस्थितस्य परिच्छिन्नत्वं प्राप्तम्; नेत्याह—**आकाशवदिति**। "स पर्यगात्" इत्यादिश्रुतेः न तस्य परिच्छिन्नत्वाशङ्का सम्भवति, सावयवत्वानात्मत्वादिप्रसक्त्या च तदनुपपत्तिरित्यर्थः। सर्वकरणदेशेष्वपि विद्यमानत्वात् तैरस्य कस्मादुपलम्भो न भवेदित्याशङ्क्य "सूक्ष्माच्च सूक्ष्मतरम्" इत्यादिश्रुतिमाश्रित्योभयेन्द्रियागोचरत्वमुक्तम्—**सूक्ष्म इति**।

वैनाशिकास्तु प्रतिक्षणविनाशित्वमात्मनो मन्यन्ते। तान्प्रत्यबाधितप्रत्यभिज्ञया स्थायित्वमास्थायोक्तम्—**नित्य इति**। दिगम्बरास्तु आत्मानं नित्यमपि सावयवं सङ्गिरन्ते। तदयुक्तम्; सावयवस्य घटादिवदनित्यत्वप्रसङ्गात् इत्याह—**निरवयव इति**। वैशेषिकादयस्तु बुद्ध्यादिगुणाधिकरणमात्मानमातिष्ठन्ते; तन्न; 'केवलो निर्गुणश्च' इति श्रुतेः अन्तःकरणस्य तद्धर्मित्वश्रवणादित्याह—**निर्गुण इति**। आत्मनः स्वतो नाशाभावेऽपि हेतूपरागान्नाशो भविष्यतीत्यतो निर्गुणत्वेऽपि सदोषत्वमित्याशङ्क्यासङ्गागममङ्गीकृत्य सङ्गिरन्ते—**निरञ्जन इति**। तस्य गमनागमनादिक्रियाशक्तिमत्त्वमाङ्क्य निष्क्रियत्वश्रुतिमाश्रित्याह—**गमनेति**। केचित्पुनरहङ्कारादीनामात्मधर्मत्वमङ्गीकुर्वते। तान्प्रत्यस्थूलादिश्रुतिमनुसृत्याह—**अहंकारेति**। केचित्तु जडत्वमात्मनो मन्यन्ते। तान् प्रति "अत्रायं पुरुषः स्वयंज्योतिः" इत्यादिश्रुत्या परिहरति—**स्वयमिति**। यथाग्नेरुष्णस्पर्शस्वभावोऽभिमतः, यथा च प्रकाशः सवितुः स्वभावःस्वीकृतः तथात्मा स्वयमेव ज्योतिःस्वभावोऽभ्युपगन्तव्यः, श्रुतेरित्यर्थः। पृथिवीमयादिश्रुतेरात्मनो भूतसम्बन्धमाशङ्क्यानाकाशमित्यादिश्रुतेरेवमित्याह—**आकाशादीति**। पृथिवीमयादिश्रुतिस्तु सोपाधिकविषयत्वान्न प्रकृतप्रतिकूलेति भावः। "अवागमनोऽचक्षुरश्रोत्रम्" इत्यादिश्रुत्या करणसम्बन्धं धुनीते—**बुद्ध्यादीति**। निर्गुणश्रुतिमेवानुसृत्य गुणत्रयसम्बन्धं प्रत्यादिशति—**सत्वादीति**। "अप्राणो ह्यमनाः" इत्यादिश्रुत्या प्राणसम्बन्धोऽपि नास्तीत्याह—**प्राणादीति**। अशनायादिधर्मत्वात् आत्मनो न प्राणादिसम्बन्धवैधुर्यमित्याशङ्क्य "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इति श्रुत्योत्तरमाह—**अशनायेति**। यथोक्तस्यात्मनो बुद्धिस्थत्त्वेन सन्निहिततरत्वं "स वा एष आत्मा हृदि" इत्यादिश्रुत्या दर्शयति—**यस्सर्वेति**। "एष हि द्रष्टा" इत्यादिश्रुत्या द्रष्टात्मना हृदयेऽवस्थानं कथयति—**सर्वबुद्धेरिति**। यस्य प्रतिपादनाय प्रक्र(न्तः)मः कृतः सोऽयमात्मा कूटस्थचिद्धातुः उपपादितोऽस्माभिरित्युपसंहरति—**इतीति**। ननु स्वे महिम्नीति

**सर्वबुद्धिविशिष्टतयोपलभ्यमानत्वात् सर्वप्राणिहृदि स्थितः इत्युच्यते, न पुनःसर्वगतस्य निरवयवस्यात्मनो बुद्ध्याधारत्वं सम्भवति। यथाऽऽकाशस्य न कश्चित्पदार्थ आधारो भवति।**

**कथमहङ्कारममकारेच्छाप्रयत्नरहितस्य आत्मनो द्रष्टृत्वमिति ? द्रष्टृत्वं नाम दर्शनक्रियां करोतीत्यर्थः । यदि दर्शनक्रियां करोति द्रष्टा आत्मा तदा अशेषबुद्धिद्रष्टृत्वं नोपपद्यते। विरोधात्। यथा देवदत्तस्य क्रमानुरोधेन युतायुतसिद्धकरणादिसव्यपेक्षया गमनादिक्रियाकर्तृत्वं, नोभयप्रकारकरणसम्बन्धरहितस्याविक्रियस्य दृग्रूपस्यात्मनो दर्शनादिक्रिया स्यात् । यस्य तु पुनः करणादिसव्यपेक्षद्रष्टृत्वं तस्याल्पविषयद्रष्टृत्वं क्रमद्रष्टृत्वं अद्रष्टृत्वं अन्यथाद्रष्टृत्वञ्च स्यात् परिणामित्वात्, करणादिसव्यपेक्षत्वाच्च चित्तवत्, नैवमात्मनोऽल्पविषयद्रष्टृत्वं क्रमद्रष्टृत्वं अद्रष्टृत्वं अन्यथाद्रष्टृत्वञ्चेष्यते । विक्रिया**

---

श्रुतेः स्वमहिमप्रतिष्ठस्य कथं सर्वहृदयस्थत्वं,] तत्राह—**सर्वबुद्धीति** । सर्वहृदयस्थबुद्धिविशिष्टतया तत्साक्षित्वेन स्फुरणादौपचारिकमात्मनो हृदि स्थितत्वमिति स्वमहिमप्रतिष्ठितत्वमविरुद्धमित्यर्थः । सम्भवति मुख्ये हृदिस्थितत्वे किमित्यौपचारिकं तदुक्तमित्याशङ्क्य श्रुतिसमधिगतस्वमहिमप्रतिष्ठितत्वविरोधान्मैवमित्याह—**न पुनरिति** । न हि हृदयप्रतिष्ठबुद्ध्याधारत्वमात्मनो मुख्यमाख्यातुं युक्तम्, सर्वगतत्वात्, द्रव्यत्वे सति निरवयवत्वाद्वा गगनवदित्यर्थः। तत्र दृष्टान्तं स्पष्टयति—**यथेति** । यत्पुनरुक्तम्—आत्मा प्रयत्नादिरहितः सर्वबुद्धेर्द्रष्टेति, तत्र चोदयति—**कथमिति** । प्रयत्नादिरहितस्य द्रष्टृत्वे काऽनुपपत्तिरित्याशङ्क्याह—**द्रष्टृत्वमिति** । तद्धि दर्शनक्रियाकर्तृत्वम्; कर्तृत्वं च कारकाप्रयोज्यत्वे सति कारकप्रयोक्तृत्वम्; ततश्च कर्ता प्रयत्नरहितश्चेति विरुद्धमित्यर्थः। दर्शनक्रियाकर्तृत्वं द्रष्टृत्वमित्यत्रैव दोषान्तरमाह—**यदीति** । दर्शनक्रियाकर्तृत्वपक्षे युगपदशेषबुद्धितद्वृत्तिद्रष्टृत्वानुपपत्तिरित्यत्र हेतुमाह—**विरोधादिति**। निरवयवस्यात्मनोऽपर्यायेण विरुद्धानेकपरिणामायोगादित्यर्थः। यदि पुनरात्मा निरवयवोऽपि परिणमते तदा क्रमेणैव परिणमेत्। परिणामिनो निरवयवस्य दुरुपपादनत्वादिति मत्वा परिणामे दृष्टान्तमाह—**यथेति** । [युत]सिद्धं करणं कुठारादि। तद्धि देवदत्तात्पृथगेव लब्धात्मकम्। अयुतसिद्धं करणं करचरणादि। न हि तस्य देवदत्तमनपेक्ष्य स्वतन्त्रतया सिद्धिरस्ति। तदुभयापेक्षया क्रमानुरोधेन तद्वतो गमनभेदादिक्रियासु कर्तृत्वं दृष्टम्। दृश्यते हि कदाचित् पृथगेव सिद्धकठोरकुठाराद्यपेक्षया काष्ठादिहेतुत्वम्; कदाचिच्चापृथगेव सिद्धचरणाद्यपेक्षया गमनादिकर्तृत्वम्; न पुनरेकदैवोभयविधकरणापेक्षया नानाविधक्रियासु तस्य कर्तृत्वधीरित्यर्थः। अस्तु तर्हि प्रत्यगात्मनोऽपि विविधकरणसव्यपेक्षस्य दर्शनादिक्रियासु क्रमेण कर्तृत्वं, नेत्याह—**नोभयेति** । प्रत्यगात्मनोऽपि चिन्मात्रत्वेन कूटस्थासङ्गस्वभावस्य विविधकरणसम्बन्धायोगान्न क्रमद्रष्टृत्वोपपत्तिरित्यर्थः। यदि तस्यापि क्रियावत्त्वं करणसापेक्षत्वं चेष्यते, तत्राह—**यस्येति** । यथा चित्तस्य विक्रियावत्त्वात् करणापेक्षत्वाच्च कतिपयद्रष्टृत्वादि दृष्टं तथाऽऽत्मनोऽपि विक्रियादिमत्त्वे कतिपयद्रष्टृत्वादि दुर्वारमापतेदित्यर्थः । करणादीत्यादिपदमर्थादिसंग्रहार्थम् । नन्वात्मनोऽल्पविषयद्रष्टृत्वादि नानिष्टं तथैव द्रष्टृत्वादिति तन्न, अनङ्गीकारादित्याह—**नैवमिति** । अनङ्गीकारे हेतुमाह—**विक्रियेति** । "निष्कलं निष्क्रियं शान्तम्" इत्यादिशास्त्रान्न तस्य विक्रिया स्वीक्रियामर्हति । न चाविक्रियस्य द्रष्टृत्वमेष्टुं शक्यते; तस्य च कार्यकरणं निमित्तनिरपेक्ष(त्व)म्,

**अभावात् कारणादिनिमित्तनिरपेक्षत्वाच्च चित्तप्रदीपवदेव। कथं बुद्धयात्मनोः संयोग इति। उच्यते। सूक्ष्मत्वात् स्वच्छत्वान्निरवयवत्वाच्चोभयोः। तत्र शुद्धप्रकाशस्वरूप आत्मा स्फटिकमणिवच्च बुद्धिरप्रकाशस्वरूपा सती प्रकाशसन्निधिमात्रेण प्रकाशस्वरूपा च भवतीति बुद्धयात्मनोः संयोग इत्युच्यते, न तु पुनरमूर्तयोर्बुद्धयात्मनोः जतुकाष्ठवत् संश्लेषः सम्भवति। अनन्यापेक्षत्वाच्च द्रष्टृत्वस्य। यथाऽहङ्कारममकारेच्छाप्रयत्नरहितस्य प्रकाशस्वरूपसन्निधिसत्तामात्रेण वर्तमानस्यादित्यस्य प्रकाशकत्वमध्यारोप्यते अन्यैः प्रकाश्याभि-**

---

न तस्य कार्यं करणं चेत्यादि श्रुतेरवगम्यते। न च तस्याल्पविषयद्रष्टृत्वादि सिद्धयति "यः सर्वज्ञः सर्ववित्" इति श्रुतेरित्यर्थः। तत्र व्यतिरेकदृष्टान्तमाह—**चित्तेति**। यथा चित्ताख्यस्य प्रदीपस्य क्रियावत्वात् करणापेक्षत्वाच्च कतिपयद्रष्टृत्वमिष्टं न तथात्मनः सम्भवतीत्यर्थः। आत्मनो निरवयवत्वात् करणाद्यपेक्षत्वात् अहङ्कारादिरहितत्वाच्च क्रमाक्रमाभ्यां द्रष्टृत्वादित्याक्षेपो दर्शितः। सम्प्रति सर्वबुद्धिविशिष्टतयोपलभ्यमानत्वादित्यत्र बुद्धयात्मनोर्विशेषणविशेष्यभावस्य मूलत्वेन संयोगमुक्तमाक्षिपत्ति—**कथमिति**। न हि मूर्तामूर्तयोः बुद्धयात्मनोः जतुकाष्ठयोरिव संयोगः सङ्गच्छते। न च कार्यकरणद्रव्ययोः सम्बन्धान्तरं विशेषणविशेष्यत्वानुकूल्यमवलम्बते, दण्डदेवदत्तयोरदर्शनादित्यर्थः। आक्षेपद्वये प्राप्ते प्रथमं द्वितीयमाक्षेपं परिहरति—**उच्यत इति**। बुद्धयात्मनोर्वस्तुतः संयोगासम्भवेऽपि सम्भवत्येवाध्यासिकः सम्बन्ध इत्यर्थः। उक्तं सम्बन्धमेव व्यक्तीकर्तुं बुद्धयात्मनोः सादृश्यं दर्शयति—**सूक्ष्मत्वादिति**। अस्ति हि बुद्धयात्मनोरुभयविधेन्द्रियागोचरत्वम्; अस्ति च स्फटिकमणिवदुभयोः अतिस्वच्छत्वमात्मनश्च निरवयवत्वमविवादम्। बुद्धेस्तु सावयवत्वेऽपि घटादिवैलक्षण्यात् (तदुक्तमस्तयो)तयोरस्ति सम्बन्धयोग्यतेत्यर्थः। तथापि नासङ्गस्यात्मनो बुद्धया सह सम्बन्धो वास्तवः सिद्धयतीत्यभिसन्धाय प्रागुक्तं बुद्धयात्मनोराध्यासिकं सम्बन्धं प्रकटयति—**तत्रेत्यादिना**। तयोः सादृश्ये सति आत्मनः शुद्धचितोऽजडत्वात् बुद्धेश्च स्फटिकवदतिस्वच्छत्वेऽपि जडत्वादजडात्मव्याप्त्या प्रकाशव्याप्तेरध्याससिद्धा तयोः सङ्गतिरित्यर्थः। यथा जतुकाष्ठयोरग्निसंयोगद्वारा वस्तुसंश्लेषोऽस्ति न तथा बुद्धयात्मनोः मूर्तामूर्तयोः वास्तवः सम्बन्धः सेद्धुमर्हति मिथो विरुद्धत्वादिति व्यावर्त्यं कीर्तयति—**न पुनरिति**। अमूर्तयोः मूर्तामूर्तयोरित्यर्थः। बुद्धयात्मनोः सम्बन्धाक्षेपं परिहृत्यात्मनो द्रष्टृत्वाक्षेपं परिहरति—**अनन्यापेक्षत्वादिति**। अशेषबुद्धितद्वृत्तिसाधकत्वं कूटस्थचिन्मात्रत्वमात्मद्रष्टृत्वमिष्टम, न तु दर्शनक्रियाकर्तृत्वम्; अतो द्रष्टृत्वस्यान्यत्राकरणप्रयत्नादौ निरपेक्षत्वादिति। अन्यथा द्रष्टृत्वादेश्चात्मनि नित्यज्ञप्तिस्वभावे सर्वज्ञे सम्भावयितुमशक्यत्वान्न द्रष्टृत्वाक्षेपः सम्भवतीत्यर्थः। कथं पुनस्तृजन्तेन द्रष्टृशब्देन कर्तृवाचिना प्रयत्नादिनिरपेक्षकूटस्थचिन्मात्रत्वं विवक्षितमित्याशङ्क्य दृष्टान्तमाह—**यथेति**। आदित्यस्य हि करणप्रयत्नादौ निरपेक्षस्य विक्रियारहितेन प्रकाशेन प्रकाश्येषु विषयेषु सन्निधिमात्रेण प्रकाशकत्वं प्रतिपन्नम्। प्रयत्नादिद्वारा तस्य प्रकाशस्वभावस्य प्रकाशकत्वायोगादित्यर्थः। दृष्टान्तमुपसंहरति—**एवमिति**। पूर्वोक्तेन प्रकारेण प्रकाशस्वभावस्य प्रकाश्येष्वर्थेषु सन्निधानतावन्मात्रे वर्तमानो यस्सविता तस्य प्रकाशकत्वं प्रकाश्यार्थाभिव्यक्तिमपेक्ष्य द्रष्टृभिरारोप्यते। मुख्यवृत्त्या प्रकाशकर्तृत्वस्य प्रकाशरूपे तस्मिन्नसम्भवादित्यर्थः। उक्तदृष्टान्तानुसारेणात्मनोऽपि प्रयत्नादिशून्यस्य नित्यचैतन्यस्वभावस्य तेनैव स्वरूपभूतेन चैतन्येन बुद्धितद्वृत्तिसाक्षिणो द्रष्टृत्वं दृश्यबुद्ध्याद्यभिव्यक्त्यपेक्षया उपचर्यते। दृग्रूप-

**व्यक्त्यपेक्षया। एवमेव सर्वविक्रियारहितस्यात्मनो दृग्रूपस्य चैतन्यस्वरूपेणाव्यतिरिक्तेन सर्वप्रत्ययसाक्षिणो द्रष्टृत्वं उपचर्यते दृश्याभिव्यक्त्यपेक्षया। अन्यथा द्रष्टृत्वाभावात्तस्य।**

**कथं सर्वविक्रियाविशेषरहितस्यात्मनः कर्तृत्वमिति। उच्यते। भ्रामकवत्। यथा भ्रामकः स्वरूपसन्निधिसत्तामात्रेण लोहस्य प्रेरको भवति एवमेव सर्वविक्रियाविशेषरहितोऽप्यात्मा कारकावभासको भवति। तत्र कारकावभासकत्वं नाम—बुद्ध्यादीनि करणानि कारकाण्युच्यन्ते। तानि चैतन्यावभासितानि स्वविषयेषु प्रवर्तन्ते। तत्रैवं सति सर्वविक्रियाविशेषरहितस्यात्मनः कर्तृत्वमुपचर्यते। एवमात्मानं कथं बुद्ध्या विजानीयादिति। तन्न शक्यते वक्तुं बुद्धेरवभासकत्वात्, आदित्यज्योतिरिव यथा आदित्यो रूपेण न प्रकाश्यते एवमात्मा न दृश्यते बुद्ध्या। एतस्मादप्यात्मा न दृश्यते बुद्ध्या, बुद्धेः**

---

स्यात्मनो दर्शनक्रियाकर्तृत्वलक्षणद्रष्टृत्वासम्भवादित्युदाहरणनिष्ठमर्थं दार्ष्टान्तिके योजयति—**एवमेवेति।**

आत्मनः सर्वविक्रियाविशेषविरहित्वेन कूटस्थद्रष्टृत्वं चेत् "कर्ता शास्त्रार्थवत्त्वात्" इत्यत्र कर्तृत्वं तस्योक्तमयुक्तमापतेदिति शङ्कते—**कथमिति।** भ्रामकमणेः सन्निधिमात्रेण लोहप्रेरकत्ववदात्मनः विकारमन्तरेण सन्निधिमात्रेण कारकावभासकत्वं कर्तृत्वम्; तदिदमौपचारिकं कर्तृत्वमुपेत्य "यथा च तक्षोभयथा" इति न्यायेन परिहरति—**उच्यत इति।** दृष्टान्तं विवृणोति—**यथेति।** दृष्टान्तनिमित्तमर्थं दार्ष्टान्तिके निवेशयति—**एवमेवेति।** भ्रामकस्य लोहप्रेरकत्वे सन्निधिविशेषवदात्मनि कर्तृत्वोपचारे किं निमित्तमित्याशङ्क्याह—**तत्रेति।** आत्मनि कारकेषु यदवभासकत्वं तद्धि तस्मिन् कर्तृत्वोपचारे निमित्तमित्यर्थः। उक्तमेव प्रपञ्चयन् प्रथमं कारकाणि व्याकरोति—**बुद्ध्यादीनीति।** क्रियां कुर्वत् कारणं कारकं बुद्ध्यादीनि च तत्तन्नानाविधक्रियाकर्तृत्वाद्भवन्ति कारकाणीत्यर्थः। तेषां जडत्वेन स्वतो भानाभावात् चैतन्यसन्निधिमात्रेण भानभाजिनां प्रत्येकं विषयेषु प्रवृत्तिशक्तिः भवतीत्याह—**तानीति।** कारकवर्गे चैतन्यसन्निधानादेव भासमाने प्रवृत्तिशक्तिर्भागिनी। एवं सत्यात्मनो निर्विकारस्यैव कर्तृत्वमध्यारोप्यते। दृश्यते हि सन्निधानमात्रेण लोहप्रवृत्तौ भ्रामकस्य प्रेरकत्वारोपणमिति फलितमाह—**तत्रेति।** आत्मनः सर्वविक्रियाविशेषरहितत्वे 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुत्याऽस्य बुद्धिदृश्यत्वमनुपपन्नं स्यादिति चोदयति—**एवमिति।** श्रुतिविरोधो बुद्धिविषयत्वाभावे सत्यात्मनश्चोद्यते, किं वा तस्य बुद्धिविषयत्वं साध्यते? नाद्य इत्याह—**करणेति।** अद्वितीयात्माकारेण जायमानबुद्धिपरिणामस्याकारसमर्पकत्वात्, तज्जन्यस्फुरणातिशयाभावेऽपि तदधीनाज्ञाननिवृत्ति(मतश्चिदा)मत्या बुद्ध्या दृश्यत्वोपचारेण न श्रुतिविरोधचोद्यमवतरतीत्यर्थः। द्वितीयं दूषयति—**बुद्धेरिति।** न बुद्ध्या विषयीकरणमिति शेषः। तत्र दृष्टान्तमाह—**आदित्येति।** दार्ष्टान्तिकेन सह दृष्टान्तं प्रपञ्चयति—**यथेत्यादिना।** आत्मा बुद्धिप्रकाश्यो न भवति, तदवभासकत्वात्; यो यदवभासकः स न तत्प्रकाश्यो भवति, यथा आदित्यो रूपप्रकाशकः तत्प्रकाश्यो न भवतीत्यर्थः। किञ्च बुद्धिरात्मप्रकाशिका न भवति, वेद्यत्वात्, घटादिवत् इत्याह—**एतस्मादिति।**

**वेद्याया वेदितृत्वानुपपत्तेः। यदि तस्या अपि वेद्याया वेदितृत्वं स्यात् वेद्यता न स्यात् समत्वात् प्रकाशयोरिवेति।**

॥ इति द्वितीयः पटलः॥

## अथ तृतीयः पटलः

**तत्र जाग्रत्स्वप्नसुषुप्तान्युपन्यस्यन्ते बुद्धेरवस्थाविशेषाः। तेषां परित्यागार्थमात्मविशुद्धिप्रतिपादनाय च। तत्र जागरणम्—चक्षुरादीनि करणान्यादित्याद्यनुगृहीतानि स्वविषयेषु प्रवर्तन्ते। तत्र बुद्धिरपि करणव्यापारमनुभवति। तत्र प्रत्यगात्मचैतन्यावज्वलितोभयात्मिकाऽपि द्रष्टृदृश्याकाराऽपि परिणमते। तत्र प्रत्यगात्मेति कस्मादात्मा**

---

आत्मवद्बुद्धेरपि वेदितृत्वे प्रदीपयोरिव समानस्वभावत्वाद्बुद्ध्यात्मनोर्वेद्यवेदितृभावानुपपत्तिरिति पक्षमनूद्य प्रतिक्षिपति—**यदीत्यादिना**।

चिद्धातोस्सन्निधेरेव दृश्यबुद्ध्यादिदर्शनात्।
तदज्ञेयत्वतो ज्ञप्तिमात्रमात्मेति सुस्थितम्॥

॥ इति द्वितीयः पटलः॥

## अथ तृतीयः पटलः

समस्तविशेषशून्यं कूटस्थचैतन्यमात्रं प्रत्यगात्मतत्त्वमित्युक्तम्। इदानीमात्मन्यवस्थात्रयभाजि भासमाने कथं यथोक्तलक्ष्मत्वसिद्धिरित्याशङ्क्य तस्मिन्नवस्थात्रयस्फुरणमन्तःकरणोपाध्यविवेकनिबन्धनमिति प्रतिपादयितुं प्रक्रमते—**तत्रेति**। बुद्धेरन्तकरणस्यावस्थात्मकानि जाग्रत्स्वप्नसुषुप्तानि प्रत्यगात्मनि बुद्ध्यविवेकाद्भवन्तीति तस्मिन् व्यपदिश्यमानानीत्यर्थः। स्वगतानि तानि कस्मादात्मनिष्ठत्वेन कथ्यन्ते? यथाप्रथनमात्मनिष्ठान्येव किमिति न भवेयुरित्याशङ्क्याह—**तेषामिति**। जागरितादीनामवस्थारूपाणां विशेषाणां परित्यागसिद्धये बुद्ध्युपाधिकत्वं तेषामुपन्यस्यते। अन्यथा चैतन्यवत्परित्यागायोगादित्यर्थः। तेषामौपाधिकत्वोपवर्णनस्य प्रयोजनान्तरमाह—**आत्मेति**। यद्यवस्थात्रयमात्मनि भासमानमुपाध्यध्यारोपितमिष्यते विशुद्धिरात्मनः सिद्ध्यति, स्वतोऽवस्थात्रयसम्बन्धाभावात्। अतश्चावस्थात्रयस्यौपाधिकत्वप्रतिपादनमर्थवदित्यर्थः। आत्मनोऽवस्थात्रयातीतत्वस्थापनार्थमवस्थात्रयं विवृण्वन्नादौ जाग्रदवस्थां प्रस्तौति—**तत्रेति**। तासामवस्थानां मध्ये जाग्रदवस्था कीदृशीत्यपेक्षायां तत्प्रदर्शनं प्रथमं कर्तव्यमित्यर्थः। चक्षुरादिभिरिन्द्रियैः तदधिष्ठातृदेवतानिमित्ते रूपाद्यर्थेषु प्रवृत्तैस्तत्तदर्थोपलब्धिर्जाग्रन्नाम इन्द्रियैरर्थोपलब्धिर्जागरितमित्यङ्गीकारात् इत्याह—**चक्षुरादीनीति**। तस्यां खल्ववस्थायां बुद्धेरेव द्रष्टृत्वमित्याशङ्क्य निराचष्टे—**बुद्धिरिति**। विज्ञानक्रियाशक्तिमती बुद्धिः साभासाऽपि तस्यामवस्थायां प्रागुक्तचक्षुरादिकरणद्वारेण रूपादिविषयाकारपरिणामरूपं षड्व्यापारं प्रतिपद्यमाना द्रष्टृत्वव्यावृत्तकरणपक्षपातिनी भवतीत्यर्थः। चक्षुरादिदृष्टान्तार्थोऽपिशब्दः।

कथं पुनः बुद्धिः जडा सती विषयाकारपरिणामं प्रतिपत्तुं प्रभवति? न हि घटस्य घटाकारपरिणामत्वमुपलभ्यते, तत्राह—**प्रत्यगात्मेति**। बुद्धेः जडत्वेऽपि प्रत्यगात्मभूतचैतन्याभासव्याप्तिरस्ति,

**विशेष्यते ? व्यभिचारिणामनात्मत्वख्यापनार्थम् । तत्र बुद्ध्यादीनि करणानि घटादिवत् दृश्यभूतान्यपि बाह्यापेक्षया तारतम्यक्रमेण प्रत्यगात्मसंयोगादात्मानो भवन्ति । उदकस्याग्निसंयोग इवोष्णत्वं; न त्वात्मनः तत्संयोगादनात्मत्वं सम्भवति उदकसंयोग इवाग्नेरनुष्णत्वं न त्वात्मनः प्रत्यगात्मत्वं कदाचिदपि व्यभिचरति आत्माभ्यन्तरवस्त्वन्तराभावात् बुद्ध्यादीनामिव ; अत आत्मा प्रत्यगात्मेति विशेषणार्थः । एवं सत्यव्यभिचारित्वमात्मनः ख्यापितं भवति ।**

---

बुद्धाविवाहंप्रत्ययस्य तस्मिन्नभावादित्यर्थः । उभयात्मकेत्यस्य व्याख्यानं द्रष्टृदृश्यमिति चैतन्याभासव्याप्तायाः बुद्धेरहमिति परिणामो द्रष्ट्राकारो भवति; तस्याश्च रूपादिदृश्याकारेण परिणामान्तरं चक्षुरादिद्वारकमिष्टम्, तदुभयविधपरिणामद्वारेण प्रमातृप्रमाणप्रमेयादिव्यवहारः सर्वोऽपि निर्वहतीत्यर्थः । यदुक्तम् 'प्रत्यगात्मावज्वलिता धीः' इति तत्र प्रत्यगात्मेति विशेषणस्य प्रयोजनं पृच्छति—**तत्रेति ।** प्रकृतं वाक्यं सप्तम्या परामृश्यते । न हि फलविकलं विशेषणं प्रयोक्तुं युक्तम् "सम्भवे व्यभिचारे च विशेषणमर्थवत्" इति न्यायात्; अन्यथाऽतिप्रसङ्गात् इत्यर्थः । विशेषणस्य प्रयोजनवत्त्वं प्रतिजानीते—**व्यभिचारिणामिति ।** के ते व्यभिचारिणः येषामनात्मत्वं ख्यापयितुमिष्यते, तत्राह—**तत्रेति ।** व्यभिचार्यव्यभिचारिप्रसङ्गे सतीति यावत् । करणानि व्यभिचारीणीति शेषः । ननु तेषां घटादिवत् दृश्यत्वादात्मत्वशङ्कैव नोपजायते । तदा च तदनात्मत्वख्यापनमस्याकिञ्चित्करमिति, तत्राह—**घटादिवदिति ।** यद्यपि देहादयोऽहङ्कारपर्यन्ता दृश्यभूता घटादिवदवतिष्ठन्ते तथापि प्रत्यगात्मना संयोगादात्मत्वशङ्काभाजो भवन्ति । दृश्यते हि देहस्य बाह्यघटाद्यपेक्षया प्रत्यगात्मसंयुक्तस्याहंप्रत्ययालम्बनत्वेनात्मत्वम् ! तदपेक्षया चान्तराणामिन्द्रियाणां प्रत्यगात्मसंयोगिनां धर्मविशेषवतां अहंप्रत्ययविषयाणामात्मत्वम् । एवं पूर्वपूर्वापेक्षयोत्तरोत्तरस्य मनोबुद्ध्यादेरात्मचैतन्यव्याप्तस्यात्मत्वं तरतमभावेनाशङ्क्यते । लोहपिण्डस्याग्निसंयोगादग्नित्वशङ्कासमुन्मेषदर्शनादित्यर्थः । अनात्मनामपि बुद्ध्यादीनामात्मचैतन्याभासव्याप्तेरात्मत्वशङ्का समुन्मिषतीत्यत्र दृष्टान्तमाह—**उदकस्येति ।**

बुद्ध्यादीनामनात्मनामात्मसम्बन्धादात्मत्वं प्रतिभाति चेदात्मनोऽपि बुद्ध्याद्यनात्मसम्बन्धादनात्मत्वं किं न प्रतिभायादित्याशङ्क्य दृष्टान्तेन निराचष्टे—**न त्विति ।** वह्नेः स्वसत्तायां कदाचिदपि शैत्यभाक्त्वाभाववत् अनात्मसंयोगेऽपि नानात्मत्वमात्मा प्रतिपद्यते वह्नेरपि सलिलसम्बन्धेन शैत्यप्रसङ्गादित्यर्थः । बुद्ध्यादीनामापेक्षिकप्रत्यक्त्ववदात्मनोऽपि प्रत्यक्त्वमापेक्षिकं स्यादित्याशङ्क्याह—**न त्वात्मन इति ।** प्रत्यगात्मत्वमात्मनो निरुपचरितमित्यत्र हेतुमाह—**आत्मेति ।** यथा बुद्ध्याद्यपेक्षयाऽऽत्माभ्यन्तरो गृह्यते न तथाऽऽत्मापेक्षया किञ्चिदभ्यन्तरं वस्त्वन्तरमस्ति प्रमाणाभावात्; तस्य च सर्वान्तरत्वश्रुतेः; अतस्तस्य निरुपचरितं प्रत्यक्त्वमित्यर्थः । बुद्ध्यादीनामुपचरितप्रत्यगात्मत्वभाजामपाकरणार्थं **प्रत्यगात्मेति ।** निरुपचरितप्रत्यगात्मत्वमात्मनि विशेषणमुपसम्पन्नमित्युपसंहरति—**अत इति ।** विशेषणस्योक्तं फलं अतः शब्देन परामृश्यते । बुद्ध्यादीनां बाह्यानां मिथः स्वरूपतश्च व्यभिचारित्वम् । आत्मनस्तु सर्वान्तरस्य सन्निधिमात्रेण सर्वावभासकस्य निरुपचरितं प्रत्यक्त्वमिति स्थिते फलितमाह—**एवं चेति ।** बुद्धेर्द्रष्ट्राकारत्वं दृश्याकारत्वं चेति परिणामद्वयमधस्तादावेदितम् ।

**तत्र प्रत्यगात्मचैतन्यावज्वलिता द्रष्ट्राकाराऽपि परिणमते तप्तलोहवत्, दृश्याद्युपरक्ता विषयाकारा द्रुतताम्रादिवत्। तत्रैवं सति तदुभयसाक्षिणः कालाकाशवत् सर्वगतस्याविक्रियस्य दृग्रूपस्य आत्मनो जागरणमिव भवति। अथ पुनः सा धीः रूपाद्याकारवासिता रूपाद्यन्तरेण पुष्पपेटिकेव अविद्याकामकर्मभिः प्रेर्यमाणा संस्काररूपा दृश्यत्वेन व्यवतिष्ठते। तद्दर्शिनः स्वप्न इव भवति तदनुकारित्वादात्मनो जलचन्द्रवत्।**

**अथ पुनः सा धीः स्फुरणरहिता वासनारूपेण स्वरूपशून्येव चैतन्यग्रस्ता सामान्यरूपेण व्यवतिष्ठते। तत् सुषुप्तमिव भवति वटकणिकायामिव वटवृक्षः।**

॥ इति तृतीयः पटलः ॥

---

तत्रावान्तरविशेषं दर्शयति—**तत्रेति**। अनात्मनां व्यभिचारित्वमात्मनश्चाव्यभिचारित्वमिति स्थिते सत्यनात्मनि बुद्धौ उक्तपरिणामद्वयं तदनात्मत्वव्यक्तीकरणार्थं वक्तव्यमित्यारम्भे प्रथमं द्रष्ट्राकारं परिणामं विवृणोति—**प्रत्यगात्मेति**। यथा वह्निव्याप्तं तप्तं लोहं वह्न्याकारं भजते तथा प्रत्यगात्मभूतचैतन्यव्याप्तमन्तःकरणं अहमिति द्रष्ट्राकारभाग्भवतीत्यर्थः। बुद्धेरेव विषयाकारं परिणामं परिदर्शयति—**दृश्यादीति**। आदिशब्देन दर्शनं परामृश्यते। यथा हि मूषायान्निषिक्तं द्रुतताम्रादि मूषाकारं भजते तथा वृत्तिद्वारेण दृश्येषु संसृष्टा धीर्विषयाकारिणी भवतीत्यर्थः। बुद्धेरुभयविधपरिणामवत्त्वे फलितमाह—**तत्रेति**। तस्मिन्नन्तःकरणे प्रागुक्तरीत्या परिणामद्वयवति सति द्रष्ट्राकारस्य दृश्याकारस्य च परिणामद्वयस्य तद्वतश्च साक्षिभूतप्रत्यगात्मनो मिथ्याभूतं जागरितं भवतीति सम्बन्धः। तस्य मिथ्यात्वे हेतुमाह—**कालेति**। आत्मनः सर्वगतत्वात् निरवयवत्वेन विक्रियायोग्यत्वाच्च परिणामपरिस्पन्दयोः असम्भवादारोपितमेव तस्मिन् जागरितमित्यर्थः। किञ्च चिद्रूपत्वादात्मनो न तस्मिन् दर्शनार्था विक्रिया प्रकल्पते। ततश्च तस्मिन्नध्यस्तं जागरितमित्याह—**दृग्रूपस्येति**।

एवमात्मन्यारोपितं जागरितं निरूप्य स्वप्नं निरूपयति—**अथेति**। जाग्रन्निमित्तकर्मक्षयानन्तरं पुनः स्वप्ननिमित्तकर्मोद्भवे सति जागरितशब्दितविज्ञानविनाशजनितसंस्कारसहकृतमन्तःकरणमविद्यादिप्रेरितं विषयसम्बन्धमन्तरेणैव विषय्याकारेण संस्कारसामर्थ्यादवभासते। यथा पुष्पवासनावासिता पुष्पपुटिका विनैव पुष्पं पुष्पगन्धं जनयति, तथैवेदमन्तःकरणमन्तरेण विषयमुक्तविधं सदात्मनः स्वयं ज्योतिषो दृश्यतामापद्यते। तद्दर्शनमस्यात्मनः स्वप्नत्वेन कथ्यते। करणेषूपरतेषु जागरितसंस्कारजनितं सविषयं विज्ञानं स्वप्न इत्यङ्गीकारादित्यर्थः। अन्तःकरणादिकरणधर्माणामात्मन्यध्यारोपणे हेतुमाह—**तदनुकारित्वादिति**। आत्मन्यन्तःकरणाध्यासादात्मनस्तद्धर्मानुकारित्वात् तज्जागरणे जागरणम्, तदीयस्वप्ने च स्वप्नस्तत्र भाति "ध्यायतीव लेलायतीव" इति श्रुतेरित्यर्थः। आत्मनि स्वतो जागरिताद्यभावे दृष्टान्तमाह—**जलेति**। यथा घटशरावादिजलगतचलनमेव चन्द्रचलनं न तु पृथक्तस्य चलनमस्ति तथात्मन्यपि बुद्धिधर्मानुसारित्वं द्रष्टव्यमित्यर्थः।

सम्प्रति सुषुप्तं कथयति—**अथेति**। अवस्थाद्वयनिमित्तकर्मनिवृत्त्यनन्तरं तत्र निरन्तरसञ्चारसमुद्भूतप्रभूतश्रमवृत्तौ सत्यां प्रकृता धीर्जागरितात्मना च स्फुरणरहिता चैतन्येनाज्ञातेन ग्रस्ता स्वात्मन्यन्तर्भाविता स्वरूपशून्येव व्यवतिष्ठते। चैतन्येन स्वात्मन्यन्तर्भावितत्वे धियः स्वरूपशून्यत्वमेव मोक्षदशायां युक्तम्। तथा च इवशब्दो वृथेत्याशङ्क्य विशिनष्टि—**सामान्यरूपेणेति**। सामान्यं

## अथ चतुर्थः पटलः

**तत्र चिन्मात्रस्वरूप आत्मा कार्यकरणाविद्याकामकर्मविनिर्मुक्तः सलिलवत् स्वच्छः स्वात्मस्थो भवति। एतानि बुद्धेरवस्थाविशेषणानि नात्मनः, आत्मनोऽविक्रिय-**

---

सर्वकार्यसाधारणं साभासमज्ञानमव्याकृतं तत्तादात्म्येन बुद्धेरवस्थानमात्मन्यारोपितं सुषुप्तमित्यर्थः। कारणात्मना धियोऽवस्थाने किमित्युपलम्भो न भवेदित्याशङ्क्याह—**वटकणिकायामिति**। यथा वटवृक्षो वटकणिकायां(किं) प्रागपि जन्मनो वर्तते, नरविषाणवदसतो जन्मायोगात्, तथापि नोपलभ्यते। तथेहापि कारणात्मनाऽवस्थितमन्तःकरणमनभिव्यक्तनामरूपत्वान्नाभिव्यक्तिभाग्भवतीत्यर्थः।

स्थानानां कल्पना यस्मिन् बुद्धिद्वारा प्रसाधिता।
तदस्त्यकल्पितं ब्रह्म द्वैताभावोपलक्षितम्॥

॥ इति तृतीयः पटलः॥

## अथ चतुर्थः पटलः

अन्तःकरणविशेषणभूतमवस्थात्रयमन्तःकरणाध्यारोपणादात्मन्यध्यारोपितं प्रतिभातीत्युक्तम्। इदानीमारोपितावस्थात्रयविनिर्मुक्तमद्वितीयमात्मतत्त्वं प्रतिपादयितुं प्रारभते—**तत्रेति**। अवस्थात्रयप्रतिभानं प्रत्यगात्मनि परोपाधिकृतमिति स्थिते सति प्रत्यगात्मा चिन्मात्रस्वभावात्सिद्ध्यतीत्यर्थः। प्रत्यगात्मन्यवस्थात्रयस्य स्वाभाविकत्वाभावेऽपि कथं तस्य चिन्मात्रत्वसिद्धिरित्याशङ्क्य परमार्थतोऽवस्थात्रयतत्कारणसम्बन्धवैधुर्यादित्याह—**कार्येति**। कार्यं स्थूलशरीरप्रधानं जागरितं, करणं तदुपलक्षितलिङ्गशरीरप्रधानं स्वप्नस्थानं, अविद्या स्थानद्वयकारणं सुषुप्ताख्यमज्ञानं, कामकर्मणी मिथ्याज्ञानसहिते जागरितादिस्थानद्वयस्य निमित्तभूते। (तथ्यो)⋯तैरयमात्मा विनिर्मुक्तोऽभ्युपगम्यते। "न तस्य कार्यं करणं च विद्यते" "अतमोऽवाय्वनाकाशं" "अतिच्छन्दा अपहतपाप्मा" इत्यादिश्रुतेः। **तथा च** यथोक्तेभ्यो जडेभ्यो वैलक्षण्यादात्मनो युक्तं चिन्मात्रत्वमित्यर्थः। तस्यैव नित्यशुद्धत्वमाह—**सलिलवदिति**। अवस्थाद्वयतद्धेतुनिर्मोकादेवात्मनोऽत्यन्तनैर्मल्यं लभ्यते। न हि सलिलं द्रव्यान्तरसम्पर्काभावे स्वाभाविकं स्वाच्छ्यमपहाय स्थातुं पारयति "सलिल एको द्रष्टा" इत्याद्या श्रुतिरमुमर्थमप्रत्यूहमाहेत्यर्थः। अवस्थात्रयासम्भवात् अत्यन्तनैर्मल्याच्चात्मनः स्वमहिमप्रतिष्ठासिद्धिरित्याह—**स्वात्मस्थ इति**। अवस्थात्रयस्य जडस्यैवाधेयत्वादात्मनः तदसम्बन्धोक्तेः "स्वे महिम्न" इति च श्रुतेः आधारान्तरनिरपेक्षतेत्यर्थः। बुद्ध्युपाध्यधीनं पराधीनमपि इदमवस्थात्रयं जडस्यैवाधेयत्वादात्मनः पारमार्थिकं किमित्यात्मनि न भवतीत्याशङ्क्याह—**एतानीति**। यानि बुद्धेरवस्थारूपाणि विशेषणानि जागरितादीनि तानि बुद्धिसम्बन्धादपि परमार्थतो नात्मनः पारमार्थिकी भवितुमर्हन्तीत्यत्र हेतुमाह—**अविक्रियत्वादिति**। विक्रियावति पदार्थे स्यादपि कदाचिदौपाधिकम्। दृश्यते हि कार्पासादावलक्तकादिरससंस्कृतबीजप्रसूते वास्तवमेव लौहित्यम्। अविक्रिये पुनरात्मनि अनाधेयातिशये बुद्ध्युपाधिकृतमवस्थात्रयं न पारमार्थिकं भवितुमर्हति, उपाधेरपि

**त्वात्। एतानि परित्यज्य तुरीय आत्मेति प्रतिपत्तव्यः। अत्र तुरीयत्वं नाम सुवर्णघनवद्विज्ञानघनत्वं, तथापि चैतन्यस्वरूपसन्निधिमात्रेण साक्षिमात्रत्वं तत् न स्थानान्तरमात्मप्रतिपत्तिभावात्, शून्यत्वप्राप्तेः, कल्पितानाञ्च निरास्पदत्वानुपपत्तेः।**

**कथमेतान्यात्मविशुद्धिप्रतिपत्तिहेतूनि भवन्ति। एतेषु हि सत्सु आत्मविशुद्धिरवगम्यते। कथमवगम्यत इति। उच्यते। एतेषु त्रिष्वपि स्थानेषु द्रष्टृत्वाव्यभिचारात्। सुषुप्ते व्यभिचरतीति चेत्; न, तत्रापि दृश्यमेव निवारयति सर्वो लोकः। कथं, नाहमत्र**

---

कल्पितत्वादित्यर्थः। आत्मा तर्हि कथं प्रतिपत्तव्यः स्यादित्याशङ्क्याह—**एतानीति**। बुद्धिविशेषणानि जागरितादीनि प्रकृतानि रज्जुसर्पवदात्मनि कल्पितानि, न वस्तुभूतानीति परित्यज्यात्मा तुरीयो जागरितादिस्थानत्रयरहितो भवतीति प्रतिपत्तव्यतामाचरतीत्यर्थः।

ननु तुरीयत्वस्य चतुर्थपर्यायत्वादवस्थात्रयरूपावान्तरसंख्यायास्तत्र निवेशादात्मनोऽवस्थात्रयविनिर्मुक्तत्वमसिद्धमित्याशङ्क्याह—**तत्रेति**। सप्तम्या प्रत्यगात्मोच्यते। न हि तुरीयशब्देन प्रत्यगात्मनि काचिदवस्था विवक्ष्यते। निरस्तसमस्तावस्थाविशेषणं स्वप्रकाशविज्ञानतावन्मात्रमित्यविद्याकल्पितावस्थात्रयाभावापेक्षया संख्यासामान्याभावेऽपि तुरीयमित्युपचारोपपत्तिरित्यर्थः। यदि यथोक्तविज्ञानघनं तत् तर्हि व्यतिरिक्तत्वमेवात्मनो युक्तं तस्यावस्थात्रये सति प्रतिभानाभावादित्याशङ्क्याह—**तथाऽपीति**। अवस्थात्रये भ्रान्त्यैव तुरीयस्य स्फुरणाभावेऽपि सन्निधिमात्रेणावस्थात्रयसाक्षित्वमेव तुरीयस्वरूपं न स्थानान्तरं अनात्मभूतमित्यत्र हेतुमाह—**आत्मेति**। कूटस्थबोधातिरिक्तस्य ज्ञेयत्वादिना घटादिवदनात्मत्वात् कूटस्थबोधस्यापि प्रत्यगात्मत्वाभावे तदसिद्धेः तदधीनसिद्धिकमन्यदपि न सिद्ध्यति। न हि प्रत्यगात्मनि प्रतिपत्तारमन्तरेणानात्मजातं स्वतोऽन्यतो वा सेद्धुमलम्। तथा च सर्वस्य शून्यत्वप्रसङ्गात् तुरीयं विज्ञानघनमेवात्मस्वरूपमविद्यावशादवस्थात्रये यथावदप्रतिपन्नं तिष्ठतीत्यर्थः।

भवतु सर्वशून्यत्वमिति शून्यवादिनो मन्यन्ते। तान्प्रत्याह—**कल्पितानां चेति**। समस्तस्यैव द्वैतप्रपञ्चस्य दृश्यत्वजडत्वादिना रज्जुसर्पवत् कल्पितत्वादकल्पितमजडबोधमात्मानमन्तरेणानुपपत्तेरात्मापि ज्ञप्तिस्वभावोऽभ्युपेयः। न हि निरधिष्ठानकल्पना कल्पते। न च शून्यस्यास्याधिष्ठानत्वमारोपितानुवेधाभावात्तदनुविद्धस्यैवाधिष्ठानत्वात्। न च बाधोऽवधिं विना नेत्येव सम्भवति। तस्मात् कल्पनाधिष्ठानत्वेन तद्बाधावधित्वेन चाजडमात्मतत्त्वमास्थेयमित्यर्थः। अवस्थात्रयकथनं तत्परित्यागार्थमिति प्रतिज्ञातं समर्थितम्। यदुक्तमवस्थात्रयोपवर्णनमात्मविशुद्धिप्रतिपादनायेति, तदाक्षिपति—**कथमिति**। एतानि हि स्थानानि स्वयमशुद्धिरूपत्वादात्मनो विशुद्धिप्रतिपत्तौ नैव कारणानि भवितुमर्हन्ति। न हि स्वयमशुद्धस्यान्यत्र शुद्धिहेतुत्वमुपलब्धमित्यर्थः। तेषामशुद्धिरूपत्वेऽपि सत्स्वेव तेष्वात्मनो विशुद्धेरवगतेः युक्तं तद्विशुद्धिप्रतिपत्तिहेतुत्वमित्यर्थः। अवस्थात्रयस्य व्यभिचारेऽपि व्यभिचाराभावादात्मनः शुद्धतेत्ययुक्तं न किञ्चिन्मया चेतितमेतावन्तं कालमिति स्वापानन्तरं द्रष्टृत्वाभावपरामर्शदर्शनादात्मनोऽपि स्वापे व्यभिचारप्रतीतेरिति शङ्कते—**सुषुप्त इति**। स्वापेऽपि दृश्यतत्सम्बन्धयोरेव व्यभिचारो न स्वरूपदृष्टेरित्युत्तरमाह—**नेत्यादिना**। तत्र प्रमाणं पृच्छति—**कथमिति**। अनुभवं प्रमाणयति—**नाहमिति**। अत्र हि 'सुषुप्ते न किञ्चिदहमुपलब्धवान्'

**सुषुप्ते किञ्चिदप्युपलब्धवानिति न दृष्टिम्। तस्यास्तर्हि सर्वत्र अव्यभिचारात्। अत एव कूटस्थनित्य आत्मा सिद्धः स्वत एव न प्रमाणान्तरापेक्षया। आत्मनश्चेत् प्रामाणापेक्षा सिद्धिः कस्य प्रमातृत्वं स्यात्। यस्य प्रमातृत्वं स एवात्मेति निश्चीयते। नन्वागमेनात्मा परिच्छिद्यते। न। आगमोऽप्यात्मन्यध्यारोपितातद्धर्मनिवर्तनद्वारेण ब्रह्मात्मनोरेकत्वप्रतिपत्तिं प्रति मानत्वं प्रतिपद्यते। निर्ज्ञातपदार्थद्वयस्यानिर्ज्ञातार्थाभिव्यञ्जकमेतत्, स्वतः सिद्धत्वादात्मनः। सोऽहमिति स्मृत्या प्रतिसन्धानात् पुण्यापुण्यसम्बन्धाभावात्**

---

इति दृश्यविषयं तदज्ञानाभावमात्रमुत्थितो जन्तुरनुभवति, न स्वरूपाभावमपि नाहमनुभवाभावात्। "पश्यन्वै तन्न पश्यति" इति श्रुतेः इत्यर्थः। आत्मस्वभावदृष्टेः सुप्ते व्यभिचाराभावे फलितमाह—**तस्यास्तर्हीति**। तर्हि तस्यां सुषुप्त्यवस्थायामात्मस्वरूपदृष्टेरुपदिष्टया विधया व्यभिचाराभावे तथैव तस्याः सर्वत्र व्यभिचाराभावात् कूटस्थत्वे सति नित्यता शुद्धता च सिद्धा, परिणामित्वे क्षीरादिवद्व्यभिचारित्वप्रसङ्गात्; अशुद्धत्वे च स्थानत्रयान्तर्भावेन व्यभिचारित्वतादवस्थ्यादित्यर्थः।

नन्वव्यभिचारित्वेन कूटस्थनित्यत्वाद्यनुमाने तद्वेद्यत्वात् "एतदप्रमयं ध्रुवम्" इत्यादिश्रुतिविरोधः स्यादित्याशङ्क्याव्यभिचारित्वादिलिङ्गस्यात्मन्यारोपितव्यभिचारित्वादिनिरासद्वारा सम्भावनामात्रहेतोः निरपेक्षतया निश्चायकत्वाभावादतिरिक्तानुभवानपेक्षस्वरूपप्रकाशेन कूटस्थनित्यता सिद्धेत्याह—**अत एवेति**। लिङ्गस्य सम्भावनामात्रहेतुत्वादेव न प्रमाणापेक्षाऽऽत्मनः सिद्धिरित्यक्षरार्थः। तस्य प्रमाणगम्यत्वे दूषणमाह—**आत्मनश्चेदिति**। आत्मनोऽपि घटादिवत् प्रमेयत्वेऽपि प्रमात्रन्तराभावात् तस्य च प्रमेयत्वेन समाप्तस्य प्रमातृत्वायोगात् तदभावे प्रमाणप्रमेयप्रमितीनामप्यसम्भवात् न प्रमाणेनात्मसिद्धिरित्यर्थः। प्रमेयात्मनो व्यतिरिक्तस्य प्रमातृत्वान्नोक्तो दोषोऽस्तीत्याशङ्क्याह—**यस्येति**।

प्रमाणान्तराप्रमेयत्वेऽपि तस्यागमगम्यत्वमौपनिषदत्वादेषितव्यं इत्याशङ्कते—**नन्विति**। आत्मनो विषयत्वाभावादागमेनापि परिच्छिद्यमानत्वं नास्तीति परिहरति—**नागमोऽपीति**। परिच्छिनत्ति आत्मानमित्यध्याहारः। कथं तर्हि तद्धितश्रुत्या वेदान्तैकवेद्यत्वमात्मनः दर्शितमिति, तत्राह—**आत्मनीति**। आत्मन्यारोपितकर्तृत्वादिकारणीभूताज्ञाननिवर्तकब्रह्मात्मैकत्वाकारबुद्धिवृत्तिजनकत्वेन तत्त्वंपदार्थयोरैकरस्यप्रतिपत्तौ प्रमाणभावमागमोऽनुभवतीत्यर्थः। तत्र हेतुमाह—**निर्ज्ञातेति**। शोधिततत्त्वं पदार्थस्याधिकारिणः शास्त्रमन्तरेणाज्ञातं ब्रह्मात्मैकत्वमर्थमभिव्यञ्जयत् तत्त्वमस्यादिवाक्यमुक्तेन प्रकारेण प्रमाणमज्ञातज्ञापकं प्रमाणमित्युपगमात्। अतः शास्त्रप्रामाण्यं ब्रह्मात्मैकत्वाकारबुद्धिवृत्तिजनकत्वद्वारेण अज्ञानतदुत्थानर्थनिवर्तकत्वादेष्टव्यम्; न तु फलरूपे फलजनकं शास्त्रमित्यर्थः। आत्मनि शास्त्रस्य फलजनकत्वे प्रमाणत्वाभावे हेतुमाह—**स्वतःसिद्धत्वादिति**। "अत्रायं पुरुषः स्वयंज्योतिः" इति श्रुतेरात्मनः स्वयमेव फलरूपत्वात् न तत्र फलमुत्पाद्य शास्त्रं प्रमाणीभवतीत्यर्थः। पूर्वोक्तहेतुपरामर्शद्वारा प्रकरणार्थमुपसंहरति—**सोऽहमित्यादिना**। अवस्थात्रयेऽपि सोऽहमित्यभिज्ञया प्रतीचो द्रष्टृत्वाव्यभिचारस्योपदिष्टत्वादवस्थात्रयस्य च मिथोव्यभिचाराद्व्यभिचारिणः स्थानत्रयादात्मनोऽव्यभिचारिणो व्यतिरिक्तत्वं प्रागुक्तं युक्तमेवेत्यर्थः। तत्रैव हेत्वन्तरमाह—**पुण्येति**। "अनन्वागतं पुण्येनानन्वागतं पापेन" इत्यादिश्रुतेरात्मनः तदुभयसम्बन्धाभावाधि-

**स्थानत्रयव्यतिरिक्तत्वं नित्यत्वं शुद्धत्वं मुक्तत्वं बुद्धत्वं अविक्रियत्वं अलुप्तदृक्स्वरूपत्वं एकत्वं चात्मनः स्वानुभवेनैव मम सिद्धमिति जानाति विद्वान् । आचार्यप्रसादादज्ञाननिद्राप्रबुद्धः संसारविनिर्मुक्तो विद्वान् । एष आत्मज्ञानोपदेशविधिः ।**

**एवं ज्ञात्वा कृतकृत्यो भवति नान्यथेत्येवं वेदान्तानुशासनं वेदान्तानुशासनमिति ।**

॥ इति चतुर्थः पटलः ॥

॥ इति श्रीशङ्करभगवत्पादाचार्यविरचितः आत्मज्ञानोपदेशविधिः समाप्तः ॥

---

गमादवस्थात्रयातिरिक्तत्वं युक्तमेवोक्तमित्यर्थः । यदावस्थात्रयातिरिक्तत्वमात्मनः सिद्धं तदा तस्य नित्यत्वमपि सिद्धमेवावधेयम्, अवस्थात्रयस्यैवानित्यत्वादाकाशवच्च तस्य नित्यत्वश्रुतेरित्याह—**नित्यत्वमिति** । नित्यत्वे शुद्धत्वमपि सिद्धम्; अन्यथा नित्यत्वानुपपत्तेः "शुद्धमपापविद्धम्" इति श्रुतेरित्याह—**शुद्धत्वमिति** । अवस्थात्रयस्यैवाशुद्धत्वात्ततो व्यतिरिक्तत्वाच्च शुद्धत्वं सिद्ध्यतीत्यर्थः । कार्येणात्मनः तादात्म्यैक्ययोरसम्भवमभिधाय कारणेनापि तस्य तादात्म्यासम्भवं सङ्गिरते—**बुद्धत्वमिति** । जडादवस्थात्रयादतिरेकाच्च बुद्धत्वमवगम्यते; विज्ञानघनादिश्रुतेश्च तदधिगतिरित्यर्थः । इदानीं कारणेनैक्याभावमात्मनो दर्शयति—**मुक्तत्वमिति** । बुद्धात्मनोऽवस्थात्रयादतिरेकाच्चैतदधिगन्तव्यम् । अविद्याकामकर्मपारतन्त्र्याभावे पुरुषस्यासङ्गागमावगतेः कूटस्थत्वं हेतुमाह—**अविक्रियत्वमिति** । विक्रियावतोऽवस्थात्रयादतिरेकात् "निष्कलं निष्क्रियम्" इति श्रुतेश्चैतदुपपन्नमित्यर्थः । यदुक्तमात्मनो बुद्धत्वं तदुपपादयति—**अपरिलुप्तेति** । "न हि द्रष्टुः दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्" इति श्रुतेः । तत्परिलोपे च साधकान्तरस्यान्वेष्यत्वात् तस्यैव दृग्रूपत्वसम्भवात् विज्ञानानन्दादिश्रुतेश्च । अनेकस्मादवस्थात्रयादतिरेकादेव सिद्धमेकत्वमपीत्याह—**एकत्वं चेति** । उक्तात्मस्वरूपे शास्त्रयुक्तिसमन्विते विद्वदनुभवमपि समुच्चिनोति—**स्वानुभवेनेति** । यदैवंभूतात्मवस्तु विद्वान् प्रतिपद्यते तर्हि केन प्रकारेण पुरुषस्य विद्वत्ता सिद्ध्यतीत्याशङ्क्याह—**आचार्येति** । आचार्येण शास्त्रदर्शितविशेषणवताऽनुगृहीतो यदैव बोध्यते नासि त्वं देहादिसङ्घातो नापि संसारी किन्तु यदशेषोपनिषत्प्रतिपाद्यमद्वितीयसच्चिदानन्दैकतानं ब्रह्म तदेव त्वमसि इति तदा विद्वानापद्यते । यदा चैवं तदैवाज्ञानलक्षणाया निद्रायाः प्रतिबुद्धः तत्प्रसूतकर्तृत्वादिसमस्तसंसारविनिर्मुक्तो जीवन्मुक्तो भवतीत्यर्थः । आचार्योपपादिततत्त्वमस्यादिवाक्यप्रसूतसम्यग्ज्ञानसमानकालैव विदुषो मुक्तिः तस्य प्रारब्धाभासवशाज्जीवन्मुक्तरूपेण वार्तमानिकदेहपातान्तरं विदेहकैवल्यमवश्यंभावीत्युक्तम् । इदानीं परं प्रकृतमुपसंहरति—**एष इति** । अयमेव पूर्वाचार्यपरम्परागतो मोक्षोपायज्ञानोपदेशप्रकारो नान्यादृशोऽस्तीत्यर्थः । यद्यपि पूर्वेषां भागधेयभागिनां यथोक्तादुपदेशादात्मज्ञानोदयद्वारा कैवल्यं लब्धुं शक्यते तथापि नैदंयुगीयानामल्पभाग्यानामित्याशङ्क्याह—**एवमिति** । अद्यत्वेऽपि देवो मनुष्यो वा प्रदर्शितेन मार्गेण ज्ञात्वा निःश्रेयसं प्रतिपद्यते, नान्यथा कर्मादिसाधनान्तरेणेत्यर्थः । तत्र प्रमाणमाह—**एवं वेदान्तेति** । "तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" "तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय ।" "अथ मर्त्योऽमृतो

भवत्यत्र ब्रह्म समश्नुते" इत्यादिवेदान्तवाक्यमत्र प्रमाणमित्यर्थः। पदाभ्यासस्य प्रकरणपरिसमाप्तिफलत्वात् इतिशब्देन शास्त्रार्थस्य सर्वस्यैवात्र संक्षिप्योक्तत्वात् वक्तव्यावशेषाभावात् अशेषमतिविशदमिति सूचयति।

संसारगरलध्वंसिसुधाधाराभिवर्षिणी ।
आत्मज्ञानानुगा टीका टीकतां पुरुषोत्तमम् ॥ ५

॥ इति चतुर्थः पटलः ॥

॥ इति श्रीआनन्दगिर्याचार्यविरचितं विवरणं समाप्तम् ॥

श्रीशङ्करभगवत्पादाचार्यविरचितम्

# उपदेशपञ्चरत्नम्

श्रीसदाशिवविरचितपञ्चरत्नकारिका-

श्रीबालकृष्णानन्दसरस्वतीविरचितकिरणावली-

टीकाद्वयोपेतम्

# उपदेशपञ्चरत्नम्

श्रीशङ्करभगवत्पादाचार्यविरचितम्

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयताम्
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयतां
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाऽऽधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् ।
सद्विद्वानुपसेव्यतामनुदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥

वाक्यार्थश्च विचार्यतां श्रुतिशिरः पक्षःसमाश्रीयतां
दुस्तर्कात् सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।
ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादस्समुत्सृज्यताम् ॥ ३ ॥

क्षुद्व्याधिश्च चिकित्स्यतामनुदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन सन्तुष्यताम् ।
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यताम् ॥ ४ ॥

एकान्ते सुखमास्यतां परतरे चेतस्समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्माऽऽत्मना स्थीयताम् ॥ ५ ॥

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचितम्

# उपदेशपञ्चरत्नम्

**वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयताम्**
**तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।**
**पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयतां**
**आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥**

---

**श्रीसदाशिवविरचिताः पञ्चरत्नकारिकाः**

रामेन्द्रस्वामिनं वन्दे सच्चिदानन्दविग्रहम् । मुमुक्षूणामभयदं ब्रह्मात्मैक्यप्रदं गुरुम् ॥ १ ॥
तत्कृपालेशतो वाणीं पवित्रीकर्तुमुद्यतः । सदाशिवः करोतीमाः पञ्चरत्नस्य कारिकाः ॥ २ ॥

अत्रेदमभिधीयते—

इह तु ब्रह्मचर्याङ्गसाधनेन द्विजोत्तमः । स्वाध्यायविधिना सम्यक् तदर्थप्रवणो भवेत् ॥ ३ ॥
साङ्गं वेदमधीत्याथ तथोपनिषदामपि । अर्थमापाततो बुद्ध्वा तदनुष्ठानतत्परः ॥ ४ ॥
पारायणाच्चित्तशुद्धिं श्रवणाज्ज्ञानमाप्नुयात् । मननादात्मविज्ञानं भवेद्वेदस्य निश्चितम् ॥ ५ ॥
अर्थशून्या तु या वाणी बह्वनर्थफलप्रदा । अतस्त्यजेद्वाक्प्रसरं सर्वदा मौनवान्भवेत् ॥ ६ ॥

**श्रीबालकृष्णानन्दसरस्वतीविरचिता किरणावली**

मन्दस्मितमुखाम्भोजं रमालङ्कृतवक्षसम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ १ ॥

पुण्डरीकाजिनधरं विलसत्फाललोचनम् ।
ज्ञानमुद्राञ्चितकरं दक्षिणामूर्तिमाश्रये ॥ २ ॥

यत्प्रसादलवं प्राप्य प्रत्यूहजलधिं जनाः ।
महारम्भास्तरन्त्येतं विघ्नेशमनिशं नुमः ॥ ३ ॥

यां श्रियं नगजां वाचां देवीमाहुर्विचक्षणाः ।
तां लोकमातरं वन्दे वाग्विभूतिप्रसिद्धये ॥ ४ ॥

यदीयसूत्रविलसच्छास्त्रनावा भवाम्बुधिम् ।
सन्तस्तरन्ति तं वन्दे पाराशर्यमहर्निशम् ॥ ५ ॥

कारिकाः

सर्वेन्द्रियवशीकारो वाङ्मौनं तूपलक्षणम् । फलश्रुतिरपीहास्ति वेदानध्येषितुः परा ॥ ७ ॥
अत्रापि वेदशब्दार्थो नित्य एव परेश्वरः । केचित्प्रवृत्तिहेतुत्वादन्यथा कल्पयन्ति हि ॥ ८ ॥
यावज्जीवश्रुतेस्त्वर्थः सत्वशुद्धिप्रयोजनः । महातात्पर्यमेवेह जिज्ञासायां परं मतम् ॥ ९ ॥
न कर्मणेति श्रुतयो न्यास एवेति वा पराः । अनन्तरं सत्वशुद्धेस्त्यागे सन्ति सहस्रशः ॥ १० ॥
अवान्तरफलापूर्वं रोचनार्थमितीरितम् । आयासबहुले कर्मण्यश्रद्धाविनिवृत्तये ॥ ११ ॥
ऋतौ भार्यामिति वचो रेतोधा इति चापरम् । आनन्तर्यं चाश्रमाणां विद्यतेऽत्रापि वैदिकम् ॥ १२ ॥

किरणावली

यदीयभाष्यकमलस्यन्दमानमरन्दतः ।
विद्वद्भृङ्गस्तृप्तिमेति शङ्करं तमुपाश्रये ॥ ६ ॥
यस्य प्रसादकणिकानौका तारयते नतान् ।
संसारसिन्धुं तं वन्दे सच्चिदानन्दयोगिनम् ॥ ७ ॥
यस्योपदेशमाहात्म्याज्जडा अपि विनिर्गताः ।
संसारबन्धात्तं वन्दे वासुदेवेन्द्रयोगिनम् ॥ ८ ॥
क्वाहं क्व भगवत्पादकृतिर्गाम्भीर्यजन्मभूः ।
तथाप्यत्रावगाहं मे काङ्क्षते खलु मानसम् ॥ ९ ॥
महतां पक्षपातेन दुस्साध्येप्यर्थकल्पने ।
मम सामर्थ्यमस्त्येव टिट्टिभोऽत्र निदर्शनम् ॥ १० ॥
गुरुपादाम्बुजद्वन्द्वध्याननिर्मलमनसः ।
रचये पञ्चरत्नस्य विवृतिं **किरणावलीम्** ॥ ११ ॥

**अथ** खलु परमकृपालवो भगवन्तो भगवत्पादाः निखिललोकं संसारदावानलपरिप्लुतमुपलभ्य आत्मज्ञानामृतमेव तदुपशमनं सुखसाधनं चाहुः । युक्तं च तत् । तस्यैव तन्मूलाविद्यानिवर्तकत्वेन तन्निवर्तकत्वात् । तदेव खलु साधकम्, अन्यस्य तत्साधकत्वानुपपत्तेः । तथाहि—न धर्मः सुखसाधकः । तत्फलस्यानित्यत्वेनासुखत्वात् यो वै भूमा तत्सुखम् नाल्पे सुखमस्तीति भूम्नः सुखत्वम् अल्पस्यासुखत्वं च प्रतिपाद्य यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यमिति भूम्नो नित्यत्वस्य अल्पस्यानित्यत्वस्य च प्रतिपादनात् । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति कर्मफलस्यानित्यत्वश्रवणात् । "अतोऽन्यदार्तं" इति ब्रह्मव्यतिरिक्तस्य सर्वस्य अनित्यत्वश्रवणाच्च ।

ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" । "अपाम सोमममृता अभूम" इत्यादौ कर्मफलस्यापि नित्यत्वं श्रूयते ततः तस्यापि सुखत्वमस्त्येव । तथा अर्थोऽपि सुखसाधक एव । धर्मादिहेतुत्वात् । कामस्य सुखहेतुत्वं प्रत्यक्षसिद्धमेव । यदि चार्थस्य राजनिमित्तदुःखफलत्वात्, कामस्यापि व्याध्यादिद्वारा दुःखसाधकत्वात्, तयोः सुखहेतुत्वेऽपि विषसम्पृक्तमधुवदनुपादेयता तदा भ्रमात्तयोरुपादानेऽपि धर्मस्योपादानं स्यादेव तत्फलस्य नित्यत्वात् दुःखसम्भिन्नत्वाच्च, श्रुतेरुभय-

कारिका:

तात्पर्यमत्र श्रृणुत निवृत्तावेव सर्वत: । पर्वादिगमने सा तु निवृत्तिरुपयुज्यते ।। १३ ।।
तज्जाया इति वेदेऽपि निवृत्तिपरतैव हि । व्यवायाहारनिद्रादिप्रसराद्विनिवार्यते ।। १४ ।।
यथेष्टाचरणे प्रीति: पशुवद्गृहिणां भवेत् । सा प्रत्युक्ता तु विधिना नियमेन हितैषिणा ।। १५ ।।
मैथुनामिषमद्यानां परिसंख्याविधिर्भवेत् । पञ्च पञ्चनखा भक्ष्या इतिवत्तत्र निश्चय: ।। १६ ।।
केश्चित्त्वपूर्व एवायं विधिरुद्भाव्यते किल । अत्यन्ताप्राप्तितस्तुल्यो ज्योतिष्टोमादिना भवेत् ।। १७ ।।
विधिस्त्वपूर्व एवायं तन्न सम्मतमत्र तु । मनुष्यपशुदेवादिक्लृप्ततैवात्र युज्यते ।। १८ ।।
अत: प्रमाणान्तरतोऽप्राप्तिर्नैवात्र सम्मता । अपूर्वे रागत: प्राप्तिरत्र रोगोऽपि वर्तते ।। १९ ।।
तस्मान्नापूर्वविधिना तुल्यताऽत्र प्रसज्यते । व्रीहीणां प्रोक्षणं यत्तत्प्रमाणान्तरतो न हि ।। २० ।।

किरणावली

फलनित्यत्वेऽपि तुल्यत्वात् । धर्मस्यैव ज्ञानोपयोगित्वावश्यंभावेन "तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेन" इति न्यायेन तत्साधकत्वाच्च धर्म एव सुखसाधक: न ज्ञानमिति चेन्न । धर्मस्य सुखसाधकत्वानुपपत्ते: तदेव हि सुखं यन्नित्यं भवति ।

नहि धर्मस्य फलं नित्यं भवति, "तद्यथेह कर्मचितो लोक: क्षीयते"इत्यादिश्रुते: ।

ननु कर्मफलस्य नित्यत्वेऽपि श्रुतिरुदाहृता—"अक्षय्यं ह वै चातुर्मास्ययाजिन:" इत्यादि:, सत्यं, न सा स्वार्थं लभते, तया बाधितत्वात् ।

न च विनिगमनादिविरह:, श्रुतित्वाविशेषेण प्राबल्यदौर्बल्ययोरुभयत्रापि तुल्यत्वादिति वाच्यम् । अनित्यत्वप्रतिपादकश्रुते: यद्यत्क्रियाजन्यं तत्तदनित्यमिति प्रत्यक्षदृष्टव्याप्त्युपोद्बलितत्वेन प्रबलत्वात् ।

न च नित्यताप्रतिपादकत्वे अनुग्राहकं प्रमाणमस्ति, नित्यताश्रुते:दीर्घकालमात्रपर्यवसन्नत्वात् । अश्वत्थामादिनित्यतावत् । अनित्यश्रुतेश्चान्यथयितुमशक्यत्वात् । अन्यथाभावस्य कुत्राप्यदर्शनात् ।

न च तर्हि नित्यश्रुते: स्वार्थप्रच्यवादप्रामाण्यप्रसङ्ग: । रुच्युत्पादनद्वारा प्रवृत्त्युत्पादकतया तात्पर्यार्थाबाधात् । वाच्यार्थे तात्पर्याभावात् । अन्यथा चातुर्मास्यादावेव सर्वे प्रवर्तेरन् । नान्यत्र । श्रुतिश्चाथर्वणी, स्थूलारुन्धतीन्यायेन "मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि । तान्याचरथ नियतं सत्यकामा" इति नित्यकर्मफलप्रेप्सो: कर्मकरणमुक्त्वा अनेन कृतेन किं नित्यं फलं भवतीत्याकाङ्क्षायां "एष व: पुण्य: सुकृतो ब्रह्मलोक:" इति ब्रह्मलोकं फलत्वेन निर्दिश्य तत: परं "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादिना यज्ञादीनामनित्यफलत्वं प्रदर्श्य तत्साधने पुरुषार्थसाधकत्वं मन्यमानस्य "जरामृत्युं ते पुनरेवापि यन्ति" इति संसारं प्रदर्श्य आत्मज्ञानमेव पुरुषार्थसाधनमाह—नास्त्यकृत: कृतेन तद्विज्ञानार्थमित्यादिना । अतो न वा धर्मफलस्य नित्यत्वम् । अतो न सुखसाधनत्वं धर्मस्य, अर्थकामयोस्तु प्रत्युक्तमेव । तथाच श्रुति:—"नान्य: पन्था विद्यतेऽयनाय" इति एतेषां तत्साधनत्वनिषेधपुरस्सरं "तमेव विदित्वातिमृत्युमेति" इति ज्ञानस्यैव सुखसाधकत्वं दर्शयति । तत्फलस्य च नित्यत्वं प्रागेवोक्तम् । ज्ञानस्य साधनतोक्ति: औपचारिकीत्युत्तरत्र वक्ष्यते । अतस्साधनभूतज्ञानोपायमालोचयमाना भगवत्पादा: प्रस्थानत्रयात्मकं ग्रन्थं निर्मितवन्तस्तदनधि-

कारिका:

तत्रैव प्रोच्यतेऽपूर्वविधिर्मीमांसकैः परः। व्रीहीणां वितुषीभावः खण्डनेन नखेन वा॥ २१॥
प्राप्तो नियम्यतेऽत्यर्थमवहन्तीति वाक्यतः। नैवमत्र तु रत्यादिसुखप्राप्तिः सदा भवेत्॥ २२॥
संस्कारबलतो लोके स्तनपानप्रवृत्तिवत्। पाक्षिकी प्राप्तिरपि सा नास्त्येव परिसंख्यया॥ २३॥
तत्र चान्यत्र च प्राप्तौ परिसंख्याविधिर्भवेत्। सर्वेषामामिषं भक्ष्यं रागतः प्राप्तमञ्जसा॥ २४॥
तत्र पञ्चेति वाक्येन पञ्चैवेति नियम्यते। एवं सौत्रामणीवाक्यं न हिंस्यादिति चापरम्॥ २५॥
निवर्तयेद्यथा शास्त्रमादरेणाविपश्चितम्। पूर्वकाण्डेऽपि सङ्कोचः कृत एवं हितावहः॥ २६॥

किरणावली

कारिणां केषाञ्चित्संसारदारिद्र्यनिर्दहनाय तर्काकुलवीचीकलितात्पूर्वपक्षग्राहसमाकीर्णात्सिद्धान्तगम्भीरात्प्रस्थानत्रयपयोराशेः पञ्चरत्नमद्भुतमाददुः। तत्स्वभावतः सरलमपि केषाञ्चिन्मन्दमतीनां तदर्थाविष्करणाय प्रयतामहे। शास्त्रस्य तत्त्वबुभुत्सुकथारूपत्वात्तदेकदेशभूतस्यास्य तत्प्रकरणत्वात् प्रकरणस्य बालाधिकारतया बालस्य च जन्मान्तरकृतसुकृतमहिम्ना तज्जन्मकर्तव्यजिज्ञासासम्भवात्तादृशमेवावनतं शिष्यं गुरुरुपदिशति, सोपानारोहणन्यायेन पुरुषार्थसाधनानि क्रमेणोपदिदिक्षुः—वेदो नित्यमधीयतामित्यादिना—बालस्य आदितः कर्तव्यं दर्शयति—**वेद इति**। सार्थवादमन्त्रविधिकलापः। ब्राह्मणस्यापि विधिरूपत्वात्साङ्ग इति शेषः। अङ्गाध्ययनं विना ज्ञानानुपपत्तेः। अर्थज्ञानस्यानुष्ठानोपयोगित्वेनावश्यकत्वात्सूचयति मूलकारोऽध्ययनस्य ज्ञानपर्यन्तत्वं **स्वनुष्ठीयतामिति,** अर्थज्ञानाभावे सुष्ठ्वनुष्ठानानुपपत्तेः। अङ्गानि-शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति श्रुतिगृहीतानि, वेद इत्येकवचनं सामस्तवेदाध्ययनस्याभावेऽपि एकस्य वाऽध्ययनमावश्यकमिति सूचयितुम्।

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्"।

"अविप्लुतब्रह्मचर्यः" इति वचनादेकस्याध्ययनमिति स्वकुलीनादागतस्येति द्रष्टव्यम्। नित्यं = सर्वदा-विहितकाल इति शेषः। विहितेतरकाले निषेधात्।

आचार्यमष्टमी हन्ति शिष्यं हन्ति चतुर्दशी।
उभौ पञ्चदशी हन्ति प्रतिपत्पाठनाशिनी॥
मद्बोधने मच्छयने मदङ्गपरिवर्तने।
स्वाध्यायं न प्रकुर्वीत मन्वादिषु युगादिषु॥ इत्यादिवचनात्।

अधीयतां त्वयैवेति शेषः। अन्यत्रापि क्रियापदेषु त्वयेत्यध्याहार्यम्। श्रुतिश्च-स्वाध्यायोऽध्येतव्य इति अध्ययनकर्तव्यतां दर्शयति। ततश्चाधीता ङ्गाद्वेदात्तदर्थज्ञानं जातं, ततो मम किं स्यादित्याकाङ्क्षमाणं शिष्यं प्रत्याह—**तदुदितं कर्म स्वनुष्ठीयतामिति**। तेनाधीतेन वेदेनोदितं विहितं कर्तव्यतया प्रतिपादितमिति यावत्। विहितं च द्विविधम्। प्रत्यक्षविधिविहितं अनुमेयविधिविहितं च। अर्थवादोन्नेयविधिविहितस्यापि सत्वात्। कर्म नित्यनैमित्तिकप्रायश्चित्तरूपं काम्यकर्मत्यागस्य काम्ये मतिस्त्यज्यतामित्युक्तत्वात्। नित्यं च कर्म द्विविधम्। श्रौतं स्मार्तं च। आद्यं अग्निहोत्रादि द्वितीयमौपासनादि च। नैमित्तिकं स्कन्नहोमोपरागस्नानादि। प्रायश्चित्तं च नैर्ऋतपश्वालम्भनादि

कारिका:

किमुतोत्तरमीमांसाराद्धान्ते तद्धितैषिणा ।।

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ।। २७ ।।
एवं वर्णाश्रमप्रोक्तं कर्म नित्यादिकं च यत् । तदेव साङ्गं कुर्वीत येन यज्ञः प्रसीदति ।। २८ ।।
फलाभिसन्धिरहितमहंकर्तृत्ववर्जितम् । ॐ तत्सदिति निर्देशपूर्वकं कर्म आचरेत् ।। २९ ।।
कारकः कर्म करणं सम्प्रदानं तथैव च । सर्वमोमिति सञ्चिन्त्य भक्त्या सर्वेश्वरेऽर्पयेत् ।। ३० ।।
एवमन्यानि कर्माणि लौकिकान्यपि सर्वदा । ईश्वरायार्पयेद्विद्वान्येन बन्धाद्विमुच्यते ।। ३१ ।।
सर्वकामपरित्यागे मतिं कुर्याद्दृढां तथा । तद्यथेत्यादिवचसा क्षयिष्णुत्वावलोकनात् ।। ३२ ।।

किरणावली

**स्वनुष्ठीयताम्** । सुष्ठु अनुष्ठानं च कर्मणां साङ्गतयाऽनुष्ठानमेव । अङ्गवैकल्ये च कर्मणां सुष्ठुत्वानुपपत्तेः । श्रुतिश्च कर्मकर्तव्यतां दर्शयति—"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति । एवमुक्तं भवति । साङ्गवेदाध्ययनानन्तरं तदर्थज्ञाने सति विद्वत्तायाः सम्पादितत्वादुद्वाहानन्तरं विशिष्टकुलप्रसूतेन त्वया अर्थिना समर्थेन सता साङ्गं कर्मानुष्ठेयमिति ।

ननु साङ्गकर्मानुष्ठानेन मम किमित्यत आह—**तेनेशस्य विधीयतामपचितिरिति** । तेन साङ्गमनुष्ठितेन कर्मणा ईशस्य = परमेश्वरस्य अपचितिः = पूजा विधीयताम् = विधानेन क्रियताम् । इति यावत् ।

ननु यज्ञादिकर्म स्वर्गाद्यर्थं भवति । "ज्योतिष्टोमेन स्वर्गकामो यजेत ।"

सन्ध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ।।

इति श्रुतिस्मृतिभ्याम् । अतस्तस्य कथं पूजार्थत्वं अन्यार्थस्यान्यार्थत्वानुपपत्तेः ।

न च नित्यानां कर्मणां निष्फलत्वात्स्वर्गाद्यर्थत्वानुपपत्तिः श्रुतिस्मृती च रुच्यर्थे पूर्णाहुतिवाक्यवत् । न च "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।।" इति न्यायेन नित्यस्यापि प्रयोजनवत्त्वम् तदभावे प्रवृत्त्यनुपपत्तेरिति वाच्यम् । अकरणे प्रत्यवायश्रवणेन तन्निवृत्त्यर्थतया तत्र प्रवृत्तेरिति वाच्यम् ।

तर्हि तन्निवृत्त्या प्रयोजनवत्त्वेन निष्प्रयोजनत्वाभावाच्छ्रुतिस्मृतिसिद्धकार्यभावस्य स्वर्गादेः प्रयोजनत्वावश्यम्भावाच्च । पूर्णाहुतिवाक्यसिद्धस्य सर्वकामादेरितरकर्मसु यत्ननिवृत्त्यापादकतया इतरकर्मविधिवैयर्थ्यापादकत्वान्न प्रयोजनमिति चेन्न । यूपाद्यर्थस्य खदिरादेः वीर्याद्यर्थत्ववदत्रापि स्वर्गाद्यर्थस्य यागादेः पूजार्थत्वाविरोधात् ।

अपि च पूजा नाम नार्चा, अपितु फलत्यागः । एवं च यज्ञफलभूतस्य स्वर्गादेरीश्वरमुद्दिश्य स्वत्वत्यागसम्भवान्न पूजार्थत्वानुपपत्तिरिति ।

ननु तदुदितं कर्मेत्यत्र नित्यनैमित्तिकप्रायश्चित्तात्मकं कर्म कर्तव्यमिति प्रतिपादितम् । तदनुपपन्नम् । काम्यानामपि वेदोक्तत्वाविशेषतः कर्तव्यत्वात् । न च काम्यानां बन्धकत्वान्न कर्तव्यता

कारिकाः

**प्लवा ह्येत इत्यपीदं श्रुत्युक्तमवलोकयेत्। अनर्थबहुलं दुःखमैहिकामुष्मिकं च यत् ॥ ३३ ॥**
**मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः। नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥ ३४ ॥**
**फलाभिसन्धिरहिते तेऽपि कुर्यात्प्रयत्नतः। स संन्यासीत्यर्जुनाय हरिणोक्तं हितैषिणा ॥ ३५ ॥**
**निष्कामकर्मानुष्ठानाद्विशुद्धधिषणः पुमान्। ज्ञानानुत्पत्तिहेतूनि सर्वपापानि नाशयेत् ॥ ३६ ॥**
**ततस्तु दोषदृष्टिः स्यात्संसृतौ दुःखरूपता। सत्वशुद्धेः फलं दृष्टमुद्भवत्येव तत्क्षणात् ॥ ३७ ॥**
**अशुभे शोभनाध्यासो मनोमालिन्यमेव तत्। न भवेच्छुद्धचित्तस्य विरक्तस्य कथञ्चन ॥ ३८ ॥**
**परीक्ष्य लोकानित्यादिश्रुतिर्निर्वेदबोधिका। ब्रह्मात्मान्वेषणे बुद्धिस्ततः स्यान्मोक्षकारिणी ॥ ३९ ॥**

किरणावली

आभिचारवदिति वाच्यम्। नित्यानामपि कर्मत्वाविशेषेण बन्धकत्वापत्तेः। आभिचारस्यानर्थजनकत्वस्य वेदेनैव प्रतिपादितत्वात्। काम्यानां तदप्रतिपादकत्वेन कर्तव्यत्वोपपत्तेः।

न च नित्यानामफलत्वान्न बन्धकत्वं काम्यानां तु फलवत्त्वाद्बन्धकत्वं युक्तमेवेति वाच्यम्। चित्रया यजेत पशुकामः, विश्वजिता यजेत स्वर्गकामः इत्यादिवज्ज्योतिष्टोमेन यजेत स्वर्गकामः सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ इत्यादिश्रुतिबलान्नित्येऽपि फलसिद्धेः। इयानेव विशेषः। नित्यानामकरणे प्रत्यवायः। काम्याकरणे स नास्तीति।

न च नित्यकर्मफलस्येश्वरार्पणसम्भवान्न तद्बन्धकमिति वाच्यम्। काम्येऽपि उक्तन्यायस्य तुल्यत्वात्। तथाच काम्यमपि कर्म अनुष्ठेयमेवेत्यत्राह—**काम्ये मतिस्त्यज्यतामिति**। काम्ये कर्मणीति शेषः। मतिः कर्तव्यताबुद्धिरिति यावत्। अयं भावः—"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेन काम्यं कर्म कृत्वा तत्फलस्येश्वरार्पणापेक्षया काम्यकर्माकरणस्यैव युक्तत्वात्। "वीरहा वा एष देवानां योऽग्निमुद्वासयते" "अकुर्वन् विहितं कर्म" इत्यादिश्रुतिस्मृतिभ्यां नित्यनैमित्तिकाकरणेऽनर्थश्रवणेन तन्निवृत्त्यर्थतया, प्रायश्चित्ताकरणे तदनिवृत्या तेषां कर्तव्यतायां सिद्धायां यादृच्छिकफलस्य ईश्वरार्पणसम्भवादिति।

ननु अतियत्नसाध्ययज्ञादिफलस्येश्वरार्पणे कृते सिद्धस्य परित्यागात् अन्यस्य कस्यचिदलाभात् "सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः" इति न्याय आपन्न इत्यत आह—**पापौघः परिधूयतामिति**। तेनेत्यनुवर्तनीयम्। तेन ईश्वरमुद्दिश्य परित्यक्तफलेन कर्मणा पापानां पापफलानामन्तःकरणदोषाणां रागादीनां, ओघः सञ्चयः, परिधूयतां परित्यज्यतामिति यावत्। ईश्वरमुद्दिश्य फलत्यागेन चित्तगतदोषरूपानर्थनिवृत्तेः श्रेयोयोग्यतायाश्च सम्भवान्न त्वयोक्तन्यायावतारः इति भावः।

ननु यज्ञादिकर्मणां स्वर्गार्थत्वात्स्वर्गस्य च सुखरूपत्वेन पुरुषार्थत्वात्पुरुषार्थस्य कथं त्यागस्सम्भवतीत्यत आह—**भवसुखे दोषोऽनुसन्धीयतामिति**। भवे = संसारे, यत्सुखं = विषयजं तत्र दोषः अनित्यत्वं-दुःखसंपृक्तत्वं वा, अनुसन्धीयतां = अनुस्मर्यतां इति यावत्। अनित्यत्वं-विषय कालीनत्वाद्विषयाणां चानित्यत्वात्। तथा दुःखसंपृक्तत्वं च वैषयिकसुखार्थं प्रवृत्तस्य व्याध्याद्यनेकदुःखदर्शनात्। न च तस्य उपादेयत्वं सम्भवति विषसंपृक्तमधुवत्। तथाच स्वर्गसुखस्य अल्पवैषयिकत्वेनानित्यत्वादसुरादिनिमित्तपरिभवेन दुःखदर्शनेन तत्संपरीतत्वाच्च तस्य त्यागेन

**सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाऽऽधीयतां**
**शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ।**
**सद्विद्वानुपसेव्यतामनुदिनं तत्पादुका सेव्यतां**
**ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥**

---

कारिका:

आत्मा वा अरे इत्यादि श्रुतिरात्मान्वेषणेन्मुखी । दोषदृष्टिजिहासाभ्यां गृहमेव त्यजेत्पुमान् ॥ ४० ॥
ते यथा वान्तमश्नन्ति श्रौतवाक्यबलेन च । यथैव काकविष्ठायामिति च स्मरणात्सुधीः ॥ ४१ ॥
परिग्रहादिकं सर्वं त्यजेन्निर्वेदतः सकृत् । संन्यासमेव गृह्णीयादरण्ये निवसेद्द्विजः ॥ ४२ ॥
अनन्तरं तु यत्कृत्यमुच्यते तदिहाधुना । चित्तैकाग्र्येण हे शिष्याः शृणुध्वं कथयामि वः ॥ ४३ ॥

श्रीमद्रामेन्द्रशिष्येण शिवेन परमादरात् ।
कारिकाः पञ्चरत्नस्य कृताः स्वज्ञानसिद्धये ॥ १ ॥

॥ इति प्रथमः श्लोकः ॥

ब्रह्मचारिगृहस्थानां वनस्थानां यथैव च । धर्माः प्रोक्तास्तथा न्यासः सोऽप्युक्तस्त्यागमात्रतः ॥ १ ॥
त्यागं नैव प्रकुर्वीत सतां ब्रह्मविदां वने । इत्येवमुच्यते तत्तु श्रूयतां सादरं वचः ॥ २ ॥

किरणावली

भवितव्यम् । एवं च स्वस्य द्रव्यस्य राजादिनिमित्तानर्थे दृष्टे सति सद्ब्राह्मणमाहूय दानवदीशमुद्दिश्य फलस्यापि त्यागसम्भवादिति भावः ।

ननु स्वर्गादिसुखस्यानित्यत्वादिदोषवत्त्वेन तस्य त्यागादन्यस्य कस्यचित्पुरुषार्थस्य अभावात् स्वस्य अकृतार्थत्वमेव स्यादित्याकुलितमन्तेवासिनं प्रत्यात्मैव पुरुषार्थः, अतस्तद्विषयेच्छा त्वया कार्या इत्याह—**आत्मेच्छा व्यवसीयतामिति** । आत्मविषयकेच्छा = स्वस्याभिलाषः व्यवसीयतां = निश्चीयतां—क्रियतामिति यावत् । आत्मनः पुरुषार्थत्वं च सत्यज्ञानानन्दस्वरूपत्वात् । सत्यत्वं च कालत्रयाबाध्यत्वम् । इदं च बाह्यवादिव्यतिरिक्तैः सर्वैरपि स्वीकृतमेव । ज्ञानत्वं च आदित्यादिज्योतिषां तेजसामपि भासकत्वात् । तथाच श्रुतिः—"तस्य भासा सर्वमिदं विभाति" इति । आनन्दत्वं च परमप्रेमास्पदत्वात् । तथाच आत्मनः पुरुषार्थस्य लाभात् न त्वया आकुलतया भवितव्यमिति भावः ।

ननु आत्मविषयकेच्छामात्रेण यदि पुरुषार्थः तर्हि गृहिणोऽपि ममात्मविषयकेच्छायाः सत्वेन पुरुषार्थलाभः स्यादित्यत आह—**निजगृहात्तूर्णं विनिर्गम्यतामिति** । निजं = स्वकीयं, यत् गृहं = वेश्म, तस्माद्विनिर्गम्यताम् = विशेषेण निर्गमनं च सर्वदा आसक्तिराहित्यं बोद्धव्यम् । अयं भावः । न केवलमात्मेच्छामात्रेण पुरुषार्थलाभः । अतिप्रसङ्गापत्तेः । अपितु तद्विचारात् ॥ १ ॥

न च आत्मविषयविचारो गृहासक्तिमतः सम्भवति, गृहिणः पुत्रभार्यादिषु व्याकुलचित्ततयै-तद्विषयकविचारासम्भवात् । अतस्त्वया तद्विचारार्थं गृहान्निर्गमः कार्य एवेति । किं च तव दुस्सङ्गे

कारिकाः

**अस्यार्थः**—

**अरण्यवासिभिस्तत्र यतिभिः सङ्गतो भवेत् । सत्सङ्गाद्वासनात्यागाद्वैराग्यं सुदृढं भवेत् ॥ ३ ॥**
**ततस्तु भगवद्भक्तिर्भवेदव्यभिचारिणी । अनायासेन बोधाप्तिर्यया भवति केवला ॥ ४ ॥**
**भगवत्तोषकारीणि शारीरादीनि कानिचित् । तपांसि कुर्याच्छान्तः सन्सर्वदाऽभ्यासतत्परः ॥ ५ ॥**
**भक्तेर्विरक्तेः प्राबल्यात्कर्मान्यत्सुदृढं त्यजेत् । ज्ञानाविरोधि शान्त्यादि तत्तु नैव परित्यजेत् ॥ ६ ॥**
**श्रुतिर्वक्त्यकृतं मोक्षं सर्वधर्मानिति स्मृतिः । सलिङ्गानिति च प्राह भगवान्श्रीहरिः स्वयम् ॥ ७ ॥**

किरणावली

**सति दुष्टानां** विषयलोलुपत्वात्तत्सङ्गिनस्तवापि तदासक्तिरेव स्यात् । तथाच आत्मविषयकविचार-प्रच्युतेस्तवानर्थ एव प्रसज्येत, तदुक्तं भगवता—

सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद्बुद्धिनाशः बुद्धिनाशात्प्रणश्यति । इति ।

तथाच तत्सङ्गपरित्यागेन सत्सङ्गः त्वया कार्य इत्याह—**सङ्गः सत्सु विधीयतामिति**—सत्सु सत्पुरुषेषु सङ्गः सम्बन्धः सहवास इति यावत् । विधीयतां = क्रियतामिति यावत् ।

अयमाशयः । अत्र सन्तो नामात्मविषयकविचारवन्तः । एवं च सत्सङ्गेन तवापि तद्विषयक-विचारः सुदृढो भवतीति ।

ननु दैवकृतविघ्नबाहुल्ये तद्विषयकविचारे प्रवृत्तिरेव नोदयमासादयेत् । अस्तु वा प्रवृत्तिः तथापि तत्फलं न सिद्ध्येत् । दैवबलाभावे सर्वस्य निष्फलत्वादत आह—**भगवतो भक्तिर्दृढाऽऽधीयतामिति** । भगः—"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसःश्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥ इति श्लोकोक्तवैराग्यादिषड्रूप इत्युच्यते । सोऽस्यास्तीति भगवान्षड्गुणैश्च सम्पन्नः । परिपूर्णः परमेश्वरः । अनेन भगवत्पादेन ईश्वरस्य सकलान्तरायनिवर्तनसामर्थ्यं द्योतितं भवति । तस्य परमेश्वरस्य भक्तिः तदेकचित्तता । दृढा = निश्चला । आधीयतां = क्रियतामिति यावत् । ततः निश्चलेन भगवद्ध्यानेन सूर्योदयेनेव तमोराशेरन्तरायराशेर्निवृत्तिसम्भवादात्मनि पुरुषार्थत्वनिश्चय-वतः तत्साधनात्मज्ञानार्थं तद्विचारे प्रवृत्तिसम्भवादुपासनया प्रसन्नदेवप्रसादबलात्सफलत्वसम्भवाच्च न त्वदुक्तदोषावकाश इति भावः ।

नचेश्वरार्पणकर्मानुष्ठानादेवेश्वरप्रसादसिद्धेःकिमनया भक्त्येति वाच्यम्; अधिकं नैव दूष्यत इति न्यायेन भक्तेरप्युपयोगोपपत्तेः । प्रसादहेतुबाहुल्येन प्रसादाधिक्ये सति विघ्नस्यात्यन्तिकनिवृत्तेः सम्भवाच्चेति भावः ।

ननु रागादिकलुषचित्तस्य पुरुषार्थापुरुषार्थविचाराभावेन तज्ज्ञानाभावात्तत्साधने आत्मविचारे कथं प्रवृत्तिरित्याशङ्क्य कालुष्यनिवृत्त्युपायमाह—**शान्त्यादिः परिचीयतामिति** । शान्तिः = अन्तरिन्द्रियनिग्रहः । आदिशब्देन बहिरिन्द्रियनिग्रहो गृह्यते । इतरेषां साधनानां मूलकारणैव तत्र तत्र प्रतिपादितत्वात् । परिचीयतां = अभ्यस्यतामिति यावत् । तथाच अभ्यासेन शान्त्यादिलाभे कालुष्यनिवृत्तेः पुरुषार्थविचारयोग्यतायाश्च सम्भवात्तत्सिद्ध्यर्थं तद्विचारे प्रवृत्तिरुपपन्नैवेति भावः ।

कारिका:

आचार्यमुपसृप्याथ कृत्वा तत्पादसेवनम् । श्रुतिराचार्यवान्वेद प्राहोपसदनं प्रति ॥ ८ ॥
उपदेक्ष्यन्ति ते ज्ञानमित्याह भगवानपि । यमोऽपि कठवल्लीषु प्राह प्राप्यवरानिति ॥ ९ ॥
सद्गुरोः सेवया भक्त्या प्रणिपातेन चासकृत् । सद्विद्वत्ते दुर्लभे द्वे विज्ञाय शरणं व्रजेत् ॥ १० ॥
श्रीगुरौ ब्रह्मदृष्ट्या तु साक्षाज्ज्ञानमवाप्यते । आचार्यं मां विजानीयादित्यादि च वचो हरेः ॥ ११ ॥
यस्य देवे परा भक्तिरिति च श्रुतिरब्रवीत् । तस्मै न द्रुह्येदिति च कृतमस्य सदा स्मरेत् ॥ १२ ॥
प्रश्नोपनिषदप्येवमाह हि त्वं हि नः पिता । अविद्यायास्तारयितेत्यादिका बहुशः श्रुतिः ॥ १३ ॥
अहर्निशं गुरोर्ध्यानं तन्नामस्मरणं जपः । शरीरेण च तद्यात्रा कार्या शिष्येण साधुना ॥ १४ ॥

किरणावली

न च पापौघः परिधूयतामित्यत्रैवेश्वरमुद्दिश्य फलत्यागादेव कालुष्यनिवृत्तेः प्रतिपादितत्वात्पुनस्तन्निवृत्यर्थं शान्त्यादिकथनवैयर्थ्यमिति वाच्यम् । ईश्वरार्पणकर्मानुष्ठानेन कालुष्यनिवृत्तौ शान्त्याद्यभ्यासो द्वारमित्यत्रैव तात्पर्यात् ।

अथवा—"पापौघः परिधूयता" मित्यत्र एवं व्याख्येयम्—ननु तदुदितं कर्मेत्यत्र प्रायश्चित्तकर्मादि कर्तव्यमित्युक्तम् । तन्निष्फलमित्यत आह—**पापौघः परिधूयतामिति** । पापानां = प्रमादकृतनिषिद्धकर्मणां, जन्मान्तरार्जितानां वा ओघः = सञ्चयः परिधूयतां = परित्यज्यतामिति । तथाच श्रुतिनिषिद्धकर्मनिवृत्तिफलत्वात्प्रायश्चित्तस्य तत्साधकत्वमेवेति न वैफल्यशङ्कावकाश इति भावः । एवं व्याख्याने च पापशब्दस्य मुख्यार्थः सम्भवतीति ध्येयम् ।

ननु श्रुतिविहितयज्ञादिकर्मस्ववश्यकर्तव्येषु तद्वैकल्यनिमित्तप्रत्यवायभयेन तदासक्तचित्तस्य कथमात्मविचारेऽवकाशः स्यादित्यत आह—**दृढतरं कर्माशु सन्त्यज्यतामिति** । आत्मविचारयोग्यताऽनन्तरमिति शेषः । नित्यनैमित्तिकादिकं सर्वकर्म, दृढतरमपि विहिततया परित्यक्तुमशक्यमपि बहुजन्मसु कृतमपि वा, आशु = शीघ्रतया, विहितं कर्म कथं परित्याज्यमित्यालोचनां परित्यज्यैवेत्यर्थः ।

ननु विहितस्य कर्मणः कथं परित्यागः सम्भवति । अकरणे प्रत्यवायश्रवणात् । न च संन्यासविधायकशास्त्रबलात्तस्य त्यागो भविष्यति । अन्यथा तद्विधिवैयर्थ्यापत्तेः इति वाच्यम् । काम्यकर्मत्यागस्यैव संन्यासशब्दार्थत्वात्, तस्य च प्रत्यवायाभावेन परित्यागसम्भवात् । तदुक्तं च भगवता "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" इति ।

न च कर्मत्यागस्यैव संन्यासशब्दार्थत्वेन काम्यकर्मण एव त्याग इति सङ्कोचे मानाभावः । तर्हि कर्मत्वाविशेषाल्लौकिकव्यापाराणामपि त्यागापत्तेः । न च तेषां त्यागानुपपत्त्या तद्व्यतिरिक्तस्यैव त्यागः संन्यासशब्दार्थ इति वाच्यं । तर्हि प्रत्यवायश्रवणेन नित्यानां कर्मणामपि त्यागासम्भवात् । एवं च कर्मत्यागस्य सङ्कोचे आवश्यके सति काम्यकर्मत्यागस्यैव संन्यासशब्दार्थत्वसम्भवादिति चेन्न । विहितस्यैव कर्मत्वेन सङ्कोचे मानाभावेन च सर्वकर्मत्यागस्यैव संन्यासशब्दार्थत्वाल्लौकिकव्यापारस्य च अकर्मत्वेन तत्त्यागस्याशब्दार्थत्वात् । संन्यासानन्तरं कर्माधिकाराभावेन नित्यादीनामनुष्ठानायोगादधिकारिणैव कर्मणामनुष्ठीयमानत्वात् । तथाहि—"केन भगवन्कर्माण्यशेषतो विसृजामी"ति कर्मत्यागप्रकारं पृष्टवन्तमारुणिं प्रति "तव पुत्रान्भ्रातॄन् बन्ध्वादीञ्छिखां यज्ञोपवीतं यागं सूत्रं अध्ययनं च" इति कर्माङ्गभूतशिखायज्ञोपवीतसूत्राध्ययनानां निषेधं प्रजापतिराह ।

कारिकाः

शिष्यः साधनसम्पन्नो गुणवान्विजितेन्द्रियः । विरक्तोऽमत्सरोऽदम्भी सर्वदा सद्गुरुप्रियः ॥ १५ ॥
नाविरत इति प्राह श्रुतिः शिष्यगुणान्बहून् । अधिकारी मुमुक्षुः सन्गुरुसेवारतो भवेत् ॥ १६ ॥
संसारानलतप्तः सन्पृच्छेदाचार्यमादरात् । को बन्धः का च मुक्तिः का विद्याऽविद्या च का प्रभो ॥ १७॥
एकाक्षरं ब्रह्म यच्च स्वामिन्नाचार्यवर्य भोः । अथोपदेशलाभात्तं प्रणवं हि जपेत्सदा ॥ १८ ॥
जपो द्वादशसाहस्रः प्रणवस्य भवेद्यतेः । महावाक्यार्थैकवाक्यतात्पर्यं प्रणवस्य यत् ॥ १९ ॥
अनुसन्धानपूर्वं तु कुर्याज्जपमतन्द्रितः । तदर्थमथ वा पृच्छेद्बृहिर्वृद्धौ प्रयुज्यते ॥ २० ॥

किरणावली

न हि वेदादिरहितस्य काम्ये नित्ये च कर्मण्यधिकारः सम्भवति । न चैवं नित्यकर्मत्यागे प्रत्यवायश्रवणं न स्यात् । यागादित्यागस्य त्वयैव विहितत्वोपपादनादिति वाच्यम् । अविधिपूर्वकत्याग एव प्रत्यवायश्रवणेन, विधिपूर्वकत्यागे तदभावाद्धार्यत्वेन विहितस्य कृष्णविषाणादेश्चात्वाले एव परित्यागस्येव ।

न च अग्निष्टोमाद्यङ्गस्य विषाणादेरग्निष्टोमसमाप्तेस्त्यागः सम्भवतीति वाच्यम्। एवमविरक्तस्य यज्ञादिकर्मणां विधानेन विरक्तस्य तत्त्यागसम्भवात्, अधिकारिण एव तदकरणे प्रत्यवायश्रवणेन अनधिकारिणः तदयोगात् ब्राह्मणाधिकारके बृहस्पतिसवे क्षत्रियस्येव । अस्य च लोकाग्नीनुदराग्नौ समारोपयेत् इति अग्निसमारोपणश्रवणेन कलत्रं चेति कलत्रस्यापि परित्यागश्रवणेन अग्निकलत्ररहितस्य यज्ञादावनधिकारात्, गायत्रीं च स्वं च अग्नौ समारोपयेदिति गायत्र्या अप्युपसंहारश्रवणेन सन्ध्याकरणादौ दोषाच्च ।

न च यज्ञादिविधिवैयर्थ्यं विधाय तस्य परित्यागश्रवणापेक्षया अविधानस्यैव युक्तत्वादिति वाच्यम् । अविरक्तस्य यत्किञ्चिद्विषयकप्रवृत्तिप्रसक्तौ यज्ञादौ नियम्यमानत्वात् ।

न च निषेधे उपनिषदामप्यनध्ययनम् । तस्या अपि अध्ययनत्वादिति वाच्यम् । "न हिंस्यात् सर्वाभूतानि" इति भूतहिंसामात्रं प्रतिषिध्य अग्नीषोमीयं पशुमालभेतेति प्रतिप्रसववदत्रापि स्वाध्यायाध्ययनमात्रं निषिध्य प्रतिप्रसवेन सर्वेषु वेदेषु 'आरुणमावर्तयेदुपनिषदमावर्तयेदि'ति उपनिषदध्ययनविधानसम्भवात् । तथाच संन्यासविधिना नित्यकर्मत्यागसम्भवेन कर्मसु व्यासक्त्यसम्भवात् सावकाशतया आत्मविचारे निश्शङ्कप्रवृत्तिरुपपन्नेति भावः ।

ननु अलौकिकपुरुषार्थविचारे कथं मम स्वत एव प्रवृत्तिस्स्यात् तज्ज्ञानाभावादित्याशङ्क्य अत एव तज्ज्ञानाभावेन स्वतः प्रवृत्त्यसामर्थ्येऽपि गुरूपदेशमाहात्म्यात्प्रवृत्तिसम्भवात्त्वया गुरुरुपसरणीय इत्याह—**सद्विद्वानुपसेव्यतामिति** । सन् यो विद्वान्सः उपसृप्यताम् = प्राप्यतामिति यावत् । तदुपसर्पणञ्च सोपहारं कार्यम् । "रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्" इति स्मृतेः, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठंमि"ति श्रुतेश्च ।

ननु मया गुरुरुपगतोऽपि किमर्थं ममोपदिशति । तस्य मदुपदेशेन प्रयोजनाभावात् । न च त्वया सोपहारतयैव गतत्वात् त्वदुपहारं दृष्ट्वा तुष्टस्तव उपदेक्ष्यति इति वाच्यम् । विरक्तस्य तस्य त्वदुपहारेणापि प्रयोजनाभावात् ।

न च कृपासागरस्य त्वद्दर्शनमात्रेणोपदेशः सम्भवतीति न त्वया विचारः कार्य इति वाच्यम् । कृपाया अपि सहेतुकत्वाद्दर्शनमात्रस्याप्यप्रयोजकत्वाच्चेत्यत आह—**अनुदिनं तत्पादुका सेव्यतामिति।**

कारिकाः

देशेनानवच्छिन्नं यत् तद्व्यापकमिति स्मरेत् । शब्दादेवापरोक्षं तु भवेदिति विनिश्चयः ।। २१ ।।
परोक्षत्वं तु शाब्दे यद्विषयव्यवधानतः । तस्यापि च परोक्षत्वाद्घटते तत्र चात्र तु ।। २२ ।।
यत्साक्षादिति हि प्राह श्रुतिर्ब्रह्मैव सन्निति । शब्दादेवेति कृष्णश्च सूत्रमाहापरोक्षकम् ।। २३ ।।
तन्महावाक्यतो भूयाच्छान्दोग्योपनिषद्भवात् । वाक्यं तदेव गृह्णीयादन्यान्यपि विचारयेत् ।। २४ ।।
त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्या विधीयते यस्मात्तत्यागी पतितो भवेत् ।। २५ ।।
एवं वाक्यश्रुतेः पश्चाद्वाक्यार्थं हि विचारयेत् । तं तु पद्ये तृतीयेऽस्मिन्संक्षेपेण वदामि वः ।। २६ ।।

श्रीमद्रामेन्द्रशिष्येण शिवेन परमादरात् ।
कारिकाः पञ्चरत्नस्य कृताः स्वज्ञानसिद्धये ।। २ ।।

।। इति द्वितीयः श्लोकः ।।

किरणावली

तस्य = गुरोः, पादुका = पादारविन्दं पादुकाशब्देन पादाधारवस्तुवाचिना पादारविन्दस्य लक्ष्यमाणत्वात् । अनुदिनं = प्रतिदिनं । तथाच स्वपादुकासेवनेन गुरोः कृपासम्भवः । त्वां दीनं उपदेक्ष्यतीति भावः ।

ननु अर्थिनां खलूपदिशति गुरुः, मया च किमर्थ्यमित्यत आह—**ब्रह्मैकाक्षरमर्थ्यतामिति ।** एकं = मुख्यं–मुख्यार्थप्रतिपादकत्वात् । अक्षरं = ब्रह्म इत्येवं रूपं यस्य तत् एकाक्षरं ब्रह्म । ब्रह्मेतिपदस्य अर्थः, अर्थ्यतां = प्रार्थ्यतामिति, तथाच सार्थब्रह्मपदोपदेशे तदर्थस्य ज्ञातत्वेन तद्विषयकविचारसम्भवादिति भावः ।

यद्वा ब्रह्मणस्तदेकमक्षरं वर्णात्मकमोङ्काररूपं तत्पदार्थमर्थ्यतामिति । अत्राप्यभिप्रायः पूर्ववदेवोन्नेयः ।

अथवा एकं च, तदक्षरं चेति विशेषणसमासः । एकं = सजातीयविजातीयस्वगतभेदरहितं न क्षरति = न नश्यतीति अक्षरं यद्ब्रह्म तदर्थ्यतामिति ।

नन्वेतद्ब्रह्म मया अर्थितं तद्गुरुः कथं ममोपदेक्ष्यति । तस्योपदेशायोग्यत्वादिति पृष्टवन्तं शिष्यं प्रति तत्प्रतिपादकं वाक्यमुपदिशति—**श्रुतिशिरोवाक्यं समाकर्ण्यतामिति ।** श्रुतेःशिरः अन्तदेशः पर्यवसानदेशः वेदान्तः वेदमात्रस्य ब्रह्मण्येव पर्यवसन्नत्वेन तत्प्रतिपादकत्वेन वेदान्तस्य वेदपर्यवसानदेशत्वमुपपद्यते ।

यद्वा श्रुतेः शिरः उत्तमप्रदेशः वेदान्तः तस्य सर्वोत्तमब्रह्मप्रतिपादकत्वेनोत्तमत्वात् । तस्य यद्वाक्यं तत्त्वमसीत्यादिरूपं स्वस्वोपनिषदुक्तं तत्, समाकर्ण्यतां सम्यक् = सावधानेन आकर्ण्यतां = श्रूयतामिति यावत् । ततश्च व्युत्पन्नस्य तव वाक्यश्रवणमात्रेण तदर्थनिश्चयो भवेदिति भावः ।

ननु वाक्यस्य योऽयमर्थः तत्त्वमसीत्येवंरूपः स न सम्भवति त्वंशब्दस्य जीववाचित्वात्तस्य च कर्तृत्वभोक्तृत्वकिञ्चिज्ज्ञत्वादिविशिष्टत्वात्तच्छब्दस्य चेश्वरवाचकत्वात्तस्य च कर्तृत्वभोक्तृत्वादिरहितत्वात्सर्वज्ञत्वजगत्कारणत्वादिविशिष्टत्वाच्च । न च तयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयोः कथमप्यसिपदेनाभेदो बोधयितुं शक्यः, विरुद्धस्वभावत्वात्, विरुद्धस्वभावयोश्च तेजस्तमसोरभेदादर्शनात् ।। २ ।।

**वाक्यार्थश्च विचार्यतां श्रुतिशिरः पक्षः समाश्रीयतां**
**दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।**
**ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां**
**देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादस्समुत्सृज्यताम् ॥ ३ ॥**

---

कारिकाः

विना पदार्थबोधं हि वाक्यार्थो नैव लभ्यते । अतस्तु तत्त्वंपदयोरर्थं शृणुत वत्सकाः ॥ १ ॥
तत्पदार्थः परोक्षो हि परमात्मा नियामकः । सर्वज्ञः सर्वकर्ता च स तु वाच्यार्थ उच्यते ॥ २ ॥
इदमत्र तात्पर्यम्—
उपाधिरहितः शुद्धो नित्यमुक्तः परेश्वरः । स तु तत्पदलक्ष्यार्थोऽपरोक्षत्वेन सम्मतः ॥ ३ ॥
एकत्वमेव वाक्यार्थस्तृतीयपदनिश्चितः । अखण्डैकरसत्वेन सोऽयमित्यादिवन्मतः ॥ ४ ॥
लक्षणाद्वयमप्यत्र नास्त्येवात्र विरोधतः । भागत्यागा तृतीया तु सम्भवेल्लक्ष्ययोर्द्वयोः ॥ ५ ॥
सामानाधिकरण्यं च विशेषणविशेष्यता । अनुकूलतया सर्वाण्यपि वेद्यानि कुत्रचित् ॥ ६ ॥
ऐक्येन तु परोक्षत्वं तत्पदार्थस्य बाध्यते । त्वमर्थस्यापि दुःखित्वपरिच्छिन्नत्वबाधतः ॥ ७ ॥
अद्वयानन्दरूपं यत्तदेवाहमिति स्फुरेत् । मुख्यस्याधिकृतः पक्वकषायस्य विपश्चितः ॥ ८ ॥

किरणावली

न च जीवे किञ्चिज्ज्ञत्वादेरीशे सर्वज्ञत्वादेश्च बाधे चैतन्यस्वरूपमात्रयोरभेदोऽविरुद्ध इति वाच्यम् । प्रमाणसिद्धधर्माणां बाधायोगात् । अन्यथा घटपटत्वादिधर्माणां बाधे स्वरूपस्यैकत्वसम्भवेन तयोर्भेदो दत्तजलाञ्जलिस्स्यात् । यदि च प्रमाणसिद्धस्य भेदस्य परित्यागः तर्हि नाहमीश्वर इति प्रमाणसिद्धस्य जीवभेदस्य परित्यागायोग इति चेन्नेत्याह—**वाक्यार्थश्च विचार्यतामिति ।**

असम्भावनानिवृत्तिपर्यन्तमिति शेषः । वाक्यस्य=तत्त्वमसीत्यादिरूपस्य योऽर्थः जीवपराभेदरूपः सः विचार्यः । तदर्थोऽप्येवंरूप इति निश्चेय इति द्योत्यते । अयं भावः—तत्त्वंपदवाच्यार्थयोः किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयोः भेदसम्भवेऽपि लक्ष्यार्थयोरभेदः सम्भवत्येव । यथा तद्देशतत्कालैतद्देशैतत्कालविशिष्टदेवदत्तस्वरूपयोरभेदासम्भवेऽपि सोऽयं देवदत्त इति देवदत्तस्वरूपमात्रस्य लक्ष्यस्यैकत्वबोधः तद्वत् । न हि घटपटयोरभेदबोधकं प्रमाणमस्ति । येन लक्षणयाऽभेदबोधस्स्यात् । न च सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविशिष्टजीवेशस्वरूपव्यतिरेकेण जीवेशस्वरूपं नास्त्येव येन तल्लक्ष्यं स्यादिति वाच्यम् । दृश्यमानजीवेशरूपस्य कल्पितत्वेन तदधिष्ठानस्य पारमार्थिकस्यावश्यमङ्गीकरणीयत्वात् । तथा हि—न देहो जीवः, उत्पत्तिविनाशवतः तस्य जीवत्वे कृतहानाकृताभ्यागमप्रसङ्गात् । इन्द्रियाणां परस्परविलक्षणकार्यकर्तॄणां तेषां योऽहं रूपमद्राक्षं स एवेदानीं स्पृशामीत्येकत्वेन प्रत्यभिज्ञानविषयत्वायोगात् । न मनः । मम मनः इति भिन्नत्वेनानुभवात् । नाहङ्कारः, जाग्रत्स्वप्नसुषुप्तिषूत्पत्तिविनाशानुभवेन कालत्रयावस्थायिजीवस्वरूपत्वायोगाच्छून्यत्वे स्वस्यैवासत्त्वप्रसङ्गात् । अतः परिशिष्टं किञ्चिद्रूपमङ्गीकरणीयम् । तदेव पारमार्थिकं रूपं जीवस्य । एवं प्रपञ्चस्य दृश्यत्वादसच्चेन्न प्रतीयेत शशशृङ्गवत् । सच्चेन्न नश्येद्ब्रह्मवत् सत्वमसत्वं चैकस्य विरुद्धमित्यतः अनिर्वचनीयत्वाच्छुक्तिरजतवत्कल्पितत्वमेव । तत्कारणत्वं च कल्पितमेव सर्वज्ञत्वादिकं तु दूरत एव । अतस्त-

कारिका:

महावाक्यं द्वितीयं तु याजुषं हीदमेव तत् । अर्थमाहाखण्डरसमद्वयानन्दलक्षणम् ॥ ९ ॥
बह्वृचामपि वाक्येन ब्रह्मता वृत्तिसाक्षिणी । बोध्यतेऽथर्वशिरसि अयमात्मेति हि श्रुतेः ॥ १० ॥
अवान्तरपदानां तु महातात्पर्यमिष्यते । तदर्थे च त्वमर्थे च लक्ष्यार्थ इति निश्चयः ॥ ११ ॥
श्रुतिस्तत्त्वमसीत्याह प्रज्ञानं ब्रह्म इत्यपि । अयमात्मेति च परमहं ब्रह्मास्मि तत्त्वतः ॥ १२ ॥
श्रौतस्सुपक्ष एवायं स एवाश्रीयतां बुधैः । ब्रह्मादिस्थावरान्ताश्च परे विप्रतिपत्तयः ॥ १३ ॥
पुत्रादिशून्यपर्यन्ता जीवे विप्रतिपत्तयः । ताः सर्वा विनिवार्या वै याभिः सन्दिह्यते मनः ॥ १४ ॥
देहभेदादेव भेदो जीवानां प्रायशो मतः । ईश्वरस्यापि सार्वज्ञ्यं मायोपाधिकमञ्जसा ॥ १५ ॥
एवमेव श्रुतेः पक्षो भेदस्त्वौपाधिकस्तयोः । सन्देहो नात्र कर्तव्यो मुमुक्षुभिरतन्द्रितैः ॥ १६ ॥
तमेवैकं जानथेति अन्या वाचो विमुञ्चथ । श्रुतिराह स्मृतिरपि पलालमिति चाब्रवीत् ॥ १७ ॥
अत्र दुस्तर्कसञ्चारो बहुधा वादिभिः कृतः । वेदबाह्यैर्वैदिकैश्च स नाङ्गीकार्यः एव नः ॥ १८ ॥

किरणावली

त्कल्पनाधिष्ठानं तु किञ्चिद्रूपं अङ्गीकरणीयम् । निरधिष्ठानभ्रान्तेरभावात् तदेव पारमार्थिकं रूपमीशस्य । नह्युक्ते जीवेश्वरस्वरूपे पारमार्थिके किञ्चिज्ज्ञत्वसर्वज्ञत्वादीनां सम्भवः । सोपाधिकधर्मत्वात् । न हि सोपाधिकधर्मस्य निरुपाधिके सम्भवः । न हि जपाकुसुमयुक्ते स्फटिके प्रतीयमानस्य लोहितस्य तद्वियुक्ते संभवः । तद्वदत्रापि अन्तःकरणमायोपाध्यवच्छिन्नयोस्तत्सम्भवेऽप्युपाधिविनिर्मुक्तयोः तदसम्भवात् । श्रुतिश्च—"यत्र वा अन्यदिव स्या"दित्यादिना इवशब्देन द्वैतस्य प्रातीतिकत्वं प्रदर्श्य परमार्थतः तदपि निषेधति "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना । अतः कथं जीवेशभेदसम्भवः ।

किञ्च भेदस्य पारमार्थिकत्वे "उदरमन्तरं कुरुते, अथ तस्य भयं भवती"ति भेदज्ञानवतोऽनर्थप्रदर्शनं न स्यात् । विद्यमानस्य भेदस्य यथावत् ज्ञातत्वेनानर्थानुपपत्तिः । विपरीतज्ञानिन एवानर्थ इत्यस्य रज्जुसर्पज्ञानिनि दृष्टत्वात् । तथा अभेदस्यापारमार्थिकत्वे तज्ज्ञानिनः "तस्य तावदेव चिरं यावन्न विमोक्षेऽथ सम्पत्स्य" इति तस्य पुरुषार्थप्राप्तिश्रवणं न स्यात् । तस्य विपरीतज्ञानित्वात् । नाहमीश्वर इति प्रत्यक्षस्य तत्त्वमसीत्यभेदबोधकवाक्येन प्रत्यक्षसिद्धचन्द्रप्रादेशिकत्वस्याष्टाशीतिसहस्राणि विस्तीर्ण इति शब्देनेव बाधसम्भवात् । स एष नेति नेतीत्यादिना आत्मस्वरूपव्यतिरिक्तस्य असत्वप्रतिपादनेन किञ्चिज्ज्ञत्वसर्वज्ञत्वादीनामपारमार्थिकत्वस्य स्वतः एव सिद्धत्वात् । एवं च त्वंशब्दस्य सोपाधिककिञ्चिज्ज्ञत्वादिविशिष्टे शक्तावप्युपाधिविनिर्मुक्ते लक्षणासम्भवात्, तच्छब्दस्य च सोपाधिकसर्वज्ञत्वादिविशिष्टे शक्तावपि तादृशोपाधिविनिर्मुक्ते लक्षणासम्भवात्तयोश्च लक्षितस्वरूपयोः असिपदेनाभेदबोधसम्भवात्पूर्वोक्तासम्भावनां उक्तप्रकारेण विचारेण निवार्य पदार्थवाक्यार्थसम्भावनां निश्चिन्वन्ति ।

ननु अनेकैर्महर्षिभिः अनेकधाऽऽत्मस्वरूपस्य पुरुषार्थस्वरूपस्य च प्रतिपादितत्वात् त्वदुक्तप्रकार एव कथं ग्राह्य इत्यत आह—**श्रुतिशिरःपक्षस्समाश्रीयतामिति** । श्रुतिशिर इत्यस्य पूर्वमेवार्थो वर्णितः । तस्य योऽयं पक्षः तात्पर्यविषयीभूतार्थरूपः । समाश्रीयतां सम्यगाश्रीयताम् । तस्य सम्यगाश्रयणं च तदुक्तार्थस्यैव ग्रहणम् । अयं भावः—

कारिकाः

नैषा तर्केणेति पुनः श्रौतमाह्यनुशासनम् । मृत्योः स मृत्युमाप्नोति मह्द्भयमिति श्रुतिः ॥ १९ ॥
यदा ह्यस्मिन्निति तदा भयङ्करमिदं जगौ । भीषास्मादिति सर्वेषां भेदभाननिवारिणी ॥ २० ॥
एवं दुस्तर्कविरमे श्रौतस्तर्कः स कीदृशः । चिन्तनीयः सदैवायं वेदवादिभिरादरात् ॥ २१ ॥
यथा घटशरावादि मृन्मयं भासतेऽखिलम् । तथैव विश्वं सकलं ब्रह्मैवास्ति न चेतरत् ॥ २२ ॥
सुवर्णज्जायमानस्य सुवर्णत्वं हि शाश्वतम् । ब्रह्मणो जायमानस्य ब्रह्मत्वमिति निश्चयः ॥ २३ ॥
तस्य त्वमिति केचित्तु दुस्तर्कं तर्कयन्ति हि । अन्ये तस्मिंस्त्वमिति च सादृश्यमथ केचन ॥ २४ ॥
मध्वरामानुजाद्यास्तु अतत्त्वमसिवादिनः । अन्यथा कुर्वते तर्कं तर्हि तैर्विवदेत्सुधीः ॥ २५ ॥
प्रमाणे वा प्रमेये वाऽसम्भवं भावयन्ति हि । विपरीतां भावनां वा न तां कुर्वीत साधकः ॥ २६ ॥
दाढर्येन श्रवणादीनां भावनात्रयनाशनम् । भवत्येव ततो ब्रह्मास्मीति नित्यं विभावयेत् ॥ २७ ॥
प्रतिमादिषु विष्ण्वादिबुद्धिवन्नैव भावयेत् । यतो ह्यारोपिता बुद्धिः स्वतः सिद्धस्य नास्ति सा ॥ २८ ॥

किरणावली

"श्रुतिस्मृतिविरोधे च श्रुतिरेव बलीयसी" इति न्यायेन श्रुतेः बलवत्प्रमाणत्वेन तदुक्तार्थस्यैव ग्राह्यत्वात् । महर्षिप्रणीतस्य स्मृतिरूपत्वेन दुर्बलत्वात्तदुक्तार्थस्य अग्राह्यत्वात् । तथाच दुर्बलस्मृत्युक्तं पक्षं परित्यज्य श्रुतिशिरःसम्मतं मदुक्तार्थमेव गृहाणेति ।

ननु महर्षिप्रणीतमपि युक्तियुक्तत्वाद्ग्राह्यमेव । तथाहि—आत्मा प्रतिशरीरं भिन्नः सुखदुःखवैचित्र्यदर्शनेन आत्मैकत्वे तदनुपपत्तेः आत्मा कर्ता, अचेतनस्य कर्तृत्वादर्शनात् । तथासति तृणादीनामपि कर्तृत्वापत्तेः । अत एव तस्य भोक्तृत्वं, अन्यस्य भोक्तृत्वेऽतिप्रसङ्गापत्तेः । दुःखाभाव एव पुरुषार्थः । सुखस्य दुःखसम्पृक्तत्वेन परित्याज्यत्वेनापुरुषार्थत्वात् विषसम्पृक्तमधुवदित्यादियुक्तियुक्तमुपादेयम् । "युक्तियुक्तमुपादेयं वचनं बालकादपि" इति न्यायात् । तथाच तदुक्तार्थस्य श्रुत्यपेक्षया दुर्बलत्वेऽपि ग्राह्यत्वमेवेत्यत आह—**दुस्तर्कात्सुविरम्यतामिति** । दुष्टः आभासः श्रुतिविरुद्धः इति वा, तर्कः=युक्तिरूपः, यस्य महर्षिप्रणीतस्य तस्मात्=दुस्तर्कात् । सुविरम्यतां=सुष्ठु विरम्यताम् ।

सर्वदा इच्छाभाव एव विरामस्य सुष्ठुत्वं बोध्यम् । अयंभावः । उक्तयुक्तिश्च आभास एव, तथाहि—"कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति कामादीनां मनोधर्मत्वप्रतिपादनेन सुखदुःखयोरपि तद्वृत्तिरूपत्वेन तद्धर्मत्वात्तद्वैचित्र्यस्य प्रतिशरीरं मनोभेदापादकत्वेऽप्यात्मभेदानापादकत्वादचेतनस्य शरीरादेरेव कर्तृत्वदर्शनात् । तृणादीनां च चेतनसन्निधानविशेषाभावेनाकर्तृत्वोपपत्तेः आत्मसन्निधानविशेषस्यैव कर्तृत्वप्रयोजकत्वात् । अकर्तृत्वादेवाभोक्तृत्वात् । वैषयिकसुखस्य दुःखसङ्कलितत्वेऽपि नित्यसुखस्य तदभावात् । नित्यसुखस्य "विज्ञानमानन्दं ब्रह्मे"ति श्रुतिसिद्धस्य निरसितुमशक्यत्वादाभासत्वमुक्तयुक्तिनिचयस्य बोध्यम् । श्रुतिविरुद्धता च "द्वितीयाद्वै भयं भवती"ति भेदमात्रनिषेधेनात्मभेदस्य सुतरामनुपपत्तेः । आत्मनो ब्रह्मभेदप्रतिपादने कर्तृत्वादेः श्रुतिविरुद्धत्वाद्ब्रह्मविदाप्नोति पर इति ब्रह्माप्तेरेव पुरुषार्थश्रवणाच्चेति द्रष्टव्यम् । तथाच श्रुतिविरुद्धं आभासयुक्तिसङ्कलितं तद्वाक्यमनादेयमेवेति । एवं दुस्तर्कसङ्कलितवाग्युक्तिविरामोक्त्या त्वयापि दुस्तर्कानुसन्धानं न कार्यमिति द्योतितम् ।

कारिका:

अविद्याव्यवधानात्तु नास्मीति प्रत्ययो भवेत् । तद्बाधे त्वहमेवास्मीत्येवमेव विनिश्चयः ।। २९ ।।
ब्रह्मैव सन्निति तथा आत्मैवेदमिति श्रुतिः । ब्रह्म वा इदमित्यादौ स्वतःसिद्धत्वमाह हि ।। ३० ।।
परं त्वहरहर्गर्वं त्यजेत्पण्डित आत्मवान् । दीनस्य राज्यलाभादौ न तथात्र तु सिद्धता ।। ३१ ।।
विजातीये शरीरादौ नाहमस्मीति चिन्तनात् । मुमुक्षोर्न भवेद्गर्वः क्षणमात्रमपीह सः ।। ३२ ।।
एवं स्वरूपावस्थितया बुधैर्वादं न कारयेत् । इति ज्ञाते परे तत्त्वे प्रश्नस्य वचनस्य च ।। ३३ ।।
ज्ञानस्य च मुमुक्षूणां विषयो नैव विद्यते । ज्ञानमात्रमहं विद्यात्स्वप्रकाशं निरञ्जनम् ।। ३४ ।।
प्रमातृत्वाद्यसंस्पृष्टं परानन्दात्मविग्रहम् । अहमेव हि सर्वेषामात्मा सर्वशरीरिणाम् ।। ३५ ।।
देहातीतो देहसाक्षी देही वा भामि देहिनाम् । स एव परमात्माऽहं दृष्टो वै वेदवादिभिः ।। ३६ ।।
एवं सति सुखेनैव विचरामि महीमिमाम् । केन वाऽथ कथं वाऽपि किमर्थं विवदाम्यहम् ।। ३७ ।।

किरणावली

ननु यदि दुस्तर्काद्विरामः तर्हि किं तर्कत्वाद्यविशेषात्सुतर्केऽपि विरमः कार्य इत्यत आह—**श्रुतिमतस्तर्कोऽनुसन्धीयतामिति ।** श्रुतिमतः = सम्मतः श्रुतितात्पर्यार्थानुगुण इति यावत्। तर्कः = अनुमानम् । अनुसन्धीयताम् = अनुस्मर्यतामिति । अयंभावः—श्रोतव्यो मन्तव्य इति श्रवणानन्तरं मननविधानेन मननस्य युक्त्यनुचिन्तनरूपत्वेन श्रुतार्थदार्ढ्यार्थतया आवश्यकत्वेन श्रुत्यादयो अनुभवादयश्च यथासम्भवमिह प्रमाणं इति भाष्येण श्रुत्यतिरिक्तप्रमाणस्वीकारेण तस्य आवश्यकत्वेन दुस्तर्कस्य श्रुत्यर्थविरोधित्वेन परिहार्यत्वेऽपि सत्तर्कस्त्वया अवश्यमिह अनुसन्धेय एवेति ।

ननु उक्तविचारेण असम्भावनाया निवृत्तत्वेनाहं ब्रह्मास्मीति निश्चये जातेऽपि देहादावहमभिमानेन तत्र च आत्मनिश्चयसत्वेन स्वस्य ब्रह्मत्वनिश्चयस्यानेनाभिभूतस्य च कार्यजननासामर्थ्येनोत्पन्नोऽपि ब्रह्मत्वनिश्चयः निष्फलस्स्यात् । तथाच तदर्थविचारोऽपि निरर्थक एव स्यादित्यत आह—**ब्रह्मास्मीति विभाव्यतामिति ।** अनुदिनमित्यध्याहार्यम् । ब्रह्म निरस्तनिखिलोपाधिकं चैतन्यं सकलरूपं सत्तात्मकं, तदहमस्मीति विभाव्यताम् । विशेषेण भावना क्रियतामिति यावत् । भावनाया विशेषस्य वा सार्वकालिकत्वं बोध्यम् । एवं च सार्वकालं श्रुत्युक्तब्रह्मध्यानेन तद्विषयनिश्चयस्य रूढत्वसम्भवादिति भावः ।

ननु त्वदुक्तप्रकारेण वाक्यं सार्थकं श्रुतवतः तदर्थविचारेणासम्भावनां निवर्तितवतः तदर्थध्यानेन तदर्थनिश्चयदार्ढ्यवतो मम को वा समान इत्यभिमानिनं अन्तेवासिनं प्रति ज्ञानित्वादीनां निर्धर्मके आत्मन्यसम्भवादन्तःकरणनिष्ठत्वेन तव तद्धर्माभिमाने सत्यज्ञत्वमेव प्रसज्येत । तथाच अज्ञाननिवृत्त्यर्थो विचारादिप्रयासो निष्फलः स्यात्, अतस्त्वया तत्त्यागः कार्य इत्याह—**अहरहर्गर्वः परित्यज्यतामिति ।** गर्वः = ज्ञानित्वाभिमानः, अहरहः = प्रतिदिनं, जायमान इति शेषः । तथाच अभिमाननिवृत्तौ अज्ञानाद्यप्रसक्तेर्विचारादिः सार्थक एव स्यादिति भावः ।

ननु पूर्वोक्तपरिपन्थिभूतदेहात्मज्ञाने सति त्वदुक्तब्रह्मध्यानेन कथं निश्चयः वृथा भवेदित्याशङ्क्य तत्त्यागपूर्वकमेव त्वया ध्यानं कार्यम् । अन्यथा ध्यानत्वव्याहतेरित्यभिप्रेत्याह—**देहेऽहंमतिरुज्झ्यतामिति ।** देहे = स्थूले सूक्ष्मे च, अहंमतिः = अहमिति मतिः, उज्झ्यतां = परित्यज्यतामिति, तथाच तत्त्यागपूर्वकमेवात्मध्यानेन देहात्मज्ञानप्रच्यवादात्मज्ञानमेव दृढं भवतीति भावः ।

**क्षुद्व्याधिश्च चिकित्स्यतामनुदिनं भिक्षौषधं भुज्यतां**
**स्वाद्वन्नं नतु यत्यतां विधिवशात्प्राप्तेन सन्तुष्यताम् ।**
**औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां**
**शीतोष्णादि विषह्यतां नतु वृथा वाक्यं समुच्चार्यताम् ॥ ४ ॥**

---

कारिका:

**अहमेको न मे कश्चिद्यस्य मे** नास्ति कश्चन । तं न पश्यामि यस्याहं तं न पश्यामि यो मम ॥ ३८ ॥
**यत्र त्वस्य सर्वमिति** दृश्यापेतत्वमाह हि । श्रुतिर्द्वैतादिबाधेन ततो वादं समुत्सृजेत् ॥ ३९ ॥
**किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किं** । आत्मना पूरितं सर्वं महाकल्पाम्बुना यथा ॥ ४० ॥
**स्वरूपावस्थितौ** मोक्षे जाते सति विचक्षणः । प्रारब्धक्षपणं कुर्वन्न स लिप्यति कर्हिचित् ॥ ४१ ॥
एवं तृतीयश्लोकार्थः समाप्तिमगमद् ध्रुवम् । वाक्यार्थनिश्चयेनासौ सर्वबन्धविमोकतः ॥ ४२ ॥

श्रीमद्रामेन्द्रशिष्येण शिवेन रचिता मया ।
कारिका: पञ्चरत्नानां ताभिस्तुष्यतु शङ्करः ॥ ३ ॥

॥ इति तृतीयः श्लोकः ॥

**अथैवं सति** शारीरयात्रापि न भवेद्यतेः । ब्रह्मानन्दैकमग्नस्य द्वैताभावाद्विपश्चितः ॥ १ ॥
**इदमत्राकूतम्—**
**पूर्वसंस्कारवशतः** कथंचिल्लौकिकादिकम् । ज्ञानिनोपि भवेत्कर्म न भवेद्वा समाधिना ॥ २ ॥
**तत्रोत्थानदशायां तु** क्षुद्व्याध्यपनये यतेत् । भिक्षौषधं चिकित्सा तु कार्या मस्करिभिः सदा ॥ ३ ॥

किरणावली

ननु आत्मस्वरूपस्य सम्यक्परिज्ञातत्वेन ये हि आत्मस्वरूपविपरीतवादिनः ते मया जेतव्या इत्युक्तवन्तं शिष्यं प्रति तैस्साकं वादस्यापि जयपराजयहेतुभूतस्य जयपराजयजन्यसुखदुःखद्वारा जितोऽस्मि मत्समानः कोऽपि न विद्यया; पराजितोऽस्मि तुच्छा मदीया विद्या इतः परं दृढमभ्यस्यामीत्याद्यभिमानापादकत्वात्सोऽपि त्याज्य एवेत्याह—**बुधजनर्वादः परित्यज्यतामिति** । वदति वादः विवादः = कलहः इति यावत् । तथाच त्यागे न तवाभिमानप्रसक्तिरिति भावः ॥ ३ ॥

ननु अस्तूक्तरीत्या विचारसाचिव्यम् । तथाऽपि कथमात्मविचारे मनोनैश्चल्यं सिध्यति । क्षुद्व्याधिभ्यां परिपीडितस्य पुरुषस्य तदाकृष्टमानसत्वादन्याकृष्टमनसः अन्यत्र मनोनैश्चल्यायोगादित्यत आह—**क्षुद्व्याधिश्च चिकित्स्यतामिति** । क्षुद्व्याधिश्चेति भेदः चकारस्वारस्याच्चिकित्स्यतामित्येतदावृत्या योज्यम् । क्षुच्च चिकित्स्यतां व्याधिश्च चिकित्स्यतामिति ।

ननु काभ्यां तौ निवार्यौ निवारितावपि पुनरुत्पन्नौ कथं निवारितौ भवत इत्याशङ्क्याह—**अनुदिनं भिक्षौषधं भुज्यतामिति** । अनुदिनं = प्रतिदिनं, व्याधिनिवृत्तौ तन्निवृत्तिपर्यन्तमिति शेषः । क्षुन्निवृत्तौ तु यावज्जीवं बोध्यम् । भिक्षा च औषधं चेति द्वन्द्वैकवद्भावः, भिक्षाच—

माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ॥

कारिका:

उपजीव्याद्यलाभे तु स्वानन्दानुभव: कुत: । भवेद्धृत्या तत: कुर्याद्भिक्षां प्रतिदिनं यति: ।। ४ ।।
अथ भिक्षाचर्यमिति श्रुतौ संन्यासिन: श्रुतम् । गोमुखं करपात्रं वा माधूकरमथापि वा ।। ५ ।।
भिक्षाया: संग्रहो नैव कर्तव्यो भिक्षुणा सदा । पाणिपात्र: पिबेदापो भिक्षां तूदरपात्रत: ।। ६ ।।
भिक्षार्थं प्रविशेद्ग्राममिति स्मृत्यनुरोधत: । ग्रामप्रवेशो भिक्षोस्तु न मुख्य: सोऽपि कुत्रचित् ।। ७ ।।
एकरात्रो वसेद्ग्रामे नगरे पञ्चरात्रकम् । इत्यपि ब्रह्मनिष्ठस्य यतेर्गौणं न संशय: ।। ८ ।।
वृक्षमूले निवासो हि शून्यागारेऽपि कुत्रचित् । निवसेत्परमो हंसो मठस्वामी न वै भवेत् ।। ९ ।।
मिष्टान्नादौ तु या प्रीति: किमर्थं हि यतेर्भवेत् । यथाकथञ्चिच्छारीरो निर्वाहोऽपेक्षित: किल ।। १० ।।
देहवैकल्यनाशाय भिक्षयेदनिषिद्धकम् । तत्राप्युपेक्षको भूयादतियत्नं न कारयेत् ।। ११ ।।
त्रीन्वा पञ्च गृहान्वाञ्छेच्छ्रोत्रियाणां कुटुम्बिनाम् । तदभावे यथालाभे साधारण्यं भवेद्यते: ।। १२ ।।
चातुर्वर्ण्यं तु भिक्षाया यत्प्रोक्तं स्मृतिषु क्वचित् । तत्तु ब्राह्मणधर्मेषु ह्यापद्धर्मानुसारत: ।। १३ ।।
न तु शुद्रादिभवने भिक्षां लिप्सेत कर्हिचित् । यतेर्धर्मविलोप: स्यादिति शास्त्रविदो विदु: ।। १४ ।।

किरणावली

इति स्मृत्युक्ता पञ्चविधापि ग्राह्या । सा च यावत् क्षुन्निवृत्ति भोक्तव्यैव । तदनिवृत्या पूर्वोक्तमनोनैश्चल्यासिद्धे: तदवस्थत्वात् ।

न च **अष्टौ ग्रासा** इति स्मृतिविरोध: । तस्य विचारानधिकारिविषयत्वात् । औषधं **भैषज्यम्** । तन्निषेधस्मृतिरपि विचारानधिकारिविषयैव । न तु विचाराधिकारिविषया तदधिकारिणस्तन्निषेधे रोगानिवृत्या विचाराप्रसक्तौ पुरुषार्थप्रच्युतिप्रसङ्गात् । तथा चानुदिनं भिक्षौषधभोजनाभ्यां क्षुद्व्याधिनिवृत्तिसम्भवाद्विचारे मनोनैश्चल्यं सिद्ध्येदिति भाव: ।

यद्वा नन्वात्मविचारप्रतिबन्धककर्मादित्यागे भिक्षाशनस्यापि त्याग एव । तस्यापि तत्प्रतिबन्धकत्वादित्याशङ्क्याह—**क्षुद्व्याधिश्च चिकित्स्यतामिति** । व्याधिरिव क्षुत् क्षुद्व्याधि: । यथा व्याधि: शरीरपातपर्यन्त: एवं क्षुदिति क्षुद्व्याधिरित्युच्यते । चकारश्च अवधारणार्थ: । चिकित्स्यतामित्यत्र सम्बन्ध: । चिकित्सया निवार्यमेवेत्यर्थ: । चिकित्सा च क्षुन्निवर्तकभक्षणमेव । अयंभाव:—भिक्षाशनाभावे शरीरपातप्रसङ्गेन विचारस्य मूलतो हानिप्रसङ्गेन तस्यावश्यकर्तव्यत्वाद्विधिपूर्वककर्मत्यागे च तादृशदोषाभावादिति । केन निवार्यत इत्यत आह—**अनुदिनं भिक्षौषधं भुज्यतामिति** । औषधमिव भिक्षेति भिक्षौषधम् । यथा औषधं रुचिमनपेक्ष्य तिक्तं कटु वा भुज्यते एवं भिक्षा रुचिमनपेक्ष्यैव भुज्यतामिति यावत् । तथाच भिक्षाशनेनैव तन्निवृत्तिर्भवतीति भाव: ।

नन्वस्तु भिक्षाशनेन तन्निवृत्ति: । तथाऽपि औषधवत्तस्याशनमित्ययुक्तम् । तथा हि—औषधं कटु तिक्तं वा यद्रोगनिवर्तकं तदेव भोक्तव्यम् । इतरप्रकारस्यानिवर्तकत्वात् । प्रत्युत व्याध्याद्यभिवृद्धिकरत्वाच्च । भिक्षा तु रुचिभूता क्षुन्निवर्तिका । तथाच तन्निवृत्तिसम्भवे किमर्थमौषधवद्भिक्षा भोज्येति स्वादुभूतैव सम्पाद्येत्यत आह—**स्वाद्वन्नं न तु यत्यतामिति** । तुशब्द: शङ्काव्यावृत्यर्थ: । स्वादु = रुचिभूतमन्नं = भक्ष्यभोज्यचोष्यलेह्यरूपं चतुर्विधमुद्दिश्येति शेष: । न यत्यतां = यत्नो न कार्य: । तद्विषयकयत्ने तस्य सुलभतोऽलभ्यत्वेन कथमिदं साध्यमिति विचारे सति आत्मविचारे नैश्चल्यं न सिध्यतीति भाव: ।

कारिकाः

अजवद्भोजयेद्भिक्षां गजवत्स्नानमाचरेत् । राजत्प्रविशेद्ग्रामं चोरवन्निर्गमेद्बहिः ॥ १५ ॥
मिष्टान्नं तु त्यजेद्भिक्षुरिन्द्रियग्रामदूषकम् । अयत्नतस्तु प्राप्तं चेद्गृह्णीयादधिकं न तु ॥ १६ ॥
स्मृतिष्वपि तथा प्रोक्तं परहंसस्य लक्षणम् । शालयश्च कदन्नं च समं यस्य स वै मुनिः ॥ १७ ॥
प्राणानां धारणा तुल्या मिष्टान्नाद्वा कदन्नतः । अतः कथं भवेद्भिक्षोर्मिष्टान्नप्रीतिरादरात् ॥ १८ ॥
किं च सर्वत्र निस्सङ्गो ह्युदासीनतया मुनिः । विचरेद्देहयात्रादावपि नो यत्नवान्भवेत् ॥ १९ ॥
एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् । त्रयो ग्रामः समाख्यातः ऊर्ध्वं तु नगरायते ॥ २० ॥
त्रिभिस्तु राजवार्ता स्याद्भिक्षावार्ता परस्परम् । शिष्यस्य भिक्षाचिन्ता स्यात्तस्मात्तांस्तु परित्यजेत् ॥ २१ ॥
तत्र किं वा दयालुत्वं निष्ठुरत्वं च किं पुनः । यतेः कृपा सात्विकी वा नैष्ठुर्यं तामसं न वा ॥ २२ ॥
एकमेवाद्वितीयं तत्पश्यतो हि यतेः सदा । अहं वाऽपि द्वितीयो वा मम नैव हि कुत्रचित् ॥ २३ ॥
नैष्ठुर्यात्तामसो भावः कृपया ममता भवेत् । उभावपि परित्याज्यौ भिक्षुणा समदर्शिना ॥ २४ ॥
न मे द्वेष्योऽस्तीति वचो भिक्षुरेव हरिः स्वयम् । न करोति दयां क्वापि सम्प्रदायस्तथा कथम् ॥ २५ ॥
भवेल्लोकानुग्रहो वा ज्ञानमार्गस्य हानितः । अतः क्वचित्कथञ्चिद्वा विशिष्टाधिकृतं नरम् ॥ २६ ॥

किरणावली

ननु यत्नाभावेन न किञ्चिदपि सिध्येत् । सर्वस्यापि यत्नसाध्यत्वादित्यत आह—**विधिवशात्प्राप्तेन सन्तुष्यतामिति** । विधेः=कर्मणः जन्मान्तरकृतस्य शरीरारम्भकस्य सुकृतस्य दुष्कृतस्य वा वशात्परिपाकवशात्प्राप्तेन अन्नादिना, सन्तुष्यताम् । सम्यक्तोषश्च लब्धस्य समीचीनत्वे तदभावे वा समताबुद्धिरेव । अयं भावः—शरीरारम्भकस्य कर्मणो यावच्छरीरं स्थायित्वेन तद्वशादेव लाभसम्भवे यत्नो निष्फलः । न च कर्मबलाद्यत्किञ्चिदनिष्टप्रसक्तौ तन्निवारणार्थं यत्न आवश्यक इति वाच्यम् । कर्मबलेन प्राप्यमाणस्य यत्नेन निवारयितुमशक्यत्वात् । तदुक्तम्—

"यदभावि न तद्भावि भावि चेन्न तदन्यथा" इति । तथाचाभाविनो यत्नेनापि लाभासम्भवाद्भाविनश्च यत्नेन निवारयितुमशक्यत्वाच्च यत्नो निष्फल इति । यद्वा नन्वस्तु कर्मबलादेव अन्नादिप्राप्तिःयत्नश्च माऽस्तु तथापि कर्मबलेन प्राप्यमाणादिषु स्वाद्वन्नादिषु प्रीतिः स्यादित्याशङ्क्य तथा सति तद्भोगासक्तमनसः आत्मविचारे नैश्चल्यं न सिध्येदतःप्रीतिं मुक्त्वा क्षुन्निवृत्तिमात्रं कार्यमित्याह—**विधिवशात्प्राप्ते न सन्तुष्यतामिति** । विधेः=सुकृतकर्मणो वशात्प्राप्ते स्वाद्वन्नादौ न सन्तुष्यतामिति । तथाच न नैश्चल्याभावप्रसक्तिरिति भावः । एवं व्याख्याने च सन्तोषशब्दस्य मुख्योऽर्थो भवतीति ध्येयम् ।

ननु प्रियलाभालाभयोः सुखदुःखदर्शनात् तथा अप्रियलाभालाभयोः सुखदुःखादर्शनाच्च कथमुभयत्र मम समता स्यादित्याशङ्क्याह—**औदासीन्यमभीप्स्यतामिति** । उदासीनस्य भावः औदासीन्यं सुखदुःखहेतावुभये च हर्षविषादराहित्यम् अभीप्स्यतां=आप्तुमिष्यताम् । तदनन्तरमभ्यस्यताञ्चेत्यर्थः । तथाऽभ्यासपाके उभयत्र लाभालाभयोः समता भवतीति भावः ।

ननु मदीयसुखदुःखलाभालाभनिवृत्त्यर्थं मम प्रवृत्त्यभावेऽपि दीनदर्शनेन तदीयदैन्यनिवृत्त्यर्थं कृपया प्रवृत्तिसम्भवेन, तथा कस्यचिद्घातकं कञ्चिद्दृष्ट्वा तद्धनननिवृत्त्यर्थं नैष्ठुर्येण प्रवृत्तिसम्भवेन ताभ्यां व्यासक्तचित्तस्य मम कुत आत्मविचारे नैश्चल्यं सिध्येदित्याशङ्क्य ते न कार्ये याभ्यां तव

कारिकाः

दृष्ट्वा कुर्याद्दयां भिक्षुस्तदभावे न कारयेत् । दयया भरतो जज्ञे नैष्ठुर्यान्नहुषोऽपतत् ॥ २७ ॥
दयानिष्ठुरताभ्यां तु संसारोऽतीव दारुणः । तस्मात्ते नैव कुर्वीत समदृङ् मुनिसत्तमः ॥ २८ ॥
एकत्र चतुरो मासानष्टौ मासांस्तु तीर्थकृत् । तत्राप्येकत्र नो वासः कर्तव्यो भिक्षुणा सदा ॥ २९ ॥
भिक्षुभिः सह सम्वासं स्वशिष्येणाथ वा पुनः । न कुर्याद्भिक्षुको योगी निःसङ्गो विचरेन्महीम् ॥ ३० ॥
अपि द्वन्द्वसहिष्णुः स्यात्कन्थां शीतनिवारिणीम् । अशक्तश्चेत्प्रगृह्णीयाच्छक्तश्चेत्तामपि त्यजेत ॥ ३१ ॥
स्नानं त्रिषवणं कुर्यात्तत्र शीतादिकं सहेत् । अशनायां पिपासायां सुखं वा दुःखमेव वा ॥ ३२ ॥
दुःखे बहुतरे भिक्षुर्नैव प्राणात्ययं चरेत् । आत्महत्या भवेत्तस्य स जीवन्नेव मुक्तिभाक् ॥ ३३ ॥
वृथा वाक्यं हि न वदेद्यतिर्वाचः श्रमावहम् । नानुध्यादिति तथा श्रुतिर्वक्ति ह्यरुन्मुखान् ॥ ३४ ॥
शालावृकेभ्यस्तान्प्रादात्तस्माद्वाचं न विग्लपेत् । तमेवैकं जानथेति अन्या वाचो विमुञ्चथ ।
श्रुतिर्वक्ति हितं युष्मांस्तस्मान्मौनं समाचरेत् ॥ ३५ ॥
एवं स्थितो ब्रह्मणि यः सत्यं शृणुत वत्सकाः । अतः परं तु यत्कृत्यं तद्वक्ष्याम्यहमादरात् ॥ ३६ ॥
तुरीयश्लोकरत्ने तु तुर्यावस्थैव बोधिता । लक्षणं परहंसानामधुना स्थितिरुच्यते ॥ ३७ ॥
भगवच्छङ्करकृते तुरीये रत्नके परः ।
तुरीयः शङ्करस्तेन तुष्यतां मयि सर्वदा ॥ ४ ॥

॥ इति चतुर्थः श्लोकः ॥

किरणावली

व्याक्षेपःस्यादित्याह—**जनकृपानैष्ठुर्यमुत्सृज्यतामिति ।** जनेषु कृपा च नैष्ठुर्यं चेति द्वन्द्वैकवद्भावः । उत्सृज्यतां = परित्यज्यतामिति यावत् । एवञ्च तयोस्त्यागे निश्चलता भवेदिति भावः ।

नन्वस्तु दैवादागतान्नपानादिलाभालाभनिमित्तहर्षविषादाभावः । शीतोष्णादिजन्यविषादो दुर्वार इत्याशङ्क्याह—**शीतोष्णादि विषह्यतामिति ।** शीतं च उष्णं च शीतोष्णे शीतं = हिमादिः । उष्णं = सौरादिकं तेजः ते आदौ यस्य मानावमानादेस्तत्तथोक्तम् । मानं पूजा । अवमानं = अपूजा तत् शीतोष्णादि विषह्यताम् । विशेषेण सह्यताम् । सहने विशेषश्च तज्जन्यदुःखे प्रिये इव स्थितिः । तत्सहनं च दैववशसम्पन्नशीतोष्णादिसहनमेव न तु स्वयमेव गत्वा शीते उष्णे वा स्थित्वा तत्सहनम् । तथा सति तन्निमित्तशरीराहितप्राप्त्या आत्मविचारानुकूलशरीराभावेन आत्मविचाराभावात् पुरुषार्थो न सिध्येत् । प्रत्युत आत्महननदोषेणानर्थश्च प्राप्नुयात् । एवं च दैववशसम्पन्नशीतोष्णादेर्यत्नेनाप्यनिवार्यतया तन्निमित्तविषादेन क्लेशमात्रलाभात्तत्रापि विषादो न कार्य इति भावः ।

ननु जयपराजयहेतुभूतवादाभावेऽपि लौकिकवार्ताऽपि स्यादित्याशङ्क्य लौकिकवार्तादिप्रसङ्गेन तदाकृष्टमनसस्तवोत्पन्नेऽप्यात्मनिश्चये दार्ढ्यं न सिध्येत् उत्पन्नमात्रस्याकार्यकत्वात् । अतस्त्वया सोऽपि त्याज्य इत्याह—**न तु वृथावाक्यं समुच्चार्यतामिति ।** वृथा = व्यर्थं । वाक्यं = पदसमूहः । तुशब्दाच्चकारार्थात् वर्णसमूहात्मकं पदमपि गृह्यते । उभयमपि न समुच्चार्यताम् । अत्र पदवाक्ययोः निष्फलत्वं पुरुषार्थानुपयोगित्वं न तु निष्फलत्वमात्रम् । ततो मनःप्रीतिरूपफलसत्वेन निष्फलत्वाभावात् । एवं च व्यर्थवाक्यासमुच्चारणोक्त्या न केवलं ज्ञानदार्ढ्यमात्रं सिध्येत् अपितु तादृशवार्तया औचित्यानौचित्यप्रयुक्तहर्षविषादाभावोऽपि सिध्येदिति सूचितमिति ध्येयम् ॥ ४ ॥

**एकान्ते सुखमास्यतां परतरे चेतस्समाधीयतां**
**पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।**
**प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां**
**प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥**

---

कारिकाः

अयमुपसंहारः—

बहिर्मुखजनैः सङ्गं त्यक्त्वैकान्ते वसेन्मुनिः । व्यावृत्तेन्द्रियसञ्चारस्तत्र ब्रह्मानुचिन्तयेत् ॥ १ ॥
विश्ववैश्वानरादिभ्यः परं परतरं भवेत् । मायाऽथ वा परा प्रोक्ता तस्याः पारेऽथ वा भवेत् ॥ २॥
जाग्रदादित्रयापेक्ष्य परं वा ब्रह्म उच्यते । परत्वं चेन्द्रियादिभ्यः पुरुषान्तं विदुर्बुधाः ॥ ३ ॥
तस्मात्परतरं नास्ति सा काष्ठा सा परागतिः । तत्र चित्तं समाधाय तदेवास्मीति चिन्तयेत् ॥ ४ ॥
न तस्य प्रतिमास्तीति दृष्टान्तार्हं न तद्भवेत् । मनोवाचामगम्यं तत्पदं विष्णोस्तु केवलम् ॥ ५ ॥
यस्मान्न पुनरावृत्तिः कल्पकोटिशतैरपि । मुमुक्षूणामेव गम्यं न चान्येषां कथञ्चन ॥ ६ ॥
विक्षिप्तं हि पुनर्न स्यात्तादृक् सम्यग्विधारयेत् । एवं धारणया भिक्षुर्ब्रह्मान्यन्न समीक्षते ॥ ७ ॥
ब्रह्मैवेदमिति ज्ञात्वा पूर्णात्मा जायते स्वयम् । रुचकादि यथा कार्यं सुवर्णान्नातिरिच्यते ॥ ८ ॥
तथा जगद्ब्रह्मरूपं बाधाधिकरणत्वतः । ततो भिन्नं जगत्सर्वं जीवेशादि पुरेरितम् ॥ ९ ॥
स्वप्नमायोपमं तत्तु जानीयादेव निश्चितम् । तथेदं ब्रह्मणो भिन्नं जगन्नानात्वलक्षणम् ॥ १० ॥
यथा महाम्भसो भिन्नं तरङ्गादि न वस्तुतः । सर्वं खल्विति च प्राह तज्जलानिति चापरा ॥ ११ ॥
वाचारम्भणशास्त्रात्तु नामरूपक्रियात्मकम् । जगत्सर्वं तु मिथ्यैव बाधितं चावलोकयेत् ॥ १२ ॥
मिथ्या तु द्विविधं दृष्टं शशशृङ्गादिकं यथा । द्वितीयं भयदं रज्जुसर्पादिकमथापि वा ॥ १३ ॥
मायायास्त्रिविधं सत्वं पारमार्थिकसत्तथा । द्वितीयं व्यवहारस्थं तृतीयं प्रातिभासिकम् ॥ १४ ॥

किरणावली

ननु व्यर्थवाक्यासमुच्चारणं च मम कदा भवेदित्यत आह—**एकान्ते सुखमास्यतामिति** । एकः अन्तः=पर्यवसानभूतः यस्मिन् तस्मिन् । स्वव्यतिरिक्तपुरुषरहिते देशे । सुखं=निर्व्याक्षेपं यथा भवति तथा । आस्यतां=गम्यतामिति । ततश्च वृथावाक्योच्चारणं न भवतीति भावः ।

ननु एकान्तवासेऽपि मनसो विषयलोलुपतया विषयगमने सति ज्ञानदार्ढ्यं पूर्ववदेव न सिध्यतीत्याशङ्क्य ब्रह्मास्मीति विभाव्यतामित्यत्रैव प्रयत्नपुरस्सरमितरविषयकध्याननिरासेन ब्रह्मविषयकध्यानाभ्यासस्योक्तत्वान्न विस्मर्तव्यमित्यभिप्रेत्याह—**परतरे चेतस्समाधीयतामिति** । परतरे=उत्कृष्टतरे ब्रह्मणि, चेतः=मनः, समाधीयतां=सम्यगाधीयतां—तद्विषयध्यानमेव सदा कार्यमित्यर्थः । एवं च बालस्य मातरमेव स्मरतः इतराभ्यासेन मातृविस्मरणेनेतरविषयचित्तवदत्रापि विषयासक्तमनसोऽपि ब्रह्मविषयकध्यानेन विषयविस्मरणसम्भवान्नोक्तदोषावकाश इति भावः ।

ननु ब्रह्मविषयज्ञानाभावे तत्स्वरूपापरिज्ञानात्तद्ध्यानमपि न सिध्येदित्याशङ्क्याह—**पूर्णात्मा सुसमीक्ष्यतामिति** । पूर्णः=व्यापकः स चासावात्मा चेति तथोक्तः । सुसमीक्ष्यताम्=सुष्ठु

कारिका:

वेदान्तश्रवणेनैव प्रथमं नश्यति क्षणात् । अपरोक्षान्नश्यति तत्सत्वं तु व्यावहारिकम् ॥ १५ ॥
प्रारब्धस्य क्षयान्नश्येत्प्रातिभासिकमप्युत । एवं मायासतत्वानां नाशाद्ब्रह्मविदुत्तमाम् ॥ १६ ॥
शान्तिमाप्नोति स यथा त्वङ्निर्मुक्तः पदोदरः । यथा पादोदर इति भाष्यकृद्भिरुदाहृतम् ॥ १७ ॥
प्रश्नोपनिषदि स्पष्टं जीवन्मुक्तस्य लक्षणात् । अथान्यत्पुनराहेदमहिनिर्ल्वयिनीति च ॥ १८ ॥
एवं ह वै सर्वं इति श्रुत्यन्तरमथाब्रवीत् । एष नित्य इति प्राह महिमानं तु योगिनः ॥ १९ ॥
नैनं कृताकृत इति श्रुतिर्वक्ति च सादरम् । एवं सिद्धमपि ब्रह्म न जानन्ति कुबुद्धयः ॥ २० ॥
सुरेश्वरोऽपि प्राहेदं वचः सार्थकमञ्जसा । अध्यात्मादिपदार्थेभ्यो विविक्तं स्वात्मनि स्थितम् ॥ २१ ॥
तं न पश्यन्त्यहो कष्टं दौर्भाग्यं दुष्टचेतसाम् । प्रत्यक्षगोचरं देवं लोकं चातिप्रमादिनम् ।
दृष्ट्वा श्रुतिः शिरस्ताडमनुक्रोशति दुःखिता ॥ २२ ॥
प्रत्यक्षतममप्येनं विरजस्कं स्वयं स्थितम् । अहो कष्टं न पश्यन्ति कं यामः शरणं वयम् ॥ २३ ॥
आयासस्तावदत्यल्पः फलं मुक्तिरिहैव तु । तथापि परमाद्वैतं नैव वाञ्छन्ति मानवाः ॥ २४ ॥

किरणावली

**समीक्ष्यताम्**। सुष्ठु समीक्षणं च यथावज्ज्ञानमेव। तथाच आत्मनो यथावज्ज्ञातत्वेन ध्यानं सम्भवतीति भावः ।

ननु आत्मनो व्यापकत्वं नाम सजातीयविजातीयस्वगतभेदरहितत्वमित्यभिमतम् । तदयुक्तम्। विजातीयस्य जगतः सत्वेन तद्भेदराहत्यायोगात् । सतः स्वरूपतोऽभेदे प्रमाणाभावाच्चेत्याशङ्क्याह—**जगदिदं तद्बाधितं दृश्यतामिति**। इदं=परिदृश्यमानं, जायते पुनर्लयं गच्छतीति जगत् । स्थावरजङ्गमात्मकं सर्वं तद्बाधितं तेन परमात्मविषयेक्षणेन बाधितं नास्तितयाऽपोदितं दृश्यतां=प्रेक्ष्यताम्, जगतः तदज्ञानविजृम्भितत्वेन तज्ज्ञानेन बाधसम्भवाच्छुक्त्यज्ञानकल्पितस्य रजतस्य शुक्तित्वज्ञानेनेव । एवं च विजातीयस्य जगतः आत्मज्ञानबाधितत्वसम्भवेन "सदेव सोम्येदमग्र आसीत्" इति श्रुत्या सद्व्यतिरिक्तसर्वनिषेधेन च सद्सदिति प्रतीत्या सत एकत्वेन चोक्तं व्यापकत्वं सुदृढमिति भावः ।

ननु स्वात्मविचारात्संसारनिवर्तकं ज्ञानं भवतु तथापि न विदेहकैवल्यसिद्धिः । शरीरारम्भकानेककर्मणां सत्वात् । न चेदानीं कर्मसन्यासादेव कर्माप्रसक्तेः न शरीरादिप्रसङ्ग इति वाच्यम् । इदानीन्तनकर्माभावेऽपि पूर्वजन्मकृतानेककर्मसत्वात्तेष्वेव जन्मसु फलदानमित्यत्र नियामकाभावात् । अन्यथा अस्मिन् जन्मनि कृतयज्ञादेः अस्मिन्नेव जन्मनि फलप्रसङ्गात् । तथाच पूर्वजन्ममि कृतकर्मणां फलमदत्वा नाशे अनियतफलत्वापत्त्या तेष्वप्रवृत्तिप्रसङ्गेन तेषां नियतफलत्वं अवश्यं वाच्यम् । न च शरीरादिकं विना तत्फलं भवतीति शरीरादिकमपि भवत्येवेत्यत आह—**प्राक्कर्म प्रविलाप्यतामिति**। चितिबलादिति, काकाक्षिन्यायेन पूर्वत्रापरत्र च योज्यम् । चितिः=ज्ञानं आत्मविषयं, तस्य बलात् । प्राक्=पूर्वजन्मसु कृतकर्म सुकृतं च प्रविलाप्यताम्=प्रदह्यतामिति । अयं भावः—न हि बीजं नियताङ्कुरमित्येतावता दग्धमप्यङ्कुरमापद्यते । एवं कर्म विज्ञानाग्निदग्धं कथं फलाय भवेत् ।

कारिकाः

परीक्ष्य यो न गृह्णाति गृह्णाति च विपर्ययात् । दृढं पूर्वाश्रुतत्वाच्च प्रमादात्त्वपि लौकिकात् ॥ २५ ॥
चतुर्भिःकारणैरेतैर्याथातथ्यं न विन्दन्ति । मुमुक्षुमेवं दिशति श्रुतिः साक्षान्महार्थवत् ॥ २६ ॥
तस्मादिदं वचो ग्राह्यं श्रद्धापूर्वं मुमुक्षुभिः । अशेषजन्मनां मूलं सबीजं कर्म नश्यति ॥ २७ ॥
अकर्तृत्वावबोधेन ब्राह्मणस्य विजानतः । क्रियमाणं हि यत्कर्म जन्मारम्भेन तत्क्षयम् ॥ २८ ॥
यतः कर्तृत्वविरहाज्ज्ञानिनः कर्हिचित्क्वचित् । प्रारब्धं सुखदुःखादिभोगेनापक्षयं व्रजेत् ॥ २९ ॥
तत्तु नाशं व्रजति ज्ञानमात्रात्प्रसिद्धितः । ज्ञानप्रारब्धयोर्भिन्नो विषयो नैव नाशकम् ॥ ३० ॥
प्रारब्धस्य यतो ज्ञानमज्ञानस्यैव नाशकम् । आरब्धसुखदुःखादिभोगो यस्तत्र साक्षिता ॥ ३१ ॥
तदेव ज्ञानमित्युक्तं तत्तु तन्नाशकं न हि । केचिद्योगबलेनैव विनाशं कल्पयन्ति हि ॥ ३२ ॥
न तैः सह बुधो वादं कुर्यान्मतिमतां वरः । नात्यन्तिको विनाशः स्याद्योगेनान्येन वा पुनः ॥ ३३ ॥
अज्ञाननाशाद्यो बाधः स एवात्र सतां मतः । दुःखादिविनिवृत्तिर्या योगेनैव यदा भवेत् ॥ ३४ ॥
तदा सुषुप्तेर्योगस्य किमाधिक्यं भवेदिह । दुःखाभावोऽपि तत्रैव लक्ष्यते निद्रितैः सदा ॥ ३५ ॥
तस्माद्भोगेनैव नाशः प्रारब्धस्य न संशयः । अपान्तरतमादीनां प्रारब्धं यद्द्विजन्मकम् ॥ ३६ ॥
वेगेनैव तदारब्धं तत्र नो विवदेत्सुधीः । वसिष्ठस्यापि यज्जन्म भावि हैरण्यगर्भकम् ॥ ३७ ॥
तत्रापि तादृशं ज्ञेयं वेगवत्कर्म नान्यथा । वामदेवस्य चोष्ट्रत्वं पार्वतीशापतः किल ॥ ३८ ॥
बभूव तच्च प्रारब्धं वेगवत्परिकीर्तितम् । यथाचेषुधिगो बाणो संवेगाद्बाहुनिः सृतः ॥ ३९ ॥
यावद्वेगं पतेदेव नान्तरे वर्तते हि सः । यथाकुलालचक्रं हि घटं निर्माय चासकृत् ॥ ४० ॥

किरणावली

न चैतावता नियतफलत्वं । तर्हि बीजादावपि तुल्यत्वेन तत्राङ्कुरार्थिनः प्रवृत्तिप्रसङ्गात्, श्रुतिश्च कर्मणो ज्ञानाग्निदग्धत्वं दर्शयति—तद्यथा इषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति । स्मृतिश्च—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति । तथाच नियतफलत्वेऽपि न शरीराद्यावश्यकतेति । ननु मास्तु नाम प्राक्कृतकर्मणा शरीरादि । ज्ञानानन्तरं कृतेन कर्मणा तद्भवत्येव, तेषां ज्ञानसमकालत्वेनाविरोधित्वेन ज्ञानेन दाहायोगादित्याशङ्क्याह—**चितिबलान्नाप्युत्तरैः श्लिष्यताम्**। चितिबलादिति गतव्याख्यानम्। उत्तरैः ज्ञानानन्तरं कृतैरपि कर्मभिः न श्लिष्यताम् = न श्लेषो अवाप्यतामिति ।

अयं भावः—कर्तुः फलं भवति । न चात्मा कर्ता ईश्वराभिन्नस्य तस्य कर्तृत्वानुपपत्तेः । न च तर्हि ज्ञानात्पूर्वमप्यात्मनः फलभागिता न स्यात्तदाप्यकर्तृत्वस्व तुल्यत्वादिति वाच्यम् । नहि तदानीं स्वतोऽकर्तृत्वेऽपि कर्तृत्वाभिमानेन फलभागितोपपत्तावपि ज्ञानानन्तरं तदभिमानाभविन फलभागित्वाभावात् । एवं चात्मनः कथं कर्मफलेन संश्लेषः । न चैवं कर्मणां वैफल्यमिति वाच्यम् । "तस्य पुत्रा दायमुपयान्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां" इति श्रुत्यैव कर्मफलविनियोगस्य दर्शितत्वाच्छ्रुत्यैव ज्ञानिनः कर्मफलासंश्लेषस्य कण्ठरवेण प्रतिपादित्वात् । "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इति । तथाच कर्मणो निष्फलत्वाभावेऽपि तत्फलेनात्मनः संश्लेषाभावान्न तेनापि शरीरादिप्रसक्तिरिति ।

कारिका:

भ्रमते तत्र दण्डादिवेग एव हि कारणम् । तस्य तावदेव चिरं स्मृतिर्ज्ञानाग्निरित्यपि ॥ ४१ ॥
अनुभूतिरपीहास्ति मम प्रारब्धमस्ति हि । स्वामिदर्शनजं सप्तजन्मारम्भकमस्ति यत् ॥ ४२ ॥
तदार्थवादिकं ज्ञेयमन्यथा ज्ञानदूषणम् । यत्तु सर्वान्तिरत्वादि शुके दृष्टं हि योगजम् ॥ ४३ ॥
न तज्ज्ञानफलं क्वापि ज्ञानं तत्त्वज्ञाननाशकम् । पूर्वसिद्धं हि कर्तृत्वं भोक्तृत्वमपि नास्ति तत् ॥ ४४ ॥
अकर्तृ च तथाऽभोक्तृ परं ब्रह्मास्मीति नेतरत् । कालत्रयेऽपि कर्ता वा भोक्ता वा न भवाम्यहम् ॥ ४५ ॥
इति ज्ञानाग्निना दग्धकर्मासौ ब्राह्मणोत्तमः । अस्मिन् जन्मनि बोधाद्यत्पूर्वमेव कृतं भवेत् ॥ ४६ ॥
जन्मान्तरे च यद्वृत्तं तत्सव नश्यति ध्रुवम् । संस्कारलेशतो मिथ्याप्यनुवर्त्तेत चक्रवत् ॥ ४७ ॥
प्रारब्धस्यापि नाशश्चेत्स्थितिर्ब्रह्मविदः कथम् । सम्प्रदायस्य चोच्छित्तिर्भवेदिति विनिश्चयः ॥ ४८ ॥
यस्तु संस्कारलेशोऽयं यावत्सम्पातमस्ति चेत् । पश्चात्स न भवेत्किं वा न निमित्ताद्यभावतः ॥ ४९ ॥
कर्माशयेनापरेण नैव जन्मादिकं भवेत् । तस्य ज्ञानाग्निदग्धत्वात्सबीजस्य तदैव हि ॥ ५० ॥
यदश्लेषवचः श्रौतं तत्पापविषयं भवेत् । धर्मस्य त्वविरोधित्वान्नाशो नास्तीति चेन्मतं ॥ ५१ ॥
उभे ह्येवेति च श्रुत्या तरति ब्रह्मवित्क्षणात् । पापशब्दस्तु धर्मेऽपि क्वचिदस्ति श्रुतौ मतः ॥ ५२ ॥

किरणावली

ननु तर्हि ज्ञानसमकाल एव विदेहकैवल्यापत्तिः । ज्ञानपूर्वकृतकर्मणां विनाशेन शरीरारम्भकस्यापि विनाशात् स्वारम्भककर्माभावे तस्य स्थित्यनुपपत्तेः ।

न चारब्धफलस्य ज्ञानेन विनाशो न सम्भवतीति वाच्यम् । तत्रैव नियामकाभावादित्याशङ्क्याह—**प्रारब्धं त्विह भुज्यतामिति** । इह अस्मिन् शरीरे हेतुभूतमिति शेषः । अत एव प्रारब्धं = प्रकर्षेण आरब्धं-आरब्धफलमिति यावत् । कर्म भुज्यतां—तत्फलं सुखं दुःखं वानुभूयतामिति यावत् ।

अयं भावः—पूर्वकृतकर्मणः अनारब्धफलस्य ज्ञानेन नाशेऽपि आरब्धफलस्य तेन नाशो न हि सम्भवत्येव । यथा धानुष्कः स्वतूणीरनिक्षिप्तबाणग्रहणे पुनस्तत्रैव निक्षिपेत् । तथा धनुष्यारोपे पुनर्धनुषो ग्रहणे च सामर्थ्यसद्भावेऽपि मुक्तेषुनिवर्तने सामर्थ्याभावः । तद्वत् स चेषुर्यथा यावद्वेगं गत्वैव पतति तद्वत्कर्मापि यावत्स्वफलं तिष्ठति, तदनन्तरं नश्यति ।

न च वेगतो गच्छतः इषोः यावद्वेगमगत्वैव दण्डादिप्रतिघातेनान्तरा पतनदर्शनात् तद्वदेव प्रारब्धं कर्मापि ज्ञानप्रतिहतं सत् यावत्फलमस्थित्वैव नश्यतीति वाच्यम् । दण्डप्रतिहतस्येषुपतनहेतुत्वस्य प्रत्यक्षसिद्धत्वेनेषुवेगविरोधित्वेऽपि ज्ञानस्य तज्जन्यत्वेन तदविरोधित्वात् । नहि कार्यं कारणविरोधि क्वचिद्दृष्टम् । नहि भेरीशब्दस्थले शब्दान्तरोत्पत्तिरस्ति । येन प्रथमादिशब्दान्प्रति द्वितीयादिशब्दानां नाशकत्वं स्यात् ।

न च द्वितीयादिशब्दानुत्पत्तौ शब्दस्य श्रोत्रेण ग्रहणं न स्यात् शब्दस्य भेरीदेशस्थत्वात् श्रोत्रस्य पुरुषदेशस्थत्वात् तदसम्बन्धस्य श्रोत्रस्य तदग्राहकत्वादिति वाच्यम् । अस्मन्मते श्रोत्रस्य कर्णशष्कुल्यवच्छिन्ननभोदेशातिरिक्तत्वेन तस्य शब्ददेशे गमनसम्भवात् ।

कारिकाः

नैनं सेतुमहोरात्रे तरतो ब्रह्मविद्वरम् । इत्युपक्रम्य सर्वे हि पाप्मानोऽतो महात्मनः ॥ ५३ ॥
निवर्तन्ते विशेषेण पुण्यपापे तरत्ययम् । विद्याबलाद्ब्रह्मविदो मुक्तिरात्यन्तिकी भवेत् ॥ ५४ ॥
अत्र गन्तव्यता नास्ति ब्रह्मनिष्ठस्य कुत्रचित् । भूमिस्थः कश्चिदेवात्र यथान्यं देशमाव्रजेत् ॥ ५५ ॥
तत्रान्यस्यानुगमनमन्यद्भूम्यन्तरं प्रति । अनन्यत्वेऽपि बालस्य कालान्तरभवे भवेत् ॥ ५६ ॥
वार्द्धके गमनं तद्वद्ब्रह्मनिष्ठस्य नास्ति तत् । भूप्रदेशो वयोवस्थाविशिष्टानां गतिर्भवेत् ॥ ५७ ॥
तत्र सावयवत्वाद्धि वर्ततेऽत्र तु निष्कलम् । निष्क्रियं शान्तमित्यादि न तस्येत्यवदच्छ्रुतिः ॥ ५८ ॥
सम्यग्विध्वस्ततमसामनावृत्तिः परा मता । इमं मानवमित्यादावुपासनपरं विदुः ॥ ५९ ॥
न स पुनरावर्तत इति श्रौतं वचोऽब्रवीत् । मामुपेत्येति भगवानर्जुनायाह सादरम् ॥ ६० ॥
भवदृष्ट्या तु गर्भेऽहं वामदेवो यदब्रवीत् । अहं मनुस्तथा सूर्य इति व्याप्तिविदो भवेत् ॥ ६१ ॥
तस्माद्ब्रह्मविदो नास्ति गमनं कुत्रचित्क्वचित् । गीतास्वपि तथा चोक्तं विशते तदनन्तरम् ॥ ६२ ॥

किरणावली

न चैवमपि मथनद्वारा स्वोत्पादककाष्ठं प्रति वह्नेर्दाहकत्वं दृष्टम्, तन्न स्यादिति वाच्यम् । काष्ठस्य मथनद्वारा वह्न्यभिभवनिवृत्तिमात्रोपयुक्ततया तदकारणत्वात् । अत्र च बहु वक्तव्यमस्ति । तथापि विस्तरभयादुपरम्यते । श्रुतिश्च ज्ञानानन्तरमपि प्रारब्धकर्मफलस्यावस्थानं दर्शयति । तन्निवृत्त्यनन्तरं विदेहकैवल्यं दर्शयति । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इतिं, ततो न ज्ञानानन्तरमेव विदेहकैवल्यावकाश इति ।

नन्वस्तु कर्मनिवृत्त्यसम्पादकं ज्ञानं तथापि तस्माज्ज्ञानान्न त्वदभिमतमुक्तिसिद्धिः । तथा हि नित्यनिरतिशयसुखावस्थितिः किं मुक्तिः किंवा अविद्यानिवृत्तिः । नाद्यः तस्य ज्ञानासाध्यत्वात् । अन्यथा नित्यत्वभङ्गापत्तेः । ब्रह्मण एव नित्यनिरतिशयसुखरूपत्वेन तस्य च त्वदभिमतात्मत्वेन स्वरूपत्वात् स्वरूपस्य च स्वतः सिद्धत्वेन तल्लाभार्थं ज्ञानाद्ययोगाच्च । न द्वितीयः अविद्यानिवृत्त्या सद्वितीयत्वेनाद्वितीयत्वसिद्धान्तविरोधात् ।

नहि भावाभावयोरेकत्वं सम्भवतीत्यत आह—**अथ परब्रह्मात्मना स्थीयतामिति** । अथ = प्रारब्धकर्मक्षयानन्तरं, परब्रह्मात्मना = परब्रह्मस्वरूपेणैव, स्थीयतामिति। अयं भावः—मुक्तिर्द्विविधा, अनर्थनिवृत्तिः, आनन्दावाप्तिश्चेति, अत्र अनर्थनिवृत्तिः ज्ञानादुत्पन्नायाः विद्यायाः अविद्याविरोधित्वेन तन्निवर्तनक्षमत्वेन स्वहेतुभूताविद्यानिवृत्तौ अनर्थस्य कर्तृत्वादेर्निवृत्त्युपपत्तेः ।

न च तया अनर्थनिवृत्त्या सद्वितीयत्वापत्तिः । अनर्थस्य कल्पितत्वेन यन्निवृत्तेरपि सुतरां कल्पितत्वात्काल्पनिकस्य परमार्थवस्तुना साकं द्वितीयत्वानापादकत्वात् । नहि मैत्रीपुत्रेण वन्ध्यापुत्रः कल्पितः द्वितीयतामापद्यते ! वस्तुतस्तु कल्पितवस्त्वभावस्य अधिष्ठानातिरिक्तत्वाभावेन सकार्याविद्यायाः कल्पितत्वेन तन्निवृत्तेरपि तदधिष्ठानातिरिक्तत्वाभावात् ।

न च तन्निवृत्तेरधिष्ठानानतिरेके अधिष्ठानस्य नित्यत्वेन ज्ञानजन्यत्वं न स्यादिति वाच्यम् । अधिष्ठानस्य स्वरूपाकारेणाजन्यत्वेऽपि तन्निवृत्तित्वाकारेण तज्जन्यतोपपत्तिः, नाशकाभावाच्च नाशाभावात् ।

कारिका:

विदेहमुक्तौ बह्वयो हि श्रुतय: स्मृतयस्तथा । जीवन्मुक्तिस्तु सिद्धैव शरीरस्थितिधारिणी ।। ६३ ।।
इति प्रोक्तं मुमुक्षूणामुपदेशनमादरात् । आचार्यै: पञ्चरत्नाख्यं श्लोकपञ्चकमुत्तमम् ।। ६४ ।।
देहावसानसमये प्रार्थितस्त्वधिकारिभि: । सूत्रभाष्यादिकं श्रोतुमशक्तानां कथं भवेत् ।। ६५ ।।
ज्ञानं यद्भगवत्प्रोक्तं स्थूलबुद्धिमतां हि न: । तदा स भगवाञ्शर्व: साक्षाच्छङ्कररूपधृक् ।। ६६ ।।
प्राहान्ते पञ्चरत्नाख्यं स्तोत्रं ज्ञानप्रदायकम् । पञ्चरत्नमयीं मालां य: कण्ठे धारयेन्नर: ।। ६७ ।।
तस्यान्यद्भूषणं तुच्छं भवेन्निश्चितमेव हि । अनेन पञ्चरत्नस्य व्याख्यानेन सदाशिव: ।
शुद्धां वाणीं तथा बुद्धिमकरोन्मुक्तिसिद्धये ।। ६८ ।।

श्रीमद्रामेन्द्रकृपया शिवस्तुलसिवंशज: ।
कारिका: पञ्चरत्नानामकरोद्धरितुष्टये ।। ५ ।।

।। इति पञ्चम: श्लोक: ।।

किरणावली

न हि ज्ञानानन्तरं कस्यचिन्नाशकस्य सम्भव: । स्वाकारेणैव नित्यत्वस्य श्रुतिसिद्धान्तत्वात् ।

न चाभावस्य भावरूपत्वमनुपपन्नमिति वाच्यम् । घटाभावाभावस्य घटत्वदर्शनेन तादृशनियमाभावात् । तथाच ज्ञानादनर्थनिवृत्तिरिति सुष्ठूक्तम् । आनन्दावाप्तिश्च औपचारिकी, पूर्वमप्राप्तस्यानन्दस्येदानीं प्राप्त्यभावात् ।

न चानन्दस्य स्वतस्सिद्धरूपत्वेन प्रारब्धस्य क्षयानन्तरं ब्रह्मानन्दात्मनाऽवस्थितिप्रतिपादकमूलकारवाक्यविरोध इति वाच्यम् । स्वत एव पूर्वं ब्रह्मात्मना स्थितस्यापि जीवस्याविद्यामहिम्ना भिन्नावस्थितस्य अज्ञानकार्यतन्निवृत्तौ "अथ परब्रह्मात्मना स्थीयतामि"ति वक्तुं शक्यत एव, पूर्वं तदवस्थाया एव शुक्ते: स्वाज्ञानमहिम्ना अतथाभूतवत् स्थितायाः तन्निवृत्तौ स्वरूपापत्तिरेवेति न कोऽपि दोष इति संक्षेप: ।

अज्ञातं ब्रह्मतत्वं ये ज्ञातुमिच्छन्ति ते नराः ।
समाश्रयन्तु सततं किरणावलिमादरात् ।।
मदीयकृतिमध्ये यो भूषणं दूषणं जन: ।
विचार्यैव वदेत्तस्मै महते निधये नम: ।।

।। इति श्रीमत्परमहंसपरिव्राजकाचार्याद्वैतविद्याचार्यवर्यश्रीमत्सच्चिदानन्दयोगीन्द्रचरणकमलभृङ्गायमाणमानसबालश्रीकृष्णानन्दसरस्वतीविरचितोपदेशपञ्चरत्नकिरणावली सम्पूर्णा ।।

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचितं

# स्वरूपनिरूपणम्

श्रीआनन्दगिर्याचार्यविरचितटीकोपेतम्

**अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम् ।**
**साऽविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥ १ ॥**

**पृथिव्यप्तेजोवाय्वाकाशमादित्यो द्यौश्चेत्येतत्स्थूलशरीरम् शुक्रशोणितसम्भूतम् । त्रीणिमातृतस्त्रीणि पितृतः । अस्थिस्नायुमज्जा पितृतः । त्वङ्मांसशोणितमिति मातृतः इत्येतत् षाट्कौशिकं शरीरम् ॥ २ ॥**

---

विधूतविविधोपाधिव्याधिबोधैकमूर्त्तये ।
प्रतीचे परमानन्दवपुषे ब्रह्मणे नमः ॥

स्वरूपाख्यं स्वरूपविषयं प्रकरणं चिकीर्षुरधिकारिणे हेयोपादेयविवेकार्थं अनर्थमनर्थहेतुं पुरुषार्थं पुरुषार्थहेतुं च प्रथमं संगृह्णाति—अनात्मभूत इति । **साऽविद्येति** । अनाद्यविद्याकार्यत्वाद्देहादावनात्मन्यभिमानोऽविद्येत्युच्यते—**तत्कृत इति** । तयाऽविद्यया कार्यकारणरूपया निमित्तोपादानभूतया जन्यत्वं संसारस्य निरुच्यते । तन्नाशो बन्धस्य दुःखात्मनः सनिदानस्यात्यन्तिकी दुःखनिवृत्तिर्मोक्षः । अयं च तत्वज्ञानाद्भवति, अविद्यातत्कार्यध्वंसस्य लोके तत्त्वज्ञानजन्यत्वदर्शनात् । ननु बन्धो नाविद्यया जन्यते किन्तु शरीरद्वयसम्बन्धात् । स च कर्मवशात्, तच्च चेतनस्य स्वारस्येन क्रियाशक्तिमत्त्वादित्याशङ्क्य, क्रियाशक्तिमत्त्वस्य स्वाभाविकत्वे शक्तेः शक्यसापेक्षतया मोक्षाद्यवस्थायामपि क्रियाप्रङ्गात् तदीयस्वाभाविकत्वासम्भवादविद्याकृतं कर्त्तृत्वं कर्मशरीरद्वयसम्बन्धश्च । एतदभिसन्धाय प्रतिपत्तिसौकर्यं प्रतीत्य प्रथमं वैराजरूपमात्मनः स्थूलशरीरं दर्शयति—**पृथिवीति** । पञ्चीकृतानि पञ्चमहाभूतानि तत्कार्यं ब्रह्माण्डं च सर्वमेतद्विराडित्युक्तम् । आत्मनः स्थूलशरीरमित्यर्थः । "चक्षुषी चन्द्रसूर्यावि"ति श्रुतेरादित्यशब्देन चन्द्रोऽपि गृह्यते । द्यौश्चेति लोकत्रयमग्निश्चोपलक्ष्यते । किं बहुना आदित्यो द्यौश्चेत्यनेन ब्रह्माण्डं तदन्तर्वर्त्ति च सर्वं संगृह्णाति । तदेवं स्थूलं समष्टिशरीरं शिष्ट्वा तदेव व्यष्टिरूपं कारणद्वारा निर्दिशति—**शुक्रेति** । शुक्रकार्यं शोणितकार्यं च विविच्य व्यपदिशति—**त्रीणीत्यादिना** । पितृशब्दो मातृशब्दश्च प्रकरणानुसारेण शुक्लशोणितविषयौ । अस्थिपरिवेष्टनं सूक्ष्मं चर्म स्नायुशब्दार्थः । अस्थिस्नाय्वोरन्तरवर्त्ति स्वच्छं जलं मज्जेति भेदः । अथवा स्नायुशब्देन नाडीभेदाः सिरा निरुच्यन्ते । अस्थ्यन्तर्गतो धातुर्मज्जेति वक्तव्यम् । मांसान्तरगतं स्थूलं रुधिरकार्यं शोणितमुच्यते । अस्थ्यादयश्चैते षडवयवाः । तैर्विनिर्मितं कोशशब्दितं सर्वप्राणभृतामायतनभूतं स्थूलशरीरमित्युपसंहरति—**इत्येतदिति** ॥ १-२ ॥

**पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम् ।**
**स सप्तधातुं त्रिमलं द्वियोनिं चतुर्विधाहारमयं शरीरम् ॥ ३ ॥**

**श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमिति पञ्च बुद्धीन्द्रियाणि । वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । प्राणापानव्यानोदानसमाना इति पञ्च वायवः । मनोबुद्धिरहंकारश्चित्तमिति अन्तःकरणचतुष्टयं इत्येतत्सूक्ष्मशरीरं लिङ्गमित्युच्यते । तदुभयशरीरान्तर्गतो विज्ञानात्मा स यावत्सर्ववेदशाखोपनिषत्सु तत्त्वभूतं परमात्मानं न जानाति तावत् संसरति । विदितसतत्त्वस्तु सर्वैषणाविनिर्मुक्तो निःस्पृहो निरीहः सर्वकामैरनागगन्धितः मुच्यते ॥ ४ ॥**

**पौर्वापर्येण वेदान्ता यद्वदन्ति परं पदम् ।**
**तदहं ब्रह्म निर्भेदं सत्यादिपदलक्षणम् ॥ ५ ॥**
**अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।**
**इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ॥ ६ ॥**

---

सम्प्रति सूक्ष्मं शरीरमाचक्षाणो बुद्धीन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं वायुपञ्चकमन्तःकरणचतुष्टयं चाचष्टे—**श्रोत्रेत्यादिना** । बुद्ध्यर्थानीन्द्रियाणि बुद्धीन्द्रियाणि कर्मार्थानीन्द्रियाणि कर्मेन्द्रियाणि इति द्रष्टव्यम् । अपञ्चीकृतानि पञ्चमहाभूतानि तत्कार्यं च पूर्वोक्तं बुद्धीन्द्रियादि सर्वमात्मनः सूक्ष्मशरीरमिति विवक्षन्नाह—**इत्येतदिति** । एतदेव पूर्वोक्तं पञ्चदशकं मनोबुद्धिभ्यां सह सप्तदशकं लिङ्गं हैरण्यगर्भरूपमिति मन्वानो ब्रूते—**लिङ्गमित्युच्यत इति** । कथमिदमात्मनः शरीरद्वयमभिधीयते तदतिरिक्ताभावादित्याशङ्क्य दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वादाद्यन्तवत्त्वाच्च शरीरद्वयस्य घटादिवदात्मत्वायोगात् तदन्तर्वर्ती द्रष्टा घटादिद्रष्टेवात्मा विद्यत इत्याह—**तदुभयेति** । तस्य प्रकृतशरीरद्वयसम्बन्धद्वारा कर्तृत्वभोक्तृत्वप्रमातृत्वलक्षणसंसारित्वमविद्याकृतमिति कथयति—**यावदिति** । स्वयंप्रकाशस्य प्रत्यगात्मभूतस्य परमात्मनोऽपरिज्ञानं दुर्घटमित्याशङ्क्य वाक्यस्थपदानां वाक्यानां च शक्तितात्पर्यापरिज्ञाननिवर्तकज्ञानानुदयात्तदुपपत्तिरिति मत्वा विशिनष्टि—**सर्वेति** । सर्वासु तत्तद्वेदगतासु शाखासु व्यवस्थितोपनिषत्सु तत्वभूतेनावस्थितं तात्पर्याधिगम्यमिति यावत् । एवमनर्थं तद्धेतुं च दर्शयित्वा पुरुषार्थं तद्धेतुं च प्रपञ्चयति—**विदितेति** ।

**सर्वेषामेव** तर्हि पदवाक्यशक्तितात्पर्यज्ञानद्वारा तत्त्वज्ञानपूर्विका मुक्तिः शक्या इत्याशङ्क्याधिकारिणं विशिनष्टि—**सर्वैषणेति** । पुत्रैषणा लोकैषणा वित्तैषणेत्येवमेषणात्रयविनिर्मोकाय तत्कस्मै स्पृहयतीत्याशङ्क्याह—**निःस्पृह इति** । तथा च श्रुतिस्मृतिविहितसर्वकर्मसंन्यासरूपं पारिव्राज्यमधिकारिविशेषणं लब्धुमित्याह—**निरीह इति** । तथा कर्मफलापेक्षाप्रतिबद्धबुद्धिः सन्मोक्षाय नार्हतीत्याशङ्क्याह **सर्वकामैरिति** ॥ ४ ॥

उक्तमर्थचतुष्टयं श्लोकैर्विवृण्वन्नैक्यज्ञानान्मुक्तिस्तदज्ञानादनर्थः स्यादित्याह—**अहमेवेति** । अहं परमेव ब्रह्मेति सम्बन्धः । तस्येतिहासपुराणादिषु प्रसिद्धिं सूचयति—**वासुदेवाख्यमिति** ।

**विज्ञप्तिमात्रो हि सदा विशुद्धो बुद्धश्च यस्मात्सततं विमुक्तः ।**
**अहं न हेयादिरिति प्रतर्क्य तिष्ठेत्सदा ब्रह्ममयो विशोकः ॥ ७ ॥**

**अहमेव परं ब्रह्म न चाहं ब्रह्मणः पृथक् ।**
**एवं सम्यगुपासीत ब्राह्मणो [ज्ञानतत्परः] ॥ ८ ॥**

**[यदा] चित्तमसंसक्तं त्वदीयं सर्वकर्मसु ।**
**भवसीह तदा वत्स त्वमेव परमं पदम् ॥ ९ ॥**

---

कूटस्थत्वं दर्शयति—**अव्ययमिति** । इतिशब्देनानुभवोऽभिधीयते तस्य निश्चितत्वमसम्भावनाविपरीतभावनाप्रतिबन्धविधुरत्वम् । यद्येवमनुभवः स्यात्तदा जीवन्नेव मुक्तो भवतीत्यर्थः । यथोक्तानुभवाभावप्रत्ययाय प्राप्तिमाह—**बद्ध एवेति** । इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिरिति हि श्रूयते ॥ ६ ॥

नन्वात्मनो जडत्वात्पुण्यपापसम्बन्धेनाशुद्धत्वादज्ञानतया च बद्धत्वात् हेयोपादेयत्वसम्भवात् ब्रह्मणश्चानेवंरूपत्वात्तयोरैक्यज्ञानस्य प्रामाणिकत्वायोगात् कुतस्तत्प्रयुक्ता मुक्तिरित्याशङ्क्य परिहरति—**विज्ञप्तिमात्रो हीति** । विज्ञेयत्वेन जडस्य घटवदनात्मत्वमितिशब्दार्थः । यदात्मनो द्रव्य[जड]बोधरूपत्वं कैश्चिदुच्यते तदेकस्यानेकरूपत्वानुपपत्त्या निराकर्त्तुं **मात्र**पदम् ।

न च तस्मिन्कर्मादिसम्बन्धादशुचिराशङ्कितुमुचिता । कर्माध्यक्षः साक्षीत्यादिश्रुतिविरोधादित्याह—**विशुद्ध इति** । अवस्थात्रयस्यापि साक्षितया साक्षिणो वस्तुतो न सम्बन्धोऽस्तीति वक्तुं सदेत्युक्तम् । पूर्वोक्तं विज्ञप्तिमात्रत्वं विशुद्धत्वं च हेतुत्वेनानूद्य ज्ञप्तिरूपत्वमाह—**बुद्धश्चेति** । हिशब्देनात्मन्यसङ्गोदासीने संसारतद्धेतुसम्बन्धासम्भवः सूच्यते । उपादेयत्ववद्धेयत्वमात्मनो नास्तीत्यत्रात्मत्वं हेतुमाह—**अहमिति** । एवं त्वपदार्थपरिशोधनपूर्वकं वाक्यार्थं प्रतिपद्यत इत्याह—**इति प्रतर्क्य ब्रह्ममयस्तिष्ठेदिति** । इत्थं वाक्यार्थज्ञाने तत्फलस्य शोकादिनिवृत्तिरूपमोक्षस्यावश्यंभावितामाह—**सदा विशोक इति** ॥ ७ ॥

ब्रह्मात्मनोरैक्यज्ञाने पुरुषार्थहेतावपि कथमुद्देश्यविधेयभावः स्यादित्याशङ्क्य व्यतिहारस्य विवक्षितत्वादुद्देश्यत्वादि यथेष्टमेष्टव्यमित्याह—**अहमेवेति** । कथं पुनरैक्यज्ञानमुत्पद्येतेत्यपेक्षायां शमदमादिमतो यथोक्तेऽर्थे श्रवणाद्यभ्यासादित्याह—**एवमिति** । स च श्रवणादिजनितब्रह्मज्ञानात् ब्रह्मण्येवावस्थितो मुख्यो ब्राह्मणो भवति "स ब्राह्मणः" । "ब्रह्मसंस्थोऽमृतत्वमेती"ति श्रुतेरित्याह—**ब्राह्मण इति** ॥ ८ ॥

श्रवणाद्यभ्यासाद्विषयेषु मनसो वैमुख्यमपि सम्यग्ज्ञानद्वारा मुक्तिहेतुरित्याह—**यदेति** । कर्मशब्दो विषयविषयः । [तदेत्य]वस्थोक्तिः—**वत्सेति** सम्बोधयन्योग्ये शिष्ये प्रीतेन करुणावता गुरुणा भवितव्यमिति सूचयति—**इहवेत्येव**कारः सम्बध्यते । परमं पदमेव भवसीति परमपदभावस्यात्मनि सदा विद्यमानता द्योत्यते ॥ ९ ॥

**योऽसौ [ सर्वेषु वेदेष्वजन्मा श्रुत ] ईश्वरः ।**
**अकायो निर्गुणो ह्यात्मा सोऽहमस्मि न संशयः ॥ १० ॥**
**सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरञ्जनम् ।**
**तद्ब्रह्माहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥ ११ ॥**
**देशजात्यादिसम्बन्धान्वर्णाश्रमसमन्वितान् ।**
**भावानेतान्परित्यज्य स्वं भावं भावयेद् बुधः ॥ १२ ॥**
**यदा स्वचित्तात्प्रभवं विचित्रं, विश्वस्य तत्रास्तमयं च विद्वान् ।**
**प्रत्यक्षतः पश्यति शुद्धचक्षुरादर्शमध्यस्थमिवात्मरूपम् ॥ १३ ॥**
**तदाऽऽगमान्संपरिवर्ज्य सर्वान् श्रद्धागृहीतांश्च समाधियोगान् ।**
**तास्ताश्च युक्तीरनुमानगर्भाः सूक्ष्मार्थसंदर्शनदीपभूताः ॥ १४ ॥**

---

पदार्थद्वयपरिशोधनमपि वाक्यार्थज्ञानहेतुरिति मन्वानस्तत्पदार्थं परिशुद्धं दर्शयति—**योऽसाविति**। सर्वेषु वेदेषु सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिषु अजन्मा जन्मादिषड्भावविक्रियाविहीनः कूटस्थ इति यावत्। हिशब्देन तत्रोपपत्तिः सूच्यते। न हि निरवयवं ब्रह्म कार्त्स्न्येन एकदेशेन वा परिणमते। न च जन्मादय[स्तत्र]स्वतो वा परतो वा सम्भाव्यन्ते। ईश्वरशब्देन स्वातन्त्र्यमुच्यते। संप्रति परिशुद्धत्वंपदार्थं कथयति—**अकाय इति**। स्थूलसूक्ष्मशरीरद्वयसम्बन्धाभावो विशेषणाभ्यामभिहितः। तत्रासङ्गत्वं हेतूकर्त्तुं हिशब्दः। सोऽहमस्मीति वाक्यार्थोक्तिः। तत्र प्रतिबन्धकवैधुर्यमाह—**न संशय इति** ॥ १० ॥

कथं पुनर्वर्णाश्रमाभिमानवतो जीवस्य परिच्छिन्नदृष्टिविशिष्टस्य ब्रह्मत्वमित्याशङ्क्य तत्त्वज्ञानात्प्रागूर्ध्वं वा तादृगभिनिवेशित्वं इति विकल्प्य द्वितीयं प्रत्याह—**सर्वोपाधीति**। तच्च ब्रह्माहमिति चकारो योजनीयः। तत्त्वज्ञानविरोधादुत्तरकाले न वर्णाश्रमादिपरिच्छेदाभिमान इत्यर्थः ॥११॥

प्रथमं प्रत्यादिशति—**देशेति**। जात्यादीत्यादिशब्देन वयोऽवस्थादयो गृयन्ते। भावपदेन अभिमानभेदा वक्ष्यन्ते तेषां परित्यागे विवेकसम्पत्तिकारणमाह—**स्वं भावमिति**। स्वं भावं सच्चिदानन्दात्मकमद्वितीयं रूपं तद्भावनं नाम तदेकनिष्ठत्वम् ॥ १२ ॥

ननु द्वैतप्रपञ्चे पृथगेव प्रथमाने कथं यथोक्तमद्वितीयं तत्वं प्रतिपत्तुं शक्यते प्रत्यक्षादिविरोधात् न च तेषां कल्पितविषयत्वं रजतादिप्रतीतिवत् अप्रमाणत्वप्रसङ्गादिति तत्राह—**यदेति**। यस्यां विवेकावस्थायां विश्वस्य चराचरात्मनः सुरासुरनरादिरूपेण विचित्रं प्रभवमेष पुरुषः स्वचित्तादेव प्रवृत्तं विद्वान् भवति तत्रैव स्वचित्ते तस्यास्तमयं विद्वानवतिष्ठते तदा शुद्धचक्षुरात्मानं दर्पणस्थं यथा पश्यति तथा विद्वानपि स्वानुभववशात् तदद्वयमात्मानमनुभवति। द्वैतप्रपञ्चस्य मनःस्पन्दितमात्रत्वेन कल्पितत्वात्तद्विषयप्रत्यक्षादिविरोधाभावात्कल्पितविषयत्वेन प्रत्यक्षादीनां व्यवहारादिसम्वादेन व्यावहारिकप्रामाण्याभ्युपगमादिति भावः ॥ १३ ॥

अथोत्पन्नेऽपि तत्त्वज्ञाने श्रवणादिपरायणस्य नैव तन्निष्ठा प्रतिष्ठां प्रतिपद्यते, न चात्मज्ञानप्रतिष्ठामन्तरेण पुरुषार्थप्राप्तिरिति तत्राह—**तदेति**। तत्वज्ञानावस्थायां सूक्ष्मस्यार्थस्य सम्प्रदायाति-

**देहस्य च स्वस्य मृजा हिरण्यं जरादिमर्त्यत्वमशेषतस्तत् ।**
**प्रदीप्तसूर्यानलरश्मियोगात् घृतस्य काठिन्यमिवापनेयम् ॥ १५ ॥**
**आमस्तकं पादतलावसानं सान्तर्बहिश्चर्मपटावनद्धम् ।**
**तत्कृत्स्नमेवामृतराशिरूपममन्यतात्मानममर्त्यमित्थम् ॥ १६ ॥**
**यत्तत्पदं ब्रह्मविदो वदन्ति, तपस्विनो ज्ञानसमाधियुक्ताः ।**
**अनादिविज्ञानमजं पुराणं गुहाशयं निष्कलमप्रपञ्चम् ॥ १७ ॥**

---

रेकेणाधिगन्तुमशक्यस्य सम्यग्दर्शने दीपवत्स्थितं श्रवणध्यानमननात्मकमङ्गाङ्गिभूतं साधनचतुष्टयम् । साध्ये सिद्धे क्लृप्तान् भावान् परित्यज्य यस्तिष्ठति सोऽमृततामुपैतीत्युत्तरत्र सम्बध्यते । तथा च तद्वस्तुज्ञाननिष्ठस्य मुक्तिरवश्यम्भाविनीत्यर्थः ॥ १४ ॥

नन्वात्मनो जन्ममरणाद्यनेकधर्मवतःतद्विपरीतब्रह्मतानुपपत्तिरित्याशङ्क्याह—**देहस्येति** । यदेतदुपाधिभूतस्य देहस्य जरादिपूर्वकं मर्त्यत्वमात्मनि देहाध्यासद्वारा प्रतीयते । तदशेषतोऽस्यात्मनो मृजा शुद्ध्या विवेकबुद्ध्या देहाध्यासपरिहरणद्वारेण हिरण्यं हरणीयं त्यागयोग्यत्वादपनेयमित्युत्तरत्र सम्बन्धः । आत्मनि भावे जरादेर्विवेकबुद्ध्या त्याज्यत्वे दृष्टान्तमाह—**प्रदीप्तेति** । तथा च मिथो विरोधाभावादुपपन्नमात्मनो ब्रह्मत्वमिति शेषः ॥ १५ ॥

किं च समस्तस्यैवास्य शरीरस्य सर्वतश्चर्मपरिवेष्टितस्य नित्यसिद्धात्मरूपातिरेकेण सत्ता-स्फुरणयोरभावादात्मैव तस्य रज्जुरिव भुजङ्गमस्य तत्त्वमिति मन्वानो विद्वानात्मनः स्वतोऽन्यतश्चा-सत्वाभावादात्मानममर्त्यं कूटस्थमेव प्रतिपन्नवानित्यास्थिते युक्तमेवात्मनो ब्रह्मत्वमित्याह—**आमस्तकमिति** ॥ १६ ॥

ननु लोके तद्ब्रह्मैवाऽप्रसिद्धं कथमात्मनस्तदैक्यमित्याशङ्क्याह—**यत्तदिति** । पद्यते गम्यते वेदान्तैरिति पदमित्यनेन ब्रह्मणो वेदान्तप्रमाणकत्वमुक्तम् । तत्रैव विद्वत्प्रसिद्धिमाह—**ब्रह्मविदो वदन्तीति** । ब्रह्मवित्त्वे हेतुत्वेन मनोबुद्धीन्द्रियाणामैकाग्र्यरूपं तपोऽप्युपदिशति—**तपस्विन इति** । तत्रैव विवेकपूर्वकं समाधियोगमुपायान्तरमाह—**ज्ञानेति** । ननु तज्ज्ञानं मुक्त्यवस्थायां जायते चेत्तद्ज्ञानहेतुदेहादिसम्बन्धाद्बन्धावस्थातो विशेषो न स्यान्न चेज्जायते तर्हि गृहगुहानिहिता-नधिगतनिधिवदपुमर्थतेत्याशङ्क्याह—**अनादीति** । नित्यदृष्टिरूपमुद्दिष्टं कूटस्थं ब्रह्मानूद्य तस्यैव हृदयगुहायां निहितत्वेन प्रसङ्गादात्मत्वं दर्शयति—**अजमित्यादिना** । केचिदात्मानं सावयवं सङ्गिरन्ते स्वशरीरपरिमाणत्वात् तन्मात्रत्वाद्वा सावयवत्वसम्भवात्तत्प्रत्युक्तं-**निष्कलमिति** । न खल्वात्मनो देहपरिमाणत्वं तन्मात्रत्वं वा युज्यते । मध्यमपरिमाणस्य घटवदात्मत्वानुपपत्तेः । न चानन्तपरिमाणत्वेऽपि गगनवदनात्मत्वं गगनस्य कार्यत्वेनानन्त्यायोगात् । अतो "निष्कलं निष्क्रिय-मि"ति श्रुतेर्निरवयवं प्रत्यग्ब्रह्मैवेत्यर्थः । केचिद् "सर्वगन्धादि" श्रुतिमाश्रित्य ब्रह्मणः सप्रपञ्चतां प्रतिजानते, तान्प्रत्याह—**अप्रपञ्चमिति** । नो खल्वस्थूलादिश्रुतिदर्शितं निर्विशेषमात्मतत्त्वं ध्यानार्थं प्रपञ्चमारोप्य प्रवृत्तया श्रुत्या सप्रपञ्चं इति वक्तुं शक्यम् । तत्परातत्परश्रुत्योः तत्परश्रुतेरेव बलवत्त्वादित्यर्थः ॥ १७ ॥

निरञ्जनं निष्प्रतिमं निरीहमदृश्यमग्राह्यमचिन्त्यरूपम् ।
सनातनं ब्रह्म निरन्तरं यत्तदेवाहमिति प्रबुद्धः ॥ १८ ॥

यो भावितस्तिष्ठति निष्प्रकम्पः स ब्रह्मभूतोऽमृततामुपैति ।
पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः ॥ १९ ॥

सोऽहं परब्रह्म जगत्समस्तमुदेति मत्तो मयि चास्तमेति ।
ईशोऽहमेवास्य चराचरस्य पिता च माता च पितामहश्च ॥ २० ॥

ध्यानं समास्थाय पदं चतुर्थं ध्यायन्ति मामेव विमुक्तकामाः ।
ब्रह्मादयो देवमनुष्यनागा गन्धर्वयक्षाप्सरसो गणाश्च ॥ २१ ॥

---

किं च तस्य न स्वतः सप्रपञ्चत्वं कूटस्थतया निर्विशेषतानिवेदकश्रुतिस्मृतिविरोधात् । नापि परतस्तस्य सप्रपञ्चत्वं प्रकल्प्यते परेण तस्यासङ्गतेरसङ्गत्वादित्याह—**निरञ्जनमिति** । अथ यथोक्तवस्तुनि सुखप्रतिपत्त्यर्थं किञ्चिदुदाहरणं वक्तव्यमित्याशङ्क्य "न संदृशे तिष्ठति रूपमस्ये"ति श्रुतिमाश्रित्याह—**निष्प्रतिममिति** । आकाशवत्सर्वगतश्चेत्यादिश्रुतेराकाशश्चास्य दृष्टान्तः स्यादित्याशङ्क्य लोकप्रसिद्ध्या हि तस्याः श्रुतेरुत्थानात् । वस्तुवृत्त्या चाकाशस्य जन्मादिचेष्टावैशेष्यात् ब्रह्मणाऽदृष्टिगोचरेणैवंभूतेन न तदुदाहरणमित्याह—**निरीहमिति** । किमिति तर्हि यथोक्तं वस्तु लोके न दृश्यते घटादिवदित्याशङ्क्य ज्ञानकर्मेन्द्रियबुद्धिभिर्ग्रहीतुमयोग्यत्वादित्याह—**अदृश्यमित्यादिना** । किमित्यन्तर्बहिरिन्द्रियैर्ग्रहणायोग्यं ब्रह्मेत्याशङ्क्य तेषां कार्यविशेषत्वाद्ब्रह्मणश्चाकार्यत्वादित्याह—**सनातनमिति** । न चानात्मभूतं किञ्चिदस्ति नित्यत्वेनोभयसम्प्रतिपन्नं "अतोऽन्यदार्त्तमि"ति श्रुतेरित्यर्थः । किञ्च परिच्छिन्नमिन्द्रियाणि गोचरयन्ति ब्रह्म चापरिच्छिन्नमित्याह—**निरन्तरमिति** । इदानीं वाक्यार्थज्ञानमनूद्य तत्फलं कैवल्यं कथयति—**यदेतदुक्तं ब्रह्म तदेवाहमिति** बुद्धः सन् ॥ १८ ॥

यस्तेन प्रबोधेन भावितस्तत्प्रधानस्तन्मयो भूत्वा निखिलविष[यनिवृत्तः]निश्चलो नित्यमवतिष्ठते स पुनरभिव्यक्तपूर्णभावात्सनिदानसंसाररहितो निर्वाणं यातीत्यर्थः । ब्रह्मरूपं गतस्यामृतस्यापि परमानन्दप्रेप्साऽस्तीत्याशङ्क्य ब्रह्म प्राप्तस्य परमानन्दप्राप्तेरभिव्यक्तत्वात्तस्य कृतकृत्यस्य जीवदवस्थायामेव सर्वकामप्रविलयो भवतीति श्रुतिमुदाहरति—**पर्याप्तकामस्येति** । इहैवेति ज्ञानप्राप्त्यवस्था परामृश्यते ॥ १९ ॥

ननु ब्रह्मणो जगदुत्पत्तिस्थितिलयहेतुत्वं सर्वेश्वरत्वं वेदान्तेषु श्रूयते न च जीवस्य तथा च सति तत्कथमेकत्वमित्याशङ्क्य वाक्यार्थप्रतिज्ञापूर्वकं ब्रह्मलक्षणस्यात्मनि परिपूर्णत्वं दर्शयति—**सोऽहमिति** ॥ २० ॥

मुमुक्षवो मोक्षौपयिकज्ञानसिद्धये ध्यानमभ्युपेत्य तन्निष्ठाः सन्तश्चतुर्थं पदमेव ध्यायन्तीति सम्बन्धः । ज्ञानमार्गे मनुष्याधिकारनियममपवदितुं ब्रह्मादय इति ज्ञानविशेषणम् । काल्पनिको भेदो ध्यानोपयोगी न वास्तवो वाक्यान्तरविरोधादिति भावः ॥ २१ ॥

मखैरनेकैरहमेव चेज्यो मामेव सर्वे प्रवदन्ति वेदाः।
तपोभिरुग्रैर्विविधैश्च दानैर्मामेव सर्वे प्रतिपूजयन्ति ॥ २२ ॥
भूतानि चाहं स्थिरजङ्गमानि यावन्ति भूतान्यहमेव तानि।
एवं विधेष्वप्यपृथक्स्थितोऽहं मृदादिवन्मृन्मयभाजनेषु ॥ २३ ॥
अहममृतमयो न मर्त्यमूर्तिरिति कथमिव नरः स्मरेत्स्वरूपम्।
निहितमुपनिषत्सु यत्सतत्वं कथितमविस्तरशस्तदेव सर्वम् ॥ २४ ॥
अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित्।
न तं पश्यामि यस्याहं तं न पश्यामि यो मम ॥ २५ ॥

---

तथा कर्मभिरिज्यमानानां भूयसीनां भावात् कथं ऐकरस्यमित्याशङ्क्या "त्मैव देवताः सर्वा" इति स्मृतिमनुसृत्य परिहरति—**मखैरिति**। नन्ववेमपि वेदवेद्यस्यात्मातिरेकादात्मनश्च वेदितृत्वादैकरस्यानुपपत्तिस्तदवस्थैवेत्याशङ्क्य "सर्वे वेदा यत्पदमामनन्ती"ति श्रुतिमाश्रित्याह—**मामेवेति**। तथापि तपोदानादिभिरीश्वरमाराध्य तव मुक्तिः स्यादिति कथमैकरस्यमित्याशङ्क्याह—**तपोभिरिति** ॥ २२ ॥

चेतनभेदाभावेऽपि भूतभौतिकविजातीयप्रपञ्चभेदादैकरस्यासिद्धिरित्याशङ्क्याह—**भूतानि चेति**। यावन्ति भूतान्याकाशादीनि पृथिवीपर्यन्तानि तानि "योऽयं पुरुषः स स्थाणुरि"तिवदहमेव यावन्ति च स्थिरजङ्गमानि भौतिकानि च सर्वाण्यहमेव "इदं सर्वं यदयमात्मे"ति श्रुतेरित्यर्थः। भिन्नैर्भूतभौतिकैरभेदे तवापि भिन्नत्वं स्यादित्याशङ्क्य कल्पिततद्भेदेऽपि तदधिष्ठाननिष्ठावान्तरभेदाभावान्मैवमित्याह—**एवंविधेष्विति**। मृद्विकारेषु घटशरावादिषु मिथो भिन्नत्वेन भासमानेष्वपि मृन्मात्रस्य तत्रैकत्वं दृष्टं तथा कल्पितेषु परस्परं भिन्नेष्वपि प्रत्यगात्मा तदधिष्ठानभूतोऽद्वितीयः सन्कूटस्थो भवतीत्यर्थः ॥ २३ ॥

ननु विद्यमानेषु ग्रन्थान्तरेषु अध्यात्मविषयेषु किमर्थमिदं प्रकरणं प्रणीतमित्याशङ्क्याह—**अहमिति**। अधिकृतपुरुषो यथोक्तया रीत्या कथमिव स्वरूपं स्मरेदिति हृदि निधायास्मिन् प्रकरणे स्वरूपं व्याख्यातं ग्रन्थान्तराणि पुनरस्वरूपगोचराणि इति स्वरूपं प्रतिपित्समानस्य भवत्येतत् प्रकरणमर्थवदित्यर्थः। ननूपनिषद्भिरेव स्वरूपानुस्मरणद्वारेण तत्त्वसाक्षात्कारसिद्ध्या मोक्षसिद्धौ कृतं प्रकरणेनेत्याशङ्क्याह—**निहितमिति**। यस्य स्वरूपस्य सतत्वं याथात्म्यमुपनिषत्सु तत्र तत्र निक्षिप्तं ज्ञातुमशक्यमवस्थितं तदेव स्वरूपाख्यं तत्वमविस्तारात् संक्षिप्यात्र प्रकरणे प्रतिपत्तिसौकर्यार्थं कथितम्। तथा चोपनिषत्सु विस्मृतस्य स्वरूपस्यास्मिन्प्रकरणे संक्षेपतोऽभिधानादस्यार्थवत्त्वमित्यर्थः। सर्वमित्यपेक्षितपदार्थपरिशोधनादिपूर्वकत्वोक्तिः ॥ २४ ॥

ननु स्वरूपस्याव्यवहितत्वेनापरोक्षत्वान्नानुस्मरणमवकल्पते स्वव्यवहितस्य परोक्षस्यानुभूतपूर्वस्यानुस्मरणदर्शनादित्याशङ्क्यानुस्मरणीयस्वरूपं निरूपयति—**अहमेक इति**। आत्मनोऽद्वितीयत्वसमर्थनार्थं सम्बन्धाभावमुक्तं सम्बन्धिनि प्रमाणाभावेन साधयति—**न तमिति** ॥ २५ ॥

**स्थूलं जागरितं प्रभिन्नरचितं प्रत्यक्षतो दृश्यते**
**स्वाप्नं फेनतरङ्गबुद्बुदनिभं मायोपमं चञ्चलम् ।**
**सौषुप्तं तिमिरान्धकारगहनमव्यक्तमव्याकृतं**
**तुर्यं पातुसकृद्विभातममलं सर्वत्र सर्वानुगम् ॥ २६ ॥**

**बुद्धिपूर्वं तु यज्ज्ञानं बहिर्विषयसेवितम् ।**
**प्रत्यक्षमविरुद्धं च तज्जागरितमुच्यते ॥ २७ ॥**

**अर्थाभावे तु यज्ज्ञानं प्रत्यक्षमिव दृश्यते ।**
**गन्धर्वनगराकारं स्वप्नं तदुपलक्षयेत् ॥ २८ ॥**

---

आत्मनोऽवस्थात्रयमस्ति सम्बन्धीत्याशङ्क्य जागरितं लक्षयति—**स्थूलमिति** । प्रभिन्नं नानाविधं रचितं रचनाविषयभूतं घटशकटादि यथा स्थूले वस्तुजातेऽस्ति तत्प्रत्यक्षतश्चक्षुरादिभिरुपलभ्यमानं जागरितमित्यर्थः । अथवा यदिदं प्रभिन्नं रचितं रचनाया विषयभूतं स्थूलं जगत्प्रत्यक्षादिभिरुपलभ्यते तद्विषयमिन्द्रियादिहेतुकं ज्ञानं जागरितमित्यर्थः । सम्प्रति स्वप्नस्थानं लक्षयति—**स्वप्नमिति** । फेनवत्तरङ्गबुद्बुदवच्चात्यन्तचञ्चलं करणेषूपसंहृतेषु जागरितवासनाजनितमात्रास्वरूपं ज्ञानं स्वप्नमित्यर्थः । अवस्थाद्वयस्य मायाकार्यत्वेनेन्द्रजालतुल्यत्वमाह—**मायोपमं इति** । इदानीं सुषुप्तिस्थानं लक्षयति—**सौषुप्तमिति** । लौकिकप्रसिद्धतिमिरवदन्धकाररूपं यदज्ञानं तन्मात्रत्वेन बुद्ध्यादेरवस्थानादतिगहनं स्थानं दुरधिगमं सुषुप्तिरूपमित्यर्थः । अज्ञानस्य साङ्ख्यस्मृतिसिद्धत्वं सूचयत्यव्यक्तमिति । "आसोदिदं तमोभूतमि"त्यादिस्मृतिप्रसिद्धिप्रदर्शनार्थस्तुशब्दः । "तद्धेदन्तर्ह्यव्याकृतमासीदि"त्यादिश्रुतिप्रसिद्धं विवक्षति—**अव्याकृतमिति** । तदेतदवस्थात्रयं कार्यकारणरूपं यस्मिन्वस्तुनि वस्तुतो नास्ति तदुपन्यस्यति—**तुर्यमिति** । तदेतद्ज्ञानमविद्यातत्कार्यनिराकरणेन मोक्षमपेक्षमाणेनापेक्षितं मोक्षस्य ब्रह्मभावस्य प्रदानेन पालनादित्याह—**पात्विति** । ननु तुरीयस्य चतुर्थपर्यायत्वाद्वस्तुनश्चतुर्थत्वेनास्य त्रयापेक्षत्वात् त्रयमपि वस्तु स्यादित्याशङ्क्य तुरीयशब्दार्थमाह—**सकृदिति** । तदेवं स्वप्रकाशचिन्मात्रमागन्तुकनैसर्गिकदोषाभावेन साधयति—**अमलमिति** । तस्यावस्थात्रये सत्तास्फूर्तिप्रदत्वेन सन्निधिं सूचयति—**सर्वत्रेति** । अधिष्ठानान्तरं निवारयति—**सर्वानुगमिति** । सर्वमनात्मजातमधिष्ठानत्वेनानुगच्छतीति तथोक्तः ॥ २६ ॥

संक्षिप्तं जागरितं विवृणोति—**बुद्धिपूर्वन्त्विति** । बुद्धिपरिणामरूपमिति यावत् । तस्य निरालम्बनत्वं व्यावर्तयति—**विषयसेवितमिति** । सुषुप्तव्यावृत्त्यर्थं **बहिरि**त्युक्तम् । तस्य बाह्येन्द्रियजन्यत्वं कथयति—**प्रत्यक्षमिति** । अवस्थात्रयेऽपि विसम्वादाभावमदिधाभित—**अविरुद्धमिति** । इदमपि विशेषणद्वयं स्वप्नव्यावर्त्तकम् ॥ २७ ॥

स्वप्नलक्षणं प्रपञ्चयति—**अर्थाभावे त्विति** । तस्य कथं प्रत्यक्षविधत्वमित्याशङ्क्य तदाभासत्वं सिद्धवत्कृत्याह—**प्रत्यक्षमिवेति** । स्वप्नस्य प्रत्यक्षाभासत्वे दृष्टान्तमाह—**गन्धर्वेति** ॥ २८ ॥

जाग्रत्स्वप्नावुभावेतौ यस्मिन्नित्यं प्रतिष्ठितौ ।
उत्पत्तिः प्रलयश्चैव सुषुप्तमुपलक्षयेत् ॥ २९ ॥

बीजभावश्च निद्रा च द्वयं यत्र न विद्यते ।
तत्तुरीयमिति ज्ञेयमुत्पत्तिलयवर्जितम् ॥ ३० ॥

यस्य जाग्रति लीयन्ते सर्वे भावाः सुषुप्तवत् ।
अवाप्तं तेन विज्ञानं त्रिपथं तेन लङ्घितम् ॥ ३१ ॥

यावदज्ञानभावः स्यात्तावत्संसारभावना ।
उदेति चेत्परं ज्ञानं ब्रह्मैवेदं समन्ततः ॥ ३२ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यशङ्करभगवतः कृतौ स्वरूपनिरूपणं नाम प्रकरणं समाप्तम् ॥

---

सम्प्रति सुषुप्तं व्यनक्ति—**जाग्रदिति** । अवस्थाद्वयस्य जन्मस्थितिलयाः यतो भवन्ति तत्सुषुप्तमित्यर्थः ॥ २९ ॥

अथ तुरीयं विवृणोति—**बीजभावश्चेति** । निद्रा चेत्यज्ञानकार्यमवस्थाद्वयं संगृहीतम् । यत्रावस्थात्रयं नास्ति तत्तुरीयमित्युक्तं साधयत्युत्**पत्तीति** ॥ ३० ॥

[ अवस्थात्रयं ] प्रकम्य प्रतिपादितमुपसंहरति—**यावदिति** । ज्ञानस्य दुर्लभत्वं सूचयितुं चेदित्युक्तं । ज्ञानस्य परमात्माकारत्वेन निरतिशयपुरुषार्थनिदानत्वम् । इदं प्रत्यग्भूतं ब्रह्मात्मैव सच्चिदानन्दात्मकं सर्वतो व्याप्तमखण्डं परिपूर्णं तिष्ठतीति ज्ञानफलमुपसंह्रियते । तदेवमनर्थतद्धेतू जिहासता पुरुषार्थतद्धेतुं जिघृक्षता प्रकरणमिदं श्रोतव्यमिति भावः ॥ ३२ ॥

हेयादेयभिदावादो यस्मिन्नर्थो न गाहते ।
तं प्रत्यञ्चं परानन्दं पुरुषोत्तममाश्रये ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितं स्वरूपनिरूपणं समाप्तम् ॥

श्रीशङ्करभगवत्पादाचार्यविरचिता

# वाक्यवृत्तिः

श्रीआनन्दगिर्याचार्यविरचितविवरणटीकोपेता

ॐ

तत्सत्परमात्मने नमः

श्रीशङ्करभगवत्पादाचार्यविरचिता

# वाक्यवृत्तिः

आनन्दगिर्याचार्यविरचितविवरणटीकोपेता

**सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् ।**
**निर्मुक्तबन्धनमपारसुखाम्बुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥ १ ॥**

---

तात्पर्येण वेदान्ता यद्वदन्ति परं पदम् ।
तदहं ब्रह्म निर्भेदं सत्यादिपदलक्षितम् ॥

मुमुक्षुजनानुजिघृक्षया वाक्यवृत्तिसंज्ञितं प्रकरणं प्रारभमाणो भगवान् भाष्यकारो विघ्नोपप्लवोपशमनादिप्रयोजनसंसिद्धये परदेवताप्रणामरूपं मङ्गलाचरणं मुखतः सम्पादयन् प्रकरणप्रारम्भायापेक्षितमनुबन्धत्रयं च विषयसम्बन्धप्रयोजनलक्षणं संक्षिप्य प्रतिपत्तिसौकर्यार्थं कथयति—**सर्गस्थितीति** । तत्र श्रीवल्लभं नमामीति सम्बध्यते । श्रियो विद्याशक्तेर्वल्लभस्तदाकारः परमात्मा तं परमात्मानं प्रति वाङ्मनःकायप्रणिधानेन प्रह्वीभूतोऽस्मीत्यर्थः । तस्य तटस्थलक्षणमाह—**सर्गस्थितिप्रलयहेतुमिति** । विश्वेश्वरमित्यादिवाक्यशेषाद्विश्वस्येति विवक्षितम् । ननु कुतो जगतो निमित्तत्वमुपादानत्वं च परस्य कूटस्थस्याऽऽस्थातुं शक्यमित्याशङ्क्यानाद्यनिर्वाच्याविद्याशक्तिवशादित्याशयवानाह—**अचिन्त्यशक्तिमिति** । न च तन्नियमनासमर्थस्य तदीयस्थितिहेतुत्वमिति विवक्षितत्वात् सर्वनियन्तृत्वं समञ्जसम् । **विश्वेश्वरमिति** । न च तत्परिज्ञानमन्तरेण तं नियन्तुं स्रष्टुं वा शक्नोतीत्यभिप्रायेणोक्तं—**विदितविश्वमिति** । सर्वोपादानत्वप्रयुक्तं सर्वात्मत्वमाह—**अनन्तमूर्त्तिमिति** । अथवा तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह—**अनन्तेत्यादिना** । तत्र देशतः कालतो वस्तुतश्चानन्ता परिच्छेदरहिता मूर्त्तिः, स्वभावोऽस्येति व्युत्पत्तिमाश्रित्य अखण्डैकरसघनमुक्तम् । **निर्मुक्तबन्धन**मित्यनेन निष्प्रपञ्चत्वं प्रदर्शितम् । **अपारसुखाम्बुराशि**मित्यनेन परमानन्दतोक्ता **विमलबोधघन**मित्यनेन कूटस्थदृष्टिस्वभावतोपदिष्टा । सर्गस्थितिप्रलयहेतुमित्यारभ्य अनन्तमूर्त्तिमित्यन्तेनाऽज्ञातः परमात्मा शास्त्रप्रतिपाद्यस्तदीयप्रकरणस्यापि विषयः सूचितः । तेन सम्बन्धोऽपि परमात्मप्रकरणयोर्विषयविषयिभावो ध्वनितः । निर्मुक्तबन्धनमित्यादिविशेषणद्वयेन सर्वानर्थबन्धननिवृत्तिरनतिशयानन्दावाप्तिश्च प्रयोजनमुक्तम् । **विमले**त्यादिविशेषणेन तु प्रयोजनस्याप्रतिपन्नत्वं प्रत्युक्तमिति विवेक्तव्यम् ॥ १ ॥

यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदात्मरूपं तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ २ ॥

तापत्रयार्कसन्तप्तः कश्चिदुद्विग्नमानसः ।
शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥ ३ ॥

अनायासेन येनास्मान्मुच्येयं भवबन्धनात् ।
तन्मे संक्षिप्य भगवन्केवलं कृपया वद ॥ ४ ॥

साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते ।
इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५ ॥

तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः ।
तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥ ६ ॥

को जीवः कः परश्चात्मा तादात्म्यं वा कथं तयोः ।
तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७ ॥

---

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्रुतेः इष्टदेवताभक्तिवत् गुरुभक्तेरपि विद्याप्राप्तावन्तरङ्गसाधनत्वमस्तीति शिष्यशिक्षार्थं विशेषणसङ्कीर्तनपूर्वकं गुरुचरणसरोजं प्रणमति—**यस्येति** । नित्यमिति भक्तिश्रद्धयोरतिरेकोपवर्णनम् ॥ २ ॥

इदानीं सुखप्रतिपत्तये शिष्याचार्योक्तिप्रत्युक्तिव्याजेन प्रकरणमवतारयन्नधिकारिणं साधनचतुष्टयविशिष्टमनूद्य तदीयप्रश्नमुत्थापयति—**तापत्रयार्केति** । आध्यात्मिकं ज्वरादिकृतं आधिभौतिकं व्याघ्रादिजनितं आधिदैविकं चाऽतिवातादिप्रसूतं तापत्रयमुच्यते, कश्चिदित्यधिकारिदुर्लभताऽभिधीयते शमादीत्यत्र आदिशब्देन दमोपरतितितिक्षासमाधानश्रद्धा गृह्यन्ते । उक्तानामनुक्तोपलक्षकत्वात् ॥३॥

अधिकारिणि साधनचतुष्टयवति प्रष्टरि सिद्धे तदीयप्रश्नं प्रकटयति—**अनायासेनेति** । येन साधनेनानायासेनायत्नलभ्येनाऽनुभवसिद्धादनर्थराशेर्मम विश्लेषो भवति तन्मुक्तिसाधनं मदर्थं कथनीयमित्यर्थः । अङ्गैरुपाङ्गैश्चोपबृंहितं मुक्तिसाधनमन्यत्र प्रपञ्चितमित्याशङ्क्याह—**संक्षिप्येति** । आचार्यं पूजयन्निष्टकथने तस्य शक्तिं व्यनक्ति—**भगवन्निति** । प्रत्युपकारनिरपेक्षतया दीनजनानुजिघृक्षा कृपाऽभिलप्यते । शिष्यं शिक्षयतो गुरोरनुग्रहातिरेकादतिरिक्तं नास्ति फलमिति विवक्षित्वोक्तं—**केवलमिति** ॥ ४ ॥

वक्ष्यमाणे समाधाने श्रोतृबुद्धेः सुखप्रवृत्त्यर्थं प्रकृतं प्रश्नं स्तौति—**साध्वीति** । प्रलोभनमात्रमेतदिति माभूत् बुद्धिरित्यभिप्रेत्याह—**वदामीति** । न च मुक्तिसाधनं परोक्षत्वेनोच्यते किन्तु तज्जिज्ञासितमिदमित्यपरोक्षं वदामीत्याह—**इदमिति** । एकाग्रचेतसा श्रुतमेतत् ज्ञातुं शक्यमन्येन तु श्रुतमपि दुर्ज्ञानमित्याह—**सावधानेति** ॥ ५ ॥

एवं पातनिकां कृत्वा मुक्तिसाधनं सप्रमाणं सविषयमुपन्यस्यति—**तत्त्वमस्यादीति** । तत्र प्रश्नचतुष्टयमुत्थापयति—**को जीव इति** । जीवो देहादीनामन्यतमो वा तदतिरिक्तो वा परश्चात्मा

अत्र ब्रूमः समाधानं कोऽन्यो जीवस्त्वमेव हि ।
यस्त्वं पृच्छसि मां कोऽहं ब्रह्मैवासि न संशयः ॥ ८ ॥

पदार्थमेव जानामि नाद्यापि भगवन्स्फुटम् ।
अहं ब्रह्मेति वाक्यार्थं प्रतिपद्ये कथं वद ॥ ९ ॥

सत्यमाह भवानत्र विगानं नैव विद्यते ।
हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह ॥ १० ॥

अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः ।
आनन्दरूपः सत्यः सन् किं नात्मानं प्रपद्यसे ॥ ११ ॥

सत्यानन्दस्वरूपं धीसाक्षिणं बोधविग्रहम् ।
चिन्तयाऽऽत्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥ १२ ॥

रूपादिमान्यतः पिण्डस्ततो नात्मा घटादिवत् ।
पृथिव्यादिमहाभूतविकारत्वाच्च कुम्भवत् ॥ १३ ॥

---

सप्रपञ्चो वा निष्प्रपञ्चो वा अनयोश्च तादात्म्यं तथैवावस्थितयोरन्यथास्थितयोर्वा वाक्यं च तत्तादात्म्यं पदयोर्मुख्यया वा लक्षणया वा वृत्त्या कथं प्रतिपादयतीति प्रष्टुरभिप्रायः । प्रश्नचतुष्टयस्योत्तरमाह—**अत्र ब्रूम** इति । को जीव इति प्रश्नस्य प्रतिवचनं दर्शयति—जीवो नाम देहादिव्यतिरिक्तस्तत्साक्षी त्वंपदार्थः । योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिः सिद्धः न तु कश्चित्त्वत्तोऽन्यो देहादिर्जीवः तस्य दृश्यस्य द्रष्टृत्वानुपपत्तेर्वक्ष्यमाणत्वादित्यर्थः । योऽहं जीवशब्दार्थः सोऽहं ब्रह्मणो भिन्नोऽभिन्नो वेति पृच्छन्तं प्रत्याह—**यस्त्वमिति** । मां प्रति यस्त्वमहं कः स्यामिति पृच्छसि त्वं ब्रह्मैवासि न त्वस्मिन्नेव वाक्यार्थे कश्चित्प्रतिबन्धोऽस्तीत्यर्थः । पदार्थज्ञानस्य वाक्यार्थज्ञानहेतुत्वात्पदार्थस्य च स्पष्टमज्ञातत्वात् न वाक्यार्थप्रतिपत्तिर्मम सम्भवतीति शङ्कते—**पदार्थमेवेति** । आपाततः पदार्थप्रतिपत्तावपि यथावत् प्रतिपत्त्यभावे न वाक्यार्थधीरित्यभिप्रेत्योक्तं **स्फुटमिति** ।।८-९।।

पदार्थज्ञानस्य वाक्यार्थज्ञानहेतुत्वमुक्तमङ्गीकरोति—**सत्यमाहेति** । अविगीतमङ्गीकृतमर्थमनुवदति—**हेतुरिति** ।। १० ।।

तर्हि पदार्थव्याख्यानं कृत्वा वाक्यार्थो व्याख्यायतामित्याशङ्क्याह—**अन्तःकरणेति** । साक्षादीक्षण प्रति कर्तृत्वं साक्षित्वमिति शङ्कां व्युदस्यति—**चैतन्येति** । तस्यैव पुरुषार्थरूपत्वेन जिज्ञासितत्वमाह—**आनन्देति** । अनृतविरोधित्वं दर्शयति—**सत्य इति** । यथोक्तस्य त्वमर्थस्याऽप्रतिपत्तौ नास्ति कारणमित्याह—**सन्निति** ।। ११ ।।

ननु देहादिष्वात्मबुद्ध्या शुद्धात्मबुद्धिप्रतिबन्धाद्यथोक्तात्मप्रतिपत्तिरशक्येत्याशङ्क्य पूर्वश्लोकोक्तमात्मस्वरूपमनूद्योत्तरमाह—**सत्यानन्देति** ।। १२ ।।

कथं पुनर्देहादिषु गताऽऽत्मबुद्धिः शक्या त्यक्तुमित्याशङ्क्य देहस्यानात्मत्वं साधयति—

**अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः ।**
**करामलकवत्साक्षादात्मानं प्रतिपादय ॥ १४ ॥**

**घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा ।**
**देहद्रष्टा तथा देहो नाहमित्यवधारय ॥ १५ ॥**

**एवमिन्द्रियदृङ् नाहमिन्द्रियाणीति निश्चिनु ।**
**मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ॥ १६ ॥**

**सङ्घातोऽपि तथा नाहमिति दृश्यविलक्षणम् ।**
**द्रष्टारमनुमानेन निपुणं सम्प्रधारय ॥ १७ ॥**

**देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः ।**
**यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥ १८ ॥**

**अनापन्नविकारः सन्नयस्कान्तवदेव यः ।**
**बुद्ध्यादींश्चालयेत्प्रत्यक् सोऽहमित्यवधारय ॥ १९ ॥**

---

**रूपादिमान्** यतः पिण्डस्ततो नात्मा घटादिवत् । देहो नात्मा भौतिकत्वात्कुम्भवत् । देहो नात्मा, रूपादिमत्त्वात् घटादिवदित्यनुमानान्तरमाह—**पृथिव्यादीति** ॥ १३ ॥

देहस्यानात्मत्वं तद्व्यतिरिक्तात्मप्रतिपत्तिमन्तरेण न स्फुटीभवितुमुत्सहते नैरात्म्यप्रसक्तिभयादिति मन्वानः बोधयति—**अनात्मा यदीति** ॥ १४ ॥

यो यद् द्रष्टा स तस्माद्भिद्यते यथा घटद्रष्टुर्घटादीति व्याप्तिमाह—**घटेति** । देहस्य तदतिरिक्तस्य चात्मत्वेपि घटतद्द्रष्ट्रोर्भेदस्य व्याप्तिरतिव्यक्तेत्याह—**सर्वथेति** । अहमपि द्रष्टृत्वाद्देहाद्भिन्नो घटादिवत् घटद्रष्टेत्यनुमानमाह—**देहद्रष्टेति** ॥ १५ ॥

इन्द्रियद्रष्टृत्वात् नाहमिन्द्रियाणि किन्तु तेभ्यो भिन्नो देहद्रष्टुर्देहवदित्यनुमानादिन्द्रियाणामनात्मत्वमाह—**एवमिति** । उक्तन्यायं मनोबुद्ध्यादिष्वतिदिशति—**मन इति** । देहः स्वव्यतिरिक्तद्रष्टृकः दृश्यत्वात् घटादिरूपो यो दृश्यः स स्वव्यतिरिक्तद्रष्टृको यथा घटः । तथा चायं देहो दृश्यस्तस्मात् स्वव्यतिरिक्तद्रष्टृक एवेति ॥ १६ ॥

देहादिसमूहस्याऽत्मत्वं वारयति—**सङ्घातोऽपीति** । तत्रात्मनो द्रष्टृत्वे फलितमाह—**इति दृश्येति** ॥ १७ ॥

किं तदनुमानमित्यपेक्षायां पञ्चावयवमनुमानं विचारयति—**देहेति** । देहशब्देन स्थूलसूक्ष्मशरीरं धर्मित्वेनोपादीयते । किञ्च देहप्रवृत्तिश्चैतन्याधिष्ठानपूर्विका अचेतनप्रवृत्तित्वात् रथादिप्रवृत्तिवदित्यनुमानान्तरमाह—**देहेन्द्रयादीति** । मात्रशब्दोऽवधारणे । चेतनस्य यस्य सन्निधिनैव हानोपादानव्यापारसमर्थाः स्युरित्यर्थः । एतेन देहेन्द्रियादीनां शकटादिवदचेतनत्वं दर्शितम् ॥ १८ ॥

ननु स्वगतविकारवतो रथादिषु प्रवर्तकत्वप्रतिपत्तेरात्मनोऽपि देहादिप्रवर्तकत्वेन सविक्रियत्वं

अजडात्मवदाभान्ति यत्सान्निध्याज्जडा अपि ।
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ २० ॥

अगमन्मे मनोऽन्यत्र साम्प्रतं च स्थिरीकृतम् ।
एवं यो वेत्ति धीवृत्तिं सोऽहमित्यवधारय ॥ २१ ॥

स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा ।
यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय ॥ २२ ॥

घटावभासको दीपो घटादन्यो यथेष्यते ।
देहावभासको देही तथाहं बोधविग्रहः ॥ २३ ॥

पुत्रवित्तादयो भावा यस्य शेषतया प्रियाः ।
द्रष्टा सर्वप्रियतमः सोऽहमित्यवधारय ॥ २४ ॥

परप्रेमास्पदतया मा न भूवमहं सदा ।
भूयासमिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५ ॥

---

स्यादित्याशङ्क्य प्रवर्तकत्वं विक्रियावत्त्वव्याप्तं न भवति अयस्कान्ते व्यभिचारादित्याह—**अनापन्नेति** ॥ १९ ॥

अहंप्रत्ययालम्बनमात्मेत्यविवादात् देहादीनां चाहंप्रत्ययालम्बनत्वेन चेतनत्वावगमात् न तद्व्यतिरिक्तात्मसिद्धिरित्याशङ्क्याह—वह्न्याभासाय:पिण्डे दहतिप्रत्ययवदात्मव्याप्तेषु देहादिष्वहंप्रत्ययप्रवृत्तिसम्भवादतिरिक्तात्मसिद्धिरविरुद्धेत्याह—**अजडात्मेति** ॥ २० ॥

आत्मनो बुद्धितद्वृत्तिव्यतिरेके हेत्वन्तरमाह—**अगमन्मे इति** ॥ २१ ॥

प्रतिज्ञा हेतुः उदाहरणं उपनयः निगमनं इति पञ्चावयवं अनुमानं, देहः पक्षः स्वव्यतिरिक्तदृश्यः साध्यं दृश्यत्वात् हेतुः यथा घटः दृष्टान्तः । बुद्धितद्वृत्तीनां भावाभावयोर्वेदितृत्वमवस्थात्रयविशिष्टस्य विक्रियावतः स्वीकर्त्तव्यं तथाविधे(च)लोके वेदितृत्वदर्शनादित्याशङ्क्याऽऽह—**स्वप्नेति**। यथा धियां बुद्धिकृतवृत्तीनां भावाभावावविक्रियः सन् वेत्ति तथाऽवस्थाः अवस्थात्रयमपि कूटस्थः सन्नात्मा साक्षात्प्रतिपद्यते । तथा चाऽवस्थात्रयस्य विक्रियाणां च वेद्यकोटिविनिवेशात् न वेदितुरात्मनोऽवस्थावत्त्वं विक्रियावत्त्वं चेत्यर्थः ॥ २२ ॥

किञ्चात्मा, देहाद्भिद्यते तदवभासकत्वात् । यो यदवभासकः स तस्माद्भिद्यते । यथा प्रदीपो घटावभासको घटाद्भिद्यत इत्यनुमानेनात्मनो देहस्यातिरेकं दर्शयति—**घटावभासकेति**। घटद्रष्टेत्यत्र द्रष्टृत्वेनात्मनो देहादन्यत्वमुक्तं इह तु साक्षित्वादात्मनः साक्ष्याद्देहात् भिन्नत्वमुच्यते इत्यपौनरुक्त्यम् कथं पुनरात्मनो देहावभासकत्वमित्याशङ्क्य अखण्डस्फुरणरूपस्य सन्निधिमात्रेणेत्याह—**बोधेति** ॥२३॥

देहातिरिक्तस्य चिद्रूपस्यात्मनः सुखरूपत्वं साधयति—**पुत्रवित्तादय इति**। आत्मा सुखं परमप्रेमास्पदत्वात् दुःखवदिति व्यतिरेक्यनुमानादात्मनः सुखरूपत्वसिद्धिरित्यर्थः ॥ २४ ॥

यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते ।
साक्षित्वमपि बोद्धृत्वमविकारितयाऽऽत्मनः ॥ २६ ॥
देहेन्द्रियमनःप्राणाहंकृतिभ्यो विलक्षणः ।
प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः ॥ २७ ॥
त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः ।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ २८ ॥
निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः ।
अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९ ॥
निरस्तातिशयानन्दः सत्यः प्रज्ञानविग्रहः ।
सत्तास्वलक्षणः पूर्णः परमात्मेति गीयते ॥ ३० ॥
सर्वज्ञत्वं परेशत्वं तथा सम्पूर्णशक्तिता ।
वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥ ३१ ॥
यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् ।
मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ॥ ३२ ॥

---

अनुभवावष्टम्भेन हेतुनास्य स्पष्टयति—**परेति** ॥ २५ ॥

किं पुनरनेन प्रबन्धेन त्वंपदार्थस्वरूपं निरूपितं भवति इत्याशङ्क्य परिशोधितं त्वंपदार्थं संक्षिपति—**यः साक्षीति** । साक्षित्वे साक्ष्यविषयेक्षणकर्तृत्वेन विकारित्वं स्यादित्याशङ्क्याह—**साक्षित्वमिति** । अविकारितया बोद्धृत्वं नाम बोधैकरसत्वं तदीयसन्निधिसत्तामात्रेण साक्षिप्रतीते बोद्धृत्वमुपचरितमित्यर्थः ॥ २६ ॥

संक्षेपविस्तराभ्यामुक्तं त्वंपदार्थमुपसंहरति—**देहेन्द्रियेति** । देहेन्द्रियव्यतिरिक्तनिर्विकारश्चिद्वस्तु त्वंपदमभिधा यस्येति व्युत्पत्त्या त्वंपदार्थ इत्यर्थः ॥ २७ ॥

उक्तमनूद्य तत्पदार्थनिरूपणमवतारयन् "कः परश्चात्मे"ति प्रश्नं प्रत्याचष्टे—**त्वमर्थमिति** । तच्चिन्ता द्विधा विभज्यते—**अतद्व्यावृत्तीति** ॥ २८ ॥

आरोपितप्रपञ्चनिराकरणमुखेन तत्पदार्थनिरूपणं विवृणोति—**निरस्ताशेषेति** ॥ २९ ॥

यत्तु साक्षाद्विधिमुखेनेत्युक्तं तत्प्रपञ्चयति—**निरस्तातिशयेति**। एतावता परमात्मपदार्थस्य कथं निर्धारणमित्याशङ्क्याह—**सत्तेति** ॥ ३० ॥

श्रुतिसिद्धं तटस्थलक्षणं विवक्षन्नाह—**सर्वज्ञेति** । "यः सर्वज्ञः सर्ववित्" "सर्वेश्वरः सर्वशक्ति"रित्यादिवाक्यानि वेदशब्देन गृहीतानि ॥ ३१ ॥

यत्तु सन्मात्रत्वेन पूर्णत्वमुक्तं तत्कथं सम्भवतीत्यपेक्षायामाह—**यज्ज्ञानेति** । "येनाश्रुतं श्रुतं भवति" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति" "कस्मिन्नु भगवो विज्ञाते

**यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ ।**
**यत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ॥ ३३ ॥**

**विजिज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः ।**
**समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ॥ ३४ ॥**

**जीवात्मना प्रवेशश्च नियन्तृत्वं च तान्प्रति ।**
**श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यधारय ॥ ३५ ॥**

**कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ ।**
**जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ॥ ३६ ॥**

---

सर्वमिदं विज्ञातं भवती''त्येवंविधानि श्रुतिशब्देन गृह्यन्ते । मृदाद्यनेकदृष्टान्तैरित्यादिशब्देन लोहमणिनखनिकृन्तनदुन्दुभिशङ्खादयो दृष्टान्तास्तद्विकाराणां तत्प्रकृतिव्यतिरेकेणाभावप्रतिपादकाः स्वीक्रियन्ते । तेषु हि कारणेषु ज्ञातेषु तदतिरिक्तकार्याभावात् ज्ञातव्यविशेषो नास्तीति विवक्षितम् । तैरेतैः सन्मात्रे ज्ञाते आकाशाद्यभावेन सन्मात्रज्ञानतो ज्ञातमेव सर्वमिति प्रतिपादितम् । तच्च सन्मात्रं ब्रह्मेत्यर्थः ॥ ३२ ॥

छान्दोग्यश्रुत्या सन्मात्रं ब्रह्मेत्युक्तं सम्प्रति तैत्तिरीयकश्रुत्या सत्यं ज्ञानमनन्ताऽऽनन्दात्मकं ब्रह्मेत्याह—**यदानन्त्येति** ॥ ३३ ॥

ब्रह्मविदाप्नोति परमिति सूचितस्य ब्रह्मणो लक्षणवुभुत्सया ''सत्यं ज्ञानमनन्त''मिति सत्यज्ञानात्मकस्याऽऽनन्त्यं सर्वप्रकारपरिच्छेदाभावरूपं प्रतिज्ञाय द्वैतभेदे सति कथमेतदित्यपेक्षायां आनन्त्यसिध्यर्थं द्वैतप्रपञ्चस्याऽऽकाशादिलक्षणस्य प्रकृतब्रह्मकार्यत्वं ''तस्माद्वा एतस्मादात्मन आकाशः सम्भूत'' इत्यादिश्रुतिः विकारस्य प्रकृतिव्यतिरेकेणाऽभावमभिसन्धायोक्तवतीति । तथा च ब्रह्मण आनन्त्यं प्रसिद्धमित्यर्थः अथ यथोक्तया रीत्या सर्वेषां तत्प्रसिद्धं चेत् ब्रह्म तर्हि कथं कर्मिणः संसाररसिका न ब्रह्म वेदितुमुत्सहन्ते तत्राह—**विजिज्ञास्येति** । तद्विजिज्ञासस्व सोऽन्वेष्टव्यः स विजिज्ञासितव्यः ''आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः'' ''पण्डितो मेधावी''त्येवंविधानि वाक्यानि वेदान्तशब्देनोच्यन्ते । अतियत्नेन शमदमादिगुणराशिसम्पादनद्वारेणेति यावत् ॥ ३४ ॥

तर्हि कर्मकर्तृभावेन जीवब्रह्मणोर्भेदः स्यादित्याशङ्क्याह—**जीवेति** । तथापि नियम्यनियन्तृत्वभावेन भेदतादवस्थ्यमित्याशङ्क्य कल्पितं भेदमादाय तदुपपत्तिमभिप्रेत्याह—**नियन्तृत्वं चेति** ॥३५॥

वेदेषु ''तत्सृष्ट्वा तदेवानुप्राविशत्'' ''स एष इह प्रविष्टः'' ''अनेन जीवेन'' ''य आत्मनी''ति ''अन्तःप्रविष्टः शास्ते''त्यादिवाक्येष्विति यावत् । ''एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधुकर्म कारयति यमेभ्यो लोकेभ्योऽधो निनीयते'' इति श्रुतिमाश्रित्याह—**कर्मेति** । जीवानां कर्तृत्वव्यवस्थितानां हेतुकर्तृत्वं कारयितृत्वमिति यावत् ॥ ३६ ॥

**तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना ।**
**तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ॥ ३७ ॥**

**संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ।**
**अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥**

**प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।**
**अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३९ ॥**

**इत्थमन्योऽन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।**
**अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ४० ॥**

**तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।**
**पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ४१ ॥**

**तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने ।**
**लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥ ४२ ॥**

**हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने ।**
**यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३ ॥**

---

वृत्तानुवादपूर्वकं "तादात्म्यं वा कथं तयो"रिति तृतीयं प्रश्नं प्रत्याह—**तत्त्वेति**। कोऽसौ वाक्यार्थश्चिन्तनीयत्वेन प्रतिज्ञात इत्याशङ्क्याह—**तादात्म्यमिति** ॥ ३७ ॥

अत्रेति महावाक्योक्तिः नीलोत्पलवत्पदार्थसंसर्गो वा गामानयेति वाक्यवत् तद्विशिष्टपदार्थो वा किमिति वाक्यार्थो न भवतीत्याशङ्क्याह—**संसर्गो वेति**। अत्रेति पूर्ववत् महावाक्यविषये सप्तमी। ये तु तादात्म्यं भेदसहमभेदं वदन्ति तान् प्रति तादात्म्याख्यं प्रकृतं वाक्यार्थं विशिनष्टि—**अखण्डेति** ॥ ३८ ॥

तर्हि किमनूद्य किं वा विधेयमधिकृत्य यथोक्तो वाक्यार्थः सेत्स्यति इत्याशङ्क्य व्यतिहारस्य विवक्षितत्वादापेक्षिकं उद्देश्यविधेयत्वमित्याह—**प्रत्यग्बोधेति** ॥ ३९ ॥

तादात्म्यप्रतिपत्त्या त्वमर्थगताब्रह्मत्वस्य तदर्थगतपारोक्ष्यस्य च निवृतावपि किं फलिष्यति इत्याशङ्क्याह—**तदर्थेति**। यद्येवमिति। श्रोतृचेतः समाधानप्रार्थनापूर्वकमुत्तरमाह—**शृण्विति** ॥ ४१ ॥

तत्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेदिति चतुर्थं प्रश्नं प्रतिविधत्ते—**तत्त्वेति** ॥ ४२ ॥

कथं पुनः सतोर्वाच्यार्थयोर्लक्ष्यार्थावुपादाय वाक्यस्य वाक्यार्थबोधेन प्रवृत्तिरित्याशङ्क्याह—**हित्वा द्वाविति**। व्याख्यातं वृहत्यां वाक्यवृत्ताविति शेषः ॥ ४३ ॥

**आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ।**
**अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ४४ ॥**
**मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।**
**पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५ ॥**
**प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ।**
**विरुध्यते यतस्तस्माल्लक्षणा सम्प्रवर्तते ॥ ४६ ॥**
**मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे ।**
**मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७ ॥**
**तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।**
**सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८ ॥**

---

तत्रोक्तमेव सुखप्रतिपत्त्यर्थमनुक्तमत्रादौ त्वंपदवाच्यमर्थं कथयति—**आलम्बनेति** ॥ ४४ ॥

तत्पदवाच्यमर्थं कथयति—**मायोपाधिरिति** ॥ ४५ ॥

वस्तुतस्तस्य सत्याद्यात्मकत्वात् तद्विशिष्टौ वाच्यौ परित्यज्य प्रत्यक्चैतन्यमात्रं त्वंपदेन लक्ष्यम् । तत्पदेन चाद्वितीयचैतन्यमिति विवक्षितम् । तच्च लक्षणासम्बन्धानुपपत्तिभ्यामेव । लक्षणायां प्रयोजकमाह—**प्रत्यक्परोक्षेति** ॥ ४६ ॥

सम्प्रति लक्षणालक्षणमाह—**मानान्तरेति** । गुणवृत्तिनिवृत्त्यर्थं **मुख्यार्थेने**त्यादिविशेषणम् । मुख्यां वृत्तिं व्यावर्तयितुं प्रथमविशेषणम् । कुण्डपायिनामयने त्वग्निहोत्रशब्दः सायं प्रातराहुतिद्वयनिर्वर्त्यापूर्वसादृश्यात् मासगुणके कर्मान्तरे प्रकरणान्तरस्थे गुणवृत्त्या वर्तते । विषभोजनवाक्ये पदद्वयलक्षणायामुक्तलक्षणमविरुद्धं सिद्ध्यति । विषशब्दस्य हि प्रकृते प्रयोगे मुख्यार्थो हि नियमेन अनर्थसम्बन्धमनुभवति । क्रियापदार्थश्चायं निवृत्तिनियतः अतो नापत्तिरिति भावः ॥ ४७ ॥

ननु किं समग्रा जहल्लक्षणा अजहल्लक्षणा उत जहदजहल्लक्षणा ? प्रथमे सर्वथा वाच्यार्थपरित्यागादात्मनो जडत्वे ब्रह्मणश्च असत्यादिरूपमापद्यते । द्वितीये विशिष्टत्वमुभयत्रापि स्पष्टमापतेत् । न तृतीयः द्वयोरपि भागाऽसम्भवादित्याशङ्क्य काल्पनिकं भागमादाय परिहरति—**तत्त्वेति** । भागलक्षणा वाच्यार्थभागं परित्यज्य भागोपादानलक्षणेति यावत् । न चेयमप्रसिद्धा जहदजहल्लक्षणेत्याह—**सोऽयमित्यादीति** । स्वयं प्रतिज्ञातं देवदत्तैक्यं परस्मै बुभुत्सवे प्रतिपादयितुं सोऽयं देवदत्त इत्यादिवाक्यं प्रयुज्यते । तत्र तद्देशकालवैशिष्ट्यस्य एतद्देशकालवैशिष्ट्यस्याऽबुभुत्सितत्वात्तत्परित्यागेन देवदत्तस्वरूपमात्रं पदद्वयेन लक्ष्यते । तथा तस्मिन् वाक्ये सोऽयमिति पदयोर्वाच्यार्थैकदेशपरित्यागेन तदेकदेशोपादानेन बुभुत्सितदेवदत्तैक्ये पर्यवसानवत्प्रकृतेऽपि जहदजहल्लक्षणया पदद्वयमहं ब्रह्मेत्येकरसे वाक्यार्थे पर्यवस्यतीत्यर्थः ॥ ४८ ॥

**अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् ।**
**शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ४९ ॥**
**श्रुत्याऽऽचार्यप्रसादेन दृढो बोधो यदा भवेत् ।**
**निरस्ताशेषसंसारनिदानः पुरुषस्तदा ॥ ५० ॥**
**विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः ।**
**विमुक्तकर्मनिगडः सद्य एव विमुच्यते ॥ ५१ ॥**
**प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत् ।**
**किञ्चित्कालमनारब्धकर्मबन्धस्य संक्षये ॥ ५२ ॥**
**निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।**
**पुनरावृत्तिरहितं निर्धारितमिति स्थितम् ॥ ५३ ॥**

॥ इति श्रीमच्छङ्करभगवत्पादाचार्यविरचिता वाक्यवृत्तिः समाप्ता ॥

---

ननु सकृदेव श्रुताद्वाक्यादधिकारिणो यथोक्तवाक्यार्थज्ञानसम्भवादपेक्षितश्रवणाद्यावृत्तिरुपेक्षितेत्याशङ्क्य मन्दमध्यमाधिकारिविषयतया तदावृत्तिसिद्धिरित्याशयेनाह—**अहंब्रह्मेति** ॥ ४९ ॥

श्रुत्यादिप्रसादेन वाक्यार्थज्ञानदार्ढ्ये सति तदैव सनिदानं संसारस्य कार्यकारणसङ्घातस्य भूतसूक्ष्माणां कर्मबन्धस्य च निवृत्तौ सद्यो मुक्तिः स्यादित्याह—**श्रुत्येति** । श्रवणादेरावृत्त्या परिपाके श्रुतं स्मृतं च वाक्यं वाक्यार्थसाक्षात्कारं सम्पादयतीति श्रुतिप्रसादः । शिष्येण शुश्रूषणवशीकृतस्त्वाचार्यः तत्त्वमसीत्युपदिशति। स च साक्षात्करोतीत्याचार्यप्रसादः ॥ ५१ ॥

सद्योमुक्तिपक्षे गुरुप्रसादस्याभावाद्विद्योदयानुपपत्तिर्जीवन्मुक्तिशास्त्रविरोधश्चेत्याशङ्क्य पक्षान्तरमाह—**प्रारब्धकर्मेति** । कदा तस्य तर्हि विदेहकैवल्यमित्याशङ्क्य फलोपभोगेनारब्धकर्मणोऽनारब्धकर्मवत् निवृतौ प्रतिबन्धकाभावात् भवति विदेहकैवल्यमित्याह—**अनारब्धकर्मबन्धेति** ॥ ५२ ॥

कैवल्यस्य प्रेप्सितत्वं सूचयति—**निरस्तेति** । न च गतिपूर्वकं तस्य प्राप्यत्वं सर्वत्र व्यापकत्वादित्याह—**वैष्णवमिति** । हिरण्यगर्भादिपदापेक्षया वैलक्षण्यं च **परम**मित्युक्तं तस्य प्रामाणिकत्वविवक्षया पदमित्युक्तं पुनरावृत्तौ हेत्वभावादात्यन्तिकी मुक्तिरेवेत्याह—**कैवल्यमिति** । तदेवं प्रश्नचतुष्टयनिर्णयद्वारा तत्त्वज्ञानं मुक्तिसाधनं संक्षेपतो दर्शयति—**पुनरावृत्तीति** । चैतन्यं तावदशेषव्यापकमिष्यते किमद्वितीयतया परिपूर्णत्वेनाऽवस्थितयेत्याह—**निर्धारितमिति स्थितमिति** ।

वाक्यवृत्तेरियं वृत्ती रुचिरा रचिता मया ।
पुनातु चिरतां याता सङ्गता पुरुषोत्तमे ॥ ५३ ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतौ वाक्यवृत्तिविवरणं समाप्तम् ॥

## श्रीशङ्करभगवत्पादाचार्यप्रशस्तयः

१. नमाम्यभोगिपरिवारसम्पदं निरस्तभूतिमनुमार्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं विना विनायकमपूर्वशङ्करम् ।। पद्मपादाचार्याः

२. आशैलादुदयात्तथास्तगिरितो भास्वद्यशोरश्मिभिः
व्याप्तं विश्वमनन्धकारमभवद्यस्य स्म शिष्यैरिदम् ।
आराज्ज्ञानगभस्तिभिः प्रतिहतश्चन्द्रायते भास्करः
तस्मै शङ्करभानवे तनुमनोवाग्भिर्नमः स्यात्सदा ।। सुरेश्वराचार्याः

३. यत्प्रज्ञोदधियुक्तिशब्दनखजश्रद्धैकसन्नेत्रक-
स्थैर्यस्तम्भमुमुक्षुदुःखितकृपायत्नोत्थबोधामृतम् ।
पीत्वा जन्ममृतिप्रवाहविधुरा मोक्षं ययुर्मोक्षिण-
स्तं वन्देऽत्रिकुलप्रसूतममलं वेधोऽभिधं मद्गुरुम् ।। सुरेश्वराचार्याः

४. येषां धीसूर्यदीप्त्या प्रतिहतिमगमन्नाशमेकान्ततो मे
ध्वान्तं स्वान्तस्य हेतुर्जननमरणसन्तानदोलाधिरूढेः ।
येषां पादौ प्रपन्नाः श्रुतिशमविनयैः भूषिताः शिष्यसङ्घाः
सद्यो मुक्ताः स्थितास्तान् यतिवरमहितान् यावदायुर्नमामि ।। त्रोटकाचार्याः

५. अद्वैतार्णवपूर्णचन्द्रमभिदा पद्माटवीभास्करं
विद्वत्कोटिसमर्चिताङ्घ्रियुगलं प्रद्वेषिकक्षानलम् ।
हृद्याभेदसमस्तवेदजनितप्रोद्यद्विवेकाङ्कुरं
स्विद्यद्वागमृतं परात्परगुरुं श्रीशङ्करं तं भजे ।। आनन्दगिरयः

६. ब्रह्मानन्दस्वरूपश्शरणहितकृते दिव्यशक्त्या शरीरी
भूत्वा श्रीशङ्कराख्यो यतिकुलतिलको निर्मलानुद्दिधीर्षुः ।
कृत्वा भाष्यङ्गभीरं कलिमलविकलान् तत्र दृष्ट्वा विनेयान्
कारुण्याद्योऽद्वितीयप्रकरणमलिखत्तम्प्रपद्ये महेशम् ।। महेशानन्दगिरयः

●

## प्रकरणद्वादशीश्लोकानुक्रमणी

### उपदेशसाहस्री

**दशश्लोकी**



**शतश्लोकी**

## अपरोक्षानुभूतिः

**आत्मबोधः**

